॥ धर्मो विश्वस्य जगतः प्रतिष्ठा ॥

# धर्मकोशः

## राजनीतिकाण्डम्

### प्रथमो भागः



प्रधानसंपादकः

**लक्ष्मणशास्त्री जोशी**, तर्कतीर्थः

अध्यक्षः प्राज्ञपाठशालामण्डलस्य

संवत् २०२९

# DHARMAKOŚA

## RĀJANĪTIKĀṆḌA

### Volume IV
### Part I

1973

EDITED BY

**Laxmanshastri Joshi**, *Tarkateertha*

President, Prājña Pāṭhaśāḷā Maṇḍaḷa.

# EDITORIAL STAFF

Editor-in-Chief :—

Pt. Laxmanshastri Joshi, Tarkateertha,
President, Prājñapāṭhaśālā, Maṇḍaḷa, Wai.

Sub-editors :—

1. Pt. Ranganathshastri Joshi, Sahityashastri, Wai.
2. Pt. Govindshastri Kelkar,
Vyakaranateertha, Vedantachudamani, Wai.
3. Pt. Anantashastri Upadhye,
Vedantaparangata, Jainadarshanaparangata,
Vedavisharada, Wai.
4. Prof. Dr. V. G. Paranjape, M.A.,LL.B., D. Litt., Poona.
5. Prof. N. R. Phatak, B.A., Bombay.
6. Justice P. B. Gajendragadkar, M.A.,LL.B.,
Hon. Chairman Law Reforms Commission,
New Delhi.

Secretary :—

Pt. Vasudeoshastri Konkar, Wai.

# TABLE OF CONTENTS

# – प्रणामपत्रिका –

मनुशुक्रबृहस्पतिकृष्णभीष्मकौटिल्यादीन् राजनीतिविदः
ऋषभदेवरामचन्द्रमान्धातृभरताशोकादीन् चक्रवर्तिनश्च

भूयोभूयः प्रणम्य

इदं श्रुतिस्मृतिपुराणधर्मशास्त्रार्थशास्त्रेभ्यः
तद्व्याख्यानेभ्यश्च समुद्धृतं धर्मकोशस्य

# राजनीतिकाण्डम्

मफतलालकुलतिलकैः अरविन्दादिबन्धुभिः उदारचरितैः
द्रव्यानुदानेनोपकृतं
भारतोपराष्ट्रपतिगोपालस्वरूपपाठकमहोदयकरकमलद्वारा

खैस्ते ४-१-१९७३ दिने

प्रकाश्यते

## राजनीतिकाण्डस्य

# प्रथमभागस्य रचनास्वरूपं संग्रहपद्धतिश्च

### रचनास्वरूपम्

(१) प्रथमतः प्रकरणनाम, ततः स्तम्भे अवान्तर-प्रकरणनाम, तदधस्तात् मूलवचन–व्याख्यान–संग्रहो विहितः। मूलग्रन्थो व्याख्यानसहितो रेखया मर्यादितः। तदधस्तात् विशेषटिप्पणी, तदधस्ताच्च स्थलनिर्देशाः पाठभेदाश्च संगृहीताः।

(२) मूलवचनानां संग्रहः कालक्रममनुसृत्य कृतः।

(३) मूलवचनस्योपरितने प्रदेशे सूक्ष्माक्षरैर्विषय-निर्देशः कृतः।

(४) मूलवचनं स्थूलाक्षरैः, व्याख्यानानि मध्यमाक्षरैः, विशेषटिप्पणी स्थलनिर्देशादिकं च सूक्ष्माक्षरैः, ग्रन्थनामानि सूक्ष्मकृष्णाक्षरैश्च मुद्रितानि।

(५) एकस्य वचनस्य अनेकप्रकरणसंबन्धे तद्वचनं तत्तत्प्रकरणे प्रायः आवर्तितम्। यत्र तु नाऽऽवर्तितं तत्र 'अमुकस्मिन् प्रकरणे द्रष्टव्यम्' इति टिप्पणी दत्ता।

(६) वचने व्याख्याने च संगृह्यमाणे यत्राशुद्धिर्लक्षिता तत्र शुद्धेर्निश्चये शोधितपाठं संमुद्य ततः परं कंसे प्रथमतः अशुद्धः आदर्शपुस्तकपाठः तदुत्तरं प्रश्नचिह्नं च दत्तम्। यत्र तु शुद्धेर्न निश्चयस्तत्र अशुद्धपाठं संमुद्य ततः परं कंसे प्रथमतः प्रश्नचिह्नं ततः उत्प्रेक्षितशुद्धपाठश्च दत्तः। यत्र तु शुद्धेर्न निश्चयः नाप्युत्प्रेक्षा तत्र यथाभूतपाठोत्तरं कंसे प्रश्नचिह्नमात्रं दत्तम्।

(७) क्वचित् व्याख्यानादिषु विरोधाद्याकलने संशोधनात्मिकाः संपादकीयाः टिप्पण्यो दत्ताः। ताश्च विदुषां विचारे प्रवृत्तिं प्रथयितुं विप्रतिपत्तिस्थानीया भवन्तीति मत्वा विद्वद्भिर्निर्णयो विधेयः।

### व्याख्यानसंग्रहपद्धतिः

(८) सर्वाणि व्याख्यानानि कालक्रममनुसृत्य संगृहीतानि। तत्र यत् प्रथमं व्याख्यानं तत् संपूर्णं संगृहीतम्। अग्रिमेषु तु व्याख्यानेषु पूर्वव्याख्यानसदृशमंशं विहाय विसदृशांश एव संगृहीतः। यत्र सकलसादृश्यं, तत्र 'अमुकवत्' इति; यत्र एकदेशसादृश्यं, एकदेशश्च संगृहीतः, तत्र 'शेषं अमुकवत्' इति च अधस्तनटिप्पण्यामतिदेशो विहितः। यत्र तु पूर्वसादृश्येऽपि न्यूनविषयं व्याख्यानं, तत्र पूर्वोक्तातिदेशे वतेः स्थाने 'गतम्' इति, 'गतार्थम्' इति वा पदं निवेशितम्। क्वचित् पुनः उत्तरव्याख्यानस्य प्रसन्नत्वे पूर्वसादृश्येऽपि संग्रहः कृतः, पूर्वत्र वा उत्तरस्यातिदेशो विहितः। प्रकरण-संदब्धान्यपि व्याख्यानानि प्रायशो विभज्य तत्तद्वचनेषु संगृहीतानि। क्वचित् संगतिलोभेनानेकवचनव्याख्यानमेकस्मिन् वचने संगृह्य इतरेषु वचनेषु 'अमुकवचने व्याख्यानं द्रष्टव्यम्' इति टिप्पणी विहिता।

### स्थलनिर्देशपाठभेदपद्धतिः

(९) स्थलनिर्देशाः पाठभेदाश्च यद्वचनान्यवलम्बन्ते तेषु एकादिसंख्याङ्का मुद्रिताः। त एव संख्याङ्का अधस्तात्परामृष्टाः () एतच्चिह्नेनावकृष्य। यथा– [ पृष्ठं १ स्तम्भः १ ] (१) ऋसं. १।१७।१.

(१०) संगृहीतानां संहिताब्राह्मणादीनां निबन्धग्रन्थानां च नामधेयानि प्रत्याहाररूपेण ग्रन्थगौरवभयान्निर्दिष्टानि। ते च संक्षेपाः अग्रे स्वातन्त्र्येण संगृहीताः। यथा– ऋग्वेदसंहिता = ऋसं.; शतपथब्राह्मणम् = शब्रा.; राजनीतिप्रकाशः = राप्र.

(११) प्रथमं प्रत्याहाररूपग्रन्थसंज्ञाः, तदुत्तरं स्थलनिर्देशाः, ततः पाठभेदाः इत्यनुक्रमः। एकग्रन्थगतानेकस्थलनिर्देशाः स्वल्पविरामचिह्नेन विभेदिताः। ग्रन्थभेदः अर्धविरामचिह्नेन दर्शितः। समाप्तौ अवसानचिह्नं मुद्रितम्। यथा– [ पृ. १९ स्तम्भः १ ] (१) ऋसं. १।३३।११; मैसं. ४।१४।१२ (१७१) मध्य

( मध्या ) मिन्द्र ( मिन्द्रा ); तैब्रा. २।८।३।४. [ पृ. १५ स्तम्भः १ ] शाब्रा. १५।४,२०।४,२४।२.

( १२ ) यस्मिन् ग्रन्थे केवलपूर्वार्धस्य उत्तरार्धस्यैव वा स्थलनिर्देशः कर्तव्यस्तत्र स्थलनिर्देशात्परं 'पू.' 'उत्त.' इति निर्देशः कृतः । यथा– [ पृ. ३६१ स्तम्भः १ ] ( १ ) ऋसं. १०।९७।१८ पू.

( १३ ) पाठभेदाः मूलवचनानां संगृहीताः, न व्याख्यानानाम् ।

( १४ ) यस्य मूलांशस्य पाठभेदो देयस्तं मूलांशं दत्त्वा ततः परं कंसचिह्नोदरे पाठभेदो निर्दिष्टः । यथा– [ पृ.३ स्तम्भः १ ] तैआ. १।११।२ नक्तमेति ( नक्षत्रमेति ).

( १५) यत्र पूर्वार्धः उत्तरार्धः विशिष्टचरणो वा अनेकपाठसंयुतस्तत्र 'पूर्वार्धे' 'उत्तरार्धे' 'अमुकचरणे' इति वा निर्दिश्य तदुत्तरं कंसचिह्नोदरे संपूर्णः पूर्वार्धः उत्तरार्धः चरणो वा पाठभेदमयः पठितः । यथा– [ पृ. ७० स्तम्भः १ ] कासं. ३५।१८ ( ८७ ) पूर्वार्धे ( सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान् सुप्रतीकः । ).

( १६ ) यत्र संपूर्णं वचनं पाठभेदमयं तत्र तदनुद्धृत्यैव कंसचिह्नोदरे पाठभेदमयं संपूर्णं वचनं समुद्धृतम् । यथा– [ पृ. ३६१ स्तम्भः २ ] सामब्रा. २।८।८ ( पूर्वमन्यमपरमन्यमुभौ पादावव नेनिजे राष्ट्रस्यर्द्ध्या अभयस्यावरुद्ध्यै ॥ ).

( १७ ) पूर्वग्रन्थेन उत्तरग्रन्थस्य पाठभेदसाम्ये उत्तरग्रन्थस्थलनिर्देशोत्तरं 'अमुकवत्' इत्युक्तम् । अंशेन साम्यं चेत् 'शेषं अमुकवत्' इत्युक्तम् । यथा– [ पृ. ३९३ स्तम्भः २ ] शब्रा. ७।२।२।९ शुसंवत्, [ स्तम्भः १ ] शब्रा. ७।२।२।११ वाहणम् (वाहनम्) शेषं शुसंवत्.

( १८ ) यत्र अधिकांशरूपः पाठभेदो निर्देष्टुमिष्टस्तत्र यदुत्तरमधिकांशस्तच्छब्दोत्तरं अधिकचिह्नं कृत्वा तदुत्तरं कंसचिह्नोदरे अधिकांशरूपः पाठभेदः प्रदर्शितः । यथा– [ पृ. ४९७ स्तम्भः १ ] सासं. २।२१।१ ( १८७२ ) ... ममान्तरम् ॥ + ( शर्म वर्म ममान्तरम् ॥ ).

( १९ ) यत्र कस्यचिदंशस्य न्यूनता निर्देष्टुमिष्टा तत्र यावान् न्यूनांशः तं कंसोदरे निर्दिश्य ततः परं ० एतादृशं चिह्नं कृतम् । तावानंशो नास्तीति तदर्थः । यथा– [ पृ. ५१० स्तम्भः १ ] तैब्रा. ३।३।११।३ ... ( यतो न पुनरायति शश्वतीभ्यः समाभ्यः ० ).

( २० ) यत्र एकस्मिन् वचने कस्यचिदंशस्य आवृत्तिः, ग्रन्थान्तरे प्रत्यावृत्ति पाठभेदश्च समानः तत्रैकवारमेव पाठभेदो दर्शितः ।

( २१ ) यत्र महतोंऽशस्य पाठभेदो दर्शितव्यस्तत्र तदंशस्य आद्यन्तौ ...... एतादृशचिह्नगर्भावुद्धृतौ, न संपूर्णोंऽश उद्धृतः । यथा– [ पृ. ४१२ स्तम्भः २ ] कासं. ( अश्व. ) ५।१४ ( १७ ) सत्तिः ......... रथेष्ठाः ( सत्तिर्जिष्णू रथेष्ठाः पुरन्धिर्योषा ).

( २२ ) यत्र एकस्मिन्नेव ग्रन्थे कस्यचिद्विशेषस्य अनन्तरपूर्वस्थलमात्रेण संबन्धो विवक्षितस्तत्र ततः पूर्वतरस्थलेन संबन्धाभावं बोधयितुं अनन्तरस्थलनिर्देशात्पूर्वे : इति विसर्गचिह्नं विहितम् । यथा– [ पृ. ४२५ स्तम्भः २ ] ( २ ) शब्रा. २।२।२।६ : ४।३।४।४ सुधायां दधति ( स्वर्गे लोकमभिवहन्ति ). अत्र निर्दिष्टः पाठभेदः '२।२।२।६' इति स्थलेन न संबध्यते ।

( २३ ) यत्र यद्वचनस्य कर्त्रादि निबन्धकृता न निर्दिष्टं, तत्र तद्वचनस्य अनिर्दिष्टकर्तृकत्वादित्वबोधनाय स्थलनिर्देशोत्तरं ( = ) इति चिह्नं दत्तम् ।

## राजनीतिकाण्डस्य

# प्रथमभागे संगृहीतादर्शग्रन्थपरिचयः

| क्रमाङ्कः | ग्रन्थः | ग्रन्थप्रकाशनस्थानादि |
|---|---|---|
| १ | ऋग्वेदसंहिता | (1) Vaidika Samshodhana Mandala, Poona;<br>(2) Swadhyaya Mandala, Aundh. |
| २ | ऋग्वेदसंहिता-खिलानि | ,, ,, |
| ३ | अथर्ववेदशौनकसंहिता | (1) Shankara Panduranga Pandita, Bombay;<br>(2) Swadhyaya Mandala, Aundh. |
| ४ | पैप्पलादसंहिता | Dr. Raghuvira, Lahore. |
| ५ | सामवेदसंहिता | Swadhyaya Mandala, Aundh. |
| ६ | तैत्तिरीयसंहिता | (1) Anandashrama, Poona;<br>(2) Swadhyaya Mandala, Aundh. |
| ७ | काठकसंहिता | (1) Dr. Leopold Von Schroeder, Leipzig;<br>(2) Swadhyaya Mandala, Aundh. |
| ८ | कपिष्ठलसंहिता | Dr. Raghuvira, Lahore. |
| ९ | मैत्रायणीयसंहिता | (1) Dr. Leopold Von Schroeder, Leipzig;<br>(2) Swadhyaya Mandala, Aundh. |
| १० | शुक्लयजुर्वेदमाध्यंदिनसंहिता | (1) Nirnayasagara Press, Bombay;<br>(2) Swadhyaya Mandala, Aundh. |
| ११ | शुक्लयजुर्वेदकाण्वसंहिता | Swadhyaya Mandala, Aundh. |
| १२ | ऐतरेयब्राह्मणम् | Anandashrama, Poona. |
| १३ | शाङ्खायनब्राह्मणम् | ,, ,, |
| १४ | तैत्तिरीयब्राह्मणम् | ,, ,, |
| १५ | शतपथब्राह्मणम् | (1) Laxmi Venkateshwara Press, Kalyan;<br>(2) Vaidika Yantralaya, Ajmer. |
| १६ | ताण्डयमहाब्राह्मणम् | (1) Asiatic Society of Bengal, Calcutta;<br>(2) Chowkhamba Sanskrit Series, Varanasi. |
| १७ | जैमिनीयब्राह्मणम् | Dr. Raghuvira, Nagpur. |
| १८ | षड्विंशब्राह्मणम् | Jivananda Vidyasagara, Calcutta. |
| १९ | साममन्त्रब्राह्मणम् अथवा छान्दोग्यब्राह्मणम् | Oriental Press, Calcutta. |
| २० | गोपथब्राह्मणम् | Jivananda Vidyasagara, Calcutta. |
| २१ | ऐतरेयारण्यकम् | Anandashrama, Poona. |
| २२ | तैत्तिरीयारण्यकम् | ,, ,, |

| क्रमाङ्कः | ग्रन्थः | ग्रन्थप्रकाशनस्थानादि |
|---|---|---|
| २३ | तैत्तिरीयोपनिषत् | Anandashrama, Poona. |
| २४ | छान्दोग्योपनिषत् | ” ” |
| २५ | बृहदारण्यकोपनिषत् | ” ” |
| २६ | केनोपनिषत् | ” ” |
| २७ | मुण्डकोपनिषत् | ” ” |
| २८ | प्रश्नोपनिषत् | ” ” |
| २९ | श्वेताश्वतरोपनिषत् | ” ” |
| ३० | नारायणोपनिषत् | ” ” |
| ३१ | जाबालोपनिषत् | ” ” |
| ३२ | अथर्वशिरउपनिषत् | ” ” |
| ३३ | महोपनिषत् | Nirnayasagara Press, Bombay. |
| ३४ | निघण्टुः | (1) Shri Venkateshwara Press, Bombay; (2) Anandashrama, Poona. |
| ३५ | निरुक्तम् | University of Mysore, Mysore. |
| ३६ | आपस्तम्बश्रौतसूत्रम् | Anandashrama, Poona. |
| ३७ | आश्वलायनश्रौतसूत्रम् | Dr. Alfred Hillebrandt, Calcutta. |
| ३८ | शाङ्खायनश्रौतसूत्रम् | Chowkhamba Sanskrit Series, Varanasi. |
| ३९ | कात्यायनश्रौतसूत्रम् | The Arya Bharati Mudranalaya, New Delhi 16. |
| ४० | मानवश्रौतसूत्रम् | Asiatic Society of Bengal, Calcutta. |
| ४१ | लाट्यायनश्रौतसूत्रम् | (1) Ganapat Krishnaji Press, Bombay; (2) Anandashrama, Poona; (3) The Aduar Library Series, Madras; (4) Trivandrum Sanskrit Series, Trivandrum. |
| ४२ | आश्वलायनगृह्यसूत्रम् | |
| ४३ | कौषीतकिगृह्यसूत्रम् अथवा शाङ्खायनगृह्यसूत्रम् | (1) Benares Sanskrit Series, Varanasi; (2) Navin Press, Delhi 6. |
| ४४ | हिरण्यकेशिगृह्यसूत्रम् | Anandashrama, Poona. |
| ४५ | मानवगृह्यसूत्रम् | Gaekwad's Oriental Series, Baroda. |
| ४६ | पारस्करगृह्यसूत्रम् | Gujarati Printing Press, Bombay. |
| ४७ | गोभिलगृह्यसूत्रम् | Chowkhamba Sanskrit Series, Varanasi. |
| ४८ | कौशिकगृह्यसूत्रम् | Shastra Prakasha Bhavana, Madhurapur (Bihar). |
| ४९ | बौधायनधर्मसूत्रम् | Chowkhamba Sanskrit Series, Varanasi. |
| ५० | मनुस्मृतिः | Nirnayasagara Press, Bombay. |
| ५१ | याज्ञवल्क्यस्मृतिः | ” ” |
| ५२ | पराशरस्मृतिः | Shri Venkateshwara Press, Bombay. |
| ५३ | शांकरभाष्यम् | Anandashrama, Poona. |

| क्रमाङ्कः | ग्रन्थः | ग्रन्थप्रकाशनस्थानादि |
|---|---|---|
| ५४ | विश्वरूपः | Trivandrum Sanskrit Series, Trivandrum. |
| ५५ | मेधातिथिभाष्यम् | J. R. Gharpure, Bombay. |
| ५६ | शुक्लयजुर्वेदमाध्यंदिनसंहिता--उवटभाष्यम् | Nirnayasagara Press, Bombay. |
| ५७ | मन्वर्थविवृतिः | V. N. Mandlik, Bombay. |
| ५८ | मन्वर्थमुक्तावलिः | Nirnayasagar Press, Bombay. |
| ५९ | ऋग्वेदसंहितासायणभाष्यम् | Vaidika Samshodhana Mandala, Poona. |
| ६० | अथर्ववेदसंहितासायणभाष्यम् | Shankara Panduranga Pandita, Bombay. |
| ६१ | तैत्तिरीयसंहितासायणभाष्यम् | Anandashrama, Poona. |
| ६२ | ऐतरेयब्राह्मणसायणभाष्यम् | ,, ,, |
| ६३ | तैत्तिरीयब्राह्मणसायणभाष्यम् | ,, ,, |
| ६४ | शतपथब्राह्मणसायणभाष्यम् | Laxmi Venkateshwara Press, Kalyan. |
| ६५ | ताण्ड्यमहाब्राह्मणसायणभाष्यम् | (1) Asiatic Society of Bengal, Calcutta; (2) Chowkhamba Sanskrit Series, Varanasi. |
| ६६ | ऐतरेयारण्यकसायणभाष्यम् | Anandashrama, Poona. |
| ६७ | तैत्तिरीयारण्यकसायणभाष्यम् | ,, ,, |
| ६८ | शुक्लयजुर्वेदमाध्यंदिनसंहिता--महीधरभाष्यम् | Nirnayasagara Press, Bombay. |
| ६९ | मन्वर्थचन्द्रिका | V. N. Mandlik, Bombay. |
| ७० | राजनीतिप्रकाशः | Chowkhamba Sanskrit Series, Varanasi. |
| ७१ | नीतिमयूखः | J. R. Gharpure, Bombay. |
| ७२ | राजनीतिकौस्तुभः | Gaekwad's Oriental Series, Baroda. |

# ग्रन्थनामसंक्षेपाः

| | | |
|---|---|---|
| ३२ | अशिउ. | अथर्वशिरउपनिषत् |
| ३ | असं. | अथर्ववेदशौनकसंहिता |
| ६० | असा. | अथर्ववेदसंहितासायणभाष्यम् |
| ४२ | आगृ. | आश्वलायनगृह्यसूत्रम् |
| ३६ | आपश्रौ. | आपस्तम्बश्रौतसूत्रम् |
| ३७ | आश्रौ. | आश्वलायनश्रौतसूत्रम् |
| १ | ऋसं. | ऋग्वेदसंहिता |
| ५९ | ऋसा. | ऋग्वेदसंहितासायणभाष्यम् |
| १२ | ऐब्रा. | ऐतरेयब्राह्मणम् |
| ६२ | ऐब्रासा. | ऐतरेयब्राह्मणसायणभाष्यम् |
| २१ | ऐआ. | ऐतरेयारण्यकम् |
| ६६ | ऐआसा. | ऐतरेयारण्यकसायणभाष्यम् |
| ८ | कसं. | कपिष्ठलसंहिता |
| ३९ | काश्रौ. | कात्यायनश्रौतसूत्रम् |
| ७ | कासं. | काठकसंहिता |
| २६ | केउ. | केनोपनिषत् |
| ४३ | कौगृ. | कौषीतकिगृह्यसूत्रम् |
| ४८ | कौसू. | कौशिकगृह्यसूत्रम् |
| २ | खिल. | खिलानि |
| ४७ | गोगृ. | गोभिलगृह्यसूत्रम् |
| २० | गोब्रा. | गोपथब्राह्मणम् |
| २४ | छाउ. | छान्दोग्योपनिषत् |
| ३१ | जाउ. | जाबालोपनिषत् |
| १७ | जैब्रा. | जैमिनीयब्राह्मणम् |
| १६ | ताब्रा. | ताण्ड्यमहाब्राह्मणम् |
| ६५ | ताब्रासा. | ताण्ड्यमहाब्राह्मणसायणभाष्यम् |
| २२ | तैआ. | तैत्तिरीयारण्यकम् |
| ६७ | तैआसा. | तैत्तिरीयारण्यकसायणभाष्यम् |
| २३ | तैउ. | तैत्तिरीयोपनिषत् |
| १४ | तैब्रा. | तैत्तिरीयब्राह्मणम् |
| ६३ | तैब्रासा. | तैत्तिरीयब्राह्मणसायणभाष्यम् |
| ६ | तैसं. | तैत्तिरीयसंहिता |
| ६१ | तैसा. | तैत्तिरीयसंहितासायणभाष्यम् |
| ३० | नाउ. | नारायणोपनिषत् |
| ३५ | नि. | निरुक्तम् |
| ७१ | नीम. | नीतिमयूखः |
| ५२ | पस्मृ. | पराशरस्मृतिः |
| ४६ | पागृ. | पारस्करगृह्यसूत्रम् |
| ४ | पैसं. | पैप्पलादसंहिता |
| २८ | प्रउ. | प्रश्नोपनिषत् |
| २५ | बृउ. | बृहदारण्यकोपनिषत् |
| ४९ | बौध. | बौधायनधर्मसूत्रम् |
| ६९ | मच. | मन्वर्थचन्द्रिका |
| ५८ | ममु. | मन्वर्थमुक्तावलिः |
| ५७ | मवि. | मन्वर्थविवृतिः |
| ५० | मस्मृ. | मनुस्मृतिः |
| ३३ | महोप. | महोपनिषत् |
| ४५ | मागृ. | मानवगृह्यसूत्रम् |
| ४० | माश्रौ. | मानवश्रौतसूत्रम् |
| २७ | मुउ. | मुण्डकोपनिषत् |
| ५५ | मेधा. | मेधातिथिभाष्यम् |
| ९ | मैसं. | मैत्रायणीयसंहिता |
| ५१ | यास्मृ. | याज्ञवल्क्यस्मृतिः |
| | राका. | राजनीतिकाण्डम् |

| | | |
|---|---|---|
| ७२ | राकौ. | राजनीतिकौस्तुभः |
| ७० | राप्र. | राजनीतिप्रकाशः |
| ४१ | लाश्रौ. | लाट्यायनश्रौतसूत्रम् |
| ५४ | विश्व. | विश्वरूपः |
| ५३ | शंकर. | शांकरभाष्यम् |
| १५ | शब्रा. | शतपथब्राह्मणम् |
| ६४ | शब्रासा. | शतपथब्राह्मणसायणभाष्यम् |
| ३८ | शाश्रौ. | शाङ्खायनश्रौतसूत्रम् |
| ५६ | शुउ. | शुक्लयजुर्वेदमाध्यंदिनसंहिता-उवटभाष्यम् |
| ६८ | शुम. | शुक्लयजुर्वेदमाध्यंदिनसंहिता-महीधरभाष्यम् |
| १० | शुसं. | शुक्लयजुर्वेदमाध्यंदिनसंहिता |
| ११ | शुसं. (काण्व) | शुक्लयजुर्वेदकाण्वसंहिता |
| २९ | श्वेउ. | श्वेताश्वतरोपनिषत् |
| १८ | षब्रा. | षड्विंशब्राह्मणम् |
| १९ | सामब्रा. | साममन्त्रब्राह्मणम् |
| ५ | सासं. | सामवेदसंहिता |
| ४४ | हिगृ. | हिरण्यकेशिगृह्यसूत्रम् |

## राजनीतिकाण्डस्य

# प्रथमभागीयस्थलनिर्देशाङ्कपरिचयः

**ऋग्वेदसंहिता**– मण्डलम् । सूक्तम् । मन्त्रः
**ऋग्वेदसंहिताखिलानि**– अध्यायः । खिलम् । मन्त्रः अथवा खिलम् । मन्त्रः
**अथर्ववेदसंहिता**– काण्डम् । सूक्तम् । मन्त्रः
**पैप्पलादसंहिता**– काण्डम् । सूक्तम् । मन्त्रः
**सामवेदसंहिता**– आर्चिकम् । अध्यायः । खण्डः । कंसे आदितो मन्त्रः
**तैतिरीयसंहिता**– काण्डम् । प्रपाठकः । अनुवाकः । पञ्चाशिका
**काठकसंहिता**– स्थानकम् । अनुवाकः । कंसे मन्त्रः
**कपिष्ठलसंहिता**– अध्यायः । खण्डः
**मैत्रायणीयसंहिता**– काण्डम् । प्रपाठकः । अनुवाकः । कंसे मन्त्रः
**शुक्लयजुर्वेदमाध्यंदिनसंहिता**– अध्यायः । मन्त्रः
**शुक्लयजुर्वेदकाण्वसंहिता**– अध्यायः । मन्त्रः
**ऐतरेयब्राह्मणम्**– अध्यायः । खण्डः
**शाङ्खायनब्राह्मणम्**– अध्यायः । खण्डः
**तैतिरीयब्राह्मणम्**– काण्डम् । प्रपाठकः । अनुवाकः । दशकः
**शतपथब्राह्मणम्**– काण्डम् । अध्यायः । ब्राह्मणम् । कण्डिका
**ताण्ड्यमहाब्राह्मणम्**– अध्यायः । खण्डः । कण्डिका
**जैमिनीयब्राह्मणम्**– काण्डम् । खण्डः
**षड्विंशब्राह्मणम्**– प्रपाठकः । खण्डः
**साममन्त्रब्राह्मणम् अथवा छान्दोग्यब्राह्मणम्**– प्रपाठकः । खण्डः । मन्त्रः
**गोपथब्राह्मणम्**– भागः । प्रपाठकः । खण्डः
**ऐतरेयारण्यकम्**– आरण्यकम् । अध्यायः । खण्डः । कण्डिका
**तैत्तिरीयारण्यकम्**– प्रपाठकः । अनुवाकः । दशकः
**तैत्तिरीयोपनिषत्**– अध्यायः । अनुवाकः
**छान्दोग्योपनिषत्**– अध्यायः । खण्डः । कण्डिका
**बृहदारण्यकोपनिषत्**– अध्यायः । ब्राह्मणम् । कण्डिका
**केनोपनिषत्**– खण्डः । मन्त्रः
**मुण्डकोपनिषत्**– मुण्डकम् । खण्डः । मन्त्रः
**प्रश्नोपनिषत्**– प्रश्नः । खण्डः
**श्वेताश्वतरोपनिषत्**– अध्यायः । मन्त्रः

**नारायणोपनिषत्**– अनुवाकः
**जाबालोपनिषत्**– खण्डः
**अथर्वशिरउपनिषत्**– खण्डः
**महोपनिषत्**– अध्यायः
**निरुक्तम्**– अध्यायः । खण्डः
**आश्वलायनश्रौतसूत्रम्**– षट्कम् । अध्यायः । खण्डः इति वा, अध्यायः । खण्डः इति वा
**शाङ्खायनश्रौतसूत्रम्**– अध्यायः । खण्डः । सूत्रम्
**आपस्तम्बश्रौतसूत्रम्**– प्रश्नः । खण्डिका । सूत्रम्
**मानवश्रौतसूत्रम्**– काण्डम् । अध्यायः । खण्डः । सूत्रम्
**कात्यायनश्रौतसूत्रम्**– अध्यायः । कण्डिका । सूत्रम्
**लाट्यायनश्रौतसूत्रम्**– प्रपाठकः । कण्डिका । सूत्रम्
**आश्वलायनगृह्यसूत्रम्**– अध्यायः । खण्डः । सूत्रम्
**कौषीतकिगृह्यसूत्रम्**– अध्यायः । खण्डः । सूत्रम्
**हिरण्यकेशिगृह्यसूत्रम्**– प्रश्नः । पटलः । सूत्रम्
**मानवगृह्यसूत्रम्**– पुरुषः । खण्डः । सूत्रम्
**पारस्करगृह्यसूत्रम्**– काण्डम् । कण्डिका । सूत्रम्
**गोभिलगृह्यसूत्रम्**– प्रपाठकः । कण्डिका । सूत्रम्
**कौशिकगृह्यसूत्रम्**– कण्डिका । सूत्रम्
**बौधायनधर्मसूत्रम्**– प्रश्नः । खण्डः । सूत्रम्
**मनुस्मृतिः**– अध्यायः । श्लोकः
**याज्ञवल्क्यस्मृतिः** – अध्यायः । श्लोकः
**पराशरस्मृतिः** – अध्यायः । श्लोकः
**राजनीतिप्रकाशः**– पृष्ठम्
**नीतिमयूखः**– पृष्ठम्
**राजनीतिकौस्तुभः**– पृष्ठम्

## राजनीतिकाण्डस्य

# प्रथमभागस्य विषयानुक्रमणिका

रक्षकत्वं च भजते ; ८४ मित्रसंपन्नो राजा ; अमात्यसहितो राजा गजेन सेनामनुगच्छति, चारान् प्रेषयति, विशो रक्षति ; ८५ राजा त्रसदस्युर्मानवोऽर्धदेवः इन्द्रवरुणयोस्तादात्म्यमनुभवति ; ८६ पुरोहितो राजसहायः, ब्राह्मणो राज्ञा धनदानादिना पूजनीयः ; ८७ सोमयज्ञो राज्ञो धर्मः ; राजा चित्रः, अन्ये राजकाः (असमर्था राजानः) ; स्पर्धमानानां विशां अधिष्ठाता राजा; राजानः प्रशंसया अलंक्रियन्ते; सुव्रतो राजा स्तवार्हः ; राजद्वारा प्रथमानां धनानां प्राप्तिः ; ८८ इक्ष्वाकुनामा असमातिः राजा जनो वा असामान्यगुणः; ग्रामणीः सावर्णिः मनुः दानपरायणः ; ८९ विविधाः सुसंदृशो राजानः ; शन्तनुराजस्य ज्येष्ठो भ्राता देवापिः तस्य पुरोहितः ; ९० सत्यपालका राजानः ; प्रजा राजानं वृणते ; लोकानामिष्टो ध्रुवं स्थाता राजा राष्ट्ररक्षकः ; ९२ राज्यकामस्य माहेन्द्री महाशान्तिः, तस्यां राज्याभिवृद्ध्यर्थं रथनेमिमणिबन्धनकर्म ; ९३ राज्यच्युतस्य राज्ञः पुनः राष्ट्रप्रवेशनकर्म ; ९५ प्रजाः राजानं वृणते ; ९६ पर्णमणिबन्धनकर्म राजरक्षणाय, राजकृतः सूता ग्रामण्यश्च ; ९८ राजाभिषेकः ; १०० प्रतिप्रातः राज्ञोऽभिमन्त्रणम् ; १०१ श्रैष्ठ्यकामस्य कर्म ; १०२ राज्ञः प्रतिचरः ; ब्रह्मचर्यं प्रजारक्षणसाधनम् ; व्रात्यब्रह्मणो राजन्योत्पत्तिः ; १०३ राज्ञोऽतिथिर्व्रात्यः ; शत्रोः राज्ञः सेनायाः रक्षणम् ; राज्ञः पुरप्रवेशनकर्म ; १०५ राज्ञः पुरप्रवेशनकर्म ; १०६ राज्ञः शय्यागृहप्रवेशकर्मणि धूपदानम् ; १०७ ऋषीणां तपसः राष्ट्रं बलमोजश्च जातम् ; जनाः राज्ञे करप्रदाः ; राजा स्तोत्रभाक् ; १०८ परिक्षिद्राजस्य राष्ट्रे जनस्य भद्रम् .

**वाजपेयः– ( पृ. १०८–११४ )**

१०८ वाजपेयः स्वाराज्याय ; १११ साम्राज्यहेतुर्वाजपेयः ; साम्राज्याय वाजपेयः राजत्वाय च राजसूयः ; ११४ राज्ञा पूर्वं राजसूयः उत्तरं वाजपेयः कार्यः न विपर्ययेण.

**राजसूयः– ( पृ. ११४–३३५ )**

११४ आनुमतादियागाष्टकं नैर्ऋतमन्त्राश्च ; ११८ चातुर्मास्यानि– ( १ ) वैश्वदेवम् ; १२२ चातुर्मास्यानि– ( २ ) वरुणप्रघासाः ; १२६ चातुर्मास्यानि– ( ३ ) साकमेधाः ; १३८ चातुर्मास्यानि– ( ४ ) शुनासीर्यम् , इन्द्रतुरीयम् , पञ्चेध्मीयम् , अपामार्गहोमः ; १४० देविकादिकर्मषट्कम् ; १४२ एकादश द्वादश वा रत्नियागाः ; १४४ देवसुवां हवींषि ; १४६ अभिषेकार्थजलादानम् ; १४८ अभिषेकजलसंस्कारः ; १५२ दिग्व्यास्थापनम् , पार्थहोमः ; १५५ अभिषेकः ; १५८ रथेन विजयः ; १६० आसनोपविष्टस्य सेवा ; १६३ संसृपां होमाः ; १६४ दशपेयः ; १६६ दिशामवेष्टयः , पशुबन्धः , सात्यदूतहोमाश्च ; १६८ प्रयुजां यागाः ; १६९ सौत्रामणी ; १८० सौत्रामण्यां अभिषेके राज्ञः आत्मनिरूपणम् ; १८२ राजसूये अभिषेचनीयेऽह्नि श्रोतव्यं शौनःशेपाख्यानम् ; १९५ क्षत्रियकर्तृको होमः ; २०२ क्षत्रियस्य फलचमसभक्षः , न सोमभक्षः ; २११ राजसूये स्तोत्रशस्त्रविशेषाः ; २१५ अभिषेको राज्ञः ; २२७ ऐन्द्रमहाभिषेकः ; २३० ऐन्द्रमहाभिषेको राज्ञः , अभिषेकैतिह्यम् ; २३९ राजाभिषेकः ; २४७ वैश्याया वेश्याया वा पुत्रोऽभिषेकानर्हः ; राजसूये पवित्राख्यसोमयागस्य पूर्णाहुतिः , आनुमतादियागाः ; २५१ चातुर्मास्यानि, पञ्चवातीयहोमः , आरोग्यकामहोमः , इन्द्रतुरीयम् , अपामार्गहोमः ; २५५ त्रिषंयुक्तेष्टित्रयम् , द्विहविष्कयागः ; २५८ एकादशरत्नयागा ; २६३ सौमारौद्रयागः , मैत्राबार्हस्पत्येष्टिः ; २६५ अभिषेचनीययागदीक्षा; २६९ सप्तदशापां संभरणं यजमानस्याभिषेकार्थम् ; २७५ राज्ञोऽभिषेकविधिः , पार्थहोमः, अभिषेकपात्राणि, वासःपरिधापनम् , धनुरिष्वादिधारणम् , आविद्वाचनम् ; २८३ दिगारोहणम् , शार्दूलचर्मारोहणम् , ऊर्ध्वाभिषेकः ; २८७ यजमानाभिषेकः ; २९० रथारोहणमवरोहणं च ; २९६ आसन्द्यारोहणम् , अक्षदेवनम् , राज्ञो दण्डवधातिनयनम् ; ३०१ संसृपां होमाः ; दशपेयः ; ३०५ हविःपञ्चकेष्टिः ; ३०७ प्रयुजां द्वादशाहविषामिष्टिः, द्वौ पशुबन्धौ ; ३१० केशवपनीयातिरात्रः ; ३११ चरकसौत्रामणी ; ३१७ त्रैधातव्युदवसानीयेष्टिः; ३२० राजसूये सामविधिः ३३२ राजसूयः राज्यकामस्य.

## पुरोहितः

### [ पृ. ३५७–३६५ ]



## जनाः , तत्संबन्धीनि कर्माणि च

### [ पृ. ३६६–४५६ ]

**जनानां प्रकाराः वृत्तं च– ( पृ. ३६६–४३८ )**

स्वस्तिप्रार्थना ; सजातानां जनानां च सांमनस्यकर्म ; ४०१ अन्नस्य यवस्य समृद्धिः ; ग्रामे सांमनस्यकर्म ; ४०२ रम्यं समृद्धं गृहम् ; ४०३ विराज उत्क्रान्तिः मनुष्येषु ; ४०४ शाला ( गृहम् ); ब्रह्म क्षत्रं विशः ; देवानां पूरयोध्या ; ४०५ किरातकन्या ; तपस्विभ्य ऋषिजातेभ्यो ब्राह्मणेभ्यो धनदानं स्वर्गदम् ; ४०६ पञ्चानां जनानामाश्रयः विविधभाषिकनानाधर्मजनान् धारयन्ती रक्षणाय इन्द्रं वृणाना पृथिवी ; ४०९ ब्राह्मणः त्रैलोक्यसमः ; ब्राह्मणस्य गौः क्षत्रियेण नापहरणीया ; ४१० व्रात्यब्रह्मणो ब्रह्मक्षत्रोत्पत्तिः ; ब्रह्मराजन्यौ शूद्रार्यौ च ; प्रियत्वप्रार्थना आत्मनः राजसु शूद्रे आर्ये च ; वेदाः पावनं द्विजानाम् ; ४११ प्रजानां राजद्वारा धनजयः ; पञ्च पञ्चजनाः ; ब्रह्मक्षत्रविशः ; ब्राह्मणा देवाः ; पञ्चजनाः ; शूद्रार्यसृष्टिः ; रथपतिसेनानीक्षत्तृरथकारादयो रुद्रविभूतयः ; ४१२ ब्रह्मक्षत्रसंबन्धः ; तेजस्वि चातुर्वर्ण्यम् ; मरुतः देवानां विशः ; वर्णगुणोत्कर्षप्रार्थना ; मरुतः देवानां विशः ; ४१३ ब्रह्मक्षत्रयोः सम्यक् सहचारप्रशंसा ; सर्ववर्णेभ्योऽनुद्वेजनी वाणी ; ब्राह्मणादि चातुर्वर्ण्यं मागध-सूत-रथकार-तक्ष-कौलाल-कर्मार-इषुकार-धनुष्कार-जाकार-रज्जुसर्ज-मृगयु-श्वनि-पौञ्जिष्ठ-नैषाद-व्रात्य-कितव-विदलकारी-कण्टकीकारी-पेशस्कारी-अनुरुत्-नक्षत्रदर्श-प्रश्नि-अभिप्रश्नि-प्रश्नविवाक-हस्तिप-अश्वप-गोपाल-अविपाल-अजपाल-कीनाश-सुराकार-गृहप-वित्तध-अनुक्षत्तृ-दार्वाहार-अग्न्येध-अभिषेक्तृ-परिवेष्टृ-पेशितृ-प्रकरितृ-उपसेक्तृ-उपमन्थितृ-वासःपल्पूली-पिशुन-क्षत्तृ-अनुचर-परिष्कन्द-अश्वसाद-भागदुघ-अयस्ताप-निसर-योक्तृ-अभिसर्तृ-विमोक्तृ-त्रिष्ठि-मानस्कृत-आञ्जनीकारी-अजिनसंध-चर्मम्न-धैवर-दाश-वैन्द-शौष्कल-मार्गार-कैवर्त-आन्द-मैनाल-पर्णक-किरात-पौल्कस-हिरण्यकार-वाणिज-सभास्थाणु-गोव्यच्छ-गोघात-गोविकृन्तत्-चरकाचार्य-सैलग-आडम्बराघात-वीणावाद-तूणवध्म-शङ्खध्म-वनप-दावप-ग्रामण्य-गणक-अभिक्रोशक-पाणिघ्न-तलव-चाण्डाल-वंशनर्त्यादयः पुरुषमेधे उत्सर्जनीयाः पशवः ; ४१९ सारथिः ; त्रैवर्ण्यधारणप्रार्थना ; ४२० वर्णानां यज्ञाधिकारविचारः- कवषो दास्याः पुत्रोऽपि देवतानुग्रहात् यज्ञेऽधिकृतः ; ब्रह्मक्षत्रयोः सम्यक् सहचारप्रशंसा ; त्रैवर्णिकादीनामग्न्याधानकालादिविचारः ; ४२३ दैव्यो ब्राह्मणः शूद्रश्चासुर्यः ; ४२४ वर्णगुणोत्कर्षप्रार्थना ; ४२५ विद्याः वर्णाश्च ; चातुर्वर्ण्यभाषणभेदः ; वर्णत्रयोत्पत्तिः ; विद्वांसो ब्राह्मणा देवाः ; ४२६ त्रैवर्णिका एव यज्ञाधिकारिणः, न शूद्रः ; त्रैवर्णिका यज्ञकाले ब्राह्मणा एव ; स्त्रीशूद्राणामनृतत्वम् ; चातुर्वर्ण्योत्पत्तिः ; ४२८ ब्राह्मणस्य पात्रता अमीमांस्या ; ४२९ व्रात्याः तेषां स्तोमश्च ; ४३४ चातुर्वर्ण्योत्पत्तिः, वर्णभेदेन छन्दोविशेषाः ; ४३५ चतुर्णां वर्णानां ज्यायस्त्वकनीयस्त्वे ; चतुर्णां वर्णानां छन्दोविशेषाः ; अदण्ड्यो ब्राह्मणः ; अश्वमेधफलं चातुर्वर्ण्यगुणोत्कर्षः ; रमणीयचरणाः कपूयचरणाश्च वर्णाः, तेषां आत्मज्ञानेन शुद्धिः ; ४३६ कैकेयस्य अश्वपतेः राज्ञः निष्पापः पुण्यरतो जनपदः ; ४३७ चातुर्वर्ण्योत्पत्तिः.

**पुरः- ( पृ. ४३८-४४० )**

४३८ पुरो जनानां रक्षिकाः ; ४३९ मरुतां सेनया शतगुणप्राकाराभिः पूर्भिः मानवा रक्षिताः ; जनाः सुशासनार्थं पुरः पतिं पूजयन्ति ; शतेन पूर्भिः रक्षणम् ; जनानां शतप्राकाराभिः पूर्भिः रक्षणम् ; ४४० दुर्गे निहितो निधिः .

**भाषा- ( पृ. ४४०-४४४ )**

४४० राष्ट्री वाक् ; ४४१ वाङ्महिमा, तस्या उत्पत्तिः कार्यं च ; ४४४ राष्ट्री वाक् .

**विद्या- (पृ. ४४४-४४८)**

४४४ त्रयी विद्या ; ४४५ शिल्पानि ; ४४६ विद्याः ; नव विद्याः ; ४४७ साङ्गाः वेदाः ; अथर्ववेदः ; चत्वारो वेदाः षडङ्गानि च ; एकोनविंशतिर्विद्याः ; द्वादश विद्याः .

**धनम्- (पृ. ४४८-४५६)**

४४८ गवां महिमा ; ४५१ नदीनां महिमा ; ४५४ सप्त ग्राम्याः पशवः ; वशाः, ऋषभाः, उक्षाणः ;

## सभा समितिश्च

[ पृ. ४५७–४६८ ]



## युद्धम्

[पृ. ४६९–५२९]

### देवानां युद्धम्– (पृ. ४६९–४८१)



### मानवानां युद्धम्– (पृ. ४८१–५२९)

# शुद्धिपत्रम्

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १८ | २ | २ | जेन्तुं | जेतुं |
| २८ | १ | ११ | तन्नाम वे | तन्नामवे |
| ३४ | ,, | १४ | मिछन्त | मिच्छन्त |
| ३५ | २ | ,, | विमुञ्चन्ति | विमुचन्ति |
| ३७ | ,, | ,, | द्युन् | द्यून् |
| ४० | १ | १ | सति | सती |
| ४३ | ,, | १२ | शिमिति | शिमीति |
| ६७ | २ | ४ | द्विव्या | दिव्या |
| ६९ | १ | ९ | युंक्ता | युक्त: |
| ७३ | २ | १८ | तत्रतेभ्य | तत्रत्येभ्य |
| ७९ | ,, | २० | दादुल्या | दाहुल्या |
| ८४ | १ | ३ | स्वमिनं | स्वामिनं |
| ८९ | ,, | ७ | कथंस्थितम् | कथं स्थितम् |
| ,, | २ | २१ | राज्ञः | राजस्य |
| १०३ | ,, | १६ | सति स | सतिस |
| १०६ | १ | २२ | समुद्रवन्ति | समुद्द्रवन्ति |
| ,, | २ | ३० | शापो | शापो नाश्नुते |
| १०८ | १ | ९ | राज्ञो | राजस्य |
| १२१ | २ | २९ | न्तेर्वेदि | न्तर्वेदि |
| १२५ | १ | २ | यच्छुद्रे | यच्छूद्रे |
| १२६ | ,, | २९ | यज्ञ, | यज्ञः, |
| १३० | २ | ८ | वेदिम | वेदिमु |
| १३७ | ,, | ३३ | ।११। | ।२१। |
| १५२ | १ | २९ | सामा | समा |
| १५४ | २ | ११ | इति । च, | इति च, |
| १७६ | ,, | ३४ | एवं | एनं |
| १८१ | १ | ११ | अनन्द | आनन्द |
| ,, | २ | ३ | वर्तते | वर्तन्ते |
| १९० | १ | १६ | स्मर्च्यूंक्तायां | स्मर्च्यृच्युक्तायां |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| २१४ | २ | २४ | ते सर्वैः | तैः सर्वैः |
| २१९ | ,, | १६ | पूवोक्तं | पूर्वोक्तं |
| २२५ | ,, | १४ | पर्युषु | पर्यूषु |
| २४५ | १ | ३ | त्वद्वदि | तद्वदि |
| २४६ | २ | २३ | सोम स्त्वा | सोमस्त्वा |
| २५४ | १ | १६ | दैवत्यत्वं | देवत्यत्वं |
| २६५ | ,, | २१ | ण्डुलास्ते | ण्डुलास्ते |
| २७० | ,, | ५ | तभि | ताभि |
| २७४ | ,, | १७ | त्रिꣳशत् | त्रिꣳशत् |
| ,, | ,, | १८ | त्रिꣳशद्वै | त्रिꣳशद्वै |
| ,, | ,, | ,, | त्रिꣳशः | त्रिꣳशः |
| २८० | २ | ८ | न यजति | जनयति |
| २८५ | १ | ३३ | काश्रो. | काश्रौ. |
| २९२ | ,, | ७ | जीनामी | जिनामी |
| २९७ | ,, | २८ | विघ` | विघत्ते |
| ३०५ | ,, | ३ | विꣳशति | विंꣳशति |
| ३१३ | २ | २८ | सरस्वं | सरस्व |
| ३१४ | १ | २० | वकत्या | कवत्या |
| ३२३ | २ | २८ | दनुष्टुप्द्वा | दनुष्टुब्द्वा |
| ३३० | ,, | २९ | अथैय | अथैव |
| ३३४ | ,, | २३ | भ्रिदवेभ्यो | भ्रिंदेवेभ्यो |
| ३३५ | १ | १५ | द्धोमः | द्धोमाः |
| ३४९ | ,, | ५ | ब्रह्मं | ब्रह्म |
| ३५७ | २ | १३ | तेदत | तदेत |
| ३७१ | ,, | १५ | न | नः |
| ,, | ,, | १६ | वक्षन | वक्षन् |
| ३७३ | १ | २ | त्यर्थ | त्यर्थः |
| ४२२ | ,, | १९ | भविष्या | भविष्य |
| ४२४ | २ | ७ | तस्मापुरा | तस्मात्पुरा |
| ४२९ | १ | – | – | चतुर्थपङ्क्तेरुपरि 'व्रात्याः , तेषां स्तोमश्च ' इति विषयो वाचनीयः |
| ,, | २ | २६ | एनं | एवं |
| ,, | ,, | ४ | वात्याः | व्रात्याः |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४३२ | २ | ११ | व्रात्याः, तेषां स्तोमश्च | अयं विषयः न वाचनीयः |
| ४३३ | ,, | ५ | यज्ञस्यं | यज्ञस्य |
| ४३७ | १ | — | — | २२ पङ्क्तेरुपरि 'चातुर्वर्ण्योत्पत्तिः' इति विषयो वाचनीयः |
| ४५० | ,, | १८ | पचनं | पर्चनं |
| ४५६ | २ | १ | वणनायसा | वर्णेनायसा |
| ४५८ | १ | ७ | शण्वन्ति | शृण्वन्ति |
| ४५९ | ,, | २२ | सन्नव | सन्नेव |
| ४६० | २ | ३३ | पसं. | पैसं. |
| ४९२ | ,, | ५ | शरारेण | शरीरेण |
| ५१८ | १ | २६ | त्रिषधि | त्रिषंधि |

# धर्मकोशः
## राजनीतिकाण्डम्

### देवा राजानः

#### वेदाः

#### इन्द्रावरुणौ

इन्द्रावरुणौ विश्वस्य जगतः सम्राजौ

[1]इन्द्रावरुणयोरहं सम्राजोरव आ वृणे ।
ता नो मृळात ईदृशे ॥

अहं अनुष्ठाता सम्राजोः समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वा इन्द्रावरुणयोः देवयोः संबन्धि अवः रक्षणं आ वृणे सर्वतः प्रार्थये । ता तौ देवौ ईदृशे एवंविधे अस्मदीयवरणे निमित्तभूते सति मृळातः अस्मान् सुखयतः । ऋसा.

[2]गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः ।
धर्तारा चर्षणीनाम् ॥

हे इन्द्रावरुणौ, अवसे अवितुं अनुष्ठातारं रक्षितुं मावतः मद्विधस्य विप्रस्य ब्राह्मणर्त्विजः हवं आह्वानं गन्तारौ स्थः हि प्राप्तिशीलौ भवथः खलु । कीदृशौ ? चर्षणीनां मनुष्याणां धर्तारौ योगक्षेमसंपादनेन धारयितारौ । ऋसा.

शत्रुहननं इन्द्रस्य कर्म, व्रतरक्षणं च वरुणस्य

[3]वृत्राण्यन्यः समिथेषु जिघ्नते
व्रतान्यन्यो अभि रक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभि-
रस्मे इन्द्रावरुणा शर्म यच्छतम् ॥

हे इन्द्रावरुणौ, युवयोः अन्यः एकः इन्द्रः वृत्राणि शत्रून् समिथेषु संग्रामेषु जिघ्नते हन्ति । अन्यः एको वरुणः सदा सर्वदा व्रतानि कर्माणि अभि रक्षते अभितः सर्वतो रक्षति । हे वृषणा कामानां वर्षिताराविन्द्रावरुणौ, तथाविधौ वां युवां सुवृक्तिभिः सुप्रवृत्ताभिः स्तुतिभिः हवामहे आह्वयामहे । आहूतौ च युवां अस्मे अस्मभ्यं शर्म सुखं यच्छतं दत्तम् । ऋसा.

[1]आपश्चिद्धि स्वयशसः सदःसु
देवीरिन्द्रं वरुणं देवता धुः ।
कृष्टीरन्यो धारयति प्रविक्ता
वृत्राण्यन्यो अप्रतीनि हन्ति ॥

आपश्चित् अब्विकाराः सोमाश्च स्वयशसः स्वायत्तयशस्काः देवीः द्योतमानाः सन्तः सदःसु सदनेषु स्थानेषु इन्द्रं वरुणं च देवता एते द्वे देवते धुः धारयन्ति अवस्थापयन्ति । सोमेनाप्यायिता हि देवताः स्वे स्वे स्थानेऽवतिष्ठन्ते । यद्वा, वसतीवर्याख्या आप एव सोमाभिषवद्वारा सदनेष्विन्द्रं वरुणं च धारयन्ति । तयोरिन्द्रावरुणयोः अन्यः एकः प्रविक्ताः पृथक्कृताः पुण्यापुण्यविवेकेन विचित्रफलभोक्त्रीः कृष्टीः प्रजाः असांकर्येण धारयति । अन्यः इन्द्रः वृत्राणि शत्रुजातानि अप्रतीनि अन्यैरप्रतिगतानि हन्ति हिनस्ति । ऋसा.

---

(१) ऋसं. १।१७।१; तैसं. २।५।१२।२; कासं. १२।१४ (३८). ळळयोः ळ्हळ्हयोश्च नियतः पाठभेदो न संगृहीतः ।

(२) ऋसं. १।१७।२.

(३) ऋसं. ७।८३।९.

(१) ऋसं. ७।८५।३.

## वरुणः

वरुणः सुमार्गकारी सर्वज्ञो राजा सम्राट्, तस्य विश्वव्यापकानि व्रतानि, शतभिषक्समेतः, पापात् पाशाच्च मोचकः, तस्य चराश्चरन्ति

[1]नहि ते क्षत्रं न सहो न मन्युं
वयश्चनामी पतयन्त आपुः ।
नेमा आपो अनिमिषं चरन्ती-
र्न ये वातस्य प्रमिनन्त्यभ्वम् ॥

हे वरुण, पतयन्तः प्रौढे वियत्युत्पतन्तः अमी दृश्यमानाः वयश्चन श्येनादयः पक्षिणोऽपि ते क्षत्रं त्वदीयं शरीरबलं नहि आपुः नैव प्राप्ताः । त्वत्सदृशं शरीरबलं पक्षिणामपि नास्तीत्यर्थः । तथा सहः त्वदीयं पराक्रमं तव सामर्थ्यमपि न प्रापुः । तथा मन्युं त्वदीयं कोपमपि न प्रापुः । त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थः । अनिमिषं सर्वदा चरन्तीः प्रवाहरूपेण गच्छन्त्यः आपः त्वदीयं बलं न प्रापुः । वातस्य वायोः ये गतिविशेषाः त्वदीयं अभ्वं वेगं न प्रमिनन्ति न हिंसन्ति । अतिक्रमं कर्तुं न शक्ता इत्यर्थः । तेऽपि न प्रापुरिति पूर्वत्रान्वयः ।
ऋसा.

अबुध्ने राजा वरुणो वनस्यो-
र्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषा-
मस्मे अन्तर्निहिताः केतवः स्युः ॥

पूतदक्षः शुद्धबलः वरुणः राजा अबुध्ने मूलरहिते अन्तरिक्षे तिष्ठन् वनस्य वननीयस्य तेजसः स्तूपं संघं ऊर्ध्वे उपरिदेशे ददते धारयति । नीचीनाः स्थुः । ऊर्ध्वदेशे वर्तमानस्य वरुणस्य रश्मयः इत्यध्याहार्यम् । ते ह्यधोमुखास्तिष्ठन्ति । एषां रश्मीनां बुध्नः मूलं उपरि तिष्ठतीति शेषः । तथा सति केतवः प्रज्ञापकाः प्राणाः अस्मे अस्मासु अन्तर्निहिताः स्थापिताः स्युः मरणं न भविष्यतीत्यर्थः ।
ऋसा.

(१) ऋसं. १।२४।६–७.

[1]उरुं हि राजा वरुणश्चकार
सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽक-
रुतापवक्ता हृदयाविधश्चित् ॥

वरुणः राजा सूर्याय सूर्यस्य पन्थां मार्गं उरुं विस्तीर्णं चकार । हिशब्दः प्रसिद्धौ । उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः । किमर्थमेवं कृतवान् इति तदुच्यते । अन्वेतवा उ अनुक्रमेण उदयास्तमयौ गन्तुमेव । तथा अपदे पादरहिते अन्तरिक्षे पादा प्रतिधातवे पादौ प्रक्षेप्तुं अकः मार्गं कृतवान् । पूर्वत्र रथस्य मार्गः अत्र पादयोरिति विशेषः । यद्वा, अपदे यूपे बद्धेन मया गन्तुमशक्ये भूप्रदेशे पादौ प्रक्षेप्तुं उपायं बन्धविमोचनरूपं करोत्वित्यर्थः । उत अपि च हृदयाविधश्चित् अस्मदीय-वेधकस्य शत्रोरपि अपवक्ता अपवदिता निराकर्ता भवतु ।
ऋसा.

[2]शतं ते राजन् भिषजः सहस्र-
मुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निर्ऋतिं पराचैः
कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥

हे राजन् वरुण, ते तव शतं भिषजः बन्धनिवारकाणि शतसंख्याकानि औषधानि वैद्या वा सन्ति । ते तव सुमतिः अस्मदनुग्रहबुद्धिः उर्वी विस्तीर्णा गभीरा गाम्भीर्योपेता स्थिरा अस्तु । निर्ऋतिं अस्मदनिष्टकारिणीं निर्ऋतिं पापदेवतां पराचैः पराङ्मुखां कृत्वा दूरे असत्तो व्यवहिते देशे स्थापयित्वा तां बाधस्व । कृतं चित् अस्माभिरनुष्ठितमपि एनः पापं अस्मत् प्र मुमुग्धि प्रकर्षेण मुक्तं नष्टं कुरु ।
ऋसा.

(१) ऋसं. १।२४।८ ; तैसं. १।४।४५।१ ; कासं. ४।१३ (७८); मैसं. १।३९।१ (११४) याविध (यावृध) ; शुसं. ८।२३.

(२) ऋसं. १।२४।९ ; तैसं. १।४।४५।१ गभीरा (गम्भीरा) दूरे (द्वेषो) ; कासं. ४।१३ (७९) बाधस्व दूरे (आरे बाधस्व) ग्ध्यस्मत् (ग्ध्यस्मात्) ; मैसं. १।३।३९ (११५) बाधस्व दूरे (आरे बाधस्व).

[1]अमी य ऋक्षा निहितास उच्चा
नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि
विचाकशच्चन्द्रमा नक्तमेति ॥

अमी रात्रावस्माभिर्दृश्यमानाः ऋक्षाः सप्त ऋषयः । तथा च वाजसनेयिन आमनन्ति— ‘ ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षते ’ इति । यद्वा, ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः । ‘ ऋक्षाः स्तृभिरिति नक्षत्राणाम् ’ ( नि. ३।२० ) इति यास्केन उक्तत्वात् । उच्चा उच्चैः उपरि द्युप्रदेशे निहितासः स्थापिताः ये सन्ति ते ऋक्षाः नक्तं रात्रौ ददृश्रे सर्वैरपि दृश्यन्ते । दिवा अहनि कुह चित् ईयुः क्वापि गच्छेयुः । न दृश्यन्ते इत्यर्थः । वरुणस्य राज्ञः व्रतानि कर्माणि नक्षत्रदर्शनादिरूपाणि अदब्धानि केनापि अहिंसितानि । किंच, वरुणस्य आज्ञयैव चन्द्रमाः नक्तं रात्रौ विचाकशत् विशेषेण दीप्यमानः एति गच्छति । ऋसा.

[2]तदिन्नक्तं तद्दिवा मह्यमाहु-
स्तदयं केतो हृद आ वि चष्टे ।
शुनःशेपो यमह्वद्गृभीतः
सो अस्मान् राजा वरुणो मुमोक्तु ॥

तदित् तदेव वरुणविषयं स्तोत्रं नक्तं रात्रौ मह्यं शुनःशेपाय आहुः कर्तव्यत्वेनाभिज्ञाः कथयन्ति । तथा दिवा अपि तत् एव आहुः । हृदः मदीयमनसो निष्पन्नः अयं केतः प्रज्ञाविशेषोऽपि तदेव कर्तव्यत्वेन आ वि चष्टे सर्वतो विशेषेण प्रकाशयति । गृभीतः गृहीतः यूपे बद्धः शुनःशेपः एतन्नामको जनः यं वरुणं अह्वत् आहूतवान् सः वरुणः राजा अस्मान् शुनःशेपान् मुमोक्तु बन्धात् मुक्तं करोतु । ऋसा.

शुनःशेपो ह्यह्वद्गृभीत-
स्त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्या-
द्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥

गृभीतः बन्धनाय गृहीतः त्रिसंख्याकेषु द्रुपदेषु द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशेषेषु बद्धः शुनःशेपः आदित्यं अदितेः पुत्रं यं वरुणं अह्वत् आहूतवान् हि यस्मादेवं तस्मात् सः वरुणः राजा एनं शुनःशेपं अव ससृज्यात् अवसृष्टं बन्धनात् विमुक्तं करोतु । विमोकप्रकार एव स्पष्टीक्रियते — विद्वान् विमोकप्रकाराभिज्ञः अदब्धः केनाप्यहिंसितः वरुणः पाशान् बन्धनरज्जुविशेषान् वि मुमोक्तु विच्छिद्यैनं मुक्तं करोतु । ऋसा.

[1]अव ते हेळो वरुण नमोभि-
रव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता
राजन्नेनांसि शिश्रथः कृतानि ॥

हे वरुण, ते तव हेळः क्रोधं नमोभिः नमस्कारैः अव ईमहे अवनयामः । तथा यज्ञैः साङ्गानुष्ठानेन पूज्यैः हविर्भिः अव ईमहे वरुणं परितोष्य क्रोधमपनयामः । हे असुर अनिष्टक्षेपणशील, प्रचेतः प्रकर्षेण प्रज्ञायुक्त, राजन् दीप्यमान वरुण, अस्मभ्यं अस्मदर्थं क्षयन् अस्मिन् कर्मणि निवसन् कृतानि अस्माभिरनुष्ठितानि एनांसि पापानि शिश्रथः श्रथितानि शिथिलानि कुरु । ऋसा.

[2]उदुत्तमं वरुण पाशमस्म-
दवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते
तवानागसो अदितये स्याम ॥

हे वरुण, उत्तमं उत्कृष्टं शिरसि बद्धं पाशं अस्मत् अस्मत्तः उत् श्रथाय उत्कृष्य शिथिलं कुरु । अधमं

( १ ) ऋसं. १।२४।१० ; तैआ. १।११।२ नक्तमेति ( नक्षत्रमेति ) ; नि. ३।२०.

( २ ) ऋसं. १।२४।१२–१३.

( १ ) ऋसं. १।२४।१४ ; तैसं. १।५।११।३ प्रचेता (प्रचेतो); कासं. ४०।११ ( ९० ) तैसंवत्; मैसं. ४।१०।४ ( १०७ ), ४।१४।१७ ( २५५ ); तैब्रा. २।७।१६।४ ; तैआ. २।४।१ ; आश्रौ. ६।१३ ; आपश्रौ. १३।१९।७.

( २ ) ऋसं. १।२४।१५; असं. ७।८३।३, १८।४।६९ अथा ( अधा ); तैसं. १।५।११।३, ४।२।१।३; कासं. ३।८ (२८), १६।८ (९३); मैसं. १।२।१८ ( ११८ ), ४।१४।१७ ( २५४ ); शुसं. १२।१२; तैब्रा. २।८।१।६; शब्रा. ६।७।३।८ ; सामब्रा. १।७।१०; हिगृ. १।९।१०.

निकृष्टं पादेऽवस्थितं पाशं अव श्रथाय अधस्तादवकृष्य शिथिलीकुरु। मध्यमं नाभिप्रदेशगतं पाशं वि श्रथाय वियुज्य शिथिलीकुरु। अथ अनन्तरं हे आदित्य अदितेः पुत्र वरुण, वयं शुनःशेपाः तव व्रते त्वदीये कर्मणि अदितये खण्डनराहित्याय अनागसः अपराधरहिताः स्याम भवेम। ऋसा.

[1]कदा क्षत्रश्रियं नरमा वरुणं करामहे।
मृळीकायोरुचक्षसम्॥

मृळीकाय अस्मत्सुखाय वरुणं कदा कस्मिन् काले आ करामहे अस्मिन् कर्मणि आगतं करवाम। कीदृशम्? क्षत्रश्रियं बलसेविनं नरं नेतारं उरुचक्षसं बहूनां द्रष्टारम्। क्षत्रश्रियं, क्षत्राणि श्रयतीति क्षत्रश्रीः। ऋसा.

तदित्समानमाशाते वेनन्ता न प्र युच्छतः।
धृतव्रताय दाशुषे॥

धृतव्रताय अनुष्ठितकर्मणे दाशुषे हविर्दत्तवते यजमानाय वेनन्तौ कामयमानौ मित्रावरुणाविति शेषः। तावुभौ समानं साधारणं तदित् अस्माभिर्दत्तं तदेव हविः आशाते अश्नुवाते। न प्र युच्छतः कदाचिदपि प्रमादं न कुरुतः। ऋसा.

वेदा यो वीनां पदमन्तरिक्षेण पतताम्।
वेद नावः समुद्रियः॥

अन्तरिक्षेण पततां आकाशमार्गेण गच्छतां वीनां पक्षिणां पदं यः वरुणः वेद। तथा समुद्रियः समुद्रेऽवस्थितः वरुणः नावः जले गच्छन्त्याः पदं वेद जानाति सोऽस्मान् बन्धनान्मोचयत्विति शेषः। ऋसा.

वेद मासो धृतव्रतो द्वादश प्रजावतः।
वेदा य उपजायते॥

धृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः प्रजावतः तदा तदोत्पद्यमानप्रजायुक्तान् द्वादश मासः चैत्रादीन् फाल्गुनान्तान् वेद जानाति। यः त्रयोदशः अधिकमासः उपजायते संवत्सरसमीपे स्वयमेवोत्पद्यते तमपि वेद। वाक्यशेषः पूर्ववत्। ऋसा.

(१) ऋसं. १।२५।५–९.

वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः।
वेदा ये अध्यासते॥

उरोः विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतः गुणैरधिकस्य वातस्य वायोः वर्तनिं मार्गं वेद वरुणो जानाति। ये देवाः अध्यासते उपरि तिष्ठन्ति तानपि वेद जानाति। ऋसा.

[1]नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा।
साम्राज्याय सुक्रतुः॥

धृतव्रतः पूर्वोक्तः वरुणः पस्त्यासु दैवीषु प्रजासु आ नि षसाद आगत्य निषण्णवान्। किमर्थम्? प्रजानां साम्राज्यसिद्ध्यर्थम्। सुक्रतुः शोभनकर्मा। ऋसा.

[2]अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति।
कृतानि या च कर्त्वा॥

अतः अस्मात् वरुणात् विश्वानि अद्भुता सर्वाण्याश्चर्याणि चिकित्वान् प्रज्ञावान् अभि पश्यति सर्वतोऽवलोकयति। या कृतानि यान्याश्चर्याणि पूर्वं वरुणेन संपादितानि, चकारात् अन्यानि यान्याश्चर्याणि कर्त्वा इतः परं कर्तव्यानि तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः। ऋसा.

स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत्।
प्र ण आयूंषि तारिषत्॥

सुक्रतुः शोभनप्रज्ञः सः आदित्यः वरुणः विश्वाहा सर्वेष्वहःसु नः अस्मान् सुपथा शोभनमार्गेण सहितान् करत् करोतु। किंच नः अस्माकं आयूंषि प्र तारिषत् प्रवर्धयतु। ऋसा.

बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम्।
परि स्पशो नि षेदिरे॥

(१) ऋसं. १।२५।१०; तैसं. १।८।१६।१; कासं. २।७ (४३), ७।१४ (८३), ८।७ (१४), १५।८ (२३), ३८।४ (४४); मैसं. १।६।२ (३१), २।६।१२ (३६), २।७।१६ (२३१), ४।४।६ (७); शुसं. १०।२७, २०।२; ऐब्रा. ३८।२, ३९।४; तैब्रा. १।७।१०।२, २।६।५।१; शब्रा. ५।४।४।५, १२।८।३।१०.

(२) ऋसं. १।२५।११–१८.

हिरण्ययं सुवर्णमयं द्रापिं कवचं बिभ्रत् धारयन् वरुणः निर्णिजं पुष्टं स्वशरीरं वस्त आच्छादयति । स्पशः हिरण्यस्पर्शिनो रश्मयः परि नि षेदिरे सर्वतो निषण्णाः । ऋसा.

**न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम् ।**
**न देवमभिमातयः ॥**

दिप्सवः हिंसितुमिच्छन्तो वैरिणः यं वरुणं न दिप्सन्ति भीताः सन्तो हिंसितुमिच्छां परित्यजन्ति । जनानां प्राणिनां द्रुह्वाणः द्रोग्धारोऽपि यं वरुणं प्रति न द्रुह्यन्ति । अभिमातयः पाप्मानः, 'पाप्मा वा अभिमातिः' (तैसं. २।१।३।५) इति श्रुत्यन्तरात् । देवं तं वरुणं न स्पृशन्ति । ऋसा.

**उत यो मानुषेष्वा यशश्चक्रे असाम्या ।**
**अस्माकमुदरेष्वा ॥**

उत अपि च यः वरुणः मानुषेषु यशः अन्नं आ चक्रे सर्वतः कृतवान् स वरुणः कुर्वन्नपि आ सर्वतः असामि संपूर्णं चक्रे न तु न्यूनं कृतवान् । विशेषतः अस्माकं उदरेषु आ सर्वतः चक्रे । ऋसा.

**परा मे यन्ति धीतयो गावो न गव्यूतीरनु ।**
**इच्छन्तीरुरुचक्षसम् ॥**

उरुचक्षसं बहुभिर्द्रष्टव्यं वरुणं इच्छन्तीः मे धीतयः शुनःशेपस्य बुद्धयः परा यन्ति पराङ्मुखा निवृत्तिरहिता गच्छन्ति । तत्र दृष्टान्तः — गावो न । यथा गावः गव्यूतीरनु गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत् । ऋसा.

**सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् ।**
**होतेव क्षदसे प्रियम् ॥**

यतः यस्मात् कारणात् मे मज्जीवनार्थं मधुरं हविः आभृतं अञ्जःसवाख्ये कर्मणि संपादितं अतः कारणात् होतेव होमकर्तेव त्वमपि प्रियं हविः क्षदसे अश्नासि । पुनः हविःस्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहं च नु अवश्यं सं वोचावहै संभूय प्रियवार्तां करवावहै । ऋसा.

**दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि ।**
**एता जुषत मे गिरः ॥**

विश्वदर्शतं सर्वैर्दर्शनीयं अस्मदनुग्रहार्थमत्राविर्भूतं वरुणं दर्शं नु अहं दृष्टवान् खलु । क्षमि क्षमायां भूमौ रथं वरुणसंबन्धिनं अधि दर्शं आधिक्येन दृष्टवानस्मि । एताः उच्यमानाः मे गिरः मदीयाः स्तुतीः जुषत वरुणः सेवितवान् । ऋसा.

**[१]इमं मे वरुण श्रुधी हवमद्या च मृळय ।**
**त्वामवस्युरा चके ॥**

हे वरुण, मे मदीयं इमं हवं आह्वानं श्रुधि शृणु । किंच अद्य अस्मिन् दिने मृळय अस्मान् सुखय । अवस्युः रक्षणेच्छुः अहं त्वां वरुणं आभिमुख्येन चके शब्दयामि स्तौमीत्यर्थः । ऋसा.

**[२]त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि ।**
**स यामनि प्रति श्रुधि ॥**

हे मेधिर मेधाविन् वरुण, त्वं दिवश्च द्युलोकस्यापि ग्मश्च भूलोकस्यापि एवमात्मकस्य विश्वस्य सर्वस्य जगतो मध्ये राजसि दीप्यसे । सः तादृशः त्वं यामनि क्षेमप्रापणे अस्मदीये प्रति श्रुधि प्रतिश्रवणं आज्ञापनं कुरु । रक्षिष्यामीति प्रत्युत्तरं देहीत्यर्थः । ऋसा.

**[३]उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ।**
**अवाधमानि जीवसे ॥**

नः अस्माकं उत्तमं शिरोगतं पाशं उत् मुमुग्धि उत्कृष्य मोचय । मध्यमं उदरगतं पाशं वि चृत वियुज्य नाशय । जीवसे जीवितुं अधमानि मदीयान् पादगतान् पाशान् अव चृत अवकृष्य नाशय । ऋसा.

---

(१) **ऋसं.** १।२५।१९; **सासं.** २।१६।२ (१५५); **तैसं.** २।१।११।६; **कासं.** ४।१६ (१४०); **मैसं.** ४।१०।२ (४९), ४।१४।१७ (२५२); **शुसं.** २१।१; **आश्रौ.** २।१७.

(२) **ऋसं.** १।२५।२०.

(३) **ऋसं.** १।२५।२१; **कासं.** २१।१३ (४६); **तैब्रा.** २।४।२।६.

जनधारकः वरुणो राजा

[1]स भ्रातरं वरुणमग्न आ ववृत्स्व देवाँ
अच्छा सुमती यज्ञवनसं ज्येष्ठं यज्ञवनसम् ।
ऋतावानमादित्यं चर्षणीधृतं राजानं
चर्षणीधृतम् ॥

हे अग्ने, सः तादृशस्त्वं भ्रातरं एकस्थानवासेन भ्रातरं वरुणम् । वृणोत्युदकमिति वरुणः । तं देवं यज्ञवनसं यज्ञैः यजनीयैर्हविर्भिः संभजनीयं यज्ञवनसं च यज्ञस्य संभक्तारं ज्येष्ठं अतिशयेन प्रशस्यं ऋतावानं अपां स्वामितयोदकवन्तं सत्यवन्तं वा आदित्यं अदितेः पुत्रं चर्षणीधृतं मनुष्याणामुदकप्रदानेन धारकं सुमती शोभनबुद्धया हेतुना चर्षणीधृतं चर्षणिभिः विद्वद्भिः धृतं राजानं राजन्तं एतादृशं वरुणं देवं देवान् देवनशीलान् स्तोतॄन् अच्छ अभि आ ववृत्स्व आवर्तय अभिमुखीकुरु ।
ऋसा.

वरुणस्य राज्ञः सृष्टिरचनारूपाणि विविधकर्माणि

[2]प्र सम्राजे बृहदर्चा गभीरं
ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्मो-
पस्तिरे पृथिवीं सूर्याय ॥

अत्रिः स्वात्मानं संबोध्य ब्रवीति । हे अत्रे, त्वं सम्राजे सम्यक् राजमानायेश्वराय श्रुताय सर्वत्र श्रूयमाणाय वरुणाय उपद्रवस्य निवारकाय जनानामावरकाय चैतन्नामकाय देवाय बृहत् प्रभूतं गभीरं दुरवगाहं बह्वर्थोपेतं प्रियं प्रियभूतं ब्रह्म स्तोत्ररूपं कर्म प्र अर्च प्रार्चय, प्रोच्चारयेत्यर्थः । यः वरुणः शमितेव चर्म शमिता पशुविशसनकर्ता यथोपस्तरणाय चर्म हन्ति तद्वत् पृथिवीं विस्तीर्णमन्तरिक्षम् । 'तृतीयस्यां पृथिव्याम्' (तैसं. १।२।१२।१) इति श्रुतेः अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वम् । सूर्याय सूर्यस्य उपस्तिरे आस्तरणाय वि जघान विस्तारयामास । विस्तृतं हि व्यवहारयोग्यं भवति तस्मात् व्यवहाराय अन्तरिक्षं विस्तारितवान् । 'उरुं हि राजा वरुणश्चकार' (ऋसं. १।२४।८) इति ह्युक्तम् ।
ऋसा.

[1]वनेषु व्य१न्तरिक्षं ततान
वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो अप्स्व१ग्निं
दिवि सूर्यमदधात् सोममद्रौ ॥

अयं वरुणः वनेषु वृक्षाग्रेषु अन्तरिक्षं वि ततान विस्तारितवान् । तथा वाजसनेयकम्— 'वनेषु हीदमेषु वृक्षाग्रेष्वन्तरिक्षं विततं तस्मादाह वनेषु व्यन्तरिक्षं ततान' इति । वाजं बलं अर्वत्सु अश्वेषु वि ततान । पयः क्षीरं उस्रियासु गोषु । उस्रियेति गोनाम, उत्स्राविणोऽस्यां भोगा इति तद्व्युत्पत्तिः । हृत्सु हृदयेषु क्रतुं कर्मसंकल्पम् । यद्धि मनसा ध्यायति तत् कर्मणा करोति । अप्सु उदकेषु अग्निं वैद्युतमौर्वं वा । सर्वत्र वि ततानेति संबन्धः । किंच, दिवि द्युलोके सूर्यं अदधात् स्थापितवान् । सोमं च अद्रौ पर्वतेऽदधात् ।
ऋसा.

[2]नीचीनबारं वरुणः कवन्धं
प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा
यवं न वृष्टिर्व्युनत्ति भूम ॥

नीचीनबारं अधोमुखबिलं प्र ससर्ज कृतवान् । कम् ? कवन्धम् । कवनं उदकम् । तत् धीयतेऽत्रेति कवन्धो मेघः । तं तथाऽकरोत् । अथवा कवन्धं उदकम् । तदुदकं नीचीनबारं नीचीननिर्गमनबिलं चकार । मेघं विदार्य उदकमधोमुखं चकारेत्यर्थः । किं प्रतीत्युच्यते — रोदसी द्यावापृथिव्यौ अन्तरिक्षं च प्रति । लोकत्रयहितायेत्यर्थः ।

---

(१) ऋसं. ४।१।२.
(२) ऋसं. ५।८५।१; कासं. १२।१५ (६१).

(१) ऋसं. ५।८५।२; तैसं. १।२।८।१ पय उस्रियासु (पयो अघ्नियासु) अप्स्वग्निं (विक्ष्वग्निं); कासं. २।६ (३७), ४।९ (५०) पय उस्रियासु (पयो अघ्न्यासु) अप्स्वग्निं (विक्ष्वग्निं); मैसं. १।२।६ (४०) पय उस्रियासु (पयो अघ्न्यासु) वरुणो अप्स्वग्निं (वरुणं दि३क्ष्वग्निं); शुसं. ४।३१ अप्स्वग्निं (विक्ष्वग्निं); शाब्रा. ७।१०; शब्रा. ३।३।४।६ शुसंवत्.
(२) ऋसं. ५।८५।३; नि. १०।४.

तेन उदकेन विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा स्वामी वरुणः भूम भूमिं व्युनत्ति क्लेदयति । वृष्टिः सेक्ता पुमान् यवं न यवमिव यवान् यथा प्ररोहाय सर्वत्र प्रसारयति तद्वत् भूमिं सर्वत्रोनत्ति । अथवा वृष्टिर्वरुण इति संबन्धः । वर्षकः पर्जन्य इत्यर्थः । अस्मिन् पक्षे यवं पुरुष इवेति पुरुषशब्दोऽध्याहार्यः । अत्र 'नीचीनबारं वरुणः कवन्धम्' (नि. १०।४) इत्यादिनिरुक्तं द्रष्टव्यम् । ऋसा.

**[१]उनत्ति भूमिं पृथिवीमुत द्यां**
**यदा दुग्धं वरुणो वष्ट्यादित् ।**
**समभ्रेण वसत पर्वतास-**
**स्तविषीयन्तः श्रथयन्त वीराः ॥**

वरुणः भूमिं पृथिवीं प्रथितमन्तरिक्षम् । अन्तरिक्षस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुक्तम् । उत अपि च द्यां द्युलोकं उनत्ति क्लेदयति । यदा अयं दुग्धं उदकपूर्णं वष्टि कामयते । अथवा दुग्धं उदकम् । तेन तत्कार्यमोषध्यादिकं लक्ष्यते । ओषध्यादयः प्रवर्धन्तामिति यदा कामयते आदित् अनन्तरमेव सं वसत समाच्छादयन्ति । के ? पर्वतासः पर्ववन्तः अद्रयः । केन ? अभ्रेण मेघेन । किंच, तविषीयन्तः बलमिच्छन्तः वीराः विशेषेण वृष्टेः प्रेरयितारो मरुतः श्रथयन्त श्रथयन्ति मेघान् । ऋसा.

**इमामू ष्वासुरस्य श्रुतस्य**
**महीं मायां वरुणस्य प्र वोचम् ।**
**मानेनेव तस्थिवाँ अन्तरिक्षे**
**वि यो ममे पृथिवीं सूर्येण ॥**

आसुरस्य असुरसंबन्धिनः । असुराणामस्य च वध्यघातकभावः संबन्धः । असुरहन्तुरित्यर्थः । अथवा असुरः मेघः । प्राणदानात् तत्संबन्धिनः श्रुतस्य विश्रुतस्य महीं महतीं इमां मायां प्रज्ञां प्र वोचं प्रब्रवीमि । कैषा मायेति सोच्यते । यः वरुणः अन्तरिक्षे तस्थिवान् तिष्ठन् मानेनेव दण्डेनेव सूर्येण पृथिवीं अन्तरिक्षं वि ममे परिच्छिनत्ति तस्यैषा माया । ऋसा.

(१) ऋसं. ५।८५।४–५.

**[१]इमामू नु कवितमस्य मायां**
**महीं देवस्य नकिरा दधर्ष ।**
**एकं यदुद्ना न पृणन्त्येनी-**
**रासिञ्चन्तीरवनयः समुद्रम् ॥**

कवितमस्य प्रकृष्टप्रज्ञस्य देवस्य द्योतमानस्य स्तुत्यस्य वा वरुणस्य इमां सर्वप्रसिद्धां महीं महतीं मायां प्रज्ञां नकिः नैव आ दधर्ष न हिनस्ति कश्चिदपि । ऊ नु इति पूरणौ । यत् यस्मात् एकं समुद्रं उद्ना उदकेन न पृणन्ति न पूरयन्ति । काः ? एनीः एन्यः शुभ्राः गमनशीला वा आसिञ्चन्तीः उदकमासेचयन्त्यः अवनयः नद्यः । बह्व्यो नद्यः सर्वदोदकेन पूरयन्त्योऽपि नैकमपि समुद्रं पूरयन्तीति । इदं वरुणस्य महत् कर्म इति । अत्र अन्तरिक्षविस्तारादिसमुद्रापूरणपर्यन्तं कर्म परमेश्वरस्यैवोचितं न वरुणस्येति न वाच्यम्, तस्य वरुणादिरूपावस्थानात्, 'एष ब्रह्म' इत्यादिश्रुतेः । ऋसा.

वरुणः सहस्रचक्षुः राष्ट्राणां राजा, तस्य चराः
द्यावापृथिव्यौ पश्यन्ति

**[२]आ चष्ट आसां पाथो नदीनां**
**वरुण उग्रः सहस्रचक्षाः ॥**

सहस्रचक्षाः बहुचक्षुः वरुणः आसां नदीनां पाथः जलं आ चष्टे अभिपश्यति । कीदृशो वरुणः ? उग्रः उद्गूर्णः ओजस्वी वा । ऋसा.

**[३]राजा राष्ट्रानां पेशो नदीना-**
**मनुत्तमस्मै क्षत्रं विश्वायु ॥**

राष्ट्रानां राष्ट्राणाम् । णत्वाभावश्छान्दसः । ईश्वराणामपि वरुणः राजा ईश्वरः भवति । नदीनां पेशः रूपं रूपकृदपि भवतीत्यर्थः । अस्मै । षष्ठ्यर्थे चतुर्थी । अस्य वरुणस्य क्षत्रं बलं अनुत्तं अन्यैरबाधितं विश्वायु सर्वतो गन्तृ भवतीति । ऋसा.

(१) ऋसं. ५।८५।६; नि. ६।१३.
(२) ऋसं. ७।३४।१०; नि. ६।७.
(३) ऋसं. ७।३४।११.

[1]परि स्पशो वरुणस्य स्मदिष्टा
उभे पश्यन्ति रोदसी सुमेके ।
ऋतावानः कवयो यज्ञधीराः
प्रचेतसो य इषयन्त मन्म ॥

स्पशन्ति स्पृशन्तीति स्पशः चराः । वरुणस्य देवस्य स्पशः चराः स्मदिष्टाः । स्मदित्येतत् प्रशस्यार्थे सहार्थे च वर्तते । प्रशस्तगतयः । यद्वा, सह प्रेषिताः सन्तः । सुमेके शोभनमेहने सुरूपे वा उभे रोदसी द्यावापृथिव्यौ परि पश्यन्ति परित ईक्षन्ते । उभयोर्लोकयोर्वर्तमानान् पुण्यापुण्यकारिणो जनान् पश्यन्तीत्यर्थः । यस्मादेवं तस्मात् तद्भीत्या ऋतावानः कर्मवन्तः यज्ञधीराः यज्ञेषु कृतबुद्धयः प्रचेतसः प्राज्ञाः कवयः क्रान्तदर्शिनः ये जनाः मन्म मन्मानि स्तोत्राणि इषयन्त गमयन्ति वरुणं प्रापयन्ति । तानपि परिपश्यन्तीत्यर्थः । अतोऽस्मानपि स्तोतॄन् ज्ञात्वा पापात् मुञ्चन्त्विति ऋषिराशास्ते । ऋसा.

वरुणस्य सहस्रद्वारं गृहम्

[2]आ यद्रुहाव वरुणश्च नावं
प्र यत्समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव
प्र प्रेङ्ख ईङ्खयावहै शुभे कम् ॥

यत् यदा वरुणे प्रसन्ने सति अहं वरुणश्च उभौ नावं द्रुममयीं तरणसाधनभूतां आ रुहाव । उभावारूढा-वभूव । तां च नावं यत् यदा समुद्रं मध्यं समुद्रस्य मध्यं प्रति प्र ईरयाव प्रकर्षेण गमयाव । यत् यदा च अपां उदकानां अधि उपरि स्नुभिः गन्त्रीभिरन्याभिरपि नौभिः चराव वर्तावहै । तदानीं शुभे शोभार्थं प्रेङ्खे नौरूपायां दोलायामेव प्र ईङ्खयावहै । निम्नोन्नतैस्तरङ्गैरितश्चेतश्च प्रविचलन्तौ संक्रीडावहै । कं इति पूरकः । यद्वा क्रिया-विशेषणम् । कं सुखं यथा भवति तथेत्यर्थः ।

ऋसा.

(१) ऋसं. ७।८७।३.
(२) ऋसं. ७।८८।३–४.

वसिष्ठं ह्र वरुणो नाव्याधा-
दृषिं चकार स्वपा महोभिः* ।
स्तोतारं विप्रः सुदिनत्वे अह्नां
यान्नु द्यावस्ततनन्यादुषासः ॥

एवं वसिष्ठेनात्मनोक्ते यत् वरुणेन कृतं तद्दर्शयति । वसिष्ठं ह वसिष्ठं खलु वरुणः नावि स्वकीयायां आधात् आरोहयत् । तथा तं ऋषिं अवोभिः रक्षणैः स्वपां स्वपसं शोभनकर्माणं चकार वरुणः कृतवान् । अपि च विप्रः मेधावी वरुणः अह्नां दिवसानां मध्ये सुदिनत्वे यत्फलत्वेन शोभनदिनत्वं तत्र स्तोतारं अस्थापयदिति शेषः । किं कुर्वन् ? यात् यातो गच्छतः द्यावः दिवसान् यात् यातीः उषासः उषसोपलक्षिता रात्रीश्च नु क्षिप्रं ततनन् सूर्यात्मना विस्तारयन् । ऋसा.

[1]क्व त्यानि नौ सख्या बभूवुः
सचावहे यदवृकं पुरा चित् ।
बृहन्तं मानं वरुण स्वधावः
सहस्रद्वारं जगमा गृहं ते ॥

हे वरुण, त्यानि तानि पुरातनानि नौ आवयोः सख्या सख्यानि सखित्वानि क्व कुत्र बभूवुः । पुरा पूर्वस्मिन् काले अवृकं अहिंस्यमात्यन्तिकं यत् सख्यमस्ति तत् सचावहे आवां सेवावहे । चित् इति पूरकः । अपि च हे स्वधावः अन्नवन् वरुण, ते त्वदीयं गृहं जगम गच्छानि । लोडर्थे लिट् । कीदृशं गृहम् ? बृहन्तं महान्तं मानम् । मान्ति अस्मिन् सर्वाणि भूतानीति मानम् । सर्वस्य भूतजातस्य परिच्छेदकमित्यर्थः । सहस्रद्वारं बहुद्वारम् । ऋसा.

[2]य आपिर्नित्यो वरुण प्रियः सन्
त्वामागांसि कृणवत्सखा ते ।
मा त एनस्वन्तो यक्षिन् भुजेम
यन्धि ष्मा विप्रः स्तुवते वरूथम् ॥

* भाष्यपाठोऽत्र मूलपाठाद्भिन्नः ।

(१) ऋसं. ७।८८।५; मैसं. ४।१४।९ (१२५) सचावहे (सचावहै).
(२) ऋसं. ७।८८।६.

हे वरुण, यः वसिष्ठः नित्यः ध्रुवः आपिः बन्धुः औरसः पुत्र इत्यर्थः । यः पूर्वे प्रियः सन् त्वां प्रति आगांसि अपराधान् कृणवत् अकरोत् स इदानीं ते तव सखा समानख्यानः प्रियोऽस्तु । हे यक्षिन् यजनीय वरुण, ते तव स्वभूता वयं एनस्वन्तः एनसा पापेन युक्ताः सन्तः मा भुजेम मा भुञ्ज्महि । त्वत्प्रसादात् पापरहिता एव सन्तो भोगान् भुनजामहै । विप्रः मेधावी त्वं च स्तुवते स्तोत्रं कुर्वते वसिष्ठाय वरूथं अनिष्टनिवारकं वरणीयं वा गृहं यन्धि प्रयच्छ । स्म इति पूरकः । ऋसा.

पतिततारको वरुणः

[1]मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् ।
मृळा सुक्षत्र मृळय ॥

हे राजन् ईश्वर वरुण, त्वदीयं मृन्मयं मृदादिभिर्निर्मितं गृहं मो मा उ मैव अहं गमं गतोऽस्मि । अपि तु सु शोभनं सुवर्णमयमेव त्वदीयं गृहं प्राप्नवानि । स त्वं मां मृळ सुखय । हे सुक्षत्र शोभनधन वरुण, मृळय उपदयां च कुरु । ऋसा.

यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः ।
मृळा सुक्षत्र मृळय ॥

हे अद्रिवः आयुधवन् वरुण, यत् यदा प्रस्फुरन्निव शैत्येन प्रविचलन्निव त्वद्भयात् वेपमानः दृतिर्न दृतिरिव ध्मातः वायुना पूर्णः संस्त्वया बद्धोऽहं एमि गच्छामि तदानीं मृळ सुखय । हे सुक्षत्र सुधन, मृळय उपदयां कुरु ।

ऋसा.

क्रत्वः समह दीनता प्रतीपं जगमा शुचे ।
मृळा सुक्षत्र मृळय ॥

हे समह सधन, शुचे स्वभावतो निर्मल वरुण, दीनता दीनतया अशक्ततया क्रत्वः कर्मणः कर्तव्यत्वेन विहितस्य श्रौतस्मार्तादिलक्षणस्य प्रतीपं प्रतिकूलमननुष्ठानं जगम प्राप्तवानस्मि । अत एव त्वया बद्धः । तादृशं मां मृळ सुखय । अन्यत् गतम् । ऋसा.

(१) ऋसं. ७।८९।१–४.

अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् ।
मृळा सुक्षत्र मृळय ॥

अपां समुद्राणामुदकानां मध्ये तस्थिवांसं स्थितवन्तमपि जरितारं तव स्तोतारं मां तृष्णा पिपासा अविदत् आप्तवती, लवणोत्कटस्य सामुद्रजलस्य पानानर्हत्वात् । अतः तादृशं मां मृळ सुखय । ऋसा.

[1]यत्किं चेदं वरुण दैव्ये जने-
ऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत्तव धर्मा युयोपिम
मा नस्तस्मादेनसो देव रीरिषः ॥

हे वरुण, दैव्ये देवसमूहरूपे जने यत् इदं किंचन अभिद्रोहं अपकारजातं मनुष्याः वयं चरामसि चरामः निर्वर्तयामः । तथा अचित्ती अचित्त्या अज्ञानेन तव त्वदीयं यत् धर्म धारकं कर्म युयोपिम वयं विमोहितवन्तः । हे देव, तस्मादेनसः पापात् नः अस्मान् मा रीरिषः मा हिंसीः । ऋसा.

वरुणस्य राज्ञो विश्वसंचारिणो निरीक्षकाः

[2]न ते सखा सख्यं वष्ट्येत-
त्सलक्ष्मा यद्विषुरूपा भवाति ।
महस्पुत्रासो असुरस्य वीरा
दिवो धर्तार उर्विया परि ख्यन् ॥

यमः आत्मानं परोक्षीकृत्य यमीं प्रत्युवाच । हे यमि, ते तव सखा गर्भवासलक्षणेन सखिभूतो यमः एतत् ईदृशं त्वयोक्तं स्त्रीपुरुषलक्षणं सख्यं न वष्टि न कामयते । यत् यस्मात् कारणात् यमी सलक्ष्मा समानयोनित्वलक्षणा विषुरूपा भगिनीत्वात् विषमरूपा भवाति भवति । तस्मान्न वष्टीत्यर्थः । इदानीं ‘ तिरः पुरू चिदर्णवं जगन्वान् ’ इत्यस्य प्रतिवचनमुच्यते । महः महतः असुरस्य प्राणवतः प्रज्ञावतो वा प्रजापतेः पुत्रासः पुत्रभूताः वीराः । ‘ वीरो

(१) ऋसं. ७।८९।५ ; असं. ६।५१।३ चरामसि (चरन्ति) अचित्ती यत्तव (अचित्त्या चेत्तव) ; तैसं. ३।४।११।६ ; कासं. २३।१२ (४५) ; मैसं. ४।१२।६ (१७७); तैब्रा. २।८।१।६; आश्रौ. ४।११.

(२) ऋसं. १०।१०।२; असं. १८।१।२.

वीरयत्यमित्रान् वेतेर्वा स्याद् गतिकर्मणो वीरयतेर्वा ' ( नि. १।७ ) इति निरुक्तम् । शत्रूणां विविधमीरयितारः धर्तारः धारयितारः दिवः द्युलोकस्य । प्रदर्शनमेतत् । द्युप्रभृतीनां लोकानामित्यर्थः । ऋसा.

**[१]न तिष्ठन्ति न नि मिषन्त्येते**
**देवानां स्पश इह ये चरन्ति ।**
**अन्येन मदाहनो याहि तूयं**
**तेन वि वृह रथ्येव चक्रा ॥**

यम्या प्रख्यातो यमः पुनराह । इह अस्मिन् लोके देवानां संबन्धिनः ये स्पशः अहोरात्रादयश्चाराः चरन्ति सर्वेषां शुभाशुभलक्षणकर्मप्रत्यवेक्षणार्थं परिभ्रमन्ति एते चाराः क्षणमात्रमपि चरणव्यापाररहिताः न तिष्ठन्ति । न नि मिषन्ति मेषणं न कुर्वन्ति । शुभमशुभं वा यः करोति तं निरीक्षन्ते चेत्यर्थः । हे आहनः ममापहन्त्रि असह्यभाषणेन दुःखयित्रि, त्वं मत् मत्तः अन्येन त्वत्सदृशेन सह तूयं क्षिप्रं याहि संगच्छ । गत्वा च तेन वि वृह धर्मार्थकामानुद्यच्छ । तत्र दृष्टान्तः । रथ्येव चक्रा । यथा रथावयवभूते चक्रे रथमुद्यच्छतः तद्वत् । ऋसा.

सत्यानृतविवेकार्थं वरुणो राष्ट्राधिपत्याय वृतः

**[२]बह्वीः समा अकरमन्तरस्मि-**
**न्निन्द्रं वृणानः पितरं जहामि ।**
**अग्निः सोमो वरुणस्ते च्यवन्ते**
**पर्यावर्द्राष्ट्रं तदवाम्यायन् ॥**

अस्मिन् ( अन्तः ) वेदिलक्षणस्थाने बह्वीः समाः बहून् संवत्सरान् अकरं अकार्षम् । चिरकालं व्यवात्सम् । तत्र इन्द्रं वृणानः संभजमानः पितरं उत्पादकमरण्यात्मकं जहामि परित्यजामि । यदा त्वहं देवेभ्यो निर्गत्य गुहायां निगूढः तदा ते देवाः अग्निः सोमो वरुणः च च्यवन्ते राष्ट्रात् प्रच्युता अभवन् । एकस्याप्यग्नेर्हविर्वोढृत्वरूपेण देवतात्मना च पृथक्त्वात् परोक्षनिर्देशः । आयन् पुनरागच्छन्नहं यद्राष्ट्रमसुरैरपहृतं पर्यावर्त् पर्यावर्तमानं मदभिमुखं पुनरावर्तमानं तत् राष्ट्रं राज्यं यज्ञभूमिं अवामि असुरेभ्यो रक्षामि । ऋसा.

**निर्माया उ त्ये असुरा अभूवन्**
**त्वं च मा वरुण कामयासे ।**
**ऋतेन राजन्ननृतं विविञ्चन्**
**मम राष्ट्रस्याधिपत्यमेहि ॥**

त्ये ते असुराः मय्यग्नावागते सति निर्मायाः मायारहिताः अभूवन् । आसुर्यः सर्वा माया मया दग्धा आसन्नित्यर्थः । हे वरुण, त्वं च । अयं चशब्दः चेदर्थे वर्तमानश्चणिति निपातान्तरम् । अनेन युक्तत्वात् कामयासे इति तिङ्विभक्तेः ' निपातैर्यद्यदिहन्त० ' ( पा. ८।१।३० ) इति निघातप्रतिषेधः । हे वरुण, त्वं चेत् मा कामयासे मां कामयेथाः तर्हि हे राजन् ईश्वर, ऋतेन सत्येनास्मदीयेन कर्मणा अनृतं असत्यभूतं मायामयमासुरं चरित्रं विविञ्चन् पृथक्कुर्वन् अपसारयन् मम राष्ट्रस्य मया यत् साधितं राज्यं तस्य अधिपत्यं अधिपतित्वमीश्वरत्वं एहि प्राप्नुहि । ऋसा.

**इदं स्वरिदमिदास वाम-**
**मयं प्रकाश उर्वन्तरिक्षम् ।**
**हनाव वृत्रं निरेहि सोम**
**हविष्ट्वा सन्तं हविषा यजाम ॥**

इयं ऋक् अग्नेर्वरुणस्य वा वाक्यम् । हे सोम, इदं स्वः अयं द्युलोकः यद्वा अयं शोभनारणः सूर्यः इदमित् इदमेव वामं वननीयं आस बभूव । इदंशब्देन प्रकृतं स्वः परामृश्यते । अयं च प्रकाशः प्रकाशस्याधारभूतः उरु विस्तीर्णमिदं अन्तरिक्षं हे सोम, एतत् सर्वं पश्य । अत एव अस्मिन् समये आवां वृत्रं हनाव हिनसाव । तदर्थं निरेहि निष्क्रम्यागच्छ । हविः सन्तं लतारूपेण हविर्भवन्तं देवतात्मानं त्वां हविषा चरुपुरोडाशादिना वयं यजाम । ऋसा.

**कविः कवित्वा दिवि रूपमासज-**
**दप्रभूती वरुणो निरपः सृजन् ।**
**क्षेमं कृण्वाना जनयो न सिन्धव-**
**स्ता अस्य वर्णं शुचयो भरिभ्रति ॥**

---

( १ ) ऋसं. १०।१०।८; असं. १८।१।९.

( २ ) ऋसं. १०।१२४।४–८.

कविः क्रान्तदर्शी मित्रः कवित्वा कवित्वेन क्रान्तदर्शनेन दिवि द्युलोके रूपं आत्मीयं तेजः आसजत् आसक्तं करोति । अप्रभूती अप्रभूत्या अप्रभूष्णुना अल्पेनैव यत्नेन वरुणः मेघात् अपः निः सृजत् निरगमयत् । वरुणेन विसृष्टास्ता आपः सिन्धवः स्यन्दनशीलाः नद्यो भूत्वा जनयो न जाया इव यथा जायाः पत्युः क्षेमकारिण्यो भवन्ति तथा क्षेमं कुर्वाणाः जगतो रक्षणं कुर्वाणाः शुचयः शुद्धाः दीप्यमाना वा अस्य वरुणस्य वर्णं शुक्लं भास्वररूपं भरिभ्रति भृशं बिभ्रति धारयन्ति । ऋसा.

**ता अस्य ज्येष्ठमिन्द्रियं सचन्ते**
**ता ईमा क्षेति स्वधया मदन्तीः ।**
**ता ईं विशो न राजानं वृणाना**
**बीभत्सुवो अप वृत्रादतिष्ठन् ॥**

ताः पूर्वोक्ता वृष्टा आपः अस्य वरुणस्य ज्येष्ठं वृद्धतमं इन्द्रियं वीर्यं सचन्ते समवयन्ति संभजन्ते, धारयन्तीत्यर्थः । 'आपो वरुणस्य पत्नय आसन्' (तैसं. ५।५।४।१) इति श्रुतेः । स्वधया । अन्ननामैतत् । हविर्लक्षणेनान्नेन मदन्तीः माद्यन्तीः । यद्वा, व्रीह्याद्युत्पादनद्वारेण हविषा मादयन्तीः । ताः अपः ईं अयं वरुणः आ क्षेति अभिगच्छति । ताः च ईं एनं वरुणं विशो न विशः प्रजा यथा राजानं स्वामिनं संभजन्ते तथा वृणानाः संभजमानाः बीभत्सुवः भयेन कम्पमानाः । यद्वा, बद्धा वृत्रेणावृताः सत्यः । तस्मिन् हते सति तस्मात् वृत्रात् अप अतिष्ठन् । अपक्रम्य तत्र तत्रावतिष्ठन्ते । ऋसा.

वरुणो राजा, तस्य कर्म पाशेन मिथ्यावक्तुर्बन्धनं पाशान्मोचनं च

**'अयं देवानामसुरो वि राजति**
**वशा हि सत्या वरुणस्य राज्ञः ।**
**ततस्परि ब्रह्मणा शाशदान**
**उग्रस्य मन्योरुदिमं नयामि ॥**

देवानां इन्द्रादीनां मध्ये असुरः क्षेप्ता पापिनां निग्रहीता । ईदृशोऽयं वरुणो वि राजति विशेषेण दीप्यते । सर्वनियन्तृत्वात् सर्वोत्कृष्टतया वर्तते इत्यर्थः । तत्र हेतुमाह— हि यस्मात् कारणात् सत्या सत्यानि सद्रूपं प्राप्तानि पदार्थजातानि । राज्ञः राजमानस्य वरुणस्य देवस्य वशा वशानि स्ववशेन स्वाधीनानि, नियम्यत्वेन स्वाधीनानि भवन्तीत्यर्थः । यद्वा, राज्ञः वरुणस्य सत्यानि यथार्थभाषणानि स्ववशानि भवन्ति । सर्वदा सत्यभाषणशील इत्यर्थः । आम्नास्यते हि 'राज्ञस्त्वा सत्यधर्मणः' (असं. १।१०।३) इति । ततः तस्मात् कारणात् परि परितः सर्वतः ब्रह्मणा मन्त्रेण वरुणविषयस्तुतिरूपेण हविषा वा शाशदानः अत्यर्थं तीक्ष्णः स्तोत्रादिना तोषितस्य वरुणस्यानुग्रहेण प्राप्तबलः । ईदृशोऽहं उग्रस्य उद्गूर्णबलस्य दुष्प्रधर्षस्य वरुणस्य मन्योः क्रोधात् अनृतभाषणादिपापजनितात् जलोदररोगहेतुभूतात् इमं जलोदररोगार्तं पुरुषं उन्नयामि उद्गमयामि, रोगात् उन्मोचयामीत्यर्थः । असा.

**नमस्ते राजन् वरुणास्तु मन्यवे**
**विश्वं ह्युग्र निचिकेषि द्रुग्धम् ।**
**सहस्रमन्यान् प्र सुवामि साकं**
**शतं जीवाति शरदस्तवायम् ॥**

हे राजन् द्योतमान वरुण, ते तव मन्यवे क्रोधाय नमः नमस्कारः अस्तु भवतु । सर्वत्र हिंसनस्य मन्युपूर्वकत्वात् अत्र मन्योर्नमस्कार्यतया निर्देशः । यथा— 'नमस्ते रुद्र मन्यवे' (तैसं. ४।५।१।१) इति । तत्र हेतुमाह— हि यस्मात् कारणात् त्वं हे उग्र उद्गूर्णबल वरुण, विश्वं कृत्स्नं द्रुग्धं द्रोहं समस्तप्राणिकृतं अपराधं निचिकेषि जानासि । अपराधज्ञानात् हि मन्युरुत्पद्यते अतः तदुत्पत्तिः मा भूत् इति मन्योः अत्र नमस्कारः कृत इति द्रष्टव्यम् । यद्वा, उत्तरशेषोऽयम् । हे वरुण, द्रुग्धं द्रोहकर्तृ अपकारकम् । ईदृशं विश्वं प्राणिजातं हि यस्मात् निचिकेषि जानासि । तस्मात् कारणात् सहस्रं सहस्रसंख्याकान् अन्यान् सापराधान् द्वेष्यान् जनान् साकं सह, युगपदेव इत्यर्थः । प्र सुवामि प्रेरयामि । अस्य प्रतिनिधित्वेन प्रयच्छामीत्यर्थः । वरुणस्य सकाशात् प्रतिनिधिप्रदानेन आत्मनो निष्क्रयणमैतरेयके समाम्नातम् 'ऋषेऽहं ते शतं ददाम्यहं एषामेकेनात्मानं निष्क्रीणै' (ऐब्रा. ७।१५) इति । तस्मात् कारणात् अयं व्याधिपीडितो जनः तव अनुग्रहात् शतं शरदः शतसंख्याकान् संवत्सरान् जीवाति

(१) असं. १।१०।१-४.

जीवतु । सापराधान् अन्यानपरिमितान् जनान् स्वीकृत्य एनं नीरोगं कृत्वा शतसंवत्सरं जीवयेत्यर्थः ।

असा.

**यदुवक्थानृतं जिह्वया वृजिनं बहु ।**
**राज्ञस्त्वा सत्यधर्मणो मुञ्चामि वरुणादहम् ॥**

हे जलोदररोगग्रस्त पुरुष, जिह्वया अभिवदनसाधनेन इन्द्रियेण यत् रोगनिदानभूतं अनृतं असत्यं उवक्त उवक्थ, अयथार्थकथनं कृतवानसीत्यर्थः । अनृतस्य रोगहेतुत्वमुपपादयन् विशिनष्टि— बहु अधिकं वृजिनं पापम् । हेतुहेतुमतोरभेदेन सामानाधिकरण्यम् । अन्यस्मात् पापकर्मणः अधिकतरपापहेतुः अनृतवदनमित्यर्थः । अनृतस्य वृजिनरूपत्वं तैत्तिरीयकेऽपि आम्नातम् 'वृजिनं अनृतं दुश्चरितम् । ऋजुकर्म सत्यं सुचरितम्' (तैब्रा. ३।३।७।१०) इति । यस्मात् अनृतं पापरूपं तस्मात् रोगनिदानमित्यर्थः । उक्तं हि— 'जन्मान्तरकृतं पापं व्याधिरूपेण जायते । तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥' इति । यद्यपि अनृतवदनरूपं पापं कृतवानसि तथापि सत्यधर्मणः सत्यं धर्मो यस्यासौ सत्यधर्मा सत्यभाषणस्वभावात् । विवक्षितविशेषणमेतत् । यतोऽयं वरुणः सत्यधर्मा अतः असौ अनृतभाषणं न सहते इत्यर्थः । श्रूयते हि— 'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' (तैब्रा. १।७।२।६) इति । ईदृशात् राज्ञः राजमानात् नियामकात् वरुणात् हे रोगग्रस्त, अहं त्वा त्वां मुञ्चामि मोचयामि । तस्मात् अनृतवदनसंभूतात् जलोदररूपात् वरुणपाशात् मन्त्रप्रभावेन त्वां वियोजयामीत्यर्थः ।

असा.

**मुञ्चामि त्वा वैश्वानरादर्णवान्महतस्परि ।**
**सजातानुग्रेहा वद ब्रह्म चाप चिकीहि नः ॥**

हे रोगग्रस्त, त्वा त्वां वैश्वानरात् विश्वनरहितात् महतः प्रभूतादर्णवात् तथाविधात् समुद्रात् । अनेन च तदभिमानी देवो लक्ष्यते । समुद्राभिमानिनो वरुणात् मुञ्चामि, तत्कृतात् जलोदररोगात् मुञ्चामीत्यर्थः । यद्वा, वैश्वानरः विश्वनरहितो जाठराग्निः तस्याऽऽवरकत्वेन संबन्धी सोऽपि वैश्वानरः । तथाविधात् महतः अधिकात् दुश्चिकित्स्यादर्णवात् उदकसहितात् जल्मयात् रोगात् त्वां मुञ्चामि । हे उग्र उद्गूर्णबल वरुण, त्वमपि सजातान् सहचारिणः शिक्षकान् भटान् इह अस्मिन् पुरुषविषये आ वद आसमन्तात् कथय, यथा पुनःपुनरागत्य एनं पुरुषं न निघ्नन्ति तथा कथयेत्यर्थः । तत्र हेतुमाह— नः अस्मदीयं ब्रह्म हवीरूपं अन्नम् । यद्वा, ब्रह्म अस्माभिः प्रयुज्यमानां मन्त्ररूपां स्तुतिं अप । योग्यक्रियाध्याहारः । अपहाय, अनृतभाषणादिनिमित्तमपराधं विस्मृत्येत्यर्थः । चिकीहि जानीहि । अनुक्तसमुच्चयार्थश्चकारः । मदीयया स्तुत्या परितुष्टः सन् भयादि नाशयेत्यर्थः ।

असा.

सत्यानृतद्रष्टा वरुणः, तस्य चरा एव तस्य सहस्राक्षीणि

**[1]बृहन्नेषामधिष्ठाता अन्तिकादिव पश्यति ।**
**यस्तायन्मन्यते चरन्त्सर्वं देवा इदं विदुः ॥**

बृहन् महान् परिवृढो वा वरुणः एषां दुरात्मनां शत्रूणामधिष्ठाता नियन्ता सन् तैः कृतं सर्वमन्याय्यं अन्तिकादिव पश्यति समीपदेशादिव जानाति, न तस्य व्यवधायकं किंचिदस्तीत्यर्थः । यो वरुणः तायत् सांतत्येन वर्तमानं स्थिरवस्तु चरत् चरणशीलं नश्वरं च वस्तु मन्यते, स्थावरजङ्गमात्मकं सर्वं जगज्जानातीत्यर्थः । स बृहन् इति संबन्धः । ईदृग्विधज्ञानसद्भावं वरुणस्य उपपादयति— सर्वमिति । व्यवहितं विप्रकृष्टं स्थिरं नश्वरं स्थूलं सूक्ष्मं इत्येतादृगिदं सर्वमतिरोहितज्ञानत्वात् देवा विदुः जानन्ति ।

असा.

**यस्तिष्ठति चरति यश्च वञ्चति**
**यो निलायं चरति यः प्रतङ्कम् ।**
**द्वौ संनिषद्य यन्मन्त्रयेते**
**राजा तद्वेद वरुणस्तृतीयः ॥**

पूर्वस्यां ऋचि 'एषां' इत्युक्तम् । तत्र इदमा के पुनः प्रतिनिर्दिश्यन्ते इति तान् निर्दिशति यस्तिष्ठतीति पूर्वार्धेन । यः शत्रुस्तिष्ठति अभिमुखमवतिष्ठते यश्चरति गच्छति यश्च वञ्चति कौटिल्येन प्रतारयति यः शत्रुः निलायं निलयनेन अनिर्गमनेन चरति । यद्वा, निलीनः अदृश्यः सन् चरति । यः शत्रुः प्रतङ्कं प्रकर्षेण कृच्छ्रजीवनं प्राप्य चरति वर्तते । एषां शत्रूणां इति पूर्वेण

[1] असं. ४।१६।१–६.

संबन्धः । 'अन्तिकादिव पश्यति' इति यदुक्तं तदपि समर्थयते 'द्वौ संनिषद्य' इत्युत्तरार्धेन । द्वौ पुरुषौ रहसि संनिषद्य उपविश्य यत् कार्यं मन्त्रयेते गुप्तं भाषेते, तयोः गुप्तं भाषमाणयोः तृतीयः त्रित्वसंख्यापूरकः सन् राजा ईश्वरो वरुणः स्वसार्वज्ञ्येन तत्सर्वं वेद जानातीत्यर्थः । ततश्च अकार्यचिन्तावसर एव तान् निग्रहीतुं वरुणः शक्नोतीत्यर्थः । असा.

**उतेयं भूमिर्वरुणस्य राज्ञ**
**उतासौ द्यौर्बृहती दूरेअन्ता ।**
**उतो समुद्रौ वरुणस्य कुक्षी**
**उतास्मिन्नल्प उदके निलीनः ॥**

उतशब्दः अप्यर्थे । इयं सर्वाधिष्ठानत्वेन निहिता भूमिरपि राज्ञः ईश्वरस्य दुष्टनिग्रहे अधिकृतस्य वरुणस्य वशे वर्तते । उत अपि च असौ विप्रकृष्टा बृहती महती दूरेअन्ता दूरे विप्रकृष्टे देशे अन्ते अन्तिके च भवतीति दूरेअन्ता । यत एवं व्याप्य वर्तते अतो बृहतीति भावः । एवंरूपा द्यौश्च वरुणस्य राज्ञो वशे वर्तते । 'बृहती दूरेअन्ता' इति विशेषणद्वयं भूम्या अपि योज्यम् । अत एव दूरेअन्ते इति द्यावापृथिव्योर्नामसु पठितम् (निघण्टुः ३।३०) । उतो अपि च समुद्रौ पूर्वपश्चिमौ वरुणस्य राज्ञः कुक्षी दक्षिणोत्तरपार्श्वभेदेन अवस्थिते द्वे उदरे । एवं भूम्यादिकं कृत्स्नं जगत् व्याप्य वर्तमानोऽपि अस्मिन् अल्पेऽपि उदके तटाकह्रदादिगते निलीनः अन्तर्हितो भवति । असा.

**उत यो द्यामतिसर्पात्परस्तान्न**
**स मुच्यातै वरुणस्य राज्ञः ।**
**दिव स्पशः प्र चरन्तीदमस्य**
**सहस्राक्षा अति पश्यन्ति भूमिम् ॥**

उत अपि च यः शत्रुः अनर्थकारी अस्माकं पुरस्तात् द्यां अन्तरिक्षप्रदेशं अतिसर्पात् अतिक्रम्य सर्पेत् गच्छेत् । यद्वा, सुकृतप्राप्यं द्यां स्वर्गं अतिक्रम्य अपथे प्रवर्तेतेत्यर्थः । स शत्रुः वरुणस्य राज्ञः पाशेभ्यो न मुच्यातै न मुच्येत, तैर्बद्ध एव वर्ततामित्यर्थः । कथं द्युलोकस्थो वरुणः मनुष्यकृतमपराधं जानातीति तत्राऽऽह— दिवः स्पश इति । दिवः द्युलोकान्निर्गताः अस्य वरुणस्य स्पशः चाराः इदं पार्थिवं स्थानं प्र चरन्ति प्राप्य संचरन्ति । ते च सहस्राक्षाः सहस्रसंख्याकैर्दर्शनोपायैर्युक्ताः सन्तः भूमिं अति पश्यन्ति, भूलोकवृत्तान्तं सर्वमतिशयेन साक्षात्कुर्वन्तीत्यर्थः । असा.

**सर्वं तद्राजा वरुणो वि चष्टे**
**यदन्तरा रोदसी यत् परस्तात् ।**
**संख्याता अस्य निमिषो जनाना-**
**मक्षानिव श्वघ्नी नि मिनोति तानि ॥**

रोदसी अन्तरा द्यावापृथिव्योर्मध्ये यत् प्राणिजातं वर्तते तथा पुरस्तात् स्वस्य पुरोभागे यत् प्राणिजातमस्ति तत् सर्वं वरुणो राजा वि चष्टे विशेषेण पश्यति । तस्मात् तेषां जनानां प्राणिनां निमिषः निमेषणव्यापारस्य, उपलक्षणमेतत् । अक्षिपरिस्पन्दोपलक्षितस्य अस्य साध्वसाधुकर्मणः संख्याता परिमाणयिता वरुणः तानि पापिनां शिक्षाकर्माणि तत्तत्पापानुसारेण नि मिनोति निक्षिपति । तत्र दृष्टान्तः— अक्षानिवेति । स्वघ्नी स्वं आत्मानं स्वकीयं धनं च हन्तीति कितवः स्वघ्नी । तथा च यास्कः— 'श्वघ्नी कितवो भवति स्वं हन्ति' (नि. ५।२२) इति । यथा कितवः अक्षान् आत्मनो जयार्थं निक्षिपति तद्वदित्यर्थः । असा.

**ये ते पाशा वरुण सप्तसप्त**
**त्रेधा तिष्ठन्ति विषिता रुशन्तः ।**
**छिनन्तु सर्वे अनृतं वदन्तं**
**यः सत्यवाद्यति तं सृजन्तु ॥**

हे वरुण, ये त्वदीयाः पाशाः सप्तसप्त उत्तममध्यमाधमभेदेन प्रत्येकं सप्तसंख्याकाः त्रेधा त्रिप्रकारं विसिताः तत्रतत्र पापिनां निग्रहाय जालवत् बद्धाः । एतच्च त्रैविध्यं 'उदुत्तमं वरुण' (ऋसं. १।२४।१५) इति मन्त्रान्तरादप्यवसितम् । रुशन्तः तत्तत्पापानुसारेण पापिष्ठान् हिंसन्तः तिष्ठन्ति सर्वे ते पाशाः अनृतं वदन्तं पापकृतं अस्मदीयं शत्रुं छिनन्तु छिन्दन्तु । यस्तु सत्यवादी सत्यवदनशीलः पुण्यकृत् तं अति सृजन्तु विमुञ्चन्तु । असा.

[1]शतेन पाशैरभि धेहि वरुणैनं
मा ते मोच्यनृतवाङ् नृचक्षः ।
आस्तां जाल्म उदरं श्रंशयित्वा
कोश इवाबन्धः परिकृत्यमानः ॥

हे वरुण, शतेन शतसंख्याकैस्त्वदीयैः पाशैः एनं अनृतवादिनं शत्रुं अभि धेहि बधान, बद्ध्वा निगृहाणेत्यर्थः । अभिपूर्वो दधातिर्बन्धने वर्तते, यथा 'अश्वाभिधानीं आ दत्ते' (तैसं. ५।१।२।१) इति । हे नृचक्षः नृणां मनुष्याणां साध्वसाधुचरित्राणां विवेकेन द्रष्टः । ईदृश हे वरुण, अनृतवाक् अनृतं ब्रुवन् पुरुषः ते त्वत्तः [मा] मोचि विमुक्तो विसृष्टो मा भूत् । किंतु जाल्मः असमीक्ष्यकारी स्वकीयमुदरं स्रंसयित्वा जलोदररोगेण स्रस्तं कृत्वा अबन्धः बन्धरहितः प्रान्तेषु अकृतबन्धनः असेः कोश इव परिकृत्यमानः आस्तां त्वत्पाशबद्ध एव वर्तताम् । अत एव अन्यत्राम्नातम्– 'अनृते खलु वै क्रियमाणे वरुणो गृह्णाति' (तैब्रा. १।७।२।६) इति । असा.

[2]यः समाम्यो३ वरुणो यो व्याम्यो३
यः संदेश्यो३ वरुणो यो विदेश्यः ।
यो दैवो वरुणो यश्च मानुषः ॥

समानं आमयति व्याधितो भवति पुरुषोऽनेन इति समाम्यः । ईदृशो यो वरुणः । वारुणः पाश इत्यर्थः । विगमनेन विविधं वा आमयति पुरुषोऽनेनेति व्याम्यो [यः] पाशः । तथा यो वरुणः वरुणसंबन्धी पाशः संदेश्यः समानदेशे भवः यश्च विदेश्यः विदेशे भवः यश्च वरुणः वरुणसंबन्धी पाशः दैवः देवेषु भवः यश्च वरुणपाशो मानुषः मनुष्येषु प्रयुक्तः, तैस्त्वा सर्वैरिति वक्ष्यमाणेन संबन्धः । असा.

तैस्त्वा सर्वैरभि ष्यामि पाशै-
रसावामुष्यायणामुष्याः पुत्र ।
तानु ते सर्वाननुसंदिशामि ॥

असौ इत्यस्य स्थाने संबुद्ध्या शत्रुनामग्रहणम् । आमुष्यायणेति गोत्रतो निर्देशः । अमुष्याः पुत्रेति अदःशब्दस्थाने मातृनामनिर्देशः । तत् अयमर्थः– हे देवदत्तायाः पुत्र गार्ग्य यज्ञशर्मन्, त्वा त्वां तैः पूर्वस्यां ऋचि उक्तैः सर्वैः पाशैः अभि ष्यामि अभिदधामि, बध्नामीत्यर्थः । तथा हे शत्रो, ते तुभ्यं तान् सर्वान् पाशाननुलक्षीकृत्य संदिशामि संप्रयच्छामि । असा.

राजासन्द्यां वरुणस्याभिषेकः

[1]अथ वरुणसाम । वरुणो वै राजा सधमादमिवान्याभिर्देवताभिरासीत् । सोऽकामयत–सर्वेषां देवानां राज्याय सूयेयेति । स प्रजापतौ शतं वर्षाणि ब्रह्मचर्यमवसत् । तस्मा एतत्सामाब्रवीत्– एतद्वै मे राज्यं रूपम् । गच्छ । राजानं त्वा देवाः करिष्यन्त इति । स देवानभ्यैत् । तमायन्तं दृष्ट्वा देवाः प्रत्यवारोहन् । तानब्रवीत्– मा मा प्रत्यवरुक्षत । भ्रातरो वै मम यूयं स्थ । यादृशा वै यूयं स्थ, तादृङ्ङहमस्मीति । नेत्यब्रुवन् । यद्वै नः पितुः प्रजापते रूपं तदिदं त्वयि पश्याम इति । तं प्रत्येवावारोहन् । तस्मा एतां राजासन्दीं न्यदधुः । तस्यामेनमभ्यषिञ्चन्त– वसवो राज्याय रुद्रा वैराज्यायाऽऽदित्या स्वाराज्याय विश्वेदेवाः साम्राज्याय मरुतः सार्ववश्याय साध्याश्चाप्त्याश्च पारमेष्ठ्याय । तदेतच्छ्रीसवः साम । अश्नुते श्रियं गच्छति राज्यं य एवं वेद । यदु वरुणो राजाऽपश्यत्, तस्माद्वरुणसामेत्याख्यायते ॥

देवैर्भयनिवारणार्थं वरुणो राजा वृतः

[2]ता या अमू रेतः समुद्रं वृत्वाऽतिष्ठंस्ताः प्राच्यो दक्षिणाच्यः प्रतीच्य उदीच्यः समद्रवन्त । तद्यत्समवद्रवन्त (? मद्रवन्त) तस्मात्समुद्र उच्यते । ता भीता अब्रुवन्– भगवन्तमेव वयं राजानं वृणीमह इति । यच्च वृत्वाऽतिष्ठंस्तद्वरुणोऽभवत् ।

---

(१) असं. ४।१६।७; कासं. ४।१६ (१४२) पाशैरभि धेहि वरुणैनं (पाशैर्वरुणाभिधेहि) जाल्म (जल्म) श्रंशयित्वा (स्रंसयित्वा) इवाबन्धः (इवाबन्ध्रः).

(२) असं. ४।१६।८–९.

(१) जैब्रा. ३।१५२.

(२) गोब्रा. १।१।७.

तं वा एतं वरणं सन्तं वरुण इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवा भवन्ति प्रत्यक्षद्विषः ॥

---

## इन्द्रः

इन्द्रः सोमपः स्ववीर्येण नदीनां वृत्ररुद्धप्रवाहाणां प्रवर्तयिता दस्यूनां वृत्राणां हननेन, वीरोचितकृत्यैस्तेन राज्यपदं प्राप्तम्, क्षेत्रगवादिधनलाभाय प्रवृत्तेषु युद्धेषु यज्ञकर्तॄणां विजयकर्ता, सुश्रवस्तूर्वयाणयोः राज्ञोः रक्षकः क्षत्रवृद्धिकर्ता सत्पतिः, साखिभूतस्य जीवलोकस्य हिताय तेन जलप्रवाहा अनिरुद्धाः कृताः, तं समर्थं राजानमर्चयन्ति जनाः, इन्द्रे राजनि देवैः प्रज्ञा अन्यानि च सामर्थ्यानि स्थापितानि, स दिवः पृथिव्याश्च सम्राट्, संचरन्ति यस्य स्पशः सर्वत्र, दिव्यानां विशां मानवानां च युद्धेन वसतिप्रदानेन च राजा, स स्वराट्

[1]इन्द्रस्य नु वीर्याणि प्र वोचं
यानि चकार प्रथमानि वज्री।
अहन्नहिमन्वपस्ततर्द
प्र वक्षणा अभिनत्पर्वतानाम् ॥

वज्री वज्रयुक्तः इन्द्रः प्रथमानि पूर्वसिद्धानि मुख्यानि वा यानि वीर्याणि पराक्रमयुक्तानि कर्माणि चकार तस्य इन्द्रस्य तानि वीर्याणि नु क्षिप्रं प्रब्रवीमि। कानि वीर्याणीति तदुच्यते। अहिं मेघं अहन् हतवान्। तदेतदेकं वीर्यम्। अनु पश्चात् अपः जलानि ततर्द हिंसितवान् भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। पर्वतानां संबन्धिनीः वक्षणाः प्रवहणशीलाः नदीः प्र अभिनत् भिन्नवान् कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम्। एवमुत्तरत्रापि द्रष्टव्यम्। ऋसा.

[2]अहन्नहिं पर्वते शिश्रियाणं
त्वष्टास्मै वज्रं स्वर्यं ततक्ष।
वाश्राइव धेनवः स्यन्दमाना
अञ्जः समुद्रमव जग्मुरापः ॥

पर्वते शिश्रियाणं आश्रितं अहिं मेघं अहन् हतवान्। असौ इन्द्राय स्वर्यं सुष्ठु प्रेरणीयं यद्वा शब्दनीयं स्तुत्यं त्वष्टा विश्वकर्मा वज्रं ततक्ष तनूकृतवान्। तेन वज्रेण मेघे भिन्ने सति स्यन्दमानाः प्रस्रवणयुक्ताः आपः समुद्रं अञ्जः सम्यक् अव जग्मुः प्राप्ताः। तत्र दृष्टान्तः— वाश्राः वत्सान् प्रति हम्भारवोपेताः धेनवः इव। यथा धेनवः सहसा वत्सगृहे गच्छन्ति तद्वत्। ऋसा.

[3]वृषायमाणोऽवृणीत सोमं
त्रिकद्रुकेष्वपिबत्सुतस्य।
आ सायकं मघवाऽदत्त वज्र-
महन्नेनं प्रथमजामहीनाम् ॥

वृषायमाणः वृष इवाचरन् इन्द्रः सोमं अवृणीत वृतवान्। त्रिकद्रुकेषु ज्योतिः गौः आयुः इत्येतन्नामकाः त्रयो यागाः त्रिकद्रुकाः उच्यन्ते। तेषु सुतस्य अभिषुतस्य सोमस्यांशं अपिबत् पीतवान्। मघवा धनवान् इन्द्रः सायकं बन्धकं वज्रं आ अदत्त स्वीकृतवान्। तेन च वज्रेण अहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघं अहन् हतवान्। ऋसा.

[4]यदिन्द्राहन् प्रथमजामहीना-
मान्मायिनाममिनाः प्रोत मायाः।
आत्सूर्यं जनयन्द्यामुषासं
तादीत्ना शत्रुं न किला विवित्से ॥

---

(१) ऋसं. १।३२।१; असं. २।५।५ वीर्याणि प्र वोचं (प्रा वोचं वीर्याणि); मैसं. ४।१४।१३ (१८८); ऐब्रा. १२।१३; शाब्रा. १५।४, २०।४, २४।२; तैब्रा. २।५।४।१; ऐआ. ५।२।२।३; नि. ७।२,३.

(१) ऋसं. १।३२।२; असं. २।५।६; मैसं. ४।१४।१३ (१८९); तैब्रा. २।५।४।२.

(२) ऋसं. १।३२।३; असं. २।५।७; तैब्रा. २।५।४।२.

(३) ऋसं. १।३२।४; तैब्रा. २।५।४।३ तादीत्ना शत्रुं (तादीक्ना शत्रून्).

उत अपि च हे इन्द्र, यत् यदा अहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघं अहन् हतवानसि आत् तदनन्तरं मायिनां मायोपेतानामसुराणां संबन्धिनीः मायाः प्र अमिनाः प्रकर्षेण नाशितवानसि। अनन्तरं सूर्यं उषसं उषःकालं द्यां आकाशं च जनयन् उत्पादयन् आवरकमेघनिवारणेन प्रकाशयन् वर्तसे। तादीत्ना तदानीं आवरकान्धकाराभावात् शत्रुं घातकं वैरिणं न विवित्से किल त्वं न लब्धवान् खलु। ऋसा.

[1]अहन् वृत्रं वृत्रतरं व्यंस-
मिन्द्रो वज्रेण महता वधेन।
स्कन्धांसीव कुलिशेना विवृक्णा-
हिः शयत उपपृक्पृथिव्याः॥

अयं इन्द्रः वज्रेण संपादितो यो महान् वधः तेन वज्रेण वृत्रतरं अतिशयेन लोकानामावरकं अन्धकाररूपम्। यद्वा, वृत्रैः आवरणैः सर्वान् शत्रून् तरति तं वृत्रं एतन्नामकमसुरं व्यंसं विगतांसं छिन्नबाहुः यथा भवति तथा अहन् हतवान्। अंसच्छेदे दृष्टान्तः— कुलिशेन कुठारेण विवृक्णा विशेषतश्छिन्नानि स्कन्धांसीव। यथा वृक्षस्कन्धाः छिन्ना भवन्ति तद्वत्। तथा सति अहिः वृत्रः पृथिव्याः उपरि उपपृक् सामीप्येन संपृक्तः शयते शयनं करोति छिन्नकाष्ठवत् भूमौ पततीत्यर्थः। ऋसा.

[2]अयोद्धेव दुर्मद आ हि जुह्वे
महावीरं तुविबाधमृजीषम्।
नातारीदस्य समृतिं वधानां
सं रुजानाः पिपिष इन्द्रशत्रुः॥

दुर्मदः दुष्टमदोपेतो दर्पयुक्तो वृत्रः अयोद्धेव योद्धृरहित इव इन्द्रं आ जुह्वे हि आहूतवान् खलु। कीदृशमिन्द्रम्? महावीरं गुणैः महान् भूत्वा शौर्योपेतं तुविबाधं बहूनां बाधकं ऋजीषं शत्रूणामपार्जकम्। अस्य ईदृशस्य इन्द्रस्य संबन्धिनो ये शत्रुवधाः सन्ति तेषां वधानां समृतिं संगमं नातारीत् पूर्वोक्तो दुर्मदः तरीतुं नाशक्नोत्। इन्द्रशत्रुः इन्द्रः शत्रुः घातको यस्य वृत्रस्य तादृशो वृत्रः इन्द्रेण हतः नदीषु पतितः सन् रुजानाः नदीः संपिपिषे सम्यक् पिष्टवान्। सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यपाषाणादिकं च चूर्णीभूतमित्यर्थः। ऋसा.

[1]इन्द्रो यातोऽवसितस्य राजा
शमस्य च शृङ्गिणो वज्रबाहुः।
सेदु राजा क्षयति चर्षणीना-
मरान्न नेमिः परि ता बभूव॥

वज्रबाहुः इन्द्रः शत्रौ हते सति निःसपत्नो भूत्वा यातः गच्छतो जङ्गमस्य अवसितस्य एकत्रैव स्थितस्य स्थावरस्य शमस्य शान्तस्य शृङ्गराहित्येन प्रहरणादौ अप्रवृत्तस्याश्वगर्दभादेः शृङ्गिणः शृङ्गोपेतस्योग्रस्य महिषबलीवर्दादेश्च राजा अभूत्। सेदु स एवेन्द्रः चर्षणीनां मनुष्याणां राजा भूत्वा क्षयति निवसति। ता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परि बभूव व्याप्तवान्। तत्र दृष्टान्तः— अरान् न नेमिः। यथा रथचक्रस्य परितो वर्तमाना नेमिः अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत्। ऋसा.

[2]एतायामोप गव्यन्त इन्द्र-
मस्माकं सु प्रमतिं वावृधाति।
अनामृणः कुविदादस्य रायो
गवां केतं परमावर्जते नः॥

देवाः परस्परमेवं कथयन्ति। हे देवाः, गव्यन्तः पणिनामकेनासुरेणापहृता अस्मदीया गाः प्राप्तुमिच्छन्तो यूयं एत आगच्छत। युष्माभिः सहिता वयं इन्द्रं गवानयनक्षमं उप अयाम प्राप्नवाम। स चेन्द्रः अनामृणः हिंसकरहितः सन् अस्माकं देवानां प्रमतिं गोलाभेन हर्षयित्वा प्रकृष्टां बुद्धिं सु ववृधाति सुष्ठु वर्धयति। आत् अनन्तरं स इन्द्रः अस्य रायः धनस्य

(१) ऋसं. १।३२।५; मैसं. ४।१२।३ (७२); तैब्रा. २।५।४।३ पृथिव्याः (पृथिव्याम्).

(२) ऋसं. १।३२।६; तैब्रा. २।५।४।३ अयोद्धेव (अयोध्येव) तुविबाधं (तु विब्राधं) रीदस्य (रीरस्य.)

(१) ऋसं. १।३२।१५; मैसं. ४।१४।१३ (१९०); तैब्रा. २।८।४।३ क्षयति (क्षेति).

(२) ऋसं. १।३३।१; शाब्रा. २१।३.

गवां गोरूपस्य संबन्धि परं केतं उत्कृष्टं ज्ञानं नः अस्माकं कुवित् आवर्जते अधिकं प्रापयति । ऋसा.

[1]उपेदहं धनदामप्रतीतं
जुष्टां न श्येनो वसतिं पतामि ।
इन्द्रं नमस्यन्नुपमेभिरर्कै-
र्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥

यः इन्द्रः स्तोतृभ्यः स्तोतॄणामनुष्ठातॄणामनुग्रहार्थे यामन् तदीयशत्रुभिः सह प्रवृत्ते युद्धे हव्यः अस्ति तैः आह्वातव्यो भवति तं इन्द्रं अहं अनुष्ठाता उपेत् पतामि उपाप्नोम्येव । किं कुर्वन् ? उपमेभिः उपमानस्थानीयैरुत्तमैः अर्कैः स्तोत्रैः सह नमस्यन् पूजयन् । कीदृशमिन्द्रम् ? धनदां धनप्रदं अप्रतीतं अप्रतिगतं बलिभिरतिरस्कृतमित्यर्थः । इन्द्रप्राप्तौ दृष्टान्तः — जुष्टां पूर्वैः सेवितां वसतिं स्वकीयनीडरूपां निवासभूमिं श्येनः न । यथा श्येननामको वेगवान् पक्षी स्वकीयस्थानं प्रति आदरेण धावति तद्वत् अहं इन्द्रं त्वरया प्राप्नोमि । ऋसा.

नि सर्वसेन इषुधीँरसक्त
समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं
मा पणिर्भूरस्मदधि प्रवृद्ध ॥

सर्वसेनः कृत्स्नसेनायुक्तः इषुधीन् बाणानामाधारभूतान् निषङ्गान् नि असक्त नितरां पृष्ठभागे संयोजितवान् । अर्यः स्वामिरूप इन्द्रः यस्य देवस्य वष्टि असुरेणापहृता गाः प्रदातुं कामयते तस्य देवस्य गृहे ताः गाः सम् अजति सम्यक् प्रापयति । हे प्रवृद्ध प्रकृष्टवृद्धियुक्त इन्द्र, भूरि वामं प्रभूतं गोरूपं धनं चोष्कूयमाणः अस्मभ्यं प्रयच्छन् अस्मदधि अस्मासु पणिः मा भूः व्यवहारी मा भूयाः । गवां मूल्यं मा याचस्वेत्यर्थः । ऋसा.

वधीर्हि दस्युं धनिनं घनेनँ
एकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधि विषुणक्ते व्याय-
न्नयज्वानः सनकाः प्रेतिमीयुः ॥

हे इन्द्र, धनिनं बहुधनोपेतं दस्युं चोरं वृत्रं घनेन कठिनेन वज्रेण वधीर्हि त्वं हतवान् खलु । धनित्वं वाजसनेयिनोऽपि स्पष्टमामनन्ति— 'वृत्रस्यान्तः सर्वे देवाः सर्वाश्च विद्याः सर्वाणि हवींषि चासन्' इति । उपशाकेभिः समीपवर्तिभिः शक्तियुक्तैर्मरुद्भिः सहितो भूत्वा एकश्चरन्, प्रहर्तुं स्वयमेक एव गच्छन् । यद्यपि मरुतः समीपे वर्तन्ते तथापि ते प्रोत्साहयन्त्येव, न तु वृत्रं प्रहरन्ति । प्रहर्ता तु स्वयमेक एव । तथा च ब्राह्मणे समाम्नातम्— 'मरुतो हैनं नाजहुः प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्त' (ऐब्रा. ३।२०) इति । धनोरधि इन्द्रसंबन्धिनो धनुषः उपरि विषुणक् विविधं नाशमुद्दिश्य, यद्वा विष्वक् सर्वतः ते वृत्रानुचराः व्यायन् विविधमागच्छन् । आगत्य च अयज्वानः यज्वविरोधिनः सन्तः सनकाः एतन्नामकाः वृत्रानुचराः प्रेतिमीयुः मरणं प्राप्ताः । ऋसा.

परा चिच्छीर्षा ववृजुस्त इन्द्रा-
यज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद्दिवो हरिवः स्थातरुग्र
निरव्रताँ अधमो रोदस्योः ॥

हे इन्द्र, ते वृत्रानुचराः शीर्षा स्वकीयानि शिरांसि परा चित् पराङ्मुखान्येव कृत्वा ववृजुः गतवन्तः । कीदृशास्ते ? अयज्वानः स्वयं यागरहिताः प्रत्युत यज्वभिः यागानुष्ठातृभिः सह स्पर्धमानाः । हे हरिवः हरिनामकाश्वयुक्त, स्थातः स्थितियुक्त युद्धे पलायनरहित, उग्र शौर्ययुक्तेन्द्र, यत् यदा दिवः अन्तरिक्षात् रोदस्योः द्यावापृथिव्योः सकाशाच्च अव्रतान् व्रतरहितान् वृत्रानुचरान् निः प्र अधमः निःशेषेण धमनं कृतवानसि तदानीं त्वदीयमुखवायुना नुन्नाः सन्तो ववृजुरिति पूर्वत्रान्वयः । ऋसा.

अयुयुत्सन्ननवद्यस्य सेना-
मयातयन्त क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः
प्रवद्भिरिन्द्राच्चितयन्त आयन् ॥

अनवद्यस्य गर्हणीयदोषरहितस्येन्द्रस्य सेनां प्रति अयुयुत्सन् वृत्रस्यानुचरा योद्धुमैच्छन् । तदानीं नवग्वाः नवनीयगतयः स्तोतव्यचरित्राः । यद्वा, अङ्गिरसां सत्रमासीनानां

(१) ऋसं. १।३३।२–१०.

मध्ये ये नवभिर्मासैरवाप्तफला उत्थितास्तेषां नवग्वा इति संज्ञा। 'नवग्वासः सुतसोमास इन्द्रम्' (ऋसं. ५।२९।१२) इत्यादिषु तथा अभिहितत्वात् । क्षितयः मनुष्याः अङ्गिरःप्रभृतयः, 'क्षितयः कृष्टयः' (निघण्टुः २।३।६) इति तन्नामसु पाठात् । अयातयन्त, युद्धार्थमिन्द्रं नानाविधैर्मन्त्रैः प्रोत्साहितवन्तः। इन्द्रे योद्धुं गते सति निरष्टाः तेनेन्द्रेण निराकृता वृत्रानुचराः चितयन्तः स्वकीया-मशक्तिं ज्ञापयन्तः इन्द्रात् इन्द्रस्य सकाशात् प्रवद्भिः प्रवणैः पलायितुं सुशकैर्मार्गैः आयन् दूरे गतवन्तः। तत्र दृष्टान्तः— वृषायुधः वृषेण सेचनसमर्थेन पुंस्त्वयुक्तेन शूरेण सह युद्धं कुर्वन्तः वध्रयः न नपुंसका इव, 'निसर्गपण्डो वध्रिश्च' इत्यादिस्मृतिषु प्रयोगात्। ते यथा प्रबलेन दूरे निराकृता भवन्ति तद्वत्। ऋसा.

**त्वमेतान् रुदतो जक्षतश्चा-**
**योधयो रजस इन्द्र पारे ।**
**अवादहो दिव आ दस्युमुच्चा**
**प्र सुन्वतः स्तुवतः शंसमावः ॥**

हे इन्द्र, त्वं रुदतः रोदनं कुर्वतः जक्षतः भक्षणं हसनं वा कुर्वतः च एतान् द्विविधानपि वृत्रानुचरान् रजसः पारे अन्तरिक्षस्य परभागे। रजःशब्दोऽन्तरिक्षवाची, 'लोका रजांस्युच्यन्ते' (नि. ४।१९) इत्युक्तत्वात् । अयोधयः युद्धमकरोः युद्धेन मारितवानित्यर्थः । दस्युं उपक्षयितारं वृत्रं दिवः आ द्युलोकादानीय उच्चा उत्कर्षेण अवादहः दग्धवानसि। वृत्रं सपरिवारं विनाश्य तत ऊर्ध्वं सुन्वतः सोमाभिषवं कुर्वतः स्तुवतः स्तोत्रं कुर्वतो यजमानस्य शंसं स्तुतिं प्र आवः प्रकर्षेण रक्षितवानसि । ऋसा.

**चक्राणासः परीणहं पृथिव्या**
**हिरण्येन मणिना शुम्भमानाः ।**
**न हिन्वानासस्तितिरुस्त इन्द्रं**
**परि स्पशो अदधात्सूर्येण ॥**

ये वृत्रानुचराः पृथिव्याः भूमेः परीणहं आच्छादनं सर्वतो व्याप्तिं चक्राणासः कुर्वाणाः हिरण्येन हिरण्ययुक्तेन मणिना कण्ठग्राह्यादिगतेन मण्याद्याभरणेन शुम्भमानाः शोभमानाः हिन्वानासः वर्धमानाः सन्तो वर्तन्ते ते तथा-विधा वृत्रानुचराः इन्द्रं युद्धायोद्यन्तं न तितिरुः जेतुं न समर्थाः आसन्। तदानीं स इन्द्रः स्पशः बाधकान् वृत्रानुचरान् सूर्येण आदित्येन परि अदधात् परिहितान् व्यवहितानकरोत् । तथा च ब्राह्मणम्— 'आदित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति' (तैसं. २।६।६।३) इति। ऋसा.

**परि यदिन्द्र रोदसी उभे**
**अबुभोजीर्महिना विश्वतः सीम् ।**
**अमन्यमानाँ अभि मन्यमानै-**
**र्निर्ब्रह्मभिरधमो दस्युमिन्द्र ॥**

हे इन्द्र, यत् यदा रोदसी उभे द्युलोकभूलोकावुभौ महिना त्वदीयेन महिम्ना विश्वतः सीं सर्वतः परिगृह्य परि अबुभोजीः परितो भुक्तवानसि तदानीं त्वं अमन्यमानान् मन्त्रार्थमनुध्यातुमशक्तानपि केवलपाठकान् यजमानान् अभि मन्यमानैः अस्मदीया एते यजमानाः रक्षणीया इत्य-भिमानं कुर्वद्भिः ब्रह्मभिः मन्त्रैः दस्युं चोरं वृत्रादिरूपमसुरं निः अधमः निःसारितवानसि । 'धमतिर्गतिकर्मा' (नि. ६।२) इति यास्कः। ऋसा.

**न ये दिवः पृथिव्या अन्तमापु-**
**र्न मायाभिर्धनदां पर्यभूवन् ।**
**युजं वज्रं वृषभश्चक्र इन्द्रो**
**निर्ज्योतिषा तमसो गा अदुक्षत् ॥**

ये जलविशेषाः दिवः द्युलोकात् पृथिव्याः अन्तं भूमेः स्थानं न आपुः न प्राप्ताः, मेघरूपमापन्नेन वृत्रेण निरुद्ध-त्वात्। अत एव भूमिप्राप्त्यभावात् धनदां धनप्रदां भूमिं मायाभिः सस्योपकारादिभिः कर्मभिः न पर्यभूवन् परितो न व्याप्ताः। जलपानसस्याभिवृद्ध्याद्युपकारं न चक्रुरित्यर्थः। तदानीमयं इन्द्रः मेघभेदनाय वज्रं युजं स्वहस्तयुक्तं चक्रे। ततः ज्योतिषा द्योतमानेन वज्रेण तमसः अन्धकाररूपात् मेघात् गाः गमनशीलान्युदकानि निः अधुक्षत् निःशेषेण दुग्धवान् । मेघं भित्त्वा जलं वृष्टवानित्यर्थः। ऋसा.

[1]अनु स्वधामक्षरन्नापो अस्या-
वर्धत मध्य आ नाव्यानाम् ।
सध्रीचीनेन मनसा तमिन्द्र
ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥

आपः जलानि अस्य इन्द्रस्य स्वधां अन्नं व्रीह्यादिरूप-मनुलक्ष्य अक्षरन् मेघात् वृष्टा अभवन् । तदानीमयं वृत्रः नाव्यानां नावा तरणयोग्यानां बह्वीनामपां मध्ये आसमन्तात् अवर्धत वृद्धिं प्राप्तः । प्रभूतजले वर्तमानोऽपि न ममार किंतु अभिवृद्ध एव । तदानीं इन्द्रः सध्रीचीनेन सहगच्छता मनसा युक्तं तं वृत्रं ओजिष्ठेन अतिबलयुक्तेन हन्मना हननसाधनेन वज्रेण अभि द्यून् कतिचिद्दिवसान-भिलक्ष्य अहन् तेषु दिवसेषु हतवान् । जलमध्ये पतित-स्यापि वृत्रस्य मनो यत्रेन्द्रस्तिष्ठति तत्रैव सह गच्छति तादृशमभिज्ञाय स हतवानित्यर्थः । ऋसा.

[2]न्याविध्यदिलीबिशस्य दृळ्हा
वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन्यावदोजो
वज्रेण शत्रुमवधीः पृतन्युम् ॥

इलीबिशस्य इलायाः भूमेर्बिले शयानस्य वृत्रस्य संबन्धीनि । 'इलाबिलशयस्य' (नि. ६।१९) इति यास्कः । दृळ्हा दृंहितानि असुरेण निरुद्धानि प्रभूतान्युदकानि इन्द्रः न्यविध्यत् नितरां विद्धवान् । यद्वा, दृळ्हानि प्रबलानि सैन्यानि नितरां विद्धवान् । तत ऊर्ध्वं शृङ्गिणं गोमहिषादिशृङ्गसमानैरायुधैरुपेतं शुष्णं जगतः शोषकं वृत्रं वि अभिनत् विविधं ताडितवान् । हे मघवन् धनयुक्तेन्द्र, तव यावत्तरः यावान् वेगोऽस्ति यावदोजः यावत् बलमस्ति तेन सर्वेण युक्तस्त्वं पृतन्युं पृतनां युद्धमिच्छन्तं शत्रुं वृत्रं वज्रेण अवधीः हतवानसि । ऋसा.

(१) ऋसं. १।३३।११; मैसं. ४।१४।१२ (१७१) मध्य (मध्या) मिन्द्र (मिन्द्रा) ; तैब्रा. २।८।३।४.

(२) ऋसं. १।३३।१२ ; नि. ६।१९.

[1]अभि सिध्मो अजिगादस्य शत्रून्
वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद्वृत्रमिन्द्रः
प्र स्वां मतिमतिरच्छाशदानः ॥

अस्य इन्द्रस्य सिध्मः साधको वज्रः शत्रून् अभि इन्द्र-वैरिणोऽभिलक्ष्य अजिगात् गतवान् । जिगातिर्गतिकर्मा 'गाति जिगाति' (निघण्टुः २।१४।११३) इति गतिकर्मसु पाठात् । स च इन्द्रः तिग्मेन तीक्ष्णेन वृषभेण श्रेष्ठेनायुधेन तेन वज्रेण पुरः वृत्रस्य पुराणि वि अभेत् विविधं भिन्न-वान् । ततः सः इन्द्रः वज्रेण स्वकीयेन वृत्रं सम् असृजत् संयोजितवान् । संयोज्य च शाशदानः वृत्रं हिंसन् स्वां मतिं स्वकीयां हर्षोपेतां बुद्धिं प्र अतिरत् प्रकर्षेण वर्धित-वान् । ऋसा.

[2]आवः कुत्समिन्द्र यस्मिञ्चाकन्
प्रावो युध्यन्तं वृषभं दशद्युम् ।
शफच्युतो रेणुर्नक्षत द्या-
मुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥

हे इन्द्र, कुत्सं एतन्नामकं गोत्रप्रवर्तकं ऋषिं आवः रक्षितवानसि । यस्मिन् कुत्से चाकन् स्तुतिं कामयमानो वर्तसे । तं कुत्समिति पूर्वत्रान्वयः । तथा दशद्युं एतन्नामकं दशसु दिक्षु दीप्यमानमृषिं प्रावः प्रकर्षेण रक्षितवानसि । कीदृशम् ? युध्यन्तं स्वकीयैः शत्रुभिः सह युद्धं कुर्वन्तं वृषभं गुणैः श्रेष्ठम् । शफच्युतः त्वदीयाश्वस्य शफात् पतितः रेणुः धूलिः द्यां द्युलोकं नक्षत प्राप्नोति । श्वैत्रेयः श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयात् जले मग्नः सन् त्वदनुग्रहात् नृषह्याय नृभिः पुरुषैः सोढव्याय उत् तस्थौ जलादुत्थितवान् । ऋसा.

आवः शमं वृषभं तुग्र्यासु
क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।
ज्योक् चिदत्र तस्थिवांसो अक्र-
ञ्छत्रूयतामधरा वेदनाकः ॥

(१) ऋसं. १।३३।१३ ; मैसं. ४।१४।१३ (१९१) णासृजद् (णाभिनद्) ; तैब्रा. २।८।४।४.

(२) ऋसं. १।३३।१४–१५.

हे मघवन् धनवन्निन्द्र, श्वित्र्यं श्वित्रायाः पुत्रं पूर्वोक्तं पुरुषं आवः रक्षितवानसि । किमर्थम् ? क्षेत्रजेषे शत्रुभिः सह युद्धवेलायां क्षेत्रप्राप्त्यर्थम् । कीदृशम् ? शमं त्वदीयपरिपालनेन चित्तव्याकुलतां परित्यज्य शान्तं वृषभं गुणैः श्रेष्ठं तुग्र्यासु गां जलेषु गतं मग्नमित्यर्थः । 'तुग्र्या बुर्बुरं' ( निघण्टुः १।१२।२१ ) इति उदकनामसु पठितत्वात् । अत्र अस्माभिः सह युद्धे ज्योक् चित् चिरकालमपि तस्थिवांसः अवस्थिताः सन्तः अक्रन् ये वैरिणः शत्रुत्वमकुर्वन् । शत्रूयतां शत्रूनात्मन इच्छतां तेषां अधरा वेदना निकृष्टानि दुःखानि त्वं अकः कुरु । ऋसा.

[१]त्वमेताञ्जनराज्ञो द्विर्दशा-
बन्धुना सुश्रवसोपजग्मुषः ।
षष्टिं सहस्रा नवतिं नव श्रुतो
नि चक्रेण रथ्या दुष्पदावृणक् ॥

हे इन्द्र, श्रुतः विश्रुतः प्रख्यातः त्वं द्विर्दश विंशतिसंख्याकान् अबन्धुना बन्धुरहितेन सहायरहितेन सुश्रवसा एतत्संज्ञकेन राज्ञा युद्धार्थं उपजग्मुषः उपगतवतः एतान् एवंविधान् जनराज्ञः जनपदानामधिपतीन् । षष्टिमित्यादिना तेषां राज्ञामनुचरसंख्योच्यते । षष्टिं सहस्रा सहस्राणां षष्टिं नवतिं नव नवसंख्योत्तरां नवतिम् । तान् राज्ञ ईदृक्संख्याकाननुचरांश्च रथ्या रथसंबन्धिना दुष्पदा दुष्प्रपदनेन । शत्रुभिः प्राप्तुमशक्येनेत्यर्थः । ईदृशेन चक्रेण नि अवृणक् न्यवर्जयः । त्वां स्तुवतः सुश्रवसो जयार्थं त्वमागत्य तदीयान् शत्रूनजैषीरित्यर्थः । ऋसा.

[२]त्वमाविथ सुश्रवसं तवोतिभि-
स्तव त्रामभिरिन्द्र तूर्वयाणम् ।
त्वमस्मै कुत्समतिथिग्वमायुं
महे राज्ञे यूने अरन्धनायः ॥

हे इन्द्र, त्वं तवोतिभिः त्वदीयैः पालनैः सुश्रवसं पूर्वोक्तं राजानं आविथ ररक्षिथ । तथा तूर्वयाणं एतन्नामानं राजानं तव त्रामभिः त्वदीयैस्त्रायकैः पालकैः बलैः आविथेति शेषः । किंच, त्वं महे महते यूने तरुणाय अस्मै सुश्रवसे राज्ञे कुत्सादीन् त्रीन् राज्ञः अरन्धनायः वशमनयः । ऋसा.

[१]स घा राजा सत्पतिः शूशुवज्जनो
रातहव्यः प्रति यः शासमिन्वति ।
उक्था वा यो अभिगृणाति राधसा
दानुरस्मा उपरा पिन्वते दिवः ॥

स घ स खलु जनः जातः राजा राजमानः सत्पतिः सतां पालयिता यजमानः शूशुवत् आत्मानं वर्धयति । यः इन्द्रं प्रति रातहव्यः दत्तहविष्कः सन् शासं इन्द्रकर्तृकमनुशासनं यद्वा तस्य स्तुतिं इन्वति व्याप्नोति । उक्था वा उक्थानि शस्त्राणि वा यः स्तोता राधसा हविर्लक्षणेनान्नेन सह अभिगृणाति तस्याभिमुखीकरणाय शंसति अस्मै स्तोत्रे दानुः अभिमतफलप्रदातेन्द्रः उपरा उपरान् मेघान् । उपर इति मेघनाम । स च यास्केनैवं निरुक्तः- 'उपर उपलो मेघो भवत्युपरमन्तेऽस्मिन्नभ्राण्युपरता आप इति वा' ( नि. २।२१ ) इति । तान् मेघान् दिवः सकाशात् पिन्वते सेचयति दोग्धीति यावत् । ऋसा.

असमं क्षत्रमसमा मनीषा
प्र सोमपा अपसा सन्तु नेमे ।
ये त इन्द्र ददुषो वर्धयन्ति
महि क्षत्रं स्थविरं वृष्ण्यं च ॥

इन्द्रस्य क्षत्रं बलं असमं न केनचित् समम् । सर्वाधिकमित्यर्थः । तथा मनीषा बुद्धिश्च असमा न कस्यापि बुद्ध्या समाना । सर्वं वस्तु विषयीकरोतीत्यर्थः । नेमे इति सर्वनामशब्दः एतच्छब्दसमानार्थः । नेमे एते सोमपाः सोमस्य पातारो यजमानाः अपसा कर्मणा प्र सन्तु प्रवृद्धा भवन्तु । हे इन्द्र, ते तव ददुषः हविर्दत्तवन्तः ये त्वदीयं महि महत् क्षत्रं बलं स्थविरं स्थूलं प्रवृद्धं वृष्ण्यं वृषत्वं पुंस्त्वं च वर्धयन्ति प्रवृद्धं कुर्वन्ति । यद्वा, ददुषो यजमानेभ्यो यागफलं दत्तवतः तवेति योजनीयम् । ऋसा.

( १ ) ऋसं. १।५३।९ ; असं. २०।२१।९.
( २ ) ऋसं. १।५३।१० ; असं. २०।२१।१०.
( १ ) ऋसं. १।५४।७–८.

[1]निरिन्द्र भूम्या अधि वृत्रं जघन्थ निर्दिवः ।
सृजा मरुत्वतीरव जीवधन्या
इमा अपोऽर्चन्ननु स्वराज्यम् ॥

हे इन्द्र, भूम्याः अधि भूलोकस्योपरि वृत्रं निः जघन्थ निःशेषेण हतवानसि । तथा दिवः द्युलोकात् निः जघन्थ । हत्वा च इमाः अपः वृष्ट्युदकानि अव सृज अधः पातय । कीदृशीरपः ? मरुत्वतीः मरुद्भिः संयुक्ताः जीवधन्याः जीवाः प्राणिनः धन्याः तृप्ताः याभिस्ताः । किं कुर्वन् ? स्वराज्यं स्वस्य राज्यं राजत्वं अनु अनुलक्ष्य अर्चन् पूजयन् स्वस्य स्वामित्वं प्रकटयन्नित्यर्थः । ऋसा.

अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा ।
मन्दान इन्द्रो अन्धसः सखिभ्यो
गातुमिच्छत्यर्चन्ननु स्वराज्यम् ॥

इन्द्रः शतपर्वणा शतसंख्याकधाराभिर्युक्तेन वज्रेण सानौ अधि नि जिघ्नते । अधिः सप्तम्यर्थानुवादी । समुच्छ्रिते वृत्रस्य कपोलादौ स्थाने नितरां हिनस्ति । स च इन्द्रः मन्दानः मन्दमानः स्तूयमानः सन् सखिभ्यः समानख्यानेभ्यः स्तोतृभ्यः अन्धसः अन्नस्य गातुं मार्गं उपायं इच्छति । अन्यत् पूर्ववत् । ऋसा.

[2]इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।
यद्ध त्यं मायिनं मृगं तमु त्वं
माययावधीरर्चन्ननु स्वराज्यम् ॥

अद्रिरिति मेघनाम । हे अद्रिवः वाहनरूपमेघयुक्त वज्रिन् वज्रवन् इन्द्र, तुभ्यमित् षष्ठ्यर्थे चतुर्थी । तवैव वीर्यं सामर्थ्यं अनुत्तं शत्रुभिरतिरस्कृतम् । यद्ध यस्मात् खलु मायिनं मायाविनं त्यं तं प्रसिद्धं वञ्चयितारम्, लोकोपद्रवकारिणमित्यर्थः । मृगं मृगरूपमापन्नं तं वृत्रं त्वमपि माययैव अवधीः हतवानसि । ऋसा.

[1]सहस्रं साकमर्चत परि ष्टोभत विंशतिः ।
शतैनमन्वनोनवुरिन्द्राय ब्रह्मोद्यत-
मर्चन्ननु स्वराज्यम् ॥

सहस्रं सहस्रसंख्याका मनुष्याः साकमर्चत एनमिन्द्रं युगपदेवापूजयन् । तथा विंशतिः । षोडशर्त्विजो यजमानः पत्नी च सदस्यः शमिता चेति विंशतिसंख्याकाः । तेषां या विंशतिसंख्या सा परि ष्टोभत परितः सर्वतोऽस्तौत् । तथा च शता शतसंख्याका ऋषयः एनं इन्द्रं अन्वनोनवुः पुनः पुनरस्तुवन् । अस्मा एव इन्द्राय ब्रह्म हविर्लक्षणमन्नं उद्यतं दातुमूर्ध्वं धृतम् । अत एवंविध इन्द्रो वृत्रमहन्नित्यर्थः । अन्यत् पूर्ववत् । ऋसा.

इन्द्रो वृत्रस्य तविषीं निरहन्त्सहसा सहः ।
महत्तदस्य पौंस्यं वृत्रं जघन्वाँ
असृजदर्चन्ननु स्वराज्यम् ॥

इन्द्रो वृत्रस्य असुरस्य तविषीं बलं स्वकीयेन बलेन निरहन् हतवान् । सहसा सहनेन अभिभवसाधनेनायुधेन सहः अभिभवसाधनं वृत्रायुधं निरहन् । अस्य इन्द्रस्य तत् पौंस्यं बलं महत् अतिप्रौढम् । यस्मादयं वृत्रं जघन्वान् हतवान् हत्वा च तन्निरुद्धा अपः असृजत् तस्मात् वृत्रान्निरगमयत् । अन्यत् पूर्ववत् । ऋसा.

इमे चित्तव मन्यवे वेपेते भियसा मही ।
यदिन्द्र वज्रिन्नोजसा वृत्रं मरुत्वाँ
अवधीरर्चन्ननु स्वराज्यम् ॥

मही महत्यौ इमे द्यावापृथिव्यावपि हे इन्द्र, तव मन्यवे त्वदीयकोपात् भियसा भीत्या वेपेते कम्पेते । हे वज्रिन् वज्रवन् इन्द्र, मरुत्वान् मरुद्भिर्युक्तस्त्वं ओजसा बलेन यत् यदा वृत्रं अवधीः तदानीं द्यावापृथिव्यावपि भयेनाकम्पिषातामित्यर्थः । ऋसा.

न वेपसा न तन्यतेन्द्रं वृत्रो वि बीभयत् ।
अभ्येनं वज्र आयसः सहस्रभृष्टि-
रायतार्चन्ननु स्वराज्यम् ॥

---

(१) ऋसं. १।८०।४, ६.

(२) ऋसं. १।८०।७; सासं. १।५।७ (४१२) तमु त्वं मा (तव त्यन्मा).

(१) ऋसं. १।८०।९–१५.

वृत्रः इन्द्रं वेपसा स्वकीयेन वेपनेन कम्पनेन न विबीभयत् भीतं नाकरोत्। तथा तन्यता स्वकीयेन घोरेण गर्जनशब्देन न वि बीभयत्। अपि च इन्द्रेण विसृष्टः आयसः अयोमयः सहस्रभृष्टिः अनेकाभिर्धाराभिर्युक्तः वज्रः एनं वृत्रं अभि आयत हन्तुमाभिमुख्येनागच्छत्। अन्यत् पूर्ववत्। ऋसा.

**यद्वृत्रं तव चाशनिं वज्रेण समयोधयः।**
**अहिमिन्द्र जिघांसतो दिवि ते**
**बद्बधे शवोऽर्चन्ननु स्वराज्यम् ॥**

हे इन्द्र, यत् यदा वृत्रं तव हननार्थं तेन सृष्टां अशनिं च त्वं वज्रेण समयोधयः सम्यक् प्राहार्षीः तदानीं अहिं आगत्य हन्तारं वृत्रं जिघांसतः हन्तुमिच्छतः ते तव शवः बलं दिवि बद्बधे बद्धं अनुस्यूतं व्याप्तमासीत्। शिष्टं पूर्ववत्। ऋसा.

**अभिष्टने ते अद्रिवो यत्स्था जगच्च रेजते।**
**त्वष्टा चित्तव मन्यव इन्द्र वेविज्यते**
**भियार्चन्ननु स्वराज्यम् ॥**

हे अद्रिवः वज्रवन् इन्द्र, ते तव अभिष्टने सिंहनादे सति स्थाः स्थावरं जगत् जङ्गमं च यत् अस्ति तदुभयं रेजते कम्पते। त्वष्टा चित् वज्रनिर्माता त्वष्टा च तव मन्यवे त्वदीयाय कोपाय भिया भीत्या वेविज्यते भृशं कम्पते। अन्यत् समानम्। ऋसा.

**नहि नु यादधीमसीन्द्रं को वीर्या परः।**
**तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि**
**सं दधुरर्चन्ननु स्वराज्यम् ॥**

यात् यान्तं सर्वत्र व्याप्य वर्तमानमिन्द्रं नहि नु अधीमसि वयं न ह्यवगच्छामः। यतो वयमल्पाः। परः इत्येतत् सकारान्तमव्ययं वैदूर्यमाचष्टे। 'परो दिवा पर एना' (ऋसं. १०।८२।५) इति यथा। परः परस्तात् अतिदूरे मनुष्यैरनवगाह्ये स्थाने वीर्या वीर्येण सामर्थ्येन वर्तमानं इन्द्रं कः मनुष्यो जानीयात्। न कोऽपीत्यर्थः। कस्मादिति चेत् अत्राह– तस्मिन्निति। यस्मात् तस्मिन् इन्द्रे देवाः नृम्णं धनं उत अपि च क्रतुं वीर्यकर्म ओजांसि बलानि च सं दधुः स्थापयांचक्रुः तस्मादित्यर्थः। ऋसा.

**[1]स यो वृषा वृष्ण्येभिः समोका**
**महो दिवः पृथिव्याश्च सम्राट्।**
**सतीनसत्वा हव्यो भरेषु**
**मरुत्वान्नो भवत्विन्द्र ऊती ॥**

यः इन्द्रः वृषा कामानां वर्षिता वृष्ण्येभिः वृष्णिभवैर्वीर्यैः समोकाः सम्यक् समवेतः संगतः महः महतः दिवः द्युलोकस्य पृथिव्याः प्रथितायाः भूमेः च सम्राट् ईश्वरः। सतीनसत्वा। सतीनं इति उदकनाम। उदकस्य सत्वा सादयिता गमयिता भरेषु संग्रामेषु हव्यः सर्वैः स्तोतृभिराह्वातव्यः एवंभूतः मरुत्वान् मरुद्भिर्युक्तः सः इन्द्रः नः अस्माकं ऊती ऊतये रक्षणाय भवतु। सतीनसत्वा। षद्लृ विशरणगत्यवसादनेषु। मेघेषु निषीदतीति सतीनं वृष्ट्युदकम्। औणादिक ईनप्रत्ययः तकारान्तादेशश्च। यद्वा, सती माध्यमिका वाक्। सा इना ईश्वरा यस्य तत् सतीनम्। व्यत्ययेन पुंवद्भावाभावः। ऋसा.

**[2]अधा यो विश्वा भुवनाभि मज्मने-**
**शानकृत्प्रवया अभ्यवर्धत।**
**आद्रोदसी ज्योतिषा वह्निरातनो-**
**त्सीव्यन्तमांसि दुधिता समव्ययत् ॥**

अध अपि च प्रवयाः प्रवृद्धान्नः पुरातनो वा यः इन्द्रः विश्वा भुवना सर्वान् लोकान् मज्मना बलेनाभिभूय ईशानकृत् आत्मानं सर्वस्याधिपतिं कुर्वन्। यद्वा, अग्न्यादीन् देवान् तत्तल्लोकाधिपतीन् कुर्वन् अभ्यवर्धत सर्वतः प्रवृद्धोऽभवत्। आत् अनन्तरं वह्निः जगतां वोढा स इन्द्रः ज्योतिषा स्वीयेन तेजसा रोदसी द्यावापृथिव्यौ आतनोत् व्याप्नोत्। किंच, तमांसि तमोरूपाणि रक्षांसि दुधिता दुःस्थितानि दुर्गतानि सीव्यन् विस्तारयन् समव्ययत् आवृणोत् जगत् व्याप्य वर्तत इत्यर्थः। ऋसा.

---

(१) ऋसं. १।१००।१; ऐब्रा. २२।७; शाब्रा. २३।६ वृष्ण्येभिः (वृष्णेभिः); तैब्रा. २।८।३।६ वृष्ण्येभिः (वृष्णियेभिः).
(२) ऋसं. २।१७।४.

[1]मखस्य ते तविषस्य प्र जूति-
मिर्यर्मि वाचममृताय भूषन् ।
इन्द्र क्षितीनामसि मानुषीणां
विशां दैवीनामुत पूर्वयावा ॥

हे इन्द्र, भूषन् त्वामलंकुर्वन्नहं मखस्य महनीयस्य स्तुत्यस्य तविषस्य बलवतः ते तव जूतिं मनसा प्रेरितां वाचं स्तुतिलक्षणां अमृताय अन्नार्थं प्र इयर्मि प्रकर्षेणोच्चारयामि । मानुषीणां क्षितीनां मनोर्जातानां मनुष्याणां उत अपि च दैवीनां देवसंबन्धिनीनां विशां प्रजानां पूर्वयावा अग्रतो गन्ता त्वमसि । ऋसा.

[2]स्वयुरिन्द्र स्वराळसि स्मद्दिष्टिः स्वयशस्तरः ।
स वावृधान ओजसा पुरुष्टुत
भवा नः सुश्रवस्तमः ॥

हे इन्द्र, स्वयुः धनवानसि । तथा स्वराट् स्वर्गस्य राजा असि । स्मद्दिष्टिः भद्रवाक्यः स्वयशस्तरः अतिशयेन प्रभूतकीर्तिरसि । हे पुरुष्टुत बहुभिराहूतेन्द्र, सः त्वं ओजसा बलेन वावृधानः वर्धमानः सन् नः अस्मदर्थं सुश्रवस्तमः अतिशयेन शोभनान्नोपेतः भव ।

ऋसा.

[3]महाँ असि महिष वृष्ण्येभि-
र्धनस्पृदुग्र सहमानो अन्यान् ।
एको विश्वस्य भुवनस्य राजा
स योधया च क्षयया च जनान् ॥

हे महिष महनीय उग्र इन्द्र, त्वं महानसि । धनस्पृत् धनानि दानभोगत्यागैः पारं नयंस्त्वं वृष्ण्येभिः वीर्यैः अन्यान् शत्रून् सहमानः अभिभवन् वर्तसे । तथा विश्वस्य सर्वस्य भुवनस्य एकः असहायः राजा सः त्वं योधय च सपत्नान् प्रहर । जनान् क्षयय च निवासय ।

( १ ) ऋसं. ३।३४।२ ; असं. २०।११।२.
( २ ) ऋसं. ३।४५।५.
( ३ ) ऋसं. ३।४६।२.

बाधकान् हत्वा साधुजनान् स्वस्थाने स्थापयेत्यभिप्रायः । ऋसा.

त्वष्टा इन्द्रायुधस्य निर्माता

[1]अस्मा इदु त्वष्टा तक्षद्वज्रं
स्वपस्तमं स्वर्यं रणाय ।
वृत्रस्य चिद्विदद्येन मर्म
तुजन्नीशानस्तुजता कियेधाः ॥

त्वष्टा विश्वकर्मा अस्मा इदु अस्मै एवेन्द्राय वज्रं वर्जकमायुधं रणाय युद्धार्थं तक्षत् तीक्ष्णमकरोत् । कीदृशं वज्रम् ? स्वपस्तमं अतिशयेन शोभनकर्माणं स्वर्यं सुष्ठु शत्रुषु प्रेर्यं यद्वा स्तुत्यम् । तुजन् शत्रून् हिंसन् ईशानः ऐश्वर्यवान् कियेधाः बलवान् एवंगुणविशिष्टः इन्द्रः वृत्रस्य चित् आवरकस्यासुरस्य मर्म मर्मस्थानं तुजता हिंसता येन वज्रेण विदत् प्राहार्षीदित्यर्थः । कियेधाः । अत्र निरुक्तं ' कियेधाः कियद्धा इति वा क्रममाणधा इति वा ' ( नि. ६।२० ) इति । अस्यायमभिप्रायः— कियत् किं परिमाणमित्यस्य बलस्य तादृशं बलं दधाति धारयतीति कियद्धाः । यः कोऽप्यस्य बलस्येयत्तां न जानातीत्यर्थः । यद्वा, क्रममाणं आक्रममाणं परेषां बलं धारयति निवारयतीति क्रममाणधाः । उभयत्रापि पृषोदरादित्वात् पूर्वपदस्य कियेभावः । ऋसा.

[2]त्वष्टा यद्वज्रं सुकृतं हिरण्ययं
सहस्रभृष्टिं स्वपा अवर्तयत् ।
धत्त इन्द्रो नर्यपांसि कर्तवे-
ऽहन्वृत्रं निरपामौब्जदर्णवम् ॥

स्वपाः शोभनकर्मा त्वष्टा विश्वनिर्माता यद्वज्रं अवर्तयत् इन्द्रं प्रत्यगमयत् दत्तवानित्यर्थः । कीदृशम् ? सुकृतं सम्यङ्निष्पादितं हिरण्ययं सुवर्णमयं सहस्रभृष्टिं अनेकाभिर्धाराभिर्युक्तं, तद् वज्रं इन्द्रः धत्ते धारयति । किमर्थम् ?

( १ ) ऋसं. १।६१।६; असं. २०।३५।६.
( २ ) ऋसं. १।८५।९.

नरि अत्र नृसंबन्धात् नृशब्देन संग्रामोऽभिधीयते। संग्रामे अपांसि शत्रुहननादिलक्षणानि कर्माणि कर्तवे कर्तुम्। एवं वज्रं धृत्वा तेन वज्रेण वृत्रं वृष्ट्युदकस्यावरकं अर्णवं अर्णसोदकेन युक्तं मेघं अहन् अवधीत्। अपां तेन निरुद्धा अपश्च सः निः औब्जत् निःशेषेणाधोमुखमपातयत् प्रवृष्टा अकरोदित्यर्थः। ऋसा.

जनित्रा निर्मितः इन्द्रः रक्षसां हन्ता

**[1]पाहि न इन्द्र सुष्टुत स्रिधोऽवयाता**
**सदमिद्दुर्मतीनां देवः सन्दुर्मतीनाम्।**
**हन्ता पापस्य रक्षसस्त्राता विप्रस्य मावतः।**
**अधा हि त्वा जनिता जीजनद्वसो**
**रक्षोहणं त्वा जीजनद्वसो॥**

हे इन्द्र सुष्टुत शोभनस्तुत, त्वं स्रिधः दुःखात् तदुत्पादकात् पापाद्वा नः अस्मान् पाहि रक्ष। यतः त्वं दुर्मतीनां दुर्मनस्कानां रक्षःप्रभृतीनां सदमित् सर्वदैव अवयाता अधोयापयिता प्रापयिता असि। अतः पाहि। अत एव हे इन्द्र, देवः अस्मत्स्तुत्या हृष्टः सन् दुर्मतीनां दुष्टमननवतां यागविघातकानां अवयाता असि। तथा रक्षसः रक्षणनिमित्तभूतस्य। 'रक्षो रक्षितव्यमस्मात्' (नि. ४।१८) इति यास्कः। तादृशस्य पापस्य फलप्रतिबन्धरूपस्य हन्ता घातकोऽसि। यद्वा, पापस्य पापिनः रक्षसः राक्षसादेः हन्ताऽसि। तथा मावतः मत्सदृशस्य विप्रस्य मेधाविनः यजमानस्य त्राता रक्षिताऽसि। अध अतो हेतोः हे इन्द्र, वसो सर्वेषां निवासभूत, त्वा त्वां जनिता सर्वस्य जनयिता आदिकर्ता परमेश्वरः जीजनत् अजनयत् उत्पादितवान्। तथा हे वसो वासयितः, त्वा त्वां रक्षोहणं जीजनत् रक्षोहननाय उत्पादितवान्। यज्ञादिविघातिनां रक्षःप्रभृतीनां विघाताय हि इन्द्रस्यावतारः। 'तमिन्द्रो देवतान्वसृज्यत' (तैसं. ७।१।१।४) इत्यादिप्रसिद्धद्योतनार्थो हिशब्दः। ऋसा.

(१) ऋसं. १।१२९।११.

सर्वजनभयजनको राजा इन्द्रः, देवैः शत्रुहननाय भुवः सम्राट् सृष्टो वृतश्च, जनहितकारीणि तस्य कर्माणि यथा— जलवृष्टिः, नदीनां प्रवर्तनं उत्तरणीयत्वं च, शस्यसमृद्धिः गावः पयस्वत्यश्च

**[1]एवा त्वामिन्द्र वज्रिन्नत्र**
**विश्वे देवासः सुहवास ऊमाः।**
**महामुभे रोदसी वृद्धमृष्वं**
**निरेकमिद्वृणते वृत्रहत्ये॥**

अत्र अस्मिन् यज्ञे वज्रिन् हे वज्रवन् इन्द्र, सुहवासः सुहवाः शोभनाह्वानाः ऊमाः रक्षकाः विश्वे देवासः सर्वे देवाः उभे रोदसी द्यावापृथिव्यौ च एव एवमुक्तप्रकारेण स्तूयमानं महां महान्तं प्रभूतं वृद्धं गुणैः प्रवृद्धं ऋष्वं दर्शनीयं त्वां एकमित् एकमेव वृत्रहत्ये वृत्रहननार्थं निः वृणते निःशेषेण संभजन्ते। ऋसा.

**[2]अवासृजन्त जिव्रयो न देवा**
**भुवः सम्राळिन्द्र सत्ययोनिः।**
**अहन्नहिं परिशयानमर्णः**
**प्र वर्तनीररदो विश्वधेनाः॥**

हे इन्द्र, देवाः त्वां जिव्रयो न जीर्णाः प्रवृद्धाः पितरो यूनः पुत्रानिव अवासृजन्त असुरवधार्थं प्रैरयन्। ततो हे इन्द्र, सत्ययोनिः सत्यनिवासस्त्वं सम्राट् सर्वेषां लोकानामधीश्वरः भुवः अभवः। अर्णः उदकं लक्ष्यीकृत्य परिशयानं परितः समन्तात् शयनं कुर्वन्तं अहिं वृत्रासुरं अहन् अवधीः। विश्वधेनाः विश्वस्य प्रीणयित्रीः वर्तनीः सर्वत्र प्रवर्तिका नदीः प्र अरदः प्रकर्षेण विलेखनं कृतवानसि। इन्द्रो वृत्रं हत्वा तेनावृतान्युदकानि प्रवाहरूपेण प्रवर्तयतीत्यर्थः। ऋसा.

**[3]त्वं महीमवनिं विश्वधेनां**
**तुर्वीतये वय्याय क्षरन्तीम्।**
**अरमयो नमसैजदर्णः**
**सुतरणाँ अकृणोरिन्द्र सिन्धून्॥**

(१) ऋसं. ४।१९।१; ऐब्रा. २९।२; गोब्रा. २।४।१.
(२) ऋसं. ४।१९।२.
(३) ऋसं. ४।१९।६.

हे इन्द्र, त्वं महीं महतीं विश्वधेनां विश्वस्य प्रीणयित्रीं तुर्वीतये तुर्वीतिनाम्ने राज्ञे वय्याय वय्यनाम्ने च क्षरन्तीं अभीष्टान् कामान् दुहतीं अवनिं भूमिं नमसा अन्नेन एजत् एजता चलता अर्णः अर्णसोदकेन च अरमयः रमयसि । इन्द्रः पृथिवीमन्नोदकसमृद्धां करोतीत्यर्थः । किंच, हे इन्द्र, त्वं सिन्धून् जलानि सुतरणान् सुष्ठु तीर्णानि अकृणोः अकार्षीः । ऋसा.

[1]प्र ते पूर्वाणि करणानि विप्रा-
विद्वाँ आह विदुषे करांसि ।
यथायथा वृष्ण्यानि स्वगूर्ता-
पांसि राजन्नर्याविवेषीः ॥

हे राजन् राजमानेन्द्र, वृष्ण्यानि वर्षणयोग्यानि स्वगूर्ता स्वगूर्तानि स्वयमुद्गीर्णानि नर्या नर्याणि मनुष्यहितानि अपांसि त्वत्संबन्धीनि कर्माणि यथायथा अविवेषीः व्याप्नोः । अकार्षीरिति यावत् । तथातथा हे विप्र प्राज्ञेन्द्र, विदुषे विदुषः सर्वं जानतः ते त्वत्संबन्धीनि पूर्वाणि पुरातनानि करणानि कर्माणि आविद्वान् आ समन्ताज्जानन् वामदेवः करांसि त्वदीयानि कर्माणि प्र प्रकर्षेण आह ब्रवीति । ऋसा.

इन्द्रः दैवीनां मानुषीणां च प्रजानां राजा

[2]भुवो जनस्य दिव्यस्य राजा
पार्थिवस्य जगतस्त्वेषसंदृक् ।
धिष्व वज्रं दक्षिण इन्द्र हस्ते
विश्वा अजुर्य दयसे वि मायाः ॥

हे त्वेषसंदृक् दीप्तदर्शनेन्द्र, दिव्यस्य दिवि भवस्य जनस्य राजा ईश्वरः भुवः भवसि । जगतः जङ्गमस्य पार्थिवस्य च राजा भवसि । दक्षिणे हस्ते वज्रं धिष्व निधेहि । तेन च निहितेन वज्रेण विश्वाः सर्वा आसुरीः मायाः वि दयसे विबाधसे । हे इन्द्र अजुर्य जरयितुमशक्येन्द्र त्वमिति । ऋसा.

(१) ऋसं. ४।१९।१०.
(२) ऋसं. ६।२२।९ ; असं. २०।३६।९.



इन्द्रः असमः एको राजा भुवनस्य विश्वस्य

[1]स रायस्खामुप सृजा गृणानः
पुरुश्चन्द्रस्य त्वमिन्द्र वस्वः ।
पतिर्बभूथासमो जनाना-
मेको विश्वस्य भुवनस्य राजा ॥

हे इन्द्र, गृणानः स्तूयमानः सः त्वं रायः धनस्य खाम् । नदीनामैतत् । अत्र तत्संबद्धा धारा लक्ष्यते । धारां उप सृज विमुञ्च । अस्माभिः संयोजयेत्यर्थः । कीदृशस्य धनस्य ? पुरुश्चन्द्रस्य बहूनामाल्हादकस्य वस्वः निवासकस्य । अपि च असमः अनुपमः सर्वोत्कृष्टस्त्वं जनानां सर्वेषां प्राणिनां पतिः अधिपतिः बभूथ । तथा विश्वस्य सर्वस्य भुवनस्य भूतजातस्य एकः असाधारणो राजा ईश्वरश्च बभूविथ । ऋसा.

इन्द्रः एकराट्

[2]एकराळस्य भुवनस्य राजसि
शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रह-
न्ननेद्य पिबा सोमस्य वज्रिवः ॥

हे शचीपते इन्द्र, अस्य भुवनस्य एकराट् एक एव राजा सन् राजसि भ्राजसे । विश्वाभिः सर्वाभिः ऊतिभिः रक्षाभिः । अपि च हे अनेद्य अनिन्द्य, वज्रिवः वज्रिन् वृत्रहन् इन्द्र, माध्यंदिनस्य सवनस्य संबन्धिनं सोमस्य सोमं पिब ।

ऋसा.

इन्द्रो गणपतिः

[3]नि षु सीद गणपते गणेषु
त्वामाहुर्विप्रतमं कवीनाम् ।
न ऋते त्वत्क्रियते किं चनारे
महामर्कं मघवञ्चित्रमर्च ॥

(१) ऋसं. ६।३६।४.
(२) ऋसं. ८।३७।३.
(३) ऋसं. १०।११२।९.

हे गणपते, त्वं गणेषु स्तोतृगणेषु सु सुष्ठु नि षीद। स्तुतिश्रवणार्थं निषण्णो भव। यतः कवीनां क्रान्तप्रज्ञानां मध्ये त्वां विप्रतमं अतिशयेन मेधाविनमिति आहुः। किंच त्वत् ऋते। 'अन्यारादितरर्ते'(पा. २।३।२९) इति पञ्चमी। त्वां वर्जयित्वा किं चन कर्म आरे दूरे समीपे वा न क्रियते। तस्मान्निषीद। ततो हे मघवन् धनवन्निन्द्र, महां महान्तं अर्कं अर्चनीयमस्मदीयं त्रिवृत्पञ्चदशादिलक्षणं स्तोमं चित्रं नानारूपं कृत्वा अर्च पूजय विधेहि। ऋसा.

अपराजितत्वात् इन्द्रोऽधिराजः राज्ञाम्

**[1]इन्द्रो जयाति न परा जयाता**
**अधिराजो राजसु राजयाति।**
**विश्वा हि भूयाः पृतना अभिष्टी-**
**रुपसद्यो नमस्यो यथाऽसत्॥**

इन्द्रः सर्वत्र जयत्येव। न तु क्वापि पराजयते। सर्वेषु राजस्वधिको राजा भूत्वा सर्वानन्यान् राजयाति अराज्ञामपि राज्यप्रदानेन राजत्वं संपादयति। किंच, सर्वेषां राज्ञामुपसद्यः शरण्यो नमस्कारार्हश्च यथाऽसत् येन प्रकारेणासि तथा विश्वाः पृतनाः परकीयसेना अभिष्टीः अभिभवितुं समर्थो भूयाः। तैसा.

देवैर्युद्धार्थं इन्द्रो राजा वृतः

**[2]देवासुराः संयत्ता आसन्। स प्रजापतिरिन्द्रं ज्येष्ठं पुत्रमपन्यधत्त। नेदेनमसुरा बलीयाँसोऽहनन्निति। प्रह्लादो ह वै कायाधवः। विरोचनँ स्वं पुत्रमपन्यधत्त। नेदेनं देवा अहनन्निति। ते देवाः प्रजापतिमुपसमेत्योचुः। नाराजकस्य युद्धमस्ति। इन्द्रमन्विच्छामेति। तं यज्ञक्रतुभिरन्वैच्छन्। तं यज्ञक्रतुभिर्नान्वविन्दन्। तमिष्टिभिरन्वैच्छन्। तमिष्टिभिरन्वविन्दन्। तदिष्टीनामिष्टित्वम्। एष्टयो ह वै नाम। ता इष्टय इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः॥**

देवाश्चासुराश्च यदा युद्धार्थमुद्यताः तदानीं प्रजापतिः स्वकीयं ज्येष्ठं पुत्रमिन्द्रं युद्धभूमेरपनीय क्वचिद्गूढे स्थाने निहितवान्। तस्या( प्य ? )यमभिप्रायः— बलीयांसोऽसुरा एनं दुर्बलमिन्द्रं नेदहनन् नैव घ्नन्त्विति। तथा कयाधुसंज्ञिताया हिरण्यकशिपुभार्यायाः पुत्रः प्रह्लादः स्वकीयं पुत्रं विरोचनमसुरसैन्यस्वामिनं युद्धभूमेरपनीय क्वचिन्निहितवान्। तस्यायमभिप्रायः— एनं विरोचनं देवाः सर्वथा मा घ्नन्त्विति। एवं च राजद्वयरहितयोः सेनयोरवस्थितयोः सत्योर्देवाः प्रजापतिसमीपं प्राप्यैवमूचुः— राजरहितस्य सैन्यस्य न क्वचिदपि युद्धमस्ति। युयुत्सवः सर्वेऽपि राजानमन्तरेण पलायिष्यन्ते। तस्मादिन्द्रं राजानं तत्र तत्रान्विच्छामः इत्युक्त्वा प्रजापतिनाऽनुज्ञातास्तमिन्द्रं लब्धुं ज्योतिष्टोमोक्थ्यादिरूपान् क्रतूननुष्ठितवन्तः। अङ्गभूतेष्टिरहितैस्तैर्महाक्रतुभिरिन्द्रमलब्ध्वा तत्र कारणमङ्गेष्टिवैकल्यं निश्चित्य ता इष्टीरनुष्ठाय ताभिरिष्टिभिरेनं लब्धवन्तः। एवं च सत्यन्वेषणसाधनत्वात् एष्टय इत्येतासां नाम। तथापि मुख्यं नाम गोपयित्वा परोक्षेण तिरोहितेन नाम्ना व्यवहर्तुमिष्टय इत्याचक्षते। अन्वेषणसाधनत्वं एष्टित्वम्। यजनसाधनत्वं इष्टित्वम्। अतस्तेन व्यवहारे सति मुख्यं नाम परोक्षं भवति। देवानां च परोक्षं नाम प्रियम्। अत एव लोकेऽपि देवदत्तादिनाम परित्यज्य आचार्याः, उपाध्यायाः, मिश्राः इत्यादिनामभिः पूज्याः परितुष्यन्ति। यद्यप्यन्वेषणार्थस्वीकारेऽपीच्छतिधातोः क्तिन्प्रत्यये सति यजिधातुवदिष्टिरित्येव रूपं संपद्यते। तथाऽप्यौणादिकं कंचित्ककाररहितं प्रत्ययमभिप्रेत्य रूपमीदृशं श्रुत्या विवक्षितम्। तैब्रासा.

अनुजस्यापीन्द्रस्य राजत्वं करग्रहीतृत्वं च

**[1]प्रजापतिरिन्द्रमसृजताऽऽनुजावरं देवानाम्। तं प्राहिणोत्। परेहि। एतेषां देवानामधिपतिरेधीति।**

---

(१) असं. ६।९८।१ राजयाति (राजयातै) उत्तरार्धे (चर्कृत्य ईड्यो वन्द्यश्चोपसद्यो नमस्यो भवेह।); तैसं. २।४।१४।२; मैसं. ४।१२।३ (७६) (इन्द्रो जयति न पराजयते अधिराजो राजसु राजयते। विश्वा अभिष्टिः पृतना जयत्युपसद्यो नमस्यो यथासत्॥)।

(२) तैब्रा. १।५।९।१-२.

(१) तैब्रा. २।२।१०।१-७.

**तं देवा अब्रुवन् । कस्त्वमसि । वयं वै त्वच्छ्रेयाँ᳚सः स्म इति । सोऽब्रवीत् । कस्त्वमसि वयं वै त्वच्छ्रेयाँ᳚सः स्म इति मा देवा अवोचन्निति ॥**

देवसृष्टिमध्येऽवस्थितस्येन्द्रस्य देवताधिपतित्वमुच्यते । तदर्थमाख्यायिकामाह— प्रजापतिरिति । प्रजापतिः देवान् सृष्ट्वा तेषां देवानां मध्ये आनुजावरमिन्द्रमसृजत । यथा भ्रातॄणां मध्येऽनुजः पश्चाज्जातः अवरो निकृष्टः तद्वदयमित्यनुजावरः । आनुजावरशब्दस्यापि स एवार्थः । सृष्टं तमिन्द्रं देवलोके प्रेषितवान् । हे इन्द्र, स्वर्गं गच्छ, एतेषां मया सृष्टानामधिपतिर्भव । प्रेषितमिन्द्रं देवाः पृच्छां कृतवन्तः । प्रजापतिनाऽहं प्रेषितोऽस्मीत्युत्तरे दत्ते ते देवा अब्रुवन्— वयं वै त्वच्छ्रेयांसः स्मेति (?) त्वया कल्याणयुक्ता भवेमेति । तदानीमेवेन्द्रः परावृत्य प्रजापतिसमीपं गतवान् । प्रजापतिना पृष्टे सति स इन्द्रोऽब्रवीत् । कस्त्वमसि वयं वै त्वच्छ्रेयांसः स्मेति ( ? ) मा मां देवा अवोचन् अब्रुवन्निति । तैब्रासा.

**अथ वा इदं तर्हि प्रजापतौ हर आसीत् । यदस्मिन्नादित्ये । तदेनमब्रवीत् । एतन्मे प्रयच्छ । अथाहमेतेषां देवानामधिपतिर्भविष्यामीति । कोऽहँ᳚ स्यामित्यब्रवीत् । एतत्प्रदायेति । एतत्स्या इत्यब्रवीत् । यदेतद्ब्रवीषीति । को ह वै नाम प्रजापतिः । य एवं वेद । विदुरेनं नाम्ना । तदस्मै रुक्मं कृत्वा प्रत्यमुञ्चत् । ततो वा इन्द्रो देवानामधिपतिरभवत् । य एवं वेद । अधिपतिरेव समानानां भवति ॥**

कनामवेत्तुरिन्द्राधिपत्यवेत्तुश्चाऽऽख्यायिकापुरःसरं वेदनफलं दर्शयति—अथेति । अथ प्रजापतेरग्रे स्वकीयतिरस्करणादूर्ध्वमेवं वृत्तान्त आसीत् । यदिदमिदानीमस्मिन्नादित्ये संतापकं तेजो दृश्यते तदिदं हरस्तस्मिन् काले प्रजापतावासीत् । यादृश आदित्योऽन्धकारादिभर्त्सने समर्थस्तथा प्रजापतिरपि दुष्टशिक्षायां समर्थ आसीत् । तत्तेज उद्दिश्येन्द्र एनं प्रजापतिमब्रवीत्— हे प्रजापते, एतत्तेजो मह्यं प्रयच्छ । अथाहं तेजस्वी सन्नेतेषां देवानामधिपतिर्भविष्यामीति । ततः प्रजापतिरिदमब्रवीत् । एतत्तेजस्तुभ्यं प्रदाकोऽहं स्याम्, अक्षमं मां को वा गणयेदित्यभिप्रायः । अथेन्द्रः प्रजापतिं प्रत्यब्रवीत्कोऽहमित्यत्र क इत्यनेन शब्देन यदेतद्ब्रवीषीत्येतदेव त्वम् । अत्र यदेतदिन्द्रेणोक्तं तदेतद्युक्तम्, क इत्येतस्य प्रजापतिनामत्वात् । अत्र किंशब्दः कशब्दश्चेति मकारान्ताकारान्तौ द्वौ शब्दौ । तयोरुभयोरपि पुंलिङ्गैकवचनं क इत्येवं रूपं ( वा ब्रूते ? ) । अकारान्तस्तु प्रजापतिवाचकः । तत्र मकारान्तमभिप्रेत्य प्रजापतिः प्रायुङ्क्त । तेजोबलादेव प्राणिनामपि गौरवम् । तस्मिंश्च तुभ्यं दत्ते सति प्रजापतित्वगौरवस्य गतत्वात् को नामाहं स्यामिति प्रजापतिप्रश्नः । न कोऽहं स्यामिति, प्रजापतित्वमेव विनश्यतीत्याक्षेपः । इन्द्रस्तु शब्दच्छलादकारान्तत्वमाश्रित्य प्रजापतिरहं स्यामिति यदेतद्ब्रूषे तदेतत्स्याः, प्रजापतिरेव भवेत्यर्थः । नहि तेजोनिमित्तं तव प्रजापतित्वं प्रजाजनकत्वम्, तेजसोऽनुपादानत्वात्, यतोऽतेजसोऽपि प्रजास्रष्टृत्वात् । किंतु स्वाभाविकम् । अतस्तेजसि दत्ते तव स्वभावो नापगच्छतीत्यब्रवीत् । य एवं प्रजापतेः क इति नाम वेद एनं सर्वेऽपि नाम्ना विदुः, प्रख्यातो भवतीत्यर्थः । ततः प्रजापतिस्तत्तेजो रुक्मं पट्टाख्यमाभरणं कृत्वा प्रत्यमुञ्चत्, ललाटे बबन्धेत्यर्थः । ततः पट्टबन्धनादिन्द्रो देवानामधिपतिरभवत् । तदेतदाधिपत्यं विद्वान् पुरुषः समानानां पुरुषाणां स्वयमधिपतिर्भवति ।

तैब्रासा.

**सोऽमन्यत । किं किं वा अकरमिति । स चन्द्रं म आहरेति प्रालपत् । तच्चन्द्रमसश्चन्द्रमस्त्वम् । य एवं वेद । चन्द्रवानेव भवति ॥**

अथेन्द्रं बहुधा स्तोतुमादौ तावत्तदुपयुक्तं चन्द्रमःशब्दस्य निर्वचनं दर्शयति— स इति । स प्रजापतिरेवममन्यत । देवाधिपत्ये स्थापितस्येन्द्रस्यापेक्षितं कार्यं किं किं महत्कार्यं यन्मया कृतं न पर्याप्तं पुनरपि करिष्यामीत्यभिप्रायः । तथाविधं प्रजापतिं दृष्ट्वा स इन्द्रः ' चन्द्रं आल्हादकं तेजो मदर्थमाहर ' इत्येवं बालवत्प्रलापं कृतवान् । तत आल्हादवाचिचन्द्रशब्दोच्चारणात् स्ववाच्यस्मच्छब्दोच्चारणाच्च तदक्षरसदृशं चन्द्रमा इति नाम संपन्नम् । चन्द्रं

आल्हादकरं तेजो मीयतेऽत्रेति चन्द्रमाः । एवं वेदिताऽप्याल्हादवानेव भवति । तैब्रासा.

**तं देवा अब्रुवन् । सुवीर्यो मर्या (? ऽ मर्यो) यथा गोपायत इति । तत्सूर्यस्य सूर्यत्वम् । य एवं वेद । नैनं दभ्नोति ॥**

अथ सूर्यनामनिर्वचनं दर्शयति—तमिति । दुष्टशिक्षणक्षमेण सौर्यतेजसा शिष्टपरिपालनक्षमेण चान्द्रतेजसा च युक्तमिन्द्रं दृष्ट्वा देवाः परस्परमिदमब्रुवन् । हे अमर्याः मरणरहिता देवाः, शोभनवीर्योपेतोऽयमिन्द्रोऽस्मान् यथा गोपायते, सम्यग्रक्षितुं प्रभवतीत्यर्थः । ततः सुवीर्यशब्दाक्षरसादृश्यात् सूर्यनाम संपन्नम् । तन्नाम वेदिनं पुरुषं वैरी न हिनस्ति । तैब्रासा.

**कश्चनास्मिन्वा इदमिन्द्रियं प्रत्यस्थादिति । तदिन्द्रस्येन्द्रत्वम् । य एवं वेद । इन्द्रियाव्येव भवति ॥**

इन्द्रशब्दनिर्वचनं दर्शयति— क इति । अस्मिन्नधिपतौ स्थितमिन्द्रियं सामर्थ्यं कश्च कोऽपि न प्रत्यस्थात् प्रत्यवस्थातुं निराकर्तुं न शक्नोतीति देवाः परस्परमूचुः । तत्रेदमिन्द्रियमित्यक्षरसाम्यादिन्द्रनाम संपन्नम् । तन्नामाभिज्ञः सामर्थ्यातिशयवान् भवति । तैब्रासा.

**अयं वा इदं परमोऽभूदिति । तत्परमेष्ठिनः परमेष्ठित्वम् । य एवं वेद । परमामेव काष्ठां गच्छति ॥**

परमेष्ठिनामनिर्वचनं दर्शयति— अयमिति । परमः सर्वोत्तमः प्रजापतिरेवेदमिन्द्ररूपोऽभूदिति देवा अब्रुवन् । तस्मात्परमे स्थित इत्यक्षरसाम्यात् परमेष्ठिनाम संपन्नम् । एतन्नामवेदिता ऐश्वर्यस्य काष्ठां प्राप्नोति । तैब्रासा.

**तं देवाः समन्तं पर्यविशन् । वसवः पुरस्तात् । रुद्रा दक्षिणतः । आदित्याः पश्चात् । विश्वे देवा उत्तरतः । अङ्गिरसः प्रत्यञ्चम् । साध्याः पराञ्चम् । य एवं वेद । उपैनं समानाः संविशन्ति ॥**

अथेन्द्रस्य सर्वदेवसेव्यत्वं दर्शयति— तमिति । सभायामुपविष्टं तमिन्द्रं देवाः सर्वतः परिवेष्ट्यासेवन्त । वस्वादयो गणाश्चतसृषु दिक्षु व्यवस्थिता उपविष्टाः । अङ्गिरःप्रभृतयो महर्षयः क्वचिदप्युपवेशनमकृत्वा यदा यन्मुखमिन्द्रं प्रत्यञ्चं संमुखं कृत्वा सेवन्ते । साध्याख्या देवविशेषास्तमिन्द्रं पराञ्चं विमुखं कृत्वा पृष्ठतः कृत्वा सेवन्ते । एवं वेदितारमेनं पुरुषं समानाः सर्वे पुरुषा उपेत्य समीप उपविश्य सेवन्ते । तैब्रासा.

**स प्रजापतिरेव भूत्वा प्रजा आवयत् । ता अस्मै नातिष्ठन्तान्नाद्याय । ता मुखं पुरस्तात् पश्यन्तीः । दक्षिणतः पर्यायन् । स दक्षिणतः पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः । पश्चात्पर्यायन् । स पश्चात्पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः । मुखं पश्चात् । उत्तरतः पर्यायन् । स उत्तरतः पर्यवर्तयत । ता मुखं पुरस्तात्पश्यन्तीः । मुखं दक्षिणतः । मुखं पश्चात् । मुखमुत्तरतः । ऊर्ध्वा उदायन् । स उपरिष्टान्न्यवर्तयत । ताः सर्वतोमुखो भूत्वाऽऽवयत् । ततो वै तस्मै प्रजा अतिष्ठन्तान्नाद्याय ॥**

अथेन्द्रस्य राजनीत्या प्रजाभ्यः संपादनप्रकारं दर्शयति—स इति । स इन्द्रः स्वयं प्रजापतिरेव प्रजापतिसमानसामर्थ्ययुक्त एव भूत्वा ताः प्रजा आवयत् स्वाधीना अकरोत्, स्वस्वोचितं करं दातुमाज्ञापितवानित्यर्थः । ताः सर्वाः प्रजा अस्मा अस्येन्द्रस्यान्नाद्याय नातिष्ठन्त, अन्नभोगकरं दातुं नाङ्गीकृतवन्त इत्यर्थः । तास्तथाविधाः पूर्वस्यां दिशि वर्तमाना इन्द्रस्य मुखं मुख्यं कंचिदिन्द्रप्रेषितं करस्वीकारक्षमं पूर्वस्यां दिशि पश्यन्त्यस्ततः पलाय्य दक्षिणस्यां दिशि पर्यायन् गताः । ततः स इन्द्रस्तदवगत्य स्वमुखसमानं प्रबलं पुरुषं दक्षिणस्यां दिशि प्रेरितवान् । ततस्ताः प्रजा दिग्द्वयेऽपि मुखं पश्यन्त्यः पश्चिमां दिशं प्राविशन् । एवं पश्चिमोत्तरोर्ध्वदिक्षु योज्यम् । ततः स इन्द्रः पञ्चस्वपि दिक्षु स्वकार्ये भृत्यानवस्थाप्य तद्द्वारा स्वयं सर्वतोमुखो भूत्वा सर्वाः प्रजा वशीकृतवान् । ततः प्रजाः पलायितुं दिगन्तरमलभमाना अस्येन्द्रस्यान्नाद्यरूपं करं दातुमङ्गीकृतवन्तः । तैब्रासा.

य एवं विद्वान्परि च वर्तयते नि च। प्रजापतिरेव भूत्वा प्रजा अत्ति। तिष्ठन्तेऽस्मै प्रजा अन्नाद्याय। अन्नाद एव भवति ॥

एतद्विज्ञानं प्रशंसति– य इति। यः पुमानेवमिन्द्रस्य परिपालनप्रकारं विद्वान् परिवर्तयते निवर्तयते च शिक्षकस्य प्रेरणं परिवर्तनं शिक्षिताभ्यः प्रजाभ्यः स्वपुरुषनिवारणं निवर्तनं तदुभयकुशलः स्वयं प्रजानां पालको भूत्वा सर्वाः प्रजा अत्ति, अनुभवतीत्यर्थः। ताश्च प्रजा अस्मै करं दातुमभ्युपगच्छन्ति। असावप्यसंशयं भोगसंपन्नो भवति। तैब्रासा.

राजासन्द्यां इन्द्रस्याभिषेकः

[1]ता एता देवता सृष्टा स्तोमा छन्दांस्यृतवो ग्रहाः। पृथगेवैषामिमा श्रियो दीप्यमाना अतिष्ठन्, नान्योन्यस्य श्रेष्ठताया अतिष्ठन्त। तेऽब्रुवन्– न वा अन्योऽन्यस्य श्रेष्ठतायै तिष्ठामहै। एत तमिच्छामहै यो न ईशाता इति। ते प्रजापतिमेव जनयितारमेत्याब्रुवन्– न वा अन्योऽन्यस्य श्रेष्ठतायै तिष्ठामहै। तन्नः सृजस्व यो न ईशाता इति। स प्रजापतिरब्रवीत्– एतावद्वाव त्वयिस्मिंस्तेज इन्द्रियं वीर्यमभूद्यद्युष्मानसृक्षि। ते वै संवत्सरं तप्यध्वम्। ते मा संवत्सरं तप्त्वोपसमेत यदेकोऽधिगच्छति यदेको यदेक इति। ते संवत्सरमतप्यन्त। तं संवत्सरं तप्त्वोपसमायन्। यदेकोऽध्यगच्छद्यदेको यदेकस्तदस्य मन्यौ योनावसिञ्चन्। तत इन्द्रः संभवत्। तदेषाऽभ्यनूच्यते– 'अश्वादियायेति यद्वदन्त्योजसो जातमुत मन्य एनम्। मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद ॥' इति ॥

सोऽजायत। तं जातमुपामदत्– 'तेजोऽजनीन्द्रियमजनि वीर्यमजनि ब्रह्माजनि क्षत्रमजनि सप्तानां पशूनां यन्ताजनि सप्तानां दिशां धर्ताजनि जातोऽजनि जनिताजनि जानित्रिरजनि ॥' इति। अपि ह्यात्मानमुपामादयज्जानित्रिरित्युवाच। उपमाद्यो ह भवति य एवं वेद। तस्मै जातायैतां राजासन्दीं न्यदधुः। तस्यामेनमभ्यषिञ्चन्त– वसवो राज्याय रुद्रा वैराज्यायादित्या स्वाराज्याय विश्वे देवा साम्राज्याय मरुतः सार्ववश्याय साध्याश्चाप्त्याश्च पारमेष्ठ्याय ॥

(१) जैब्रा. ३।३६४, ३६७–३६८.

---

## आदित्याः

आदित्याः मित्र-वरुण-दक्षांश-भगार्यमणः राजानः इन्द्रश्च, तेषां स्थावरजङ्गमात्मकस्य विश्वस्य बहुराजकं शासनम्, त्रैलोक्यधारिणस्ते साध्वसाधुद्रष्टारः, अदितिः राजमाता

[1]इमा गिर आदित्येभ्यो घृतस्नूः
सनाद्राजभ्यो जुह्वा जुहोमि।
शृणोतु मित्रो अर्यमा भगो नः
स्तुविजातो वरुणो दक्षो अंशः ॥

आदित्येभ्यः अदितेः पुत्रेभ्यः राजभ्यः राजमानेभ्यः ईश्वरेभ्यो वा मित्रादिभ्यः घृतस्नूः घृतप्रस्राविणीर्घृतं क्षरन्तीः इमा गिरः स्तुतिलक्षणा वाचः सनात् सर्वदा जुह्वा। वाङ्नामैतत्। वागिन्द्रियेण जुहोमि प्रयच्छामि करोमीति यावत्। यद्वा, जुहूस्थानीयेन घृतं क्षरन्ति वाग्रूपाणि हवींषि जुहोमि आदित्यानुद्दिश्य त्यजामि। मन्त्राणां पयोघृतादिक्षरणहेतुत्वं च 'यदृचोऽधीते पयसः कुल्या अस्य' (तैआ. २।१०) इत्यादिना तैत्तिरीये स्पष्टमाम्नातम्। नः अस्मदीयास्ता गिरः मित्रादयः प्रत्येकं शृणोतु। ते च तैत्तिरीये 'अष्टौ पुत्रासो अदितेः' इत्युपक्रम्य स्पष्टमनुक्रान्ताः– 'मित्रश्च वरुणश्च धाता चार्यमा च अंशुश्च भगश्च इन्द्रश्च विवस्वांश्चेत्येते' (तैआ. १।१३।३) इति। मित्रः प्रमीतेस्त्रायकः। यद्वा, सर्वेषां स्निग्धः। अरीन् यच्छति नियच्छति इति अर्यमा। भगः भजनीयो देवः। तुवीति बहुनाम। बहुषु देशेषु अनुग्रहार्थं प्रादुर्भूतः।

(१) ऋसं. २।२७।१; कासं. ११।१२ (४७) नस्तु (मे तु); शुसं. ३४।५४; आश्रौ. ३।८; नि. १२।३६.

वरुणविशेषणमेतत् । पापस्य निवारणात् वरुणः । दक्षः समर्थः । एतच्च अंशस्य विशेषणम् । एते प्रत्येकं शृण्वन्तु । ऋसा.

[1]इमं स्तोमं सक्रतवो मे अद्य
मित्रो अर्यमा वरुणो जुषन्त ।
आदित्यासः शुचयो धारपूता
अवृजिना अनवद्या अरिष्टाः ॥

इमं मे अस्मदीयं स्तोमं स्तोत्रं सक्रतवः समानकर्माणः समानप्रज्ञा वा मित्रादयः अद्य इदानीं जुषन्त जुषन्तां सेवन्ताम् । कीदृशास्ते ? आदित्यासः अदितेः पुत्राः शुचयः दीप्यमानाः धारपूताः उदकधाराभिरिव पूताः, निर्मला इत्यर्थः । अवृजिनाः । 'वृजी वर्जने'। अवर्जितारः सर्वानुग्राहका इत्यर्थः । अनवद्याः अवद्येन गर्ह्येण पापेन रहिताः अरिष्टाः केनापि अहिंसिताः । ऋसा.

[2]त आदित्यास उरवो गभीरा
अदब्धासो दिप्सन्तो भूर्यक्षाः ।
अन्तः पश्यन्ति वृजिनोत साधु
सर्वं राजभ्यः परमा चिदन्ति ॥

ते आदित्यासः अदितेः पुत्राः उरवः महान्तः गभीराः गाम्भीर्योपेताः अदब्धासः शत्रुभिरहिंसिताः सन्तः दिप्सन्तः शत्रून् दम्भितुं हिंसितुमिच्छन्तः । तथा भूर्यक्षाः भूरीणि बहूनि अक्षीणि चक्षूंषि येषां ते तथोक्ताः बहुतेजसो वा । एवंभूता आदित्याः अन्तः मध्ये प्राणिनां हृदि प्रेरकतया वर्तमानाः सन्तः वृजिना वृजिनानि पापानि उत अपि च साधु साधूनि पुण्यानि च प्राणिभिः कृतानि पश्यन्ति जानन्ति । परमा चित् परमाणि दूरदेशावस्थितान्यपि सर्वे सर्वाणि दृश्यमानानि राजभ्यः राज्ञामीश्वराणामादित्यानां अन्ति अन्तिके समीपे वर्तते इति शेषः । ऋसा.

(१) ऋसं॰ २।२७।२; आश्रौ. ३।८.

(२) ऋसं॰ २।२७।३; आश्रौ. ३।८.

[1]धारयन्त आदित्यासो जगत्स्था
देवा विश्वस्य भुवनस्य गोपाः ।
दीर्घाधियो रक्षमाणा असुर्य-
मृतावानश्चयमाना ऋणानि ॥

जगत् जङ्गमं स्थाः स्थावरं च । एतदुभयविधं भूतजातं धारयन्तः अवस्थापयन्तः देवाः दानादिगुणयुक्ताः विश्वस्य भुवनस्य सर्वस्य लोकस्य गोपाः गोपयितारो रक्षकाः दीर्घाधियः दीर्घाणि धियः कर्माणि ज्ञानानि वा येषां तादृशाः । असुर्यम् । असवः प्राणाः । तेन च तद्धेतुभूता आपो लक्ष्यन्ते । अपां तद्धेतुत्वं च छान्दोग्ये स्पष्टमाम्नातम्– 'आपोमयः प्राणः' (छाउ. ६।५।४) इति । असुमुदकं ददातीत्यसुरो मेघः । तत्र भवं मेघान्तर्वर्तमानमुदकं रक्षमाणाः । तत्तत्काले वृष्ट्युत्पादनाय रक्षन्तः । ऋतावानः सत्यवन्तो यज्ञवन्तो वा । ऋणानि स्तोतृभिः अन्येभ्यः प्रदेयानि चयमानाः अपगमयन्तः । एवंगुणविशिष्टा महानुभावाः अस्मदधीना भवन्त्विति शेषः । ऋसा.

[2]विद्यामादित्या अवसो वो अस्य
यदर्यमन् भय आ चिन्मयोभु ।
युष्माकं मित्रावरुणा प्रणीतौ
परि श्वभ्रेव दुरितानि वृज्याम् ॥

हे आदित्याः अदितेः पुत्राः, वः युष्माकं अस्य अवसः । इदं रक्षणं विद्यां लभेय । भये राक्षसादिभ्य आगते सति यत् युष्मदीयं रक्षणम् । चिच्छब्दश्चार्थे । मयोभु मयसः सुखस्य भावयितृ च तदिदं लभेयेत्यन्वयः । हे अर्यमन्, हे मित्रावरुणौ, युष्माकं प्रणीतौ अस्मद्विषये प्रकृष्टे नयने सति श्वभ्रेव श्वभ्राणीव स्थातुमयोग्यानि गर्तवन्ति स्थलानीव दुरितानि पापानि परि वृज्यां परित्यजेयम् । ऋसा.

(१) ऋसं. २।२७।४; तैसं॰ २।१।११।४; कासं. ११।१२ (४५); मैसं. ४।१२।१ (७); आश्रौ. ४।२.

(२) ऋसं. २।२७।५–७.

सुगो हि वो अर्यमन्मित्र पन्था
अनृक्षरो वरुण साधुरस्ति ।
तेनादित्या अधि वोचता नो
यच्छता नो दुष्परिहन्तु शर्म ॥

हे अर्यमन् मित्र, वरुण, वः युष्माकं सुगः सुखेन गन्तव्यः अनृक्षरः । 'ऋक्षरः कण्टक ऋच्छतेः' इति । तद्रहितः साधुः साधकः शोभनो वा । एवंगुणविशिष्टः पन्थाः मार्गः अस्ति विद्यते खलु । अतः तेन पथा अस्मान् शोभनं नयतेति शेषः । हे आदित्याः, नः अस्माकं अधि वोचत अधिवचनं पक्षपातेन वचनं कुरुत । अपि च नः अस्मभ्यं दुष्परिहन्तु परिहन्तुं विनाशयितुमशक्यं शर्म सुखं यच्छत दत्त । ऋसा.

पिपर्तु नो अदिती राजपुत्रा-
ऽति द्वेषांस्यर्यमा सुगेभिः ।
बृहन्मित्रस्य वरुणस्य शर्मोप
स्याम पुरुवीरा अरिष्टाः ॥

राजपुत्रा राजानो राजमाना मित्रादयः पुत्रा यस्यास्तादृशी अदितिः अदीना अखण्डनीया वा देवी नः अस्मान् द्वेषांसि द्वेष्टॄणि रक्षांसि अति पिपर्तु अतिपारयतु । अतिक्रम्य तद्रहितं देशं प्रापयत्वित्यर्थः । अर्यमा च सुगेभिः सुष्ठु गन्तव्यैर्मार्गैरस्मान् पारयतु । अपि च वयं पुरुवीराः बहुभिर्वीरैः पुत्रादिभिरुपेताः अरिष्टाः केनाप्यहिंसिताश्च सन्तः मित्रस्य वरुणस्य च बृहत् परिवृढं शर्म सुखं उप स्याम उपगता भवेम । ऋसा.

[1]तिस्रो भूमीर्धारयन् त्रीँरुत द्यू-
न्त्रीणि व्रता विदथे अन्तरेषाम् ।
ऋतेनाऽऽदित्या महि वो महित्वं
तदर्यमन्वरुण मित्र चारु ॥

तिस्रो भूमीः । अत्र भूमिशब्दो लोकत्रये वर्तते । 'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्' इत्यत्र यथा पृथिवीशब्दः । भूम्यन्तरिक्षस्वर्गांस्त्रीन् लोकान् आदित्याः धारयन् वृष्टिप्रदानादिना धारयन्ति । उत अपि च द्यून् दीप्तान् तत उपरितनान् महरादिकानपि त्रीन् लोकान् धारयन्ति । यद्वा, दीप्तान् अग्निं सूर्यं वायुं च धारयन्ति । अपि च एषां आदित्यानां विदथे यज्ञे अन्तः मध्ये त्रीणि व्रता सवनत्रयनिष्पाद्यानि त्रीणि कर्माणि सन्ति । यद्वा, एषां लोकानामन्तर्मध्ये विदथे यज्ञे निमित्तभूते सति एषामादित्यानां त्रीणि कर्माणि रसादानधारणविसर्जनलक्षणानि सन्ति । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । हे आदित्याः, ऋतेन सत्येन यज्ञेन वा महि महत् प्रभूतं वः युष्माकं महित्वं महत्त्वं यन्महाभाग्यं हे अर्यमन्, वरुण, मित्र, तत् महाभाग्यं चारु शोभनम् । सर्वोत्कृष्टमित्यर्थः । ऋसा.

[2]त्री रोचना दिव्या धारयन्त
हिरण्ययाः शुचयो धारपूताः ।
अस्वप्नजो अनिमिषा अदब्धा
उरुशंसा ऋजवे मर्त्याय ॥

त्री रोचना त्रीणि रोचनानि रोचमानाग्न्यादीनि तेजांसि दिव्या दिव्यानि दिवि भवानि धारयन्त आदित्या अवास्थापयन् । किमर्थम् ? ऋजवे ऋजीकाय स्तोत्राणां मर्त्याय मनुष्याय भोगसिद्ध्यर्थमिति यावत् । कीदृशा आदित्याः ? हिरण्ययाः हिरण्मयाः हिरण्यालङ्कृतसर्वाङ्गाः । यद्वा, हितरमणीयवेषाः । शुचयः दीप्यमानाः धारपूताः उदकधारया क्षालिता इव निर्मलाः । अस्वप्नजः असंजातस्वप्नाः । अपर आह । अस्वप्नजः अस्वपन्तो विगतनिद्राः । अनिमिषाः निमेषरहिताः । अदब्धाः असुरादिभिरहिंसिताः उरुशंसाः उरुभिर्बहुभिः शंसनीयाः स्तोतव्याः । एवंगुणविशिष्टा अधारयन्तेत्यन्वयः । ऋसा.

[3]त्वं विश्वेषां वरुणासि राजा
ये च देवा असुर ये च मर्ताः ।
शतं नो रास्व शरदो विचक्षे-
ऽश्यामाऽऽयूंषि सुधितानि पूर्वा ॥

(१) ऋसं. २।२७।८; तैसं. २।१।११।५; काठसं. ११।१२ (४६); मैसं. ४।१४।१४ (२०१); आश्रौ. ३।८,

(१) ऋसं. २।२७।९; मैसं. ४।१२।१ (८) अस्वप्नजो अनिमिषा (अवृजिना अनवद्या).
(२) ऋसं. २।२७।१०.

हे असुर शत्रूणां क्षेपक वरुण, त्वं विश्वेषां सर्वेषां राजा असि । केषाम् ? ये च देवा देवजनाः ये च मर्ताः मरणधर्माणो मनुष्याः तेषामित्यर्थः । अतस्त्वं नः अस्मभ्यं शतं शरदः शतसंख्याकान् संवत्सरान् विचक्षे विशेषेण दर्शनाय रास्व प्रयच्छ । वयं च पूर्वा पूर्वैर्देवैः सुधितानि सुष्ठु हितानि शतसंवत्सरलक्षणानि आयूंषि अश्याम व्याप्नुयाम । ऋसा.

[1]न दक्षिणा वि चिकिते न सव्या
न प्राचीनमादित्या नोत पश्चा ।
पाक्या चिद्वसवो धीर्या चि-
द्युष्मानीतो अभयं ज्योतिरश्याम् ॥

हे आदित्याः, दक्षिणा दक्षिणो भागः न वि चिकिते मया न विज्ञायते । सव्या सव्यो वामभागोऽपि न ज्ञायते । तथा प्राचीनं पुरस्तादपि न ज्ञायते । उत अपि च पश्चा पश्चात् पृष्ठभागोऽपि न ज्ञायते । नैशेन तमसा आवृतत्वात् आन्तरादज्ञानाद्वा । किं बहुना । पाक्या चित् पाक्यः पक्तव्यः अपरिपक्वज्ञानोऽपि । धीर्या चित् धीरैं नेतव्यत्वेन भवो धीर्यः कातरः, कातरोऽपि । हे वसवः वासयितार आदित्याः, युष्मानीतः युष्माभिर्नीतः शोभनेन मार्गेण प्रापितः सन् अभयं भयरहितं ज्योतिः सौरं तेजः आन्तरं वा ज्ञानात्मकं अश्यां प्राप्नुयाम् । ऋसा.

[2]यो राजभ्य ऋतनिभ्यो ददाश
यं वर्धयन्ति पुष्टयश्च नित्याः ।
स रेवान्याति प्रथमो रथेन
वसुदावा विदथेषु प्रशस्तः ॥

यः यजमानः राजभ्यः राजमानेभ्यः ऋतनिभ्यः ऋतस्य यज्ञस्य सत्यस्य वा नेतृभ्यः आदित्येभ्यः ददाश चरुपुरोडाशादिकं ददाति । यं यजमानं पुष्टयः पोषकाः नित्याः शाश्वता आदित्याः च वर्धयन्ति । सः यजमानः रेवान् धनवान् प्रथमः प्रथितः प्रख्यातः वसुदावा वसूनां धनानां दाता सन् प्रशस्तः सर्वैः प्रशस्यमानः विदथेषु वेद्येषु लब्धव्येषु गृहेषु रथेन वाहनेन याति गच्छति । ऋसा.

[1]शुचिरपः सूयवसा अदब्ध
उप क्षेति वृद्धवयाः सुवीरः ।
नकिष्टं घ्नन्त्यन्तितो न दूराद्य
आदित्यानां भवति प्रणीतौ ॥

स यजमानः शुचिः दीप्यमानः शुद्धो वा अदब्धः सपत्नैरबाधितः वृद्धवयाः प्रभूतान्नः सुवीरः शोभनपुत्रश्च सन् सूयवसाः शोभनसस्यानि अपः वृष्टिलक्षणान्युदकानि उप क्षेति उपनिवसति । सर्वदा सुसस्यानामपां समीपे निवसतीत्यर्थः । तथा नकिः न च तं घ्नन्ति हिंसन्ति अन्तितो न अन्तिकात् समीपदेशाच्च दूरात् विप्रकृष्टाच्च देशादागता बाधकाः । यः यजमानः आदित्यानां अदितेः पुत्राणां मित्रादीनां प्रणीतौ प्रकृष्टे नयने प्रापणे भवति वर्तते स इति पूर्वत्र संबन्धः । ऋसा.

[2]अदिते मित्र वरुणोत मृळ
यद्वो वयं चकृमा कच्चिदागः ।
उर्वश्यामभयं ज्योतिरिन्द्र
मा नो दीर्घा अभि नशन्तमिस्राः ॥

उत अपि च हे अदिते, मित्र, वरुण, यूयं प्रत्येकं मृळ अस्माकमुपरि दयां कुरु, रक्षेत्यर्थः । यत् यद्यपि वयं वः युस्माकं कच्चित् किंचित् आगः अपराधं चकृम अकर्म । तथापि मृळेत्यर्थः । हे इन्द्र परमैश्वर्योपेत आदित्य, उरु विस्तीर्णं अभयं भयरहितं ज्योतिः त्वदीयं प्रकाशं ज्ञानात्मकं वा अश्याम् अहं प्राप्नुयाम् । दीर्घाः विस्तृताः तमिस्राः तमसा युक्ता निशाः । ताः नः अस्मान् मा अभि नशन् मा आभिमुख्येन प्राप्नुवन्तु । ऋसा.

उभे अस्मै पीपयतः समीची
दिवो वृष्टिं सुभगो नाम पुष्यन् ।
उभा क्षयावाजयन्याति पृत्सू-
भावर्धौ भवतः साधू अस्मै ॥

---

(१) ऋसं. २।२७।११; तैसं. २।१।११।५; मैसं. ४।१४।१४ (१९९); आश्रौ. ३।८.

(२) ऋसं. २।२७।१२.

(१) ऋसं. २।२७।१३; तैसं. २।१।११।४; मैसं. ४।१४।१४ (२०३) अदब्ध उप क्षेति (अदब्धा उपक्षयन्ति),

(२) ऋसं. २।२७।१४–१६.

'य आदित्यानां भवति प्रणीतौ' इति व्यवहितोऽप्यत्र इदंशब्देन परामृश्यते। अस्मै यजमानाय समीची संगच्छमाने उभे द्यावापृथिव्यौ पीपयतः प्याययतः कामान् वर्धयतः। स च सुभगः शोभनधनः दिवः द्युलोकादागतां वृष्टिं पुष्यन् वर्धयन् भवति। नाम इति प्रसिद्धिर्द्योत्यते। किंच, पृत्सु पृतनासु संग्रामेषु आजयन् शत्रूनाभिमुख्येनाभिभवन् उभा क्षयौ उभौ निवासौ। क्षियन्ति निवसन्त्यस्मिन्निति क्षयो निवासस्थानम्। तौ परैरनाक्रान्तं स्वकीयं निवासस्थानं आत्मनाऽपहृतं परकीयं निवासस्थानं च याति गच्छति। तथा अस्मै यजमानाय उभावर्धौ जगतो भागौ चराचरात्मकौ मर्त्यामर्त्यात्मकौ वा साधू साधकौ भवतः। ऋसा.

**या वो माया अभिद्रुहे यजत्राः**
**पाशा आदित्या रिपवे विचृत्ताः।**
**अश्वीव तां अति येषं रथेना-**
**रिष्टा उरावा शर्मन्त्स्याम॥**

हे यजत्राः यष्टव्याः आदित्याः, वः युष्माकं याः मायाः अभिद्रुहे अभितो द्रोहं कुर्वते राक्षसादये निर्मिताः ये च पाशाः रिपवे शत्रवे विचृत्ताः, प्रसारिता इत्यर्थः। तान् पाशान् मायाश्च रथेन अति येषं अतीत्य प्रयतेयम्, अतितरेयमित्यर्थः। तत्र दृष्टान्तः— अश्वीव। यथा शोभनाश्वः कश्चित् पुरुषः दुस्तरान्मार्गान् शीघ्रमतिक्रामति तद्वत्। तथा वयं अरिष्टाः शत्रुभिः अहिंसिताः सन्तः उरौ विस्तीर्णे शर्मन्। शर्मेति गृहनाम। त्वया दत्ते सुखे गृहे वा आ समन्तात् स्याम वर्तमाना भवेम। ऋसा.

मित्रावरुणौ आदित्याश्च सम्राजः (राज्ञां मण्डलम्)

**[1]इमं स्तोमं रोदसी प्र ब्रवी-**
**म्यृदूदराः शृणवन्नग्निजिह्वाः।**
**मित्रः सम्राजो वरुणो युवान**
**आदित्यासः कवयः पप्रथानाः॥**

हे रोदसी द्यावापृथिव्यौ, इमं युष्मदीयं स्तोमं स्तोत्रं प्र ब्रवीमि प्रकर्षेण वदामि। ऋदूदराः ऋदु मृदु उदरं येषां ते ऋदूदराः। यद्वा, मृदुरुदरे सोमो येषां ते ऋदूदराः। अग्निजिह्वाः। अग्निः जिह्वास्थानीयो येषां ते तथोक्ताः। सम्राजः सम्यग्दीप्यमानाः युवानः नित्यतरुणाः। यद्वा, यजमानान् अभिमतफलैर्मिश्रीकुर्वन्तः। कवयः क्रान्तदर्शिनः पप्रथानाः स्वानि स्वानि कर्माणि प्रथयन्तो मित्रादयो देवाः शृणवन् तदिदं स्तोत्रं शृण्वन्तु। ऋसा.

**[1]वयं तद्वः सम्राज आ वृणीमहे**
**पुत्रो न बहुपाय्यम्।**
**अश्याम तदादित्या जुह्वतो हवि-**
**र्येन वस्योऽनशामहै॥**

हे सम्राजः सम्यग्दीप्यमाना देवाः, पुत्रो न। एकवचनं छान्दसम्। युष्माकं पुत्रा इव स्थिताः पुत्रा यथा पितृभिः पोष्याः तद्वद्युष्माभिः पोष्या वयं बहुपाय्यं बहुभिर्भोज्यं वः युष्मत्संबन्धि तत् धनं आ वृणीमहे संभजामः। तथा हविः जुह्वतः यागं कुर्वतो वयं हे आदित्याः, तत् धनं अश्याम प्राप्नुयाम। येन धनेन वस्यः वसीयः अतिशयेन वसुमत्त्वं अनशामहै अश्नवामहै प्राप्नुमः। अश्नोतेर्लोटि व्यत्ययेन श्नम्प्रत्ययः। ऋसा.

**[2]सम्राजो ये सुवृधो यज्ञमाययु-**
**रपरिह्वृता दधिरे दिवि क्षयम्।**
**ताँ आ विवास नमसा सुवृक्तिभि-**
**र्महो आदित्याँ अदितिं स्वस्तये॥**

सम्राजः सर्वेषां राजानः स्वतेजोभिः सम्यग्राजमानाः सुवृधः सुवृद्धाः ये देवाः यज्ञमाययुः आयान्ति सोमादिहविर्भक्षणार्थम्। ततः अपरिह्वृताः कैश्चिदप्यहिंसिताः ये देवाः दिवि द्युलोके क्षयं निवासं दधिरे विदधति कुर्वन्ति। ऋषिरात्मानमाह— महः महतो गुणाधिक्येन आदित्यान् अदितेः पुत्रान् तान् प्रसिद्धान् देवान् अदितिं तेषां मातरमेतन्नामिकां च स्वस्तये अविनाशाय नमसा हवीरूपेणान्नेन सुवृक्तिभिः शोभनाभिः स्तुतिभिश्च आ विवास आभिमुख्येन परिचर। ऋसा.

---

(१) ऋसं. ३।५४।१०.

(१) ऋसं. ८।२७।२२.
(२) ऋसं. १०।६३।५.

राजासन्द्यां आदित्यस्याभिषेकः

[1]अथैषौदुम्बरी राजासन्दी । तस्यै बृहद्रथन्तरे पूर्वौ पादौ, वैरूपवैराजे अपरौ, शाकररैवते अनूच्यानि, ऋचः प्राचीनमाताना, यजूंषि तिरश्चीनम् , सामान्यास्तरणम् , वाकोवाक्यमतीरोका, श्रीरुपबर्हणम् । तस्यै प्रजापतिश्च बृहस्पतिश्च पूर्वौ पादावधारयेताम्, सोमश्च वरुणश्चापरौ । तस्यामेतमादित्यमभ्यषिञ्चन्त– वसवो राज्याय रुद्रा वैराज्यायादित्या स्वाराज्याय विश्वे देवाः साम्राज्याय मरुतः सार्ववश्याय साध्याश्चाप्त्याश्च पारमेष्ठ्याय । तन्न हैतावत्कयाचन देवतया जितं यावदादित्येन । ये हि सुता देवानामासंस्त एनमसुवत । तस्मिन् दिशो अपित्वमैच्छन्त यथा राजनि विजितिन्यपित्वमिच्छन्त एवम् । ता अब्रवीत्– प्रदानं मे प्रयच्छतेति । सेयं प्राची दिक् प्रायच्छन्मदुदयेत्यहश्च सत्यं च । मामभ्युदयेत्यूर्ध्वा दिक् प्रायच्छत् क्षत्रं च राष्ट्रं च । मामभ्यपक्रामेति दक्षिणा दिक् प्रायच्छदन्नं च रथं च । मामभ्यपक्रामेत्युदीची दिक् प्रायच्छद्रूपं च वर्णं च । समया मामयेत्यन्तरिक्षं प्रायच्छत् प्रकाशं चासंबाधं च । मामभ्यस्तमयेति प्रतीची दिक् प्रायच्छदृतं च रात्रिं च । अनु मामा तपेति पृथिवी प्रायच्छत् क्षेमं च विमोकं च । अथ हाप श्रेयसीर्मेनिरे । ताः प्रति त्वा वयमातपाम इति यात्रां च प्रयां च प्रायच्छन् । अद्भिर्हि वा एष एतदेत्यपामेवायनेन । तासामेतासामूर्ध्वाश्छायाः, प्रति हैनं तदातपन्ति । स एवमेता दिश उपाप्नोति । अस्यै प्राच्यै दिश उदेति । अभ्युदेतीमामूर्ध्वां दिशम् । षडित्थं मास एति, षडित्थ(म्) । समयान्तरिक्षमेति । अभ्यस्तमेतीमामपरां दिशम् । अन्विमां पृथिवीमातपति । तद्यथा पतिर्जाया अनुसंचरेदेवमेवैना एष एतदनुसंचरति । स ऐक्षताहमेवेदं सर्वं संवृणजा इति । स वशमेव दिव आदत्त, क्षत्रं नक्षत्राणाम्, आत्मानमन्तरिक्षस्य, रूपं वायोः, आ राज्ञां मनुष्याणां, चक्षः पशूनाम्, ऊर्जमपां, रसमोषधीनाम्, चरथं वनस्पतीनाम्, शिश्नं वयसाम्, अर्चिषमग्नेः, हृदयं पृथिव्यै, गन्धं हिरण्यस्य, स्तनयित्नुं वाचः, संगमं पितॄणां, भां चन्द्रमसः । तद्यदेतेषां भूतानामादत्त, तदादित्यस्यादित्यत्वम् । स य एतदेवं वेदैष एवादित्यो भूत्वैतस्यां राजासन्द्यामास्ते ॥

(१) जैब्रा. २।२५–२६.

---

## मित्रावरुणौ

मित्रावरुणौ ऋतेन बृहन्तं ऋतुं प्राप्तौ, अद्वेष्टारौ, ऋजुमर्त्यस्यानुग्रहकर्तारौ, सहस्रस्तम्भे सदसि आसन्नौ, सम्राजौ

[1]ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।
क्रतुं बृहन्तमाशाथे ॥

हे मित्रावरुणौ, युवां क्रतुं प्रवर्तमानमिमं सोमयागं आशाथे आनशाथे व्याप्तवन्तौ । केन निमित्तेन ? ऋतेन अवश्यंभावितया सत्येन फलेन, अस्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवाम् ? ऋतावृधौ । ‘ ऋतमित्युदकनाम ’ (नि. २।२५) ‘ सत्यं वा यज्ञं वा ’ (नि. ४।१९) इति यास्कः । उदकादीनामन्यतमस्य वर्धयितारौ । अत एव ऋतस्पृशा उदकादीन् स्पृशन्तौ । कीदृशं क्रतुम् ? बृहन्तं अङ्गैरुपाङ्गैश्च अतिप्रौढम् । ऋसा.

[2]कवी नो मित्रावरुणा तुविजाता उरुक्षया ।
दक्षं दधाते अपसम् ॥

मित्रावरुणावेतौ देवौ नः अस्माकं दक्षं बलं अपसं कर्म च दधाते पोषयतः । कीदृशौ ? कवी मेधाविनौ । तुविजातौ बहूनामुपकारकतया समुत्पन्नौ । उरुक्षया बहुनिवासौ । ‘ विप्रः धीरः ’ इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु ‘ कविः मनीषी ’ ( निघण्टुः ३।१५।१० ) इति

(१) ऋसं. १।२।८; सासं. २।४।२ (८४८).
(२) ऋसं. १।२।९ ; सासं. २।४।२ (८४९).

पठितम्। 'उरु तुवि' (निघण्टुः ३।१।१,२) इत्येतौ शब्दौ द्वादशसु बहुनामसु पठितौ। 'ओजः पाजः' इत्यादिषु अष्टाविंशतिसंख्याकेषु बलनामसु 'दक्षः वीळु' (निघण्टुः २।९।१३) इति पठितम्। अपःशब्दः षड्विंशतिसंख्याकेषु कर्मनामसु पठितः। (निघण्टुः २।१।१)। ऋसा.

[1]अयं वां मित्रावरुणा सुतः सोम ऋतावृधा।
ममेदिह श्रुतं हवम्॥

मित्रावरुणा हे मित्रावरुणौ, वां युवाभ्यां अयं सोमः सुतः अभिषुतः। ऋतावृधा हे सत्यस्य यज्ञस्य वा वर्धकौ, ममेत् ममैव हवं आह्वानं इह अस्मिन् यज्ञे श्रुतं शृणुतम्। ऋसा.

[2]राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे।
सहस्रस्थूण आसाते॥

राजानौ ईश्वरौ दीप्यमानौ वा अनभिद्रुहा अनभिद्रोग्धारौ यौ मित्रावरुणौ ध्रुवे स्थिरे उत्तमे उत्कृष्टे सहस्रस्थूणे सदसि स्थाने आसाते उपविशतः तावागच्छतमिति शेषः। ऋसा.

[3]ता सम्राजा घृतासुती आदित्या दानुनस्पती।
सचेते अनवह्वरम्॥

सम्राजौ आज्ञयैव सर्वेषां शास्तारौ घृतासुती घृतान्नौ 'तद्वां महित्वं घृतान्नावस्तु' (ऋसं. ६।६७।८) इति मन्त्रान्तरात्। आदित्या अदितेः पुत्रौ दानुनस्पती दानुनः दानस्य देयस्य वा धनस्य पती स्वामिनौ। ता तौ मित्रावरुणौ अनवह्वरं अकुटिलं यजमानं सचेते सेवेते। ऋसा.

(१) ऋसं. २।४१।४; सासं. २।५।३ (९१०); तैसं. १।४।५।१; कासं. ४।२ (१०); मैसं. १।३।७ (२४); शुसं. ७।९; ताब्रा. १२।८।३; शब्रा. ४।१।४।७; आश्रौ. ५।५, ७।२; आपश्रौ. १२।१४।१२; माश्रौ. २।३।५।६.

(२) ऋसं. २।४१।५; सासं. २।५।३ (९११) आसाते (आशाते).

(३) ऋसं. २।४१।६; सासं. २।५।३ (९१२).

मित्रावरुणौ राजानौ व्रतरक्षकौ सत्यधर्माणौ ऋतगोपौ सम्राजौ वृष्ट्या पृथ्वीधारकौ

[1]ऋतेन ऋतमपिहितं ध्रुवं वां
सूर्यस्य यत्र विमुचन्त्यश्वान्।
दश शता सह तस्थुस्तदेकं
देवानां श्रेष्ठं वपुषामपश्यम्॥

सूर्यस्य ऋतं सत्यभूतं मण्डलं ऋतेन उदकेन अपिहितं आच्छादितं ध्रुवं शाश्वतमपश्यमिति संबन्धः। यत्र वां युवाभ्यां स्थितिस्तदित्यर्थः। सूर्यमण्डले मित्रावरुणयोः स्थितिः 'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः' (ऋसं. १।११५।१) 'उद्वां चक्षुर्वरुण सुप्रतीकं देवयोः' (ऋसं. ७।६१।१) इति 'चक्षुर्मित्रस्य वरुणस्य' (ऋसं. ७।६३।१) इत्यादिषु प्रसिद्धा। यत्र यस्मिन् मण्डले स्थितानश्वान् विमुञ्चन्ति विमोचयन्ति स्तोतारः, मन्देहादिभिर्निरुद्धानित्यर्थः। अथवा शीघ्रधावनाय स्तुत्या प्रेरयन्ति। यस्मिंश्च मण्डले दश शता शतानि सहस्रसंख्याका रश्मयः तस्थुः तिष्ठन्ति तादृशं देवानां वपुषां वपुष्मतां तेजोवतामग्न्यादीनां श्रेष्ठं प्रशस्यम्। मत्वर्थलक्षणा अथवा व्यधिकरणषष्ठी। देवानां वपुषां शरीराणां श्रेष्ठम्। मण्डलं हि सूर्यस्य वपुःस्थानीयम्। तत् मण्डलं अपश्यम्। अथवा वां युवयोर्मध्ये सूर्यस्य मण्डलमपश्यमिति व्याख्येयं 'मैत्रं वा अहः' (तैब्रा. १।७।१०।१) इति श्रुतेः मित्रस्यैव सूर्यत्वात् इत्याशयेन। ऋसा.

[2]तत्सु वां मित्रावरुणा महित्व-
मीर्मा तस्थुषीरहभिर्दुदुह्रे।
विश्वाः पिन्वथः स्वसरस्य धेना
अनु वामेकः पविरा ववर्त॥

हे मित्रावरुणा, वां युवयोः तत् महित्वं महत्त्वं सु सुष्ठु अतिप्रशस्तमित्यर्थः। किं तदित्युच्यते। ईर्मा सततगन्ता सर्वस्य प्रेरको वा आदित्यः अहभिः अहोभिर्वर्षर्तुसंबन्धिभिः तस्थुषीः स्थावरभूता अपः दुदुह्रे दुग्धे। किंच,

(१) ऋसं. ५।६२।१.

(२) ऋसं. ५।६२।२; मैसं. ४।१४।१० (१४२); तैब्रा. २।८।६।६ ववर्त (ववर्ति).

स्वसरस्य स्वयं सर्तुः आदित्यस्य विश्वाः सर्वाः धेनाः लोकानां प्रीणयित्रीः द्युतीः पिन्वथः वर्धयथः । वां युवयोः एकः अप्रतियोगी पविः । पविरिति रथस्य नेमिः 'पवी रथनेमिर्भवति' (नि. ५।५) इति यास्कवचनात् । तथाप्यत्र लक्षितलक्षणया रथे वर्तते, केवलचक्रस्यावर्तनायोगात् । युवयोरेको रथः अनु आ ववर्त अनुक्रमेण परिभ्रमति । ऋसा.

[1]ऋतस्य गोपावधि तिष्ठथो रथं
सत्यधर्माणा परमे व्योमनि ।
यमत्र मित्रावरुणावथो युवं
तस्मै वृष्टिर्मधुमत्पिन्वते दिवः ॥

हे ऋतस्य उदकस्य गोपौ रक्षितारौ सत्यधर्माणा सत्यधर्माणौ, युवां रथं अधि तिष्ठथः आरोहथः अस्मद्यज्ञमागमनार्थम् । कुत्र ? परमे व्योमनि निरतिशये आकाशे । हे मित्रावरुणौ, युवं युवां अत्र अस्मिन् यज्ञे यं यजमानं अवथः रक्षथः तस्मै यजमानाय वृष्टिः पर्जन्यः मधुमत् उदकं दिवः द्युलोकात् पिन्वते सिञ्चति वर्धयति । ऋसा.

[2]सम्राजा उग्रा वृषभा दिवस्पती
पृथिव्या मित्रावरुणा विचर्षणी ।
चित्रेभिरभ्रैरुप तिष्ठथो रवं
द्यां वर्षयथो असुरस्य मायया ॥

सम्राजौ सम्यक् राजमानौ उग्रा उद्गूर्णबलौ वृषभा वर्षितारौ दिवः द्युलोकस्य पती स्वामिनौ पृथिव्याः च पती विचर्षणी सर्वस्य द्रष्टारौ मित्रावरुणौ । एवं महानुभावौ चित्रेभिः चायनीयैः अभ्रैः मेघैः सह रवं स्तोत्रं उप तिष्ठथः । पश्चात् द्यां च वर्षयथः असुरस्य उदकनिरसितुः पर्जन्यस्य मायया प्रज्ञया सामर्थ्येन । ऋसा.

(१) ऋसं. ५।६३।१; मैसं. ४।१४।१२ (१६३) गोपावधि (गोपा अधि) व्योमनि (व्योमन्).

(२) ऋसं. ५।६३।३; मैसं. ४।१४।१२ (१६७).

[1]धर्मणा मित्रावरुणा विपश्चिता
व्रता रक्षेथे असुरस्य मायया ।
ऋतेन विश्वं भुवनं वि राजथः
सूर्यमा धत्थो दिवि चित्र्यं रथम् ॥

हे मित्रावरुणा, विपश्चिता प्राज्ञौ, युवां धर्मणा जगद्धारकेण वृष्ट्यादिलक्षणेन कर्मणा व्रता यज्ञादिकर्माणि रक्षेथे पालयथः । असुरस्य मेघानां निरसितुः पर्जन्यस्य मायया प्रज्ञया च ऋतेन उदकेन यज्ञेन वा निमित्तेन विश्वं भुवनं सर्वं भूतजातं वि राजथः विदीपयथः इत्यर्थः । सूर्यमा सूर्यं च चित्र्यं पूज्यं रथं रंहणस्वभावं दिवि द्युलोके धत्थः धारयथः जगदुपकारार्थम् । ऋसा.

[2]ता हि श्रेष्ठवर्चसा राजाना दीर्घश्रुत्तमा ।
ता सत्पती ऋतावृध ऋतावाना जनेजने ॥

ता हि तौ खलु मित्रावरुणौ श्रेष्ठवर्चसा प्रशस्ततेजस्कौ राजाना ईश्वरौ दीर्घश्रुत्तमा दूरदेशादाह्वानश्रोतृतमौ । ता तौ सत्पती सतां यजमानानां स्वामिनौ ऋतावृधा यज्ञस्योदकस्य वा वर्धयितारौ जनेजने सर्वेषु स्तोतृषु निमित्तेषु ऋतावाना गमनवन्तौ । ऋसा.

मित्रो अंहोश्चिदादुरु क्षयाय गातुं वनते ।
मित्रस्य हि प्रतूर्वतः सुमतिरस्ति विधतः ॥

मित्रः देवः अंहोश्चित् अंहस्वतोऽपि स्तोतुः आत् अनन्तरमेव उरु उरवे क्षयाय गृहाय निवासाय वा गातुं उपायं वनते प्रयच्छति । मित्रस्य हि मित्रस्य खलु देवस्य सुमतिः शोभनबुद्धिः प्रतूर्वतः प्रकर्षेण हिंसतोऽपि विधतः परिचरतः शुश्रूषकस्य अस्ति हि भवति खलु । ऋसा.

[3]ता हि क्षत्रमविह्रुतं सम्यगसुर्यमाशाते ।
अध व्रतेव मानुषं स्वर्ण धायि दर्शतम् ॥

ता हि, हीति हेतौ । यस्मात् ता तौ क्षत्रं बलं अविह्रुतं अहिंस्यं असुर्यं असुरविघाति महद्बलं सम्यक् आशाते

(१) ऋसं. ५।६३।७.

(२) ऋसं. ५।६५।२, ४.

(३) ऋसं. ५।६६।२, ६.

व्याप्नुतः अध अतो हेतोः मानुषं मनुष्येषु प्रवृत्तं व्रतेव कर्मेव तद्यथा मनुष्येषु नियतं स्वर्ण सूर्य इव स यथा दिवि दृश्यते तद्वत् दर्शतं दर्शनीयं बलं धायि यज्ञे निहितम् । ऋसा.

**आ यद्वामीयचक्षसा मित्र वयं च सूरयः ।**
**व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ॥**

हे ईयचक्षसा व्याप्तदर्शनौ, हे मित्रा मित्रावरुणौ, वां युवां यत् ये वयं च सूरयः स्तोतारः आ आह्वयामः । व्यचिष्ठे अत्यन्तविस्तृते बहुपाय्ये बहुभिर्गन्तव्ये बहुभी रक्षितव्ये वा स्वराज्ये स्वराट्त्वाय एवंविधराज्यार्थं यतेमहि गच्छेम । ऋसा.

**[1]त्री रोचना वरुण त्रीँरुत द्यून्**
**त्रीणि मित्र धारयथो रजांसि ।**
**वावृधानावमतिं क्षत्रियस्या-**
**ऽनु व्रतं रक्षमाणावजुर्यम् ॥**

हे वरुण, हे मित्र, युवां त्री त्रीणि रोचना रोचनानि द्युलोकान् धारयथ इति संबन्धः । उत अपि च त्रीन् द्यून् द्योतमानानन्तरिक्षलोकान् धारयथः । तथा त्रीणि रजांसि भूलोकान् । कीदृशौ युवाम् ? वावृधानौ वर्धमानौ क्षत्रियस्य । क्षत्रं बलम् । तद्वत इन्द्रस्य । यद्वा, क्षत्रियजातीयस्य यजमानस्य अमतिम् । रूपनामैतत् । रूपं व्रतं च अजुर्यं अजीर्णमविरतं वा रक्षमाणौ । ऋसा.

**या धर्तारा रजसो रोचनस्यो-**
**तादित्या दिव्या पार्थिवस्य ।**
**न वां देवा अमृता आ मिनन्ति**
**व्रतानि मित्रावरुणा ध्रुवाणि ॥**

या यौ रोचनस्य रोचमानस्य रजसः लोकस्य, स्वर्गाख्यस्येत्यर्थः । उत अपि च पार्थिवस्य रजसः या यौ धर्तारौ आदित्या अदितेः पुत्रौ दिव्या दिवि भवौ तौ युवामीळे इति पूर्वत्र संबन्धः । हे मित्रावरुणा, वां युवयोः ध्रुवाणि व्रतानि कर्माणि देवाः अन्ये इन्द्रादयः अमृताः अमरणधर्माणोऽपि न आ मिनन्ति न हिंसन्ति । यतो ध्रुवाण्यत इत्यभिप्रायः । ऋसा.

मित्रावरुणयोर्महिम्नाऽऽनन्दितैर्देवैः तयोः क्षत्रं स्थापितम्

**[1]विश्वे यद्वां मंहना मन्दमानाः**
**क्षत्रं देवासो अदधुः सजोषाः ।**
**परि यद् भूथो रोदसी चिदुर्वी**
**सन्ति स्पशो अदब्धासो अमूराः ॥**

विश्वे सर्वे देवासः देवाः सजोषाः परस्परं प्रीतियुक्ताः यत् यौ वां युवां मंहना महत्त्वेन मन्दमानाः स्तुवन्तः क्षत्रं बलं अदधुः धत्तवन्तः । किंच, यत् यौ युवां उर्वी विस्तीर्णे रोदसी द्यावापृथिव्यौ परि भूथः परिभवथः तयोर्युवयोः अदब्धासः अहिंसिताः अमूराः अमूढाः स्पशः रश्मयः चरा वा सन्ति । ऋसा.

**ता हि क्षत्रं धारयेथे अनु द्यून्**
**दृंहेथे सानुमुपमादिव द्योः ।**
**दृळ्हो नक्षत्र उत विश्वदेवो**
**भूमिमातान्द्यां धासिनायोः ॥**

ता तौ मित्रावरुणौ युवां अनु द्यून् दिवसे दिवसे क्षत्रं बलं धारयेथे हि । द्योः अन्तरिक्षस्य सानुं समुच्छ्रितप्रदेशं मेघं सूर्यं वा दृंहेथे दृढीकुरुतम् । उपमादिव । उपमीयते प्रक्षिप्यते इति उपमात् स्थूणा । सा यथा वत्सं धारयति तद्वदित्यर्थः । दृळ्हः युवाभ्यां दृढीकृतश्च मेघः नक्षत्रः अन्तरिक्षं व्याप्नुवानः उत अपि च विश्वदेवः सूर्यः भूमिं द्यां दिवं च आयोः मनुष्यस्य । 'द्रुह्यवः आयवः' इति मनुष्यनामसु पाठात् । धासिना अन्नेन हविषा । 'क्षुत् धासिः' इत्यन्ननामसु पाठात् । आप्यायितः सन् आतान् आतनोति युवाभ्यां दृढीकृत एव । ऋसा.

---

(१) ऋसं. ५।६९।१, ४.

(१) ऋसं. ६।६७।५, ६.

## सविता

सविता राजा व्रतानां रक्षकः

'अदाभ्यो भुवनानि प्रचाकश-
द्व्रतानि देवः सविताभि रक्षते ।
प्रास्राग्बाहू भुवनस्य प्रजाभ्यो
धृतव्रतो महो अज्मस्य राजति ॥

सविता देवः अदाभ्यः अन्यैरहिंसितः सन् भुवनानि प्रचाकशत् दीपयन् व्रतानि कर्माणि प्राणिनां अभि रक्षते । भुवनस्य लोकस्य प्रजाभ्यः तत्रत्याभ्यः बाहू स्वीयौ प्रास्राक् प्रसारयति स्वस्वकर्मणे अनुजानातीत्यर्थः, सर्वव्यापाराणां सूर्याधीनत्वात् । 'सविता वै प्रसवानामीशे' (ऐब्रा. १।१६) इति हि श्रुतिः । धृतव्रतः धृतकर्मा स तथा कुर्वन् महः महतः अज्मस्य जगतः राजति ईश्वरो भवति । ऋसा.

'त्रिरन्तरिक्षं सविता महित्वना
त्री रजांसि परिभूस्त्रीणि रोचना ।
तिस्रो दिवः पृथिवीस्तिस्र इन्वति
त्रिभिर्व्रतैरभि नो रक्षति त्मना ॥

अयं सविता त्रिः त्रिभेदं अन्तरिक्षम् । अन्तरा क्षान्तं भवति जगदित्यन्तरिक्षम् । परिभूः परिभविता सन् महित्वना महित्वेन इन्वति व्याप्नोति । 'वायुविद्युद्वरुणाख्यास्त्रयो लोका अन्तरिक्षभेदाः स वायुलोकं स वरुणलोकम्' (कौउ. १।३) इत्यादिश्रुतेः । त्री रजांसि रञ्जनात्मकानि त्रीणि क्षित्यन्तरिक्षद्युलक्षणान् त्रीन् लोकान् इन्वति । पूर्वमन्तरिक्षस्यैवावान्तरभेद उक्तः इह तु सामान्याकारेणेत्यपुनरुक्तिः । त्रीणि रोचना रोचनानि रोचमानान् अग्निवाय्वादित्यान् उक्तस्थानत्रयस्वामित्वेन इन्वति । पूर्वमन्तरिक्षस्यैवावान्तरभेद उक्तः । अथ द्युपृथिव्योरवान्तरभेद उच्यते । तिस्रो दिवः इन्द्रप्रजापतिसत्याख्यान् त्रीन् लोकान् इन्वति । तथा तिस्रः पृथिवीः इन्वति । क्षित्यवान्तरभेदान् लोकान् इन्वति । एवं सर्वत्र व्याप्तो देवः त्रिभिर्व्रतैः कर्मभिः उष्णवर्षहिमाख्यैः नः अस्मान् त्मना आत्मनैव स्वीयानुग्रहबुद्ध्यैव अभि रक्षति अभिरक्षतु परिपालयतु । ऋसा.

'उत यासि सवितस्त्रीणि रोचनोत
सूर्यस्य रश्मिभिः समुच्यसि ।
उत रात्रीमुभयतः परीयस
उत मित्रो भवसि देव धर्मभिः ॥

हे सवितः देव, उत अपि च त्रीणि रोचना रोचमानान् द्युलोकान् यासि गच्छसि । 'तिस्रो दिवः पृथिवीः' (ऋसं. ४।५३।५) इत्युक्तम् । उत अपि च सूर्यस्य रश्मिभिः समुच्यसि संगच्छसि । 'उच समवाये' इत्यस्येदं रूपम् । उदयात् पूर्वभावी सविता उदयास्तमयवर्ती सूर्य इति । उत अपि च रात्रीमुभयतः उभयपार्श्वे परीयसे परिगच्छसि । उत अपि च हे देव सवितः, त्वं धर्मभिः जगद्धारकैः कर्मभिः मित्रो भवसि मित्राख्यो देवो भवसि । अथवा प्रकाशादिप्रदानेन सखा भवसि सर्वजगताम् । ऋसा.

उतेशिषे प्रसवस्य त्वमेक
इदुत पूषा भवसि देव यामभिः ।
उतेदं विश्वं भुवनं वि राजसि
श्यावाश्वस्ते सवितः स्तोममानशे ॥

हे सवितः, त्वमेक इत् एक एव प्रसवस्य सर्वकर्मानुज्ञाकरणस्य ईशिषे समर्थो भवसि । ये लौकिकं गमनादिरूपं वैदिकमग्निहोत्रादिरूपं कर्मानुतिष्ठन्ते तेषां सर्वेषामनुज्ञातुमेक एव प्रभवसि । उत अपि च पूषा पोषकः भवसि हे देव, यामभिः गमनैः । उत अपि च इदं विश्वं भुवनं भूतजातं वि राजसि ईशिषे धारयितुम् । यस्मादेवं महानुभावः तस्मात् हे सवितः, ते तुभ्यं श्यावाश्वः ऋषिः स्तोमं स्तोत्रं आनशे व्याप्नोति करोति इत्येवमात्मानं परोक्षतया निर्दिशन्नाह । ऋसा.

---

(१) ऋसं. ४।५३।४.
(२) ऋसं. ४।५३।५; शाब्रा. २२।२.
(१) ऋसं. ५।८१।४-५.

## ब्रह्मणस्पतिः बृहस्पतिर्वा

ब्रह्मणस्पतिः बृहस्पतिर्वा गणपतिः ब्रह्मणां च ज्येष्ठराजः

[१]गणानां त्वा गणपतिं हवामहे
कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ
नः शृण्वन्नूतिभिः सीद सादनम् ॥

हे ब्रह्मणस्पते ब्रह्मणः अन्नस्य परिवृढस्य कर्मणो वा पते पालयितः, गणानां देवादिगणानां संबन्धिनं गणपतिं स्वीयानां पतिम् । कवीनां क्रान्तदर्शिनां कविम् । उपमश्रवस्तमं उपमीयतेऽनयेत्युपमा । सर्वेषामन्नानामुपमानं श्रवः अन्नं यस्य स तथोक्तः । अतिशयेनोपमश्रवा उपमश्रवस्तमः । ज्येष्ठराजं ज्येष्ठाः प्रशस्यतमाः । तेषां मध्ये राजन्तं ब्रह्मणां मन्त्राणां स्वामिनं त्वां त्वा हवामहे अस्मिन् कर्मण्याह्वयामः । किंच, नः अस्माकं स्तुतीः शृण्वन् त्वं ऊतिभिः पालनैर्हेतुभूतैः सादनं सीदन्त्यस्मिन्निति सदनम् । यज्ञगृहं आ सीद उपविश । ऋसा.

[२]यो नः सनुत्य उत वा जिघत्नु-
रभिख्याय तं तिगितेन विध्य ।
बृहस्पत आयुधैर्जेषि शत्रून्
द्रुहे रीषन्तं परि धेहि राजन् ॥

हे बृहस्पते, यो नः अस्माकं सनुत्यः । सनुतरित्यन्तर्हितनाम । अन्तर्हिते देशे भवश्चोरः । उत वा अपि वा यः जिघत्नुः जिघांसुर्भवति, तं अभिख्याय संवीक्ष्य तिगितेन तीक्ष्णेनायुधेन विध्य ताडय । तथा अस्मदीयान् शत्रून् आयुधैः आयोधनसाधनैः इष्वादिभिः जेषि जय । तथा हे राजन् राजमान बृहस्पते, द्रुहे द्रोग्ध्रे शत्रवे रिषन्तं हिंसन्तं वज्रं परि धेहि परितो धारय प्रक्षिपेत्यर्थः । ऋसा.

(१) ऋसं. २।२३।१ ; तैसं. २।३।१४।३ ; कासं. १०।१३ (४४) ; मैसं. ३।१२।२० (३१) (गणानां त्वा गणपतिं हवामहे प्रियाणां त्वा प्रियपतिं हवामहे निधीनां त्वा निधिपतिं हवामहे वसो ममाऽऽहमजानि गर्भधमा त्वमजासि गर्भधम् ॥) ; शुसं. २३।१९ मैसंवत् ; ऐब्रा. ४।४ ; शाब्रा. ८।५, ९।६ ; शब्रा. १३।२।८।४.

(२) ऋसं. २।३०।९.

---

## अग्निः

अग्निः सदसस्पतिः, देवैः कृतो मनुष्याणां रक्षकः, प्रथमो राजा, दूतः अग्निर्देवानां मनुष्याणां च दौत्यं करोति, सुखेन वसन् मित्रसंपन्नो राजा, वैश्वानरोऽयं विश्वव्यापी भूतानामाश्रयः, मित्रवरुणार्यम्णां नियन्ता, गृहपतिः

[१]सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम् ॥

मेधां लब्धुं सदसस्पतिं एतन्नामकं देवं अयासिषं प्राप्तवानस्मि । कीदृशम् ? अद्भुतं आश्चर्यकरं इन्द्रस्य प्रियं सोमपाने सहचारित्वात् काम्यं कमनीयं सनिं धनस्य दातारम् । ऋसा.

[२]यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन ।
स धीनां योगमिन्वति ॥

यज्ञः अयमनुष्ठातव्यः विपश्चितश्चन विदुषोऽपि यजमानस्य यस्मात् सदसस्पतिदेवात् ऋते न सिध्यति सः अयं सदसस्पतिर्देवः धीनां मनोऽनुष्ठानविषयाणामस्मद्बुद्धीनामनुष्ठेयकर्मणां वा योगं संबन्धं इन्वति व्याप्नोति यजमानमनुगृह्य तदीयं यज्ञं निष्पादयतीत्यर्थः । ऋसा.

आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् ।
होत्रा देवेषु गच्छति ॥

आत् अनन्तरमेव हविष्कृतिं हविःसंपादनयुक्तं यजमानं ऋध्नोति सदसस्पतिर्देवो वर्धयति, हविर्दानानन्तरमेव फलं प्रयच्छतीत्यर्थः । तथाविधफलसिद्धये अध्वरं यजमानेनानुष्ठीयमानं यज्ञं प्राञ्चं प्रकर्षेण गच्छन्तं अविघ्नेन परिसमाप्तियुक्तं कृणोति करोति । होत्रा हूयमाना देवता

(१) ऋसं. १।१८।६ ; ऋसं. (खिलं) ३।१।७ ; सासं. १।२।६ (१७१) ; शुसं. ३२।१३ सिषम् + (स्वाहा) ; तैआ. १०।१।४.

(२) ऋसं. १।१८।७–८.

तुष्टा सति यजमानं प्रख्यापयितुं देवेषु गच्छति । यद्वा, होत्रा अस्मदीयस्तुतिरूपा वाक् देवान् परितोषयितुं देवेषु गच्छति । 'श्लोकः धारा' इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु ' होत्रा गीः ' ( निघण्टुः १।११।३५ ) इति पठितम् । ऋसा.

[1]ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम् ।
अप्रजाः सन्त्वत्रिणः ॥

तौ पूर्वोक्तौ इन्द्राग्नी रक्षः राक्षसजातिं उब्जतं ऋजु कुरुतं क्रौर्यं परित्याजयतमित्यर्थः । कीदृशौ ? महान्ता महान्तौ गुणैरधिकौ सदस्पती सभापालकौ । तयोः प्रसादात् अत्रिणः भक्षकाः राक्षसाः अप्रजाः अनुत्पन्नाः सन्तु । ऋसा.

[2]त्वामग्ने प्रथममायुमायवे
देवा अकृण्वन्नहुषस्य विश्पतिम् ।
इळामकृण्वन्मनुषस्य शासनीं
पितुर्यत्पुत्रो ममकस्य जायते ॥

हे अग्ने, त्वां प्रथमं पुरा देवाः आयवे आयोः मनुष्यरूपस्य नहुषस्य एतन्नामकराजविशेषस्य आयुं मनुष्यरूपं विश्पतिं सेनापतिं अकृण्वन् कृतवन्तः । तथा मनुषस्य मनोः इळां एतन्नामधेयां पुत्रीं शासनीं धर्मोपदेशकर्त्रीं अकृण्वन् कृतवन्तः । तथा च तैत्तिरीयैराम्नायते ' इडा वै मानवी यज्ञानूकाशिन्यासीत् ' ( तैब्रा. १।१।४।४ ) इति । वाजसनेयिनोऽप्येवमामनन्ति— ' प्रयाजानुयाजानां मध्ये मामवकल्पय मया सर्वानवाप्स्यसि कामानिति सा मनुमन्वशादिदिति यत् शात् ' इति । यत् यदा ममकस्य मदीयस्य हिरण्यस्तूपसंबन्धिनः यः पिता अङ्गिराः तस्य पितुः पुत्रः जायसे । तदानीं हे अग्ने, त्वमेव पुत्ररूप आसीरिति शेषः । ऋसा.

[3]मन्द्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा संगतानि व्रता ध्रुवा
यानि देवा अकृण्वत ॥

हे अग्ने, त्वं मन्द्रः हर्षहेतुः होता देवानामाह्वाता विशां यजमानरूपाणां प्रजानां गृहपतिः गृहस्य पालकः दूतः देवदूतः असि । त्वे त्वयि विश्वा व्रता सर्वाणि कर्माणि संगतानि । ' व्रतं कर्वरं ' ( निघण्टुः २।१।७) इति कर्मनामसु व्रतशब्दः पठितः । पृथिव्यादयः देवाः ध्रुवा स्थिराणि यानि कर्माणि अकृण्वत कृतवन्तः । पृथिवी धारयति पर्जन्यो वर्षति सूर्यः प्रकाशयति । तान्येतानि त्वयि संगतानीति पूर्वत्रान्वयः । ऋसा.

[1]पतिर्ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥

हे अग्ने, विशां प्रजानां संबन्धिनो येऽध्वराः यागाः तेषां पतिः पालकस्त्वं दूतः असि हि देवानां वार्ताहारो भवसि खलु । उषर्बुधः उषःकाले प्रबुद्धान् स्वर्दृशः सूर्यदर्शिनः देवान् अद्य अस्मिन् दिने सोमपीतये सोमपानार्थं आ वह आभिमुख्येन प्रापय । ऋसा.

यद्देवानां मित्रमहः पुरोहितो-
ऽन्तरो यासि दूत्यम् ।
सिन्धोरिव प्रस्वनितास ऊर्मयो-
ऽग्नेर्भ्राजन्ते अर्चयः ॥

हे मित्रमहः मित्राणां पूजकाग्ने, यत् यदा पुरोहितः त्वं वेदेः पूर्वस्यां दिशि स्थापितः अन्तरः देवयजनमध्ये वर्तमानः सन् देवानां दूत्यं दूतकर्म यासि प्राप्नोषि तदानीं अग्नेः तव अर्चयः दीप्तयः भ्राजन्ते दीप्यन्ते। तत्र दृष्टान्तः-- सिन्धोरिव । यथा समुद्रस्य प्रस्वनितासः प्रकृष्टध्वनियुक्ताः ऊर्मयः तरङ्गाः भ्राजन्ते तद्वत् । ऋसा.

[2]आ सूर्ये न रश्मयो ध्रुवासो
वैश्वानरे दधिरेऽग्ना वसूनि ।
या पर्वतेष्वोषधीष्वप्सु
या मानुषेष्वसि तस्य राजा ॥

अग्ना वैश्वानरेऽग्नौ वसूनि धनानि आ दधिरे आहितानि स्थापितानि बभूवुः । तत्र दृष्टान्तः— ध्रुवासः

---

( १ ) ऋसं. १।२१।५.
( २ ) ऋसं. १।३१।११.
( ३ ) ऋसं. १।३६।५.

( १ ) ऋसं. १।४४।९, १२.
( २ ) ऋसं. १।५९।३–५.

मिश्र्लाः रश्मयः किरणाः सूर्ये न यथा सूर्ये आधीयन्ते तद्वत्। अतस्त्वं पर्वतादिषु यानि धनानि विद्यन्ते तस्य धनजातस्य राजा असि अधिपतिर्भवसि। ऋसा.

**बृहतीइव सूनवे रोदसी**
**गिरो होता मनुष्योऽ न दक्षः।**
**स्वर्वते सत्यशुष्माय पूर्वी-**
**र्वैश्वानराय नृतमाय यह्वीः॥**

रोदसी द्यावापृथिव्यौ सूनवे स्वपुत्राय वैश्वानराय बृहतीइव प्रभूते इवाभूताम्। वैश्वानरस्य द्यावापृथिव्योः पुत्रत्वं मन्त्रान्तरे स्पष्टमवगम्यते-- ‘उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा’ (ऋसं. ३।३।११) इति। महतो वैश्वानरस्य अवस्थानाय द्यावापृथिव्यौ विस्तृते जाते इत्यर्थः। किंच, अयं होता दक्षः समर्थः पूर्वीः बहुविधाः यह्वीः महतीः गिरः स्तुतीः वैश्वानराय अग्नये प्रायुङ्क्तेति शेषः। कीदृशाय? स्वर्वते शोभनगमनयुक्ताय सत्यशुष्माय अवितथबलाय नृतमाय अतिशयेन सर्वेषां नेत्रे। तत्र दृष्टान्तः— मनुष्यो न। यथा मनुष्यो लौकिको वन्दी दातारं प्रभुं बहुविधया स्तुत्या स्तौति तद्वत्। ऋसा.

**दिवश्चित्ते बृहतो जातवेदो**
**वैश्वानर प्र रिरिचे महित्वम्।**
**राजा कृष्टीनामसि मानुषीणां**
**युधा देवेभ्यो वरिवश्चकर्थ॥**

हे जातवेदः जातानां वेदितः, वैश्वानर अग्ने, ते तव महित्वं माहात्म्यं बृहतः महतः दिवश्चित् द्युलोकादपि प्र रिरिचे प्रववृधे। किंच, त्वं मानुषीणां मनोर्जातानां कृष्टीनां प्रजानां राजा असि अधिपतिर्भवसि। तथा वरिवः असुरैरपहृतं धनं युधा युद्धेन देवेभ्यः चकर्थ देवाधीनमकार्षीः। ऋसा.

**[1]देवो न यः पृथिवीं विश्वधाया**
**उपक्षेति हितमित्रो न राजा।**
**पुरःसदः शर्मसदो न वीरा**
**अनवद्या पतिजुष्टेव नारी॥**

देवो न द्योतमानः सूर्य इव यः अग्निः विश्वधायाः सर्वस्य जगतो धर्ता। यथा सूर्यो वृष्ट्यादिप्रदानेन सर्वं जगत् धत्ते एवमग्निरपि यज्ञादिसाधनेन कृत्स्नस्य जगतो धारयिता। सोऽग्निः पृथिवीं पृथिव्यां उपक्षेति सर्वेषां प्रियः सन् यज्ञगृहादौ निवसति। तत्र दृष्टान्तः— हितमित्रो न राजा। हितानि अनुकूलानि मित्राणि यस्य तादृशो राजा यथा सुखेन निवसति तद्वत्। यथा सर्वजनमित्रो राजा एवमग्निरपि सर्वजनमित्र इत्यर्थः। न ह्यग्निं कश्चन द्विष्टे। यस्याग्नेः पुरःसदः पुरस्तात् सीदन्तः उपविशन्तः पुरुषाः शर्मसदो न वीराः पितृगृहे वर्तमानाः पुत्राः इव वर्तन्ते। पिता पुत्रानिव अग्निः स्वस्य परिचारकान् रक्षतीति भावः। सोऽयमग्निः अतिशयेन शुद्धः कर्मयोग्यो भवति। तत्र दृष्टान्तः— अनवद्या अनिन्दिता पतिजुष्टेव नारी स्वपतिना सेविता स्वीकृता योषिदिव। सा यथा पातिव्रत्येन शुद्धा सती सर्वकर्मयोग्या भवति एवमग्निरपि। ऋसा.

**[1]वैश्वानरस्य सुमतौ स्याम**
**राजा हि कं भुवनानामभिश्रीः।**
**इतो जातो विश्वमिदं वि चष्टे**
**वैश्वानरो यतते सूर्येण॥**

वैश्वानरस्य विश्वेषां नराणां लोकान्तरनेतृत्वेन स्वामित्वेन वा संबन्धिनोऽग्नेः सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ स्याम अनुग्राह्यत्वेन वर्तमाना भवेम। ‘हि’ ‘कं’ इत्येतत् हिशब्दार्थे। स हि वैश्वानरः अभिश्रीः अभिश्रयणीयः आभिमुख्येन सेवितव्यः सन् भुवनानां सर्वेषां भूतजातानां राजा स्वामी भवति। यः वैश्वानरः अग्निः इतः अस्मादरणिद्वयात् जातमात्रः एव इदं सर्वं जगत् वि चष्टे विशेषेण पश्यति प्रातरुद्यता सूर्येण च यतते संयतते संगच्छते। ‘उद्यन्तं वावादित्यमग्निरनुसमारोहति’ (तैब्रा. २।१।२।१०) इति तैत्तिरीयकम्। यद्वा, पार्थिव-

---

(१) ऋसं. १।७३।२.

(१) ऋसं. १।९८।१; तैसं. १।५।११।३; कासं. ४।१६ (१३७), ६।१० (३४), ७।१६ (९२); मैसं. ४।११।१ (२०), ४।१४।९ (१२६); शुसं. २६।७; ऐब्रा. ३।१।१; आश्रौ. ८।८; नि. ७।२२.

स्याग्नेः तेजांस्युद्गच्छन्ति सूर्यकिरणाश्चाधोमुखं प्रसरन्ति। तयोः संगमनं दृष्ट्वा 'वैश्वानरो यतते सूर्येण' इति ऋषिर्ब्रूते। तथा च यास्कः-- 'अमुतोऽमुष्य रश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत्' (नि. ७।२३) इति। एवंभूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति संबन्धः। ऋसा.

[1]पृष्टो दिवि पृष्टो अग्निः पृथिव्यां
पृष्टो विश्वा ओषधीरा विवेश।
वैश्वानरः सहसा पृष्टो अग्निः
स नो दिवा स रिषः पातु नक्तम्॥

अयं वैश्वानरः अग्निः दिवि द्युलोके आदित्यात्मना पृष्टः संस्पृष्टः यद्वा निषिक्तो निहितो वर्तते। तथा पृथिव्यां भूमौ गार्हपत्यादिरूपेण पृष्टः संस्पृष्टः निहितो वा। तथा विश्वाः सर्वाः ओषधीः पृष्टः संस्पृष्टः सः अग्निः आ विवेश पाकार्थमन्तः प्रविष्टवान्। अन्तःप्रविष्टेन पार्थिवेनाग्निना हि सर्वा ओषधयः पच्यन्ते। सहसा परेषामसाधारणेन बलेन पृष्टः संस्पृष्टः वैश्वानरः नः अस्मान् दिवा अह्नि रिषः हिंसतः शत्रोः पातु रक्षतु। तथा सः वैश्वानरः नक्तं रात्रावपि अस्मान् हिंसकात् पातु। ऋसा.

[2]विश्वासां त्वा विशां पतिं हवामहे सर्वासां
समानं दम्पतिं भुजे सत्यगिर्वाहसं भुजे।
अतिथिं मानुषाणां पितुर्न यस्यासया।
अमी च विश्वे अमृतास आ वयो
हव्या देवेष्वा वयः॥

विश्वासां सर्वासां विशां प्रजानां यजमानानां पतिं अभिमतफलदानेन पालकं हवामहे आह्वयामः। न केवलं यजमानानां किंतु सर्वासां प्रजानां समानं एकरूपं दहनपचनाद्युपकारस्य सर्वेषां समत्वात्। तथा दम्पतिं गार्हपत्यादिरूपेण गृहस्य पालकम्। दम इति गृहनाम, 'दमे कृत्तिः' (निघण्टुः ३।४।१२) इति तन्नामसु पाठात्। किमर्थम्? भुजे भोगाय हवामहे आह्वयामः। पुनः स एव विशेष्यते। सत्यगिर्वाहसं यथार्थभूतानां अविसंवादिफलानां स्तुतिरूपाणां गिरां वोढारम्। यद्वा, गिरः मन्त्ररूपा वहन्तीति गिर्वाहसः ऋत्विजः। सत्याः अविसंवादिफला गिर्वाहसो यस्य तं तादृशं हवामहे इति शेषः। पुनः कीदृशम्? मानुषाणां मनुष्याणां अतिथिं अतिथिवत् पूज्यं दर्शादितिथिमपेक्ष्य आगन्तारं वा। किंच, यस्य अग्नेः आसया समीपे। आसेत्यन्तिकनाम, 'आसा अम्बरम्' (निघण्टुः २।१६।२) इति तन्नामसु पाठात्। तत्समीपे अमी विश्वे अमृतासः हविर्भोक्तृत्वेन प्रसिद्धाः सर्वे देवा अपि आ आगच्छन्ति। उपसर्गवशात् योग्यक्रियाध्याहारः। किमर्थम्? वयः हविर्लक्षणान्नमुद्दिश्य अग्निमुखादेव इतरेभ्यो दीयमानत्वात्। तत्र दृष्टान्तः— पितुर्न पितुरन्तिके पुत्रादयो यथा अन्नाद्यर्थे सेवन्ते तद्वत्। किंच, वयः नेतारः ऋत्विजोऽपि देवेषु इतरेषु इज्यमानेषु मध्ये हव्या हवींषि आ ददति अग्नये। ऋसा.

[1]त्वया ह्यग्ने वरुणो धृतव्रतो
मित्रः शाशद्रे अर्यमा सुदानवः।
यत्सीमनु क्रतुना विश्वथा
विभुररान्न नेमिः परिभूरजायथाः॥

हे अग्ने, त्वया खलु वरुणः राज्यभिमानी देवः धृतव्रतः स्वीकृतवर्षणादिकर्मा भवति। तथा मित्रः अहरभिमानी देवः शाशद्रे शातयति तमः। तथा अर्यमा उभयोर्मध्यवर्ती देवः सुदानवः शोभनदानो भवति। व्यत्ययेन बहुवचनम्। यद्वा, एते वरुणादयः सुदानवः शोभनदानाः स्वस्वकार्यकर्तारः त्वया हि शाशद्रे तीक्ष्णीक्रियन्ते। हिशब्दो मन्त्रान्तरप्रसिद्धिद्योतनार्थः। 'त्वमग्ने वरुणो जायसे' (ऋसं. ५।३।१) इति हि मन्त्रान्तरम्। वरुणादीनामग्न्यायत्तत्वे उपपत्तिमाह– यत् यस्मात् कारणात् हे अग्ने, सीं सर्वतः क्रतुना कर्मणा विश्वथा विश्व इव

---

(१) ऋसं. १।९८।२; तैसं. १।५।११।१; कासं. ४।१६ (१३८), ४०।३ (१३); मैसं. २।१३।११ (८६); शुसं. १८।७३; ऐब्रा. ३।२।८; तैब्रा. ३।११।६।४; शब्रा. ९।५।२।६; आश्रौ. २।१५.

(२) ऋसं. १।१२७।८.

(१) ऋसं. १।१४१।९, १३.

विश्वात्मक इव विभुः मित्रार्यमात्मना सर्वव्यापी परिभूः स्वतेजसा सर्वतः परिभाविता सन् अनुक्रमेण अजायथाः जायसे प्रादुर्भवसि । तत्र दृष्टान्तः-- अरान् रथस्य शङ्कून् नेमिः न बाह्यवलय इव । स यथा व्याप्य तिष्ठति तद्वदयमग्निर्वरुणादीन् व्याप्य तिष्ठति । ऋसा.

अस्ताव्यग्निः शिमीवद्भिरर्कैः
साम्राज्याय प्रतरं दधानः ।
अमी च ये मघवानो वयं च
मिहं न सूरो अति निष्टतन्युः ॥

अयं अग्निः शिमीवद्भिः हविष्प्रदानादिकर्मवद्भिः अर्कैः अर्चनसाधनैर्मन्त्रैः अस्तावि स्तुतः अस्माभिर्यजमानैः । शिमिति कर्मनाम ' शिमी शक्तिः ' ( निघण्टुः २।१।२४) इति तन्नामसु पाठात् । कीदृशोऽयम् ? साम्राज्याय साम्राज्यस्येति कर्मणि—षष्ठीस्थाने चतुर्थी । सम्यक् राजमानत्वं प्रतरं प्रकृष्टतरमत्यर्थं दधानः । किंच, इममग्निं अमी च पुरोवर्तमाना ऋत्विजः पुत्रादयो वा ये वयं च पूर्वे स्तोतृत्वेन प्रसिद्धा वयमपि अति अत्यर्थं निष्टतन्युः शब्दयन्तु । निष्पूर्वः स्तनतिः शब्दकर्मा । इतः परमपि अस्मत्पुत्रपौत्रादयो वयं च अग्निं स्तुम इत्यर्थः । तत्र दृष्टान्तः— मिहं न सूरः । मिहं मेहनशीलं मेघं यथा सूरः सूर्यो वृष्ट्यर्थं शब्दयति तद्वत् । ऋसा.

[1]कृणुष्व पाजः प्रसितिं न पृथ्वीं
याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानो-
ऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥

हे अग्ने, पाजः तेजःसंघं कृणुष्व कुरुष्व विस्तारय । तत्र दृष्टान्तः–प्रसितिं न । यथा मृगयुः पृथ्वीं विस्तीर्णां प्रसितिं प्रकर्षेण सीयते बध्यते इति प्रसितिः वागुरा । तादृशीं प्रसितिं पक्षिग्रहणार्थं वनगहनेषु प्रसारयति तद्वत् त्वमपि रक्षांसि हन्तुं महद्बलमग्रतस्तनुष्व । इभेन गतभयेन तेजःसंघेन युक्तस्त्वं याहि रक्षांसि हन्तुं गच्छ । तत्र दृष्टान्तः–राजेव । यथा अमवान् । राज्ञा सह वर्तते इत्यमः अमात्यः, तद्वान् । यद्वा, अमः अमनं रोगः । शत्रूणां कर्तव्यैः रोगैस्तद्वान्, शत्रूणां रोगभूत इत्यर्थः । राजा इभेन गजेन युक्तः सन् परबलं प्रतिगच्छति तद्वत् । किंच, तृष्वीम् । तृष्वीति क्षिप्रनाम । क्षिप्रगामिनीं प्रसितिं प्रकृष्टां सेनां अनु द्रूणानः अनुगच्छन् । यद्वा, तृष्वीमिति तृतीयार्थे द्वितीया । तृष्व्या क्षिप्रया प्रसित्या अनुबद्धया संततया गत्या द्रूणानः परसेनां हिंसन् अस्ता शत्रूणां क्षेप्ता असि । तपिष्ठैः तप्तृतमैः तेजोभिः रक्षसः राक्षसान् विध्य ताडय । अत्र निरुक्तम्– ' कुरुष्व पाजः । पाजः पालनात् । प्रसितिमिव पृथ्वीम् । प्रसितिः प्रसहनात् तन्तुर्वा जालं वा । याहि राजेवामात्यवानभ्यमनवान्त्स्ववान्वेरावता गणेन गतभयेन हस्तिनेति वा । तृष्व्यानु प्रसित्या द्रूणानः । तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वा । अस्तासि विध्य रक्षसः तपिष्ठैः तप्ततमैः तृप्ततमैः तपिष्ठतमैरिति वा ' ( नि. ६।१२ ) इति । ऋसा.

जनानां सम्राट् अग्निर्वैश्वानरः देवैः सृष्टः

[1]मूर्धानं दिवो अरतिं पृथिव्या
वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनाना-
मासन्ना पात्रं जनयन्त देवाः ॥

मूर्धानं शिरोभूतम् । कस्य ? दिवः द्युलोकस्य पृथिव्याः प्रथितायाः भूमेः अरतिं गन्तारम् । यद्वा, गन्तव्यं स्वामिनं वैश्वानरं विश्वेषां नराणां संबन्धिनं ऋते । ऋतमिति सत्यस्य यज्ञस्य वा नाम । निमित्तसप्तम्येषा । ऋतनिमित्तं आ

(१) ऋसं. ४।४।१ ; तैसं. १।२।१४।१ ; कासं. १०।५ (८), १६।१५ (१८९;) मैसं. २।७।१५ (२०४) वामवाँ ( वामवं ) ; शुसं. १३।९ ; ऐब्रा. ४।२ ; शाब्रा. ८।४ ; शब्रा. ७।४।१।३३ ; आश्रौ. ४।६ ; नि. ६।१२.

(१) ऋसं. ६।७।१ ; सासं. १।१।७ (६७), २।८।३ (११४०) मासन्ना ( मासन्नः ) ; तैसं. १।४।१३।१, ६।५।२।१ मृत आ ( मृताय ) ; कासं. ४।५ (२६), २८।१ (१) जनयन्त ( जनयन्तु ) ; मैसं. १।३।१५ (४५) ; शुसं. ७।२४, ३३।८ ; शाब्रा. २३।३ ; ताब्रा. १४।२।१ ; शब्रा. ४।२।४।२४ ; आश्रौ. ८।६ ; आपश्रौ. १२।१६।१.

आभिमुख्येन जातं सृष्टयादावुत्पन्नं कविं क्रान्तदर्शिनं सम्राजं सम्यग्राजमानं जनानां यजमानानां अतिथिं हविर्वहनाय सततं गन्तारम्। यद्वा, अतिथिवत् पूज्यम्। आसन् आसनि आस्ये। द्वितीयार्थे सप्तमी। आस्यभूतम्। अग्निलक्षणेनास्येन हि देवा हवींषि भुञ्जते। पात्रं पातारं रक्षकम्। यद्वा, आस्येन धारकम्। एवंगुणविशिष्टं वैश्वानराग्निं देवाः स्तोतारः ऋत्विजः देवा एव वा आ जनयन्त यज्ञाभिमुख्येन अजीजनन्। अरण्योः सकाशादुदपादयन्। ऋसा.

राजा अग्निर्गृहपतिः सर्वेषां देवानां मर्त्यानां च जन्मानि वेत्ति

[१]अग्निर्होता गृहपतिः स राजा
विश्वा वेद जनिमा जातवेदाः।
देवानामुत यो मर्त्यानां
यजिष्ठः स प्र यजतामृतावा॥

होता देवानामाह्वाता राजा राजमानः सः अग्निः गृहपतिः गृहाणां पतिः अधिपतिर्भवति। तथा विश्वा विश्वानि सर्वाणि जनिम जन्मानि जन्मवन्ति भूतजातानि जातवेदाः जातप्रज्ञः सन् वेद वेत्ति जानाति। यः अग्निः देवानां इन्द्रादीनां उत अपि च मर्त्यानां मनुष्याणां च मध्ये यजिष्ठः अतिशयेन यष्टा भवति। ऋतावा। ऋतं सत्यं यज्ञो वा। तद्वान् सः अग्निः प्र यजतां प्रकर्षेण देवान् यजतु। ऋसा.

अग्निः सप्तानां मनुष्याणां पतिः

[२]यो अग्निः सप्तमानुषः श्रितो विश्वेषु सिन्धुषु।
तमागन्म त्रिपस्त्यं मन्धातुर्दस्युहन्तममग्निं
यज्ञेषु पूर्व्यं नभन्तामन्यके समे॥

योऽग्निः सप्तमानुषः विश्वेषु सर्वेषु सिन्धुषु नदीषु श्रितः त्रिपस्त्यं त्रिस्थानं मन्धातुः यौवनाश्वस्य मान्धातुः दस्युहन्तमं दस्यूनां हन्तारं यज्ञेषु पूर्व्यं मुख्यं तं अग्निं वयं आगन्म। अन्यके शत्रवोऽपि समे सर्वे नभन्ताम्। नभतिः हिंसाकर्मा। अग्निना हिंस्यन्ताम्। ऋसा.

विशां राजा अग्निर्धर्माध्यक्षः

[१]विशां राजानमद्भुतमध्यक्षं धर्मणामिमम्।
अग्निमीळे स उ श्रवत्॥

विशां प्रजानां राजानं ईश्वरं अद्भुतं महान्तं धर्मणां कर्मणां अध्यक्षं अनुसंधातारं यं इममग्निमीळे स्तौमि स उ स एवाग्निः श्रवत् अस्मदीयां स्तुतिं शृणोतु। ऋसा.

अग्निः धनानां धारकः इष्टानां प्रदाता राजा

[२]श्रीणामुदारो धरुणो रयीणां
मनीषाणां प्रार्पणः सोमगोपाः।
वसुः सूनुः सहसो अप्सु राजा
वि भात्यग्र उषसामिधानः॥

श्रीणां विभूतीनां उदारः उद्गमयिता दाता रयीणां धनानां धरुणः धारकः मनीषाणां ईप्सितार्थानां प्रार्पणः प्रार्पयिता सोमगोपाः सोमस्य गोपा वसुः सर्वस्य लोकस्य वासकः सहसः बलस्य सूनुः अप्सु उदकेषु स्थितः राजा सर्वस्येश्वरः उषसां अग्रे प्रभातकाले इधानः अग्निहोत्रार्थं समिध्यमानोऽग्निः वि भाति प्रकाशते। ऋसा.

अग्निर्ब्राह्मणानां सजातः क्षत्रयुक्तः

[३]क्षत्रेणाग्ने स्वेन सं रभस्व
मित्रेणाग्ने मित्रधा यतस्व।
सजातानां मध्यमेष्ठा राज्ञा-
मग्ने विहव्यो दीदिहीह॥

हे अग्ने, स्वेन आत्मीयेन क्षत्रेण। बलनामैतत्। बलेन सं रभस्व संरब्धो भव, संगतो भवेत्यर्थः। किंच, हे अग्ने,

(१) ऋसं. ६।१५।१३; मैसं. ४।१३।१० (७७); ऐब्रा. १७।१, २२।३; शाब्रा. २३।३; तैब्रा. ३।५।१२।१; आश्रौ. १।१०, ६।५, ८।८.

(२) ऋसं. ८।३९।८.

(१) ऋसं. ८।४३।२४.

(२) ऋसं. १०।४५।५; तैसं. ४।२।२।३ वसुः (वसोः); कासं. १६।९ (१०४); मैसं. २।७।९ (१११); शुसं. १२।२२.

(३) असं. २।६।४; तैसं. ४।१।७।२ स्वेन (स्वायुः) मित्रधा (मित्रधेये) मध्यमेष्ठा (मध्यमस्था एधि); कासं. १८।१६ (८५) मित्रधा (मित्रधेये) मध्यमेष्ठा (मध्यमेष्ठेयाय); मैसं. २।१२।५ (२९) कासंवत्; शुसं. २७।५ तैसंवत्.

मित्रधाः मित्राणां पोषकः। मित्रेण मित्रभावेन यतस्व उपकरोमीत्येव वर्तस्व मा उदासिष्ठाः। अपि च सजातानां समानं जातानां ब्राह्मणानाम्। प्रजापतिमुखात् उत्पन्नत्वात् अग्नेः ब्राह्मणानां च सजातत्वम्। मध्यमेष्ठाः मध्यमेव मध्यमम्। तत्र स्थाता। यद्वा, सजातानां मध्ये भवः मध्यमः यजमानः। तेषामुपजीव्यः। तत्र सदा स्थाता। राज्ञां क्षत्रियाणामपि विहव्यः विहवेषु भवः। विविधं हूयन्ते आहूयन्ते देवाः येष्विति विहवाः यज्ञाः। यद्वा, विविधानि हव्यानि चरुपुरोडाशादीनि हवींषि यस्य स तथोक्तः। हे अग्ने, एवंभूतस्त्वं इह अस्मिन् कर्मणि दीदिहि दीप्यस्व। असा.

अग्निरेकः सम्राट्

[1]**अग्निः परेषु धामसु कामो भूतस्य भव्यस्य। सम्राडेको वि राजति॥**

परेषु उत्कृष्टेषु धामसु स्थानेषु अग्निः एक एव सम्राट् सम्यग् राजमानः भूतस्य उत्पन्नस्य भव्यस्य उत्पत्स्यमानस्य च कामः कामयिता कामप्रदो वा भूत्वा वि राजति विशेषेण दीप्यते। असा.

[2]**कामो भूतस्य भव्यस्य। सम्राडेको विराजति। स इदं प्रतिपप्रथे। ऋतूनुत्सृजते वशी॥**

योऽयं कामाभिमानी देवः सोऽयं भूतस्य भव्यस्य च सम्राट् समीचीनो राजा भूत्वा स्वयमेको विराजति विशेषेण दीप्यते। स च कामः इदं सर्वं जगत् प्रतिलक्ष्य पप्रथे प्रथितोऽभूत्। वशी स्ववशः सन् ऋतून् वसन्तादीन् उत्सृजते उत्कर्षेण निर्मिमीते। तैब्रासा.

---

(१) असं. ६।३६।३; सासं. २।१८।४ (१७१०) परेषु (प्रियेषु); शुसं. १२।११७ सासंवत्; शब्रा. ७।३।२।८ सासंवत्; आश्रौ. ८।१० परेषु (प्रत्नेषु)।

(२) तैब्रा. २।४।१।९-१०।

## सोमः

सोमो राजा सतां रक्षकः

[1]**राज्ञो नु ते वरुणस्य व्रतानि**
**बृहद्गभीरं तव सोम धाम।**
**शुचिष्ट्वमसि प्रियो न मित्रो**
**दक्षाय्यो अर्यमेवासि सोम॥**

हे सोम, राज्ञः ब्राह्मणानां स्वामिनः 'सोमोऽस्माकं ब्राह्मणानां राजा' (तैसं. १।८।१०।२) इति श्रुतेः। वरुणस्य यागार्थमाहृतः क्रीतो वस्त्रेणावृतः सोमो वरुणः 'वरुणोऽसि धृतव्रतः' (तैसं १।२।१०।२) इति मन्त्रलिङ्गात्। क्रीतस्य ते नु तव संबन्धीनि हि व्रतानि सर्वाण्यग्निष्टोमादीनि कर्माणि। अतः सर्वेषु यागेषु त्वमेव करणभूतः भवसीत्यर्थः। अतः तव धाम त्वदीयं तेजः बृहत् महत् विस्तीर्णं गभीरं गाम्भीर्योपेतं च। यद्वा, नु इत्येतदुपमार्थे। तदुक्तं यास्केन— 'अथाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूत वयाः' (नि. १।४) इति। राज्ञः राजमानस्य वरुणस्य नु वरुणस्येव हे सोम, ते तव व्रतानि कर्माणि लोकहितकारीणि। शिष्टं समानम्। हे सोम, त्वं शुचिः सर्वेषां शोधकः असि। तत्र दृष्टान्तः— प्रियो न मित्रः। यथा सर्वेषामनुकूलोऽहरभिमानी मित्रो देवः शोधयिता भवति तद्वत्। तथा त्वं अर्यमेव अस्माभिर्दृश्यमानः सूर्य इव दक्षाय्यः असि सर्वेषां वर्धको भवसि। यथा अहनि सूर्यः प्रकाशेन सर्वं वर्धयति एवं निशि अमृतमयैः सोमकिरणैराप्यायमानं सत् स्थावरजङ्गमात्मकं सर्वं जगत् वर्धते। ऋसा.

[2]**त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः॥**

---

(१) ऋसं. १।९१।३, ९।८८।८।

(२) ऋसं. १।९१।५; तैसं. ४।३।१३।१; कासं. २।१४ (६७); मैसं. ४।१०।१ (२), ४।१०।५ (११०), ४।११।२ (४०), ४।१३।५ (३७); ऐब्रा. १।४, ४।८; तैब्रा. ३।५।६।१; आश्रौ. १।५, ४।८; शाश्रौ. १।८।१; माश्रौ. ५।१।१।२०।

हे सोम, त्वं सत्पतिः असि सतां कर्मसु वर्तमानानां ब्राह्मणानामधिपतिर्भवसि, 'तस्मात् सोमराजानो ब्राह्मणाः' (तैब्रा. १।७।४।२) इति श्रुतेः। यद्वा, सन्तः स्वानादयः पतयः पालका यस्य सोमस्य तादृशो भवसि। तथा चाम्नायते— 'स्वान भ्राजेत्याहैते वा अमुष्मिन् लोके सोममरक्षन्' (तैसं. ६।१।१०।५) इति। उत अपि च राजा राजमानः त्वं वृत्रहा वृत्रस्यासुरस्य शत्रोर्वा हन्ताऽसि। भद्रः शोभनः क्रतुः योऽयमग्निष्टोमादियागः त्वमेव तद्रूपो भवसि, तत्साध्यत्वात् यागानाम्। ऋसा.

[1]त्वं नः सोम विश्वतो रक्षा राजन्नघायतः।
न रिष्येत्त्वावतः सखा॥

हे सोम राजन् राजनशील, त्वं अघायतः। अघं पापं तद्धेतुकं दुःखमस्माकं कर्तुमिच्छतः विश्वतः सर्वस्मादपि पुरुषात् नः अस्मान् रक्ष पालय। त्वावतः त्वत्सदृशस्य सखा सख्यं प्राप्तः पुरुषः न रिष्येत् नहि विनश्येत्, किमु वक्तव्यं त्वत्सखा न विनश्यतीति। ऋसा.

सोमो विश्वद्रष्टा राजा धर्मेण विश्वधारकः

[2]विश्वा धामानि विश्वचक्ष ऋभ्वसः
प्रभोस्ते सतः परि यन्ति केतवः।
व्यानशिः पवसे सोम धर्मभिः
पतिर्विश्वस्य भुवनस्य राजसि॥

हे विश्वचक्षः सर्वस्य द्रष्टः सोम, प्रभोः परिवृढस्य सतः ते तव ऋभ्वसः। ऋभ्वा इति महन्नाम। महान्तः केतवः रश्मयः विश्वा सर्वाणि धामानि तेजःस्थानानि देवशरीराणि परि यन्ति परिगच्छन्ति प्रकाशयन्तीत्यर्थः। हे सोम, व्यानशिः व्यापनशीलश्च त्वं धर्मभिः धारकैः रसनिस्यन्दैः पवसे पूयसे। विश्वस्य भुवनस्य च पतिः स्वामी त्वं राजसि ईश्वरो भवसि। ऋसा.

(१) ऋसं. १।९१।८; तैसं. २।३।१४।१; कासं. २।१४ (६९); मैसं. ४।१०।१ (९), ४।१०।३ (७४), ४।११।५ (१२६); आश्रौ. २।१०.

(२) ऋसं. ९।८६।५; सासं. ३।५।१ (८८८) प्रभोस्ते (प्रभोष्टे) व्यानशिः (व्यानशी) धर्मभिः (धर्मणा).

[1]तवेमाः प्रजा दिव्यस्य रेतस-
स्त्वं विश्वस्य भुवनस्य राजसि।
अथेदं विश्वं पवमान ते वशे
त्वमिन्दो प्रथमो धामधा असि॥

तव दिव्यस्य रेतसः सकाशात् इमाः प्रजाः उत्पद्यमानाः प्राणिनः उत्पन्नाः, 'सोमो वै रेतोधाः' (तैसं. २।१।१।६) इति श्रुतेः। त्वं विश्वस्य भुवनस्य राजसि ईश्वरो भवसि। अथ अपि च इदं विश्वं हे पवमान, ते वशे त्वदधीनं वर्तते। हे इन्दो, प्रथमः मुख्यः त्वं धामधाः धाम्नो धर्ता असि भवसि। ऋसा.

[2]त्वं समुद्रो असि विश्ववित्कवे
तवेमाः पञ्च प्रदिशो विधर्मणि।
त्वं द्यां च पृथिवीं चाति जभ्रिषे
तव ज्योतींषि पवमान सूर्यः॥

हे कवे क्रान्तप्रज्ञ, त्वं यस्मात् समुद्रः वर्षसाधनोऽपां अतः विश्वविदसि। यद्वा, समुद्रो द्रवात्मकोऽसि विश्वविच्चासि। किंच, तव विधर्मणि विधारणे पञ्च प्रदिशः प्रकृष्टा दिशो भवन्तीति शेषः। त्वं द्यां च दिवं च पृथिवीं च अति जभ्रिषे बिभर्षि। हे पवमान, सूर्यः देवः तव ज्योतींषि आप्याययति। ऋसा.

अपहृतब्राह्मणजायायाः पुनर्दाता सोमो राजा

[3]सोमो राजा प्रथमो ब्रह्मजायां
पुनः प्रायच्छदहृणीयमानः।
अन्वर्तिता वरुणो मित्र आसी-
दग्निर्होता हस्तगृह्या निनाय॥

प्रथमः मुख्यः सोमो राजा अहृणीयमानः पापापगमनेनालज्जमानः सन् तामेनामकिल्बिषां ब्रह्मजायां पुनः बृहस्पतये प्रायच्छत्। ततः वरुणः अन्वर्तिता। ऋतिः सौत्रो धातुः घृणायां वर्तते। तस्य तृचि रूपम्। सोममनुमोदयिता आसीत्। सर्वथा त्वं परिगृह्णाणेति दयामकार्षीत्। तथा मित्रः च। अनन्तरं होता देवाना-

(१) ऋसं. ९।८६।२८.

(२) ऋसं. ९।८६।२९.

(३) ऋसं. १०।१०९।२; असं. ५।१७।२.

माह्वाता मनुष्याणां होमनिष्पादको वा अग्निः हस्तगृह्य तां हस्ते गृहीत्वा आ निनाय आनैषीत् प्रादादित्यर्थः।

ऋसा.

युद्धे जयार्थं देवैः सोमो राजा कृतः

**[१]ते देवा अब्रुवन्– अराजतया वै नो जयन्ति, राजानं करवामहा इति। तथेति ते सोमं राजानमकुर्वन्। ते सोमेन राज्ञा सर्वा दिशोऽजयन्॥**

इदानीं सोमस्य जयहेतुत्वं दर्शयति– ते देवा इति। ते देवाः परस्परमेवमब्रुवन्– अस्माकं राजाभावात् प्राच्यादिदिक्षु पराजय आसीत्, असुराणां जय आसीत्। ततो राजानं संपादयामः इति विचार्य सोममेव राजानं कृत्वा प्राच्यादिदिक्षु जयं प्राप्ताः। ऐब्रासा.

---

## यमः

यमो राजा

**[२]परेयिवांसं प्रवतो महीरनु**
**बहुभ्यः पन्थामनुपस्पशानम्।**
**वैवस्वतं संगमनं जनानां**
**यमं राजानं हविषा दुवस्य॥**

हे मदीयान्तरात्मन् यजमान वा, त्वं राजानं पितॄणां स्वामिनं यमं हविषा पुरोडाशादिना दुवस्य परिचर। कीदृशम्? प्रवतः प्रकृष्टकर्मवतः भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान् महीः तत्तद्भोगोचितभूप्रदेशविशेषान् अनु परेयिवांसं क्रमेण मरणादूर्ध्वं प्रापितवन्तं तथा बहुभ्यः स्वर्गार्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतार्थे पन्थां स्वर्गस्योचितं मार्गं अनुपस्पशानं अबाधमानम्। पापिन एव पुरुषान् स्वर्गमार्गबाधेन नरकं प्रापयति न तु पुण्यकृत इत्यर्थः। वैवस्वतं विवस्वतः सूर्यस्य पुत्रं जनानां पापिनां संगमनं गन्तव्यस्थानरूपम्। ऋसा.

(१) ऐब्रा. ३।३.

(२) ऋसं. १०।१४।१; असं. १८।१।४९ महीरनु (महीरिति) दुवस्य (सपर्यत); मैसं. ४।१४।१६ (२३४); तैआ. ६।१।१ परेयि (परेयु) मनुप (मनप) दुवस्य (दुवसत); आश्रौ. २।१९; नि. १०।२०.

**[१]यमो नो गातुं प्रथमो विवेद**
**नैषा गव्यूतिरपभर्तवा उ।**
**यत्रा नः पूर्वे पितरः परेयु-**
**रेना जज्ञानाः पथ्या३ अनु स्वाः॥**

प्रथमः सर्वेषां मुख्यः यमः नः अस्माकं प्रजानां गातुं शुभाशुभनिमित्तं विवेद जानाति। एषा गव्यूतिः न अपभर्तवा उ। अतिशयज्ञानयोगात् यमस्य न केनचिदपहर्तुं अपनेतुं शक्यते इत्यर्थः। यत्र यस्मिन् मार्गे नः अस्माकं पूर्वे पितरः परेयुः एना अनेन मार्गेण गच्छन्तः जज्ञानाः जाताः सर्वे स्वाः स्वभूताः पथ्याः स्वकर्ममार्गभूताः गतीः अनु गच्छन्ति। ऋसा.

यमः वैवस्वतो राजा

**[२]यद्यामं चक्रुर्निखनन्तो अग्रे**
**कार्षीवणा अन्नविदो न विद्यया।**
**वैवस्वते राजनि तज्जुहोम्यथ**
**यज्ञियं मधुमदस्तु नोऽन्नम्॥**

कार्षीवणाः कृषिं वनन्ति संभजन्ते इति कृषीवनाः (णाः) शूद्राः। तत्संबन्धिनः कर्मकराः कार्षीवणाः। ते अग्रे पुरा भूमिं निखनन्तः कृषन्तः यत् यामं यमसंबन्धि क्रूरं यत् कर्म चक्रुः कृतवन्तः। तत्र कारणमाह– न विदो न विद्यया इति। यस्मात् ते विद्यया विशेषज्ञानेन नोपलक्षिताः अत एव न विदः न वेदितारः कार्याकार्यविभागज्ञानशून्याः तस्मात् यामं कर्म कृतवन्त इत्यर्थः। यद्वा, अग्रे पुरा भूमिं निखनन्तः असुराः यत् यामं यमसंबन्धि प्राणापहरणनिमित्तं क्रूरं कर्म कृतवन्तः। श्रूयते हि– 'असुरा वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन्' (तैसं. ६।२।११।२) इति। तत् कर्म कार्षीवणाः अज्ञजनाः न विदो न जानन्ति। यतस्ते विद्यया संस्कृतबुद्ध्या न भवन्ति, विशेषज्ञानशून्या इत्यर्थः। तत् तत्र अद्भुतशमने न्यूनाधिकपरिमाणोपेतं तत् आज्यमधुतैलादिकं वैवस्वते विवस्वान् आदित्यः तस्य पुत्रे राजनि ईश्वरे यमे जुहोमि हविष्ट्वेन प्रक्षिपामि। अथ

(१) ऋसं. १०।१४।२; असं. १८।१।५० परेयुरेना (परेता एना); मैसं. ४।१४।१६ (२२९).

(२) असं. ६।११६।१.

अद्भुतशमनानन्तरं यज्ञियं यज्ञार्हं तदन्नं मधुमत् माधुर्योपेतं नः अस्माकं भोक्तुं योग्यमस्तु । असा.

यमो राजा मृतानाम्

[1]यो ममार प्रथमो मर्त्यानां
य: प्रेयाय प्रथमो लोकमेतम् ।
वैवस्वतं संगमनं जनानां
यमं राजानं हविषा सपर्यत ॥

यो यमो राजा मर्त्यानां मरणधर्मणां मनुष्याणां मध्ये स्वयमपि एकः सन् प्रथमः प्रथमभूतो ममार मरणं प्राप्तवान् । मृङ् प्राणत्यागे । एतं लोकं यो यमो राजा प्रथमः प्रथमभूतः प्रेयाय प्रगतवान्, प्रथमं मरणं पश्चात् लोकान्तरप्राप्तिः इत्युभयं यमोपज्ञमासीदित्यर्थः । अत एव यमस्य मनुष्यवत् कामयितृत्वादिकं यागात् राज्यप्राप्तिश्च आम्नायते– 'यमो वा अकामयत । पितॄणां राज्यमभि-जयेयमिति । स एतं यमायापभरणीभ्यश्चरुं निरवपत्' (तैब्रा. ३।१।५।१४) इति । इत्थं यः यमो राजा मरण-पूर्वकं प्रथमं प्रेयाय अस्माल्लोकात् प्रगतो बभूव तं वैवस्वतं विवस्वान् आदित्यः तस्य पुत्रं जनानां जनिमतां प्राणिनां संगमनं संगच्छन्ते अस्मिन्निति संगमनः । अधिकरणे ल्युट् । जनिमद्भिः सर्वैः प्राणिभिः संप्राप्यमित्यर्थः । एवंगुणविशिष्टं यमं राजानं ईश्वरम् । प्राणिकृतसुकृतदुष्कृतानुरूपेण शिक्षाकरमिति यावत् । हविषा आज्यपुरोडाशादिना सपर्यत पूजयत । हे ऋत्विज इति शेषः । सपर पूजायाम् । अथवा प्रथमः प्रथमभावी कल्पादौ वर्तमानो यो जनः प्राणी ममार यश्च जनः प्रथमः कल्पादौ वर्तमानः एतं लोकं यमस्य स्वभूतं प्रेयाय प्रगतवान् । तदाप्रभृति वर्त-मानानां सर्वेषां जनानां संगमनं संप्राप्यं राजानमित्यादि पूर्ववत् । असा.

---

(१) असं. १८।३।१३.

## अश्विनौ

अश्विनौ राजानौ भिषक्तमौ विशां प्रशासकौ, ताभ्यां कृतानि कर्माणि– प्रसवासमर्था धेनुः पयसा पूरिता, वायुः शीघ्रगामी त्रिमन्तुर्विचक्षणश्च कृतः, रेभवन्दनौ उदकादुद्धृत्य पाशेभ्यः मोचितौ, नश्यमाना अन्तकवय्यादयोऽगाधजलात् तारिताः, अत्रिर्दाहात् पुरुकुत्सादयो दारिद्र्याच्च रक्षिताः, अन्धः पङ्गुश्च परावृट् चक्षुष्मान् गमनक्षमश्च कृतः, वृकग्रस्ता वर्तिका मोचिता, सिन्धुर्नदी मधुमती प्रवाहिता रसा च नदी जलेन पूरिता, विश्पला स्त्री युद्धे रक्षिता, दीर्घश्रवा औशिजो वणिक् मधुसंपन्नः कृतः, मन्धाता क्षेत्रपतिः कलिश्च प्राप्तभार्यः कृतः, त्रिशोकं नष्टा गावो लम्भिताः, अतिथिग्वदिवोदासत्रसदस्यु-व्यश्वादीन् युद्धे जयः प्रापितः

[1]ईळे द्यावापृथिवी पूर्वचित्तये-
ऽग्निं घर्मं सुरुचं यामन्निष्टये ।
याभिर्भरे कारमंशाय जिन्वथ-
स्ताभिरू षु ऊतिभिरश्विना गतम् ॥

अहं द्यावापृथिवी द्यावापृथिव्यौ ईळे स्तौमि । किमर्थम्? पूर्वचित्तये पूर्वमेवाश्विनोः प्रज्ञापनाय । ते हि अश्विनोः प्रत्यासन्ने । यद्वा, द्यावापृथिवी अश्विनौ स्तौमि पूर्वचित्तये अन्यदीयात् स्तोत्रात् पूर्वमेवास्मदीयस्य स्तोत्रस्य प्रबोधनाय । तथा चोक्तम्– 'तत्कावश्विनौ द्यावा-पृथिव्यावित्येके' (नि. १२।१) इति । अपि च यामन् यामनि अश्विनोरागमने सति इष्टये तदीययागार्थ-माहवनीयरूपेण स्थापितं अग्निं स्तौमीति शेषः । कीदृशमग्निम्? घर्मं प्रवृञ्जनेन दीप्तं सुरुचं अत एव शोभनकान्तियुक्तम् । हे अश्विनौ, भरे । संग्रामनामैतत् । संग्रामे अंशाय युष्मदीयभागाय जयप्राप्त्यर्थं याभिः ऊतिभिः पालनैः सहागत्य कारम् । कारशब्दः शङ्ख-वाचीत्यभियुक्ताः संगिरन्ते । कारं शब्दकारिणं शङ्खं जिन्वथः मुखेनाऽऽपूरयथः ताभिः तादृशैः ऊतिभिः पालनैः सह । उ इति समुच्चये । अस्मानपि सुष्ठु आ गतं आगच्छतम् । ऋसा.

---

(१) ऋसं. १।११२।१; ऐब्रा. ४।४; शाब्रा. ८।६.

'युवोर्दानाय सुभरा असश्चतो
रथमा तस्थुर्वचसं न मन्तवे ।
याभिर्धियोऽवथः कर्मन्निष्टये
ताभिरू षु ऊतिभिरश्विना गतम् ॥

सुभराः शोभनस्तोत्रभरणाः असश्चतः अन्यत्रानासक्ताः स्तोतारः हे अश्विनौ, युवोः युवयोः रथं आ तस्थुः आतिष्ठन्ति प्राप्नुवन्ति । किमर्थम् ? दानाय युष्मत्कर्तृक-दानार्थं धनलाभायेत्यर्थः । तत्र दृष्टान्तः— वचसं न यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितं मन्तवे बुभुत्सि-तार्थप्रतिपत्तये स्तोतारः प्राप्नुवन्ति तद्वत् । अपि च, कर्मन् कर्मणि इष्टये यागार्थं प्रवृत्तान् धियः ध्यातृन् विशिष्टज्ञानोपेतान् याभिः ऊतिभिः पालनैः अवथः युवां रक्षथः । ताभिरित्यादि पूर्ववत् । ऋसा.

युवं तासां दिव्यस्य प्रशासने
विशां क्षयथो अमृतस्य मज्मना ।
याभिर्धेनुमस्वं[1] पिन्वथो नरा
ताभिरू षु ऊतिभिरश्विना गतम् ॥

हे नरा नेतारावश्विनौ, दिव्यस्य दिवि भवस्य स्वर्ग-समुत्पन्नस्य अमृतस्य सोमस्य पानेनोत्पन्नेन मज्मना बलेन युक्तौ युवं युवां तासां यास्त्रिषु लोकेषु वर्तन्ते तासां सर्वासां विशां प्रजानां प्रशासने प्रकृष्टानुशासने शिक्षणे क्षयथः । ऐश्वर्यकर्माऽयम् । ईशाथे समर्थौ भवथः । यद्वा, मज्मना अन्येषामसाधारणेन बलेन विशां प्रजानां दिविभवस्या-मृतस्य वृष्ट्युदकस्य प्रशासने प्रदाने क्षयथः ईश्वरौ भवथः । अपि च याभिः ऊतिभिः रक्षाभिः अस्वं प्रसवासमर्थां धेनुं गां शयुनाम्ने ऋषये पिन्वथः सिञ्चथः पयसा पूरितवन्ता-वित्यर्थः । ताभिरूतिभिरित्यादि पूर्ववत् । ऋसा.

याभिः परिज्मा तनयस्य मज्मना
द्विमाता तूर्षु तरणिर्विभूषति ।
याभिस्त्रिमन्तुरभवद्विचक्षण-
स्ताभिरू षु ऊतिभिरश्विना गतम् ॥

परिज्मा परितो गन्ता वायुः तनयस्य आत्मीयस्य पुत्रस्याग्नेः । अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सन् जायते । तथा च श्रूयते— 'अथ यः प्राणापानयोः संधिः स व्यानः । अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमन-मप्राणन्ननपानंस्तानि करोति ' ( छाउ. १।३।५ ) इति । यद्वा, सृष्ट्यादौ वायुसकाशादुत्पन्नत्वादग्नेः पुत्रत्वम् । आम्नायते च— ' वायोरग्निः ' ( तैआ. ८।१।१ ) इति । एवं स्वपुत्रस्याग्नेः मज्मना बलेन युक्तः सन् द्विमाता द्वयोर्लोकयोः निर्माता । अग्निः पृथिवीस्थानः, वायुरन्त-रिक्षस्थानः । उभयोर्मिलितयोः उभयनिर्मातृत्वमुपपन्नम् । यद्वा, द्विमातेति तनयस्य विशेषणम् । द्विमातृकस्य द्वाभ्यामरणिभ्यां जातस्य । एवंभूतो वायुः हे अश्विनौ, याभिः ऊतिभिः हेतुभूतैः पालनैः तूर्षु तरीतृषु धावत्सु मध्ये तरणिः अतिशयेन तरीता शीघ्रगामी विभूषति विभवति व्याप्तो भवति । यद्वा, विशेषेण सर्वमलङ्करोति । अपि च त्रिमन्तुः त्रयाणां मन्ता त्रिविधेषु पाकयज्ञहवि-र्यज्ञसोमयज्ञेषु आसादितज्ञानः कक्षीवान् याभिः युष्म-दीयाभिरूतिभिः विचक्षणः विशिष्टज्ञानयुक्तः अभवत् । ताभिः सर्वाभिः ऊतिभिः अस्मानागच्छतम् । ऋसा.

याभी रेभं निवृतं सितमद्भ्य
उद्वन्दनमैरयतं स्वर्दृशे ।
याभिः कण्वं प्र सिषासन्तमावतं
ताभिरू षु ऊतिभिरश्विना गतम् ॥

हे अश्विनौ, याभिः ऊतिभिः रेभं एतत्संज्ञं ऋषिं निवृतं असुरैः कूपे अप्सु निवारितं सितं तदीयैः पाशै-र्बद्धमेवंभूतमृषिं अद्भ्यः सकाशात् उत् ऐरयतं उदगम-यतम् । तथा वन्दनं एतत्संज्ञमृषिं च तथाभूतमुदैरयतम् । किमर्थम् ? स्वः आदित्यं दृशे द्रष्टुम् । अपि च, कण्वं असुरैः अन्धकारे प्रक्षिप्तं सिषासन्तं आलोकं संभक्तु-मिच्छन्तं याभिः ऊतिभिः प्र आवतं प्रकर्षेण अरक्षतम् । ताभिरित्यादि समानम् । ऋसा.

याभिरन्तकं जसमानमारणे
भुज्युं याभिरव्यथिभिर्जिजिन्वथुः ।
याभिः कर्कन्धुं वय्यं च जिन्वथ-
स्ताभिरू षु ऊतिभिरश्विना गतम् ॥

( १ ) ऋसं. १।११२।२–२३.

आरणं अगाधं कूपादि । तत्र असुरैः प्रक्षिप्तं जसमानं तैर्हिंस्यमानं अन्तकं शत्रूणामन्तकरं एतत्संज्ञं राजर्षि हे अश्विनौ, याभिः ऊतिभिः अवथः रक्षथः । तथा भुज्युं सर्वस्य पालकमेतत्संज्ञं समुद्रमध्ये निमग्नं तुग्र्यं तुग्रस्य पुत्रं राजर्षि याभिः ऊतिभिः रक्षणहेतुभूताभिः अव्यथिभिः व्यथारहिताभिः नौभिः जिजिन्वथुः युवामतर्पयतम् । एतच्च मन्त्रान्तरे 'तुग्रो ह भुज्युमश्विनोदमेघे' (ऋसं. १।११६।३) इत्यादिके विस्पष्टयिष्यते । अपि च, कर्कन्धुं वय्यं च एतत्संज्ञकौ चासुरैः पीड्यमानौ याभिः ऊतिभिः जिन्वथः प्रीणयथः । गतमन्यत् । ऋसा.

**याभिः शुचन्तिं धनसां सुषंसदं**
**तप्तं घर्ममोम्यावन्तमत्रये ।**
**याभिः पृश्निगुं पुरुकुत्समावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, धनसां धनस्य संभक्तारं शुचन्तिं एतन्नामानं सुषंसदम् । संसीदन्ति अस्मिन्निति संसत् गृहम् । शोभनसंसदं याभिः ऊतिभिरकुरुतम् । तथा अत्रये याभिश्चोतिभिः तप्तं प्रवृञ्जनेन संतप्तं घर्मं महावीरं ओम्यावन्तं सुखयुक्तं सुखेन स्प्रष्टुं शक्यमकुरुतम् । यद्वा, शतद्वारे यन्त्रगृहे असुरैः पीड्यमानाय घर्मं दीप्तं पीडासाधनमग्निं तप्तं तापकारिणं ओम्यावन्तं सुखवन्तमकुरुतम् । यथा अस्मै सुखं भवति तथा हिमेन उदकेन तमग्निमवारयेथाम् । यास्कपक्षे तु अत्रये हविषामत्त्रेऽग्नये हविरुत्पत्त्यर्थं सूर्यकिरणसंतप्तं घर्मं नैदाघं अहः ओम्यावन्तं तृप्तिहेतुवृष्ट्युदकोपेतं कृतवन्तौ इति योज्यम् । अपि च, याभिः ऊतिभिः पृश्निगुं पुरुकुत्सं च आवतं अरक्षतं ताभिः सर्वाभिः ऊतिभिः अस्मानागच्छतम् । ऋसा.

**याभिः शचीभिर्वृषणा परावृजं**
**प्रान्धं श्रोणं चक्षस एतवे कृथः ।**
**याभिर्वर्तिकां ग्रसितामुञ्चतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे वृषणा कामानां वर्षितारावश्विनौ, याभिः शचीभिः कर्मभिः प्रज्ञाभिर्वा परावृजं एतन्नामकमृषिं पङ्गुं सन्तमपङ्गुमकुरुतम् । तथा अन्धं दृष्टिरहितं सन्तमृज्राश्वमृषिं चक्षसे प्रकाशाय सम्यक् चक्षुषा दर्शनाय याभिरूतिभिः प्र कृथः प्रकर्षेण कुरुथः । याभिश्च श्रोणं विगुणजानुकमेव सन्तमृषिं एतवे गन्तुं प्र कृथः प्रकर्षेण कृतवन्तौ । अपि च, याभिः ऊतिभिः वर्तिकां चटकसदृशस्य पक्षिणः स्त्रियं ग्रसितां वृकेण ग्रस्तां अमुञ्चतं वृकास्यान्निर्मुक्तामकुरुतम् । यास्कपक्षे तु वृकेण विवृतज्योतिष्केण सूर्येण याभिर्ग्रस्तां वर्तिकां प्रत्यहमावर्तमानामुषसं तस्मादमोचयतं इति योज्यम् । ताभिः सर्वाभिः ऊतिभिः अस्मानप्यागच्छतम् । ऋसा.

**याभिः सिन्धुं मधुमन्तमसश्चतं**
**वसिष्ठं याभिरजरावजिन्वतम् ।**
**याभिः कुत्सं श्रुतर्यं नर्यमावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, सिन्धुं स्यन्दनशीलां नदीं मधुमन्तं मधुसदृशेनोदकेन पूर्णां याभिः ऊतिभिः असश्चतं अगमयतं प्रावाहयतमित्यर्थः । हे अजरौ जरारहितावश्विनौ, वसिष्ठं ऋषिं याभिः ऊतिभिः अजिन्वतं अप्रीणयतम् । याभिः च कुत्सादीन् त्रीन् ऋषीन् आवतं अरक्षतम् । ताभिः सर्वाभिरूतिभिः अस्मानपि सुष्ठ्वागच्छतम् ।

ऋसा.

**याभिर्विश्पलां धनसामथर्व्यं**
**सहस्रमीळ्ह आजावजिन्वतम् ।**
**याभिर्वशमश्व्यं प्रेणिमावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, धनसां धनं संभजमानां अथर्व्यं अगच्छन्तीं छिन्नजङ्घात्वेन गन्तुमसमर्थाम् । थर्वतिः गतिकर्मा । विश्पलां एतत्संज्ञामगस्त्यपुरोहितस्य खेलस्य संबन्धिनीं सहस्रमीळ्हे । मीळ्हमिति धननाम । बहुधनोपेते आजौ संग्रामे याभिः ऊतिभिः अजिन्वतं गन्तुं समर्थामकुरुतम् । एतच्च 'चरित्रं हि वेरिवाच्छेदि पर्णं' (ऋसं १।११६।१५) इत्यत्र विस्पष्टयिष्यते । याभिः च अश्व्यं अश्वाख्यस्य पुत्रं प्रेणिं स्तुतेः प्रेरयितारं वशं एतत्संज्ञं ऋषिं आवतं

अरक्षतम् । ताभिः सर्वाभिः ऊतिभिः सह अस्मानप्यागच्छतम् । ऋडसा.

**याभिः सुदानू औशिजाय वणिजे**
**दीर्घश्रवसे मधु कोशो अक्षरत् ।**
**कक्षीवन्तं स्तोतारं याभिरावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

उशिक्संज्ञा दीर्घतमसः पत्नी तस्याः पुत्रो दीर्घश्रवा नाम कश्चिदृषिः अनावृष्ट्यां जीवनार्थमकरोत् वाणिज्यम् । स च वर्षणार्थमश्विनौ तुष्टाव । तौ च अश्विनौ मेघं प्रेरितवन्तौ । अयमर्थः पूर्वार्धे प्रतिपाद्यते । हे सुदानू शोभनदानावश्विनौ, औशिजाय उशिक्पुत्राय वणिजे वाणिज्यं कुर्वते दीर्घश्रवसे एतत्संज्ञाय ऋषये याभिः युष्मदीयाभिः ऊतिभिः हेतुभूताभिः कोशः मेघः मधु माधुर्योपेतं वृष्टिजलं अक्षरत् असिञ्चत् युष्मत्प्रसादात् अपेक्षिता वृष्टिर्जातेत्यर्थः । अपि च, उशिजः पुत्रं स्तोतारं कक्षीवन्तं एतत्संज्ञमृषिं याभिः ऊतिभिः आवतं अरक्षतं ताभिः सर्वाभिः ऊतिभिः सह अस्मानप्यागच्छतम् । ऋडसा.

**याभी रसां क्षोदसोद्गः पिपिन्वथु-**
**रनश्वं याभी रथमावतं जिषे ।**
**याभिस्त्रिशोक उस्रिया उदाजत**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

' रसा नदी भवति रसतेः शब्दकर्मणः ' ( नि. ११। २५ ) इति यास्कः । हे अश्विनौ, याभिः ऊतिभिः हेतुभूताभिः रसां नदीं अनावृष्ट्या जलरहितां क्षोदसा कुलानि संपिंषता उद्गः उदकेन पिपिन्वथुः युवां पूरितवन्तौ । तथा अनश्वं अश्वैर्वियुक्तमात्मीयं रथं जिषे जेतुं याभिः ऊतिभिः आवतं अगमयतम् । अपि च, याभिः ऊतिभिः कण्वपुत्रः त्रिशोकः ऋषिः उस्रियाः अपहृता गाः उदाजत उदगमयत् असुरसकाशात् लेभे । ताभिः सर्वाभिः ऊतिभिः सह अस्मानप्यागच्छतम् । ऋडसा.

**याभिः सूर्यं परियाथः परावति**
**मन्धातारं क्षैत्रपत्येष्वावतम् ।**
**याभिर्विप्रं प्र भरद्वाजमावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, परावति दूरदेशे स्थितं सूर्यं तमोरूपेण स्वर्भानुनावृतमादित्यं तस्मात्तमसो मोचयितुं याभिः ऊतिभिः परियाथः युवां परितो गच्छथः । तथा मन्धातारं ऋषिं क्षैत्रपत्येषु । क्षेत्राणां पतिः अधिपतिः क्षेत्रपतिः । तत्संबन्धिषु कर्मसु आवतं अरक्षतम् । अपि च, याभिः ऊतिभिः विप्रं मेधाविनं भरद्वाजं ऋषिमन्नप्रदानेन प्र आवतं प्रकर्षेणारक्षतम् । ताभिः सर्वाभिः ऊतिभिः सह रक्षणार्थमस्मानप्यागच्छतम् । ऋडसा.

**याभिर्महामतिथिग्वं कशोजुवं**
**दिवोदासं शम्बरहत्य आवतम् ।**
**याभिः पूर्भिद्ये त्रसदस्युमावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, महां महान्तं अतिथिग्वं अतिथिभिर्गन्तव्यं कशोजुवं असुरभीत्या उदकं प्रवेष्टु गन्तारं एवंभूतं दिवोदासं एतत्संज्ञकं राजर्षिं शम्बरहत्ये । शम्ब आयुधं, तद्युक्तः शम्बरोऽसुरः । तस्य हनने विषयभूते सति याभिः ऊतिभिः आवतं अरक्षतम् । अपि च, याभिः ऊतिभिः पूर्भिद्ये पुराणि नगराणि भिद्यन्तेऽस्मिन्निति पूर्भिद्यः संग्रामः । तस्मिन् त्रसदस्युं एतत्संज्ञकमृषिं पुरुकुत्सपुत्रं आवतं अरक्षतम् । ताभिरित्यादि पूर्ववत् । ऋडसा.

**याभिर्वम्रं विपिपानमुपस्तुतं**
**कलिं याभिर्वित्तजानिं दुवस्यथः ।**
**याभिर्व्यश्वमुत पृथिमावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, वम्रं विखनसः पुत्रमेतत्संज्ञमृषिं विपिपानं विशेषेण पार्थिवं रसं पिबन्तं याभिः ऊतिभिः अरक्षतम् । कीदृशम् ? उपस्तुतं समीपस्थैः सम्यक् स्तुतमिति स्तूयमानम् । तथा वित्तजानिं लब्धभार्यं कलिं एतत्संज्ञमृषिं याभिः ऊतिभिः दुवस्यथः रक्षथः । उत अपि च, व्यश्वं विगताश्वं पृथिं एतत्संज्ञं वैनं राजर्षिं याभिः ऊतिभिः आवतं अरक्षतम् । अन्यत् पूर्ववत् । ऋडसा.

**याभिर्नरा शयवे याभिरत्रये**
**याभिः पुरा मनवे गातुमीषथुः ।**
**याभिः शारीराजतं स्यूमरश्मये**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे नरा नेतारावश्विनौ, पुरा पूर्वस्मिन् काले शयवे एतत्संज्ञकाय ऋषये गातुं दुःखान्निर्गमनलक्षणं मार्गं याभिः ऊतिभिः ईषथुः युवां वाञ्छितवन्तौ कृतवन्तावित्यर्थः । किं तत्? सामर्थ्यात् 'शयवे चिन्नासत्या शचीभिः' (ऋसं. १।११६।२२) इत्यस्यामृचि प्रतिपादितम् । तथा अत्रये ऋषये शतद्वारे यन्त्रगृहे असुरैः पीड्यमानाय संतापकारिणः अग्नेः शीतेनोदकेन शीतकरणलक्षणं गातुं दुःखनिर्गमनहेतुभूतं मार्गं याभिः ऊतिभिर्युवामिष्टवन्तौ । एतच्च 'हिमेनाग्निं घ्रंसमवारयेथां' (ऋसं. १।११६। ८) इत्यादौ प्रसिद्धम् । तथा मनवे एतन्नाम्ने राजर्षये याभिः ऊतिभिः यवादिधान्यवपनादिरूपं गातुं दारिद्र्य-निर्गमनहेतुं मार्गं युवां कृतवन्तौ । तथा च मन्त्रान्तरम्— 'यवं वृकेणाश्विना वपन्ता' (ऋसं. १।११७।२१) इति । अपि च स्यूमरश्मये स्यूतः संबद्धः रश्मिर्दीप्तिर्यस्य तस्मै एतत्संज्ञकाय ऋषये याभिः ऊतिभिः शारीः । शरो नाम वेणुविशेषः । तद्विकारभूता इषूः आजतं शत्रून् प्रति प्रैरयतम् । ताभिरूतिभिरित्यादि पूर्ववत् । ऋसा.

**याभिः पठर्वा जठरस्य मज्मना-**
**ग्निर्नादीदेच्चित इद्धो अज्मन्ना ।**
**याभिः शर्यातमवथो महाधने**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, जठरस्य । 'जठरमुदरं भवति जग्धमस्मिन् ध्रियते' (नि. ४।७) इति यास्कः । जठरोपलक्षितस्य शरीरस्य मज्मना बलेन युक्तः सन् पठर्वा एतत्संज्ञो राजर्षिः अज्मन् । संग्रामनामैतत् । अज्मनि संग्रामे युष्मदीयाभिः याभिः ऊतिभिः आ समन्तात् अदीदेत् अदीप्यत । तत्र दृष्टान्तः— चितः काष्ठैरभिचितः इद्धः यज्ञगृहे ऋत्विग्भिः प्रज्वालितः अग्निर्न, यथा अग्निः प्रकाशते तद्वदित्यर्थः । अपि च शर्यातं मानवमिन्द्रेण सह स्पर्धमानं महाधने । संग्रामनामैतत् । महता धनेनोपेते संग्रामे याभिः ऊतिभिः अवथः रक्षथः । ताभिरित्यादि गतम् ।

ऋसा.

**याभिरङ्गिरो मनसा निरण्यथो-**
**ऽग्रं गच्छथो विवरे गोअर्णसः ।**
**याभिर्मनुं शूरमिषा समावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

अङ्गिरः इत्येतदामन्त्रितं वाक्यात् बहिर्भूतम् । तेन चात्मानं संबोध्य स्तुतावृषिं प्रेरयति । हे अङ्गिरः अङ्गिरसां गोत्रज, त्वमश्विनौ स्तुहि । हे अश्विनौ, मनसा मननीयेन स्तोत्रेण प्रीतौ सन्तौ युवां याभिः ऊतिभिः निरण्यथः स्तोतॄन् नितरां रमयथः । यद्वा, मनसैव करणभूतेन रमयथः । तथा गोअर्णसः गोरूपस्यारणीयस्य धनस्य पणिभिर्गुहायां निहितस्य विवरे विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति याभिः ऊतिभिः सह युवां अग्रं सर्वेभ्यो देवेभ्यः पुरस्तात् गच्छथः । अपि च, शूरं वीर्यवन्तं मनुं इषा पृथिव्यामुप्तेन यवादिधान्यरूपेणान्नेन याभिः ऊतिभिः समावतं सम्यगरक्षतम् । ताभिः सर्वाभिः ऊतिभिः सह अस्मानप्यागच्छतम् ।

ऋसा.

**याभिः पत्नीर्विमदाय न्यूहथुरा**
**घ वा याभिररुणीरशिक्षतम् ।**
**याभिः सुदास ऊहथुः सुदेव्यं१**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, विमदाय एतन्नाम्ने ऋषये याभिः युष्मदीयाभिः ऊतिभिः पत्नीः भार्याः पुरुमित्रस्य दुहितरं न्यूहथुः नितरां युवां प्रापितवन्तौ । घ इति पादपूरणः । तथा याभिः ऊतिभिः अरुणीः अरुणवर्णाः आरोचमाना गाः आ आभिमुख्येन अशिक्षतं अदत्तम् । तथा पिजवनपुत्राय सुदासे कल्याणदानाय राज्ञे सुदेव्यं प्रशस्तं धनं याभिः ऊतिभिः ऊहथुः प्रापितवन्तौ । ताभिरित्यादि गतम् ।

ऋसा.

**याभिः शंताती भवथो ददाशुषे**
**भुज्युं याभिरवथो याभिरध्रिगुम् ।**
**ओम्यावतीं सुभरामृतस्तुभं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, ददाशुषे हवींषि दत्तवते यजमानाय याभिः ऊतिभिः शंताती सुखस्य कर्तारौ भवथः । याभिः च ऊतिभिः भुज्युं तुग्रस्य पुत्रं अवथः । याभिः च अध्रिगुम् । अध्रिगुः देवानां शमिता ‘ अध्रिगुश्चापापश्च । उभौ देवानां शमितारौ ’ ( तैब्रा. ३।६।६।४ ) इति श्रुतेः । अपि च, ऋतस्तुभम् । ऋतं सत्यं स्तोभति उच्चारयतीति ऋतस्तुप् । एतत्संज्ञमृषिं ओम्यावतीम् । ओम्या इति सुखनाम । तद्युक्तां सुभरां सुखेन भरणीयां इषं याभिः ऊतिभिः प्रापयथः । ताभिः सर्वाभिः ऊतिभिः सह अस्मानप्यागच्छतम् । ऋसा.

**याभिः कृशानुमसने दुवस्यथो**
**जवे याभिर्यूनो अर्वन्तमावतम् ।**
**मधु प्रियं भरथो यत्सरड्भ्य-**
**स्ताभिरू षु ऊतिभिरश्विना गतम् ॥**

स्वानादिषु सोमपालेषु मध्ये कृशानुरेकः सोमपालः । तथा च तैत्तिरीयकम्— ‘ हस्त सुहस्त कृशानवेते वः सोमक्रयणाः’ ( तैसं. १।२।७ ) इति । तं कृशानुं असने । इषवोऽस्यन्ते अस्मिन्नित्यसनः संग्रामः । तस्मिन् संग्रामे हे अश्विनौ, याभिः ऊतिभिः दुवस्यथः रक्षथः । तथा याभिः च जवे वेगे प्रवृत्तं यूनः तरुणस्य पुरुकुत्सस्य अर्वन्तं अश्वं आवतं अरक्षतम् । अपि च, यत् मधु क्षौद्रं प्रियं सर्वेषामनुकूलवेद्यं तत् सरड्भ्यः मधुमक्षिकाभ्यः याभिः च ऊतिभिः भरथः संपादयथः । ताभिः सर्वाभिः ऊतिभिः सह अस्मानप्यागच्छतम् । ऋसा.

**याभिर्नरं गोषुयुधं नृषाह्ये**
**क्षेत्रस्य साता तनयस्य जिन्वथः ।**
**याभी रथाँ अवथो याभिरर्वत-**
**स्ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे अश्विनौ, गोषुयुधं गोविषयं युद्धं कुर्वन्तं नरं यज्ञस्य नेतारं यजमानं याभिः ऊतिभिः नृषाह्ये नृभिः सोढव्ये संग्रामे जिन्वथः प्रीणयथः रक्षथः इत्यर्थः । तथा क्षेत्रस्य गृहादिरूपस्य । तनयशब्दो धनवाची । तनयस्य धनस्य च साता सातये संभजनार्थं याभिः ऊतिभिः यजमानं रक्षथः । याभिः च यजमानानां रथान् रक्षथः । तदीयान् अर्वतः अश्वांश्च याभिः अवथः । ताभिः सर्वाभिः ऊतिभिः सह अस्मानप्यागच्छतम् । ऋसा.

**याभिः कुत्समार्जुनेयं शतक्रतू**
**प्र तुर्वीतिं प्र च दभीतिमावतम् ।**
**याभिर्ध्वसन्तिं पुरुषन्तिमावतं**
**ताभिरू षु ऊतिभिरश्विना गतम् ॥**

हे शतक्रतू बहुविधकर्माणावश्विनौ, आर्जुनेयम् । अर्जुन इतीन्द्रस्य नाम । तथा च वाजसनेयकम्— ‘ एतद्वा इन्द्रस्य गुह्यं नाम यदर्जुनः ’ इति । तस्य पुत्रं कुत्सं याभिः ऊतिभिः प्र आवतं प्रकर्षेणारक्षतम् । तथा तुर्वीतिं दभीतिं च याभिः ऊतिभिः प्र आवतम् । अपि च, याभिः ध्वसन्तिं एतत्संज्ञं पुरुषन्तिं एतन्नामानं च ऋषिं आवतं अरक्षतम् । ताभिः सर्वाभिः ऊतिभिः सह अस्मानपि सुष्ठु आगच्छतम् । ऋसा.

**[1]अप्नस्वतीमश्विना वाचमस्मे**
**कृतं नो दस्रा वृषणा मनीषाम् ।**
**अद्यूत्येऽवसे नि ह्वये वां**
**वृधे च नो भवतं वाजसातौ ॥**

हे अश्विनौ, अस्मे अस्माकं वाचं अप्नस्वतीम् । अप्न इति कर्मनाम । विहितैः कर्मभिः संयुक्तां कृतं कुरुतम् । तथा नः अस्माकं मनीषां बुद्धिं हे वृषणा कामानां वर्षकौ, दस्रा शत्रूणामुपक्षपयितारौ अश्विनौ, वेदार्थज्ञानसमर्थां कुरुतम् । अपि च, यस्मात् युवामेवं-गुणविशिष्टौ तस्मात् वां युवां अवसे रक्षणाय नि ह्वये नितरामाह्वये । कदा ? अद्यूत्ये द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे । तस्मिन् काले हि प्रातरनुवाकाश्विन-शस्त्रयोरिदं सूक्तं पठ्यते । आहूतौ च युवां वाजसातौ

( १ ) ऋसं. १।११२।२४; शुसं. ३४।२९; शब्रा. १४।१।३।३३.

वाजस्य अन्नस्य संभजने । यद्वा, संग्राममनामैतत् । संग्रामे नः अस्माकं वृधे वर्धनाय भवतम् । ऋसा.

[1]द्युभिरक्तुभिः परि पातमस्मा-
नरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्ता-
मदितिः सिन्धुः पृथिवी उत द्यौः ॥

हे अश्विनौ, द्युभिः दिवसैः अक्तुभिः रात्रिभिश्च अस्मान् स्तोतॄन् परि पातं परितो रक्षतं सर्वदा अस्मान् रक्षतमित्यर्थः । तथा अरिष्टेभिः अहिंसितैः सौभगेभिः सुभगस्वैः सुभगत्वापादकैर्धनैः अस्मान् रक्षतम् । यदस्माभिः प्रार्थितं नः अस्मदीयं तत् मित्रादयः षड्देवताः ममहन्तां पूजयन्तु । उतशब्दः समुच्चये । ऋसा.

[2]मध्वः सोमस्याश्विना मदाय
प्रत्नो होता विवासते वाम् ।
बर्हिष्मती रातिर्विश्रिता गी-
रिषा यातं नासत्योप वाजैः ॥

हे अश्विनौ, मध्वः मधुना माधुर्योपेतेन सोमस्य सोमेन मदाय युवयोर्मदार्थं प्रत्नः चिरंतनः होता होमनिष्पादको यजमानः वां युवां आ विवासते । विवासतिः परिचरणकर्मा । आङ् मर्यादायाम् । यथाशास्त्रं परिचरति । अपि च, रातिः दातव्यं हविः बर्हिष्मती आस्तीर्णेन बर्हिषा युक्तम्, युष्मदर्थं बर्हिषि आसादितमित्यर्थः । तथा गीः स्तुतिलक्षणा वाक् च विश्रिता ऋत्विक्षु समवेता, तैः स्तुतिरपि क्रियते इत्यर्थः । अतो हे नासत्यावश्विनौ, इषा अस्मभ्यं दातव्येनान्नेन वाजैः बलैश्च सह युवां उप यातं अस्मत्समीपं प्राप्नुतम् । ऋसा.

यो वामश्विना मनसो जवीया-
न्रथः स्वश्वो विश आजिगाति ।
येन गच्छथः सुकृतो दुरोणं
तेन नरा वर्तिरस्मभ्यं यातम् ॥

हे अश्विनौ, वां युवयोः स्वभूतः मनसो जवीयान् मनसोऽप्यतिशयेन वेगवान् स्वश्वः शोभनाश्वः एवंभूतः यः रथः विशः प्रजाः आजिगाति आभिमुख्येन गच्छति । येन रथेन सुकृतः शोभनं यागं कुर्वतो यजमानस्य दुरोणं देवयजनलक्षणं गृहं गच्छथः । हे नरा नेतारावश्विनौ, तेन रथेन अस्मभ्यं अस्माकं वर्तिः वर्तनाधिकरणं गृहं यातं आगच्छतम् । ऋसा.

ऋषिं नरावंहसः पाञ्चजन्य-
मृबीसादत्रिं मुञ्चथो गणेन ।
मिनन्ता दस्योरशिवस्य माया
अनुपूर्वं वृषणा चोदयन्ता ॥

'हिमेनाग्निम्' ( ऋसं. १।११६।८ ) इत्यनयोक्त एवार्थः पुनः प्रकारान्तरेण अनया प्रतिपाद्यते । अतस्तत्रोक्तं सर्वमत्रापि द्रष्टव्यम् । अक्षरार्थस्तु— हे नरौ नेतारौ, वृषणा कामानां वर्षितारौ अश्विनौ, पाञ्चजन्यम् । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । तेषु भवम् । स्वर्भानुना गृहीतममुं सूर्यं मोचयन् अत्रिः सर्वेषां हिताचरणात् तत्रभव इत्युच्यते । तादृशं ऋषिं अंहसः पापरूपात् ऋबीसात् शतद्वारे यन्त्रगृहे अत्रेः पीडार्थं असुरैः प्रक्षिप्तात् तुषाग्नेः सकाशात् गणेन इन्द्रियवर्गेण पुत्रपौत्रादिगणेन वा सह मुञ्चथः अमोचयतम् । किं कुर्वन्तौ ? मिनन्ता शत्रून् हिंसन्तौ दस्योः उपक्षपयितुः अशिवस्य दुःखकारिणः असुरस्य संबन्धिनीः तस्मिन् अत्रौ प्रयुक्ताः मायाः च अनुपूर्वं आनुपूर्व्येण चोदयन्ता प्रेरयन्तौ निवारयन्तौ । ऋसा.

अश्वं न गूळ्हमश्विना दुरेवै-
ऋर्षिं नरा वृषणा रेभमप्सु ।
सं तं रिणीथो विप्रुतं दंसोभि-
र्न वां जूर्यन्ति पूर्व्या कृतानि ॥

नरा नेतारौ, वृषणा कामानां वर्षकौ हे अश्विनौ, दुरेवैः दुष्प्रापैरसुरैः अप्सु कूपस्थेषूदकेषु गूळ्हं निगूढं निखातं रेभं ऋषिं कूपादुन्नीय विप्रुतं विश्लिष्टावयवं तं अश्वं न व्याधितमश्वमिव दंसोभिः आत्मीयैः भैषज्यरूपैः कर्मभिः सं रिणीथः समधत्तम्, सर्वैरवयवैरुपेतमकुरुतमित्यर्थः । वां

(१) ऋसं. १।११२।२५; शुसं. ३४।३०; ऐब्रा. ४।४; शाब्रा. ८।६; तैब्रा. ४।४२।३.

(२) ऋसं. १।११७।१-१५.

युवयोः संबन्धीनि पूर्व्या चिरंतनानि कृतानि कर्माणि न जूर्यन्ति न हि जीर्णानि भवन्ति । ऋसा.

सुषुप्वांसं न निर्ऋतेरुपस्थे
सूर्यं न दस्रा तमसि क्षियन्तम् ।
शुभे रुक्मं न दर्शतं निखात-
मुदूपथुरश्विना वन्दनाय ॥

निर्ऋतिरिति भूनाम । निर्ऋतेः पृथिव्याः उपस्थे उत्सङ्गे सुषुप्वांसं (न) सुप्तवन्तं पुरुषमिव कूपमध्ये शयानं सूर्यं न सूर्यमिव तमसि कूपान्तर्गतान्धकारे क्षियन्तं निवसन्तं सूर्यमिव तेजस्विनमित्यर्थः । शुभे शोभार्थं निर्मितं रुक्मं न रोचमानं सुवर्णमयाभरणमिव दर्शतं दर्शनीयं एवंगुणविशिष्टं कूपे असुरैः निखातं वन्दनाय वन्दनमृषिं हे दस्रा दर्शनीयावश्विनौ, युवां उदूपथुः उद्धृतवन्तौ । ऋसा.

तद्वां नरा शंस्यं पज्रियेण
कक्षीवता नासत्या परिज्मन् ।
शफादश्वस्य वाजिनो जनाय
शतं कुम्भाँ असिञ्चतं मधूनाम् ॥

हे नरा नेतारौ, नासत्यावश्विनौ, परिज्मन् परिगमने अभीष्टस्य प्रापणे निमित्तभूते सति पज्रियेण पज्राणां अङ्गिरसां कुले जातेन कक्षीवता मया वां युवयोः संबन्धि तत् कर्म शंस्यं प्रकर्षेण शंसनीयम् । तच्छब्दश्रुतेः यच्छब्दाध्याहारः । यत् जनाय अपेक्षमाणाय पुरुषाय वाजिनः वेगवतः तदीयस्य अश्वस्य शफात् निर्गतैः मधूनां मधुभिः शतसंख्याकान् कुम्भान् असिञ्चतं अपूरयतम् । सिञ्चतिरत्र पूरणार्थः । यदेतन्मधुना पूरणं तत् शंस्यमित्यर्थः । ऋसा.

युवं नरा स्तुवते कृष्णियाय
विष्णाप्वं ददथुर्विश्वकाय ।
घोषायै चित्पितृषदे दुरोणे
पतिं जूर्यन्त्या अश्विनावदत्तम् ॥

हे नरा नेतारौ अश्विनौ, युवं युवां स्तुवते स्तोत्रं कुर्वते कृष्णियाय कृष्णाख्यस्य पुत्राय विश्वकाय विष्णाप्वं ददथुः । विष्णाप्वं नाम विनष्टं पुत्रं दत्तवन्तौ । घोषा नाम ब्रह्मवादिनी कक्षीवतो दुहिता । सा कुष्ठिनी सती कस्मैचिद्वराय अदत्ता पितृगृहे निषण्णा जीर्णा आसीत् । सा अश्विनोरनुग्रहात् नष्टकुष्ठा सती पतिं लेभे । तदेतदाह– हे अश्विनौ, पित्रा संबद्धे दुरोणे स्वकीयजनकगृहे कुष्ठरोगेण भर्तारमप्राप्य पितृषदे पितृसमीपे निषण्णायै जूर्यन्त्यै जरां प्राप्नुवत्यै घोषायै चित् एतत्संज्ञायै ब्रह्मवादिन्यै अपि रोगोपशमनेन पतिं भर्तारं अदत्तं युवां दत्तवन्तौ । ऋसा.

युवं श्यावाय रुशतीमदत्तं
महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां
यन्नार्षदाय श्रवो अध्यधत्तम् ॥

हे अश्विनौ, युवं युवां श्यावाय कुष्ठरोगेण श्यामवर्णाय ऋषये रुशतीं दीप्तत्वचं स्त्रियं अदत्तं प्रायच्छतम् । अपि च, क्षोणस्य क्षोणाय, यः दृष्टिराहित्येन गन्तुमशक्तः सन् एकस्मिन्नेव स्थाने निवसति तस्मै, कण्वाय ऋषये महः तेजः तैजसं चक्षुरिन्द्रियं, अदत्तमिति शेषः । तथा हे वृषणा कामानां वर्षितारौ, वां युवयोः तत् कृतं कर्म प्रवाच्यं प्रकर्षेण वाचनीयं शंसनीयम् । नार्षदाय नृषदः पुत्राय बधिराय ऋषये श्रवः श्रवणेन्द्रियं यत् अध्यधत्तं दत्तवन्तौ स्थ इति यत् तदित्यर्थः । अपर आह–ब्राह्मण्यस्य परीक्षार्थमसुराः कण्वमृषिं गूढे तमसि निदधुः, ‘ अत्रैव स्थितः सन् व्युष्टामुषसं विजानीहि यदि त्वं ब्राह्मणोऽसि ’ इति । तमश्विना आगत्योचतुः– ‘ व्युष्टायां हर्म्यस्य उपरि वीणां वादयन्तौ आवां आगमिष्यावः । तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि ’ । तदेतत्प्रतिपाद्यते– हे वृषणा कामानां वर्षितारावश्विनौ, वां युवयोः तत्कृतं कर्म प्रवाच्यं प्रशंसनीयं यन्नार्षदाय नृषदः पुत्राय कण्वाय क्षोणस्य । क्षोणः शब्दकारी वीणाविशेषः । महः महतः क्षोणस्य श्रवः शब्दं अध्यधत्तं उषसो विज्ञानार्थं अधिकमकुरुतम् । ऋसा.

पुरू वर्पांस्यश्विना दधाना
नि पेदव ऊहथुराशुमश्वम् ।
सहस्रसां वाजिनमप्रतीत-
महिहनं श्रवस्यं१ तरुत्रम् ॥

हे अश्विनौ, पुरु पुरूणि बहूनि वर्पांसि । रूपनामैतत् । आत्मीयैः कर्मभिः कृतानि रूपाणि दधाना धारयन्तौ युवां

आशुं शीघ्रगामिनं अश्वं पेदवे पेदुनाम्ने स्तुवते नि ऊहथुः नितरां प्रापितवन्तौ, दत्तवन्तावित्यर्थः। कीदृश-मश्वम्? सहस्रसां सहस्रसंख्याकस्य धनस्य सनितारं दातारं वाजिनं बलवन्तं अत एव अप्रतीतं शत्रुभिरप्रतिगतं अहिहनं अहीनां आगत्य हन्तॄणां शत्रूणां शत्रून् वा हन्तारम्। श्रवस्यम्। श्रवः श्रवणीयं स्तोत्रम्। तत्र भवम्, स्तुतिविषयमित्यर्थः। तरुत्रं तरितारम्। ऋसा.

**एतानि वां श्रवस्या सुदानू**
**ब्रह्माङ्गूषं सदनं रोदस्योः।**
**यद्वां पज्रासो अश्विना हवन्ते**
**यातमिषा च विदुषे च वाजम्॥**

हे सुदानू शोभनदानौ अश्विनौ, वां युवयोः संबन्धीनि एतानि समनन्तरोक्तानि वीर्याणि श्रवस्या श्रवणीयानि सर्वैर्ज्ञातव्यानि भवन्ति। तदर्थं रोदस्योः द्यावापृथिव्या-त्मना वर्तमानयोः युवयोः। उक्तं च यास्केन— 'तत्का-वश्विनौ द्यावापृथिव्यावित्येके' (नि. १२।१) इति। तथा च तैत्तिरीयकम्— 'इमे अश्विना संवत्सरोऽग्निर्वैश्वा-नरः' (तैसं. ५।६।४।१) इति। तयोः युवयोः सदनं स्तोतृसमीपे निवेशनं प्रसादनहेतुभूतं वा आङ्गूषं आघो-षणीयं ब्रह्म मन्त्ररूपं स्तोत्रं निष्पन्नमिति शेषः। यत् यदा पज्रासः अङ्गिरसां गोत्रोत्पन्ना यजमानाः हे अश्विनौ, वां युवां हवन्ते स्तुतिभिः आत्मरक्षणार्थं आह्वयन्ति, तदानीं इषा दातव्येनान्नेन सह आ यातं आगच्छतं च विदुषे युष्मद्विषयं स्तोत्रं जानते मह्यं च वाजं अन्नं बलं वा प्रयच्छतमिति शेषः। ऋसा.

**सूनोर्मानेनाश्विना गृणाना**
**वाजं विप्राय भुरणा रदन्ता।**
**अगस्त्ये ब्रह्मणा वावृधाना**
**सं विश्पलां नासत्यारिणीतम्॥**

भुरणा भर्तारौ पोषकौ, नासत्या सत्यस्वभावौ हे अश्विनौ, सूनोः कुम्भात् प्रसूतस्य अगस्त्यस्य खेलपुरो-हितस्य संबन्धिना मानेन स्तुत्यस्य परिच्छेदकेन स्तोत्रेण गृणाना स्तूयमानौ विप्राय मेधाविने भरद्वाजाय ऋषये वाजं अन्नं रदन्ता विलिखन्तौ निष्पादयन्तौ युवां विश्पलां संग्रामे छिन्नजङ्घां खेलस्य संबन्धिनीं स्त्रियं सं अरिणीतं पुनः आयस्या जङ्घया समयोजयतम्। तृतीयेन पादेन प्रथमपादोक्तोऽर्थो विव्रियते। अगस्त्ये ऋषौ ब्रह्मणा मन्त्ररूपेण स्तोत्रेण ववृधाना प्रवर्धितौ इति। ऋसा.

**कुह यान्ता सुष्टुतिं काव्यस्य**
**दिवो नपाता वृषणा शयुत्रा।**
**हिरण्यस्येव कलशं निखात-**
**मुदूपथुर्दशमे अश्विनाहन्॥**

पुरा खलु उशनसः स्तुतिं गच्छन्तावश्विनौ मार्गमध्ये कूपे पतितं रेभं दृष्ट्वा तं कूपादुदतारयताम्। तदानीम-श्विभ्यां गन्तव्यं काव्यस्य निवासस्थानमजानन् ऋषिः अश्विनौ पृच्छति। हे दिवो नपाता द्योतमानस्य सूर्यस्य पुत्रौ, वृषणा कामाभिवर्षकौ अश्विनौ, कुह कुत्र शयुत्रा शयने निवासस्थाने वर्तमानस्य काव्यस्य भार्गवस्य सुष्टुतिं शोभनां स्तुतिं श्रोतुं यान्ता गच्छन्तौ। यद्वा, शयुत्रा इत्येतत् अश्विनोर्विशेषणम्। शयुनाम्नस्त्रायकौ युवाम्। हिरण्यस्येव कलशं, यथा हिरण्यपूरितं कलशं भूम्यां निक्षिप्तं सर्वैः दुर्ज्ञातं कश्चिदभिज्ञः उद्धरति एवम-सुरैः कूपे निखातं दश रात्रीः नवाहानि च तत्रैव निवसन्तं रेभमवगत्य दशमे अहन् अहनि उदूपथुः कूपात् उन्नीत-वन्तौ। किं तन्निवासस्थानमिति प्रश्नः। रेभस्य अनुक्ता-वपि 'दश रात्रीरशिवेन' (ऋसं. १।११६।२४) इति मन्त्रान्तरसामर्थ्यात् प्रतीतिः। यद्वा, काव्यस्य स्तुतिं प्रति गच्छन्तौ युवां कुह कस्मिन् स्थाने रेभं (युवां?) उन्नि-न्यथुः इति प्रश्नः। ऋसा.

**युवं च्यवानमश्विना जरन्तं**
**पुनर्युवानं चक्रथुः शचीभिः।**
**युवो रथं दुहिता सूर्यस्य**
**सह श्रिया नासत्यावृणीत॥**

हे अश्विनौ, युवं युवां शचीभिः आत्मीयैः भैषज्य-लक्षणैः कर्मभिः जरन्तं जीर्यन्तं च्यवानं स्तुतीनां च्यावयि-तारं एतत्संज्ञं ऋषिं (पुनर्)युवानं पुनर्यौवनोपेतं

चक्रथुः कृतवन्तौ । अपि च हे नासत्यौ अश्विनौ, युवोः युवयोः रथं सूर्यस्य दुहिता सूर्याख्या श्रिया सह ऋक्सहस्वरूपया संपदा कान्त्या वा सह अवृणीत समभजत, आगत्य आरूढवतीत्यर्थः । 'आ वां रथं दुहिता' ( ऋसं. १।११६।१७ ) इत्यत्र लिखितमाख्यानं अत्रापि द्रष्टव्यम् । ऋसा.

युवं तुग्राय पूर्व्येभिरेवैः
पुनर्मन्यावभवतं युवाना ।
युवं भुज्युमर्णसो निः समुद्रा-
द्विभिरूहथुर्ऋज्रेभिरश्वैः ॥

हे युवाना दुःखानां यावयितारौ अश्विनौ, युवं युवां पूर्व्येभिः । पुराणनामैतत् । पूर्वकालीनैः चिरंतनैः एवैः स्तुत्यं प्रति गन्तृभिः स्तोत्रैः तुग्राय भुज्योर्जनकस्य संबन्धिभिः पुनर्मन्यौ यथा भुज्योः समुद्रगमनात्पूर्वं युवां स्तोतव्यौ तथा पुनरपि इदानीं स्तोतव्यौ अभवतम् । यदा युवां समुद्रमध्ये सेनया सह निमग्नं भुज्युं तुग्रस्य पुत्रं अर्णसः अर्णस्वतः प्रौढोदकयुक्तात् समुद्रात् अम्बुराशेः सकाशात् विभिः गन्तृभिः नौभिः ऋज्रेभिः शीघ्रगतियुक्तैः अश्वैः च निरूहथुः निर्गमय्य पितृसमीपं प्रापितवन्तौ, तदानीं पुनरप्यतिशयेन स्तोतव्यौ जातावित्यर्थः । 'तुग्रो ह भुज्युम्' ( ऋसं. १।११६।३ ) इत्यत्रोक्तमाख्यानं अत्राप्यनुसंधेयम् । ऋसा.

अजोहवीदश्विना तौग्र्यो वां
प्रोळ्हः समुद्रमव्यथिर्जगन्वान् ।
निष्टमूहथुः सुयुजा रथेन
मनोजवसा वृषणा स्वस्ति ॥

हे अश्विनौ, वां युवां तौग्र्यः तुग्रपुत्रः प्रोळ्हः पित्रा प्रापितः समुद्रं अब्धिं जगन्वान् भुज्युः उदके निमग्नोऽपि अव्यथिः व्यथां पीडां अप्राप्त एव सन् अजोहवीत् स्तुतिभिराह्वयत् । तं आह्वातारं हे मनोजवसा मनोवद्वेगयुक्तौ, वृषणा कामाभिवर्षकावश्विनौ, सुयुजा सुष्ठ्वश्वैर्युक्तेन रथेन स्वस्ति क्षेमं यथा भवति तथा निरूहथुः, जलान्निर्गमय्य युवां पितृगृहं प्रापितवन्तौ । ऋसा.

[१]अजोहवीदश्विना वर्तिका वा-
मास्नो यत्सीममुञ्चतं वृकस्य ।
वि जयुषा ययथुः सान्वद्रे-
र्जातं विष्वाचो अहतं विषेण ॥

'आस्नो वृकस्य' ( ऋसं. १।११६।१४ ) इत्यर्धर्चे यदुक्तं तदत्र पूर्वार्धेन प्रतिपाद्यते । वर्तिका चटकसदृशस्य पक्षिणः स्त्री वृकेण अरण्यश्वुना ग्रस्ता सती हे अश्विनौ, वां युवां तदा अजोहवीत् आहूतवती यत्सीं यदा खलु वृकस्य आस्नः आस्यात् अमुञ्चतं वर्तिकां अमोचयतम् । अपि च, युवां जयुषा जयशीलेन रथेन अद्रेः पर्वतस्य सानु समुच्छ्रितप्रदेशं वि ययथुः शत्रुभिरावेष्टितं जाहुषाख्यं स्तोतारं शत्रुसमूहान्निर्गमय्य तेन सह अन्यैर्गन्तुमशक्यं पर्वताग्रं गतवन्तावित्यर्थः । तदुक्तं 'परिविष्टं जाहुषम्' ( ऋसं. १।११६।२० ) इत्यत्र । तथा विष्वाचः विविधगतियुक्तस्य एतत्संज्ञस्य असुरस्य जातं उत्पन्नमपत्यं विषेण क्ष्वेडेन अहतं युवां हतवन्तौ । यद्वा, वर्तते प्रतिदिवसमावर्तते इति वर्तिका उषाः । वृक इति विवृतज्योतिष्कः सूर्य उच्यते । तेन ग्रस्ता सती सा हे अश्विनौ, युवां अजोहवीत् आह्वयत् । यदा खलु युवां वृकस्य सूर्यस्य आस्नः आस्यस्थानीयान्मण्डलात् अमुञ्चतं अमोचयतम् । सूर्येण एकीभूतामुषसं पृथक्कृत्य उदयात्पूर्वं रात्रेरपरभागे स्थापितवन्तावित्यर्थः । तथा च यास्कः— 'आदित्योऽपि वृक उच्यते यदावृङ्क्ते । आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता तामश्विनौ प्रमुमुचतुरित्याख्यानम्' (नि. ५।२१) इति । अपि च, जयुषा जयशीलेन रथेन अद्रेर्मेघस्य सानु समुच्छ्रितप्रदेशं वृष्टिचिकीर्षया विशेषेण ययथुः युवां गतवन्तौ । गत्वा च विष्वाचो विविधगतियुक्तस्य मेघस्य संबन्धिना विषेण उदकेन जातमुत्पन्नं सर्वं भूतजातं अहतं अगमयतम् , वृष्टिं कृतवन्तावित्यर्थः । ऋसा.

[२]शतं मेषान्वृक्ये मामहानं
तमः प्रणीतमशिवेन पित्रा ।
आक्षी ऋज्राश्वे अश्विनावधत्तं
ज्योतिरन्धाय चक्रथुर्विचक्षे ॥

---

( १ ) ऋसं. १।११७।१६; नि. ५।२१.
( २ ) ऋसं. १।११७।१७–२०.

'शतं मेषान्वृक्ये चक्षदानम्' (ऋसं. १।११६।१६) इत्यत्र यदाख्यानमवादिष्म तदत्राप्यनुसंधेयम्। शतं शतसंख्याकान् मेषान् वृक्ये वृकीरूपेणावस्थिताय अश्विनोर्वाहनाय रासभाय ममहानं पूजितवन्तं आहारार्थं समर्पितवन्तं अशिवेन असुखकारिणा पित्रा स्वकीयेन जनकेन तमः दृष्टिराहित्येन कृतं आन्ध्यं प्रणीतं प्रापितं ऋज्राश्वं चक्षुष्मन्तं अश्विनावकुरुतामिति शेषः। एतदेव विशदयति– हे अश्विनौ, अक्षी पितृशापान्नष्टे चक्षुषी ऋज्राश्वे एतत्संज्ञके राजर्षौ आ अधत्तं पुनर्दर्शनसमर्थे अकुरुतम्। एतदेवाह– अन्धाय दृष्टिहीनाय ज्योतिः प्रकाशकं चक्षुः विचक्षे विविधं जगद्द्रष्टुं चक्रथुः युवां कृतवन्तौ। ऋसा.

**शुनमन्धाय भरमह्वयत्सा**
**वृकीरश्विना वृषणा नरेति।**
**जारः कनीनइव चक्षदान**
**ऋज्राश्वः शतमेकं च मेषान्॥**

शुनं इति सुखनाम। भरं पोषणहेतुभूतं चक्षुरिन्द्रियेण निष्पाद्यं सुखं अन्धाय दृष्टिहीनाय तस्मै ऋज्राश्वाय इच्छन्ती सा वृकीः हे अश्विनौ अश्वयुक्तौ कृत्स्नं जगत् व्याप्नुवन्तौ वा, वृषणा हे वृषणौ कामानां वर्षितारौ, इति एवं संबोध्य नरा नेतारौ अश्विनौ अह्वयत् आहूतवती। आह्वयन्त्यास्तस्याः कोऽभिप्राय इति चेत् तदुच्यते– कनीनइव यथा प्राप्तयौवनः कामुकः जारः पारदारिकः सन् परस्त्रियै सर्वं धनं प्रयच्छति एवं ऋज्राश्वः मह्यं शतमेकं च एकोत्तरशतसंख्याकान् मेषान् पौरजनानां स्वभूतानपहृत्य चक्षदानः शकलीकुर्वन् प्रादात्। तेन ईदृशीं दुर्दशां प्राप्तः इति। ऋसा.

**मही वामूतिरश्विना मयोभू-**
**रुत स्रामं धिष्ण्या सं रिणीथः।**
**अथा युवामिदह्वयत्पुरन्धि-**
**रागच्छतं सीं वृषणाववोभिः॥**

हे अश्विनौ, वां युवयोः मही महती ऊतिः पालनं मयोभूः मयसः सुखस्य भावयित्री। उत अपि च हे धिष्ण्या। धिषणा स्तुतिलक्षणा वाक्। तया स्तोतव्यौ स्रामं व्याधितं पुरुषं विश्लिष्टाङ्गं अन्त्यादिकं सं रिणीथः संगतावयवं कुरुथः। अथ अपि च युवामित् युवामेव पुरन्धिः बहुधीः घोषा विश्पला वा अह्वयत् रोगोपशमनार्थं आहूतवती। हे वृषणौ कामानां वर्षितारौ अश्विनौ, अवोभिः रक्षणैः सह आगच्छतं आभिमुख्येन सीं एनां प्राप्तवन्तौ। ऋसा.

**अधेनुं दस्रा स्तर्यं[1] विषक्ता-**
**मपिन्वतं शयवे अश्विना गाम्।**
**युवं शचीभिर्विमदाय जायां**
**न्यूहथुः पुरुमित्रस्य योषाम्॥**

हे दस्रा दर्शनीयौ अश्विनौ, विषक्तां विशेषेण सक्तावयवां कृशावयवामित्यर्थः। अत एव स्तर्यं निवृत्तप्रसवां अत एव अधेनुं अदोग्ध्रीं एवंभूतां गां शयवे एतत्संज्ञाय ऋषये अपिन्वतं पयसा अपूरयतम्। अपि च, पुरुमित्रस्य। पुरुमित्रो नाम कश्चिद्राजा। तस्य योषां कुमारीं शचीभिः आत्मीयैः कर्मभिः विमदाय एतत्संज्ञाय ऋषये शत्रुभिः सह योद्धुमशक्ताय युवां न्यूहथुः विमदस्य गृहं प्रापितवन्तौ। ऋसा.

**'यवं वृकेणाश्विना वपन्तेषं**
**दुहन्ता मनुषाय दस्रा।**
**अभि दस्युं बकुरेणा धमन्तोरु**
**ज्योतिश्चक्रथुरार्याय॥**

आर्याय विदुषे'। मनुषशब्दो मनुशब्दपर्यायः। मनुषाय मनवे मनोरर्थं हे दस्रा दर्शनीयावश्विनौ, वृकेण लाङ्गलेन कर्षकैः कृष्टदेशे यवं यवाद्युपलक्षितं सर्वं धान्यजातं वपन्ता वापयन्तौ, तथा इषम्। अन्ननामैतत्। तत्कारणभूतं वृष्ट्युदकं च दुहन्ता मेघात् क्षारयन्तौ, तथा दस्युं उपक्षयकारिणमसुरपिशाचादिकं बकुरेण। बकुरो भासमानो वज्रः। तेन अभि धमन्ता। धमतिर्वधकर्मा। अभिघ्नन्तौ एवं त्रिविधं कर्म कुर्वन्तौ युवां उरु विस्तीर्णं ज्योतिः स्वकीयं तेजो माहात्म्यं चक्रथुः कृतवन्तौ,

(१) ऋसं. १।११७।२१; नि. ६।२६.

दर्शितवन्तावित्यर्थः । यद्वा, त्रिविधकर्माचरणेनार्याय विदुषे मनवे विस्तीर्णं सूर्याख्यं ज्योतिः चक्रथुः कृतवन्तौ । जीवन् हि सूर्यं पश्यति । तद्धेतुभूतानि त्रीणि कर्माणि युवाभ्यां कृतानि इति भावः । अत्र निरुक्तम्– 'बकुरो भास्करो भयंकरो भासमानो द्रवतीति वा'। 'यवमिव वृकेणाश्विनौ निवपन्तौ वृको लाङ्गलं भवति विकर्तनात्' ( नि. ६।२६ ) इत्यादिकमनुसंधेयम् । ऋसा.

[1]आथर्वणायाश्विना दधीचे-
ऽश्व्यं शिरः प्रत्यैरयतम् ।
स वां मधु प्र वोचदृताय-
न्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वाम् ॥

'तद्वां नरा सनये' ( ऋसं. १।११६।१२ ) इत्यत्रोक्तमाख्यानमिहाप्यनुसंधेयम् । हे अश्विनौ, आथर्वणाय अथर्वणः पुत्राय दधीचे दध्यङ्नाम्ने महर्षये अश्व्यं अश्वसंबन्धि शिरः प्रत्यैरयतं प्रत्यधत्तम् । तदीयं मानुषं शिरः प्रच्छिद्य अन्यत्र विधाय अश्व्येन शिरसा तमृषिं समयोजयतमित्यर्थः । सः च वां युवाभ्यां प्रवर्ग्यविद्यां मधुविद्यां च वक्ष्यामीति पुरा कृतां प्रतिज्ञां ऋतायन् सत्यामात्मन इच्छन् मधु मधुविद्यां त्वाष्ट्रं त्वष्टुरिन्द्राल्लब्धं प्र वोचत् प्रोक्तवान् । हे दस्रौ दर्शनीयावश्विनौ, वां युवयोः संबन्धि यत् अपिकक्ष्यं छिन्नस्य यज्ञशिरसः कक्षप्रदेशेन पुनःसंधानभूतं प्रवर्ग्यविद्याख्यं रहस्यं तदपि वां युवाभ्यां प्रावोचदित्यर्थः । ऋसा.

सदा कवी सुमतिमा चके वां
विश्वा धियो अश्विना प्रावतं मे ।
अस्मे रयिं नासत्या बृहन्त-
मपत्यसाचं श्रुत्यं रराथाम् ॥

हे कवी क्रान्तदर्शिनौ मेधाविनावश्विनौ, वां युवयोः सुमतिं कल्याणीं अनुग्रहात्मिकां बुद्धिं सदा सर्वदा आ चके आभिमुख्येन प्रार्थये । मे मदीयानि विश्वाः धियः सर्वाणि कर्माणि युवां प्रावतं प्रकर्षेण रक्षतम् । अपि च, अस्मे अस्मभ्यं हे नासत्यावश्विनौ, बृहन्तं महान्तं अपत्यसाचं अपत्यैः पुत्रादिभिः समवेतं श्रुत्यं प्रशंसनीयं उत्कृष्टं रयिं धनं रराथां प्रयच्छतम् । ऋसा.

हिरण्यहस्तमश्विना रराणा
पुत्रं नरा वध्रिमत्या अदत्तम् ।
त्रिधा ह श्यावमश्विना विकस्त-
मुज्जीवस ऐरयतं सुदानू ॥

रराणा रममाणौ दातारौ वा, नरा नेतारौ हे अश्विनौ, हिरण्यहस्तं नाम पुत्रं वध्रिमत्याः एतत्संज्ञायै ब्रह्मवादिन्यै अदत्तं प्रायच्छतं ह । अपि च, हे सुदानू शोभनदानौ अश्विनौ, त्रिधा त्रेधा विकस्तं विच्छिन्नं श्यावाख्यमृषिं जीवसे जीवितुं उत् ऐरयतम्, असुरैः त्रेधा खण्डितं शरीरं पुनरेकीकृत्य उदगमयतमित्यर्थः । ऋसा.

एतानि वामश्विना वीर्याणि
प्र पूर्व्याण्यायवोऽवोचन् ।
ब्रह्म कृण्वन्तो वृषणा युवभ्यां
सुवीरासो विदथमा वदेम ॥

अश्विना हे अश्विनौ, वां युवयोः संबन्धीनि पूर्व्याणि प्रत्नानि एतानि इदानीं मयोक्तानि वीर्याणि वीरकर्माणि आयवः मनुष्या मदीयाः पित्रादयः प्र अवोचन् उक्तवन्तः । वयं च हे वृषणा कामाभिवर्षकौ अश्विनौ, युवाभ्यां ब्रह्म मन्त्रात्मकं स्तोत्रं कृण्वन्तः कुर्वन्तः सुवीरासः सुवीराः शोभनैः वीरैः पुत्रादिभिरुपेताः सन्तः विदथं यज्ञं आ वदेम आभिमुख्येन स्तुतीः उच्चारयाम । यद्वा, विदथं वेदयन्तं अतिथिं तदपेक्षितप्रदानेन आवदेम आभिमुख्येन प्रियपूर्विकां वाचमुच्चारयाम । ऋसा.

[1]युवं ह स्थो भिषजा भेषजेभि-
रथो ह स्थो रथ्या३ राथ्येभिः ।
अथो ह क्षत्रमधि धत्थ उग्रा
यो वां हविष्मान्मनसा ददाश ॥

हे अश्विनौ, युवं युवां ह खलु भेषजेभिः भेषजैः औषधैः 'भेषजौषधभैषज्यान्यगदो जायुः' 'अगदं तन्त्रौ-( ? तन्त्रमौ- )षधम्' इति चाभिधानात् । तैः भिषजा भिषजौ स्थः । हशब्दः 'अश्विनौ हि देवानां भिषजौ'

( १ ) ऋसं. १।११७।२२–२५.

( १ ) ऋसं. १।१५७।६.

इत्यादिप्रसिद्धिद्योतनार्थः । अथो अपि च रथ्येभिः रथवोढृभिरश्वैः रथ्या रथवन्तौ स्थः । 'आ वां रथो अश्विना' (ऋसं. १।११८।१) इत्यादिप्रसिद्धिद्योतनार्थो हशब्दः । अनयोः रथेन विशेषसंबन्धः 'युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति' ( ऋसं. १।३४।१० ) इत्यादिमन्त्रान्तरेषु प्रसिद्धः । अथो अपि च युवयोः क्षत्रं बलं अधि ह अधिकं खलु । हशब्दः प्रसिद्धौ । यस्मादेवं तस्मात् हे उग्रा उद्गूर्णसामर्थ्यौ अश्विनौ, वां युवाभ्यां यः हविष्मान् आज्यपुरोडाशादिहविर्युक्तो यजमानः मनसा युष्मदायत्तेन चेतसा ददाश ददाति हविरादिकं तं धत्थः धारयथः, अत्यधिकमनुगृह्णीथ इत्यर्थः । प्रभूतबलौ युवां रथमारुह्य अस्मद्देवयजनमागत्य हविष्प्रदं मां धृत्वा अस्मद्यज्ञे अस्मान् विचिकित्सतमिति तात्पर्यार्थः ।　　ऋसा.

[१]न तं राजानावदिते कुतश्चन
　नांहो अश्नोति दुरितं नकिर्भयम् ।
यमश्विना सुहवा रुद्रवर्तनी
　पुरोरथं कृणुथः पत्न्या सह ॥

हे राजानौ ईश्वरौ, अदिते अदीनौ, सुहवौ (?सुहवा) स्वाह्वानौ, रुद्रवर्तनी स्तोत्रयुक्तमार्गौ हे अश्विना अश्विनौ, युवां यं जनं पुरोरथं अग्रतोरथं पत्न्या सह स्वयंवरे कृणुथः कुरुथः तं जनं कुतश्चन कुतोऽपि अंहः पापं न अश्नोति न व्याप्नोति । दुरितं दुर्गतिरपि न अश्नोति । नकिः न च भयं संसारभयं न प्राप्नोति ।　　ऋसा.

———

( १ ) ऋसं. १०।३९।११.

## प्रजापतिः

प्रजापतिः हिरण्यगर्भः जगतः एको राजा

[१]हिरण्यगर्भः समवर्तताग्रे
　भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां
　कस्मै देवाय हविषा विधेम ॥

हिरण्यगर्भः हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः । तथा च तैत्तिरीयकम्— 'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय' ( तैसं. ५।५।१।२ ) इति । यद्वा, हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते । अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत, मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत । यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीनां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते । स च जातः जातमात्र एव एकः अद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिः ईश्वरः आसीत् । न केवलं पतिरासीदेव, अपि तर्हि सः हिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवं उत अपि च इमां अस्माभिर्दृश्यमानां पुरोवर्तिनीमिमां भूमिम् । यद्वा, पृथिवीत्यन्तरिक्षनाम । अन्तरिक्षं दिवं भूमिं च दाधार धारयति । कस्मै । अत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते । यद्वा, सृष्ट्यर्थं कामयते इति कः । यद्वा, कं सुखम् । तद्रूपत्वात् क इत्युच्यते । अथवा, इन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रदाय अहं कः कीदृशः स्यामित्युक्तवान् । स इन्द्रः प्रत्यूचे— 'यदीदं ब्रवीष्यहं कः स्यामिति, तदेव त्वं भव' इति । अतः कारणात् क इति

———

( १ ) **ऋसं.** १०।१२१।१; **असं.** ४।२।७ वीं द्यामुतेमां (वीमुत द्यां ); **तैसं.** ४।१।८।३-४, ४।२।८।२, ५।५।१।२; **कासं.** १६।१५ ( १८४ ), २०।५ ( ९ ), ४०।१ ( १ ); **मैसं.** २।७।१५ ( १९८ ), २।१३।२३ ( ११० ), ३।१२।१६ ( १८ ); **शुसं.** १३।४, २३।१, २५।१०; **ताब्रा.** ९।९।१२ भूतस्य ( भूतानां ) कस्मै देवाय ( तस्मै त इन्दो ); **शब्रा.** १३।५।२।२३; **आश्रौ.** २।१७, ३।८; **आपश्रौ.** १४।२९।१, १६।७।८, १६।२१।४, १६।२२।३, १७।७।१, २०।२।२, २०।१९।१२; **नि.** १०।२३.

प्रजापतिराख्यायते । ' इन्द्रो वै वृत्रं हत्वा सर्वा विजिती-र्विजित्याब्रवीत् ' ( ऐब्रा. ३।२१ ) इत्यादिकं ब्राह्मणमत्रा-नुसंधेयम् । कं प्रजापतिं देवाय देवं दानादिगुणयुक्तं हविषा प्राजापत्यस्य पशोर्वपारूपेणैककपालात्मकेन पुरो-डाशेन वा विधेम वयमृत्विजः परिचरेम । ऋसा.

'य आत्मदा बलदा यस्य विश्व
उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः
कस्मै देवाय हविषा विधेम ॥

यः प्रजापतिः आत्मदाः आत्मनां दाता । आत्मानो हि सर्वे तस्मात् परमात्मन उत्पद्यन्ते । यथाग्नेः सकाशा-द्विस्फुलिङ्गा जायन्ते तद्वत् । यद्वा, आत्मनां शोधयिता । बलदाः बलस्य च दाता शोधयिता वा । यस्य च प्रशिषं प्रकृष्टं शासनमाज्ञां विश्वे सर्वे प्राणिनः उपासते प्रार्थयन्ते सेवन्ते वा । तथा देवा अपि यस्य प्रशासनमुपासते । अपि च अमृतं अमृतत्वम् । भावप्रधानो निर्देशः । यद्वा, अमृतम् । मरणं नास्त्यस्मिन्नित्यमृतं सुधा । तदपि यस्य प्रजापतेः छाया छायेव वर्ति (?) भवति । मृत्युः यमश्च प्राणापहारी छायेव भवति तस्मै । कस्मै देवाय इत्यादि समानं पूर्वेण । हविषा पुरोडाशात्मनेति तु विशेषः । ऋसा.

'यः प्राणतो निमिषतो महित्वैक
इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः
कस्मै देवाय हविषा विधेम ॥

यः हिरण्यगर्भः प्राणतः प्रश्वसतः निमिषतः अक्षि-पक्ष्मचलनं कुर्वतः जगतः जङ्गमस्य प्राणिजातस्य महित्वा महत्त्वेन माहात्म्येन एक इत् अद्वितीय एव सन् राजा बभूव ईश्वरो भवति । अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः चतुष्पदः गवाश्वादेश्च यः प्रजापतिः ईशे ईष्टे । द्वौ पादौ यस्य स द्विपात् । ईदृशो यः प्रजापतिस्तस्मै । कस्मै इत्यादि सुबोधम् । हविषा हृदयाद्यात्मनेत्ययमत्र विशेषः । ऋसा.

'यस्येमे हिमवन्तो महित्वा
यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू
कस्मै देवाय हविषा विधेम ॥

हिमा अस्मिन् सन्तीति हिमवान् । तेन बहुवचना-न्तेन सर्वे पर्वता लक्ष्यन्ते । यथा छत्रिणो गच्छन्तीति । हिमवन्तः हिमवदुपलक्षिता इमे दृश्यमानाः सर्वे पर्वता यस्य प्रजापतेः महित्वा महत्त्वं माहात्म्यमैश्वर्यमिति आहुः । तेन सृष्टत्वात् तद्रूपेणावस्थानाद्वा । तथा रसया । रसो जलम् । तद्वती रसा नदी । जातावेकवचनम् । रसाभि-र्नदीभिः सह समुद्रम् । पूर्ववदेकवचनम् । सर्वान् समुद्रान् यस्य महाभाग्यमिति आहुः कथयन्ति सृष्ट्यभिज्ञाः । यस्य च इमाः प्रदिशः प्राच्यारम्भा आग्नेय्याद्याः कोणदिश ईशितव्याः । तथा बाहू । वचनव्यत्ययः । बाहवो भुजाः । भुजवत्प्राधान्ययुक्ताः प्रदिशश्च यस्य स्वभूताः (?) । तस्मै कस्मै इत्यादि समानं पूर्वेण । ऋसा.

---

( १ ) **ऋसं.** १०।१२१।२; **असं.** ४।२।१, १३।३।२४ यस्य छायामृतं यस्य मृत्युः ( योऽस्येशे द्विपदो यश्चतुष्पदः ); **तैसं.** ४।१।८।४, ७।५।१७।१; **कासं.** ४०।१ ( ३ ) आत्मदा (ओजोदा) छाया ( च्छाया ); **मैसं.** २।१३।२३ ( ११२ ) आत्मदा ( ओजोदा ); **शुसं.** २५।१३ छाया ( च्छाया ).

( २ ) **ऋसं.** १०।१२१।३; **असं.** ४।२।२ क इद्राजा ( को राजा ) य ईशे अस्य द्विपदश्चतुष्पदः ( यस्य च्छायामृतं यस्य मृत्युः ); **तैसं.** ४।१।८।४, ७।५।१६।१; **कासं.** ४।१६ ( १२९ ) तो महित्वैक इद्राजा ( तश्च राजा पतिर्विश्वस्य ) : ४०।१ ( २ ) तो महित्वैक इद्राजा ( तश्च राजा पतिर्विश्वस्य ) य ईशे (ईशे यो ); **मैसं.** २।१३।२३ ( १११ ), ३।१२।१७ ( २० ) **कासं.** ४०।१ ( २ )वत् ; **शुसं.** २३।३, २५।११; **शब्रा.** १३।५।२।७.

( १ ) **ऋसं.** १०।१२१।४; **असं.** ४।२।५ पूर्वार्धे ( यस्य विश्वे हिमवन्तो महित्वा समुद्रे यस्य रसामिदाहुः । ) यस्येमाः ( इमाश्च ); **तैसं.** ४।१।८।४-५; **कासं.** ४०।१ ( ६ ) हिमवन्तो ( विश्वे गिरयो ) यस्य समुद्रं ( समुद्रं यस्य ) तृतीयपादे ( दिशो यस्य प्रदिशः पञ्च देवीः ); **मैसं.** २।१३।२३ ( ११३ ) कासंवत् ; **शुसं.** २५।१२.

**[1]येन द्यौरुग्रा पृथिवी च दृळ्हा**
**येन स्वः स्तभितं येन नाकः ।**
**यो अन्तरिक्षे रजसो विमानः**
**कस्मै देवाय हविषा विधेम ॥**

येन प्रजापतिना द्यौः अन्तरिक्षं उग्रा उद्गूर्णविशेषा गहनरूपा वा । पृथिवी भूमिः च दृळ्हा येन स्थिरीकृता । स्वः स्वर्गश्च येन स्तभितं स्तब्धं कृतम्, यथाऽधो न पतति तथोपरि अवस्थापितमित्यर्थः । तथा नाकः आदित्यश्च येन अन्तरिक्षे स्तभितः । यः च अन्तरिक्षे रजसः उदकस्य विमानः निर्माता तस्मै । कस्मै इत्यादि गतम् । ऋसा.

**[2]यं क्रन्दसी अवसा तस्तभाने**
**अभ्यैक्षेतां मनसा रेजमाने ।**
**यत्राधि सूर उदितो विभाति**
**कस्मै देवाय हविषा विधेम ॥**

क्रन्दितवान् रोदितवान् अनयोः प्रजापतिरिति क्रन्दसी द्यावापृथिव्यौ । श्रूयते हि– 'यदरोदीत् तदनयो रोदस्त्वम्' ( तैब्रा. २।२।९।४ ) इति । ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यं प्रजापतिं मनसा बुद्ध्या अभ्यैक्षेतां आवयोर्महत्त्वमनेन इत्यभ्यपश्येताम् । कीदृश्यौ द्यावापृथिव्यौ ? रेजमाने राजमाने दीप्यमाने । यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्यः उदितः उदयं प्राप्तः सन् विभाति प्रकाशते तस्मै । कस्मै इत्यादि सुज्ञानम् । ऋसा.

**[1]आपो ह यद्बृहतीर्विश्वमायन्**
**गर्भं दधाना जनयन्तीरग्निम् ।**
**ततो देवानां समवर्ततासुरेकः**
**कस्मै देवाय हविषा विधेम ॥**

बृहतीः बृहत्यः महत्यः । अग्निम् । उपलक्षणमेतत् । अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्तीः जनयन्त्यः तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्यः आपो ह आप एव विश्वमायन् सर्वं जगत् व्याप्नुवन् यत् यस्मात् ततः तस्माद्धेतोः देवानां देवादीनां सर्वेषां प्राणिनां असुः प्राणभूतः एकः प्रजापतिः समवर्तत समजायत । यद्वा, यत् यं गर्भं दधाना आपो विश्वात्मनाऽवस्थिताः ततो गर्भभूतात्प्रजापतेः देवादीनां प्राणात्मको वायुरजायत । अथवा, यत् । लिङ्गवचनयोर्व्यत्ययः । उक्तलक्षणा या आपो विश्वमावृत्य स्थिताः ततः ताभ्यः अद्भ्यः सकाशादेकः अद्वितीयः असुः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम तस्मै । कस्मै इत्यादि गतम् । ऋसा.

**[2]यश्चिदापो महिना पर्यपश्य-**
**द्दक्षं दधाना जनयन्तीर्यज्ञम् ।**

---

( १ ) **ऋसं.** १०।१२१।५; **असं.** ४।२।४ ( यस्य द्यौरुर्वी पृथिवी च मही यस्याद उर्व१न्तरिक्षम् । यस्यासौ सूरो विततो महित्वा कस्मै देवाय हविषा विधेम ॥ ); **तैसं.** ४।१।८।५ दृळ्हा येन स्वः ( दृढे येन सुवः ); **कासं.** ४०।१ ( ४ ) नाकः । यो अन्तरिक्षे रजसो विमानः ( नाकम् । यो अन्तरिक्षं विममे वरीयः ); **मैसं.** २।१३।२३ ( ११४ ) तृतीयपादे ( यो अन्तरिक्षं विममे वरीयः ); **शुसं.** ३२।६; **शुसं.** ( **काण्व** ) २९।३३.

( २ ) **ऋसं.** १०।१२१।६; **असं.** ४।२।३ ( यं क्रन्दसी अवतश्चस्कभाने भियसाने रोदसी अह्वयेथाम् । यस्यासौ पन्था रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ); **तैसं.** ४।१।८।५ उदितो विभाति ( उदितौ व्येति ); **कासं.** ४०।१ ( ५ ) ( य इमे द्यावापृथिवी तस्तभाने अधारयद्रोदसी रेजमाने । यस्मिन्नधि विततः सूर एति कस्मै देवाय हविषा विधेम ॥ ); **मैसं.** २।१३।२३ ( ११५ ) ( य इमे द्यावापृथिवी तस्तभाने अधारयद्रोदसी रेजमाने । यस्मिन्नधि विततः सूरा एति कस्मै देवाय हविषा विधेम ॥ ); **शुसं.** ३२।७; **शुसं.** ( **काण्व** ) २९।३४.

( १ ) **ऋसं.** १०।१२१।७; **असं.** ४।२।६ ( आपो अग्रे विश्वमावन्गर्भं दधाना अमृता ऋतज्ञाः । यासु देवीष्वधि देव आसीत्कस्मै देवाय हविषा विधेम ॥ ); **तैसं.** ४।१।८।५–६ यद्बृह ( यन्मह ) गर्भं ( दक्षं ) समव ( निरव ); **कासं.** ४०।१ ( ७ ) यद्बृह ( यन्मह ) समव ( निरव ); **मैसं.** २।१३।२३ ( ११६ ) सुरेकः ( सुः ) शेषं कासंवत् ; **शुसं.** २७।२५; **शुसं.** ( **काण्व** ) २९।३५; **तैआ.** १।२३।८ ( आपो ह यद्बृहतीर्गर्भमायन् । दक्षं दधाना जनयन्तीः स्वयंभुवम् । ) पू.

( २ ) **ऋसं.** १०।१२१।८; **तैसं.** ४।१।८।६ यंज्ञम् ( रग्निम् ); **शुसं.** २७।२६.

**यो देवेष्वधि देव एक आसी-**
**त्कस्मै देवाय हविषा विधेम ॥**

यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीः उत्पादयन्तीः तदर्थं दक्षं प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि दधानाः धारयित्रीः ईदृशीः आपः । व्यत्ययेन प्रथमा । अपः प्रलयकालीनाः महिना महिम्ना । छान्दसो मलोपः । स्वमाहात्म्येन यश्चित् यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान् । यः च देवेष्वधि देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीयः आसीत् भवति तस्मै । कस्मै इत्यादि गतम् । ऋसा.

**[१]मा नो हिंसीज्जनिता यः पृथिव्या**
**यो वा दिवं सत्यधर्मा जजान ।**
**यश्चापश्चन्द्रा बृहतीर्जजान**
**कस्मै देवाय हविषा विधेम ॥**

स प्रजापतिः नः अस्मान् मा हिंसीत् मा बाधताम् । यः पृथिव्याः भूमेः जनिता जनयिता स्रष्टा । यो वा यश्च सत्यधर्मा सत्यं अवितथं धर्म जगतो धारणं यस्य स तादृशः प्रजापतिः दिवं अन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास । यश्च बृहतीः महतीः चन्द्राः आह्लादिनीः अपः उदकानि जजान जनयामास तस्मै । कस्मै इत्यादि गतम् । ऋसा.

**[२]प्रजापते न त्वदेतान्यन्यो**
**विश्वा जातानि परि ता बभूव ।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु**
**वयं स्याम पतयो रयीणाम् ॥**

हे प्रजापते, त्वत् त्वत्तोऽन्यः कश्चित् एतानि इदानीं वर्तमानानि विश्वा विश्वानि सर्वाणि जातानि प्रथमविकारभाञ्जि ता तानि सर्वाणि भूतजातानि न परि बभूव न परिगृह्णाति न व्याप्नोति । त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भावः । परिपूर्वो भवतिः परिग्रहार्थः । वयं च यत्कामाः यत्फलं कामयमानाः ते तुभ्यं जुहुमः हवींषि प्रयच्छामः तत् फलं नः अस्माकं अस्तु भवतु । तथा वयं च रयीणां धनानां पतयः ईश्वराः स्याम भवेम । ऋसा.

प्रजापतिः पतिर्विश्वस्य जगतः

**[१]प्रजापते त्वं निधिपाः पुराणः ।**
**देवानां पिता जनिता प्रजानाम् ।**
**पतिर्विश्वस्य जगतः परस्पाः ।**
**हविर्नो देव विहवे जुषस्व ॥**

हे प्रजापते, त्वं निधिपाः शङ्खपद्मादीनां निधीनां पालकः । पुराणः जगतः स्रष्टृत्वादनादिः । देवानां पिता पालकः । प्रजानां मनुष्यादीनां जनिता उत्पादयिता । विश्वस्य सर्वस्य जगतः पतिः स्वामी । परस्पाः अतिशयेन पालयिता । हे देव, विशेषेण हूयन्ते देवा अत्रेति विहवो यज्ञः । तस्मिन् विहवे नः अस्मदीयं हविर्जुषस्व । तैब्रासा.

---

## शकधूमः

शकधूमः नक्षत्ररूपप्रजया वृतो राजा

**[२]शकधूमं नक्षत्राणि यद्राजानमकुर्वत ।**
**भद्राहमस्मै प्रायच्छन्निदं राष्ट्रमसादिति ॥**

---

(१) ऋसं. १०।१२१।९; तैसं. ४।२।७।१; कासं. १६।१४ (१७०) (वा०) धर्मा जजान (धर्मा व्यानट्) चन्द्रा बृहतीर् (चन्द्राः प्रथमो); मैसं. २।७।१४ (१८४) कासंवत्; शुसं. १२।१०२ नो (मा) धर्मा जजान (धर्मा व्यानट्) चन्द्रा बृहतीर् (चन्द्राः प्रथमो); शुसं. (काण्व) २९।३६; शब्रा. ७।३।१।२०; आपश्रौ. १६।२०।५.

(२) ऋसं. १०।१२१।१०; असं. ७।८०।३ द्वितीयपादे (विश्वा रूपाणि परिभूर्जजान); तैसं. १।८।१४।२-३, ३।२।५।६-७; कासं. १५।८ (२७-२८) न त्वदेतान्यन्यो (नहि त्वदन्य एता); मैसं. २।६।१२ (४१-४३) यत्कामास्ते (यस्मै कं): ४।१४।१ (११) न त्वदेता (नहि त्वत्ता) यत्कामास्ते (यस्मै कं); शुसं. १०।२०, २३।६५ जातानि (रूपाणि); शुसं. (काण्व) २९।३६; षब्रा. १।६।१९; तैब्रा. १।७।८।७, २।८।१।२-३, ३।५।७।१-२; शब्रा. ५।४।२।९ शुसंवत्; नाउ. ५४; नि. १०।४३.

(१) मैसं. ४।१४।१ (१३); तैब्रा. २।८।१।३.

(२) असं. ६।१२८।१.

शकस्य शकृतः संबन्धी धूमो यस्मिन्नग्नौ स शकधूमः अग्निः । तदभेदात् ब्राह्मणोऽत्र अभिधीयते । 'एष वा अग्निर्वैश्वानरो यद्ब्राह्मणः ' ( तैसं. ५।२।८।२ ) इति श्रुतिः । तयोस्तादात्म्यं दर्शयति– तं शकधूमं ब्राह्मणं पुरा नक्षत्राणि तारकाः राजानं चन्द्रमसं अकुर्वत व्यदधतेति यत् तस्य कारणमुच्यते– अस्मै शकधूमाय भद्राहं पुण्याहं कल्याणप्रदं कालं प्रायच्छन् । किमर्थं प्रायच्छन् ? तत्राह– इदं राष्ट्रं राज्यं नक्षत्रमण्डलाधिपत्यं असात् भवेत्, अस्य वशे सर्वे वर्तेत इत्यनेनाभिप्रायेणेत्यर्थः । असा.

---

## धाता

धाता जगतस्पतिः

**[1]धाता दधातु नो रयिमीशानो जगतस्पतिः ।**
**स नः पूर्णेन यच्छतु ॥**

धाता विश्वस्य धारयिता एतन्नामको देवः नः अस्मभ्यं रयिं धनं दधातु विदधातु प्रयच्छतु । कीदृशः ? ईशानः सर्वार्थसाधनशक्तः । जगतस्पतिः पालयिता । किंच, स धाता देवः नः अस्मान् पूर्णेन आप्यायितेन समृद्धेन धनेन यच्छतु नियच्छतु, योजयत्वित्यर्थः । असा.

**[2]धाता दधातु दाशुषे प्राचीं जीवातुमक्षिताम् ।**
**वयं देवस्य धीमहि सुमतिं विश्वराधसः ॥**

धाता सर्वस्य विधारको देवः दाशुषे हविर्दत्तवते मह्यं यजमानाय प्राचीं प्रकृष्टगमनाम् अस्मदभिमुखगमनां जीवातुं जीवनकारिणीम्, अक्षिताम् अनुपक्षीणाम् । सुमतिमित्यनुषज्यते । तां दधातु धारयतु । वयमपि विश्वराधसः सर्वधनस्य अतिप्रभूतधनस्य देवस्य धातुः सुमतिं कल्याणीं मतिमनुग्रहात्मिकां धीमहि धारयेम । यद्वा, दाशुषे यजमानाय प्राचीं प्राञ्चनाम् अनुगुणां जीवातुं जीवनाय पर्याप्ताम् अक्षितां रयिं दधातु । वयमपि धनप्रदानार्थं धातुः सुमतिं धीमहि ध्यायेम, याचेमेत्यर्थः । असा.

**[1]धाता विश्वा वार्या दधातु**
**प्रजाकामाय दाशुषे दुरोणे ।**
**तस्मै देवा अमृतं सं व्ययन्तु**
**विश्वे देवा अदितिः सजोषाः ॥**

धाता देवः विश्वा विश्वानि वार्या वार्याणि वरणीयानि फलानि ( दधातु ) विदधातु । कस्मै कस्मिन्निति तदाह– प्रजाकामाय पुत्रादिकमिच्छते दाशुषे हविर्दत्तवते यजमानाय दुरोणे । ' दुरोण इति गृहनाम दुरवा भवन्ति ' ( नि. ४।५ ) इति यास्कः । दुरवने गृहे । अपि च, तस्मै यजमानाय देवाः इन्द्राद्याः अमृतम् अमरणसाधनम् अविनाशं वा सं व्ययन्तु संवृण्वन्तु, प्रयच्छन्त्वित्यर्थः । के ते देवाः ? विश्वे सर्वे देवाः । अदितिः अदीना अखण्डनीया वा देवमाता । सजोषाः सहप्रीयमाणा परस्परं स्निग्धा । जुषी प्रीतिसेवनयोः । असुनि रूपम् । अदितेर्विशेषणम् । देवविशेषणपक्षे जसो लुक् * । असा.

---

( १ ) **असं** ७।१७।१; **तैसं.** २।४।५।१, ३।३।११।२ दधातु ( ददातु ) यच्छतु ( वावनत् ); **कासं.** १३।१६ ( ९३ ) यच्छतु ( वावनत् ); **हिगृ.** २०।१।२, ५, २९.

( २ ) **असं.** ७।१७।२; **तैसं.** ३।३।११।३ दधातु दाशुषे ( ददातु नो रयिं ) विश्व ( सत्य ); **मैसं.** ४।१२।६ ( १५९ ) दाशुषे ( नो रयिं ) विश्वराधसः ( सत्यधर्मणः ); **आश्रौ.** १।६।१४ दधातु ( ददातु ) मक्षिताम् ( मक्षितम् ) विश्वराधसः ( वाजिनीवतः ) ; **शाश्रौ.** ९।२८।३ दधातु ( ददातु ) मक्षिताम् ( मक्षितिम् ) विश्वराधसः ( सत्यधर्मणः ); **आगृ.** १।१४।३; **कौगृ.** १।२२।७ शाश्रौवत्; **नि.** ११।११ दधातु ( ददातु ) विश्वराधसः ( सत्यधर्मणः ).

* चिन्त्यमिदम्, जसो लुकि सति 'सजोषः' इति रूपापत्तेः । अतः ' जसो लुक् ' इत्यत्र ' जसः सुः ' इति वक्तुमुचितम् ।

( १ ) **असं.** ७।१७।३ ; **तैसं.** ३।३।११।३ ( धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे । तस्मै देवा अमृताः सं व्ययन्तां विश्वे देवासो अदितिः सजोषाः ॥ ); **मैसं.** ४।१२।६ ( १६० ) तैसंवत्.

[1]धाता रातिः सवितेदं जुषन्तां
प्रजापतिर्निधिपतिर्नो अग्निः ।
त्वष्टा विष्णुः प्रजया संरराणो
यजमानाय द्रविणं दधातु ॥

धाता सर्वस्य स्रष्टा रातिः दाता सर्वश्रेयसां सविता सर्वस्य प्रेरकः अभ्यनुज्ञाता वा । प्रजापतिः प्रजानां स्रष्टा पालयिता च परमेष्ठी । स एव विशेष्यते— निधिपतिः । निधीयन्ते पुरुषार्था येष्विति निधयः वेदाः, तेषां पाता रक्षिता । अग्निः अङ्गनादिगुणयुक्तो वह्निः । त्वष्टा रूपाणां कर्ता । विष्णुः व्यापकः देवश्च । एते धात्रादयः सर्वे नः अस्मदीयम् इदं हविः जुषन्तां सेवन्ताम् । इदानीमेत एव एकैकश उच्यन्ते— एष धात्रादिर्देवः प्रजया पुत्रपौत्रादिकया संरराणः सम्यग् रममाणः प्रजोत्पत्त्यादिहेतुः । यद्वा, प्रजया सह संरराणः संप्रयच्छन्, अभिमतं फलमिति शेषः । यजमानाय यागं कुर्वते द्रविणं धनं दधातु प्रयच्छतु । असा.

[2]धाता प्रजाया उत राय ईशे
धातेदं विश्वं भुवनं जजान ।
धाता पुत्रं यजमानाय दाता
तस्मा उ हव्यं घृतवद्विधेम ॥

अयं धाता प्रजायाः पुत्रादेः ईशे ईष्टे स्वामी भवति। उत अपि च, रायः ईशे धनस्यापि स्वामी भवति । धाता सर्वमिदं भुवनं प्राणिजातं जजान उत्पादितवान् । स च धाता यजमानाय पुत्रं दास्यति । तस्मा उ तथाविधायैव देवाय हव्यमिदं घृतवद्विधेम घृतयुक्तं करवाम ।
तैसा.

---

## अजः

अजः प्रथमजः स्वराट्

[1]नाम नाम्ना जोहवीति पुरा सूर्यात् पुरोषसः ।
यदजः प्रथमं संबभूव स ह तत् स्वराज्यमियाय
यस्मान्नान्यत्परमस्ति भूतम् ॥

## भवाशर्वौ

भवाशर्वौ भूतपती पशुपती च

[2]भवाशर्वौ मृडतं माभि यातं
भूतपती पशुपती नमो वाम् ।
प्रतिहितामायतां मा वि स्राष्टं
मा नो हिंसिष्टं द्विपदो मा चतुष्पदः ॥

सृष्ट्यादौ भवति यस्मात् सर्वं जगत् इति भवः । शृणाति सर्वं जगद्धिनस्ति संहृतिसमये इति शर्वः । स्थितिकालवर्तिनीनां अन्यासां मूर्तीनामुपसंग्रहाय सृष्टिसंहृतिकारिण्यौ आद्यन्तवर्तिन्यौ परमेश्वरस्य मूर्ती निर्दिश्येते । भवश्च शर्वश्च भवाशर्वौ । हे भवाशर्वौ एतत्संज्ञौ देवौ, मृळतं अस्मान् सुखयतम् । तथा मा मां अभि यातं रक्षणार्थं आभिमुख्येन गच्छतम् । यद्वा, हिंसार्थं अभिगमनं मा कार्ष्टम् । हे भूतपती भूतानां प्राणिनां स्वामिनौ, हे पशुपती पशूनां गोमहिषादीनां पालयितारौ, वां युवाभ्यां नमः । करोमीति शेषः । अस्मदीयेन नमस्कारेण संतुष्टौ युवां प्रतिहितां आत्मीये धनुषि प्रतिसंहितां आयतां ज्यया सह आकृष्टां आत्मीयां इषुं मा वि स्राष्टं अस्मदाभिमुख्येन मा विसृजतम् । 'यां इषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे' (तैसं. ४।५।१।२) इति हि निगमः । तथा नः अस्माकं द्विपदः पादद्वयोपेतान् पुत्रभृत्यादिरूपान् मनुष्यान् मा हिंसिष्टम् । ज्वरादिरोगेण पीडितान् मा कार्ष्ट इत्यर्थः । तथा चतुष्पदः

---

(१) **असं.** ७।१७।४; **तैसं.** १।४।४४।१; **कासं.** ४।१२ (७१) निधिपतिर्नो (वरुणो मित्रो) रराणो (रराणा): १३।९ (२२) दधातु (दधात) शेषं पूर्ववत् : १३।१० (३२); **मैसं.** १।३।३८ (१०७) निधिपतिर्नो (वरुणो मित्रो) त्वष्टा विष्णुः (विष्णुस्त्वष्टा); **शुसं.** ८।१७ निधिपतिर्नो (निधिपा देवो) रराणो (रराणा) दधातु (दधात); **शब्रा.** ४।४।४।९ शुसंवत्.

(२) **तैसं.** ३।३।११।२—३; **आश्रौ.** १।६।१४ या उत (नामुत) उत्तरार्धे (धाता कृष्टीरनिमिषाऽभिचष्टे धात्र इद्धव्यं घृतवज्जुहोत ॥); **शाश्रौ.** ९।२८।३ द्विधेम (ज्जुहोत); **कौगृ.** १।२२।७ शाश्रौवत्.

(१) **असं.** १०।७।३१.

(२) **असं.** ११।२।१,२.

पादचतुष्टयोपेतान् गोमहिषाश्वादीन् अस्मदीयान् मा हिंसिष्टम् । असा.

**शुने क्रोष्ट्रे मा शरीराणि कर्तमलिक्लवेभ्यो**
**गृध्रेभ्यो ये च कृष्णा अविष्यवः ।**
**मक्षिकास्ते पशुपते वयांसि ते**
**विघसे मा विदन्त ॥**

हे भवाशर्वौ, शरीराणि अस्मत्संबन्धीनि शुने सारमेयाय, क्रोष्ट्रे सृगालाय । श्वसृगालभक्षणार्थं कर्तुं मा प्रभवतं इत्यर्थः । तथा अविक्लवेभ्यः विक्लवाः अधृष्टाः कातरास्तद्विपरीतेभ्यः गृध्रेभ्यः मांसमुखेभ्यः पक्षिभ्यः । ये च कृष्णाः कृष्णवर्णा वायसाः अविष्यवः आमिषं इच्छन्तः अन्तरिक्षे संचरन्ति तेभ्यश्च । गृध्रकाकादिपक्षिणां भक्षणार्थमपि अस्मच्छरीराणि मा कुरुतं इत्यर्थः । हे पशुपते पशूनां अधिपते रुद्र, ते त्वदीया मक्षिकाः तथा ते त्वदीयानि वयांसि पक्षिणश्च विघसे विशेषेण अद्यते इति विघसः अन्नम् । तस्मिन् विघसे अन्ने निमित्तभूते सति मा विदन्त अस्मच्छरीराणि न लभन्ताम् । मा भक्षयन्तु इत्यर्थः । असा.

---

## रुद्रः

सहस्राक्षो रुद्रः, भवस्य पञ्च पशवः, रुद्रस्य कोशः, धनुर्धरो रुद्रः, रुद्रस्य पशवः, रुद्रस्य सेनाः

**[1]क्रन्दाय ते प्राणाय याश्च ते भव रोपयः ।**
**नमस्ते रुद्र कृण्मः सहस्राक्षायामर्त्य ॥**

हे भव, ते तव क्रन्दाय क्रन्दनाय शब्दाय प्राणाय प्राणवायवे नमस्कुर्मः । यद्वा, क्रन्दयति रोदयति सर्वं अन्तकाले इति क्रन्दः । कदि, क्रदि, क्लदि आह्वाने रोदने च । तथा प्राणाय प्राणयित्रे प्राणनव्यापारेण चेष्टयित्रे जगत्प्राणभूताय वा ते तुभ्यं नमस्कुर्मः । तथा हे भव, ते तव याश्च रोपयः रोपयित्र्यो मोहयित्र्यस्तन्वः सन्ति ताभ्यश्च नमस्कुर्म इत्यर्थः । युप, रुप, लुप विमोहने । हे रुद्र, रोदयति सर्वमन्तकाले इति रुद्रः । यद्वा, रुद् दुःखं दुःखहेतुर्वा । तस्य द्रावको देवो रुद्रः परमेश्वरः । हे देव, सहस्राक्षाय सहस्रं अक्षीणि दर्शनशक्तयो यस्य स तथोक्तः । सर्वजगत्साक्षिणे, निरावरणज्ञानरूपायेत्यर्थः । अमर्त्यः अमर्त्याय अमरणधर्मणे, सांसारिकदुःखासंस्पृष्टायेत्यर्थः । एवंभूताय ते तुभ्यं नमः नमस्कारं कृण्मः कुर्मः । असा.

**अस्त्रा नीलशिखण्डेन सहस्राक्षेण वाजिना ।**
**रुद्रेणार्धकघातिना तेन मा समरामहि ॥**

अस्त्रा क्षेप्त्रा नीलशिखण्डेन नीलवर्णकेशसंनिवेशविशेषयुक्तेन सहस्राक्षेण सहस्रसंख्याकचक्षुरिन्द्रिययुक्तेन वाजिना वेगवता अर्धकघातिना सेनाया अर्धं हन्तुं शीलमस्य । एवंगुणविशिष्टेन तेन प्रसिद्धेन रुद्रेण मा सं अरामहि मा संगच्छामहै, आर्ता मा भूमेत्यर्थः । असा.

**चतुर्नमो अष्टकृत्वो भवाय**
**दश कृत्वः पशुपते नमस्ते ।**
**तवेमे पञ्च पशवो विभक्ता**
**गावो अश्वाः पुरुषा अजावयः ॥**

'अष्टकृत्वो भवाय' इति विशेषणात् 'चतुर्नमः' इत्यत्र शर्वायेति अर्थात् संबध्यते । चतुः चतुर्वारं शर्वाय नमोऽस्तु । तथा भवाय देवाय अष्टकृत्वः अष्टवारं नमोऽस्तु । हे पशुपते, ते तुभ्यं दशकृत्वः दशवारं नमोऽस्तु । कस्मात् एवं प्रार्थ्यसे इत्युच्यते । इमे वक्ष्यमाणा विभक्ताः जातितो भिन्नाः हे पशुपते, तव स्वभूताः गावः गोत्वजातीयाः सास्नादिमद्व्यक्तयः अश्वाः अश्वजात्याक्रान्ता एकखुराः पशवः पुरुषाः मनुष्यजातीयाः अजाश्च अवयश्च अजावयः । अजत्वावित्वे द्वे जाती विभिन्नव्यक्तिके प्रसिद्धे । यस्मात् इमे पञ्चधा भिन्नाः पशवस्तव स्वभूतास्तस्मात् तान् रक्षेति प्रार्थ्यसे इत्यर्थः । असा.

**उरुः कोशो वसुधानस्तवायं**
**यस्मिन्निमा विश्वा भुवनान्यन्तः ।**
**स नो मृड पशुपते नमस्ते परः क्रोष्टारो**
**अभिभाः श्वानः परो यन्त्वघरुदो विकेश्यः ॥**

(१) असं. ११।२।३, ७, ९, ११, १२, २४, २५, ३०, ३१.

हे पशुपते पशूनां पालयितर्महादेव, उरुः विस्तीर्णो वसुधानः वसूनि वासहेतुभूतानि पुण्यपापरूपाणि कर्माणि धीयन्ते अस्मिन्निति वसुधानः। एवंभूतः कोशः अण्डकटाहात्मकः तवायम्। तव स्वभूतोऽयमित्यर्थः। कोशं विशिनष्टि— यस्मिन् अण्डकटाहात्मके महति कोशे अन्तः मध्ये इमा इमानि परिदृश्यमानानि विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि वर्तन्ते। स कोशस्तव स्वभूत इति संबन्धः। स तथाविधस्त्वं नः अस्मान् मृड सुखय। ते तुभ्यं नमोऽस्तु। त्वत्प्रसादात् अभिभाः अभिभवितारः क्रोष्टारः क्रोशनशीलाः सृगाला मांसभक्षकाः श्वानश्च परः परस्तात् असत्तो दूरदेशे यन्तु गच्छन्तु। तथा अघरुदः अघं अमङ्गलं यथा भवति तथा रुदत्यः रोदनं कुर्वत्यः विकेश्यः विकीर्णकेशाः पिशाच्यश्च परो यन्तु परस्तात् दूरं गच्छन्तु। असा.

**धनुर्बिभर्षि हरितं हिरण्ययं**
**सहस्रघ्नि शतवधं शिखण्डिन्।**
**रुद्रस्येषुश्चरति देवहेति-**
**स्तस्यै नमो यतमस्यां दिशी३तः॥**

हे रुद्र, त्वं संहृतिसमये विश्वसंहरणार्थं धनुर्बिभर्षि धारयसि। कीदृशं तद्धनुरिति विशिनष्टि— हरितं हरिद्वर्णं हिरण्ययं हिरण्यविकारं, स्वर्णमयमित्यर्थः। सहस्रघ्न्यं सहस्रसंख्याकान् एकयत्नेन हन्ति हिनस्तीति सहस्रघ्न्यम्। यद्वा, सहस्रं हन्यन्ते आताड्यन्ते अनेनेति सहस्रघ्न्यम्। शतवधं शतसंख्याकस्य प्राणिजातस्य मारकम्। यद्वा, शतं सहस्रं इति अपरिमितनाम। अपरिमितस्य विश्वस्य संहारकमित्यर्थः। (शिखण्डि) मयूरपिच्छादिनिर्मिताः शिखण्डास्तद्युक्तम्। तस्मै त्वदीयाय धनुषे नमोऽस्तु। इदानीमिषुं नमस्करोति। रुद्रस्य रोदयितुर्देवस्य इषुः बाणः चरति सर्वत्र अप्रतिहतगतिर्वर्तते। देवहेतिः देवस्य संबन्धिनी हननसाधनभूता शक्तिरेव सेत्यर्थः। तस्यै इष्वै नमोऽस्तु नमस्कारो भवतु। इतः अस्मात् अस्मदीयात् स्थानात् यतमस्यां यस्यां दिशि वर्तते तस्यां दिशि अवस्थितायै तस्यै नमोऽस्त्विति संबन्धः।

असा.

**तुभ्यमारण्याः पशवो मृगा वने**
**हिता हंसाः सुपर्णाः शकुना वयांसि।**
**तव यक्षं पशुपते अप्स्व१न्त-**
**स्तुभ्यं क्षरन्ति दिव्या आपो वृधे॥**

हे पशुपते पशूनां पालयितर्महादेव, तुभ्यं त्वदर्थे आरण्याः अरण्ये भवाः पशवः। तानेव यथेच्छं स्वीकुरु। ग्राम्यान् पशून् मा बाधिष्ठा इत्यर्थः। आरण्यानेव पशून् निर्दिशति— वने अरण्ये हिताः विधात्रा स्थापिता मृगाः हरिणशार्दूलसिंहाद्याः। (हंसाः) एतत्संज्ञाः पक्षिणः। सुपर्णाः शोभनपतनाः श्येनाः। शकुनाः अन्ये च शकुनयो वनचराः पक्षिणः। एवमात्मकानि वयांसि पक्षिजातानि हे रुद्र, त्वदर्थे भागत्वेन कल्पितानि। तव त्वदीयं यक्षं पूज्यं स्वरूपं अप्सु अन्तः उदकेषु मध्ये वर्तते अतः तुभ्यं त्वदर्थे मृधे उन्दनाय अभिषेकाय दिव्याः दिवि भवा आपः क्षरन्ति प्रवहन्ति। अस्मदुपभोग्यं उदकमपि मा स्पृक्ष इत्यर्थः। असा.

**शिंशुमारा अजगराः पुरीकया**
**जषा मत्स्या रजसा येभ्यो अस्यसि।**
**न ते दूरं न परिष्ठास्ति ते भव सद्यः**
**सर्वान् परि पश्यसि भूमिं पूर्वस्मा-**
**द्धंस्युत्तरस्मिन्त्समुद्रे॥**

आरण्यपशुवज्जलचरप्राणिनामपि रुद्रभागत्वमुच्यते। शिंशुमाराः नक्रविशेषाः। अजगराः सर्पविशेषाः। पुलीकयाद्याः जलचराः प्राणिविशेषाः। हे रुद्र, त्वदर्थमेते सर्वे जलचराः प्राणिन इत्यर्थः। रजसा आत्मीयेन तेजसा येभ्यः जलचरप्राणिभ्यः अस्यसि आयुधं क्षिपसि। हे भव, ते तव सर्वगतस्य दूरं विप्रकृष्टं नैवास्ति। (ते) परिष्ठा परिहृत्य स्थिता प्रजाऽपि न विद्यते। यतस्त्वं सर्वां कृत्स्नां भूमिं सद्यः क्षणादेव परि पश्यसि परितः अवलोकयसि। तथा पूर्वस्मात् पुरोवर्तिनः समुद्रात् उत्तरस्मिन् उत्तरदिग्वर्तिनि समुद्रे जलधौ हंसि क्षणादेव गच्छसि। हन्तिरत्र गत्यर्थः। अतः सर्वगतस्य तव विप्रकृष्टं नैवास्ति। तथा च शिंशुमारादयस्तव नित्यसंनिहिता इत्यर्थः। असा.

**रुद्रस्यैलबकारेभ्योऽसंसूक्तगिलेभ्यः ।**
**इदं महास्येभ्यः श्वभ्यो अकरं नमः ॥**

अतः परं महादेवस्य परिवारा नमस्कारेण प्रार्थ्यन्ते । रुद्रस्य महादेवस्य संबन्धिभ्यः एलबकारेभ्यः । एलवानि प्रेरणयुक्तानि कर्माणि कुर्वन्तीति एलवकाराः कर्मकराः प्रमथगणाः । तेभ्यः अहं नमस्करोमि । तथा असंसूक्तगिलेभ्यः । सम्यक् सूक्तं शोभनं भाषितं संसूक्तम् । तद्विपरीतं असंसूक्तं असमीचीनं अशोभनवचनं गृणन्ति भाषन्ते इति असंसूक्तगिलाः । यद्वा, तादृग्भाषणं यथा भवति तथा गिरन्ति भक्षयन्तीति असंसूक्तगिलाः । यद्वा, एवंभूतेभ्यो रुद्रगणेभ्यो नमस्करोमि । महास्येभ्यः महत् प्रभूतं आस्यं मुखविवरं एषामस्तीति महास्याः । मृगयाविहारार्थं किरातवेषधारिणो देवस्य संबन्धिभ्यः [ श्वभ्यः ] सारमेयेभ्यः इदं नमः अकरं करोमि ।

असा.

**नमस्ते घोषिणीभ्यो नमस्ते केशिनीभ्यः ।**
**नमो नमस्कृताभ्यो नमः संभुञ्जतीभ्यः ।**
**नमस्ते देव सेनाभ्यः स्वस्ति नो अभयं च नः ॥**

हे रुद्र, ते त्वदीयाभ्यो घोषिणीभ्यः प्रभूतघोषयुक्ताभ्यः सेनाभ्यः नमोऽस्तु । तथा ते त्वदीयाभ्यः केशिनीभ्यः विपरीताकृतिकेशयुक्ताभ्यः विकीर्णकेशयुक्ताभ्यो वा सेनाभ्यो नमोऽस्तु । याश्च त्वदीयाः सेना नमस्कृताः चण्डेश्वरप्रभृतयः ताभ्यश्च नमोऽस्तु । संभुञ्जतीभ्यः सहभोजनं कुर्वतीभ्यः सेनाभ्यो नमोऽस्तु । हे देव रुद्र, ते त्वदीयाभ्यः उक्तव्यतिरिक्ताभ्यः सेनाभ्यो नमोऽस्तु । हे देव, त्वत्प्रसादात् नः अस्मभ्यं स्वस्ति क्षेमं अभयं च नः भयराहित्यमपि भवतु । स्वस्तिशब्दयोगात् स्वस्त्ययनकर्मणि विनियोगः । भयराहित्यप्रार्थनाच्च अद्भुतशान्तावपि । इति लिङ्गानुसारेण सर्वत्र विनियोगो द्रष्टव्यः ।

असा.

## प्राणः

प्राणः सर्वेश्वरः, सर्वाः प्रजास्तस्य करप्रदाः

**[1]प्राणाय नमो यस्य सर्वमिदं वशे ।**
**यो भूतः सर्वस्येश्वरो यस्मिन्त्सर्वं प्रतिष्ठितम् ॥**

प्राणाय प्रकर्षेण अनिति सर्वप्राणिशरीरं व्याप्य चेष्टते इति प्राणः समष्टिशरीराभिमानी प्रथमसृष्टो हिरण्यगर्भः । ‘प्राणः प्रजानामुदयत्येष सूर्यः’ (प्रउ. १।८) इति, ‘स प्राणमसृजत’ (प्रउ. ६।४) इति, ‘कस्मिन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि’ (प्रउ. ६।३) इत्यादिश्रुतिभ्यः । तस्मै प्राणाय नमः नमस्कारोऽस्तु । तस्य सगुणब्रह्मात्मकत्वं दर्शयति । यस्य प्राणस्य वशे सर्वमिदं चराचरात्मकं जगत् वर्तते । एतेन तस्य सकलजगन्नियन्तृत्वमुक्तम् । यः प्राणो भूतः भूतकालावच्छिन्नः न तु भविष्यन्, सर्वदा लब्धसत्ताक इत्यर्थः । सर्वस्य प्राणिजातस्य ईश्वरः ईशिता कर्तुमकर्तुं अन्यथा वा कर्तुं शक्तः । यस्मिन् उदीरितलक्षणे प्राणे परब्रह्मात्मके सर्वं समस्तं जगत् प्रतिष्ठितम् । कारणभूते तस्मिन् समवायवृत्त्या वर्तते इत्यर्थः । तस्मै प्राणाय नम इति संबन्धः ।

असा.

**यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः ।**
**एवा तस्मै बलिं हरान् यस्त्वा शृणवत्सुश्रवः ॥**

हे प्राण, सर्वा इमाः प्रजाः देवतिर्यङ्मनुष्याद्याः यथा येन प्रकारेण तुभ्यं त्वदर्थं बलिहृतः बलेर्भोक्तव्यस्य अन्नस्य हर्तारः उपहर्तारो भवन्ति एव एवं तस्मै विदुषे बलिं हरान् हरन्तु प्रयच्छन्तु । हे शुश्रवः शृण्वन् प्राण, त्वा त्वां यः शृणवत् शृणुयात् तव माहात्म्यप्रतिपादकं मन्त्रजातं श्रवणेन्द्रियेण जानीयात् । तस्मै इति संबन्धः ।

असा.

**यो अस्य विश्वजन्मन ईशे विश्वस्य चेष्टतः ।**
**अन्येषु क्षिप्रधन्वने तस्मै प्राण नमोऽस्तु ते ॥**

यः प्राणो विश्वजन्मनः विश्वानि सर्वाणि नानारूपाणि जन्मानि यस्य तत् तथोक्तं तस्य चेष्टतः व्याप्रियमाणस्य

(१) असं. ११।४।१, १९, २३–२५.

अस्य विश्वस्य सर्वस्य जगतः ईशे ईष्टे । अन्येषु प्राणिशरीरेषु क्षिप्रधन्वने क्षिप्रं गच्छते व्याप्नुवते । धविर्गत्यर्थः । हे प्राण, तस्मै तथाविधाय ते तुभ्यं नमोऽस्तु ।
असा.

**यो अस्य सर्वजन्मन ईशे सर्वस्य चेष्टतः ।**
**अतन्द्रो ब्रह्मणा धीरः प्राणो मानु तिष्ठतु ॥**

पूर्वोऽर्धर्चो व्याख्यातः । विश्वशब्दस्य स्थाने सर्वशब्द एव विशेषः । स जगदीश्वरः प्राणः अतन्द्रः आलस्यरहितः सर्वदा सर्वत्र संचरिष्णुः धीरः धिया ज्ञानशक्त्या युक्ता ब्रह्मणा सर्वगतब्रह्मात्मकेन अनवच्छिन्नेन रूपेण मा मां अनु तिष्ठतु अनुवर्तताम् । असा.

**ऊर्ध्वः सुप्तेषु जागार ननु तिर्यङ् नि पद्यते ।**
**न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन ॥**

हे प्राण, त्वं ऊर्ध्वः उत्थितः सन् सुप्तेषु निद्रापरवशेषु प्राणिषु जागर जागृहि तद्रक्षणार्थं निद्रारहितो वर्तस्व । जागरणे कारणमाह— नन्विति । सुप्तः प्राणी तिर्यङ् तिर्यगवस्थितः नि पद्यते निद्रापरवशः शेते । ननु इति प्रश्ने । अतस्त्वं जागृहीत्यर्थः । प्राणस्यापि सुप्तिः किं न स्यादिति तत्राऽऽह— न सुप्तमिति । प्राणिषु सुप्तेषु निद्रापरवशेषु सत्सु तच्छरीरमध्यवर्तिनः अस्य प्राणस्य सुप्तं स्वापं कश्चन कोऽपि पुरुषः न अनु शुश्राव अनु पारंपर्यक्रमेण श्रुतवान् । प्राणस्वपनस्य वक्ता श्रोता च दुर्लभ इत्यर्थः ।
असा.

---

## रोहितः

राष्ट्रधारको रोहितः

[1]**उदेहि वाजिन् यो अप्स्व१न्तरिदं**
**राष्ट्रं प्र विश सूनृतावत् ।**
**यो रोहितो विश्वमिदं जजान**
**स त्वा राष्ट्राय सुभृतं बिभर्तु ॥**

(१) असं. १३।१।१; तैब्रा. २।५।२।१ अप्स्व१न्तरिदं (अस्यप्स्वन्तः । इदं ) प्र विश (आविश ) स त्वा राष्ट्राय सुभृतं बिभर्तु (स नो राष्ट्रेषु सुधितां दधातु ).

[1]**उद्वाज आ गन् यो अप्स्व१न्त-**
**र्विश आ रोह त्वद्योनयो याः ।**
**सोमं दधानोऽप ओषधीर्गा-**
**श्चतुष्पदो द्विपद आ वेशयेह ॥**

[2]**यूयमुग्रा मरुतः पृश्निमातर**
**इन्द्रेण युजा प्र मृणीत शत्रून् ।**
**आ वो रोहितः शृणवत्सुदानव-**
**स्त्रिषप्तासो मरुतः स्वादुसंमुदः ॥**

[3]**रुहो रुरोह रोहित आ रुरोह**
**गर्भो जनीनां जनुषामुपस्थम् ।**
**ताभिः संरब्धमन्वविन्दन्**
**षडुर्वीर्गातुं प्रपश्यन्निह राष्ट्रमाहाः ॥**

**आ ते राष्ट्रमिह रोहितोऽहार्षी-**
**द्व्यास्थन्मृधो अभयं ते अभूत् ।**
**तस्मै ते द्यावापृथिवी रेवतीभिः**
**कामं दुहाथामिह शक्वरीभिः ॥**

[4]**रोहितो द्यावापृथिवी जजान**
**तत्र तन्तुं परमेष्ठी ततान ।**
**तत्र शिश्रियेऽज एकपादो-**
**ऽदृंहद् द्यावापृथिवी बलेन ॥**

[5]**रोहितो द्यावापृथिवी अदृंह-**
**त्तेन स्व स्तभितं तेन नाकः ।**
**तेनान्तरिक्षं विमिता रजांसि**
**तेन देवा अमृतमन्वविन्दन् ॥**

(१) असं. १३।१।२.

(२) असं. १३।१।३; तैब्रा. २।५।२।३ युजा प्र मृणीत (सयुजा प्रमृणीथ ) रोहितः ...... षप्तासो (रोहितो अश्मणोदभिद्यवः । त्रिसप्तासो ).

(३) असं. १३।१।४–५.

(४) असं. १३।१।६; तैब्रा. २।५।२।३ तत्र तन्तुं (तस्मिंस्तन्तुं ) तत्र शिश्रियेऽज एकपादोऽ (तस्मिञ्छिश्रिये अज एकपात् । अ ).

(५) असं. १३।१।७; तैब्रा. २।५।२।३ स्व स्तभितं (सुवः स्तभितं ) उत्तरार्धे (सो अन्तरिक्षे रजसो विमानः । तेन देवाः सुवरन्वविन्दन् ॥ ).

[1]वि रोहितो अमृशद्विश्वरूपं
समाकुर्वाणः प्ररुहो रुहश्च ।
दिवं रूढ्वा महता महिम्ना
सं ते राष्ट्रमनक्तु पयसा घृतेन ॥

यास्ते रुहः प्ररुहो यास्त आरुहो
याभिरापृणासि दिवमन्तरिक्षम् ।
तासां ब्रह्मणा पयसा वावृधानो
विशि राष्ट्रे जागृहि रोहितस्य ॥

[2]यास्ते विशस्तपसः संबभूवु-
र्वत्सं गायत्रीमनु ता इहागुः ।
तास्त्वा विशन्तु मनसा शिवेन
संमाता वत्सो अभ्येतु रोहितः ॥

[3]ऊर्ध्वो रोहितो अधि नाके अस्था-
द्विश्वा रूपाणि जनयन् युवा कविः ।
तिग्मेनाग्निर्ज्योतिषा वि भाति
तृतीये चक्रे रजसि प्रियाणि ॥

[4]सहस्रशृङ्गो वृषभो जातवेदा
घृताहुतः सोमपृष्ठः सुवीरः ।
मा मा हासीन्नाथितो नेत्त्वा जहानि
गोपोषं च मे वीरपोषं च धेहि ॥

---

(१) असं. १३।१।८–९.

(२) असं. १३।१।१०; तैब्रा. २।५।२।२ पूर्वार्धे (यास्ते विशस्तपसा संबभूवुः। गायत्रं वत्समनु तास्त आगुः।) मनसा शिवेन (महसा स्वेन) वत्सो (पुत्रो).

(३) असं. १३।१।११.

(४) असं. १३।१।१२; कासं. ३५।१८ (८७) पूर्वार्धे (सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान् सुप्रतीकः।) गोपोषं ... ... च धेहि (सहस्रपोषः स गोपोषं च यच्छ); आश्रौ. १।१२ (सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान् सुप्रतीकः। मा नो हिंसीद्धिंसितो नेत्वा जहामि गोपोषं च नो वीरपोषं च यच्छ॥); माश्रौ. ३।१।२८ सोमपृष्ठः (स्तोमपृष्ठः) हासीन्नाथितो नेत्त्वा जहानि (हासीर्नाथितो न त्वा जहामि) च मे (च नो).

[1]रोहितो यज्ञस्य जनिता मुखं च
रोहिताय वाचा श्रोत्रेण मनसा जुहोमि ।
रोहितं देवा यन्ति सुमनस्यमाना
स मा रोहैः सामित्यै रोहयतु ॥

रोहितो यज्ञं व्यदधाद्विश्वकर्मणे
तस्मात् तेजांस्युप मेमान्यागुः ।
वोचेयं ते नाभिं
भुवनस्याधि मज्मनि ॥

आ त्वा रुरोह बृहत्यू३त
पङ्क्तिरा ककुब्वर्चसा जातवेदः ।
आ त्वा रुरोहोष्णिहाक्षरो वषट्कार
आ त्वा रुरोह रोहितो रेतसा सह ॥

अयं वस्ते गर्भं पृथिव्या
दिवं वस्तेऽयमन्तरिक्षम् ।
अयं ब्रध्नस्य विष्टपि
स्वर्लोकान् व्यानशे ॥

वाचस्पते पृथिवी नः स्योना
स्योना योनिस्तल्पा नः सुशेवा ।
इहैव प्राणः सख्ये नो अस्तु
तं त्वा परमेष्ठिन् पर्यग्निरायुषा
वर्चसा दधातु ॥

वाचस्पत ऋतवः पञ्च ये नौ
वैश्वकर्मणाः परि ये संबभूवुः ।
इहैव प्राणः सख्ये नो अस्तु
तं त्वा परमेष्ठिन् परि रोहित
आयुषा वर्चसा दधातु ॥

वाचस्पते सौमनसं मनश्च
गोष्ठे नो गा जनय योनिषु प्रजाः ।
इहैव प्राणः सख्ये नो अस्तु
तं त्वा परमेष्ठिन् पर्यहमायुषा
वर्चसा दधामि ॥

---

(१) असं. १३।१।१३–४०.

परि त्वा धात् सविता देवो
अग्निर्वर्चसा मित्रावरुणावभि त्वा ।
सर्वा अरातीरवक्रामन्नेहीदं
राष्ट्रमकरः सूनृतावत् ॥

यं त्वा पृषती रथे प्रष्टिर्वहति रोहित ।
शुभा यासि रिणन्नपः ॥

अनुव्रता रोहिणी रोहितस्य
सूरिः सुवर्णा बृहती सुवर्चाः ।
तया वाजान् विश्वरूपां जयेम
तया विश्वाः पृतना अभि ष्याम ॥

इदं सदो रोहिणी रोहितस्यासौ
पन्थाः पृषती येन याति ।
तां गन्धर्वाः कश्यपा उन्नयन्ति
तां रक्षन्ति कवयोऽप्रमादम् ॥

सूर्यस्याश्वा हरयः केतुमन्तः
सदा वहन्त्यमृताः सुखं रथम् ।
घृतपावा रोहितो भ्राजमानो
दिवं देवः पृषतीमा विवेश ॥

यो रोहितो वृषभस्तिग्मशृङ्गः
पर्यग्निं परि सूर्यं बभूव ।
यो विष्टभ्नाति पृथिवीं दिवं च
तस्माद्देवा अधि सृष्टीः सृजन्ते ॥

रोहितो दिवमारुहन्महतः पर्यर्णवात् ।
सर्वा रुरोह रोहितो रुहः ॥

वि मिमीष्व पयस्वतीं घृताचीं
देवानां धेनुरनपस्पृगेषा ।
इन्द्रः सोमं पिबतु क्षेमो
अस्त्वग्निः प्र स्तौतु वि मृधो
नुदस्व ॥

समिद्धो अग्निः समिधानो
घृतवृद्धो घृताहुतः ।
अभीषाड् विश्वाषाडग्निः
सपत्नान् हन्तु ये मम ॥

हन्त्वेनान् प्र दहत्वरिर्यो नः पृतन्यति ।
क्रव्यादाग्निना वयं सपत्नान् प्र दहामसि ॥
अवाचीनानव जहीन्द्र वज्रेण बाहुमान् ।
अधा सपत्नान् मामकानग्नेस्तेजोभिरादिषि ॥

अग्ने सपत्नानधरान् पादया-
स्मद्व्यथया सजातमुत्पिपानं बृहस्पते ।
इन्द्राग्नी मित्रावरुणावधरे
पद्यन्तामप्रतिमन्यूयमानाः ॥

उद्यंस्त्वं देव सूर्य सपत्नानव मे जहि ।
अवैनानश्मना जहि ते यन्त्वधमं तमः ॥

वत्सो विराजो वृषभो मतीना-
मा रुरोह शुक्रपृष्ठोऽन्तरिक्षम् ।
घृतेनार्कमभ्यर्चन्ति वत्सं
ब्रह्म सन्तं ब्रह्मणा वर्धयन्ति ॥

दिवं च रोह पृथिवीं च रोह
राष्ट्रं च रोह द्रविणं च रोह ।
प्रजां च रोहामृतं च रोह
रोहितेन तन्वं१ सं स्पृशस्व ॥

ये देवा राष्ट्रभृतोऽभितो यन्ति सूर्यम् ।
तैष्टे रोहितः संविदानो राष्ट्रं
दधातु सुमनस्यमानः ॥

उत्त्वा यज्ञा ब्रह्मपूता वहन्त्य-
ध्वगतो हरयस्त्वा वहन्ति ।
तिरः समुद्रमति रोचसेऽर्णवम् ॥

रोहिते द्यावापृथिवी अधि श्रिते
वसुजिति गोजिति संधनाजिति ।
सहस्रं यस्य जनिमानि सप्त च
वोचेयं ते नाभिं भुवनस्याधि
मज्मनि ॥

यशा यासि प्रदिशो दिशश्च
यशाः पशूनामुत चर्षणीनाम् ।
यशाः पृथिव्या अदित्या उपस्थे-
ऽहं भूयासं सवितेव चारुः ॥

अमुत्र सन्निह वेत्थेतः संस्तानि पश्यसि ।
इतः पश्यन्ति रोचनं दिवि सूर्यं विपश्चितम् ॥
देवो देवान् मर्चयस्यन्तश्चरस्यर्णवे ।
समानमग्निमिन्धते
तं विदुः कवयः परे ॥

[1]अवः परेण पर एनावरेण
पदा वत्सं बिभ्रती गौरुदस्थात् ।
सा कद्रीची कं स्विदर्धं परागात्
क स्वित् सूते नहि यूथे अस्मिन् ॥

[2]एकपदी द्विपदी सा चतुष्प-
द्यष्टापदी नवपदी बभूवुषी ।
सहस्राक्षरा भुवनस्य पङ्क्ति-
स्तस्याः समुद्रा अधि वि क्षरन्ति ॥

आरोहन् द्यामभृतः प्राव मे वचः ।
उत् त्वा यज्ञा ब्रह्मपूता वहन्त्य-
ध्वगतो हरयस्त्वा वहन्ति ॥

वेद तत् ते अमर्त्य
यत् त आक्रमणं दिवि ।
यत् ते सधस्थं परमे व्योमन् ॥
सूर्यो द्यां सूर्यः पृथिवीं
सूर्य आपोऽति पश्यति ।
सूर्यो भूतस्यैकं चक्षुरा
रुरोह दिवं महीम् ॥
उर्वीरासन् परिधयो वेदिर्भूमिरकल्पत ।
तत्रैतावग्नी आधत्त हिमं घ्रंसं च रोहितः ॥
हिमं घ्रंसं चाधाय यूपान् कृत्वा पर्वतान् ।
वर्षाज्यावग्नी ईजाते रोहितस्य स्वर्विदः ॥
स्वर्विदो रोहितस्य ब्रह्मणाग्निः समिध्यते ।
तस्माद् घ्रंसस्तस्माद्धिमस्तस्माद्यज्ञोऽजायत ॥

ब्रह्मणाग्नी वावृधानौ
ब्रह्मवृद्धौ ब्रह्माहुतौ ।
ब्रह्मेद्धावग्नी ईजाते
रोहितस्य स्वर्विदः ॥

सत्ये अन्यः समाहितो-
ऽप्स्व१न्यः समिध्यते ।
ब्रह्मेद्धावग्नी ईजाते
रोहितस्य स्वर्विदः ॥

यं वातः परि शुम्भति
यं वेन्द्रो ब्रह्मणस्पतिः ।
ब्रह्मेद्धावग्नी ईजाते
रोहितस्य स्वर्विदः ॥
वेदिं भूमिं कल्पयित्वा
दिवं कृत्वा दक्षिणाम् ।
घ्रंसं तदग्निं कृत्वा चकार
विश्वमात्मन्वद्वर्षेणाज्येन रोहितः ॥

वर्षमाज्यं घ्रंसो अग्नि-
र्वेदिर्भूमिरकल्पत ।
तत्रैतान् पर्वतानग्नि-
र्गीर्भिरूर्ध्वाँ अकल्पयत् ॥
गीर्भिरूर्ध्वान् कल्पयित्वा
रोहितो भूमिमब्रवीत् ।
त्वयीदं सर्वं जायतां
यद् भूतं यच्च भाव्यम् ॥
स यज्ञः प्रथमो भूतो भव्यो अजायत ।
तस्माद्ध जज्ञ इदं सर्वं यत्किं चेदं विरोचते
रोहितेन ऋषिणाभृतम् ॥

—

(१) ऋसं. १।१६४।१७ आस्मिन् (अन्तः); असं. ९।९।१७, १३।१।४१.

(२) असं. १३।१।४२—५५.

## कालः

कालः सर्वेश्वरः

[1]काले तपः काले ज्येष्ठं
काले ब्रह्म समाहितम् ।
कालो ह सर्वस्येश्वरो
यः पितासीत्प्रजापतेः ॥

काले परमात्मनि तपः जगत्सर्जनविषयं पर्यालोचनम् । तप पर्यालोचने । 'तपसा चीयते ब्रह्म' ( मुउ. १।१।८ ) इत्यादौ तपःशब्दः पर्यालोचनार्थत्वेन व्याख्यातः । तथा ज्येष्ठं सर्वस्य आदिभूतं हिरण्यगर्भाख्यं तत्त्वं वर्तते । तथा ब्रह्म साङ्गो वेदस्तत्प्रतिपादकः समाहितं सम्यगाहितः । यद्वा, तपः कृच्छ्रचान्द्रायणादिकम् । तत्फलप्रदातृत्वात् तत्रैव वर्तनम् । एकः कालशब्दो यौगिकः कलयितरि काले ज्येष्ठं ब्रह्म हिरण्याख्यम् । 'ज्येष्ठं ब्रह्म श्रेष्ठं ब्रह्म' इति हि श्रुत्यन्तरम् । हशब्दः अवधारणे । कालः सर्वस्य जगतः ईश्वरः स्वामी । यः कालः प्रजापतेः प्रजानां स्रष्टुश्चतुर्मुखस्य ब्रह्मणः पिता जनक आसीत् । असा.

सर्वजेता कालः

[2]कालेऽयमङ्गिरा देवो-
ऽथर्वा चाधि तिष्ठतः ।
इमं च लोकं परमं च लोकं
पुण्यांश्च लोकान् विधृतीश्च पुण्याः ।
सर्वाँल्लोकानभिजित्य ब्रह्मणा
कालः स ईयते परमो नु देवः ॥

इमं च सर्वकर्मार्जनस्थानं लोकं भूमिं परमं फलभोगस्थानं स्वर्गलोकं पुण्यान् पुण्यकर्मभिरार्जितान् लोकान् पुण्याः दुःखलेशासंस्पृष्टाः विधृतीः लोकधारकान् सर्वान् उक्तान् अनुक्तांश्च लोकान् ब्रह्मणा स्वकारणेन देशकालवस्तुपरिच्छेदरहितेन सत्यज्ञानानन्तादिलक्षणेन परमात्मना अभिजित्य अभिव्याप्य सः एतत्सूक्तद्वयप्रतिपाद्यः परमः सर्वोत्तमः कालो देवः ईयते सर्वं स्थावरजङ्गमात्मकं जगत् व्याप्य वर्तते । नुशब्दः विद्वदविद्वदनुभवप्रमाणद्योतनार्थः । असा.

( १ ) असं. १९।५३।८.
( २ ) असं. १९।५४।५.

## अनेके देवाः

अग्नीन्द्रादयो दिक्पतयः

[1]प्राची दिगग्निरधिपति-
रसितो रक्षितादित्या इषवः ।
तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो
नम इषुभ्यो नम एभ्यो अस्तु ।
यो३स्मान् द्वेष्टि यं वयं द्विष्म-
स्तं वो जम्भे दध्मः ॥

प्राची प्राञ्चना प्रकृष्टा पूर्वा दिक् अस्मदनुग्रहार्थं वर्ततामित्यर्थः । तस्या दिशः अग्निरधिपतिः अधिष्ठाता स्वामी । असितः कृष्णवर्णः सर्पः तस्यां दिशि रक्षिता जगद्रक्षणार्थमवस्थितः । आदित्याः अदितेः पुत्रा धात्रर्यमादयः तस्या दिशः इषवः आयुधानि । तेभ्यः पूर्वदिग्वर्तिभ्यः अग्न्युपलक्षितेभ्यः अधिपतिभ्यो नमः नमस्कारोऽस्तु । तथा तत्रत्येभ्यो रक्षितृभ्योऽसितप्रभृतिभ्यो नमोऽस्तु । तत्रतेभ्य इषुभ्यः इषुसंस्तुतेभ्यः आदित्येभ्यो नमोऽस्तु । एवमधिपत्यादीन् पृथक्पृथक् नमस्कृत्य पुनः समुच्चयेन नमस्करोति— एभ्यः उक्तेभ्यः अधिपत्यादिभ्यः सर्वेभ्यो नमोऽस्तु अस्मदीयो नमस्कारोऽस्तु । यद्वा, अधिपत्यादिभ्यो यो नमस्कारः कृतः स एभ्यः प्रीतिकरो भवतु इत्यर्थः । एवं नमस्कारेण परितोष्य इष्टफलं प्रार्थयते— यः शत्रुः अस्मान् द्वेष्टि बाधते, यं शत्रुं वयं

( १ ) असं. ३।२७।१; तैसं. ५।५।१०।१ ( समीची नामासि प्राची दिक् तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥ ); मैसं. २।१३।२१ ( १०४ ) ( समीची नामासि प्राची दिक् तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्च तेऽधिपतिर्यश्च रक्षिता ताभ्यां नमो अस्तु तौ नो मृडतां ते यं द्विष्मो यश्च नो द्वेष्टि तमेनयोर्जम्भे दध्मः ॥ ).

द्विष्मः, तं शत्रुं हे अग्न्यादयः, वः युष्माकं जम्भे। खादनहेतुः आस्यान्तर्गतो दन्तविशेषो जम्भः। तत्र दध्मः प्रक्षिपामः, तं खादतेत्यर्थः। असा.

**[1]दक्षिणा दिगिन्द्रोऽधिपतिस्तिरश्चि-**
**राजी रक्षिता पितर इषवः।**
**तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो**
**नम इषुभ्यो नम एभ्यो अस्तु।**
**यो३स्मान् द्वेष्टि यं वयं द्विष्म-**
**स्तं वो जम्भे दध्मः॥**

दक्षिणा दक्षिणतोऽवस्थिता या दिक् साऽपि अस्मदनुग्रहार्थे वर्ततामित्यर्थः। तस्याः दिशः इन्द्रः अधिपतिः अधिष्ठाता। तिरश्च्यः तिर्यगवस्थिता राजयः आवलयः यस्य तथाविधः सर्पः रक्षिता दक्षिणस्यां दिशि गोपायिता। पितरः पितृदेवताः तत्रत्या इषवः दुष्टनिग्रहकारीण्यायुधानि। तेभ्यो नमोऽधिपतिभ्य इत्यादि पूर्ववत् योज्यम्। असा.

**[2]प्रतीची दिग्वरुणोऽधिपतिः**
**पृदाकू रक्षितान्नमिषवः।**
**तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो**
**नम इषुभ्यो नम एभ्यो अस्तु।**
**यो३स्मान् द्वेष्टि यं वयं द्विष्म-**
**स्तं वो जम्भे दध्मः॥**

प्रतीची प्रतिमुखं अञ्चन्ती पश्चाद्भागस्था दिक्, अस्मदनुग्रहार्थे वर्ततामित्यर्थः। तस्या दिशो वरुणः अधिपतिः स्वामी। पृदाकुः कुत्सितशब्दकारी एतत्संज्ञः सर्पः तत्रत्यो रक्षिता पालयिता। अन्नं व्रीहियवादिलक्षणं इषवः तत्रत्यदुष्टनिग्रहकारीण्यायुधानि। तेभ्यो नम इत्यादि। असा.

**[1]उदीची दिक् सोमोऽधिपतिः**
**स्वजो रक्षिताशनिरिषवः।**
**तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो**
**नम इषुभ्यो नम एभ्यो अस्तु।**
**यो३स्मान् द्वेष्टि यं वयं द्विष्म-**
**स्तं वो जम्भे दध्मः॥**

उदीची उत्तरा दिक्, अस्मदनुग्रहार्थे वर्ततामित्यर्थः। तस्या दिशः सोमः अधिपतिः स्वामी। स्वजः, स्वायत्तजन्मा स्वयमेवोत्पन्नः स्वजनशीलो वा सर्पः स्वजः। रक्षिता गोपायिता। अशनिः दम्भोलिः। इषवः तत्रत्यदुष्टनिग्रहार्थान्यायुधानि। तेभ्यो नमः इत्यादि गतम्। असा.

**[2]ध्रुवा दिग् विष्णुरधिपतिः कल्माष-**
**ग्रीवो रक्षिता वीरुध इषवः।**
**तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो**
**नम इषुभ्यो नम एभ्यो अस्तु।**
**यो३स्मान् द्वेष्टि यं वयं द्विष्म-**
**स्तं वो जम्भे दध्मः॥**

ध्रुवा स्थिरा अधोदिक् अस्माननुगृह्णातु। तस्या दिशो विष्णुः अधिपतिः ईश्वरः। कल्माषग्रीवो रक्षिता। कल्माषः कृष्णवर्णः ग्रीवासु यस्य सः कल्माषग्रीवः एतदाख्यः सर्पो रक्षिता गोपायिता रक्षितव्यानाम्। वीरुधः विरोहणशीला ओषधयः इषवः दुष्टनिबर्हणायुधानि। शिष्टं स्पष्टम्। असा.

---

(१) **असं.** ३।२७।२; **तैसं.** ५।५।१०।१ (ओजस्विनी नामासि दक्षिणा दिक् तस्यास्त इन्द्रोऽधिपतिः पृदाकुः० ॥); **मैसं.** २।१३।२१ (१०४) (ओज३स्या नामासि दक्षिणा दिक् तस्यास्ता इन्द्रोऽधिपतिस्तिरश्चीनराजी रक्षिता यश्च ते० ॥).

(२) **असं.** ३।२७।३; **तैसं.** ५।५।१०।१—२ (प्राची नामासि प्रतीची दिक् तस्यास्ते सोमोऽधिपतिः स्वजः० ॥); **मैसं.** २।१३।२१ (१०४) (प्राची नामासि प्रतीची दिक् तस्यास्ते सोमोऽधिपतिः स्वजो रक्षिता यश्च ते० ॥).

(१) **असं.** ३।२७।४; **तैसं.** ५।५।१०।२ (अवस्थावा नामास्युदीची दिक् तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजिः० ॥); **मैसं.** २।१३।२१ (१०४) (सुषदा नामास्युदीची दिक् तस्यास्ते वरुणोऽधिपतिः स्वदागू रक्षिता यश्च ते० ॥).

(२) **असं.** ३।२७।५; **तैसं.** ५।५।१०।२ (वशिनी नामासीयं दिक् तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता० ॥); **मैसं.** २।१३।२१ (१०४) (अवस्था नामास्यवाची दिक् तस्यास्ते विष्णुरधिपतिः कल्माषग्रीवो रक्षिता यश्च ते० ॥).

[1]ऊर्ध्वा दिग् बृहस्पतिरधिपतिः
श्वित्रो रक्षिता वर्षमिषवः ।
तेभ्यो नमोऽधिपतिभ्यो नमो रक्षितृभ्यो
नम इषुभ्यो नम एभ्यो अस्तु ।
योऽ३स्मान् द्वेष्टि यं वयं द्विष्म-
स्तं वो जम्भे दध्मः ॥

ऊर्ध्वा उपरिष्टात् वर्तमाना दिक् मदीयमभिलषितं करोतु । तस्या दिशः बृहस्पतिर्देवः अधिपतिः अधिष्ठाता । श्वित्रः श्वेतवर्णः । एतत्संज्ञः सर्पो रक्षिता शत्रुप्रभृतिभ्यः त्राता । वर्षं वर्षजलं मेघनिर्मुक्तं इषवः दुष्टनिवारणायुधानि । तेभ्यो नम इत्यादि व्याख्यातम् । असा.

सविताऽग्निर्द्यावापृथिवी वरुणो मित्रावरुणौ मरुतः
सोमो वायुः सूर्यश्चन्द्रमा इन्द्रो मरुतां पिता
मृत्युर्यमादयः क्रमेण प्रसव-
वनस्पत्यादीनामाधिपतयः

[2]सविता प्रसवानामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां
प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्याम-
स्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥
अग्निर्वनस्पतीनामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
द्यावापृथिवी दातॄणामधिपत्नी ते माऽवताम् ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
वरुणोऽपामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
मित्रावरुणौ वृष्ट्याधिपती तौ माऽवताम् ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
मरुतः पर्वतानामधिपतयस्ते माऽवन्तु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥

(१) असं. ३।२७।६; तैसं. ५।५।१०।२ (अधिपत्नी नामासि बृहती दिक् तस्यास्ते बृहस्पतिरधिपतिः श्वित्रः० ॥); मैसं. २।१३।२१ (१०४) (अधिपत्नी नामास्यूर्ध्वा दिक् तस्यास्ते बृहस्पतिरधिपतिश्श्वित्रो रक्षिता यश्च ते० ॥).

(२) असं. ५।२४।१–१७.

सोमो वीरुधामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
वायुरन्तरिक्षस्याधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
सूर्यश्चक्षुषामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
चन्द्रमा नक्षत्राणामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
इन्द्रो दिवोऽधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
मरुतां पिता पशूनामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
मृत्युः प्रजानामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
यमः पितॄणामधिपतिः स माऽवतु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
पितरः परे ते माऽवन्तु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
तता अवरे ते माऽवन्तु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥
ततस्ततामहास्ते माऽवन्तु ।
अस्मिन् ब्रह्मण्यस्मिन्० ॥

दिक्पतयो देवाः

[1]प्राच्यै त्वा दिशेऽ३ग्नयेऽधिपतयेऽसिताय
रक्षित्र आदित्यायेषुमते ।
एतं परि दद्मस्तं नो गोपायतास्माकमैतोः ।
दिष्टं नो अत्र जरसे नि नेषज्जरा मृत्यवे परि
णो ददात्वथ पक्वेन सह सं भवेम ॥
दक्षिणायै त्वा दिश इन्द्रायाधिपतये
तिरश्चिराजये रक्षित्रे यमायेषुमते ।
एतं परि दद्मस्तं० ॥
प्रतीच्यै त्वा दिशे वरुणायाधिपतये
पृदाकवे रक्षित्रेऽन्नायेषुमते ।

(१) असं. १२।३।५५–६०.

एतं परि दद्मस्तं० ॥
उदीच्यै त्वा दिशे सोमायाधिपतये
स्वजाय रक्षित्रेऽशन्या इषुमत्यै ।
एतं परि दद्मस्तं० ॥
ध्रुवायै त्वा दिशे विष्णवेऽधिपतये कल्माष-
ग्रीवाय रक्षित्र ओषधीभ्य इषुमतीभ्यः ।
एतं परि दद्मस्तं० ॥
ऊर्ध्वायै त्वा दिशे बृहस्पतयेऽधिपतये
श्वित्राय रक्षित्रे वर्षायेषुमते ।
एतं परि दद्मस्तं० ॥

विषयभेदेन अग्न्यादिदेवानां भिन्नाधिपत्यम्

[1]अग्निर्भूतानामधिपतिः स माऽवतु, इन्द्रो ज्येष्ठानां, यमः पृथिव्याः, वायुरन्तरिक्षस्य, सूर्यो दिवः, चन्द्रमा नक्षत्राणां, बृहस्पतिर्ब्रह्मणः, मित्रः सत्यानां, वरुणोऽपा॰, समुद्रः स्रोत्यानां॰, अन्न॰ साम्राज्यानामधिपति तन्माऽवतु, सोम ओषधीना॰, सविता प्रसवाना॰, रुद्रः पशूनां, त्वष्टा रूपाणां, विष्णुः पर्वतानां, मरुतो गणानामधिपतयस्ते माऽवन्तु, पितरः पितामहाः परेऽवरे ततास्ततामहा इह माऽवत । अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम् ॥

अयमग्निर्भूतानां प्राणिनामधिपतिः स्वामी । स तादृशो मां अवतु । 'अधिपतिः स माऽवतु' इत्येतत्पदचतुष्टयं वक्ष्यमाणेषु षष्ठ्यन्तेषु वाक्यशेषत्वेनानुवर्तते । ज्येष्ठानां वृद्धतमानां लोकपालानां इन्द्रोऽधिपतिः । यमशब्देनाग्निविशेष उच्यते, 'अग्निर्वाव यमः' ( तैसं. ३।३।८।३ ) इति श्रुत्यन्तरात् । अग्निवायुसूर्यचन्द्रबृहस्पतयः पृथिव्यन्तरिक्षद्युनक्षत्रब्राह्मणजातीनामधिपतयः प्रसिद्धाः । मित्रः सत्यवचनानामधिपतिः । वरुणः कूपादिगतानां स्थिराणा-( मपा )मधिपतिः । समुद्रः स्रोत्यानां नदीप्रवाहगतानामपामधिपतिः । अन्नं साम्राज्यानां सार्वभौमराजभोग्यानां द्रव्याणां स्वामी । अनुवर्त्यमानस्य लिङ्गव्यत्ययं द्योतयितुम् 'अधिपति तन्माऽवतु' इत्याम्नातम् । सोमसवितृरुद्रत्वष्टारः ओषध्यनुज्ञापशुरूपाणां अधिपतयः प्रसिद्धाः । विष्णुः पर्वतानां गोवर्धनादीनामधिपतिः । मरुतो गणानां आदित्यवस्वादिगणदेवतानां स्वामिनः । अत्रानुषज्यमानस्य वचनव्यत्ययं द्योतयितुम् 'अधिपतयस्ते माऽवन्तु' इत्याम्नातम् । पितर इत्यादीनि यजुर्मन्त्राणां पदानि । पितृपितामहशब्दौ जीवद्विषयौ । ततततामहशब्दौ मृतविषयौ । सपिण्डता तु पुरुषात्सप्तमाद्विनिवर्तते । ततः सप्तमादूर्ध्वा ये विप्रकृष्टास्ते परे । ततोऽर्वाचीनाः संनिकृष्टा अवरे । हे पित्रादयः, यूयमिहैव तेषु तेषु विषयेषु मामवत रक्षत । कुत्र कुत्रेति तदुच्यते—अस्मिन्ब्रह्मन् अस्यां ब्राह्मणजातौ, अस्मिन्क्षत्रे, अस्यामाशिषि आशासनीये प्रजापश्वादिरूपेऽस्मिन्फले, अस्यां पुरोधायां पुरस्करणरूपेऽस्मिन् प्राधान्ये, अस्मिन् कर्मणि क्रियमाणेऽस्मिन्ननुष्ठानविशेषे, अस्यां देवहूत्यां देवान्प्रति यदेतदस्मदीयमाह्वानं तस्मिन्नाह्वाने । एतेषु सर्वेषु विषयेषु मां रक्षत । पितर इत्यादिके चरममन्त्रे समाम्नातम् 'अस्मिन्ब्रह्मन्' इत्यादिकं पूर्वेषु सप्तदशमन्त्रेष्वनुषञ्जनीयम् । तथा सति 'अग्निर्भूतानामधिपतिः स माऽवतु । अस्मिन् ब्रह्मन्०, इन्द्रो ज्येष्ठानामधिपतिः स माऽवतु । अस्मिन् ब्रह्मन्०' इत्येवं सर्वत्र पाठः संपद्यते ।

तैसा.

दिग्भेदेनाधिपतिदेवताभेदः

[1]राज्ञ्यसि प्राची दिक् । वसवस्ते देवा अधिपतयः । अग्निर्हेतीनां प्रतिधर्ता । त्रिवृत्त्वा स्तोमः पृथिव्या॰ श्रयतु । आज्यमुक्थमव्यथयत्स्तभ्नातु । रथंतर॰ साम प्रतिष्ठित्यै ॥

हे इष्टके, त्वं राज्ञी राजमाना प्राची दिक् तद्रूपाऽसि । ते तव वसवः अष्टसंख्याका अधिपतयः अधिकं

( १ ) तैसं. ३।४।५।१–२; हिगृ. १९।१।५२–५३; पागृ. १।५।१० ब्रह्मन्न ( ब्रह्मण्य ) कर्मन्न ( कर्मण्य ).

( १ ) तैसं. ४।४।२।१–३; कासं. १७।८ ( २१ ) पाठभेदानां बाहुल्यात्ते न कृताः । एवमेव मैसं. शुसं. इत्यत्र ज्ञेयम् : २०।११ ( २४ ); मैसं. २।८।९ ( २१ ); शुसं. १५।१०–१४; शब्रा. ८।६।१।५–९; माश्रौ. ६।२।१।१८, ६।२।२।४.

पालयितारः। अग्निस्तवोपद्रवकराणां हेतीनां परकीयायुधानां प्रतिधर्ता निराकर्ता। योऽयं त्रिवृदाख्यः स्तोमः स त्वां पृथिव्यां स्थापयतु। यदाज्यमुक्थं आज्यनामकं 'प्र वो देवायाग्नये' इत्यादिकं शस्त्रमवस्थितं (तत्) त्वामव्यथयत् व्यथारहितां कुर्वत् स्तभ्नातु दृढीकरोतु। यत् रथंतरं साम तत्प्रतिष्ठित्यै तव चिरावस्थानाय भवतु। एवमुत्तरेष्वपि मन्त्रेषु योज्यम्। तैसा.

**विराडसि दक्षिणा दिक्। रुद्रास्ते देवा अधिपतयः। इन्द्रो हेतीनां प्रतिधर्ता। पञ्चदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु। प्रउगमुक्थमव्यथयत्स्तभ्नातु। बृहत्साम प्रतिष्ठित्यै॥**

**सम्राडसि प्रतीची दिक्। आदित्यास्ते देवा अधिपतयः। सोमो हेतीनां प्रतिधर्ता। सप्तदशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु। मरुत्वतीयमुक्थमव्यथयत्स्तभ्नातु। वैरूपꣳ साम प्रतिष्ठित्यै॥**

**स्वराडस्युदीची दिक्। विश्वे ते देवा अधिपतयः। वरुणो हेतीनां प्रतिधर्ता एकविꣳशस्त्वा स्तोमः पृथिव्याꣳ श्रयतु। निष्केवल्यमुक्थमव्यथयत्स्तभ्नातु। वैराजꣳ साम प्रतिष्ठित्यै॥**

**अधिपत्न्यसि बृहती दिक्। मरुतस्ते देवा अधिपतयः। बृहस्पतिर्हेतीनां प्रतिधर्ता। त्रिणवत्रयस्त्रिꣳशौ त्वा स्तोमौ पृथिव्याꣳ श्रयताम्। वैश्वदेवाग्निमारुते उक्थे अव्यथयन्ती स्तभ्नीताम्। शाकररैवते सामनी प्रतिष्ठित्यै॥**

अधिकं पालयित्री अधिपत्नी। बृहती दिक् प्रौढोर्ध्वा दिक्। तैसा.

**अन्तरिक्षायर्षयस्त्वा प्रथमजा देवेषु दिवो मात्रया वरिणा प्रथन्तु। विधर्ता चायमधिपतिश्च ते त्वा सर्वे संविदाना नाकस्य पृष्ठे सुवर्गे लोके यजमानं च सादयन्तु॥**

अथ सर्वेष्वपि मन्त्रेष्वनुषञ्जनीयं शेषमाह— अन्तरिक्षायेति। देवेषु मध्ये ये प्रथमजा ऋषयो नारदाद्याः। अत एव स्मर्यते— 'देवर्षिर्नारदस्तथा' इति। ते महर्षयस्त्वामिष्टकां दिवो मात्रया आकाशस्य यत्परिमाणं तेन परिमाणेन प्रथन्तु विस्तारयन्तु। किमर्थम्? अन्तरिक्षार्थं, अन्तरिक्षं व्याप्तुमित्यर्थः। कीदृशेन परिमाणेन? वरिणा वरणीयेन। न केवलमृषयः प्रथन्तु, किंतु विधर्ता चायमधिपतिश्च योऽयमिष्टकानां निष्पादयिता यश्च पालकस्तावपि प्रथेताम्। तेन महर्षयो विधर्ता चाधिपतिश्च सर्वे संविदानाः परस्परमैकमत्यं प्राप्ता नाकस्य पृष्ठे स्वर्गसदृशस्यास्य क्षेत्रस्योपरि त्वां सादयन्तु, यजमानं च स्वर्गे लोके सादयन्तु। तैसा.

**[1]समीची नामासि प्राची दिक् तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि। ओजस्विनी नामासि दक्षिणा दिक् तस्यास्त इन्द्रोऽधिपतिः पृदाकुः। प्राची नामासि प्रतीची दिक् तस्यास्ते सोमोऽधिपतिः स्वजः। अवस्थावा नामास्युदीची दिक् तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजिः। अधिपत्नी नामासि बृहती दिक् तस्यास्ते बृहस्पतिरधिपतिः श्वित्रः। वशिनी नामासीयं दिक् तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि॥ एता वै देवता अग्निं चितꣳ रक्षन्ति॥**

येयं प्राची दिक् तस्याः समीचीति नामधेयं, सम्यगञ्चतीति प्रातःकालानुष्ठानार्थं प्रवर्तत इति व्युत्पत्तेः। हे प्राचि, त्वं समीच्यभिधाऽसि। तस्यास्तादृश्याः अग्निर्देवः स्वामी। असितः कृष्णसर्पः। स च तव रक्षिता। ताभ्यां अधिपतिरक्षितृभ्यां नमोऽस्तु। तौ उभौ नः अस्मान् मृडयतां सुखयताम्। ते सुखिनो वयं यं पुरुषमस्मान् हिंसितुं प्रवर्तमानं द्विष्मः, यश्च शत्रुरस्मानुदासीनानपि द्वेष्टि तं द्विविधं शत्रुं वां युवयोरधिपतिरक्षित्रोर्जम्भे विदारितास्ये दधामि स्थापयामि। एवमुत्तरत्रापि योज्यम्।

(१) तैसं. ५।५।१०।१—३; मैसं. २।१३।२१ (१०४) पाठभेदानां बाहुल्यात्ते न कृताः।; माश्रौ. ६।२।६।२३; हिगृ. २०।६।७; मागृ. २।११।८, २।१६।२.

ओजस्विनी बलवतीति दक्षिणदिशो नाम । पृदाकुः अजगरः सर्पः । रक्षितेत्यादिशेषोऽनुषज्यते । प्रकर्षेणाञ्चतीति सायंसंध्याद्यनुष्ठानाय प्रवर्तत इति पश्चिमदिशः प्राचीति नामधेयम् । स्वस्मिञ्जायते इति स्वजः स्वाधीनबलः सर्पः । मनुष्यानवस्थापयतीति व्युत्पत्त्याऽवस्थावेत्युदग्दिशो नाम । तिरश्चीनाः कटकवलयाकारा राजयो रेखा यस्य सर्पस्यासौ तिरश्चराजिः । अधिपालयतीति व्युत्पत्त्याऽधिपत्नी इत्यूर्ध्वदिशो नाम । प्रौढत्वाद्बृहती । श्वित्रः यस्य सर्पस्य श्वासधारणेन स्वशरीरे उच्छूनता भवति । दशनेन मनुष्यशरीरेऽप्युच्छूनता भवति सोऽयं श्वित्रः । वशः प्राणिनामवस्थातुं स्वाधीनताऽस्यामस्तीति वशिनी । एतच्च भूमिरूपाया अधोदिशो नाम । कल्माषाः कृष्णबिन्दवो ग्रीवायां यस्य सर्पस्य सोऽयं कल्माषग्रीवः । रक्षितेत्यादेः सर्पस्य वाचकेभ्यः शब्देभ्य ऊर्ध्वमनुषङ्गद्योतनायान्तिममन्त्रे पुनः पाठः । एता अग्नीन्द्राद्यधिपतिरूपा असितादिसर्परूपाश्च देवता इष्टकाभिश्चितमग्निं रक्षन्ति ।

तैसा.

श्रीदेवतायाः सोमादिभिः राज्यादिकं वृतम्

**¹प्रजापतिर्वै प्रजाः सृजमानोऽतप्यत । तस्माच्छ्रान्तात्तेपानाच्छ्रीरुदक्रामत् । सा दीप्यमाना भ्राजमाना लेलायन्त्यतिष्ठत् । तां दीप्यमानां भ्राजमानां लेलायन्तीं देवा अभ्यध्यायन् ॥**

अथ मित्रविन्दाख्यां काम्येष्टिं विधास्यन् तत्र हविरुत्पत्तिक्रमं अन्नाद्यादिकामनोपेतं अधिकारिविशेषं च दर्शयितुमाख्यायिकां रचयन् आदौ श्रिय उत्पत्तिं उत्पन्नायाश्च तस्याः देवैरभिध्यानं चाऽऽह– प्रजापतिर्वा इति । देवमनुष्यादिरूपाः प्रजाः सृजमानः उत्पादयन् प्रजापतिः तत्कारणेन तपस्तप्तवान् । तस्माच्छ्रान्तात् अखिलसर्जनश्रमोपेतात् तेपानात् तपस्तप्तवतः सकाशात् श्रीरुदक्रामत् सौभाग्यलक्ष्मीरुत्क्रान्तवती । सा चोत्क्रान्ता दीप्यमाना अवयवैः शोभमाना भ्राजमाना सर्वं जगत् स्वतेजसा प्रकाशयन्ती लेलायन्ती स्वकीयेन तेजःपुञ्जेन सर्वमाश्लिष्यन्ती अतिष्ठत् स्थितवती । ईदृग्गुणविशिष्टां श्रियं वक्ष्यमाणा अग्न्यादयो देवाः अभ्यध्यायन्, तत्संबद्धान्नाद्यादिस्वीकाराय तां हन्तुमैच्छन्नित्यर्थः ।

शब्रासा.

**ते प्रजापतिमब्रुवन्– हनामेमाम्, आ इदमस्या ददामहा इति । स होवाच– स्त्री वा एषा यच्छ्रीः । न वै स्त्रियं घ्नन्ति । उत त्वा अस्या जीवन्त्या एवाददत इति ॥**

इमां श्रियं हनाम, अस्याः संबन्धि इदमन्नाद्यादिकं आददामहै स्वीकुर्याम इति ते देवाः प्रजापतिमब्रुवन् । सः प्रजापतिरेवमुक्तवान् । यत् या श्रीः एषा स्त्री, अतो न हननार्हा । न खलु लोके क्रूरकर्माणोऽपि पुरुषाः स्त्रियं घ्नन्ति मारयन्ति । उत तु अपि तु, जीवन्त्याः एवास्याः संबन्धि धनं आददते स्वीकुर्वते इत्यर्थः ।

शब्रासा.

**तस्या अग्निरन्नाद्यमादत्त । सोमो राज्यम् । वरुणः साम्राज्यम् । मित्रः क्षत्त्रम् । इन्द्रो बलम् । बृहस्पतिर्ब्रह्मवर्चसम् । सविता राष्ट्रम् । पूषा भगम् । सरस्वती पुष्टिम् । त्वष्टा रूपाणि ॥**

एवं प्रजापतिनोक्ते केन देवेन किं स्वीकृतमिति तद्दर्शयति– तस्या अग्निरन्नाद्यमिति । अन्नाद्यं अन्नादनसामर्थ्यम् । राज्ञः कर्म राज्यं ऐश्वर्यमिति यावत् । सम्राजः कर्म साम्राज्यम्, आज्ञाशक्तिरित्यर्थः । क्षतत्राणनिमित्तं सामर्थ्यं क्षत्त्रम् । शरीरसामर्थ्यं बलम् । श्रुताध्ययनसंपत्तितेजो ब्रह्मवर्चसम् । राष्ट्रं देशः । भगं सौभाग्यम् । पुष्टिः पोषणम् । रूपाणि शोभनावयवरचनानि । स्पष्टमन्यत् ।

शब्रासा.

**सा प्रजापतिमब्रवीत्– आ वै म इदमदिषतेति । स होवाच– यज्ञेनैनान्पुनर्याचस्वेति ॥**

एवमग्न्यादिभिः अन्नाद्यादिषु बलात् स्वीकृतेषु सत्सु सा श्रीः प्रजापतिमब्रवीत्– मे मदीयं इदमन्नाद्यादिकं आदिषत देवा अहार्षुरिति । सः प्रजापतिस्तां प्रत्युवाच – यज्ञेन मूल्यभूतेन त्वदीयान् अन्नाद्यादीन् अग्न्यादिभ्यः पुनर्याचस्व साधयेति ।

शब्रासा.

(१) शब्रा. ११।४।३।१–१८.

**सैतां दशहविषमिष्टिमपश्यत् । आग्नेयमष्टाकपालं पुरोडाशम् । सौम्यं चरुम् । वारुणं दशकपालं पुरोडाशम् । मैत्रं चरुम् । ऐन्द्रमेकादशकपालं पुरोडाशम् । बार्हस्पत्यं चरुम् । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशम् । पौष्णं चरुम् । सारस्वतं चरुम् । त्वाष्ट्रं दशकपालं पुरोडाशम् ॥**

'याचे' इत्यङ्गीकृत्यान्नाद्यादिप्राप्तिनिमित्तभूतां एतां वक्ष्यमाणां दशहविष्कामिष्टिमपश्यत् । तान्येव हवींषि गणयति– आग्नेयमष्टाकपालमित्यादि । सावित्रस्य हविषः द्वादशाष्टौ वेति संख्याविकल्पः । सावित्रादिशब्देषु सर्वत्र 'साऽस्य देवता' (पा. ४।२।२४) इति देवतार्थे तद्धितोत्पत्तिः । शब्रासा.

**तानेतयाऽनुवाक्ययाऽन्ववदत्– 'अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैः ॥' इति । ते प्रत्युपातिष्ठन्त ॥**

हविषां निर्वापादिसंस्कारेषु 'समिधो यजति' इत्यादाविव पाठप्राप्तः क्रमोऽवगन्तव्यः । प्रदानं तु सर्वेषां सहैवेत्यभिप्रेत्य अग्न्यादिदशदेवतानामाक्षरवतीमनुवाक्यामाह– तानेतयेति । अन्ववदत् अग्न्यादिलक्षणेनानुक्रमेणावदत् । एवमेकयैवर्चा समुच्चित्यानुवादे सति ते अग्न्यादयः प्रत्युपातिष्ठन्त प्रत्यागत्य तत्समीपे अतिष्ठन् । ऋगर्थस्तु– अग्न्यादयो देवाः तदीयैर्यज्ञैः यज्ञसाधनैर्हविर्भिः प्रीताः सन्तः अन्नाद्यादिभिर्मां प्रत्येकं समनक्तु संयोजयतु । सहस्री सहस्रसंख्याकधनवान्, एतत्सवितुर्विशेषणम् । पोषणीयैर्गोभिः सहितः पूषा, अवसा रक्षणेन सहिता सरस्वती, पशुसंबन्धीनि रूपाणि विकुर्वन् त्वष्टा । शब्रासा.

**तानेतया याज्यया परस्तात्प्रतिलोमं प्रत्यैत्– 'त्वष्टा रूपाणि ददती सरस्वती पूषा भगं सविता मे ददातु । बृहस्पतिर्ददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमो अग्निः ॥' इति । ते पुनर्दानायाध्रियन्त ॥**

तादृशीं याज्यामाह– तानेतयेति । तान् उपस्थितान् देवान् एतया वक्ष्यमाणया याज्यया परस्तात् अन्तात् त्वष्टारमारभ्य प्रतिलोमं प्रातिलोम्येन अवरोहक्रमेण अग्निपर्यन्तं प्रत्यैत् प्रत्यगच्छत् । 'त्वष्टा रूपाणि' इति तत्साधनभूता याज्या । मे मह्यं त्वष्टा देवः रूपाणि पूर्वं मत्सकाशादुपपन्नानि पुनर्ददातु । तथा सरस्वती देवी ददती इति पुष्टेः पुनर्दात्री भवतु । पूषा भगं ददातु । सविता राष्ट्रं ददातु । बृहस्पतिः ब्रह्मवर्चसं ददत् प्रयच्छन् भवतु । इन्द्रो बलं मह्यं ददातु । मित्रः क्षत्रं मह्यं ददातु । वरुणः साम्राज्यं, सोमो राज्यं, अग्निरन्नाद्यं च मह्यं प्रयच्छत्वित्यर्थः । एवं याज्यानुवाक्याभ्यां प्रार्थितास्ते देवाः अन्नाद्यादीनां पुनः प्रदानाय अध्रियन्त अङ्गीकृतवन्तः । शब्रासा.

**सैतानुपहोमानपश्यत्– 'अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहा' इति । आहुतिमेवादायाग्निरुदक्रामत् । पुनरस्या अन्नाद्यमददात् ॥**

प्रधानयागसमीपे स्विष्टकृतः पूर्वं होतव्या होमाः उपहोमाः । तानप्येतान् सा श्रीरपश्यत् । अथ तानुपहोममन्त्रान् पठन् तत्तदादुत्या तस्य तस्यान्नाद्यादेः परिक्रयेण प्राप्तिमाह– अग्निरन्नाद इत्यादि । अन्नमत्ति जाठररूपेण इति अन्नादः, अन्नपतिः अन्नस्य प्रतिपालयिता, ईदृशः अग्निः अस्मिन् यज्ञे मूलभूते सति प्रागुपहृतं मदीयमन्नाद्यं मयि पुनर्दधातु धारयतु । तदर्थमिदं हविः स्वाहा सुहुतमस्तु । एवं होमे सति आहुतिमेव स्वीकृत्याग्निरुदक्रामत् उदगच्छत् । अस्यै श्रियै अन्नाद्यं पुनरददात् । एवमुत्तरत्रापि योज्यम् । शब्रासा.

**'सोमो राजा राजपती राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा' इति । आहुतिमेवादाय सोम उदक्रामत् । पुनरस्यै राज्यमददात् ॥**

'सोमो राजा' इति द्वितीयो मन्त्रः । राज्ञां पालयिता राजपतिः । स्वयमपि राजा निग्रहानुग्रहक्षमः स्वामी । तादृशः सोमः । 'अस्मिन् यज्ञे' इत्यादि पूर्ववत् । शब्रासा.

**'वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा' इति। आहुतिमेवादाय वरुण उदक्रामत्। पुनरस्यै साम्राज्यमददात्॥**

'वरुणः सम्राट्' इति तृतीय उपहोममन्त्रः। ये हि राजानः स्वाज्ञया कृत्स्नं भूमण्डलं शासति ते सम्राजः, तेषां पतिः सम्राट्पतिः। स्वयमपि सम्राट्। ईदृशो वरुणः। गतमन्यत्। शब्रासा.

**'मित्रः क्षत्त्रं क्षत्त्रपतिः क्षत्त्रमस्मिन्यज्ञे मयि दधातु स्वाहा' इति। आहुतिमेवादाय मित्र उदक्रामत्। पुनरस्यै क्षत्त्रमददात्॥**

चतुर्थमुपहोममन्त्रमाह-- 'मित्रः क्षत्त्रम्' इति। क्षत्त्रस्य क्षत्रियजातेः पतिः स्वामी क्षत्त्रपतिः। स्वयमपि क्षत्त्रं क्षत्रियजात्यात्मकः। क्षत्त्रं क्षतत्राणसामर्थ्यम्। गतमन्यत्। शब्रासा.

**'इन्द्रो बलं बलपतिर्बलमस्मिन्यज्ञे मयि दधातु स्वाहा' इति। आहुतिमेवादायेन्द्र उदक्रामत्। पुनरस्यै बलमददात्॥**

'इन्द्रो बलम्' इति पञ्चमो मन्त्रः। बलस्य पालयिता बलपतिः। स्वयमपि बलात्मकः। शब्रासा.

**'बृहस्पतिर्ब्रह्म ब्रह्मपतिर्ब्रह्मवर्चसमस्मिन् यज्ञे मयि दधातु स्वाहा' इति। आहुतिमेवादाय बृहस्पतिरुदक्रामत्। पुनरस्यै ब्रह्मवर्चसमददात्॥**

'बृहस्पतिर्ब्रह्म' इति षष्ठो मन्त्रः। ब्रह्मणो वेदराशेः ब्राह्मणजातेर्वा पतिर्ब्रह्मपतिः। स्वयमपि ब्रह्मात्मकः। गतमन्यत्। शब्रासा.

**'सविता राष्ट्रꣳ राष्ट्रपती राष्ट्रमस्मिन् यज्ञे मयि दधातु स्वाहा' इति। आहुतिमेवादाय सवितोदक्रामत्। पुनरस्यै राष्ट्रमददात्॥**

'सविता राष्ट्रम्' इति सप्तमो मन्त्रः। राष्ट्रस्य देशस्य पतिः पालयिता राष्ट्रपतिः। स्वयमपि राष्ट्रं राष्ट्रात्मकः। शब्रासा.

**'पूषा भगं भगपतिर्भगमस्मिन्यज्ञे मयि दधातु स्वाहा' इति। आहुतिमेवादाय पूषोदक्रामत्। पुनरस्यै भगमददात्॥**

'पूषा भगम्' इत्यष्टमो मन्त्रः। भगस्य सौभाग्यस्य पतिः भगपतिः। पूषा यं मदीयं भगं पूर्वमगृह्णात् तं भगं अस्मिन् यज्ञे इति संबन्धः। शब्रासा.

**'सरस्वती पुष्टिं पुष्टिपतिः पुष्टिमस्मिन्यज्ञे मयि दधातु स्वाहा' इति। आहुतिमेवादाय सरस्वत्युदक्रामत्। पुनरस्यै पुष्टिमददात्॥**

'सरस्वती पुष्टिम्' इति नवमो मन्त्रः। पुष्टेः पोषस्य पतिः पुष्टिपतिः। सरस्वती यां मदीयां पुष्टिं अगृह्णीत तां पुष्टिं मयि दधातु इति संबन्धः। शब्रासा.

**'त्वष्टा रूपाणाꣳ रूपकृद् रूपपती रूपेण पशूनस्मिन्यज्ञे मयि दधातु स्वाहा' इति। आहुतिमेवादाय त्वष्टोदक्रामत्। पुनरस्यै रूपेण पशूनददात्॥**

'त्वष्टा रूपाणाम्' इति दशमो मन्त्रः। गोमहिष्यादिपशुरूपाणां रूपकृत् अवयवसंनिवेशस्वरूपस्य कर्ता। अत एव रूपाणां पतिः स्वामी। ईदृशस्त्वष्टा रूपेण विशिष्टान् पशून् मयि दधातु। गतमन्यत्। शब्रासा.

**ता वा एता दश देवताः। दश हवीꣳषि। दशाहुतयः। दश दक्षिणाः। दशंदशिनी विराट्। श्रीर्विराट्। श्रियाꣳ हैतद्विराज्यन्नाद्ये प्रतितिष्ठति॥**

देवताहविरुपहोमे गवां दशसंख्यामनूद्य स्तौति--ता वा एता इति। दश दक्षिणाः आहुतिदक्षिणात्वेन दश गावः अस्यामिष्टौ देया इत्यप्राप्तत्वाद्विधिः। दशंदशिनीति। प्रतिपादं दशभिरक्षरैः संख्यावती विराट्। सा च विराट् श्रीः। एतत् एतया दशसंख्यविराड्रूपायां तस्यां श्रियां अन्नाद्ये एतदुपलक्षितेषु प्रागुदीरितेषु अन्नाद्यादिफलेषु च अनया इष्ट्या यजमानः प्रतितिष्ठति। शब्रासा.

# देवानां पुरोहितः

## वेदाः

देवपुरोहितादित्यज्ञानेन देवा वशवर्तिनः

**[1]यो देवेभ्य आतपति यो देवानां पुरोहितः।**
**पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥**

(१) यो देवेभ्यः सर्वेभ्यः आतपति अतिशयेन तेजसा तपति, आदित्यरूपेणेत्यर्थः। यश्च देवानां पुरः अग्रे इन्द्रत्वेन स्थितः। यश्च पूर्वः अग्रे ब्रह्मरूपेण देवेभ्यो जातः। तस्मै रुचाय तेजसे ब्राह्मये ब्रह्मपुरुषापत्याय नमः। शुउ.

(२) यः प्रजापतिरादित्यरूपो देवेभ्यः अर्थाय आतपति द्योतते। यश्च देवानां पुरोहितः सर्वकार्येष्वग्रे नीतः। यश्च देवेभ्यः सकाशात् पूर्वः जातः प्रथममुत्पन्नः, तस्मै आदित्याय नमः। कीदृशाय? रोचते असौ रुचः, तस्मै दीप्यमानाय। तथा ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मिः, ब्रह्मावयवभूताय वा। शुम.

**रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन्।**
**यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥**

(१) रुचं देदीप्यमानं ब्राह्मं ब्रह्मण उत्पन्नं जनयन्तः सृष्ट्यर्थम्, देवाः योगिनः तेजसा दीप्यमानाः यत् अब्रुवन् यद्ब्रूयुः अग्रे प्रथमतः। किमूचुः? अपरोऽपि यो ब्राह्मणः स ब्रह्म विद्यात् जानीयात् तस्य देवा असन्वशे, सोऽपि सनकादीनां स्थानं गच्छतीत्यर्थः।* शुउ.

(२) देवाः दीप्यमानाः प्राणाः रुचं शोभनं ब्राह्मं ब्रह्मणोऽपत्यमादित्यं जनयन्तः उत्पादयन्तः अग्रे प्रथमं तत् वचोऽब्रुवन् ऊचुः। तत्किमत आह--यः ब्राह्मणः हे आदित्य, त्वा त्वां एवं उक्तविधिना उत्पन्नं विद्यात् जानीयात् तस्य ब्राह्मणस्य देवा वशे असन् वश्या भवन्ति, आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः। शुम.

बृहस्पतिपुरोहिता देवा विजयिनः

**[1]बृहस्पतिपुरोहिता वै देवा अजयन्स्वर्गं लोकं व्यस्मिँल्लोकेऽजयन्त, तथैवैतद्यजमानो बृहस्पतिपुरोहित एव जयति स्वर्गं लोकं व्यस्मिँल्लोके जयते ॥**

योऽयं प्रगाथे ब्रह्मणस्पतिराम्नातः सोऽयं बृहस्पतिः, तस्य ब्राह्मणजातिस्वामित्वात्। स च बृहस्पतिः पुरोहितो येषां देवानां ते बृहस्पतिपुरोहिताः। तथा च श्रुत्यन्तरे समाम्नातम्— 'बृहस्पतिर्देवानां पुरोहित आसीत्' (तैसं. ६।४।१०।१) इति। पौरोहित्यसिद्ध्यर्थमेव चतुर्विंशतिरात्रनामकं सत्रमन्वतिष्ठत्। तदपि श्रुत्यन्तरे एवाऽऽम्नातम्— 'बृहस्पतिरकामयत यन्मे देवा दधीरन् गच्छेयं पुरोधामिति स एतं चतुर्विंशतिरात्रमपश्यत्' इति। तादृशा बृहस्पतिपुरोहिता देवा अनेन प्रगाथेन स्वर्गं लोकं जित्वा भूलोकेऽपि विजयं प्राप्ताः, तथैव तत्पाठेनेदानींतनोऽपि (यजमानोऽपि?) यजमानो बृहस्पतिपुरोहित एव बृहस्पत्यनुग्रहयुक्त एव सन् लोकद्वयं जयति। ऐब्रासा.

---

* अत्र 'त्वैवं' इति न व्याख्यातमुवटाचार्यैः।

(१) शुसं. ३१।२०-२१; तैआ. ३।१३।२.

(१) ऐब्रा. १२।६.

# मानवो राजा, तस्य कर्माणि च

## वेदाः

धनिभुक् राजा

[1]जामिः सिन्धूनां भ्रातेव स्वस्रा-
मिभ्यान्न राजा वनान्यत्ति ।
यद्वातजूतो वना व्यस्था-
दग्निर्ह दाति रोमा पृथिव्याः ॥

सिन्धूनां स्यन्दनशीलानामपामयमग्निः जामिः बन्धुः, तासामुत्पादकत्वात् । तथा चाऽऽम्नातम्-- 'अग्नेरापः' (तैआ. ८।१) इति । यद्वा, देवेभ्यः पलायितः अप्सु वर्तमानः सन् तासामपां बन्धुर्बभूवेत्यर्थः । तत्र दृष्टान्तः-- स्वस्रां स्वसॄणां भ्रातेव । यथा भ्राताऽतिशयेन हितकरो भवति तद्वत् । तादृशोऽग्निः वनानि महान्त्यरण्यानि अत्ति भक्षयति, दहतीत्यर्थः । तत्र निदर्शनम्--राजा इभ्यान्न । भियं यन्तीति नैरुक्तव्युत्पत्त्या इभ्याः शत्रवः । तान् यथा समूलं हिनस्ति तद्वत् । यद्वा, इभ्याः धनिनः । तान् यथा धनमपहरन् राजा हिनस्ति तद्वदित्यर्थः । अपि च, यत् यदा वातजूतः वातेन प्रेरितः सन् वना वनानि अरण्यानि व्यस्थात् उक्तप्रकारेण विविधमातिष्ठति दग्धुं प्रवर्तते तदानीं अग्निर्ह असावग्निरेव पृथिव्याः भूमेः संबन्धीनि रोम औषधिरूपाणि रोमाणि दाति छिनत्ति । भूम्यामोषधिवनस्पतिजातं यदस्ति तत् सर्वं दहतीति भावः । ऋसा.

राजा तरुणसेवकस्वीकर्ता

[2]वनेषु जायुर्मर्तेषु मित्रो
वृणीते श्रुष्टिं राजेवाजुर्यम् ।
क्षेमो न साधुः क्रतुर्न भद्रो
भुवत्स्वाधीर्होता हव्यवाट् ॥

(१) ऋसं. १।६५।७--८.
(२) ऋसं. १।६७।१-२.

वनेषु जायुः अरण्येषु जायमानः मर्तेषु मनुष्येषु मित्रः सखा सोऽयमग्निः श्रुष्टिम् । शु आशु अश्नुते कर्माणि व्याप्नोतीति श्रुष्टिः यजमानः, क्षिप्रेण कर्मणामनुष्ठातेत्यर्थः । तथा च यास्कः-- 'श्रुष्टीति क्षिप्रनामाशु अष्टीति' (नि. ६।१३) । एवंभूतं यजमानं वृणीते संभजते । अनेन प्रत्तं हविः स्वीकृत्य रक्षतीति भावः । तत्र दृष्टान्तः--राजेव अजुर्यम् । अजुर्यं जरारहितं दृढाङ्गम्, सर्वकार्येषु शक्तमित्यर्थः । एवंभूतं पुरुषं यथा राजा वृणीते तद्वत् । क्षेमो न रक्षक इव साधुः साधयिता । क्रतुर्न । क्रतुः कर्मणां कर्ता स इव भद्रः भजनीयः कल्याणो वा होता देवानामाह्वाता हव्यवाट् हव्यवाहनो नाम देवानामग्निः । तथा चाऽऽम्नायते-- 'त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणाम्' (तैसं. २।५।८।६) इति । एवंभूतोऽग्निः स्वाधीः शोभनकर्मा शोभनाऽऽध्यानः वा भुवत् भवतु । ऋसा.

बलवतो राज्ञो दौत्यम्

[1]मथीद्यदीं विभृतो मातरिश्वा
गृहेगृहे श्येतो जेन्यो भूत् ।
आदीं राज्ञे न सहीयसे सचा
सन्ना दूत्यं भृगवाणो विवाय ॥

मातरिश्वा व्यानवृत्तिरूपेणावस्थितो मुख्यप्राणः ईं एनमग्निं यत् यदा मथीत् अमथ्नात् । अग्नेर्मन्थनस्य व्यानवायुसाध्यत्वं 'अथ यः प्राणापानयोः संधिः स व्यानः' इत्युपक्रम्य छन्दोगैराम्नातम्-- 'अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति' (छाउ. १।३।३।५) इति । मन्त्रान्तरं च भवति-- आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः' (ऋसं.

(१) ऋसं. १।७१।४.

१।९३।६ ) इति । कीदृशो मातरिश्वा ? विभृतः प्राणिषु प्राणापानादिपञ्चवृत्तिरूपेण विहृतो विभज्य स्थितः। तदपि प्राणसंवादे तैरेवाऽऽम्नातम्-- 'तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथाहमेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति ' ( प्रउ. २।३ ) । मन्थनेनोत्पन्नोऽयमग्निः श्येतः शुभ्रवर्णो भूत्वा गृहेगृहे सर्वस्मिन् यज्ञगृहे यदा जेन्यः प्रादुर्भूतः भूत् । यद्वा, रक्षसां जेन्यः जेता अभिभविता भूत् । तथा च तैत्तिरीयकम् – ' देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति तेऽग्निमेव वरूथं कृत्वाऽसुरानभ्यभवन् ' ( तैसं. ६।२।२।६–७ ) इति । ऐतरेयिणोऽप्यामनन्ति-- ' ते देवाः प्रतिबुध्याग्निं पुरस्तात् प्रातःसवने पर्यौहंस्तेऽग्निनैव पुरस्तात् प्रातःसवनेऽसुररक्षांस्यपाघ्नत ' ( ऐब्रा. ६।४ ) इति ।आत् यज्ञगृहे प्रादुर्भावानन्तरं ईं एनमग्निं भृगवाणः । भृगुः ऋषिः । स इवाऽऽचरन् यजमानः दूत्यं दूतस्य कर्म आ विवाय शास्त्रमर्यादया प्रापयामास । तत्र दृष्टान्तः– सचा सन् । सखा भवन्नन्यो राजा सहीयसे अभिभवित्रे प्रबलाय राज्ञे न । यथा राज्ञे स्वपुरुषं दूतकर्म प्रापयति तद्वत् । ऋसा.

मित्रसंपन्नो राजा

[1]देवो न यः पृथिवीं विश्वधाया
उपक्षेति हितमित्रो न राजा ।
पुरःसदः शर्मसदो न वीरा
अनवद्या पतिजुष्टेव नारी ॥ *

गृहमभ्यागतो राजा सत्पतिः

[2]एन्द्र याह्युप नः परावतो नायमच्छा
विदथानीव सत्पतिरस्तं राजेव सत्पतिः ।
हवामहे त्वा वयं
प्रयस्वन्तः सुते सचा ।
पुत्रासो न पितरं वाजसातये
मंहिष्ठं वाजसातये ॥

हे इन्द्र, परावतः दूरदेशात् स्वर्गलक्षणात् नः अस्मान् उप याहि अस्मत्समीपं प्रत्यागच्छ । तत्र दृष्टान्तः– अयं न । पुरोवर्ती अग्निः अभिषुतः सोमो वा प्रस्तुतत्वात् निर्दिश्यते । स इव । यद्यपि पुरस्तादुपाचारात् निषेधार्थीयो नकारः सर्वत्र, तथाऽप्यत्र औचित्येन उपमार्थीयो गृह्यते । यद्वा, परावतो न दूरदेशादिव । यद्यपि यज्ञे सर्वदा संनिहितः तथापि स्वर्गाख्याद्दूरदेशादिव अस्मिन् यज्ञे । अयमिति विभक्तिव्यत्ययः । अमुं देवयजनदेशं अच्छ अभिप्राप्तुं आ याहि इति शेषः । तत्र दृष्टान्तः– सत्पतिः सतां सर्वदा वर्तमानानामृत्विजां पालको यजमान इव । स यथा विदथानि वेदनानि अनुष्ठेयज्ञानानि । यद्वा, सतां विद्यमानानां फलानां पालकोऽग्निः । स यथा विदथानि यज्ञगृहाण्यागच्छति तद्वत् त्वमपि यज्ञगृहाण्यागच्छ । यद्वा, सतां नक्षत्राणां पतिः राजा चन्द्रमाः अस्तमिव । स यथा स्वधामस्थानमागच्छति तद्वत् । किंच, प्रयस्वन्तः हविर्लक्षणान्नवन्तः वयं यजमानाः त्वा त्वां हवामहे आह्वयामः । किमर्थम् ? सुते अभिषुते सोमे निमित्तभूते सति । कीदृशाः वयम् ? सचा ऋत्विग्भिः सहिताः । ' सचा सहेत्यर्थः ' ( नि. ५।५ ) इति यास्कः । आह्वाने दृष्टान्तः-- पुत्रासः पुत्राः पितरं न पालकं जनकमिव । तं यथा वाजसातये अन्नस्य संभजनाय आह्वयन्ति तथा वयमपि त्वां तदर्थमाह्वयामः । किंच, मंहिष्ठं मंहनीयं त्वां वाजसातये संग्रामप्राप्तये तज्जयाय हविःस्वीकाराय वा आह्वयामः । ऋसा.

इन्द्रानुग्रहेण मानवः जनानां राजत्वं
रक्षकत्वं च भजते

[1]कुविन्मा गोपां करसे जनस्य
कुविद्राजानं मघवन्नृजीषिन् ।
कुविन्म ऋषिं पपिवांसं सुतस्य
कुविन्मे वस्वो अमृतस्य शिक्षाः ॥

---

* अस्या ऋचः व्याख्यानं 'देवा राजानः– अग्निः' इत्यस्मिन् प्रकरणे ( राका. पृ. ४१ ) द्रष्टव्यम् ।

( १ ) ऋसं. १।७३।३.

( २ ) ऋसं. १।१३०।१; सासं. १।४।१२ (४५९) रस्तं ( रस्ता ) (वयं०) सुते सचा । (सुतेष्वा); ऐब्रा. २२।८; शाब्रा. २३।७; ऐआ. ५।१।१।७.

( १ ) ऋसं. ३।४३।५.

हे इन्द्र, कुवित् अपि च मा मां जनस्य गोपां गोप्तारं करसे कुरु। तथा, हे मघवन् धनवन्, ऋजीषिन् सोमवन् हे इन्द्र, मां राजानं सर्वस्य स्वमिनं कुरु। कुवित् च, मा मां ऋषिं अतीन्द्रियार्थस्य द्रष्टारं कुरु। 'ऋषिर्दर्शनात्' (नि. २।११) इति यास्कः। तथा, सुतस्य अभिषुतस्य सोमस्य पपिवांसं पातारं कुरु। अपि च, मे मह्यं अमृतस्य क्षयरहितं वस्वः वसु शिक्षाः प्रयच्छ। ऋसा.

मित्रसंपन्नो राजा

[1]इमां च नः पृथिवीं विश्वधाया
उप क्षेति हितमित्रो न राजा।
पुरःसदः शर्मसदो न वीरा
महद्देवानामसुरत्वमेकम्॥

विश्वधायाः विश्वस्य धाता सर्वान्नो वा नः अस्माकं राजा इन्द्रः इमां पृथिवीं अन्तरिक्षं च उप तयोः समीपे क्षेति निवसति। तत्र दृष्टान्तः— हितमित्रो न। यथा कस्यचित् हितोपदेष्टा सुहृत् समीपे निवसति तद्वत्। वीराः समर्थाः युद्धसहाया मरुतः पुरःसदः युद्धार्थं पुरतो निश्चयेन गन्तारः इन्द्रस्य शर्मसदो न। नश्चार्थे। शर्मणि गृहे सीदन्तश्च भवन्ति यत्र यत्रासौ तत्र तत्र संनिधिं कुर्वाणा इत्यर्थः। ऋसा.

अमात्यसहितो राजा गजेन सेनामनुगच्छति, चारान् प्रेषयति, विशो रक्षति

[2]कृणुष्व पाजः प्रसितिं न पृथ्वीं
याहि राजेवामवाँ इभेन।
तृष्वीमनु प्रसितिं द्रूणानो-
ऽस्तासि विध्य रक्षसस्तपिष्ठैः॥

हे अग्ने, पाजः तेजःसंघं कृणुष्व कुरुष्व विस्तारय। तत्र दृष्टान्तः— प्रसितिं न। यथा मृगयुः पृथ्वीं विस्तीर्णां प्रसितिम्। प्रकर्षेण सीयते बध्यते इति प्रसितिः वागुरा। तादृशीं प्रसितिं पक्षिग्रहणार्थं वनगहनेषु प्रसारयति तद्वत् त्वमपि रक्षांसि हन्तुं महद्बलमग्रतस्तनुष्व। इभेन गतभयेन तेजःसंघेन युक्तस्त्वं याहि रक्षांसि हन्तुं गच्छ। तत्र दृष्टान्तः— राजेव। यथा अमवान्। राज्ञा सह वर्तते इत्यमः अमात्यः तद्वान्। यद्वा, अमः अमनं रोगः। शत्रूणां कर्तव्यैः रोगैस्तद्वान्, शत्रूणां रोगभूत इत्यर्थः। राजा इभेन गजेन युक्तः सन् परबलं प्रतिगच्छति तद्वत्। किंच तृष्वीम्। तृष्वीति क्षिप्रनाम। क्षिप्रगामिनीं प्रसितिं प्रकृष्टां सेनां अनु द्रूणानः अनुगच्छन्। यद्वा, तृष्वीमिति तृतीयार्थे द्वितीया। तृष्व्या क्षिप्रया प्रसित्या अनुबद्धया संततया गत्या द्रूणानः परसेनां हिंसन् अस्ता शत्रूणां क्षेप्ता असि। तपिष्ठैः तप्तृतमैः तेजोभिः रक्षसः राक्षसान् विध्य ताडय। अत्र निरुक्तम्— 'कुरुष्व (? कृणुष्व) पाजः। पाजः पालनात्। प्रसितिमिव पृथ्वीम्। प्रसितिः प्रसहनात् तन्तुर्वा जालं वा। याहि राजेवामात्यवानभ्यमनवान्स्ववान्वेरावता (वेराभृता ?) गणेन गतभयेन हस्तिनेति वा। तृष्व्याऽनु प्रसित्या द्रूणानः। तृष्वीति क्षिप्रनाम तरतेर्वा त्वरतेर्वा। अस्तासि विध्य रक्षसस्तपिष्ठैः तप्ततमैः तृप्ततमैः तपिष्ठतमैरिति वा' (नि. ६।१२) इति। ऋसा.

[1]प्रति स्पशो वि सृज तूर्णितमो
भवा पायुर्विशो अस्या अदब्धः।
यो नो दूरे अघशंसो यो
अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत्॥

हे अग्ने, तूर्णितमः त्वरिततमस्त्वं स्पशः परबाधकान् रश्मीन् चारान् वा सत्यानृतविवेकार्थं वि सृज शत्रून् प्रति विशेषेण प्रेरय। अदब्धः केनाप्यहिंसितस्त्वं अस्याः त्वदीयायाः विशः अस्मदादिकायाः प्रजायाः पायुः पालकः भव। कस्मात् तद्रक्षणमित्यपेक्षायामाह— नः अस्माकं दूरे यः अघशंसः। अघं पापात्मकं शंसनं अभिलाषः कीर्तनं

(१) ऋसं. ३।५५।२१.

(२) ऋसं. ४।४।१; तैसं. १।२।१४।१; कासं. १०।५ (८), १६।१५ (१८९); मैसं. २।७।१५ (२०४) मवाँ (मवं); शुसं. १३।९; ऐब्रा. ४।२; शाब्रा. ८।४; शब्रा. ७।४।१।३३; आश्रौ. ४।६; नि. ६।१२.

(१) ऋसं. ४।४।३; तैसं. १।२।१४।१-२; कासं १६।१५ (१९१); मैसं. २।७।१५ (२०६) वि सृज (विसृजा); शुसं. १३।११ माकिष्टे (मा किष्टे).

वा यस्य सोऽघशंसः । यः च अघशंसः अन्ति अस्माकं समीपे तिष्ठति तस्मादुभयविधाच्छत्रोः पालको भव । किंच, ते त्वत्संबन्धिनः अस्मान् माकिः न कश्चिदपि व्यथिः बाधको राक्षसः आ दधर्षीत् आधर्षयतु, अस्माकं कश्चिदपि परिभवं मा करोत्वित्यर्थः । ऋसा.

[1]अर्चामि ते सुमतिं घोष्यर्वाक्
सं ते वावाता जरतामियं गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमा-
स्मे क्षत्राणि धारयेरनु द्यून् ॥

हे अग्ने, ते तव सुमतिं अनुग्रहकरीं शोभनां बुद्धिं अर्चामि पूजयामि । ववाता पुनःपुनः त्वां अभिगच्छन्ती इयं उच्यमाना गीः वाक् घोषि घोषयुक्तं यथा भवति तथा अर्वाक् त्वदभिमुखं ते त्वां सं जरतां स्तौतु । वयमपि स्वश्वाः शोभनाश्वोपेताः सुरथाः च । उपलक्षणमेतत् । पुत्रपौत्रादिभिः सहिताः सन्तः त्वा त्वां मर्जयेम अलंकुर्याम, परिचरेमेति यावत् । त्वं तु अनु द्यून् अन्वहं अस्मे अस्मासु क्षत्राणि धनानि धारयेः निधेहि । ऋसा.

राजा त्रसदस्युर्मानवोऽर्धदेवः इन्द्रवरुणयोस्तादात्म्य-
मनुभवति

[2]मम द्विता राष्ट्रं क्षत्रियस्य
विश्वायोर्विश्वे अमृता यथा नः ।
क्रतुं सचन्ते वरुणस्य देवा
राजामि कृष्टेरुपमस्य वव्रेः ॥

क्षत्रियस्य क्षत्रियजात्युत्पन्नस्य विश्वायोः कृत्स्नमनुष्याधीशस्य । मम इत्यात्मनो निर्देशः । द्विता क्षितिस्वर्गभेदेन द्वित्वापन्नं राष्ट्रम् । मम त्रसदस्योः विश्वे सर्वे अमृताः देवाः यथा नः अस्माकं भवन्ति तथा राष्ट्रं प्रजाश्चेत्यर्थः । वरुणस्य वारकस्य वरुणात्मनो वा कृष्टेः मनुष्यस्य तद्वतो वा उपमस्य । अन्तिकनामैतत् । सर्वेषामन्तिकतमस्य वव्रेः । रूपनामैतत् । रूपवतो मम क्रतुं कर्म सचन्ते सेवन्ते देवाः सर्वेऽपि । अहं च राजामि । राजतिः ऐश्वर्यकर्मा । सर्वेश्वरः भवामि । यद्वा, उपमस्य वव्रेः कृष्टे राजामीति योज्यम् । ऋसा.

अहं राजा वरुणो मह्यं ता-
न्यसुर्याणि प्रथमा धारयन्त ।
क्रतुं सचन्ते वरुणस्य देवा
राजामि कृष्टेरुपमस्य वव्रेः ॥

अहमेव च राजा वरुणः भवामि । मह्यं मदर्थमेव प्रथमा मुख्यानि तानि प्रसिद्धानि असुर्याणि असुरविघातकानि बलानि धारयन्त अधारयन् देवाः । शिष्टं गतम् । ऋसा.

अहमिन्द्रो वरुणस्ते महित्वो-
र्वी गभीरे रजसी सुमेके ।
त्वष्टेव विश्वा भुवनानि विद्वा-
न्समैरयं रोदसी धारयं च ॥

अहं त्रसदस्युः इन्द्रः इन्द्रोऽप्यस्मि । अहं वरुणः च । ते महित्वा महित्वेन उर्वी विस्तीर्णे गभीरे दुरवगाहे अवकाशवत्यौ वा सुमेके सुरूपे रजसी द्यावापृथिव्यौ ते अप्यहमेव । विद्वान् जानन्नहं त्वष्टेव प्रजापतिरिव विश्वा भुवनानि सर्वाणि भूतानि समैरयं संप्रेरयम् । रोदसी द्यावापृथिव्यौ धारयं च धृतवानस्मि । ऋसा.

मां नरः स्वश्वा वाजयन्तो
मां वृताः समरणे हवन्ते ।
कृणोम्याजिं मघवाहमिन्द्र
इयर्मि रेणुमभिभूत्योजाः ॥

मां मामेव स्वश्वाः शोभनाश्वाः वाजयन्तः संग्राममिच्छन्तः नरः नेतारो भटाः । अनुगच्छन्तीति शेषः । मामेव वृताः सन्तः समरणे संग्रामे हवन्ते आह्वयन्ति युद्धार्थम् । मघवा धनवान् अहमिन्द्रः सन् आजिं रणं कृणोमि करोमि । अभिभूत्योजाः परेषां अभिभाविबलोऽहं रेणुं इयर्मि प्रेरयामि । ऋसा.

---

(१) ऋसं. ४।४।८; तैसं. १।२।१४।३—४; कासं. ६।११ (४८) मर्ज (मार्ज); मैसं. ४।११।५ (११७); आश्रौ. ४।१.

(२) ऋसं. ४।४२।१-३, ५.

[1]अस्माकमत्र पितरस्त आस-
न्त्सप्त ऋषयो दौर्गहे बध्यमाने ।
त आयजन्त त्रसदस्युमस्या
इन्द्रं न वृत्रतुरमर्धदेवम् ॥

'पुरुकुत्सस्य महिषी दौर्गहे बन्धनस्थिते । पत्यावराजकं दृष्ट्वा राष्ट्रं पुत्रस्य लिप्सया ॥ यदृच्छया समायातान् सप्तर्षीन् पर्यपूजयत् । ते च प्रीताः पुनः प्रोचुर्यजेन्द्रावरुणौ भृशम् ॥ सा चेन्द्रावरुणाविष्ट्वा त्रसदस्युमजीजनत् । इतिहासमिमं जानन्नृषिर्ब्रूते ऋचाविह ॥' अथ अस्माकमत्र अस्मिन्नराजके देशे अस्यां पृथिव्यां वा पितरः पालयितारः उत्पादकाः ते आसन् अभवन् । एते सप्त ऋषयः प्रसिद्धाः दौर्गहे दुर्गहस्य पुत्रे पुरुकुत्से बध्यमाने दृढं पाशैर्यस्मात् अस्याः अस्यै पुरुकुत्सान्यै त्रसदस्युं आयजन्त प्रादुरिन्द्रावरुणयोरनुग्रहात् । कीदृशं तम् ? वृत्रतुरं वृत्रस्य शत्रोर्हन्तारं अर्धदेवं देवानामर्धे समीपे वर्तमानम् । यद्वा, देवानामर्धभूतं इन्द्रं न इन्द्रमिव स्थितं पुत्रं दत्तवन्तः । 'यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः' (तैसं. ५।४।८।३) इति तैत्तिरीयकम् । ऋसा.

[2]पुरुकुत्सानी हि वामदाश-
द्धव्येभिरिन्द्रावरुणा नमोभिः ।
अथा राजानं त्रसदस्युमस्या
वृत्रहणं ददथुरर्धदेवम् ॥

हे इन्द्रावरुणौ, पुरुकुत्सानी पुरुकुत्सस्य पत्नी ऋषिप्रेरिता वां युवां अदाशत् हि अप्रीणयत् खलु हव्येभिः हविर्भिः नमोभिः स्तुतिभिश्च । अथ राजानं त्रसदस्युं वृत्रहणं अर्धदेवं उक्तलक्षणं पुत्रं अस्याः अस्यै पुरुकुत्सान्यै ददथुः दत्तवन्ताविति । ऋसा.

पुरोहितो राजसहायः, ब्राह्मणो राज्ञा
धनदानादिना पूजनीयः

[3]स इद्राजा प्रतिजन्यानि विश्वा
शुष्मेण तस्थावभि वीर्येण ।
बृहस्पतिं यः सुभृतं बिभर्ति
वल्गूयति वन्दते पूर्वभाजम् ॥

इदमाद्यृक्त्रयं पुरोहितप्रशंसा इति ब्राह्मणम् (ऐब्रा. ८।२६)। अथवा, सूक्तस्य ऋग्द्वयवर्जितस्य बार्हस्पत्यत्वात् बृहस्पतेरेव स्तुतिः । स इत् स एव राजा मूर्धाभिषिक्तः अन्यः वा राजमानः प्रतिजन्यानि । जन्यं युद्धं प्रति बलानीत्यर्थः । प्रत्यर्थिजनपदानि वा तानि विश्वा सर्वाणि शुष्मेण बलेन वीर्येण शरीरसामर्थ्येन वा (? च) अभि अभिगम्य आक्रम्य तस्थौ तिष्ठति । स इत्युक्तं क इत्याह– यः बृहस्पतिं बृहतां महतां पालयितारं देवं उक्तलक्षणं पुरोहितं वा सुभृतं सुष्ठु हविःस्तोत्रादिना अन्नाच्छादनादिना वा बिभर्ति भरति, वल्गूयति स्तौति, वन्दते नमस्करोति च, पूर्वभाजं इतरेभ्यः प्रथमं संभक्तारं कृत्वा । एवं यः करोति स एव तस्थाविति । ऋसा.

[1]स इत्क्षेति सुधित ओकसि स्वे
तस्मा इळा पिन्वते विश्वदानीम् ।
तस्मै विशः स्वयमेवा नमन्ते
यस्मिन् ब्रह्मा राजनि पूर्व एति ॥

स इत् स एव क्षेति निवसति । सुधितः सुष्ठु तृप्तः सन् स्वे स्वकीये एव ओकसि सदने । स एव समृद्धः निर्बाधः सन् सुखेनाऽऽस्ते । तस्मा इळा भूमिः विश्वदानीं सर्वकालं पिन्वते वर्धते फलैः । तस्मै विशः प्रजाः स्वयमेव नमन्ते प्रणता भवन्ति । दण्डनमन्तरेण स्वयमेव दत्तकरा भवन्ति । यस्मिन् राजनि ब्रह्मा पूर्वः प्रथमं पूज्यः सन् एति गच्छति, वर्तते इत्यर्थः । ऋसा.

[2]अप्रतीतो जयति सं धनानि
प्रतिजन्यान्युत या सजन्या ।
अवस्यवे यो वरिवः कृणोति
ब्रह्मणे राजा तमवन्ति देवाः ॥

(१) ऋसं.४।४२।८; शब्रा.१३।५।४।५; शाश्रौ. १२।११।१४.
(२) ऋसं. ४।४२।९.
(३) ऋसं. ४।५०।७; ऐब्रा.४०।३.

(१) ऋसं.४।५०।८; ऐब्रा.४०।३; तैब्रा.२।४।६।४ दानीम् (दानी) वा नमन्ते (वाऽऽनमन्ति)।
(२) ऋसं. ४।५०।९; ऐब्रा. ४०।३.

स एव अप्रतीतः अन्यैरप्रतिगतः सन् ( या ) यानि ( धनानि ? ) प्रतिजन्यानि प्रतिस्पर्धिजनसंबन्धीनि उत अपि च सजन्या जनसंबन्धीनि धनानि सं जयति । यः राजा अवस्यवे अवसीयसे धनरहिताय रक्षणमिच्छते ब्रह्मणे ब्राह्मणाय वा प्रीणनमिच्छते बृहस्पतये वा वरिवः धनं कृणोति करोति ददाति । स उक्तप्रकारेण महान् भवति । तमेव देवाः अवन्ति रक्षन्ति । ऋसा.

सोमयज्ञो राज्ञो धर्मः

[1]न स राजा व्यथते यस्मिन्निन्द्र-
स्तीव्रं सोमं पिबति गोसखायम् ।
आ सत्वनैरजति हन्ति वृत्रं
क्षेति क्षितीः सुभगो नाम पुष्यन् ॥

स राजा न व्यथते व्यथितो न भवति । यस्मिन् राजनि तदीये यज्ञे इन्द्रः तीव्रं मदजनकं सोमं पिबति गोसखायम् । विकारे प्रकृतिशब्दः । क्षीरादिमिश्रणवन्तम् । स राजा सत्वनैः सत्वभिः अनुचरैः आ सर्वतः अजति गच्छति । हन्ति च वृत्रं पापं वैरिणं वा । क्षेति गच्छति क्षितीः प्रजाः । अथवा क्षितीर्निवासान्निवसते । सुभगः शोभनसुखः नाम नामकं धनमिन्द्रस्य स्तोत्रं वा पुष्यन् पोषयन् । ऋसा.

राजा चित्रः, अन्ये राजकाः ( असमर्था राजानः )

[2]चित्र इद्राजा राजका इदन्यके
यके सरस्वतीमनु ।
पर्जन्य इव ततनद्धि वृष्ट्या
सहस्रमयुता ददत् ॥

अनया चित्र एव प्रादादिति निश्चयमकार्षीत् । सहस्रं सहस्रसंख्याकं धनं अयुता अयुतानि च धनानि च ददत् प्रयच्छन् चित्र इत् चित्रनामैव राजा । अन्यके यके । अल्प इत्यर्थे कः । अल्पा येऽन्ये राजका इत् राजान एव सरस्वतीमनु सरस्वत्यास्तीरे वर्तन्ते । तान् सर्वान् याचमानानयमेव चित्रो राजा ततनत् धनैस्तनोति । तत्र दृष्टान्तः— पर्जन्य इव । यथा पर्जन्यः पृथिवीं वृष्ट्या तनोति प्रीणयति तथा अयं चित्रः सर्वान् धनैः प्रीणयतीत्यर्थः । ऋसा.

स्पर्धमानानां विशां अधिष्ठाता राजा

[3]पवमानो अभि स्पृधो विशो राजेव सीदति ।
यदीमृण्वन्ति वेधसः ॥

यत् यदा ईं एनं सोमं वेधसः कर्मणां कर्तारः ऋण्वन्ति प्रेरयन्ति तदा पवमानः क्षरन्नेष सोमः स्पृधः स्पर्धमानान् यागविघ्नकारिणो राक्षसान् विशः स्पर्धमानान् मनुष्यान् राजेव यथा राजा तद्वत् अभि षीदति नाशयितुमभिगच्छति । ऋसा.

राजानः प्रशंसया अलंक्रियन्ते

[1]राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते ।
यज्ञो न सप्त धातृभिः ॥

सोमासः सोमाः प्रशस्तिभिः प्रशस्ताभिः स्तुतिरूपाभिर्वाग्भिः राजानो न यथा राजानः, सप्त धातृभिः सप्त( भिः ) होत्राभिः यज्ञो न यथा च यज्ञः तथा गोभिः गोविकारैः पयोभिः अञ्जते अज्यन्ते, संस्क्रियन्ते इत्यर्थः । ऋसा.

सुव्रतो राजा स्तवार्हः

[2]त्वं राजेव सुव्रतो गिरः सोमा विवेशिथ ।
पुनानो वह्ने अद्भुत ॥

हे सोम, सुव्रतः सुकर्मा पुनानः त्वं राजेव गिरः अस्मदीयाः स्तुतीः आ विवेशिथ आविशसि । हे वह्ने वोढः, अद्भुत महन् सोम । ऋसा.

राजद्वारा प्रथमानां धनानां प्राप्तिः

[4]गोभिष्टरेमामतिं दुरेवां
यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धना-
न्यस्माकेन वृजनेना जयेम ॥

( १ ) ऋसं. ५।३७।४.
( २ ) ऋसं. ८।२१।१८.

( १ ) ऋसं. ९।७।५; सासं. २।८।२ ( ११३२ ).
( २ ) ऋसं. ९।१०।३; सासं. २।८।१ ( १२१ ).
( ३ ) ऋसं. ९।२०।५; सासं. २।६।२ (९७२).
( ४ ) ऋसं. १०।४२।१०, १०।४३।१०, १०।४४।१० ; असं. ७।५०।७, २०।८९।१० यवेन + ( वा ) विश्वाम् ( विश्वे) राजभिः ( राजसु ) स्माकेन ( रिषासो ) नेना ज ( नीभिर्जे ): २०।१७।१०, २०।९४।१०.

हे पुरुहूत बहुभिराहूतेन्द्र, तव प्रसादात् दुरेवां दुष्टागमनां दारिद्र्यादागतां अमतिं दुर्बुद्धिं वयं घोषेयाः सुहृत्स्याः गोभिः पशुभिः तरेम निस्तरेम । किंच, यवेन विश्वां व्याप्तां क्षुधं तरेम । किंच, प्रथमाः मुख्यानि धनानि राजभिः धनानामीश्वरैः लभेमहीति शेषः । यद्वा, प्रथमा वयमिति संबन्धः । किंच, अस्माकेन अस्मदीयेन वृजनेन बलेन जयेम । शत्रूनिति शेषः । ऋसा.

इक्ष्वाकुनामा असमातिः राजा जनो वा असामान्यगुणः

[1]आ जनं त्वेषसंदृशं माहीनानामुपस्तुतम् ।
अगन्म बिभ्रतो नमः ॥

इदमादिभिस्तिसृभी राजानं स्तुवन्ति । वयं बन्ध्वादयः जनं जनपदं असुनीतिस्वभूतं आ अगन्म अभिगताः । कीदृशं जनम् ? त्वेषसंदृशं दीप्तदर्शनं माहीनानां महतां उपस्तुतं उपगतस्तुतिम् । कीदृशा वयम् ? नमः नमस्कारं बिभ्रतः धारयन्तः, कुर्वन्त इत्यर्थः । यद्वा, जनं असमातिमित्यर्थः । शिष्टं समानम् । नमो बिभ्रत इति राजकृते नमस्कारं धारयन्त इत्यर्थः । ऋसा.

असमातिं नितोशनं त्वेषं निययिनं रथम् ।
भजेरथस्य सत्पतिम् ॥

असमातिं राजानं नितोशनं शत्रूणां हन्तारम् । नितोशतिः वधकर्मा । त्वेषं दीप्तम् । निययिनं रथं इत्युपमाप्रधानो निर्देशः । रथवत् सर्वाभिमतप्राप्तिसाधनं भजेरथस्य एतन्नामकस्य राज्ञो वंशे जातम् । यद्वा, एतन्नामा कश्चिदस्य शत्रुः । तस्य निययिनम् । सत्पतिं सतां पालकम् । ऋसा.

यो जनान् महिषाँ इवातितस्थौ पवीरवान् ।
उतापवीरवान् युधा ॥

यः असमातिः जनान् स्वविरोधिभूतान् अतितस्थौ अतिक्रम्य तिष्ठति, पराभावयतीत्यर्थः । क इव ? महिषान् सिंह इव । कीदृशः सन् ? पवीरवान् । पवीरः पविः । खड्गवान् । उत अपि च अपवीरवान् अपगतखड्गः सन् । शस्त्रसाहाय्यमपि कदाचिन्नापेक्षते इत्यर्थः । किं कुर्वन् ? युधा योधनेन, युद्ध्वेत्यर्थः । ऋसा.

यस्येक्ष्वाकुरुप व्रते रेवान्मराय्येधते ।
दिवीव पञ्च कृष्टयः ॥

यस्य जनपदस्य इक्ष्वाकुः राजा व्रते कर्मणि रक्षणरूपे उप एधते प्रवर्धते । कीदृशः सन् ? रेवान् रयिवान् मरायी शत्रूणां मारकश्च सन् । विशेषणद्वयेन जनानां दानादिरूपेण धनलाभः पराजोपद्रवापत्तिश्चोक्ता भवति । एवं सति तद्विषयस्थाः पञ्च कृष्टयः निषादपञ्चमाश्चत्वारो वर्णाः दिवीव द्युलोके यथा संकल्पसिद्धाः सन्तः सुखिनो भवन्ति तद्वत् सुखिनो भवन्तीति शेषः । ऋसा.

इन्द्र क्षत्रासमातिषु रथप्रोष्ठेषु धारय ।
दिवीव सूर्यं दृशे ॥

अनयेन्द्रमाह्वयतेऽसमात्यर्थम् । हे इन्द्र, क्षत्रा क्षत्राणि बलानि रथप्रोष्ठेषु असमातिषु । एकस्मिन् बहुवचनं पूजार्थम् । रथप्रोष्ठे असमातौ धारय । दिवीव सूर्यं दिवि यथा सूर्यं दृशे सर्वेषां दर्शनाय स्थापितवानसि तद्वदत्र बलं धारय । ऋसा.

ग्रामणी सावर्णी मनुः दानपरायणः

[1]प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु ।
यः सहस्रं शताश्वं सद्यो दानाय मंहते ॥

उत्तराभिश्चतसृभिरस्मै मानवायर्षये सावर्णिना यद्दत्तं तत्प्रशस्यते । तदप्युक्तं शौनकेन— ‘ सावर्णिना च यद्दत्तं मानवाय महद्वसु । तदुक्तं सूक्तशेषेण प्र नूनं जायतामिति ॥ ’ अयं सावर्णिः मनुः नूनं क्षिप्रं प्र जायतां प्रजातो भवतु । धनादिभिः पुत्रादिभिश्च रोहतु प्रादुर्भवतु । तत्र दृष्टान्तः— तोक्मेव । यथा जलक्लिन्नं बीजं प्रादुर्भवति एवं कर्मफलसंयुक्तः सः मनुः पुत्रादिभिः रोहतु । यः अयं मनुः शताश्वं बह्वश्वसंयुक्तं सहस्रं गवां सद्यः तदानीमेव दानाय मंहते अस्मा ऋषये दातुं प्रेरयति । ऋसा.

(१) ऋसं. १०।६०।१-५.

(१) ऋसं. १०।६२।८-११.

**न तमश्नोति कश्चन**
**दिवइव सान्वारभम् ।**
**सावर्ण्यस्य दक्षिणा**
**वि सिन्धुरिव पप्रथे ॥**

तं सावर्णिं मनुं कश्चन कश्चिदपि आरभं आरब्धुं स्वकर्मणा न अश्नोति न व्याप्नोति, यथा मनुः प्रयच्छति तथाऽन्यो दातुं न शक्नोतीत्यर्थः । कथंस्थितम् ? दिवइव द्युलोकस्य सानु समुच्छ्रितं तेजसा कैश्चिदप्यप्रधृष्यमादित्यमिव स्थितम् । आरभम् । 'शकि णमुल्कमुलौ' (पा. ३।४।१२) इति कमुल् । तस्य सावर्ण्यस्य मनोः इयं गवादिदक्षिणा सिन्धुरिव स्यन्दमाना नदीव पृथिव्यां पप्रथे विप्रथते विस्तीर्णा भवति । ऋसा.

**उत दासा परिविषे स्मद्दिष्टी गोपरीणसा ।**
**यदुस्तुर्वश्च मामहे ॥**

उत अपि च, स्मद्दिष्टी कल्याणादेशिनौ गोपरीणसा गोपरीणसौ गोभिः परिवृतौ बहुगवादियुक्तौ दासा दासवत् प्रेष्यवत् स्थितौ तेनाधिष्ठितौ यदुः च तुर्वश्च एतन्नामकौ राजर्षी परिविषे अस्य सावर्णेर्मनोर्भोजनाय ममहे पशून् प्रयच्छतः । प्रत्येकमन्वयादेकवचनम् । ऋसा.

**सहस्रदा ग्रामणीर्मा रिषन्मनुः**
**सूर्येणास्य यतमानैतु दक्षिणा ।**
**सावर्णेर्देवाः प्र तिरन्त्वायु-**
**र्यस्मिन्नश्रान्ता असनाम वाजम् ॥**

सहस्रदाः गवादीनां सहस्रस्य दाता ग्रामणीः ग्रामाणां नेता कर्ता जनपदानामयं मनुः मा रिषत् न कैश्चिदपि रिष्टो हिंसितो भवतु । यद्वा, कर्मनेतृनस्मान्मा हिनस्तु किंतु धनादिदानेन पूजयतु । अस्य यतमाना गच्छन्ती दक्षिणा सूर्येण सह एतु संगच्छताम् , त्रिषु लोकेषु प्रसिद्धा भवत्वित्यर्थः । तस्यास्य सावर्णेः सवर्णपुत्रस्य मनोः देवाः इन्द्रादयः आयुः जीवनं प्र तिरन्तु प्रवर्धयन्तु । अश्रान्ताः कर्मसु अनलसाः सर्वे कर्म कुर्वन्तो वयं यस्मिन् मनौ वाजं गोलक्षणमन्नं असनाम संभजेमहि । नाभानेदिष्ठोऽहमलभ इत्याशास्ते । ऋसा.

विविधा सुसंदृशो राजानः

**[1]विप्रासो न मन्मभिः स्वाध्यो**
**देवाव्यो३ न यज्ञैः स्वप्नसः ।**
**राजानो न चित्राः सुसंदृशः**
**क्षितीनां न मर्या अरेपसः ॥**

विप्रासो न विप्रा ब्राह्मणा इव ते यथा मन्मभिः स्तुतिभिः स्वाध्यः शोभनाध्याना भवन्ति एवं मरुतोऽप्यस्मदीयैः मन्मभिः मननीयैः स्तोत्रैः स्वाध्यः सुमनसो भवन्ति । अथवा, मन्मभिः स्तोत्रैर्युक्ता विप्रासो न मेधाविनः स्तोतारः इव स्वाध्यः यज्ञे यजमाने वा सुध्याना इत्यर्थः । तथा, यज्ञैः यागैः देवाव्यो न देवानां तर्पयितारो यजमाना इव स्वप्नसः । अप्न इति कर्मनाम । शोभनकर्माणः, ते यथा कर्मसु व्यापृता भवन्ति तद्वद्वृष्टिप्रदानादिकर्मसु व्यापृता इत्यर्थः । राजानो न मूर्धाभिषिक्ताः क्षितिपतय इव चित्राः चायनीयाः पूजनीयाः । यद्वा, चित्राभरणाः । तथा सुसंदृशः सुष्ठु दर्शनीयाः । तथा क्षितीनां निवासानां स्वामिनः मर्या न मनुष्या इव अरेपसः अपापाः । यथा प्रतिग्रहार्थमन्यत्रागत्वा स्वगृहे एवानुतिष्ठन्तो निर्दोषा भवन्ति तादृशा इत्यर्थः । ईदृशाः शोभन्ते इत्यर्थः । ऋसा.

शन्तनुराज्ञः ज्येष्ठो भ्राता देवापिः तस्य पुरोहितः

**[2]बृहस्पते प्रति मे देवतामिहि**
**मित्रो वा यद्वरुणो वासि पूषा ।**
**आदित्यैर्वा यद्वसुभिर्मरुत्वा-**
**न्त्स पर्जन्यं शंतनवे वृषाय ॥**

अस्य सूक्तस्याऽऽख्यानं निरुक्तकारः प्रदर्शयति— "देवापिश्चार्ष्टिषेणः शंतनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शंतनुः कनीयानभिषेचयाञ्चक्रे । देवापिस्तपः प्रतिपेदे । ततः शंतनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणाः— 'अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितम् । तस्मात्ते देवो न वर्षति ' इति । स शंतनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः —

(१) ऋसं. १०।७८।१.
(२) ऋसं. १०।९८।१-२.

‘ पुरोहितस्तेऽसानि याजयानि च त्वा ’ इति । ” ( नि. २।१० ) इति । तत्र ब्रह्मत्वे प्रवृत्तो बृहस्पतिमनुधावति । हे बृहस्पते, मे मम वृष्ट्यर्थं प्रति देवतां प्रति इहि प्रतिगच्छ । यष्टव्या देवताः प्रतिगच्छ । यदि त्वं मित्रो वा असि । अथवा, वरुणः असि । यद्वा, पूषा असि । अथवा, आदित्यैः द्वादशादित्यैररुणादिभिः वसुभिः वासकैरष्टवसुभिर्धरध्रुवादिभिः सह मरुत्वान् । मरुतो देवाः तद्वानसि । स त्वं पर्जन्यं तर्पयितारं मेघं शंतनवे राज्ञे वृषाय वर्षय ।　　ऋसा.

**आ देवो दूतो अजिरश्चिकित्वान्**
**त्वद्देवापे अभि मामगच्छत् ।**
**प्रतीचीनः प्रति मामा ववृत्स्व**
**दधामि ते द्युमतीं वाचमासन् ॥**

देवः कश्चित् दूतः अजिरः गमनशीलः चिकित्वान् चेतनावान् हे देवापे, त्वत् त्वत्तः सकाशात् त्वया प्रेषितः सन् मां अभि आ अगच्छत् अभ्यागच्छतु । हे बृहस्पते, प्रतीचीनः अस्मदभिमुखः मां प्रति आ ववृत्स्व मां प्रत्यागच्छ । ते तुभ्यं त्वदर्थं द्युमतीं दीप्तियुक्तां वाचं स्तुतिरूपां दधामि आसन् आस्येऽस्मदीये ।　　ऋसा.

सत्यपालका राजानः

**[१]पुनर्वै देवा अददुः पुनर्मनुष्या उत ।**
**राजानः सत्यं कृण्वाना ब्रह्मजायां पुनर्ददुः ॥**

लाभहेतुमाह– देवा ब्रह्मजायां जुहूं बृहस्पतये पुनः अददुः । वैशब्दः प्रसिद्धिवाची । उत अप्यर्थे । मनुष्या अपि पुनः अददुः । एवं देवमनुष्यैः कृतं दानं सत्यं यथार्थं कृण्वानाः कुर्वाणा राजानः अपि पुनः तस्मै ददुः । एवमव्यवहार्यत्वनिमित्तं पापमपि व्यनाशयन्निति भावः ।　　ऋसा.

---

( १ ) ऋसं. १०।१०९।६; असं. ५।१७।१० उत ( अददुः ) कृण्वाना ( गृह्णाना ).

प्रजा राजानं वृणते

**[१]ता अस्य ज्येष्ठमिन्द्रियं सचन्ते**
**ता ईमा क्षेति स्वधया मदन्तीः ।**
**ता ईं विशो न राजानं वृणाना**
**बीभत्सुवो अप वृत्रादतिष्ठन् ॥ ***

लोकानामिष्टो ध्रुवं स्थाता राजा राष्ट्ररक्षकः

**[२]आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः ।**
**विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥**

हे राजन्, त्वा त्वां आ अहार्षं अस्मद्राष्ट्रस्य स्वामित्वेनानैषम् । स त्वं अन्तः अस्मासु मध्ये एधि स्वामी भव । ध्रुवः नित्यः सन् अविचाचलिः अतिशयेन चलनरहित एव सन् तिष्ठ राष्ट्रमधितिष्ठ । सर्वाः च विशः प्रजाः त्वा त्वां वाञ्छन्तु अयमेव अस्माकं राजाऽस्त्विति कामयन्तु । ‘ वाछि इच्छायाम् ’ । त्वत् त्वत्तः सकाशात् राष्ट्रं राज्यं मा अधि भ्रशत् मा भ्रश्यतु मा वियुक्तं भवतु ।　　ऋसा.

**[३]इहैवैधि माऽप च्योष्ठाः पर्वतइवाविचाचलिः ।**
**इन्द्रइवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥**

---

* अस्या ऋचः व्याख्यानं ‘ देवा राजानः– वरुणः ’ इत्यस्मिन् प्रकरणे ( राका. पृ. ११ ) द्रष्टव्यम् ।

( १ ) ऋसं. १०।१२४।८.

( २ ) ऋसं. १०।१७३।१; असं. ६।८७।१ रेधि ध्रु ( रभूर्ध्रु ) चलिः ( चलत् ); तैसं. ४।२।१।४ रेधि ध्रु (रभूर्ध्रु) न्तु मा त्वद्रा ( न्त्वस्मिन् रा ) भ्रशत् ( श्रय ); कासं. १६।८ ( ९२ ) न्तु मा त्वद्राष्ट्रमधि भ्रशत् ( न्त्वस्मे राष्ट्रमधिश्रय ) शेषं असंवत् : ३५।७ ( ४३ ) चतुर्थपादे (मा त्वद्यज्ञो अधिभ्रशत्) शेषं असंवत् ; मैसं. २।७।८ ( १०१ ) न्तु मा त्वद्राष्ट्रमधि भ्रशत् ( न्त्वस्मे राष्ट्राणि धारय ) शेषं असंवत् : ३।२।१ ( १ ); शुसं. १२।११ रेधि ध्रु ( रभूर्ध्रु ); तैब्रा. २।४।२।८ शुसंवत् ; शब्रा. ६।७।३।७ प्रथमपादे ( आ त्वाहार्यमन्तरभूर् ) मधि ( मभि ).

( ३ ) ऋसं. १०।१७३।२; असं. ६।८७।२ चाचलिः ( चाचलत् ); कासं. ३५।७ ( ४७ ) राष्ट्रमु ( यज्ञमु ) शेषं असंवत् ; तैब्रा. २।४।२।८–९ माऽप च्योष्ठाः ( मा व्यथिष्ठाः ); आपश्रौ. १४।२७।७.

हे राजन्, इह अस्मिन् एव राज्ये एधि स्वामित्वेन सर्वदा वर्तमानो भव। माऽप च्योष्ठाः अपच्युतो मा भूः माऽपगमः। पर्वतइव यथा पर्वतो नैश्चल्येनावतिष्ठते एवं अविचाचलिः चलनरहितो भव। इन्द्रइव यथा स्वर्गे इन्द्रः एवं इह लोके त्वं ध्रुवस्तिष्ठ स्थिरो भव। राष्ट्रमु राष्ट्रं च इह लोके धारय स्वे स्वे कर्मण्यवस्थापय। ऋसा.

**[1]इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा।**
**तस्मै सोमो अधि ब्रवत्तस्मा उ ब्रह्मणस्पतिः॥**

इमं अभिषिक्तं ध्रुवेण स्थिरेण हविषा तर्प्यमाणः इन्द्रः ध्रुवं स्थिरं अदीधरत् धारयतु। सोमः च तस्मै राज्ञे अधि ब्रवत् अधिब्रवीतु। मदीयोऽयमिति पक्षपात-वचनं करोतु। तस्मा उ तस्मा एव ब्रह्मणस्पतिः मन्त्रस्य पालको देवश्चाधिब्रवीतु। ऋसा.

**[2]ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे।**
**ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम्॥**

द्यौः ध्रुवा स्थिरा भवति। पृथिवी च ध्रुवा स्थिरा भवति। इमे दृश्यमानाः पर्वताः महीधराश्च ध्रुवासः स्थिराः। इदं विश्वं सर्वं जगत् ध्रुवं स्थिरं भवति। एवमेव अयं विशां प्रजानां राजा स्वामी सन् ध्रुवः स्थिरो भवतु। ऋसा.

**[3]ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः।**
**ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम्॥**

(१) **ऋसं.** १०।१७३।३; **असं.** ६।८७।३ इमामिन्द्रो अ (इन्द्र एतम) ब्रवत्तस्मा उ (ब्रवदयं च); **कासं.** ३५।७ (४८) हविषा + (हविः); **तैब्रा.** २।४।२।९ इममिन्द्रो अ (इन्द्र एणम) सोमो (देवा) ब्रवत्तस्मा उ (ब्रुवन्। अयं च); **आपश्रौ.** १४।२७।७.

(२) **ऋसं.** १०।१७३।४; **असं.** ६।८८।१ द्वितीयतृतीयपादयोर्व्यत्यासः; **कासं.** ३५।७ (४९) मयम् (मसि); **सामब्रा.** १।३।७; **तैब्रा.** २।४।२।८ द्वितीयतृतीयपादयोः (ध्रुवं विश्वमिदं जगत्। ध्रुवा ह पर्वता इमे।); **आपश्रौ.** १४।२७।७.

(३) **ऋसं.** १०।१७३।५; **असं.** ६।८८।२.

हे राजन्, ते तव राष्ट्रं राजा राजमानः वरुणः ध्रुवं स्थिरं धारयतु। देवः दानादिगुणयुक्तः बृहस्पतिः ध्रुवं धारयतु। इन्द्रश्च अग्निश्च उभावपि ते तव राष्ट्रं ध्रुवं स्थिरं धारयताम्। इन्द्राग्न्योरुभयोरपेक्षया ध्रुव-शब्दस्य द्विः प्रयोगः। ऋसा.

**[1]ध्रुवं ध्रुवेण हविषाऽभि सोमं मृशामसि।**
**अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत्॥**

ध्रुवेण स्थिरेण हविषा पुरोडाशादिना युक्तं ध्रुवं स्थिरं सोमं अभि मृशामसि अभिमृशामः। देवतामभि-लक्ष्य यागार्थे वयमृत्विजः संस्पृशामः। अथो अथ अनन्तरमेव इन्द्रः विशः प्रजाः ते तवैव केवलीः असाधारणाः सतीः बलिहृतः करस्य प्रदात्रीः करत् करोतु। ऋसा.

**[2]अभीवर्तेन हविषा येनेन्द्रो अभिवावृते।**
**तेनास्मान् ब्रह्मणस्पतेऽभि राष्ट्राय वर्तय॥**

अभीवर्तेन अभिगच्छत्यनेनेत्यभीवर्तः। करणे घञ्। ईदृशेन येन हविषा साधनेन इन्द्रः अभिववृते सर्वमभि-जगाम तेन हविषेष्टवतः अस्मान् हे ब्रह्मणस्पते, राष्ट्राय राज्यं प्राप्तुं अभि वर्तय अभिगमय। ऋसा.

**[3]अभिवृत्य सपत्नानभि या नो अरातयः।**
**अभि पृतन्यन्तं तिष्ठाभि यो न इरस्यति॥**

हे राजन्, सपत्नान् शत्रून् अभिवृत्य अभितो गमयित्वा नः अस्माकं या अरातयः अदानशीलाः प्रजाः सन्ति ता अपि अभि तिष्ठ अभिभव। पृतन्यन्तं पृतनाः

(१) **ऋसं.** १०।१७३।६; **असं.** ७।९४।१ (ध्रुवं ध्रुवेण हविषाव सोमं नयामसि। यथा न इन्द्रः केवलीर्विशः संमनसस्करत्॥); **कासं.** ३५।७ (४४) ऽभि सोमं मृशा (हविरव सोमं नया) अथो त (यथा न); **मैसं.** १।३।१५ (४८) (ध्रुवं ध्रुवेण हविषा वः सोमं नयामसि। यथा नः सर्वा इज्जनः संगमे सुमना असत्॥); **शुसं.** ७।२५ (ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि। अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करत्॥); **शब्रा.** ४।२।४।२३ शुसंवत्.

(२) **ऋसं.** १०।१७४।१; **असं.** १।२९।१ हविषा (मणिना) वृते (वृधे) वर्तय (वर्धय); **ऐब्रा.** ३७।६.

(३) **ऋसं.** १०।१७४।२; **असं.** १।२९।२ न इर (नो दुर).

सेना आत्मन इच्छन्तं युयुत्सुं च अभि तिष्ठ । यः च नः अस्मभ्यं इरस्यति ईर्ष्यति तमपि अभि तिष्ठ । यद्वा, प्रकृतो ब्रह्मणस्पतिरेवात्रापि संबोध्यः । ऋसा.

[1]अभि त्वा देवः सविताऽभि सोमो अवीवृतत् ।
अभि त्वा विश्वा भूतान्यभीवर्तो यथाऽससि ॥

हे राजन्, देवः दानादिगुणयुक्तः सविता त्वा त्वां अभि अवीवृतत् अभिवर्तयतु अभिगमयतु राष्ट्रम् । सोमः च अभि वर्तयतु । विश्वा विश्वानि सर्वाण्यपि भूतानि पृथिव्यादीनि त्वां अभि वर्तयन्तु । यथा येन प्रकारेण त्वं अभीवर्तः अससि अभितः सर्वत्र वर्तमानो भवसि । ऋसा.

[2]येनेन्द्रो हविषा कृत्व्यभवद्द्युम्न्युत्तमः ।
इदं तदक्रि देवा असपत्नः किलाभुवम् ॥

येन हविषा अस्माभिर्दत्तेन माद्यन् इन्द्रः कृत्वी वृत्रवधादेः कर्मणः कर्ता अभवत् द्युम्नी । द्युम्नं द्योततेर्यशो वान्नं वा तद्वान्, अत एव उत्तमः उत्कृष्टतमश्चाभवत् तत् इदं हविः हे देवाः, अक्रि अकारि । यद्वा, अहमकार्षम् । अत एवाहं असपत्नः किल अभुवं शत्रुरहितोऽप्यभवं खलु । ऋसा.

[3]असपत्नः सपत्नहाऽभिराष्ट्रो विषासहिः ।
यथाऽहमेषां भूतानां विराजानि जनस्य च ॥

सपत्नहा सपत्नानां शत्रूणां हन्ता अत एव असपत्नः शत्रुरहितोऽहमभूवम् । अभिराष्ट्रः अभिगतराष्ट्रः प्राप्तराज्यः सन् विषासहिः शत्रूणां विशेषेणाभिभविता चाभूवम् । यथा येन प्रकारेण अहमेषां दृश्यमानानां सर्वेषां भूतानां प्राणिनां जनस्य च सेवकस्यामात्यादेश्च विराजानि यथा (?) ईश्वरो भवानि तथा सपत्नहा विषासहिश्चाभूवमित्यर्थः । ऋसा.

(१) **ऋसं.** १०।१७४।३; **असं.** १।२९।३ वृतत् (वृधत्).

(२) **ऋसं.** १०।१५९।४ असपत्नः (असपत्ना) : १०।१७४।४.

(३) **ऋसं.** १०।१७४।५; **असं.** १।२९।६ प्रथमपादे (सपत्नक्षयणो वृषा) भूतानां (वीराणां).

राज्यकामस्य माहेन्द्री महाशान्तिः, तस्यां राज्याभिवृद्ध्यर्थं रथनेमिमणिबन्धनकर्म

[1]अभीवर्तेन मणिना येनेन्द्रो अभिवावृधे ।
तेनास्मान् ब्रह्मणस्पतेऽभि राष्ट्राय वर्धय ॥

येन समृद्धिसाधनत्वेन प्रसिद्धेन अभीवर्तेन । अभितो वर्तते चक्रं अनेनेति अभीवर्तो नेमिः । अत्र कार्ये कारणशब्दः । चक्रनेमिनिर्मितो मणिः । यद्वा, अभितः सर्वतः परराष्ट्रादौ अप्रतिहतगतिर्वर्तते अनेन पुरुष इति अभीवर्तो मणिः । तेन (येन) मणिना धृतेन इन्द्रः देवानां अधिपतिर्देवः अभिवावृधे अभितः सर्वतः प्रवृद्धोऽभूत्, परमैश्वर्योपेतस्त्रिलोकीपतिर्बभूवेत्यर्थः । हे ब्रह्मणस्पते वेदराशेरधिपते एतत्संज्ञक देव, तेन प्रागुदीरितमहिमोपेतेन मणिना अस्मान् शत्रुभिः पीडितान् राष्ट्राय । तादर्थ्ये चतुर्थी । स्वराष्ट्राभिवृद्ध्यर्थं अभि वर्धय करितुरगधनादिभिः समृद्धान् कुरु । त्वत्प्रसादात् समृद्धैरस्माभी रक्षितं राष्ट्रं शत्रुभयरहितं यथा अभिवृद्धं भवति तथा कुरु इत्यर्थः । असा.

[2]अभिवृत्य सपत्नानभि या नो अरातयः ।
अभि पृतन्यन्तं तिष्ठाभि यो नो दुरस्यति ॥

हे अभीवर्त मणे, त्वं सपत्नान् । सपत्नीव सपत्नाः सहजशत्रवः । अस्मदीयांस्तान् शत्रून् अभिवृत्य अभिमुखं पर्यावृत्य । तिष्ठेति वक्ष्यमाणक्रिया अत्रापि संबध्यते । त्वमेव प्रतिपक्षी भूत्वा तान् पराकुरु इत्यर्थः । तथा याः नः अस्माकं अरातयः अदातारः अस्मदीयं राष्ट्रधनादिकं अपहृत्य शात्रवं कुर्वाणा बाह्याः शत्रवः तानपि । अभि इत्युपसर्गश्रवणात् तिष्ठेति संबन्धः । अभिमुखं तिष्ठ । तथा पृतन्यन्तं युद्धार्थं पृतनां सेनां आत्मन इच्छन्तं युद्धोन्मुखमपि शत्रुं अभि तिष्ठ । तथा यः शत्रुः नः

(१) **ऋसं.** १०।१७४।१ मणिना (हविषा) वावृधे (वावृते) वर्धय (वर्तय); **असं.** १।२९।१; **ऐब्रा.** ३७।६ मणिना (हविषा) निर्देशमात्रम्.

(२) **ऋसं.** १०।१७४।२ नो दुरस्यति (न इरस्यति); **असं.** १।२९।२.

अस्माकं दुरस्यति दुष्टं अभिचारादिरूपं क्षुद्रं कर्म कर्तुं इच्छति तथाविधमपि शत्रुं अभि तिष्ठ। असा.

**[1]अभि त्वा देवः सविताऽभि सोमो अवीवृधत्।**
**अभि त्वा विश्वा भूतान्यभीवर्तो यथाऽससि ॥**

हे मणे, त्वा त्वां देवः द्योतनात्मकः सविता सर्वस्य प्राणिजातस्य प्रेरकः एतत्संज्ञको देवः। अभि इत्युपसर्गश्रवणात् अवीवृधत् इति क्रिया अत्रापि संबध्यते। अभ्यवीवृधत् अभितः समृद्धं अकार्षीत्। तथा सोमो देवः अभ्यवीवृधत्। तथा हे मणे, त्वा त्वां विश्वा विश्वानि निखिलानि भूतानि। सत्तां लभन्ते इति भूतानि चराचरात्मकानि। उपसर्गश्रवणात् अत्रापि प्रकृतक्रियासंबन्धः। अभ्यवीवृधन्। अभिवर्धनावधिमाह— यथा येन प्रकारेण हे मणे, त्वं अभीवर्तः त्वद्धारयितुः पुरुषस्य अभितः स्वराष्ट्रपरराष्ट्रादौ वर्तनसाधनभूतः अससि भवसि तथा त्वां अवीवृधन् इति पूर्वेण संबन्धः। असा.

**[2]अभीवर्तो अभिभवः सपत्नक्षयणो मणिः।**
**राष्ट्राय मह्यं बध्यतां सपत्नेभ्यः पराभुवे ॥**

अभीवर्तः अभिवर्तनसाधनभूतः। तत्र हेतुमाह— अभिभवः शत्रूणां अभिभविता। अभिभवनं विशिनष्टि— सपत्नक्षयणः सपत्नानां भ्रातृव्याणां क्षयकरः। यत एवं अतः अभीवर्त इत्यर्थः। तादृशो मणिः मह्यम्। षष्ठ्यर्थे चतुर्थी। मम बध्यताम्। मणिबन्धनप्रयोजनं आह— राष्ट्राय राष्ट्राभिवृद्धये। तथा सपत्नेभ्यः। पूर्ववत् षष्ठ्यर्थे चतुर्थी। भ्रातृव्याणां पराभुवे पराभवनाय बध्यमानोऽयं मणिः पूर्वं शत्रुभिः पीडितस्य स्वराष्ट्रस्य अभिवृद्धिं बाधकानां शत्रूणां नाशनं च करोतु इत्यर्थः। असा.

**उदसौ सूर्यो अगादुदिदं मामकं वचः।**
**यथाऽहं शत्रुहोऽसान्यसपत्नः सपत्नहा ॥**

असौ नभोमण्डले परिदृश्यमानः सूर्यः सर्वस्य प्राणिजातस्य प्रेरको देवः उदगात् उदितवान्। किंच, मामकं मदीयं इदं अधुनोच्चार्यमाणं वचः आत्मनो जयाशंसात्मकं शत्रूणां अभिभवप्रतिपादकं च वाक्यम्। यद्वा, जयोद्देशेन प्रयुज्यमानं मन्त्रात्मकं वाक्यम्। उत् इति उपसर्गश्रवणात् प्रकृतक्रियासंबन्धः। उदगात्। सूर्योदयस्य वाग्व्यवहारस्य च प्रतिदिनं सत्त्वेऽपि विशेषतस्तत्कथनस्य प्रयोजनमाह— अहं अभीवर्तमणिधारकः यथा येन प्रकारेण शत्रुहः शत्रूणां हन्ता असानि भवानि, यथाऽहं एवं भवानि तथा उदगात् इति पूर्वेण संबन्धः। मणिप्रभावात् अद्यतनसूर्योदयः अधुना प्रयुज्यमानवचश्च शत्रुहननानुकूलं अभूत् इत्यर्थः। यत एवं अतः अहं असपत्नः शत्रुरहित एव। यदि च सपत्ना भवेयुस्तर्हि सपत्नहा सपत्नानां शत्रूणां हन्ता अस्मि। असा.

**सपत्नक्षयणो वृषाऽभिराष्ट्रो विषासहिः।**
**यथाऽहमेषां वीराणां विराजानि जनस्य च ॥**

उत्तरवाक्ये यथेति श्रवणात् पूर्ववाक्येऽपि अर्थात् तथेत्यध्याह्रियते। सपत्नक्षयणः सपत्नानां शत्रूणां नाशकः, अतः वृषा प्रजानां इष्टफलस्य वर्षकः। अत एव अभिराष्ट्रः स्वराष्ट्रं परराष्ट्रं च अभिगतः अधिपतित्वेन प्राप्तः। अतो विषासहिः विविधं पुनःपुनः परेषां सोढा अभिभविता। मणिप्रभावात् एवंगुणविशिष्टः तथा भूयासम्। कथं इत्यत आह— अहं मणिधारकः यथा येन प्रकारेण एषां शत्रुसंबन्धिनां पूर्वं आत्मनो बाधकानां वीराणां शत्रुभटानां जनस्य स्वकीयस्य परकीयस्य प्राणिजातस्य च विराजानि नियन्ता भवानि। तथेति पूर्वेण संबन्धः। उदीरितगुणोपेतः सन् मणिप्रभावात् शत्रुप्रभृतीनां सर्वेषां शासिता भवामीति भावः। यद्वा, उक्तगुणोपेतः सन् अहं वीराणां जनस्य च यथा विराजानि हे मणे, त्वत्प्रभावात् तथा, भूयासं इति शेषः। असा.

राज्यच्युतस्य राज्ञः पुनः राष्ट्रप्रवेशनकर्म

**[1]अचिक्रदत्स्वपा इह भुव-**
**दग्ने व्यचस्व रोदसी उरूची।**
**युञ्जन्तु त्वा मरुतो विश्ववेदस**
**आऽमुं नय नमसा रातहव्यम् ॥**

---

(१) ऋसं. १०।१७४।३ अवीवृधत् (अवीवृतत्); असं. १।२९।३.

(२) असं. १।२९।४–६.

(१) असं. ३।३।१–६.

हे अग्ने, असौ स्वराष्ट्रात् प्रच्युतो राजा अचिक्रदत् पुनः स्वराष्ट्रप्रवेशाय त्वां आह्वयति, प्रार्थयते इत्यर्थः। स त्वदनुग्रहात् इह स्वराष्ट्रे स्वपाः स्वकीयानां प्रजानां पालकः सुकर्मा वा भुवत् भवतु। तद्रक्षणार्थं त्वं च उरूची उरूच्यौ उर्वञ्चने, व्यापनशीले इत्यर्थः। ईदृशौ रोदसी रोदस्यौ द्यावापृथिव्यौ व्यचस्व व्याप्नुहि। अपि च, विश्ववेदसः सर्वविषयज्ञानयुक्ता मरुतः एतन्नामान एकोनपञ्चाशत्संख्याका देवाः हे अग्ने, त्वा त्वां युञ्जन्तु प्राप्नुवन्तु, त्वत्सहाया भवन्तु इत्यर्थः। नमसा नमस्कारेण युक्तं रातहव्यं दत्तहविष्कं अमुं उक्तलक्षणं राजानं आ नय पुनः स्वराष्ट्रं प्रापय। असा.

**दूरे चित्सन्तमरुषास इन्द्रमा**
**च्यावयन्तु सख्याय विप्रम्।**
**यद्गायत्रीं बृहतीमर्कमस्मै**
**सौत्रामण्या दधृषन्त देवाः॥**

अरुषासः आरोचमानाः दीप्यमानाः। 'अरुष आरोचनात्' इति यास्कः (नि.१२।७)। ऋत्विजः दूरे चित् सन्तम्। चिच्छब्दः अप्यर्थे। स्वर्गे वसन्तं विद्यमानमपि विप्रम्। मेधाविनामैतत्। मेधाविनं इन्द्रं सख्याय अस्य राज्ञः सखिकर्मणे साहाय्याचरणाय आ च्यावयन्तु आगमयन्तु। आनेतव्यस्येन्द्रस्य आधिक्यं दर्शयति– यत् यस्मात् कारणात् देवाः प्रसिद्धाः अस्मा इन्द्राय गायत्रीं सोमाहरणादिना प्रख्यातवीर्यं गायत्र्याख्यं छन्दः बृहतीं अस्मान्न्यूनाधिकाक्षराणां अन्येषां छन्दसां प्रधानभूताम्। बृहत्याः प्राधान्यं च अन्यत्र श्रूयते। 'यानि च छन्दांस्यत्यरिच्यन्त यानि च नोदभवन् तानि निर्वीर्याणि हीनान्यमन्यन्त। साऽब्रवीद् बृहती। मामेव भूत्वा मामुपसंश्रयतेति' (तैब्रा. १।५।१२।३) 'बृहती छन्दसां स्वाराज्यं परीयाय' इति। अर्कं अर्चनसाधनभूतं मन्त्रात्मकं बृहदुक्थात्मकं शस्त्रं सौत्रामण्या। सुष्ठु त्रायते इति सुत्रामा इन्द्रः। तद्देवत्यया क्रियया दधृषन्त अधारयन्, गायत्र्यादिभिरिन्द्रं अतिशयितवीर्यं अकुर्वन्नित्यर्थः। यद्वा, गायत्र्यादिकं अस्मा इन्द्राय, प्रायच्छन् इति शेषः। तथा सौत्रामण्या एतन्नामकेन हविर्यज्ञेन देवा दधृषन्त, पूर्वं विस्रस्तावयवं इन्द्रं पुनः सर्वावयवोपेतं अकुर्वन्नित्यर्थः। श्रूयते हि 'इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्। तद्देवाः सौत्रामण्या समभरन्' (तैसं. ५।६।३।४) इति। तस्मात् अतिशयितवीर्ययोगात् तमेव आ च्यावयन्तु इति संबन्धः। असा.

**अद्भ्यस्त्वा राजा वरुणो ह्वयतु**
**सोमस्त्वा ह्वयतु पर्वतेभ्यः।**
**इन्द्रस्त्वा ह्वयतु विड्भ्य आभ्यः**
**श्येनो भूत्वा विश आ पतेमाः॥**

हे परैरवरुद्धराष्ट्र राजन्, त्वा त्वां वरुणो राजा अद्भ्यः स्वसंबन्धिनीभ्यः सकाशात् ह्वयतु आकारयतु। तथा सोमः लतारूपेणावस्थितः पर्वतेभ्यः स्वनिवासस्थानेभ्यः त्वा त्वां ह्वयतु। इन्द्रश्च विट्पतिः। 'स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी। वृषेन्द्रः' (ऋसं. १०।१५२।२) इति श्रूयते। आभ्यः यासु प्रजासु त्वं इदानीं निवससि आभ्यो विड्भ्यः प्रजाभ्यः सकाशात् त्वा त्वां ह्वयतु। राज्यभ्रष्टस्य राज्ञः त्रीणि निवासस्थानानि संभावितानि– समुद्रमध्यं पर्वताः देशान्तरं वा। तेभ्यः सर्वेभ्यः स्वकीयेभ्यो वरुणादयस्त्वां आह्वयन्तु, पुनः स्वराज्यप्रवेशायेत्यर्थः। एवं तैर्देवैराहूतस्त्वं इमाः स्वकीयाः पूर्वं पालिता विशः प्रजाः श्येनो भूत्वा। श्येनः पक्षिविशेषः। स इव शीघ्रगतिः परैरनाधर्षितश्च भूत्वा आ पत आगच्छ।

असा.

**श्येनो हव्यं नयत्वा परस्मा-**
**दन्यक्षेत्रे अपरुद्धं चरन्तम्।**
**अश्विना पन्थां कृणुतां सुगं त**
**इमं सजाता अभिसंविशध्वम्॥**

श्येनः शंसनीयगतिः द्युस्थानो देवः अन्यक्षेत्रे परराष्ट्रे अवरुद्धं शत्रुभिर्निरुद्धं चरन्तं वर्तमानं अत एव हव्यं ह्वातव्यं ईदृशं तं राजानं परस्मात् परराष्ट्रात् आ नयतु स्वदेशं प्रति प्रापयतु। तथा हे राजन्, ते तव अश्विना अश्विनौ देवौ पन्थां पन्थानं आगमनमार्गं सुगं सुखेन गन्तुं योग्यं निरोधकशत्रुशून्यं कृणुतां कुरुताम्। हे सजाताः समानजन्मानो बन्धवः, यूयं इमं पुनः स्वराष्ट्रं प्रविष्टं

राजानं अभिसंविशध्वं अभितः सर्वतः प्रविश्य संविशध्वं उपविश्य सेवध्वम् । असा.

**ह्वयन्तु त्वा प्रतिजनाः प्रति मित्रा अवृषत ।**
**इन्द्राग्नी विश्वे देवास्ते विशि क्षेममदीधरन् ॥**

प्रतिजनाः हे राजन्, त्वा त्वां वयन्तु सांतत्येन सेवन्ताम् । तथा प्रतिमित्राः प्रतिकूलानि मित्राणि अवृषत विरोधं परित्यज्य संभजन्ताम् । इन्द्राग्नी विश्वे देवाश्च विशि । जातावेकवचनम् । विक्षु प्रजासु ते तव क्षेमं रक्षणं अदीधरन् धारयन्तु कुर्वन्तु । असा.

**यस्ते हवं विवदत्सजातो यश्च निष्ट्यः ।**
**अपाञ्चमिन्द्र तं कृत्वाऽथेममिहाव गमय ॥**

हे राजन्, ते तव हवं स्वराष्ट्रप्रवेशविषयं पुनराह्वानं यः सजातः समानजन्मा, समबल इत्यर्थः । यश्च निष्ट्यः नीचः, निकृष्टबल इत्यर्थः । अनयोरन्यतरः कश्चिद् विवदत् विवदेत् नानुमन्येत । हे इन्द्र, तं उभयविधं शत्रुं अपाञ्चं अपगतं बहिष्कृतं कृत्वा अथ अनन्तरं इमं प्रकृतं राजानं इह अस्मिन् राष्ट्रे अव गमय बोधय, अस्य राष्ट्रस्य अयमेव राजेति प्रख्यापयेत्यर्थः । असा.

प्रजाः राजानं वृणते

**[1]आ त्वा गन् राष्ट्रं सह वर्चसोदिहि प्राङ्**
**विशां पतिरेकराट् त्वं वि राज ।**
**सर्वास्त्वा राजन् प्रदिशो**
**ह्वयन्तूपसद्यो नमस्यो भवेह ॥**

हे राजन्, त्वा त्वां राष्ट्रं शत्रुभिराक्रान्तं स्वकीयं राज्यं आ गन् पुनरागमत् । ततस्त्वं वर्चसा बलेन सह उदिहि उदितः प्रख्यातो भव । अनन्तरं प्राक् पूर्वं विशां प्रजानां सर्वासां पतिः पालकः सन् एकराट् निःसपत्नो मुख्यो राजा भूत्वा त्वं वि राज विशेषेण दीप्यस्व । हे राजन्, त्वा त्वां सर्वाः प्रदिशः प्रकृष्टा दिशः प्राच्याद्याः तदभिमानिन्यो देवताः तत्रस्था जना वा ह्वयन्तु स्वामित्वेन अनुजानन्तु । इह अस्मिन् स्वकीये राष्ट्रे उपसद्यः सर्वैरुपसदनीयः सेव्यः, नमस्यः नमस्कार्यश्च भव । यद्वा, नमस्यः नमस्कारार्हः । असा.

**त्वां विशो वृणतां राज्याय**
**त्वामिमाः प्रदिशः पञ्च देवीः ।**
**वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्व**
**ततो न उग्रो वि भजा वसूनि ॥**

हे राजन्, त्वां विशः प्रजा राज्याय । राज्ञो भावः कर्म वा राज्यम् । राजभावाय राजकर्मणे वा वृणतां संभजताम् । तथा इमाः परिदृश्यमानाः प्रदिशः प्राच्याद्याः पञ्च मध्यदिशा सह पञ्चसंख्याका देवीः देव्यो द्योतमानाः । वृणतां इति संबन्धः । ततः राष्ट्रस्य वर्ष्मन् वर्ष्मणि शरीरे, स्वपालनीयभूशरीरे इत्यर्थः । तत्रापि ककुदि ककुदीवोन्नते स्थाने प्रशस्ते वा सिंहासने श्रयस्व आस्स्व । ततः उपवेशानन्तरं उग्रः उद्गूर्णबलः शत्रुभिरनभिभाव्यः सन् वसूनि धनानि नः अस्माकं सेवकानां वि भज यथायोग्यं प्रयच्छ । असा.

**अच्छ त्वा यन्तु हविनः सजाता**
**अग्निर्दूतो अजिरः सं चरातै ।**
**जायाः पुत्राः सुमनसो भवन्तु**
**बहुं बलिं प्रति पश्यासा उग्रः ॥**

हे राजन्, त्वा त्वां सजाताः समानजन्मानः अन्ये राजानो हविनः । हवं आह्वानं आज्ञारूपं एषां अस्तीति हविनः तादृशाः सन्तः । अच्छ इत्याभिमुख्ये । यन्तु अभिगच्छन्तु, सर्वे राजानस्त्वदाज्ञावशवर्तिनो भवन्तु इत्यर्थः । तथा अजिरः त्वया प्रेरितः गमनशीलो वा दूतस्त्वदीयो भटः अग्निः । लुप्तोपमं एतत् । अग्निरिव अप्रधृष्यः सं चरातै संचरतु । अपि च, जायाः भार्याः पुत्राश्च तदुपलक्षिताः सर्वे बान्धवाः सुमनसः पुनःस्वराष्ट्रप्राप्त्या सौमनस्ययुक्ता भवन्तु । उग्रः उद्गूर्णबलस्त्वं बहुं अधिकं बहुविधं वा बलिं उपायनं करं वा प्रति पश्यासै प्रतिमुखं आगतं पश्य । असा.

(१) असं. ३।४।१–७.

**अश्विना त्वाऽग्रे मित्रावरुणोभा**
**विश्वे देवा मरुतस्त्वा ह्वयन्तु ।**
**अधा मनो वसुदेयाय कृणुष्व**
**ततो न उग्रो वि भजा वसूनि ॥**

हे राजन्, त्वा त्वां अग्रे प्रथमं अश्विना अश्विनौ देवौ उभा उभौ मित्रावरुणा मित्रावरुणौ च । ह्वयन्तु इति संबन्धः । तथा त्वा त्वां विश्वे देवाः मरुतश्च ह्वयन्तु राज्यप्रवेशं कारयन्तु । अध अथ राज्यप्रवेशानन्तरम्, हे राजन्, मनः त्वदीयं वसुदेयाय अर्थिभ्यो धनप्रदानाय कृणुष्व कुरु । असा.

**आ प्र द्रव परमस्याः परावतः**
**शिवे ते द्यावापृथिवी उभे स्ताम् ।**
**तदयं राजा वरुणस्तथाह**
**स त्वाऽयमह्वत्स उपेदमेहि ॥**

हे दूरदेशस्थित राजन्, परावतः । दूरनामैतत् । परमस्याः परावतः अत्यन्तदूरदेशात् आ प्र द्रव स्वराष्ट्राभिमुखं शीघ्रं आगच्छ । स्वराष्ट्रं प्रविशतः ते तव उभे द्यावापृथिवी द्यावापृथिव्यौ शिवे मङ्गलकारिण्यौ स्तां भवताम् । तत् तस्मिन् त्वदागमनविषये अयं वरुणो राजा तथा यथा प्रागुक्तं तथा तेनैव प्रकारेण आह ब्रूते। सोऽयं उक्तो वरुणस्त्वा त्वां आह्वत् आह्वयति । स वरुणेनाऽऽहूतस्त्वं इदं स्वराष्ट्रं उपैहि उपागच्छ ।

असा.

**इन्द्रेन्द्र मनुष्या३ः परेहि**
**सं ह्यज्ञास्था वरुणैः संविदानः ।**
**स त्वाऽयमह्वत्स्वे सधस्थे**
**स देवान् यक्षत्स उ कल्पयाद्विशः ॥**

इन्द्रेन्द्र । आदरार्थे पुनर्वचनम् । हे इन्द्र परमैश्वर्ययुक्त, मनुष्याः मनुष्यान् अस्मान् । यद्वा, मनोरपत्यभूताः प्रजाः प्रति परेहि आगच्छ । हि यस्मात् कारणात् हे इन्द्र, त्वं वरुणैः वरुणेन संविदानः ऐकमत्यं प्राप्तः । पूजायां बहुवचनम् । सं अज्ञास्थाः एतदाह्वानविषये समानज्ञानवानसि । तस्मात् आगच्छेति संबन्धः । सोऽयं वरुणेन ऐकमत्यं प्राप्तः इन्द्रः हे राजन्, त्वा त्वां अह्वत् आह्वयति । ततः स्वराष्ट्रं प्रविशेति शेषः । प्रविश्य च स्वे स्वकीये सधस्थे सहस्थाने स्वराष्ट्रे । तत्र वर्तमानः स राजा देवान् इन्द्रादीन् यक्षत् यजतु । स उ स एव राजा विशः प्रजाः कल्पयात् स्वस्वव्यापारेषु कल्पयतु नियुङ्क्ताम् । असा.

**पथ्या रेवतीर्बहुधा विरूपाः**
**सर्वाः संगत्य वरीयस्ते अक्रन् ।**
**तास्त्वा सर्वाः संविदाना ह्वयन्तु**
**दशमीमुग्रः सुमना वशेह ॥**

रेवतीः रैमत्यः धनवत्यः, पथ्याः पथोऽनपेताः मार्गहितकारिण्यः एतत्संज्ञा देवताः । यद्वा, पथ्याः पथि साधवः । रेवतीः आपः, तदभिमानिन्यो देवताः 'आपो वै रेवतीः' (तैब्रा. ३।२।८।२) इति श्रुतेः । ता विशेष्यन्ते– बहुधा बहुप्रकारं वर्तमाना विरूपाः विविधाकाराः एवंविधा याः सन्ति ताः सर्वाः संगत्य संभूय हे राजन्, ते तव वरीयः उरुतरं श्रेयः अक्रन् कुर्वन्तु । हे राजन्, ताः सर्वा देवताः संविदानाः ऐकमत्यं प्राप्ताः सत्यः त्वा ह्वयन्तु त्वां राष्ट्रप्रवेशार्थं आह्वयन्तु । ताभिराहूतः इह अस्मिन् राष्ट्रे उग्रः उद्गूर्णबलस्त्वं सुमनाः संतुष्टमनाः सन् दशमीं नवतिसंवत्सरोर्ध्वभाविनीं वर्षदशकात्मिकां चरमावस्थाम्, तावत्पर्यन्तं वश निवस, जरापर्यन्तं स्वकीयं राज्यं निष्कण्टकं भुङ्क्ष्वेत्यर्थः । असा.

पर्णमणिबन्धनकर्म राजरक्षणाय, राजकृतः सूता ग्रामण्यश्च

**[1]आयमगन् पर्णमणिर्बली**
**बलेन प्रमृणन्त्सपत्नान् ।**
**ओजो देवानां पय ओषधीनां**
**वर्चसा मा जिन्वत्वप्रयावन् ॥**

अयं अस्मदादिभिः संपदर्थं भ्रियमाणः पर्णमणिः । पर्णः पलाशवृक्षः सोमपर्णोद्भूतत्वात् 'सोऽयं पर्णः सोमपर्णाद्धि जातः' (तैब्रा. १।२।१।६) इति श्रुतेः । आगन् आगच्छतु । किंविधः ? बली अतिशयितबलवान्, अभिमतफलं दातुं समर्थ इत्यर्थः । अत एव बलेन

(१) असं. ३।५।१-८.

स्वकीयेन सामर्थ्यातिशयेन सपत्नान् शत्रून् प्रमृणन् प्रकर्षेण हिंसन्। आगच्छतु इति संबन्धः। पुनस्तमेव विशिनष्टि– देवानां इन्द्रादीनां ओजः बलरूपः तथा ओषधीनां सर्वासां पयः सारभूतः, ओषधिसारसोमजन्यत्वात्। एवंलक्षणः पर्णमणिः अप्रयावन् अप्रयावा मां विहाय अनपगन्ता सन् मा मां वर्चसा तेजसा जिन्वतु प्रीणयतु, तेजस्विनं करोतु इत्यर्थः। यद्वा, हे अप्रयावन् अप्रयातः सर्वदा धार्यमाण हे मणे, मा मां तेजसा जिन्वतु, जिन्वेत्यर्थः। असा.

**मयि क्षत्रं पर्णमणे मयि धारयताद्रयिम्।**
**अहं राष्ट्रस्याभीवर्गे निजो भूयासमुत्तमः॥**

हे पर्णमणे पलाशनिर्मितमणे, क्षत्रम्। बलनामैतत्। बलं क्षत्रियजातिं वा मयि मणिधारके धारयतात् धारय स्थापय। तथा रयिं धनं च मयि धारयतात्। अहं च त्वद्धारणात् राष्ट्रस्य राज्यस्य अभीवर्गे आवर्जने स्वाधीनीकरणे निजः अनन्यसहायः उत्तमः उत्कृष्टतमो भूयासम्, स्वबाहुबलेनैव सर्वं राष्ट्रं वशीकृत्य सर्वश्रेष्ठो भवानीत्यर्थः। असा.

**यं निदधुर्वनस्पतौ गुह्यं देवाः प्रियं मणिम्।**
**तमस्मभ्यं सहायुषा देवा ददतु भर्तवे॥**

देवाः इन्द्राद्याः यं अभीष्टफलदत्वेन प्रसिद्धं अत एव प्रियं प्रियंकरं गुह्यं गोपनीयं मणिं वनस्पतौ पलाशवृक्षे निदधुः निहितवन्तः। तं तथाविधं मणिं अस्मभ्यं भर्तवे भरणाय, आयुषा सह देवा ददतु प्रयच्छन्तु। असा.

**सोमस्य पर्णः सह उग्रमाग-**
**न्निन्द्रेण दत्तो वरुणेन शिष्टः।**
**तं प्रियासं बहु रोचमानो**
**दीर्घायुत्वाय शतशारदाय॥**

सोमस्य द्युलोकस्थायाः सोमलतायाः पर्णः आहरणसमये भूमौ पतितपर्णात् उद्भूतः। श्रूयते हि 'तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत् पर्णोऽभवत्। तत् पर्णस्य पर्णत्वम्' (तैसं. ३।५।७।१) इति। उग्रं उद्गूर्णं प्रभूतं सहः पराभिभवनक्षमं बलं उक्तलक्षणबलरूपः एवंलक्षणो मणिः आगन् मां आगच्छतु। कथंभूतः? इन्द्रेण देवेन दत्तः वरुणेन शिष्टः अनुशिष्टः अनुज्ञातः। तं उक्तलक्षणं पर्णमणिं बहु बहुविधं रोचमानः रोचमानं मणिं प्रियासं भ्रियासं धारयेयम्। किमर्थम्? शतशारदाय शतसंवत्सरपरिमिताय दीर्घायुत्वाय चिरकालजीवनाय। शरदेव शारदम्। यद्वा, शरदः ऋतोः संबन्धी शारदः संवत्सरः। असा.

**आ माऽरुक्षत्पर्णमणिर्मह्या अरिष्टतातये।**
**यथाऽहमुत्तरोऽसान्यर्यम्ण उत संविदः॥**

अयं पर्णमणिः मह्यै महत्यै अरिष्टतातये। रिष्टं हिंसनं तदभावः अरिष्टम्, तत्क्रियायै। मा मां आरुक्षत् आरोहतु मयि चिरं वर्तताम्। अर्यम्णः। अरीन् यमयतीति अर्यमा अधिकबलः पुरुप्रदाता च। अर्यमा अधिकधनः, 'यः खलु वै ददाति सोऽर्यमा' (तैसं. २।३।४।१) इति श्रुतेः। तस्मात् अधिकात् उत अपि च संविदः समानज्ञानात्, समबलात् इत्यर्थः। तस्मात् यथा येन प्रकारेण अहं मणिधारकः उत्तरः उत्कृष्टतरः असानि भवानि। तथा आरुक्षत् इति संबन्धः। असा.

**ये धीवानो रथकाराः कर्मारा ये मनीषिणः।**
**उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान्॥**

ये धीवानः धीवराः मात्स्यिकाः। ये च रथकाराः रथनिर्मातारो जातिविशेषाः। उक्तं हि 'रथकारस्तु माहिष्यात् करण्यां यस्य संभवः' इति अमरः। वैश्यायां क्षत्रियात् उत्पन्नो माहिष्यः। शूद्रायां वैश्यात् उत्पन्ना करणी। ये कर्माराः अयस्कारप्रभृतयः ये च मनीषिणः मनस ईशितारो बुद्धिविशेषोपजीविनः। हे पर्ण तद्विकार मणे त्वम्। सर्वान् उक्तोपलक्षितान् जनान् मह्यम्। षष्ठ्यर्थे चतुर्थी। मम अभितः सर्वतः उपस्तीन् सेवार्थं समीपे विद्यमानान् उपासीनान् वा कृणु कुरु। असा.

**ये राजानो राजकृतः सूता ग्रामण्यश्च ये।**
**उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान्॥**

ये राजानः अन्यदेशाधिपाः राजकृतः राजानं कुर्वन्ति राज्ये अभिषिञ्चन्तीति राजकृतः सचिवाः सूताः।

ब्राह्मण्यां क्षत्रियात् उत्पन्नः सूतः। तज्जातीयाः सारथ्योपजीविनो वा। ये च ग्रामण्यः ग्रामस्य नेतारः। उपस्तीन् इत्यादि पूर्ववत् योज्यम्। असा.

**पर्णोऽसि तनूपानः सयोनिर्वीरो वीरेण मया।**
**संवत्सरस्य तेजसा तेन बध्नामि त्वा मणे॥**

हे मणे, त्वं पर्णोऽसि अमृतमयस्य सोमस्य पर्णविकारोऽसि। अत एव तनूपानः तन्वाः शरीरस्य पाता रक्षिताऽसि। वीरः वीरस्त्वं वीरेण वीर्यवता मया सयोनिः वीर्यवत्त्वकारणेन समानजन्माऽसि। तेन उक्तेन कारणेन संवत्सरस्य एतदुपलक्षितकालभेदनिर्वाहकस्य आदित्यस्य तेजसा युक्तं त्वा त्वां बध्नामि धारयामि त्वदीयतेजोऽवाप्तये धारयामि। असा.

राजाभिषेकः

[१]**भूतो भूतेषु पय आ दधाति**
**स भूतानामधिपतिर्बभूव।**
**तस्य मृत्युश्चरति राजसूयं**
**स राजा राज्यमनु मन्यतामिदम्॥**

भूतः समृद्धः अभिषेकेण प्राप्तैश्वर्यः भूतेषु समृद्धेषु जनपदेषु स्वाम्यमात्यादिप्रकृतिजनेषु वा पयः। उपलक्षणमेतत्। क्षीरोपलक्षितं भोज्यं वस्तुजातं आ दधाति स्थापयति, सर्वेषां अनुजीविनां अन्नप्रदो भवतीत्यर्थः। अत एव सः अभिषिक्तो राजा भूतानां प्राणिनां अधिपतिः अधिष्ठाता स्वामी बभूव। मृत्युः धर्मराजः धर्माधर्मप्रविभागेन दुष्टनिग्रहशिष्टपरिपालने कारयितुं तस्य राज्ञो राजसूयं चरति। राजा सूयते अनुज्ञायते जगद्रक्षणविधौ येन कर्मणा तत् राजसूयं अभिषेकाख्यं इदं कर्म अनुतिष्ठतीत्यर्थः। स कृताभिषेको राजा राज्यम्। राज्ञः कर्म दुष्टनिग्रहशिष्टपरिपालनादिकं राज्यम्। तत् अनु मन्यतां अङ्गीकरोतु। असा.

[२]**अभि प्रेहि माऽप वेन उग्रश्चेत्ता सपत्नहा।**
**आ तिष्ठ मित्रवर्धन तुभ्यं देवा अधि ब्रुवन्॥**

हे राजन्, सिंहासनं हस्त्यश्वरथादियानं च अभि प्रेहि अभिलक्ष्य प्रगच्छ। मा अप वेनः। अपकामं अनिच्छां मा कार्षीः। उग्रः उद्गूर्णबलः दुरासदः, चेत्ता चेतिता, कार्याकार्यविभागज्ञानशीलवान् इत्यर्थः। अत एव सपत्नहा सपत्नानां शत्रूणां हन्ता। राजासनादिसमीपं गत्वा च मित्रवर्धनः यानि राजमित्राणि महामात्रादीनि सन्ति तेषां वर्धयिता सन् आ तिष्ठ राजासनं हस्त्यश्वादियानं च आरोह। एवंभूताय तुभ्यं देवाः इन्द्रादयो लोकपालाः अधि ब्रुवन् अधिब्रुवन्तु। अधिवचनं पक्षपातेन वचनम्। मदीयोऽयमिति त्वां अनुगृह्णन्तु इत्यर्थः। असा.

[१]**आतिष्ठन्तं परि विश्वे अभूषं-**
**छ्रियं वसानश्चरति स्वरोचिः।**
**महत्तद्वृष्णो असुरस्य नामा**
**विश्वरूपो अमृतानि तस्थौ॥**

आतिष्ठन्तं सिंहासनादिकं आरोहन्तं विश्वे सर्वे जनाः पर्यभूषन् परितः अलंकुर्वन्तु। यद्वा, परितो भवन्तु वर्तन्ताम्, सेवन्तां इत्यर्थः। आस्थानानन्तरं श्रियं वसानः राजलक्ष्मीं धारयन् स्वरोचिः स्वायत्तदीप्तिः चरति राज्यपरिपालने वर्तते। विष्णोः अभिषेकजनितराजतेजसा दशदिगन्तान् व्याप्नुवतः असुरस्य शत्रूणां निरसितुः। यद्वा, असून् प्राणान् राति प्रयच्छति पादाक्रान्तानां द्विषां इति असुरः। ईदृशस्य तस्याभिषिक्तस्य राज्ञः तन्नाम अभिषेकसमये कृतं सुन्दरपाण्ड्यादिकं नाम महः महत् अधिकं यन्नामश्रवणमात्रात् भीताः शत्रवः पलायन्ते तादृशम्। तादृङ्नामाङ्कितो राजा विश्वरूपः शत्रुमित्रकलत्रादिषु नानाविधरूपः सन् अमृतानि अमृतत्वप्रापकानि

---

(१) असं. ४।८।१.

(२) असं. ४।८।२; कासं. ३७।९ (२२) माऽप वेन उग्रश्चेत्ता (वीरयस्वोग्रश्चेत्ता) वर्धन तुभ्यं (वर्धनस्तुभ्यं); तैब्रा. २।७।८।१ कासंवत्: २।७।१६।१ पूर्वार्धं कासंवत्, मित्रवर्धन (वृत्रहन्तमः) ब्रुवन् (ब्रवन्).

(१) ऋसं. ३।३८।४ छ्रियं (छ्रियो); असं. ४।८।३; कासं. ३७।९ (२४) षंछ्रियं (षच्छ्रियं) त्तद्वृष्णो असुरस्य (त्तदस्यासुरस्य); शुसं. ३३।२२ ऋसंवत्; तैब्रा. २।७।८।१ स्वरोचिः (स्वरोचाः) त्तद्वृष्णो असुरस्य (त्तदस्यासुरस्य).

दण्डयुद्धादीनि अध्ययनादीनि च कर्माणि आ तस्थौ आतिष्ठतु, आचरतु इत्यर्थः। असा.

**[1]व्याघ्रो अधि वैयाघ्रे वि क्रमस्व दिशो महीः।**
**विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः॥**

वैयाघ्रे व्याघ्रस्य विकारश्चर्मे वैयाघ्रम्। व्याघ्रचर्मणि अधि उपरि उपविष्टः सन् व्याघ्रः। लुप्तोपमं एतत्। व्याघ्रवत् दुष्प्रधर्षो भूत्वा महीः महतीः प्राच्याद्या दिशः वि क्रमस्व विजयस्व, विक्रमेण शौर्येण व्याप्नुहीत्यर्थः। हे राजन्, एवं तेजस्विनं त्वा त्वां सर्वा विशः प्रजाः वाञ्छन्तु स्वामित्वेन इच्छन्तु, त्वदाज्ञावशे वर्तन्तां इत्यर्थः। तथा दिव्याः दिवि भवाः पयस्वतीः पयस्वत्यः सारवत्य आपश्च त्वां वाञ्छन्तु, त्वद्विषये अनावृष्टिर्मा भूदित्यर्थः। असा.

**[2]या आपो दिव्याः पयसा मदन्त्यन्तरिक्ष**
**उत वा पृथिव्याम्।**
**तासां त्वा सर्वासामपामभि षिञ्चामि वर्चसा॥**

दिव्याः दिवि भवा या आपः पयसा स्वकीयेन सारभूतेन रसेन मदन्ति प्राणिनस्तर्पयन्ति। याश्च अन्तरिक्षे वर्तमाना आपः उत वा अपि वा पृथिव्यां भूम्यां अवस्थिताः तासां सर्वासां लोकत्रयव्याप्तानां अपां वर्चसा बलकरेण सारेण हे राजन्, त्वा त्वां अभि षिञ्चामि। असा.

**[3]अभि त्वा वर्चसाऽसिचन्नापो दिव्याः पयस्वतीः।**
**यथाऽसो मित्रवर्धनस्तथा त्वा सविता करत्॥**

हे राजन्, त्वा त्वां प्रागुक्ता दिव्याः पयस्वतीः पयस्वत्य आपः स्वकीयेन वर्चसा अभ्यसृजन् आभिमुख्येन संसृजन्तु। यथा त्वं मित्रवर्धनः मित्राणां वर्धयिता असः भवेः। सविता सर्वप्रेरको देवः त्वा त्वां तथा करत् करोतु। असा.

**[1]एना व्याघ्रं परिषस्वजानाः**
**सिंहं हिन्वन्ति महते सौभगाय।**
**समुद्रं न सुभुवस्तस्थिवांसं**
**मर्मृज्यन्ते द्वीपिनमप्स्व१न्तः॥**

'या आपो दिव्याः' इति प्रागुक्ता आपः एना इति अन्वादिश्यन्ते। एना एता उक्ता आपः व्याघ्रं व्याघ्रवत् पराक्रमयुक्तं परिषस्वजानाः परितः अभितः अतिशयेन आलिङ्गन्त्यः, मातरो वत्समिव अत्यन्तं प्रीणयन्त्य इत्यर्थः। सिंहं सहनशीलं यद्वा सिंहतुल्यपराक्रमं राजानं हिन्वन्ति वीर्यप्रदानेन प्रीणयन्ति। किमर्थम्? महते सौभगाय अधिकाय सौभाग्याय। तत्र दृष्टान्तः— समुद्रं नेति। यथा नदीरूपाः आपः समुद्रं प्रीणयन्ति तद्वत् अभिषेकसाधनभूता आपो राजानं प्रीणयन्तीत्यर्थः। यद्वा, समुद्रशब्देन वरुण उच्यते। समुद्रं न वरुणमिव। अप्सु उदकेषु परितो वर्तमानेषु अन्तः मध्ये तस्थिवांसं स्थितवन्तं द्वीपिनं शार्दूलवत् अप्रधृष्यं राजानं सुभुवः। सुष्ठु भवन्ति समृद्धा भवन्तीति सुभुवः सेवकजनाः। ते मर्मृज्यन्ते पुनःपुनः अङ्गप्रत्यङ्गानि अभिषेकेण शोधयन्ति। यद्वा, पट्टवस्त्रकटकमुकुटादिभिरलंकुर्वन्ति। असा.

---

(१) असं. ४।८।४; कासं. ३७।९ (१८) अधि वैयाघ्रे (वैय्याघ्रे अधि); तैब्रा. २।७।१५।३ अधि वैयाघ्रे वि क्रमस्व (वैयाघ्रेऽधि। विश्रयस्व) उत्तरार्धे (विशस्त्वा सर्वा वाञ्छन्तु। मा त्वद्राष्ट्रमधिभ्रशत्।).

(२) असं. ४।८।५; कासं. ३७।९ (१९) मदन्त्य...... पृथिव्याम् (संबभूवुर्या अन्तरिक्ष्या उत पार्थिवासः) सर्वासामपामभि (सर्वासां रुचाभि); तैब्रा. २।७।१५।४ (या दिव्या आपः पयसा संबभूवुः। या अन्तरिक्ष उत पार्थिवीर्याः। तासां त्वा सर्वासां रुचा। अभिषिञ्चामि वर्चसा॥).

(३) असं. ४।८।६; कासं. ३६।१५ (४२), ३७।९ (२०) सिचन्नापो दिव्याः पयस्वतीः (सिचं यज्ञेन पयसा सह); तैब्रा. २।७।१५।४ पूर्वार्धे (अभि त्वा वर्चसा सिचं दिव्येन। पयसा सह।) यथाऽसो मित्र (यथाऽऽसा राष्ट्र).

(१) असं. ४।८।७; कासं. ३७।९ (२८) जानाः (जानं) सौभगाय (धनाय) उत्तरार्धे (मर्मृज्यन्ते द्वीपिनमप्स्वन्तरुषं न सुभ्वस्तस्थिवांसम्।); मैसं. २।१।९ (१२) हिन्वन्ति (मृजन्ति) सौभगाय (धनाय) उत्तरार्धे (महिषं नः सुभ्वं तस्थिवांसं मर्मृज्यते द्वीपिनमप्स्वन्तः।); तैब्रा. २।७।१६।४ सुभुवः (सुभ्वं).

प्रतिप्रातः राज्ञोऽभिमन्त्रणम्

[१]इममिन्द्र वर्धय क्षत्रियं म
इमं विशामेकवृषं कृणु त्वम् ।
निरमित्रानक्ष्णुह्यस्य सर्वांस्तान्
रन्धयास्मा अहमुत्तरेषु ॥

हे इन्द्र, त्वं मे मदीयं इमं क्षत्रियं राजानं वर्धय पुत्रपौत्रादिभिर्वस्तुवाहनादिभिश्च समृद्धं कुरु । वृषां सेचनसमर्थानां वीर्यवतां पुरुषाणां मध्ये इमं राजानं एकवृषं मुख्यसेक्तारं असहायशूरं कृणु कुरु । अस्य राज्ञः सर्वान् अमित्रान् शत्रून् निरक्ष्णुहि निर्गतव्याप्तिकान् कुरु, संकुचितप्रभावान् कुरु इत्यर्थः । तान् तथाविधान् शत्रून् अस्मै राज्ञे रन्धय वशीकुरु, कर्मकरान् कुरु इत्यर्थः । अहमपि मन्त्रसामर्थ्येन उत्तरेषु उत्कृष्टतरेषु इन्द्रादिलोकपालेषु मध्ये इमं एकं करोमीत्यर्थः । असा.

[२]एमं भज ग्रामे अश्वेषु गोषु
निष्टं भज यो अमित्रो अस्य ।
वर्ष्म क्षत्राणामयमस्तु
राजेन्द्र शत्रुं रन्धय सर्वमस्मै ॥

हे इन्द्र, इमं राजानं ग्रामे जनसमूहे अश्वेषु गोषु च विषये आ भज आभक्तं आसमन्तात् संश्लिष्टं कुरु । अस्य राज्ञो यः अमित्रः शत्रुरस्ति तं निर्भज ग्रामादिभ्यो निर्भक्तं वियुक्तं कुरु । तथा क्षत्राणां अन्येषां क्षत्रियाणां वर्ष्मन् वर्ष्मणि देहे प्रशस्ते शरीरावयवे शिरसि अयं अभिषिक्तो राजा वर्तमानोऽस्तु । सर्वान् शत्रून् सर्वं च राष्ट्रं अस्मै अभिषिक्ताय राज्ञे रन्धय वशीकुरु । 'रध्यतिर्वशगमने' इति निरुक्तम् ( नि. १०।४० ) ।

असा.

[१]अयमस्तु धनपतिर्धनाना-
मयं विशां विश्पतिरस्तु राजा ।
अस्मिन्निन्द्र महि वर्चांसि
धेह्यवर्चसं कृणुहि शत्रुमस्य ॥

अयं राजा धनानां सुवर्णरजतमणिमुक्ताप्रवालादीनां धनपतिः स्वामी अस्तु भवतु । धनानां पतिर्धनपतिरित्येव धनाढ्यत्वे सिद्धे पुनर्धनानां इति व्यस्तनिर्देशः ईशितव्यस्य धनस्य बहुत्वख्यापनार्थः । न हि राजपुरुष इत्युक्ते राज्ञोः पुरुषः राज्ञां पुरुषः इति संख्याविशेषप्रतीतिरस्ति किंतु राजसंबन्धमात्रं प्रतीयते, एवं अत्रापि धनपतिरिति धनसंबन्धमात्रे अवगते तद्बहुत्वप्रतिपादनाय व्यस्तनिर्देश इति न पौनरुक्त्यम् । अतो वृत्त्यवृत्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते । तथा अयं राजा विशां प्रजानां विश्पतिरस्तु स्वामी भवतु । विशां विश्पतिरिति पूर्ववत् व्याससमासयोरभिप्रायः । हे इन्द्र, अस्मिन् राजनि महि महान्ति वर्चांसि तेजांसि पराभिभवनसमर्थानि वीर्याणि धेहि स्थापय । अस्य राज्ञः शत्रुं अवर्चसं कृणुहि अतेजस्कं कुरु । असा.

[२]अस्मै द्यावापृथिवी भूरि वामं
दुहाथां घर्मदुघे इव धेनू ।
अयं राजा प्रिय इन्द्रस्य भूया-
त्प्रियो गवामोषधीनां पशूनाम् ॥

हे द्यावापृथिवी द्यावापृथिव्यौ, अस्मै पुरोवर्तिने मदीयाय राज्ञे भूरि प्रभूतं वामं वननीयं धनं दुहाथां प्रयच्छतम् । तत्र दृष्टान्तः— घर्मदुघे इवेति । घर्मः प्रवर्ग्यः । तदर्थं पयो या गौर्दोग्धि सा घर्मदुघा । यथा घर्मदुघे धेनू बहुलं क्षीरं दुहाते तद्वत् वात्सल्येन बहुलं धनं द्यावापृथिव्यौ प्रयच्छतामित्यर्थः । एवं धनसमृद्धौ सत्यां यागाद्यनुष्ठानेन अयं राजा इन्द्रस्य यज्ञभाजो देवस्य प्रियः इष्टतरो भूयात् । तत्प्रियत्वात् वृष्टौ सत्यां गवां ओषधीनां

---

( १ ) असं. ४।२२।१.

( २ ) असं. ४।२२।२; तैब्रा. २।४।७।७ ( इममाभज ग्रामे अश्वेषु गोषु । निरमुं भज यो मित्रो अस्य । वर्ष्मन्क्षत्रस्य ककुभि श्रयस्व । ततो न उग्रो विभजा वसूनि ॥ ).

( १ ) असं. ४।२२।३.

( २ ) असं. ४।२२।४; तैब्रा. २।४।७।८ पूर्वार्धे ( अस्मे द्यावापृथिवी भूरि वामम् । संदुहाथां घर्मदुघेव धेनुः । ) पशूनाम् ( उतापाम् ).

व्रीहियवादिसस्यानां अन्येषां पशूनां द्विपाच्चतुष्पाल्लक्षणानां प्राणिनां अयं राजा प्रियो भूयात् इति संबन्धः। असा.

[1]युनज्मि त उत्तरावन्तमिन्द्रं
येन जयन्ति न पराजयन्ते।
यस्त्वा करदेकवृषं जनाना-
मुत राज्ञामुत्तमं मानवानाम्॥

हे राजन्, ते तव उत्तरावन्तं अतिशयितोत्कर्षवन्तं इन्द्रं युनज्मि योजयामि सखित्वापादनेन समानकार्यं करोमि। येन इन्द्रेण प्रेरितास्त्वदीया भटाः शत्रुसेनां जयन्ति न पराजयन्ते पराजयं न प्राप्नुवन्ति। अपि च, त्वा त्वां य इन्द्रः जनानां अन्येषां शूरजनानां एकवृषं गोयूथे प्रधानभूतोऽयं वृष एकवृषः तद्वत् मुख्यं सर्वोत्कृष्टं करत् करोति। उतशब्दः अप्यर्थे। राज्ञां अन्येषामपि एकवृषं एकवृषवत् अभिभवितारं करोति। मानवानां मनोरपत्यानां मनुष्यजातीयानां उत्तमं उत्कृष्टं करोति। यद्वा, मानवानां मनुवंश्यानां इलपुरूरवःप्रभृतीनां राज्ञां मध्ये उत्तमं प्रजापरिपालनशौर्यादिगुणैरुत्कृष्टं करोति। तथाविधं इन्द्रं युनज्मीति संबन्धः। असा.

[2]उत्तरस्त्वमधरे ते सपत्ना
ये के च राजन्प्रतिशत्रवस्ते।
एकवृष इन्द्रसखा जिगीवां
छत्रूयतामा भरा भोजनानि॥

हे राजन्, त्वं उत्तरः सर्वोत्कृष्टतरो भव। ते त्वदीयाः सपत्नाः अधरे निकृष्टा भवन्तु। तान् विशिनष्टि– ते, द्वितीयार्थे षष्ठी, त्वां प्रति ये के च जनाः शत्रवः शत्रुभावेन प्रतिकूलं आचरन्ति ते सर्वे अधरे भवन्तु इत्यर्थः। अपि च, एकवृषः प्रधानभूतः इन्द्रसखा इन्द्रेण सख्या युक्तः जिगीवान् शत्रून् जयन् शत्रूयतां शत्रुत्वं आत्मन इच्छतां शत्रुवदाचरतां वा भोजनानि भोगसाधनानि धनानि आ भर आहर, सर्वान् शत्रून् विजित्य तदीयं सर्वं धनमपहरेत्यर्थः। असा.

[1]सिंहप्रतीको विशो अद्धि सर्वा
व्याघ्रप्रतीकोऽव बाधस्व शत्रून्।
एकवृष इन्द्रसखा जिगीवां
छत्रूयतामा खिदा भोजनानि॥

सिंहप्रतीकः सिंहशरीरः सिंहतुल्यपराक्रमः सन् आज्ञामात्रेण सर्वा विशः स्वराष्ट्रस्थाः प्रजाः अद्धि भुङ्क्ष्व। व्याघ्रप्रतीकः व्याघ्रशरीरः व्याघ्रवत् आक्रम्य पर्यन्तस्थान् शत्रून् अप बाधस्व। अन्यद्व्याख्यातम्। एतावांस्तु विशेषः। शत्रुसंबन्धीनि धनानि आ खिद आच्छिन्धि, अपहरेत्यर्थः। असा.

श्रैष्ठ्यकामस्य कर्म

[2]वृषेन्द्रस्य वृषा दिवो वृषा पृथिव्या अयम्।
वृषा विश्वस्य भूतस्य त्वमेकवृषो भव॥

अयं श्रैष्ठ्यकामः पुरुषः इन्द्रस्य प्रसादात् वृषा सेचनसमर्थः श्रेष्ठो भवतु। यद्वा, हविःप्रदानादिना उपजीव्यः सन् इन्द्रस्यापि श्रेष्ठो भवतु इत्यर्थः। दिवः द्युलोकस्य वृषा कामानां वर्षिता श्रेष्ठो भवतु। पृथिव्या अपि वृषा आहुतिद्वारा वृष्टेरुत्पादयिता सन् अयं श्रेष्ठो भवतु। किं बहुना द्यावापृथिव्युपलक्षितस्य विश्वस्य भूतस्य सर्वस्यापि प्राणिजातस्य वृषा सेचनसमर्थः उत्कृष्टो भवतु। परः प्रत्यक्षकृतः। हे श्रैष्ठ्यकाम पुरुष, उदीरितरीत्या त्वं एकवृषो भव। यथा गोयूथमध्ये प्रधानभूतो वृषभः सर्वश्रेष्ठो वर्तते एवं सर्वोत्कृष्टो भवेत्यर्थः। असा.

समुद्र ईशे स्रवतामग्निः पृथिव्या वशी।
चन्द्रमा नक्षत्राणामीशे त्वमेकवृषो भव॥

स्रवतां प्रवहतामुदकानां समुद्रः अब्धिः ईशे ईष्टे। पृथिव्याः भूम्याः अग्निर्वशी वशयिता स्वामी। नक्षत्राणां अश्विन्यादीनां चन्द्रमा ईशे ईष्टे। यथा एतेषां समुद्रा-

(१) असं ४।२२।५; तैब्रा. २।४।७।८ जयन्ति न पराजयन्ते (जयासि न पराजयासै) उत्तरार्धे (स त्वाऽकरेकवृषभं स्वानाम्। अथो राजन्नुत्तमं मानवानाम्॥).

(२) असं ४।२२।६; तैब्रा. २।४।७।८ (उत्तरस्त्वमधरे ते सपत्नाः। एकवृषा इन्द्रसखा जिगीवान्। विश्वा आशाः पृतनाः सं जयं जयन्। अभितिष्ठ शत्रूयतः सहस्व॥).

(१) असं. ४।२२।७.

(२) असं. ६।८६।१-३.

दीनां स्वस्वविषयाधिपत्यमव्याहतमेवं हे श्रैष्ठ्यकाम, त्वं एकवृषो भवेति संबन्धः । असा.

**सम्राडस्यसुराणां ककुन्मनुष्याणाम् ।**
**देवानामर्धभागसि त्वमेकवृषो भव ॥**

हे इन्द्र, त्वं असुराणां सुरविरोधिनां दानवानां सम्राट् सम्यग् राजमानः ईश्वरोऽसि भवसि । तद्वत् अयं श्रैष्ठ्यकामो मनुष्याणां मनोरपत्यानां सर्वप्राणिनां ककुत् वृषभस्य ककुदिव उन्नतो भवतु । तथा हे इन्द्र, त्वं देवानामर्धभागसि । अर्धशब्दः समप्रविभागवचनः । अन्ये सर्वे देवाः एको भागः इन्द्र एको भागः, सर्वदेवप्रतिनिधिर्भवसीत्यर्थः । तथा च तैत्तिरीयकम्– 'यत् सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः' (तैसं. ५।४।८।३) इति । ईदृशस्य इन्द्रस्य प्रसादात् हे श्रैष्ठ्यकाम, त्वं इन्द्रवत् एकवृषो भव । असा.

राज्ञः प्रतिचरः

**[1]उत्तमो अस्योषधीनामनड्वान्**
**जगतामिव व्याघ्रः श्वपदामिव ।**
**यमैच्छामाविदाम तं प्रतिस्पाशनमन्तितम् ॥**

हे मणे मण्युपादान वृक्ष वा, त्वं उत्तमोऽसि सर्वाभिमतफलसाधनत्वेन कतिपयफलसाधिकानां ओषधीनां मध्ये श्रेष्ठोऽसि । उत्तमत्वे दृष्टान्तमाह– अनड्वान् अनोवहनसमर्थः पुंगवो जगतामिव गच्छतां चतुष्पदां मध्ये यथा उत्तमः तद्वत् । अनडुह उत्तमत्वं 'अनड्वान् दाधार पृथिवीम्' (४।११।१) इत्यत्र प्रागुक्तम् । उपकारकत्वे दृष्टान्तमभिधाय शत्रुहिंसादिक्रूरकर्मणि दृष्टान्तमाह– व्याघ्रः श्वपदामिवेति । श्वपदः वृकसृगालाद्या अरण्यदुष्टमृगाः । तेषां मध्ये व्याघ्र इव । 'व्याघ्रो व्याघ्राणात् व्यादाय हन्तीति वा' (नि. ३।१८) इति यास्कः । यं ईदृग्विधं सर्वपुरुषार्थसाधनाय ऐच्छाम तमविदाम लब्धवन्तः स्मः । अथवा, यं त्वया साध्यं पुरुषार्थं ऐच्छाम तमविदाम । तं विशिनष्टि– प्रतिस्पाशिनं अभिचरतः प्रतिमुखं बाधकम् । अन्तितं अत्यन्तसंनिहितम् । अथवा, तं तमेव प्रतिस्पाशिनं प्रतिकूलं बाधनावन्तं द्वेष्टारं अन्ति अन्तिके अविदाम । असा.

ब्रह्मचर्यं प्रजारक्षणसाधनम्

**[1]आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः ।**
**प्रजापतिर्वि राजति विराडिन्द्रोऽभवद्वशी ॥**

आचार्यः प्रथमं विद्यामुपदिश्य ब्रह्मचार्यात्मना जातः । स च ब्रह्मचारी तपसा ब्रह्मचर्येण अधिकं महिमानं प्राप्य प्रजापतिः जगत्स्रष्टा अभवत् । स च प्रजापतिः वि राजति विराड् भवति । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' (श्वेउ. ६।१८) इति श्रुत्युक्तः स्थूलप्रपञ्चशरीराभिमानी ईश्वरो विराट् । स च वशी स्वतन्त्रः इन्द्रः परमैश्वर्ययुक्तः सर्वजगत्स्रष्टा परमात्मा अभवत् । ततः आचार्यः परंपरया सर्वदेवतात्मक इति तस्य माहात्म्यं केन वर्णयितुं शक्यमिति भावः । असा.

**ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति ।**
**आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥**

ब्रह्म वेदः तदध्ययनार्थं आचर्यं आचरणीयं समिदाधानभैक्षचर्योर्ध्वरेतस्कत्वादिकं ब्रह्मचारिभिरनुष्ठीयमानं कर्म ब्रह्मचर्यम् । तेन ब्रह्मचर्येण तपसा तत्कृतेन उपवासादिव्रतनियमेन च राजा राष्ट्रं स्वकीयं वि रक्षति विशेषेण पालयति । यस्य राज्ञो जनपदे ब्रह्मचर्येण युक्ताः पुरुषास्तपश्चरन्ति तदीयं राष्ट्रमभिवर्धते इत्यर्थः । यद्वा, राज्ञः कर्तव्यत्वेन कालविशेषेषु श्रुतिस्मृत्युदितं ब्रह्मचर्यं तपोऽनुतिष्ठन् राजा तेनैव ब्रह्मचर्येण तपसा राष्ट्रं पालयतीत्यर्थः । आचार्योऽपि ब्रह्मचर्येण नियमेन ब्रह्मचारिणं शिष्यं इच्छते आत्मनोऽभिलष्यति । ब्रह्मचर्यनियमस्थमेव आचार्यं शिष्या उपगच्छन्तीत्यर्थः । असा.

व्रात्यब्रह्मणो राजन्योत्पत्तिः

**[2]सोऽरज्यत ततो राजन्योऽजायत ॥**
**स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत् ॥**
**विशां च वै स सबन्धूनां चान्नस्य चान्नाद्यस्य**
**च प्रियं धाम भवति य एवं वेद ॥**

---

(१) असं. ८।५।११.

(१) असं. ११।५।१६–१७.
(२) असं. १५।८।१–३.

राज्ञोऽतिथिर्व्रात्यः

[1]तद्यस्यैवं विद्वान् व्रात्यो राज्ञोऽतिथि-
गृहानागच्छेत् ॥
श्रेयांसमेनमात्मनो मानयेत्तथा
क्षत्राय ना वृश्चते तथा राष्ट्राय ना वृश्चते ॥

शत्रोः राज्ञः सेनाया रक्षणम्

[2]इन्द्रं वयमनूराधं हवामहे-
ऽनु राध्यास्म द्विपदा चतुष्पदा ।
मा नः सेना अररुषीरुप
गुर्विषूचीरिन्द्र द्रुहो वि नाशय ॥

अनुराधं अनुक्रमेण राधनीयं पूजनीयम् । सर्वेऽपि स्वस्वकार्यार्थे इन्द्रं एव प्रार्थयन्ते । तथा च दाशतय्यां आम्नायते– ' इन्द्रं परेऽवरे मध्यमास इन्द्रं यान्तोऽवसितास इन्द्रम् । इन्द्रं क्षियन्त उत युध्यमाना इन्द्रं नरो वाजयन्तो हवन्ते ॥ ' ( ऋसं. ४।२५।८ ) इति । ईदृशं इन्द्रं वयं हवामहे स्वेष्टसिद्ध्यर्थं आह्वयामः । इन्द्रप्रार्थनया वयं द्विपदा पादद्वयोपेतेन पुत्रभृत्यादिना चतुष्पदा पादचतुष्टयोपेतेन गवाश्वादिना च अनु राध्यास्म अनुक्रमेण संपन्ना भूयास्म, पुत्रभृत्यगवादिरूपाभिमतफलसमृद्धा भवेम । किंच, अररुषीः अदात्र्यः अभिमतफलप्रतिबन्धिकाः सेनाः शात्रवीया नः अस्मान् मोप गुः मोपगच्छन्तु समीपं मा प्राप्नुवन्तु । न केवलं समीपप्राप्त्यभावः किंतु हे इन्द्र, विषूचीः विष्वगञ्चनाः सर्वतो व्याप्ता द्रुहः द्रुह्यन्तीस्ताः शत्रुसेना वि नाशय विशेषेण जहि । असा.

राज्ञः पुरप्रवेशनकर्म

[3]अग्निर्मा पातु वसुभिः पुरस्ता-
त्तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु
तस्मा आत्मानं परि ददे स्वाहा ॥

अग्निः पृथिवीस्थानो देवः वसुभिः एतत्संज्ञकैर्देवैः सह पुरस्तात् पूर्वस्यां दिशि मा मां पातु रक्षतु । अग्नेर्वसुसाहित्यमन्यत्राम्नायते– ' अग्निः प्रथमो वसुभिर्नो अव्यात् ' ( आश्रौ. २।११ ) इति । कुत्रस्थं पुरुषं रक्षतु इत्याकाङ्क्षायामाह– तस्मिन् क्रमे । क्रमणं क्रमः पादप्रक्षेपः । तस्मिन् पादप्रक्षेपे । तस्मिन् श्रये । श्रयणं श्रयः आश्रयः । तस्मिन् आश्रये अवस्थाने । पादप्रक्षेपप्रदेशे अवस्थानप्रदेशे चेत्यर्थः । यद्वा, क्रमे श्रये इति तिङन्तं पदम् । तस्मिन् यस्मिन्नुद्दिष्टे स्थाने क्रमे पादं प्रक्षिपामि । यत् गन्तव्यं स्थानं उद्दिश्य उत्सहे तत्र । तथा यत् स्थानं श्रये आश्रयामि तत्र । तां पुरं या उद्दिष्टा पूः शय्यागृहलक्षणा तां पुरं प्रैमि प्रगच्छामि । तत्र सर्वत्र अग्निर्मा पात्विति संबन्धः । यद्वा, 'आपो मौषधीमतीः ' इति षष्ठमन्त्रे तासु क्रमे तासु श्रये इति स्त्रीलिङ्गनिर्देशेन आम्नानादत्रापि तस्मिन् क्रमे इत्यत्र एवं व्याख्येयम् । तस्मिन् । सति सप्तमीयम् । तस्मिन् वसुमत्यग्नौ रक्षके सति क्रमे क्रमणं करोमि । तस्मिन् रक्षके सति श्रये आश्रयामि । तां पुरं प्रैमीत्यादि पूर्ववत् । किंच, स वसुमानग्निः मा मां रक्षतु । सोऽग्निश्च मा मां गोपायतु । अत्र रक्षणगोपनयोः अहितनिवारणहितकरणरूपपालनभेदेन भेदो द्रष्टव्यः । तस्मै सर्वतोरक्षकाय वसुमते अग्नये आत्मानं परि ददे । रक्षणार्थं दानं परिदानं इत्युच्यते । रक्षार्थं प्रयच्छामि । स्वाहा । तदधीनत्वद्योतनार्थं स्वाहाशब्दप्रयोगः । यथा सुहुतं हविस्तत्तद्देवताधीनं भवति एवं आत्माऽपि रक्षणार्थं अग्न्यधीनो भवत्वित्यर्थः । एवमुत्तरे नव पर्याया व्याख्येयाः । विशेषस्तु तत्रतत्र वक्ष्यते । असा.

वायुर्माऽन्तरिक्षेणैतस्या दिशः पातु
तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि ।
स मा रक्षतु स मा गोपायतु
तस्मा आत्मानं परि ददे स्वाहा ॥

वायुः अन्तरिक्षस्थानो देवः अन्तरिक्षेण स्वाधिष्ठितेन मध्यमलोकेन सह मा मां एतस्याः पूर्वमन्त्रे पुरस्तात् इति निर्दिष्टायाः प्राच्या दिशः पातु । तस्मिन् क्रमे इत्यादि पूर्ववत् । असा.

---

( १ ) असं. १५।१०।१–२.
( २ ) असं. १९।१५।२.
( ३ ) असं. १९।१७।१–१०.

**सोमो मा रुद्रैर्दक्षिणाया दिशः पातु**
**तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि ।**
**स मा रक्षतु स मा गोपायतु**
**तस्मा आत्मानं परि ददे स्वाहा ॥**

सोमो देवः रुद्रैः रोदयितृभिः एतत्संज्ञकैर्देवैः मा मां दक्षिणस्या दिशः पातु । सोमस्य रुद्रसाहित्यं अन्यत्राऽऽम्नायते– 'सोमो रुद्रैरभिरक्षतु त्मना' (आश्रौ. २।११) इति । शिष्टं पूर्ववन्नेयम् । असा.

**वरुणो मादित्यैरेतस्या दिशः पातु**
**तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि ।**
**स मा रक्षतु स मा गोपायतु**
**तस्मा आत्मानं परि ददे स्वाहा ॥**

वरुणः वारको देवः आदित्यैः अदितिपुत्रैः एतत्संज्ञैर्देवैः सह । वरुणस्य आदित्यसाहित्यं अन्यत्र श्रूयते– 'आदित्यैर्नो वरुणः शर्म यंसत्' (आश्रौ. २।११) इति । एतस्या दक्षिणाया दिशः पातु । शिष्टं व्याख्यातम् । असा.

**सूर्यो मा द्यावापृथिवीभ्यां प्रतीच्या दिशः**
**पातु तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि ।**
**स मा रक्षतु स मा गोपायतु**
**तस्मा आत्मानं परि ददे स्वाहा ॥**

सूर्यः सर्वस्य प्रेरक आदित्यः । द्यावापृथिवीभ्यां सह । तत्प्रकाश्यत्वेन तत्साहित्यम् । प्रतीच्याः पश्चिमाया दिशः । शिष्टं पूर्ववद्व्याख्येयम् । असा.

**आपो मौषधीमतीरेतस्या दिशः**
**पान्तु तासु क्रमे तासु श्रये तां पुरं प्रैमि ।**
**ता मा रक्षन्तु ता मा गोपायन्तु**
**ताभ्य आत्मानं परि ददे स्वाहा ॥**

ओषधीमतीः ओषधीमत्यः । आपः । अपां ओषधीसाहित्यं संपोष्यत्वेन हेतुना । एतस्या दिशः मा मां पान्तु । तासु ओषधीमतीष्वप्सु रक्षिकासु सतीषु क्रमे गन्तव्यं स्थानं प्रति पादं प्रक्षिपामि । तासु रक्षित्रीषु श्रये संश्रये अवतिष्ठे । तां पुरं शय्यागृहलक्षणां प्रैमि प्रगच्छामि । तत्र सर्वत्र आपः पान्तु इति संबन्धः । किंच, ता आपो मा मां रक्षन्तु । ताश्च मा गोपायन्तु । ताभ्यः अद्भ्यः आत्मानं परि ददे रक्षणार्थं प्रयच्छामि । स्वाहाशब्दो व्याख्यातः । असा.

**विश्वकर्मा मा सप्तऋषिभिरुदीच्या दिशः**
**पातु तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि ।**
**स मा रक्षतु स मा गोपायतु**
**तस्मा आत्मानं परि ददे स्वाहा ॥**

विश्वकर्मा विश्वं सर्वं कर्म कार्यं सृज्यं यस्माद्भवति स विश्वकर्मा विश्वजगत्कारणभूतः परमात्मा सप्तर्षिभिः स्वमनःसृष्टैः सप्तसंख्याकैर्ऋषिभिः सह मा मां उदीच्या उत्तरस्या दिशः पातु । विश्वकर्मणः सप्तर्षिसाहित्यं स्वकार्यत्वेन । उक्तं च भगवता गीतासु– 'महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा । मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥' (भगी. १०।६) इति । तस्मिन् सप्तर्षिसहिते विश्वकर्मणि रक्षितरि, क्रमे इत्यादि पूर्ववद्व्याख्येयम् । असा.

**इन्द्रो मा मरुत्वानेतस्या दिशः पातु**
**तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि ।**
**स मा रक्षतु स मा गोपायतु**
**तस्मा आत्मानं परि ददे स्वाहा ॥**

मरुत्वान् मरुद्भिस्तद्वान् । स इन्द्रः एतस्याः पूर्वमन्त्रोक्ताया उदीच्या दिशः पातु । इन्द्रस्य मरुत्साहित्यं अन्यत्राम्नायते– 'वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः । मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥' (ऋसं. ८।९६।७) इति । अस्य मन्त्रस्य ऐतरेयकब्राह्मणं एवमाम्नायते– 'इन्द्रो वै वृत्रं हनिष्यन्त्सर्वा देवता अब्रवीदनु मोपतिष्ठध्वं उप माह्वयध्वमिति । तथेति तं हनिष्यन्त आद्रवन् । सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति हन्तेमान् भीषया इति । तान् अभि प्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वे देवा अद्रवन् । मरुतो हैनं नाजहुः । प्रहर भगवो जहि वीरयस्वेत्येवैनं एतां वाचं वदन्त उपा-

तिष्ठन्त' (ऐब्रा. १२।९) इति। तस्मिन् मरुत्वति इन्द्रे रक्षितरि। शिष्टं पूर्ववत् व्याख्येयम्। असा.

**प्रजापतिर्मा प्रजननवान्त्सह प्रतिष्ठाया ध्रुवाया दिशः पातु तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि। स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा॥**

प्रजननवान्, प्रजननं नाम सर्वजगदुत्पादनसाधनं तद्वान्। यद्वा, प्रजननं पुंव्यञ्जकं स्त्रीपुंससृष्टेस्तद्धेतुत्वात्। प्रजापतिः प्रकर्षेण जायमाना मनुष्यादिकाश्चराचरात्मिकाः प्रजाः तासां पतिः स्रष्टा देवः। सहसामर्थ्यात् प्रजननेन साकं इत्यर्थः। यद्वा प्रतिष्ठायाः। तृतीयार्थे षष्ठी। प्रतिष्ठया सहेति। प्रतिष्ठायाः सर्वजगदाधारभूतायाः ध्रुवायाः स्थिराया भूमेर्दिशः। भूमिरपि अधरदिक्त्वेनोच्यते। तस्याः पातु। तस्मिन् क्रमे इत्यादि शिष्टं अविशिष्टम्। असा.

**बृहस्पतिर्मा विश्वैर्देवैरूर्ध्वाया दिशः पातु तस्मिन् क्रमे तस्मिंछ्रये तां पुरं प्रैमि। स मा रक्षतु स मा गोपायतु तस्मा आत्मानं परि ददे स्वाहा॥**

बृहस्पतिः बृहतां महतां देवानां पतिर्देवो विश्वैः सर्वैः देवैः सह ऊर्ध्वाया उपरिस्थिताया दिवो दिशः। द्यौरपि ऊर्ध्वदिक्त्वेन तत्रतत्रोच्यते। तस्याः पातु। तस्मिन् विश्वदेवसहिते बृहस्पतौ रक्षितरि क्रमे पादप्रक्षेपं करोमि। शिष्टं पूर्ववन्नेयम्। असा.

राज्ञः पुरप्रवेशनकर्म

**[1]मित्रः पृथिव्योदक्रामत्तां पुरं प्र णयामि वः। तामा विशत तां प्र विशत सा वः शर्म च वर्म च यच्छतु॥**

मित्रः, मित्रशब्देन अग्निरुच्यते, पृथिव्याः साहचर्यात् पृथिवीस्थानत्वात् अग्नेः 'सूर्यो दिवोदक्रामत्' इति सूर्यस्य पृथग्वक्ष्यमाणत्वाच्च। मित्रः अग्निः मीयमानत्वात् आहवनीयादिस्वरूपेण प्रणीयमानत्वात्। पृथिव्या स्वनिवासस्थानभूतेन पृथिवीलोकेन सह उदक्रामत् उत्क्रान्तवान्। यां पुरं रक्षितुमिति शेषः। तां पृथिवीलोकाभिमानिना अग्निना रक्षितां पुरं शय्यागृहलक्षणां प्रसिद्धां नगरीं वा वः युष्मान् राज्ञः। पूजायां बहुवचनम्। पुत्रमित्रामात्यावरोधस्त्रीविवक्षया वा बहुवचनम्। पुत्रयोषित्सहितान् युष्मान् प्र णयामि प्रकर्षेण नयामि प्रापयामि। ततः तां पुरं आ विशत अभिमुखं प्रविशत प्रवेशोन्मुखा भवत। अनन्तरं तां पुरं प्र विशत अन्तःप्रविष्टा भवत। शय्यास्थाने स्वीयसौधे वा निविष्टा भवतेति वा। सा पूः शय्यागृहलक्षणा पुरी वा वः युष्मभ्यं प्रविष्टेभ्यः शर्म सुखं वर्म कवचं पराभेद्यत्वलक्षणं आवरणं वा यच्छतु प्रयच्छतु। परस्परसमुच्चयार्थौ चकारौ। एवमुत्तरे दश पर्यायमन्त्रा व्याख्येयाः। विशेषस्तु तत्रतत्र वक्ष्यते। यथा अग्निः स्वाधिष्ठिते पृथिवीलोके सर्वोत्तरो वर्तते एवं त्वमपि इदं नगरमधिष्ठाय सर्वातिशायी वर्तस्वेति विवक्षितम्। यथा पृथिव्या सह अग्निरुत्क्रान्तवान् इत्युक्तः एवमुत्तरयोः वायुसूर्यमन्त्रयोस्तात्पर्यार्थं उन्नेयः। असा.

**वायुरन्तरिक्षेणोदक्रामत्तां पुरं प्र णयामि वः। तामा विशत० ॥**

वायुः वातो मातरिश्वा अन्तरिक्षेण अन्तरा क्षान्तेन स्वीयेन मध्यमलोकेन सह उदक्रामत्। यां पुरं रक्षितुमिति शेषः। तां पुरमित्यादि पूर्ववद्व्याख्येयम्। असा.

**सूर्यो दिवोदक्रामत्तां पुरं प्र णयामि वः। तामा विशत० ॥**

सूर्यः सर्वस्य प्रेरक आदित्यः दिवा स्वनिवासस्थानेन द्युलोकेन सह। उदक्रामत् इत्यादि पूर्ववत्। असा.

**चन्द्रमा नक्षत्रैरुदक्रामत्तां पुरं प्र णयामि वः। तामा विशत० ॥**

(१) असं. १९।१९।१-११.

चन्द्रमाः चन्द्रं आह्लादं माति निर्मिमीते इति चन्द्रमाः सर्वस्य लोकस्य आह्लादको हिमांशुः नक्षत्रैः । न क्षीयन्ते इति नक्षत्राणि तारकाः । स्वोपभोग्यैरश्विन्यादि-नक्षत्रैः सह नक्षत्राधिपतिश्चन्द्रमाः स्वपरिवारभूतैस्तैरेव सहितो यां पुरं रक्षितुमुत्क्रान्तवान् तां पुरम् । युष्मान् प्रापयामीत्यादि गतम् । असा.

**सोम ओषधीभिरुदक्रामत्तां पुरं प्र णयामि वः ।**
**तामा विशत० ॥**

सोमः ओषधीनां रसप्रदानेन पोषको देवः ओषधीभिः। ओषः पाको धीयते आस्विति ओषध्यः फलपाकान्ताः । उपलक्षणमेतत् तरुगुल्मादीनाम् । तैः स्वपोष्यैः सहितः । उदक्रामत् इत्यादि गतम् । युष्माभिः प्रविश्यमाने पुरे ओषध्यादिसमृद्धिर्भवतु इत्यर्थः । असा.

**यज्ञो दक्षिणाभिरुदक्रामत्तां पुरं प्र णयामि वः ।**
**तामा विशत० ॥**

यज्ञः ज्योतिष्टोमादिः प्रकृतिविकृत्यात्मकः सर्वः क्रतुः दक्षिणाभिः विहिताभिर्यथोक्ताभिर्दक्षिणाभिः सह उत्क्रान्त-वान् । यां पुरं रक्षितुमिति । अत्र बहुदक्षिणाका यज्ञाः समृद्धा भवन्तु इत्यर्थः । असा.

**समुद्रो नदीभिरुदक्रामत्तां पुरं प्र णयामि वः ।**
**तामा विशत० ॥**

नदीभिः नदनशीलाभिरापगाभिः समुद्रः समुद्रवन्ति अस्मात् आप इति अम्बुराशिः उदक्रामत् । तां पुर-मित्यादि गतम् । रक्षोहननार्थे नदीसहितसमुद्रोत्क्रान्त्या दाम्पत्यधर्मविशिष्टाः प्रजा अत्र संपद्यन्तामिति विवक्ष्यते । असा.

**ब्रह्म ब्रह्मचारिभिरुदक्राम-**
**त्तां पुरं प्र णयामि वः ।**
**तामा विशत० ॥**

ब्रह्म साङ्गो वेदः ब्रह्मचारिभिः ब्रह्मणि वेदे वेद-विहिते यज्ञादिकर्मणि चरितुं वर्तितुं शीलं येषां ते तैः सह उदक्रामत् । अनेन श्रौतस्मार्तकर्मनिष्णाताः साङ्ग-वेदाध्यायिनः अनूचाना ब्राह्मणा बहवः समृध्यन्तामिति विवक्ष्यते । तां पुरमित्यादि पूर्ववत् । असा.

**इन्द्रो वीर्ये३णोदक्रामत्तां पुरं प्र णयामि वः ।**
**तामा विशत० ॥**

इन्द्रः परमैश्वर्यसंपन्नः समस्तदेवाधिपतिः वीर्येण वीर-कर्मणा स्वीयेन बाहुशौर्येण सेनालक्षणेन बलेन वा सह उदक्रामत् । इन्द्रो यथा स्ववीर्येण सर्वान् शत्रून् जित-वान्, एवमस्मिन् पुरे वर्तमानस्त्वमपि सर्वातिशायी सर्ववैरिक्षयी भूया इत्यर्थः । असा.

**देवा अमृतेनोदक्रामंस्तां पुरं प्र णयामि वः ।**
**तामा विशत० ॥**

देवाः द्योतनशीला अमराः अमृतेन अमरणसाधनेन सुधारसेन सह उदक्रामन् । यां पुरं रक्षितुमिति शेषः । तां पुरमित्यादि गतम् । अत्रत्याः प्रजा निर्भीका दीर्घा-युषश्च भवन्तु इत्यर्थे विवक्षितुं रक्षणार्थे अमृतेन सह देवा उत्क्रान्तवन्त इत्युक्तम् । असा.

**प्रजापतिः प्रजाभिरुदक्राम-**
**त्तां पुरं प्र णयामि वः ।**
**तामा विशत तां प्र विशत**
**सा वः शर्म च वर्म च यच्छतु ॥**

प्रजापतिः प्रजानां पतिर्देवः प्रजाभिः प्रकर्षेण बहुत्वेन जायमानाभिर्मनुष्यादिकाभिः उदक्रामत् । तां पुरमित्यादि पूर्ववत् व्याख्येयम् । उत्तरोत्तरं प्रभविष्णुप्रजाभूयिष्ठत्वमत्र नगरे भूयादित्याशासितुमिदं वचनम् । असा.

राज्ञः शय्यागृहप्रवेशकर्मणि धूपदानम्

**[1]न तं यक्ष्मा अरुन्धते नैनं शपथो अश्नुते ।**
**यं भेषजस्य गुल्गुलोः सुरभिर्गन्धो अश्नुते ॥**

तं राजानं यक्ष्माः व्याधयो नारुन्धते रोधं न कुर्वन्ति न पीडयन्ति । तथा एनं राजानं शपथः परकृतोऽभि-शापो न व्याप्नोति न स्पृशति । तं इत्युक्तं कमित्यत आह– यं राजानं भेषजस्य औषधरूपस्य गुग्गुलोः

(१) असं. १९।३८।१–३.

एतन्नामकस्य सुरभिः घ्राणसंतर्पको गन्धो अश्नुते व्याप्नोति । तमिति पूर्वत्रान्वयः । असा.

**विष्वञ्चस्तस्माद्यक्ष्मा मृगा अश्वा इवेरते ।**
**यद्गुल्गुलु सैन्धवं यद्वाप्यासि समुद्रियम् ॥**

तस्मात् 'यं भेषजस्य' इत्युक्तात् गुल्गुलुगन्धमाघ्रातवतः सकाशात् यक्ष्माः व्याधयो विष्वञ्चः विष्वगञ्चना नानादिगभिमुखाः सन्तः ईरते वेगेन धावन्ति । ईरणे दृष्टान्तः । मृगा अश्वा इव । अश्वाः आशुगामिनो मृगा इव हरिणादय इव । अथवा मृगा इव अश्वा इव । उभयेषामपि आशुगमनसंभवात् । यद्वा, अयमर्धर्चः पूर्वमन्त्रेण सह व्याख्येयः 'यं भेषजस्य' इत्यनेन एकवाक्यतासंभवात् । गुल्गुलुः औषधं यत् यदि सैन्धवं सिन्धुदेशजम् । यद्वापि समुद्रियं समुद्रभवमसि । असा.

**उभयोरग्रभं नामास्मा अरिष्टतातये ॥**

हे गुल्गुलो, उभयोः उभयविधयोस्तव स्वरूपयोः नाम अग्रभं गृह्णामि कीर्तयामि । किमर्थम् ? अस्मै प्रसक्ताय प्रवर्तमानाय अरिष्टतातये अरिष्टकर्त्रे असुखकर्त्रे रोगाय द्वेष्याय वा, तत्परिहारायेत्यर्थः । यद्वा, अस्मै व्याधिशान्तिकामाय तदर्थं तस्य अरिष्टनाशनायेति व्याख्येयम् । 'शिवशमरिष्टस्य करे' इति तातिल् प्रत्ययः । यद्वा, अत्र स्वार्थिकस्तातिः । अरिष्टपरिहारायेत्यर्थः । असा.

ऋषीणां तपसः राष्ट्रं बलमोजश्च जातम्

**[1]भद्रमिच्छन्त ऋषयः स्वर्विद-**
**स्तपो दीक्षामुपनिषेदुरग्रे ।**
**ततो राष्ट्रं बलमोजश्च जातं**
**तदस्मै देवा उपसंनमन्तु ॥**

अग्रे सृष्ट्यादौ पूर्वं ऋषयः अतीन्द्रियार्थद्रष्टारः । 'ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः' (२।११) इति निरुक्तम् । ते भद्रं कल्याणं क्षेममिच्छन्तः स्वर्विदः स्वर्गं लभमानाः तत्साधनत्वेन तपः पयोव्रतादिलक्षणं दीक्षां नवनीताभ्यङ्गमुष्टीकरणवाग्यमनदण्डमेखलादिधारणसाध्यां च उपनिषेदुः प्राप्ताः । ततः तत्सामर्थ्यात् राष्ट्रं राज्यं बलं सामर्थ्यं ओजश्च जातं निष्पन्नम् । तत् राष्ट्रादिकं देवा अस्मै पुरुषाय उपसंनमन्तु संयोजयन्तु । असा.

जनाः राज्ञे करप्रदाः

**[2]चतुर्वीरं बध्यत आञ्जनं ते**
**सर्वा दिशो अभयास्ते भवन्तु ।**
**ध्रुवस्तिष्ठासि सवितेव चार्य**
**इमा विशो अभि हरन्तु ते बलिम् ॥**

हे रक्षाफलकाम, ते तव चतुर्वीरं दातव्यैः चतुर्भिः वीरैरुपेतं चतसृषु दिक्षु वीर्योपेतं वा आञ्जनं अञ्जनमणिरूपं औषधं बध्यते । तेन किं फलतीत्यत्राह—मणिं धृतवतस्ते सर्वा दिशः प्रदिशो दिशश्च अभयाः भयरहिता निर्भया भवन्तु । सर्वत्र अभयं फलं इत्युक्तं भवति । किंच, हे अर्य स्वामिन्, निर्भयस्त्वं सवितेव सूर्य इव विश्वं प्रकाशयन् ध्रुवस्तिष्ठासि तिष्ठ । सूर्य इव अतितेजस्वी चिरकालं तिष्ठतस्ते इमाः सर्वा विशः प्रजा बलिं हिरण्यरजतमणिमुक्ताकरितुरगाद्युत्कृष्टपदार्थमयीं अपचितिं अभि हरन्तु सर्वतः समर्पयन्तु, करं प्रयच्छन्तु इत्यर्थः । असा.

राजा स्तोत्रभाक्

**[2]स्तोमस्य नो विभावरि रात्रि राजेव जोषसे ।**
**असाम सर्ववीरा भवाम**
**सर्ववेदसो व्युच्छन्तीरनूषसः ॥**

हे विभावरि विशेषेण भासमाने हे रात्रि, नः अस्मदीयस्य स्तोमस्य स्तोत्रस्य स्तोत्रं जोषसे जुषस्व सेवस्व । तत्र दृष्टान्तः— राजेव । यथा राजा स्तोतृभिः क्रियमाणां स्तुतिं प्रीत्या सेवते अवहितः शृणोति एवमवहिता अस्मदीयं स्तोत्रमवधारयेति । यदि स्तोत्रं शृणुयास्तर्हि व्युच्छन्तीः तमो विवासयन्तीः अपसारयन्तीः प्रकाश-

---

(१) असं. १९।४१।१; तैसं. ५।७।४।३ पूर्वार्धे (भद्रं पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयः सुवर्विदः ।) राष्ट्रं (क्षत्रं) उपसं (अभि सं).

(१) असं. १९।४५।४.
(२) असं. १९।४९।६

माना उषसः उषःकालान् अनु । लक्षणार्थे अनुः कर्मप्रवचनीयः । उषःकालबहुत्वात् सार्वकालं विवक्षितम् । सर्वदा सर्ववीरा असाम । वीरः कर्मणि कुशलः पुत्रादिः । सकलपुत्रमित्रादिसमेता असाम भवाम । तथा सर्ववेदसः । वेद इति धननाम । संपूर्णधनयुक्ता भवाम । सर्वविषयज्ञाना रात्रौ निद्रावशेन सर्वेन्द्रियव्यापाराणां विरामात् मूढाः सन्तः उषःकाले तमोविगतेः सर्वेन्द्रियविषयज्ञानवन्तो भवामेति । असा.

परिक्षिद्राज्ञो राष्ट्रे जनस्य भद्रम्

[1]राज्ञो विश्वजनीनस्य यो देवोऽमर्त्यां अति ।
वैश्वानरस्य सुष्टुतिमा सुनोता परिक्षितः ॥
[2]परिच्छिन्नः क्षेममकरोत्तम आसनमाचरन् ।
कुलायन् कृण्वन् कौरव्यः पतिर्वदति जायया ॥
कतरत्त आ हराणि दधि मन्थां परि श्रुतम् ।
जायाः पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः ॥
अभीवस्वः प्र जिहीते यवः पक्वः पथो बिलम् ।
जनः स भद्रमेधति राष्ट्रे राज्ञः परिक्षितः ॥

---

## वाजपेयः

वाजपेयः स्वाराज्याय

[3]देवा वै नानैव यज्ञानपश्यन्निममहमिमं त्वमिति । अथैतं सर्वेऽपश्यन् । तस्मिन्नायतन्त । तस्मिन्नाजिमयुः । तं बृहस्पतिरुदजयत् । बृहस्पतिर्वै देवानां पुरोहितः । यद्वै पुरोहितो ब्रह्म शृणोति तद्राज्ञे । तेनेन्द्रमयाजयत् । स स्वाराज्यमगच्छत् । स एष स्वाराज्यो यज्ञः । स्वाराज्यं गच्छति य एतेन यजते । यद् बृहस्पतिरुदजयत्तस्माद्ब्राह्मणो यजेत । यदिन्द्रमयाजयत्तस्माद्राजन्यः । देवा वै नानैव यज्ञानाहरन् । अथैतं प्रजापतिराहरत् । तस्मिन् देवा अपित्वमैच्छन्त । तेभ्यश्छन्दाँस्युज्जितीः प्रायच्छत् । अथैतेन प्रजापतिरयजत । स स्वाराज्यमगच्छत् । स एष स्वाराज्यो यज्ञः । स्वाराज्यं गच्छति य एतेन यजते । अन्नं वै वाजः । य एवं विद्वानन्नमत्ति वाजयत्येनम् । सोमो वाजपेयः । य एवं विद्वान् सोमं पिबति वाजमेव गच्छति । यावन्तो हि देवाः सोममपिबंस्ते वाजमगच्छन् । तस्मात्सर्व एव सोमं पिपासति । वाग्वै वाजस्य प्रसवः । सा वाग्दृष्टा चतुर्धा व्यभवत् । एषु लोकेषु त्रीणि तुरीयाणि । पशुषु तुरीयम् । या दिवि सा बृहति सा स्तनयित्नौ । याऽन्तरिक्षे सा वाते सा वामदेव्ये । या पृथिव्यां साऽग्नौ सा रथन्तरे । या पशुषु तस्या यदत्यरिच्यत तां ब्राह्मणे न्यदधुः । तस्माद्ब्राह्मण उभे वाचौ वदति दैवीं च मानुषीं च । करोति वाचा वीर्यं य एवं वेद । या बृहद्रथन्तरयोस्तयैनं यज्ञ आगच्छति । या पशुषु तयर्तेयज्ञम् । आह वा एनमप्रतिख्याता गच्छति य एवं वेद । यावती हि वाक्तां वेद । वाचा हि दीयते । वाचा प्रदीयते । यो गाथानाराशँसीभ्याँ सनोति तस्य न प्रतिगृह्यम् । अनृतेन हि स सनोति । अनृतं हि गाथा । अनृतं नाराशंसी । मत्तस्य न प्रतिगृह्यम् । अनृतं हि मत्तः । यदा हि सोऽमत्तो भवत्यथ तं तत्तुपति ॥

[1]देवा वै नाना यज्ञानपश्यन् । अथ वा एतं सर्वेऽपश्यन् । तस्मिन् वा अयतन्त । तस्मिन् वाजिमयुः । तं बृहस्पतिरुदजयत् । बृहस्पतिर्वै देवानां पुरोहितः । यद्वै पुरोहितो ब्राह्मण९ शृणोति तद्राज्ञे । तेनेन्द्रमयाजयत् । स स्वाराज्यमगछत् । स एष स्वाराज्यो यज्ञः । स्वाराज्यं गछति य एतेन यजते । यद्बृहस्पतिरुदजयत्तस्माद् ब्राह्मणो यजेत । यदिन्द्रमयाजयँस्तस्माद्राजन्यः । देवा वै नाना यज्ञानाहरन्निममहमिमं त्वमिति । अथ वा एतं प्रजापतिराहरत् । तस्मिन् वा अपित्व-

(१) असं. २०।१२७।७; गोब्रा. २।६।१२.
(२) असं. २०।१२७।८–१०.
(३) कासं. १४।५ (२६–२७).

(१) मैसं. १।११।५ (३४).

मैच्छन्त। तेभ्यश्छन्दा॑ᳫस्युज्जितीः प्रायच्छत्। अथ वा एतेन प्रजापतिरयजत। स स्वाराज्यमगच्छत्। स एष स्वाराज्यो यज्ञः। स्वाराज्यं गच्छति य एतेन यजते। अन्नं वै वाजः। तद्य एवᳫ विद्वानन्नमत्ति वाजयति ह वा एनमन्नमद्यमानम्। सोमो वै वाजपेयः। तद्य एवᳫ विद्वान्त्सोमं पिबति वाजᳫह गच्छति। यावन्तो हि देवाः सोममपिबᳫस्ते वाजमगच्छन्। तस्मात् सर्वः सोमं पिपासति। वाजᳫह गच्छति। वाग्घि वाजस्य प्रसवः। सा वै वाक् सृष्टा चतुर्धा व्यभवत्। एषु लोकेषु त्रीणि तुरीयाणि। पशुषु तुरीयम्। या पृथिव्याᳫ साऽग्नौ सा रथन्तरे। याऽन्तरिक्षे सा वाते सा वामदेव्ये। या दिवि सा बृहति सा स्तनयित्नौ। अथ पशुषु। ततो या वागत्यरिच्यत तां ब्राह्मणे न्यदधुः। तस्माद्ब्राह्मण उभयीᳫ वाचᳫ वदति यश्च वेद यश्च न। या बृहद्रथन्तरयोर्यज्ञादेनं तयाऽऽगच्छति। या पशुषु तय ऋतेयज्ञम्। तद्य एवᳫ वेदाऽऽह वा एनमप्रतिक्शातं गच्छति। यावती वाक्ताᳫ हि वेद। वाचा हि दीयते। वाचा प्रदीयते। यो गाथानाराशᳫसीभ्याᳫ सनोति न तस्य प्रतिगृह्यम्। अनृतेन हि स तत्सनोति। न मत्तस्य। यदा हि तस्य मदो व्येत्यथ तं तत्तपति॥

'देवा वै यथादर्शं यज्ञानाहरन्त। योऽग्निष्टोमम्। य उक्थ्यम्। योऽतिरात्रम्। ते सहैव सर्वे वाजपेयमपश्यन्। ते अन्योन्यस्मै नातिष्ठन्त। अहमनेन यजा इति। तेऽब्रुवन्। आजिमस्य धावामेति। तस्मिन्नाजिमधावन्। तं बृहस्पतिरुदजयत्। तेनायजत। स स्वाराज्यमगच्छत्। तमिन्द्रोऽब्रवीत्। मामनेन याजयेति। तेनेन्द्रमयाजयत्। सोऽग्रं देवतानां पर्यैत्। अगच्छत्स्वाराज्यम्। अतिष्ठन्तास्मै ज्यैष्ठ्याय॥

(१) तैब्रा. १।३।२।१-७.

....वाजपेयं विधातुं प्रस्तौति- देवा वा इति। देवानां मध्ये कश्चिदग्निष्टोमं ददर्श। अन्य उक्थ्यम्, अपरोऽतिरात्रम्। ते च स्वस्वदर्शनमनतिक्रम्य तान् यज्ञान् आहरन्त अनुष्ठितवन्तः। ते देवाः सर्वे सहैव वाजपेयं दृष्ट्वा अहमेव प्रथममनेन वाजपेयेन यजा इत्येवं विवदमानाः परस्परं प्रथमानुष्ठातृत्वलक्षणाय ज्यैष्ठ्याय नातिष्ठन्त ज्यैष्ठ्यं नाङ्गीचक्रुः। तत एवं समयं चक्रुः– 'अस्माकं मध्य आजिं धावनेन यः कश्चिज्जयति स एव ज्येष्ठोऽस्तु' इति। आजिः धावनप्रदेशस्यावधिर्भूविशेषः। एवं समयं कृत्वा तस्मिन् वाजपेयविषये विजयाय आजिमधावन्। तत्र तं वाजपेयं प्रति धावन् बृहस्पतिरुत्कर्षेणाजयत्। इतरेभ्यः प्रथममवधिं पस्पर्श। ततः प्रथमं स एव तेन वाजपेयेनेष्ट्वा स्वाराज्यं अपारतन्त्र्यरूपं माहाराज्यमगच्छत्। ततः इन्द्रः तं बृहस्पतिं संप्रार्थ्य तेन वाजपेयेनेष्ट्वा देवानां मध्ये ज्येष्ठत्वमपारतन्त्र्येण स्वर्गाधिपत्यलक्षणं स्वाराज्यं चागच्छत्। अस्येन्द्रस्य ज्यैष्ठ्यमितरे सर्वे देवा मात्सर्यं परित्यज्य अङ्गीचक्रुः।

तैसा. १।७।७।१

**य एवं विद्वान् वाजपेयेन यजते। गच्छति स्वाराज्यम्। अग्रᳫ समानानां पर्येति। तिष्ठन्तेऽस्मै ज्यैष्ठ्याय॥**

स्वाराज्यादिकामिनो वाजपेयं विधत्ते– य एवमिति।

तैसा. १।७।७।१

**स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः॥**

अधिकारविशेषविधिमुन्नयति– स वा इति। सः बृहस्पतिना अनुष्ठितः। एषः इन्द्रेणानुष्ठितः। देवानां मध्ये बृहस्पतिर्ब्राह्मणजात्यभिमानी, इन्द्रः क्षत्रियजात्यभिमानी, ताभ्यामेवानुष्ठितत्वात् मनुष्येष्वपि ब्राह्मणराजन्ययोरेवात्राधिकारः, न तु वैश्यस्य। अत एव आपस्तम्ब आह– 'शरदि वाजपेयेन यजेत ब्राह्मणो राजन्यो वर्द्धिकामः' इति। तैसा. १।७।७।१

**तं वा एतं वाजपेय इत्याहुः। वाजाप्यो वा एषः। वाजᳫ ह्येतेन देवा ऐप्सन्॥**

नामनिर्वचनं दर्शयति– तं वा इति । वाजो देवान्नरूपः सोमः पेयो यस्मिन् यागे स वाजपेय इत्येकं निर्वचनम् । यस्मादेतेन यज्ञेन देवाः वाजं फलरूपमन्नं आप्तुमैच्छन्, तस्मादन्नरूपो वाजः पेयः प्राप्यो येन स वाजपेय इत्यपरनिर्वचनम् । तैसा. १।७।७।१

**सोमो वै वाजपेयः । यो वै सोमं वाजपेयं वेद । वाज्येवैनं पीत्वा भवति । आऽस्य वाजी जायते ॥**

सोमस्यैतद्यागसाधनत्वात् तदभेदेन यागं तद्वेदनं च स्तौति–सोम इति । तैसा. १।७।७।१

**अन्नं वै वाजपेयः । य एवं वेद । अत्त्यन्नम् । आऽस्यान्नादो जायते ॥**

एनं वाजपेयगतं सोमं फलभूतान्नाभेदोपचारेण स्तौति– अन्नमिति । तैसा. १।७।७।१

**ब्रह्म वै वाजपेयः । य एवं वेद । अत्ति ब्रह्मणाऽन्नम् । आऽस्य ब्रह्मा जायते ॥**

यागप्रतिपादकवेदाभेदोपचारेण स्तौति-ब्रह्मेति । ब्रह्मणा वेदाध्यापनसंपादितया गुरुदक्षिणयेत्यर्थः । ब्रह्मा वेदाध्यापकः । तैसा. १।७।७।१

**वाग्वै वाजस्य प्रसवः । य एवं वेद । करोति वाचा वीर्यम् । ऐनं वाचा गच्छति । अपिवर्तीं वाचं वदति ॥**

मन्त्रोच्चारणसाधनभूतवागभेदोपचारेण स्तौति–वागिति । 'देव सवितः प्र सुव' इत्यादिमन्त्ररूपा वागेव वाजस्य वाजपेयस्य प्रसवः उत्पत्तिहेतुः । य एतद्वेदिता स तया सभायां पाण्डित्यरूपया वाचा वीर्यमतिशयं करोति । सभागतश्च विद्वत्संघः स्तुतिरूपया वाचा युक्त एनं आगच्छति, बहुधा प्रशंसतीत्यर्थः । पुनरपि वाजपेयवाक्यं श्रोष्यामि तदर्थं ज्ञास्याम्यनुष्ठास्यामीत्येतादृशीं पुनरपीत्यपिशब्दोपेतां वाचं सर्वदा वदति, श्रद्धालुर्भवतीत्यर्थः । तैसा. १।७।७।१

**प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् । स आत्मन्वाजपेयमधत्त । तं देवा अब्रुवन् । एष वाव यज्ञः । यद्वाजपेयः । अप्येव नोऽत्रास्त्विति । तेभ्य एता उज्जितीः प्रायच्छत् ॥**

एकादशानुवाकगतानामुज्जितिमन्त्राणां पाठं विधातुं प्रस्तौति– प्रजापतिरिति । प्रजापतिः इतरेभ्यो देवेभ्यः अग्निष्टोमादीन् यज्ञान् विभज्य दत्त्वा वाजपेयं स्वस्मिन्नेव स्थापितवान् । देवाश्च वाजपेय एव मुख्यो यज्ञः, अतोऽस्माकमप्यत्र भागोऽस्त्वित्यब्रुवन्, स च तेभ्यः उज्जितिमन्त्रान् प्रायच्छत् । तैसा. १।७।७।१

**ता वा एता उज्जितयो व्याख्यायन्ते । यज्ञस्य सर्वत्वाय । देवतानामनिर्भागाय ॥**

विधत्ते– ता इति । व्याख्यायन्ते व्याख्यायेरन्, पठनीया इत्यर्थः । तत्पाठेन यज्ञस्य सर्वत्वं अवैकल्यं भवति, देवताश्च भागयुक्ता भवन्ति । तेषु मन्त्रेषु अग्निरश्विनौ विष्णुः सोम इत्येवं तत्तद्भागभाजो देवता आम्नाताः । अयं विधिरापस्तम्बेन स्पष्टं दर्शितः– 'अग्निरेकाक्षरेणेति धावत्सूज्जितीर्यजमानं वाचयति' इति । उज्जितिमन्त्राणां रथधावनकाले पठनीयत्वात् धावनविधिसमीप एवायं विधिरुत्क्रष्टव्यः । तैसा. १।७।७।१

**देवा वै ब्रह्मणश्चान्नस्य च शमलमपाघ्नन् । यद् ब्रह्मणः शमलमासीत् । सा गाथा नाराशꣳस्यभवत् । यदन्नस्य । सा सुरा ॥**

अस्य च विध्युत्कर्षस्य प्रसङ्गेन बुद्धिस्थं पुरुषार्थत्वेन क्रतुप्रकरणादुत्क्रष्टव्यं कंचित्प्रतिग्रहनिषेधं विधित्सुः प्रस्तौति–देवा इति । ब्रह्मणो वेदस्य शमलं मलिनभागं अपाघ्नन् अपनीतवन्तः । नराणां राजामात्यादीनां आ समन्तात्प्रशंसनं नराशंसः, तद्विषया गीर्नाराशंसी । तैसा. १।७।७।१

**तस्माद्गायतश्च मत्तस्य च न प्रतिगृह्यम् । यत्प्रतिगृह्णीयात् । शमलं प्रतिगृह्णीयात् ॥**

प्रतिग्रहनिषेधं विधत्ते– तस्मादिति । यस्माल्लौकिकमनुष्यविषयगानसुरे मलरूपे तस्मात् तादृशगानपरस्य सुरापानमत्तस्य च धनं न प्रतिगृह्णीयात् । तैसा. १।७।७।१

**सर्वा वा एतस्य वाचोऽवरुद्धाः । यो वाजपेययाजी । या पृथिव्यां याऽग्नौ या रथंतरे । याऽन्तरिक्षे या वायौ या वामदेव्ये । या दिवि याऽऽदित्ये या बृहति । याऽप्सु यौषधीषु या वनस्पतिषु ॥**

प्रकारान्तरेण वाजपेयं प्रशंसति– सर्वा वा इति । पृथिव्यन्तरिक्षद्युरूपं यल्लोकत्रयं तदभिमानिदेवतात्रयं रथंतरवामदेव्यबृहद्रूपमुक्तलोकाभिमानिदेवताप्रियं यत् सामत्रयं अबोषधिवनस्पतिरूपं यद्यागोपयुक्तद्रव्यत्रयं तस्य सर्वस्य संबन्धिन्यो या वाचस्ताः सर्वा एतस्य वाजपेययाजिनोऽवरुद्धाः संपन्नाः । तत्र सामसंबन्धिन्यो वाचस्तदाश्रयभूता ऋच एव । ' पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा ' इत्येते यूपप्रोक्षणमन्त्राः पृथिव्यादिविषया वाचः । ' अग्न आयूंषि ' इत्यादिराग्नेयातिग्राह्यमन्त्रोऽग्निविषया वाक् । ' आ वायो भूषा ' इति ग्रहान्तरमन्त्रो वायुविषया वाक् । 'तुरीयादित्यसवनं त इन्द्रियम् ' इत्यादिग्रहान्तरमन्त्र आदित्यविषया वाक् । ' आप उन्दन्तु ' इत्यादिरब्विषया वाक् । ' ओषधे त्रायस्वैनम् ' इत्योषधिविषया वाक् । ' सूपस्था देवो वनस्पतिः ' इत्यादिर्वनस्पतिविषया वाक् । एवं ' पृथिवी दीक्षा ' इत्यादयो बहव उदाहार्याः । तदेवं सर्ववागवरोधाद्वाजपेयः प्रशस्तः । तैसा. १।७।७।१

**तस्माद्वाजपेययाज्यार्त्विजीनः । सर्वा ह्यस्य वाचोऽवरुद्धाः ॥**

तामिमां प्रशंसामुपसंहरति– तस्मादिति । आर्त्विजीनो वाजपेयं यष्टुं प्रशस्तानृत्विजोऽर्हति । वाजपेयेनेष्ट्वा परार्थमार्त्विज्यं चार्हति । तैसा.१।७।७।१

साम्राज्यहेतुः वाजपेयः

**[१]यो वै वाजपेयः । स सम्राट्सवः ॥**

योऽयं वाजपेयोऽस्ति सोऽयं साम्राज्यहेतुरेव सवः । तैब्रासा.

( १ ) तैब्रा. २।७।६।१.

साम्राज्याय वाजपेयः राजत्वाय च राजसूयः

**[१]देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा अतिमानेनैव ' कस्मिन्नु वयं जुहुयाम ' इति स्वेष्वेवाऽऽस्येषु जुह्वतश्चेरुः । तेऽतिमानेनैव पराबभूवुः । तस्मान्नातिमन्येत । पराभवस्य हैतन्मुखं यदतिमानः ॥**

तत्र वाजपेयं विधातुं प्रस्तौति– देवाश्च वा असुराश्चेति । प्राजापत्याः प्रजापतिना सृष्टाः उभये द्विविधाः देवाश्च असुराश्च पस्पृधिरे स्पर्धां चक्रुः । ततः असुराः स्वतोऽन्यः प्रबलो नास्तीति अतिमानेन अभिमानेन भूयिष्ठेन दर्पेण कस्मिन्नु खलु होमाधिकरणे वयं जुहुयाम होमं कुर्याम इति धिक्कृत्य स्वकीयेषु आस्येषु होमं चक्रुः । ते असुराः अत्यन्तगर्वेण पराजिताः । तस्मात् अद्यापि कश्चिदपि नातिमानं कुर्यात् । अतिमानः अभिमानः यत् तत् पराभवस्य प्रापकमिति । शब्रासा.

**अथ देवा अन्योन्यस्मिन्नेव जुह्वतश्चेरुः । तेभ्यः प्रजापतिरात्मानं प्रददौ । यज्ञो हैषामास । यज्ञो हि देवानामन्नम् ॥**

देवानां तद्विपर्ययं दर्शयति– अथ देवा इति । देवाः खलु अन्योन्यस्मिन् जुहुवुः, इन्द्रः अग्नौ, अग्निः इन्द्रे इत्यादिक्रमेणेत्यर्थः । तेभ्यः देवेभ्यः अन्योन्यस्मिन् देवतात्वेन होमकरणात् प्रीतः प्रजापतिः आत्मानं शरीरं दत्तवान् । यज्ञो हैषामिति । हि यस्मात् देवानामन्नं यज्ञः, अतः अत्रान्योन्यस्मिन् हविःप्रदानेनान्नसंभवात् प्रजापतिशरीरं यज्ञ एव तेषामासीदित्यर्थः । यज्ञशब्देन वाजपेय उच्यते, प्रकरणबलात् । तथा च तैत्तिरीयके– ' एष वाव यज्ञो यद्वाजपेयः ' (तैब्रा. १।३।२।५) इति । शब्रासा.

**ते होचुः– कस्य न इदं भविष्यतीति । ते मम ममेत्येव न संपादयाञ्चक्रुः । ते हासंपाद्योचुः– आजिमेवास्मिन्नजामहै, स यो न उज्जेष्यति तस्य न इदं भविष्यतीति । तथेति । तस्मिन्नाजिमाजन्त ॥**

( १ ) शब्रा. ५।१।१।१–१३.

तत्र वाजपेये सर्वदेवानां पुरस्तात् वाजपेयस्यानुष्ठानेन बृहस्पतेरेव श्रैष्ठ्यं वक्तुमाजिधावनं दर्शयति— ते होचुरिति । ते देवाः आगच्छन्तं यज्ञं दृष्ट्वा नः अस्माकं मध्ये, इदमिति सामान्येन निर्देशः, अयं वाजपेयः यज्ञः 'कस्य भविष्यति' इति ऊचुः । ततः ते सर्वेऽपि ममैवायं यज्ञो ममैवायं यज्ञ इति विवदमानाः न संपादयाञ्चक्रुः अस्यैवायं यज्ञ इति न निश्चितवन्तः । ते देवाः अस्मिन् विषये आजिं अजामहै गच्छाम इति समयं चक्रुः । नः अस्माकं मध्ये आजिधावनेन यः कश्चिदुज्जेष्यति तस्य अयं यज्ञो भवत्विति सर्वैरङ्गीकृत्य तस्मिन् वाजपेयविषये विजयार्थं आजिं आजन्त अधावन् । 'अज गतिक्षेपणयोः' । आजिर्नाम धावनप्रदेशस्यावधिर्भूमिविशेषः । शब्रासा.

**स बृहस्पतिः सवितारमेव प्रसवायोपाधावत् । सविता वै देवानां प्रसविता । इदं मे प्रसुव, त्वत्प्रसूत इदमुज्जयानीति । तदस्मै सविता प्रसविता प्रासुवत् । तत्सवितृप्रसूत उदजयत् । स इदं सर्वमभवत् । स इदं सर्वमुदजयत् । प्रजापतिं ह्युदजयत् । सर्वमु ह्येवेदं प्रजापतिः । तेनेष्ट्वैतामेवोर्ध्वां दिशमुदक्रामत् । तस्माद्यश्च वेद, यश्च न, एषोर्ध्वा बृहस्पतेर्दिगित्येवाऽऽहुः ॥**

उत्तरत्र वाजपेयस्य सकलकर्मप्रारम्भे सावित्रहोमो विधास्यते । तदर्थं बृहस्पतेरपि प्रथमं सवितृविषयमुपधावनं दर्शयति— स बृहस्पतिरित्यादिना । तत्राऽऽजिं प्रधावन् बृहस्पतिः सवितारमेव प्रसवाय अनुज्ञानाय उपाधावत् । इतरदेववत् धावनप्रदेशमेव न लक्षीकृत्य गत इत्येवकारार्थः । सवितुरुपधावने कारणमाह— सविता वा इति । प्रसविता अनुज्ञाता । 'इदं मे' इति बृहस्पतेः प्रार्थनावाक्यस्यायमर्थः — हे सवितः, मह्यं इदं वक्ष्यमाणं कार्यं प्रसुव अनुजानीहि । 'षू प्रेरणे' इति धातुः । त्वत्प्रसूतः त्वयाऽनुज्ञातः इदं उज्जयानि साधयामि । सर्वदेवेभ्यः पुरस्तात् तेनानुज्ञातः उदजयत् । यत उदजयत् ततः स इदं परिदृश्यमानं सर्वं जगत् अभवत् । सर्वोज्जयेन प्रजापतिमेव जितवान् भवति । अनेन वाजपेयस्य सर्वजगदात्मकप्रजापतिरूपप्राप्तिः फलमित्युक्तं भवति । तेनेष्ट्वेति । तेन वाजपेयेन इष्ट्वा बृहस्पतिः ऊर्ध्वां दिशमुदक्रामत् । यत एवं तस्मात् यः पुमान् एतामाख्यायिकां बृहस्पतिरिष्ट्वा ऊर्ध्वां दिशं प्राप्तवानित्येवंरूपां वेद, यो वा न वेत्ति, ते सर्वेऽपि ऊर्ध्वा दिक् बृहस्पतेः स्वभूता इति आहुः । तथा च तैत्तिरीयके समाम्नातम्— 'ऊर्ध्वा दिशाᳲ हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता' (तैसं. ४।३।३।२) इति । शब्रासा.

**तद्धे ह स्म पुरा वाजपेयेन यजन्ते, एतां ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति । तत औपाविनैव जानश्रुतेयेन प्रत्यवरूढम्, ततोऽर्वाचीनं प्रत्यवरोहन्ति ॥**

वाजपेययाजिनस्तदानीमेवोत्क्रमणं, भूलोके यावदत्यन्तभोगाभिलाषस्तावदिहावस्थानम् । तत्र जानश्रुतेयो यज्ञमित्युभयमुपपादयति— तद्धे ह स्मेति । यद्वा, उत्तरत्र यूपावरोहणं 'सुवो रोहाव' (शब्रा. ५।२।१।१०) इति मन्त्रलिङ्गात् स्वर्गारोहणप्रतिनिधित्वेन वक्ष्यते । ततः स्वर्गरूपाद्यूपादवरोहणं जानश्रुतेयेनैव पूर्वं कृतमित्यर्थः । प्रत्यवरोहश्च लिङ्गादनुमीयते इत्याह— तद्धे हेति । अथ वाजपेययाजिनः 'अग्नेस्त्वा साम्राज्येनाभि षिञ्चामि' (तैसं. १।७।१०।३) इत्याद्यैर्मन्त्रलिङ्गैरग्न्यादिसाम्राज्येऽभिषिक्तत्वात् देववदेव सोऽपि मनुष्यं प्रति गजादिवाहनान्न प्रत्यवरोहेदिति प्रत्यवरोहप्रतिषेधो विहितस्तैत्तिरीयके— 'तस्माद्वाजपेययाजी न कंचन प्रत्यवरोहति' (तैब्रा. १।३।९।२) इति । न च प्रत्यवरोहणं विहितम् । आपस्तम्बेन तु तन्निषेधस्तदुपायश्च दर्शितः— 'यावज्जीवं न कंचन प्रत्यवरोहेत्, बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत' इति । तस्मादुभयत्रानुग्राहकमिदं ब्राह्मणमित्याह— तद्धे ह स्मेति । अक्षरार्थस्तु— तत् तस्मात् बृहस्पतिना अनुष्ठितत्वात् ये पुरा पूर्वं वाजपेयेन यजन्ते, ते सर्वे ऊर्ध्वं गच्छन्ति । ततः ऊर्ध्वदिशः सकाशात् जानश्रुतेयेन जानश्रुतेः पुत्रेण औपाविना तन्नाम्ना एव एकेन राजर्षिणा प्रत्यवरूढं प्रत्यवरोहः

कृतः। ततः आरभ्य इदानीमनुष्ठातारोऽपि अर्वाचीनं अवाङ्मुखं प्रत्यवरोहन्ति इति। शब्रासा.

**तेनेन्द्रोऽयजत। स इदं सर्वमभवत्। स इदं सर्वमुदजयत्। प्रजापतिं ह्युदजयत्। सर्वमु ह्येवेदं प्रजापतिः। तेनेष्ट्वैतामेवोर्ध्वां दिशमुदक्रामत्॥**

**तद्ये ह स्म पुरा वाजपेयेन यजन्ते, एतां ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति। तत औपाविनैव जानश्रुतेयेन प्रत्यवरूढम्, ततोऽर्वाचीनं प्रत्यवरोहन्ति॥**

एवं वाजपेये ब्राह्मणस्याधिकारविधिमुन्नेतुं बृहस्पतिवृत्तान्तं प्रदर्श्य क्षत्रियस्यापि तं समर्थयितुमिन्द्रवृत्तान्तं दर्शयति— तेनेन्द्रोऽयजतेति। निगदव्याख्यातोऽर्थः। अस्मिन् पर्यायेऽपि 'तद्ये ह स्म' इति वाक्यसंदर्भः पूर्ववद्व्याख्येयः। शब्रासा.

**स यो वाजपेयेन यजते। स इदं सर्वं भवति। स इदं सर्वमुज्जयति। प्रजापतिं ह्युज्जयति। सर्वमु ह्येवेदं प्रजापतिः॥**

इत्थमाख्यायिकया वाजपेये ब्राह्मणराजन्यावधिकारिणौ प्रदर्श्य, इदानीं तं वाजपेयं विधत्ते— स यो वाजपेयेन यजत इत्यादिना। शब्रासा.

**तदाहुः— न वाजपेयेन यजेत। सर्वं वा एष इदमुज्जयति यो वाजपेयेन यजते। प्रजापतिं ह्युज्जयति, सर्वमु ह्येवेदं प्रजापतिः। स इह न किंचन परिशिनष्टि। तस्येश्वरः प्रजा पापीयसी भवितोरिति॥**

सर्वजयेन विराडात्मकप्रजापतिजयस्यानुचितत्वात् तत्साधनभूतो वाजपेयो न कर्तव्य इति पूर्वपक्षमुद्भावयति— तदाहुर्न वाजपेयेनेत्यादि। इह न किंचनेति। सर्वात्मकप्रजापतिजयेन इह लोके न किंचन परिशिष्टम्। तस्मात् तस्य यजमानस्य प्रजा पापीयसी अतिशयेन दारिद्र्यवती भवितोः भवितुं ईश्वरः समर्था इति अतो हेतोः वाजपेयो न कर्तव्य इति। शब्रासा.

**तदु वै यजेतैव। य एवमेतं यज्ञं क्लृप्तं विद्युः ऋक्तो यजुष्टः सामतः, ये प्रजज्ञयः, त एनं याजयेयुः। एषा ह त्वेवैतस्य यज्ञस्य समृद्धिर्यदेनं विद्वांसो याजयन्ति। तस्मादु यजेतैव॥**

तन्निषेधमधिकारिविशेषनिरूपणेन परिहरति— तदु वै यजेतैवेति। सर्वथा वाजपेययागः कर्तव्य इत्यवधारणार्थः। तत्र विदुष एव यष्टृत्वं विदुषामेव याजयितृत्वमित्युभयमेवोपपादयति— य एवमिति। यः पुमान् एतं वाजपेयं यज्ञं ऋगादिवेदत्रयेण क्लृप्तं सेतिकर्तव्यत्वेन विहित इति विद्यात् जानीयात्, ये च प्रजज्ञयः प्रज्ञातवन्तः साङ्गोपाङ्गं कर्म ज्ञातवन्तः ऋत्विजः, ते एनं अन्वादिष्टं विद्वांसं यष्टारं याजयेयुः। अतः साधारणैर्वाजपेययागो न कर्तव्य इत्यभिप्रायेण 'न वाजपेयेन यजेत' इत्युक्तम्। एषा ह त्वेवैतस्येति। क्रियाकुशलानामृत्विजां याजयितृत्वमेव यज्ञसमृद्धिः, अङ्गवैकल्याभावेन यज्ञसंपूर्तेः संभवात्। शब्रासा.

**स वा एष ब्राह्मणस्यैव यज्ञः, यदेनेन बृहस्पतिरयजत। ब्रह्म हि बृहस्पतिः। ब्रह्म हि ब्राह्मणः। अथो राजन्यस्य, यदेनेनेन्द्रोऽयजत। क्षत्रं हीन्द्रः। क्षत्रं राजन्यः॥**

तत्र वाजपेये अधिकारिविधिमुन्नयति— स वा एष ब्राह्मणस्येति। यतो बृहस्पतिनाऽनुष्ठितः, यतो देवानां मध्ये बृहस्पतिः ब्राह्मणजात्यभिमानी, ब्राह्मणबृहस्पत्योर्ब्रह्मसंबन्धात् ऐकरूप्यम्, 'ब्रह्म अधीते वेद वा ब्राह्मणः' इति व्युत्पत्तेः। इन्द्रेणाप्ययमनुष्ठितः, यतो देवानां मध्ये इन्द्रः क्षत्रियजात्यभिमानी, इन्द्रराजन्ययोः क्षत्रसंबन्धादैकरूप्यम्। क्षत्रं नाम बलम्, तत्सद्भावादुभयोः। अतो मनुष्येष्वपि ब्राह्मणराजन्ययोरेवाधिकारः, न तु वैश्यस्य। अत एव कात्यायनेनोक्तम्— 'वाजपेयः शरद्यवैश्यस्य' (काश्रौ. १४।१) इति। शब्रासा.

**राज्ञ एव राजसूयम्। राजा वै राजसूयेनेष्ट्वा भवति। न वै ब्राह्मणो राज्यायालम्। अवरं वै राजसूयम्, परं वाजपेयम्॥**

**राजा वै राजसूयेनेष्ट्वा भवति, सम्राड् वाजपेयेन । अवरं हि राज्यम्, परं साम्राज्यम् । कामयेत वै राजा सम्राड् भवितुम् । अवरं हि राज्यम्, परं साम्राज्यम् । न सम्राट् कामयेत राजा भवितुम् । अवरं हि राज्यम्, परं साम्राज्यम् ॥**

वाजपेयस्य साम्राज्यं फलमिति वक्तुं प्रसङ्गात् राजसूयस्याधिकारिभेदेन फलभेदेन वा अवरत्वं दर्शयति– राज्ञ एव राजसूयमित्यादिना । एवकारोऽन्ययोगव्यवच्छेदार्थः । राजशब्देन क्षत्रिय उच्यते, न तु राज्ययोगाद्राजेति व्युत्पत्त्या ब्राह्मणादिर्विवक्ष्यते । अवरं वा इति । राजसूयाख्यं कर्म अवरं निकृष्टम्, कतिपयदेशाधिपतित्वलक्षणराज्यफलमात्रसाधनत्वात् । वाजपेयाख्यं कर्मैव परं उत्कृष्टम्, सर्वदेशाधिपतित्वरूपसाम्राज्यफलसाधनत्वात् । राज्यात् साम्राज्यस्याऽऽधिक्यमाह– कामयेत वै राजेति । शब्रासा.

राज्ञा पूर्वं राजसूयः उत्तरं वाजपेयः कार्यः, न विपर्ययेण

**[1]राजा वै राजसूयेनेष्ट्वा भवति, सम्राड् वाजपेयेन । राज्यमु वा अग्रे, अथ साम्राज्यम् । तस्माद्वाजपेयेनेष्ट्वा न राजसूयेन यजेत । प्रत्यवरोहः सः । यथा सम्राट् सन् राजा स्यात्तादृक्तत् ॥**

राजसूययागं कृत्वा राजा भवति । वाजपेययागं कृत्वा सम्राड् भवति । साम्राज्यं च राज्यानन्तरभावित्वेन ततोऽप्यधिकम् । तस्माद्वाजपेयं कृत्वा राजसूयं न कुर्यात्, तथा करणस्य प्रत्यवरोहक्रमत्वात् । तमेव दर्शयति–यथेति । यथा सम्राट् सन् पश्चात् राजा स्यात् तदपि तादृगिति । शब्रासा.

———

(१) शब्रा. ९।३।४।८.

## * राजसूयः

आनुमतादियागाष्टकं नैर्ऋतमन्त्राश्च

**[1]अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति । धेनुर्दक्षिणा । ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालम् । कृष्णं वासः कृष्णतूषं दक्षिणा ॥**

तत्र प्रथमानुवाके प्रथमं तावत् ब्राह्मणेन कर्मद्वयं विधीयते– अनुमत्या इति । चतुर्दशीमिश्रितायाः पौर्णमास्या अभिमानिदेवता अनुमतिः, 'अमावास्या सिनीवाली पौर्णमास्यनुमतिः' इति श्रुतेः, 'कलाहीने साऽनुमतिः पूर्णे राका निशाकरे' इत्यभिधानात् । सा चानुमतिरत्र देवता, पुरोडाशो द्रव्यमित्येतदेकं कर्म, दक्षिणाभिधानेन वक्ष्यमाणेभ्यः कर्मभ्यो भिन्नाधिकारावगमात् । अस्मिन्कर्मणि पुरोडाशार्थे तण्डुलेषु पिष्यमाणेषु पश्चिमायां दिशि दृषदमभ्याधातुमधः स्थापितायाः शम्यायाः पश्चाद्ये तण्डुलपिष्टलेशा अवशीयन्ते अधः पतन्ति तल्लेशजातं द्रव्यं निर्ऋतिदेवताकं, तदिदमपरं कर्म, पृथग्दक्षिणाभिधानात् । कृष्णं वासोऽत्र दक्षिणा, तच्च कृष्णतूषं कृष्णदशान्तम् । केषांचिद्वस्त्राणां वैचित्र्याय दशाभागमुपेक्ष्य मध्यमभाग एव काषायहरिद्रादिभी रञ्जितो भवति, तद्वन्मा भूदिति कृष्णतूषत्वेन विशेष्यते । एतस्मिन्मुख्ये ब्राह्मणे प्रधानं कर्म विहितम् । अनुब्राह्मणं तु ग्रन्थान्तरे प्रथमकाण्डे षष्ठसप्तमाष्टमप्रपाठकरूपम् ।

* राजसूयविषयकतैत्तिरीयब्राह्मणस्य (तैब्रा. १।६।१।१–१।८।१०।४) संहिताभाष्ये एव सायणाचार्येण संगृहीतत्वात्, तत्रैव व्याख्यातत्वात्, संहितया सहैव ब्राह्मणानुसंधानस्य बोधोपकारित्वाच्च गौरवजिहीर्षया तैत्तिरीयब्राह्मणं पृथगत्र न संगृहीतम् । तथा काठकसंहिता मैत्रायणीसंहिता च विषयैक्यात्पृथक् न संगृहीते । पाठभेदबाहुल्यात्पाठभेदा अपि तयोर्यजुर्भागस्य न संगृहीताः । स्थलनिर्देशस्तयोरत्रैव क्रियते– कासं. १५।१–१३ (१–६५); मैसं. २।६।१–१३ (१–४५).

(१) तैसं. १।८।१।१–१।८।३।१.

तत्र षष्ठप्रपाठकस्याऽऽदौ पूर्वोदाहृतं कर्मविधिमनूद्य प्रशंसति– 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति । ये प्रत्यञ्चः शम्याया अवशीयन्ते । तं नैर्ऋतमेककपालम् । इयं वा अनुमतिः । इयं निर्ऋतिः ।' (तैब्रा. १।६।१।१) इति । भूमिः द्विविधा शालिगोधूमादिसर्वसस्याढ्या तदयोग्या वा । तत्राऽऽद्यभूमिरूपाऽनुमतिः, द्वितीयभूमिरूपा निर्ऋतिः । पश्चान्निरुप्तस्य नैर्ऋतस्याऽऽनुमतादुत्तरकाले न्यायप्राप्तं प्रधानयागप्रचारं बाधितुं पूर्वकालं विधत्ते– 'नैर्ऋतेन पूर्वेण प्रचरति । पाप्मानमेव निर्ऋतिं पूर्वो निरवदयते ।' (तैब्रा. १।६।१।१) इति । लोके रुग्णानां पुरुषाणामनिष्टं रोगं प्रथमं निवार्य पश्चादिष्टा शरीरपुष्टिः संपाद्यते तद्वदत्रापि पाप्मानं प्रतिकूलां निर्ऋतिं प्रथमतो भागदानेन निवारयति । विधिवाक्यगतं कपालैक्यमनूद्य प्रशंसति– 'एककपालो भवति । एकधैव निर्ऋतिं निरवदयते ।' (तैब्रा. १।६।१।१) इति । एकधैव एकेनैव प्रयत्नेन, कपालबाहुल्ये हि प्रयत्नबाहुल्यं प्रसज्येतेति । तत्त्विदमानुमतनैर्ऋतादिकमन्वारम्भणीयास्थानीयात्पवित्राख्यादग्निष्टोमादूर्ध्वमनुष्ठेयम् । तथा अत्र आपस्तम्ब आह– "राजा स्वर्गकामो राजसूयेन यजेत । गवां शतसहस्रं दक्षिणा । अग्निष्टोमः पञ्चापवर्गः प्रथममहः । पञ्च सहस्राणि पवित्रे ददाति, त्रिंशतमभिषेचनीये, त्रिंशतं दशपेये, दश केशवपनीये, विंशतिं व्युष्टिद्विरात्रे, पञ्च क्षत्रस्य धृतौ । अपि वा चत्वार्यभिषेचनीये । प्रतिसहस्राणीतराण्यहानि । 'षष्टिं शतानि सहस्राणि ददाति' इति बह्वृचब्राह्मणं भवति । तथा दक्षिणा अतिनयेद्यथाऽस्याहानि समकालानि स्युः । शेषमनुदिशति श्वोभूते । आनुमतादिभिरष्टाभिरन्वहं यजेत । पिंषन्नानुमतं पश्चादुत्तरतश्च व्यवशातयति । ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालमिति । अत्र चाऽऽनुमतमासाद्य नैर्ऋतेन प्रचरति" इति ।

बौधायनोऽप्येतदेव विशदयति– 'राजसूयेन यक्ष्यमाणो भवति । पुरस्तात्फाल्गुन्यै पौर्णमास्यै चैत्र्यै वा पौर्णमास्या अमावास्येन हविषेष्ट्वा दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः । संतिष्ठत एष प्रायणीयोऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण उदवसानीयान्तः । अथाष्टमेऽह्न्यानुमतं निर्वपति । हविःपेष्यै प्रयच्छन्नाह प्राचश्च प्रतीचश्च व्यवशातयेति' इति, 'ये प्राञ्चः शम्याया अवशीयन्ते तानध्वर्युः समोप्य संयुत्याऽऽनुमतं श्रपयति । अथ ये प्रत्यञ्चः शम्याया अवशीयन्ते तान् प्रतिप्रस्थाता समोप्य संयुत्य नैर्ऋतं श्रपयति' इति च ।

तैसा.

**'व्रीहि स्वाहाऽऽहुतिं जुषाण, एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममंहसः स्वाहा, नमो य इदं चकार' ॥**

प्रधानकर्ममात्राभिधायकेन मुख्यब्राह्मणेनोपेते प्रकृते मन्त्रकाण्डे नैर्ऋतयागविधिसंनिधौ व्रीहीत्यादयस्त्रयो मन्त्रा आम्नातास्तेषां विनियोगं बौधायन आह– "गार्हपत्ये स्रुवाहुतिं जुहोति व्रीहि स्वाहाऽऽहुतिं जुषाण इति । अथ दक्षिणया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य स्वकृतमिरिणं स्पष्टं भवति प्रदरो वा । तदेतदेकोल्मुकमुपसमाधायाङ्गुष्ठाभ्यां परिगृह्य नैर्ऋतं जुहोति 'एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममंहसः स्वाहा' इति । अत्र कृष्णं वासः कृष्णतूषं ददाति । अथापो व्यतिषिच्य परास्य पात्रं निदधाति । अनवेक्षमाणा आयन्ति । अथ हस्तपादान्प्रक्षाल्यैतेनैव पथा यथेतमेत्य गार्हपत्ये स्रुवाहुतिं जुहोति 'स्वाहा नमो य इदं चकार' इति । अथाऽऽनुमतेन संस्थां करोति । धेनुं ददाति" इति । हे गार्हपत्य स्वाहा तुभ्यं दत्तामाहुतिं जुषाणः सेवमानः व्रीहि दक्षिणां दिशं जिगमिषुभिरस्माभिर्विगतो भव, माऽस्माननूत्थाय बाधिष्ठाः । कृत्स्नाङ्गविधायके सार्थवादेऽनुब्राह्मणे यथोक्ताहुतिविधिः अन्वयव्यतिरेकाभ्यामुन्नीयते– 'यदहुत्वा गार्हपत्य ईयुः । रुद्रो भूत्वाऽग्निरनूत्थाय । अध्वर्युं च यजमानं च हन्यात् । व्रीहि स्वाहाऽऽहुतिं जुषाण इत्याह । आहुत्यैवैनं शमयति । नाऽऽर्तिमार्च्छत्यध्वर्युर्न यजमानः ।' (तैब्रा. १।६।१।१–२) इति । यत् यदि । रुद्रः क्रूरदेवः, 'रुद्रो वै क्रूरः' इति श्रुतेः । अध्वर्युयजमानयोरार्तिनिवारणाय जुहुयादित्यर्थः । दक्षिणाग्नेरुल्मुकनयनं विधत्ते– 'एकोल्मुकेन यन्ति । तद्धि निर्ऋत्यै भागधेयम्'

( तैब्रा. १।६।१।२ ) इति । उल्मुकेन युक्ता इत्यध्याहारः । निर्ऋतेरेकोल्मुकप्रियत्वमर्थवादान्तरगतं हिशब्देन सूच्यते । दक्षिणपश्चिमयोरवान्तरदेशं अङ्गुलिनिर्देशेन विधत्ते– 'इमां दिशं यन्ति । एषा वै निर्ऋत्यै दिक् । स्वायामेव दिशि निर्ऋतिं निरवदयते ।' ( तैब्रा. १।६।१।२ ) इति । नीतस्योल्मुकस्य स्थापनाय देशविशेषं विधत्ते– 'स्वकृत इरिणे जुहोति प्रदरे वा । एतद्वै निर्ऋत्या आयतनम् । स्व एवाऽऽयतने निर्ऋतिं निरवदयते ।' ( तैब्रा. १।६।१।३ ) इति । इरिणं ऊषरक्षेत्रं, तच्च स्वकृतं स्वतःसिद्धं, न तु यतः कुतश्चिदादायोषाः प्रक्षिप्ताः । प्रदरः स्वतःसिद्धं भूछिद्रम् । द्वितीयमन्त्रस्यायमर्थः– हे निर्ऋते पाप्मदेवते, एष एककपालपुरोडाशः तव भागः । हे भूते स्वकीयभागे परितोषेणास्मदीयैश्वर्यहेतो, त्वमिदानीं हविष्मत्यसि । अत इमं यजमानमंहसो दारिद्र्यप्रदात् पापात् मुञ्च । अत्र स्वाहाकारो बौधायनेनाध्याहृतः । निर्ऋतिमुद्दिश्य प्रत्यक्षमेव भागं समर्पयितुमेतच्छब्द इत्यभिप्रेत्य व्याचष्टे– 'एष ते निर्ऋते भाग इत्याह । निर्दिशत्येवैनाम् ।' ( तैब्रा. १।६।१।३ ) इति । भूतिशब्देन निर्ऋतिपरामर्शस्याभिप्रायमाह– 'भूते हविष्मत्यसीत्याह । भूतिमेवोपावर्तते ।' ( तैब्रा. १।६।१।३ ) इति । प्राप्नोतीत्यर्थः । मन्त्रसामर्थ्यात् सर्वथा मुञ्चतीत्यमुमभिप्रायं दर्शयति– 'मुञ्चेमम२ँहस इत्याह । अ२ँहस एवैनं मुञ्चति ।' ( तैब्रा. १।६।१।३ ) इति । चोदकप्राप्तं जुह्वा होममपवदितुं विधत्ते– 'अङ्गुष्ठाभ्यां जुहोति । अन्तत एव निर्ऋतिं निरवदयते ।' (तैब्रा. १।६।१।३–४ ) इति । अन्तत एव हस्ताग्रेणैव निर्ऋतिमपसारितवान्भवति । मुख्यब्राह्मणे विहितां दक्षिणां प्रशंसति– 'कृष्णं वासः कृष्णतूषं दक्षिणा । एतद्वै निर्ऋत्यै रूपम् । रूपेणैव निर्ऋतिं निरवदयते ।' ( तैब्रा. १।६।१।४ ) इति । राक्षसजातेः पापरूपाया निर्ऋतेर्देहः कृष्णवर्णः । पृष्ठभागदर्शनरहितं प्रत्यागमनं विधत्ते-- 'अप्रतीक्षमायन्ति । निर्ऋत्या अन्तर्हित्यै ।' ( तैब्रा. १।६।१।४ ) इति । अदर्शनायेत्यर्थः । तृतीयमन्त्रस्यायमर्थः-- यो गार्हपत्य इदमस्माभिर्विहीहीति शब्देन प्रार्थितमनुष्ठानं तथैव चकार, तस्मै स्वाहा हविर्दत्तं नमस्कारश्च कृतः । विधत्ते– 'स्वाहा नमो य इदं चकारेति पुनरेत्य गार्हपत्ये जुहोति । आहुत्यैव नमस्यन्तो गार्हपत्यमुपावर्तन्ते ।' ( तैब्रा. १।६।१।४ ) इति । नैर्ऋतप्रचारादूर्ध्वं लब्धावसरस्याऽऽनुमतहविषः प्रचारं विधत्ते– 'आनुमतेन प्रचरति । इयं वा अनुमतिः । इयमेवास्मै राज्यमनुमन्यते ।' ( तैब्रा. १।६।१।४–५ ) इति । सर्वसस्याढ्यायां भूमावयमनुमतिशब्दोऽन्वर्थ इत्यभिप्रायः । नवसूतिकाया गोर्दानं प्रशंसति– 'धेनुर्दक्षिणा । इमामेव धेनुं कुरुते ।' ( तैब्रा. १।६।१।५ ) इति । इमामेव अनुमतिरूपां भूमिमेव । तैसा.

**आदित्यं चरुं निर्वपति। वरो दक्षिणा। आग्नावैष्णवमेकादशकपालम् । वामनो वही दक्षिणा। अग्नीषोमीयमेकादशकपालम् । हिरण्यं दक्षिणा। ऐन्द्रमेकादशकपालम् । ऋषभो वही दक्षिणा । आग्नेयमष्टाकपालमैन्द्रं दधि। ऋषभो वही दक्षिणा। ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुम् । प्रथमजो वत्सो दक्षिणा। सौम्यं श्यामाकं चरुम् । वासो दक्षिणा। सरस्वत्यै चरुं सरस्वते चरुम् । मिथुनौ गावौ दक्षिणा ॥**

'आनुमतादिभिरष्टाभिः' इति यदुदाहृतं तत्रैकस्मिन्दिनेऽनुष्ठितादानुमतादन्यान् क्रमेण दिनान्तरेष्वनुष्ठेयानादित्यादीन् सप्त मुख्यान् यागान्विधत्ते– आदित्यमिति । 'गौर्वै वरः' इति सूत्रकारेणोदाहृतत्वाद्वरो गौः । वही भारवाही बलीवर्दः । ऋषभः सेचनसमर्थः षाण्डः । आग्नेयैन्द्राभ्यां हविर्भ्यामुपेत एको यागः । ऐन्द्राग्नवैश्वदेवसौम्यैस्त्रिभिर्हविर्भिर्युक्त आग्रयणरूप एक एव यागः । सरस्वतीसरस्वद्देवता(का)भ्यां हविर्भ्यां युक्तो याग एकः । तदेवमादित्यादयः सप्त संपद्यन्ते ।

अदितिदेवताकं कर्म प्रशंसति– 'आदित्यं चरुं निर्वपति । उभयीष्वेव प्रजास्वभिषिच्यते । दैवीषु च मानुषीषु च ।' ( तैब्रा. १।६।१।५ ) इति । अनुमतिः मानुषभूमिः । अत एव राज्यमनुमन्यते इत्युक्तं भवति । अदितिः देवभूमिरित्यभिप्रेत्य दैवीषु प्रजास्वभिषेकं दर्शयति । अतः पूर्वराज्येन सह समुच्चित्योभयीष्वि-

त्युच्यते । श्रेष्ठस्य गोर्दानं प्रशंसति– 'वरो दक्षिणा । वरो हि राज्यं समृद्ध्यै ।' ( तैब्रा. १।६।१।५ ) इति । वरः श्रेष्ठो गौः, तस्य राजग्रहार्हत्वाद्राज्यत्वम् । अग्निं विष्णुं च पृथक् प्रशंसति– 'आग्नावैष्णवमेकादशकपालं निर्वपति । अग्निः सर्वा देवताः । विष्णुर्यज्ञः । देवताश्चैव यज्ञं चावरुन्धे ।' ( तैब्रा. १।६।१।५–६ ) इति । अग्नेः सर्वदेवतारूपत्वमन्यत्रोपपादितम्– 'ते देवा अग्नौ तनूः संन्यदधत । तस्मादाहुः । अग्निः सर्वा देवताः ।' ( तैब्रा. ३।२।८।१०) इति । पुनरप्यन्यत्राऽऽम्नातम्– 'ते देवा बिभ्यतोऽग्निं प्राविशन्तस्मादाहुरग्निः सर्वा देवताः' इति । फलव्यापित्वाद्यज्ञस्य विष्णुत्वम् । अग्नेर्विष्णोश्च प्रीतिकरं वहित्वं वामनत्वं च दर्शयति– 'वामनो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यद्वामनः । तेन वैष्णवः समृद्ध्यै ।' ( तैब्रा. १।६।१।६ ) इति । अग्नीषोमीयस्य वैरिघातित्वं याजमानमन्त्रब्राह्मणयोः वृत्रवधब्राह्मणे च प्रसिद्धमित्यभिप्रेत्य आह– 'अग्नीषोमीयमेकादशकपालं निर्वपति । अग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति । यदग्नीषोमीयमेकादशकपालं निर्वपति । वार्त्रघ्नमेव विजित्यै ।' (तैब्रा. १।६। १।६–७) इति । तत्कर्म शत्रुघ्नमेव भूत्वा विजयाय पर्याप्तं भवति । हिरण्यस्य समृद्धिहेतुत्वं लोकप्रसिद्धमेव दर्शयति– 'हिरण्यं दक्षिणा समृद्ध्यै ।' (तैब्रा १।६।१।७) इति । मुख्यब्राह्मणगतेनैन्द्रेण सह विकल्पितमैन्द्राग्नं प्रस्तौति– 'इन्द्रो वृत्रं हत्वा । देवताभिश्चेन्द्रियेण च व्यार्ध्यत । स एतमैन्द्राग्नमेकादशकपालमपश्यत् । तं निरवपत् । तेन वै स देवताश्चेन्द्रियं चावारुन्ध ।' ( तैब्रा. १।६।१।७ ) इति । व्यार्ध्यत व्यृद्धो वियुक्तोऽभूत् । विधत्ते– 'यदैन्द्राग्नमेकादशकपालं निर्वपति । देवताश्चैव तेनेन्द्रियं च यजमानोऽवरुन्धे ।' ( तैब्रा. १।६।१।७ ) इति । देवद्वयप्रीत्यर्थं गुणद्वयमित्येतद्दर्शयति– 'ऋषभो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै ।' ( तैब्रा. १।६।१।७–८ ) इति । एकस्मिन् यागे विहितं हविर्द्वयं गोगतं गुणद्वयं च पृथक् प्रशंसति– 'आग्नेयमष्टाकपालं निर्वपति । ऐन्द्रं दधि । यदाग्नेयो भवति । अग्निर्वै यज्ञमुखम् । यज्ञमुखमेवार्द्धिं पुरस्ताद्धत्ते । यदैन्द्रं दधि । इन्द्रियमेवावरुन्धे । ऋषभो वही दक्षिणा । यद्वही । तेनाऽऽग्नेयः । यदृषभः । तेनैन्द्रः समृद्ध्यै ।' ( तैब्रा. १।६।१।८–९ ) इति । अग्निमन्तरेण यज्ञस्याप्रवृत्तेः अग्नेर्यज्ञमुखत्वम् । तादृशाग्नेः प्रथमहविःप्रदानेन यागस्यादावेव समृद्धिं धृतवान् भवति । हविर्द्व( ? त्र )ये दक्षिणाद्वये श्रूयमाणेऽपि कर्मैकत्वसिद्ध्यर्थमाग्रयणतां संघरूपां विधातुं प्रस्तौति– 'यावतीर्वै प्रजा ओषधीनामहुतानामाश्नन् । ताः पराभवन् ।' ( तैब्रा. १।६।१।९ ) इति । यावत्य ओषधीनां संबन्धिन्य इति शेषः । विधत्ते– 'आग्रयणं भवति हुताद्याय । यजमानस्यापराभावाय ।' ( तैब्रा. १।६। १।९ ) इति । तस्मिन् संघे स्थितस्यैन्द्राग्नस्योपाख्यानेन जयहेतुत्वं दर्शयति– 'देवा वा ओषधीष्वाजिमयुः । ता इन्द्राग्नी उदजयताम् । तावेतमैन्द्राग्नं द्वादशकपालं निरवृणाताम् । यदैन्द्राग्नो भवत्युज्जित्यै ।' ( तैब्रा. १।६। १।१० ) इति । माससामान्येन कपालसंख्यां प्रशंसति– 'द्वादशकपालो भवति । द्वादश मासाः संवत्सरः । संवत्सरेणैवास्मा अन्नमवरुन्धे ।' ( तैब्रा. १।६।१।१० ) इति । वैश्वदेवमन्नं रुचिहेतुरित्येतद्दर्शयति– वैश्वदेवश्चरुर्भवति । वैश्वदेवं वा अन्नम् । अन्नमेवास्मै स्वदयति ।' ( तैब्रा. १।६।१।१० ) इति । प्रथमजस्य जनिष्यमाणवत्सापेक्षया समृद्धिहेतुत्वमित्याह– 'प्रथमजो वत्सो दक्षिणा समृद्ध्यै ।' ( तैब्रा. १।६।१।११ ) इति । तृतीयहविषः सोमदेवतायाः स्वीकारे कारणमाह– 'सौम्यं श्यामाकं चरुं निर्वपति । सोमो वा अकृष्टपच्यस्य राजा । अकृष्टपच्यमेवास्मै स्वदयति ।' ( तैब्रा. १।६।१।११ ) इति । प्रतिग्रहमन्त्रे 'सोमाय वासः' इति श्रुतिमभिसंधाय दक्षिणां प्रशंसति– 'वासो दक्षिणा । सौम्यं हि देवतया वासः समृद्ध्यै ।' ( तैब्रा. १।६।१।११ ) इति । समृद्धिहेतुत्वेन सरस्वतीसरस्वतो चरुमिथुनदक्षिणां ( ? सरस्वतीसरस्वद्देवताकौ चरू मिथुनदक्षिणां ) च प्रशंसति– 'सरस्वत्यै चरुं निर्वपति । सरस्वते चरुम् । मिथुनमेवावरुन्धे । मिथुनौ गावौ दक्षिणा समृद्ध्यै ।' ( तैब्रा. १।६।१।११ ) इति । अत्र द्रव्यदेवतासंबन्धानामष्टभ्योऽधिकत्वाद्यागेष्वप्याधिक्यशङ्काभ्रमवारणायाष्टसंख्यां विधातुं प्रस्तौति– 'एति वा

एष यज्ञमुखादृद्ध्याः । योऽग्नेर्देवताया एति । ' ( तैब्रा. १।६।१।११ ) इति । एति पृथग्भवति अपगच्छतीत्यर्थः । वक्ष्यमाणप्रकारेण अग्नेरष्टत्वसंख्यात्मकत्वात्तत्संख्याया अपगम एवाग्निसकाशादपगमः । योऽग्नेरपगच्छति स यज्ञमुखात् यज्ञप्रारम्भादृद्ध्या यज्ञसमाप्तेश्चापगच्छति । विधत्ते- ' अष्टावेतानि हवीꣳषि भवन्ति । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैति । (तैब्रा. १।६।१।११) इति । गायत्र्या अग्नेश्च मुखजत्वेन सहोत्पन्नत्वलक्षणः संबन्धः । तेनैव तेषां हविःशब्दवाच्यानां कर्मणामष्टत्वेन यज्ञप्रारम्भसमाप्तिभ्यामग्निदेवतायाश्च नापगच्छति । तैसा.

चातुर्मास्यानि- ( १ ) वैश्वदेवम्

**आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुं, मारुतꣳ सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालम् ॥**

प्रथमानुवाके प्रायणीयादह्न उत्तरभाविन आनुमतादयोऽष्टौ यागा नैर्ऋतमन्त्राश्चोक्ताः । द्वितीये चातुर्मास्येषु प्रथमपर्वरूपं हविरष्टकं विधत्ते- आग्नेयमिति । स्पष्टोऽर्थः । एतेषां वैश्वदेवादीनां चातुर्मास्यानामानुमताद्यनन्तरभावित्वं पाठप्राप्तमापस्तम्बो विशदयति- ' एताभिरन्वहमिष्ट्वा चातुर्मास्यान्यारभते, तैः संवत्सरं यजते ' इति । तेषु चातुर्मास्येषु प्रथमपर्वणो वैश्वदेवस्य देशकालौ स एवाऽऽह- ' प्राचीनप्रवणे वैश्वदेवेन यजते ' इति, ' फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजते ' इति च ।

तस्मिन् वैश्वदेवकर्मणि प्रथमभावीन्याग्नेयादीनि पञ्च हवींष्युपाख्यानेन प्रशंसति- ' वैश्वदेवेन वै प्रजापतिः प्रजा असृजत । ताः सृष्टा न प्राजायन्त । सोऽग्निरकामयत । अहमिमाः प्रजनयेयमिति । स प्रजापतये शुचमदधात् । सोऽशोचत्प्रजामिच्छमानः । तस्माद्यं च प्रजा भुनक्ति यं च न । तावुभौ शोचतः प्रजामिच्छमानौ । तास्वग्निमप्यसृजत् । ता अग्निरध्यैत् । सोमो रेतोऽदधात् । सविता प्राजनयत् । सरस्वती वाचमदधात् । पूषाऽपोषयत् । ते वा एते त्रिः संवत्सरस्य प्रयुज्यन्ते । ये देवाः पुष्टिपतयः । संवत्सरो वै प्रजापतिः । संवत्सरेणैवास्मै प्रजाः प्राजनयत् । ' (तैब्रा. १।६।२।१-२) इति ।

पुरा कदाचित्प्रजापतिः प्रजाकामः संस्तत्साधनत्वेनेदं वैश्वदेवाख्यं कर्मानुष्ठाय तेनैव प्रजा असृजत । ताश्च सृष्टाः प्रजा न प्राजायन्त स्वकीयान्यपत्यानि न लेभिरे । तदानीं प्रजापतिसृष्टाववस्थितः सोऽग्निर्मनस्येवमकामयत- किमित्यपत्यरहिता इमाः प्रजाः, अहं प्रजनयेयं अपत्योत्पादिकाः करिष्यामीति । एवं कामयमानः सोऽग्निः प्रजाः सृष्टवते प्रजापतये शोकमुत्पादितवान् । प्रजापतिसृष्टानां प्रजानामपत्याभावस्यापत्योत्पादनकामिना वह्निना स्मारितत्वात् प्रजापतौ वह्निः शोकोत्पादक उच्यते । सोऽग्निः प्रजापतेः शोकमुत्पाद्य स्वस्याप्यपत्याभावेन प्रजामपत्यरूपामिच्छमानोऽशोचत् । यस्मात्पुत्रवान् प्रजापतिः पौत्रमिच्छन्नशोचत्, यस्मात् पुत्राभावादग्निरशोचत्, तस्माल्लोकेऽपि यं पितरमुत्पन्ना पुत्ररूपा प्रजा भुनक्ति पालयति, यं चापत्यरहितमनुत्पन्ना प्रजा न पालयति, तावुभावपि पौत्ररूपां पुत्ररूपां च प्रजामिच्छन्तौ तदलाभाच्छोचतः । प्रजापतिस्तासु प्रजासु प्रजां अपत्यमुत्पादयितुमग्निमप्यसृजत् अभ्यनुज्ञातवान् । अनुज्ञातः सोऽग्निस्ताः प्रजा अध्यैत् प्राप्तवान् मिथुनभावेन संगतवानित्यर्थः । ततः सोमः आग्नेयं रेतस्तासु प्रजासु गर्भभावेन धारितवान् । ततः सविता प्रसवकाले प्राजनयत्प्रजाः । तेष्वपत्येषु सरस्वती वाचमदधात् संभाषितुमभ्यासं कारयामास । ततः संभाषमाणान् बालान् पूषाऽभ्यवर्धयत् । ये देवा अग्निसोमादयोऽपत्यपोषाः अपत्यपालकास्त एतेऽग्न्यादयः पूषान्ताः पञ्च देवाः पुष्टिकरत्वेन संवत्सरस्य मध्ये चातुर्मास्येषु त्रिः प्रयुज्यन्ते, वैश्वदेववरुणप्रघाससाकमेधाख्येषु पर्वसु पञ्चानामेतेषामाग्नेयादीनां संचारित्वात् । सोऽयं प्रयोगत्रयकालः संवत्सर एव प्रजापतिस्वरूपः । अतः प्रजापतिरूपेण प्रयोगत्रययुक्तेन संवत्सरेणैवास्मा अनुष्ठात्रे प्रजा उत्पादितवान् भवति ।

पञ्च यागान् प्रशस्य षष्ठं प्रशंसति- ' ताः प्रजा जाता मरुतोऽघ्नन् । अस्मानपि न प्रायुक्षतेति । स एतं प्रजा-

पतिर्मारुतं सप्तकपालमपश्यत् । तं निरवपत् । ततो वै प्रजाभ्योऽकल्पत । यन्मारुतो निरुप्यते । यज्ञस्य क्लृप्त्यै । प्रजानामघाताय ।' (तैब्रा. १।६।२।२–३) इति । एकोनपञ्चाशन्मरुत उत्पन्नास्ताः प्रजा हतवन्तः । केनाभिप्रायेण ? अस्मानप्येतस्मिन्वैश्वदेवकर्मण्येताः प्रजा न प्रयुक्तवत्य इति । प्रजाभ्योऽकल्पत तासां प्रजानां रक्षणाय समर्थोऽभूत् । अतोऽयं षष्ठो यागो यज्ञस्य संपूर्त्यै प्रजानामहिंसायै च संपद्यते । कपालसंख्यां प्रशंसति– 'सप्तकपालो भवति । सप्त गणा वै मरुतः । गणश एवास्मै विशं कल्पयति ।' ( तैब्रा. १।६।२।३ ) इति । सप्तानां समूह एकैको गणः । तादृशाश्च गणाः सप्तसंख्याकाः । तथा सप्तसंख्ययाऽस्मै यजमानाय बहुगु( ग ? )णरूपां प्रजां संपादयति ।

सप्तमयागे द्रव्यं प्रशंसति– 'स प्रजापतिरशोचत् । याः पूर्वाः प्रजा असृक्षि । मरुतस्ता अवधिषुः । कथमपराः सृजेयेति । तस्य शुष्म आण्डं भूतं निरवर्तत । तद्व्युदहरत् । तदपोषयत् । तत्प्राजायत । आण्डस्य वा एतद्रूपम् । यदामिक्षा । यद् व्युद्धरति । प्रजा एव तद्यजमानः पोषयति ।' ( तैब्रा. १।६।२।३–५ ) इति । तस्य प्रजापतेः शुष्मो बलं आण्डं भूतं आण्डवत्पिण्डाकारं प्राप्य निर्गतम् । पिण्डीभूतं व्युदहरत् विभज्योद्धृतवान् । उद्धृत्य च तत्पोषयित्वा प्रजारूपेणोदपादयत् । क्षीरपिण्डरूपाया आमिक्षाया अण्डरूपत्वात् तद्व्युद्धरणेन प्रजापतिवद्यजमानः प्रजाः पोषयति पोषितवान् भवति । अनेनार्थवादेनापूर्वार्थत्वात् व्युद्धरेदिति विधिरुन्नेतव्यः । तदीयां देवतां प्रशंसति– 'वैश्वदेव्यामिक्षा भवति । वैश्वदेव्यो वै प्रजाः । प्रजा एवास्मै प्रजनयति ।' ( तैब्रा. १।६।२।५ ) इति । बहुभिर्देवैः अग्न्यादिभिरुक्तप्रकारेणोत्पादितत्वात् प्रजानां वैश्वदेवत्वम् । विभज्योद्धृतयोरामिक्षाभागयोः ( ? ) वाजिनसेचनं विधत्ते– 'वाजिनमानयति । प्रजास्वेव प्रजातासु रेतो दधाति ।' (तैब्रा. १।६।२।५) इति । दध्यानयनेन घनीभूतामिक्षाशब्दवाच्यस्य क्षीरपिण्डस्य प्रजारूपेणाऽऽविर्भावः पूर्वार्थवादे निरूपितः । अतस्तस्मिन् पिण्डे वाजिनाख्येन क्षीरगतनीरेण सेचने सति प्रजातासु प्रजासु रेतो धारितं भवति ।

अष्टमयागदेवतां प्रशंसति– 'द्यावापृथिव्य एककपालो भवति । प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परिगृह्णाति ।' ( तैब्रा. १।६।२।५ ) इति । अत्राऽऽदावुक्तानां पञ्चानां पाठे प्राप्तं क्रमं प्रशंसति– 'देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् । मामग्रे यजत । मया मुखेनासुराञ्जेष्यथेति । मां द्वितीयमिति सोमोऽब्रवीत् । मया राज्ञा जेष्यथेति । मां तृतीयमिति सविता । मया प्रसूता जेष्यथेति । मां चतुर्थीमिति सरस्वती । इन्द्रियं वोऽहं धास्यामीति । मां पञ्चममिति पूषा । मया प्रतिष्ठया जेष्यथेति । तेऽग्निना मुखेनासुरानजयन् । सोमेन राज्ञा । सवित्रा प्रसूताः । सरस्वतीन्द्रियमदधात् । पूषा प्रतिष्ठाऽऽसीत् । ततो वै देवा व्यजयन्त । यदेतानि हवींꣳषि निरुप्यन्ते विजित्यै ।' (तैब्रा. १।६।२।५–७) इति । लोके युद्धार्थमुद्यतायां सेनायां केचन शूरा भटा मुखतो योद्धुं गच्छन्ति । तेषां युद्धं द्रष्टुं कश्चिद्राजा स्वामित्वेन संनिधत्ते । केचन दण्डहस्ताः पृष्ठतः स्थित्वा योद्धॄनपुनरावृत्तये बलात् प्रेरयन्ति । अन्ये केचन दुन्दुभ्यादिजयघोषेण योद्धॄणामुत्साहं जनयन्ति । अपरा कियत्यपि सेना पुरोगताया युध्यन्त्याः सेनायाः पृष्ठतः सहायत्वेनावतिष्ठते । तानेतान् पञ्चविधव्यापारानग्न्यादयः क्रमेण स्वीकृतवन्तः । ततो देवानां जयोऽभूत् । ततोऽत्रापि पञ्चहविषां निर्वापे जयो भवति ।

शाखान्तरगतेन 'उपवपन्ति' इति वाक्येन वैश्वदेवादिषु चतुर्षु चातुर्मास्यपर्वसु साधारण्येनोत्तरवेद्युपवापः प्राप्तस्तमुपवापं वैश्वदेवपर्वणि प्रतिषेधति । 'नोत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः । अजाता इव ह्येतर्हि पशवः ।' ( तैब्रा. १।६।२।७ ) इति । उत्तरवेदिसमीपे तदाभिमुख्येन पशूनां बन्धनादुत्तरवेदेः पशुत्वम् । पूर्वोक्तरीत्या वैश्वदेवस्य प्रजापतिसृष्टिसाधनत्वात् स्रष्टव्यासु प्रजास्वन्तर्भूतानां पशूनां वैश्वदेवादूर्ध्वमुत्पत्तिकालः, न त्विदानीम्, अतः पशुरूपोत्तरवेदिर्नात्रोपवपनीया ।

तदेवमनुब्राह्मणगतेन 'वैश्वदेवेन वै प्रजापतिः' इत्यनुवाकेन वैश्वदेवपर्वगतान्याग्नेयादीन्यष्ट हवींषि प्रशस्तानि । अथ अनुवाकान्तरेण वैश्वदेवपर्वगतानि विशेषाङ्गानि

विधीयन्ते । तत्र चोदकप्राप्तस्य बर्हिषस्त्रैगुण्यं विधत्ते- 'त्रिवृद्बर्हिर्भवति । माता पिता पुत्रः । तदेव तन्मिथुनम् । उल्बं गर्भो जरायु । तदेव तन्मिथुनम् । ' ( तैब्रा. १।६। ३।१ ) इति । मात्रादित्रयं यदस्ति तदेव पुत्रयुक्तत्वात्तन्मिथुनं सार्थकम् । गर्भस्यान्तर्वेष्टनं उल्बं, बहिर्वेष्टनं जरायु । गर्भादित्रयं यदस्ति तदेव सारभूतेन गर्भेणोपेतत्वात्तन्मिथुनं सफलम् । उल्बजराय्वोर्द्वित्वसामान्येन मिथुनत्वम् । बर्हिषस्त्रैगुण्ये सति यथोक्तमिथुनद्वयसाम्यं संपद्यते । विधत्ते- 'त्रेधा बर्हिः संनद्धं भवति । त्रय इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति । ' ( तैब्रा. १।६।३।१ ) इति । प्रकृतौ दर्भमुष्टीनां पृथग्बन्धनं न विहितं सूत्रकारेण, 'अदित्यै रास्नाऽसीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि संभृत्य ' इति प्रसारिते शुल्वे मुष्टीनां संभरणमात्रस्यैवाभिधानात् । इह तु मुष्टित्रयस्य पृथग्बन्धनं विशेषः । विधत्ते- 'एकधा पुनः संनद्धं भवति । एक इव ह्ययं लोकः । अस्मिन्नेव तेन लोके प्रतितिष्ठति । ' ( तैब्रा. १।६।३।१-२ ) इति । पृथक् बद्धानां त्रयाणां मुष्टीनां पुनर्मिलित्वा बन्धनं कार्यम् । चोदकप्राप्तस्य बन्धनस्य त्रेधाबन्धनेन बाधप्राप्तौ प्रतिप्रसवरूपोऽयं विधिः । चोदकेन सामान्यतः प्राप्तानां दर्भाणां पुष्पितत्वरूपं विशेषमत्र विधत्ते- 'प्रसुवो भवन्ति । प्रथमजामेव पुष्टिमवरुन्धे । ' (तैब्रा. १।६।३।२ ) इति । प्रसूनोपेता दर्भाः प्रसुवः । विधत्ते- 'प्रथमजो वत्सो दक्षिणा समृद्ध्यै । ' ( तैब्रा. १।६।३।२ ) इति । अनूयाजार्थस्य द्रव्यस्य ग्रहणं विधत्ते- 'पृषदाज्यं गृह्णाति । पशवो वै पृषदाज्यम् । पशूनेवावरुन्धे । ' ( तैब्रा. १।६। ३।२ ) इति । दधिमिश्रमाज्यं पृषदाज्यम् । ग्रहणे संख्यां विधत्ते- 'पञ्चगृहीतं भवति । पाङ्क्ता हि पशवः । ' ( तैब्रा. १।६।३।२ ) इति । सपुच्छपादैः पञ्चभिर्युक्तत्वात् पङ्क्तिच्छन्दःसाध्यत्वाद्वा पशूनां पाङ्क्तत्वम् । मिश्रणं प्रशंसति- 'बहुरूपं भवति । बहुरूपा हि पशवः समृद्ध्यै । ' ( तैब्रा. १।६।३।२-३ ) इति । दधिबिन्दूनामाज्यबिन्दूनामनेकरूपत्वाद्बहुरूपत्वम् । गोमहिषादिरूपेण पशवो बहुरूपाः । हविरासादनादूर्ध्वं सामिधेनीभ्यः पुरा मन्थनं विधत्ते- 'अग्निं मन्थन्ति । अग्निमुखा वै प्रजापतिः प्रजा असृजत । यदग्निं मन्थन्ति । अग्निमुखा एव तत्प्रजा यजमानः सृजते । ' ( तैब्रा. १।६।३।३ ) इति । हविःसादनादूर्ध्वभावित्वं आपस्तम्बो दर्शयति- 'पञ्चहोत्रा यजमानः सर्वाणि हवींष्यासन्नान्यभिमृशति पशुवन्निर्मन्थ्यः सामिधेन्यश्च ' इति । होतृमन्त्रब्राह्मणे श्रूयते- 'तद्भूयोऽतप्यत । तस्मात्तेपानादग्निरजायत । ' ( तैब्रा. २।२।९।२ ) इति, 'स प्रजननादेव प्रजा असृजत ' ( तैब्रा. २।२।९।६ ) इति च । तत्राग्नेः प्रथमसृष्टत्वात् प्रजानामग्निमुखत्वम् । शाखान्तराभिहितां प्रयाजानूयाजसंख्यां हृदि कृत्वा साङ्गं कर्म प्रशंसति- 'नव प्रयाजा इज्यन्ते । नवानूयाजाः । अष्टौ हवीꣳषि । द्वावाघारौ । द्वावाज्यभागौ । त्रिꣳशत्संपद्यन्ते । त्रिꣳशदक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । ' ( तैब्रा. १।६।३।३-४ ) इति । दशाक्षरपादैस्त्रिभिर्युक्तस्य विराट्छन्दसस्त्रिंशदक्षरत्वम् । अलंकरणकाले 'आज्येनैककपालमभिपूरयति ' इत्यापस्तम्बेन यदुक्तं तदिदं द्वेधा प्रशस्य विधत्ते- 'यजमानो वा एककपालः । तेज आज्यम् । यदेककपाल आज्यमानयति । यजमानमेव तेजसा समर्धयति । यजमानो वा एककपालः । पशव आज्यम् । यदेककपाल आज्यमानयति । यजमानमेव पशुभिः समर्धयति । ' ( तैब्रा. १।६।३।४-५ ) इति । विशेषान्तरं विधातुं प्रस्तौति- 'यदल्पमानयेत् । अल्पा एनं पशवोऽभुञ्जन्त उपतिष्ठेरन् । यद्बह्वानयेत् । बहव एनं पशवो भुञ्जन्त उपतिष्ठेरन् । ' ( तैब्रा. १।६।३।५ ) इति । भुञ्जन्तः क्षीरदानादिना पालयन्तः, अभुञ्जन्त इति तद्विपर्ययः । पशूनामल्पत्वमपालयितृत्वं चेत्युभौ दोषौ । बहुत्वं पालयितृत्वं चेत्युभौ गुणौ । तत्र गुणसंपादनेन प्रशंसन् विधत्ते- 'बह्वानीयाऽऽविःपृष्ठं कुर्यात् । बहव एवैनं पशवो भुञ्जन्त उपतिष्ठन्ते । ' ( तैब्रा. १।६।३।५ ) इति । बह्वाज्ये पुरोडाशस्य पृष्ठमनिमज्ज्य यथा दृश्यते तथा बह्वाज्यमानयेत् । तथा सत्याज्यस्य बहुत्वात्पशूनामल्पत्वदोषो न भविष्यति । पुरोडाशपृष्ठस्याऽऽविर्भूतत्वादपालयितृत्वमपि न भवति ।

कृत्स्नस्यापि पुरोडाशस्य होमं विधातुं प्रस्तौति— 'यजमानो वा एककपालः । यदेककपालस्यावद्येत् । यजमानस्यावद्येत्। उद्वा माद्येद्यजमानः । प्र वा मीयेत ।' (तैब्रा. १।६।३।५–६ ) इति । इतरपुरोडाशेषु भक्षणाद्यर्थमवशेष्य किंचिदेवावदीयते तद्वदत्राप्यवदानेन यजमानस्यावयवश्छिद्येत, अथवोन्मत्तो भवेत्, यद्वा प्रमीयेत । कृत्स्नहोमं विधत्ते– 'सकृदेव होतव्यः । सकृदिव हि सुवर्गो लोकः ।' (तैब्रा. १।६।३।६ ) इति । सकृदेव कृत्स्न एव । स्वर्गलोकस्य सकृत्त्वं अखण्डितत्वम् । एककपाले पूर्वमानीतस्य बह्वाज्यस्य होमं विधत्ते– 'हुत्वाऽभिजुहोति । यजमानमेव सुवर्गं लोकं गमयित्वा । तेजसा समर्धयति ।' (तैब्रा. १।६।३।६ ) इति । आदौ पुरोडाशं हुत्वा तस्योपर्याज्यं जुहुयादित्यर्थः । चोदकप्राप्तेनाऽऽहवनीयहोमेनैककपालं प्रशंसति– 'यजमानो वा एककपालः । सुवर्गो लोक आहवनीयः । यदेककपालमाहवनीये जुहोति । यजमानमेव सुवर्गं लोकं गमयति ।' (तैब्रा. १।६।३।६–७ ) इति । कयाचिदुपपत्त्या पुरोडाशस्य चोदकप्राप्तं स्रुचा होममपोद्य हस्तेन होमः प्रसक्तस्तद्वा ( ? स्तं वा )रयितुं स्रुचा होमस्य प्रतिप्रसवं विधत्ते– 'यद्धस्तेन जुहुयात् । सुवर्गाल्लोकाद्यजमानमवविध्येत् । स्रुचा जुहोति । सुवर्गस्य लोकस्य समष्ट्यै ।' (तैब्रा. १।६।३।७ ) इति । अवविध्येत् प्रच्यावयेत् । पुरोडाशो येन संनिवेशेन पात्रेऽवस्थितस्तेनैव संनिवेशेनाग्नौ तस्य स्थितिः शाखान्तरे विहिता, स्रुचा हूयमानस्तु अवाङ्मुखो वह्नौ पतेदतस्तद्विधिविरोधं परिहर्तुं हस्तेन होतव्यमित्येषा मन्दानामुपपत्तिः । हुतस्य पुरोडाशस्य नैश्चल्यं विधातुं प्रस्तौति– 'यत्प्राङ्पद्येत । देवलोकमभिजयेत् । यद्दक्षिणा पितृलोकम् । यत्प्रत्यक् । रक्षा१ँसि यज्ञ१ँ हन्युः । यदुदङ् । मनुष्यलोकमभिजयेत् ।' (तैब्रा. १।६।३।७–८ ) इति । यद्यपि लोकादिजयो न स्वरूपेण दोषस्तथाऽप्यधिकफलभावनायां सत्यां तावन्मात्रत्वं दोष एव । विधत्ते– 'प्रतिष्ठितो होतव्यः । एककपालं वै प्रतितिष्ठन्तं द्यावापृथिवी अनु प्रतितिष्ठतः । द्यावापृथिवी ऋतवः । ऋतून् यज्ञः । यज्ञं यजमानः । यजमानं प्रजाः । तस्मात्प्रतिष्ठितो होतव्यः ।' (तैब्रा. १।६।३।८ ) इति । प्रागादिदिक्षु पतनपरिहारेण होमस्थान एव प्रतिष्ठितो निश्चलो यथा भवति तथा होतव्यः । 'ऋतवः' इत्यादिषु 'अनु प्रतितिष्ठन्ति' इत्यादिकं द्रष्टव्यम् । तस्मादिति पूर्वस्य विधेरुपसंहारः । तदेतदुक्तं कृत्स्नहोमादिकमापस्तम्बेन स्पष्टमुदाहृतम्– 'उपांशु प्रचरति सर्वहुतमपर्यावर्तयन्नृजुं प्रतिष्ठितं न हस्तेन जुहुयात् ।' इति । स्रुचा होमेऽप्यपर्यावृत्तिं संप्रदायविद एवं संपादयन्ति– शिक्ये पुरोडाशमवस्थाप्य वामहस्तेन शिक्याग्रं धृत्वा दक्षिणहस्तेन स्रुचमधस्ताद्धारयित्वा तया स्रुचा होमं कुर्वन् वामहस्तेन शिक्यमीषदुद्धृत्य वह्नौ स्थापयेदिति ।

वैश्वदेव्यामिक्षाया निःसृतं वाजिनशब्दाभिधेयं यन्नीरं तस्य वाजिसंज्ञकान् देवानुद्दिश्य यागं विधत्ते– 'वाजिनो यजति । अग्निर्वायुः सूर्यः । ते वै वाजिनः । तानेव तद्यजति । अथो खल्वाहुः । छन्दा१ँसि वै वाजिन इति । तान्येव तद्यजति ।' (तैब्रा. १।६।३।९ ) इति । तस्य यागस्य कालं विधातुं प्रस्तौति– 'ऋक्सामे वा इन्द्रस्य हरी सोमपानौ । तयोः परिधय आधानम् । वाजिनं भागधेयम् । यदप्रहृत्य परिधीञ्जुहुयात् । अन्तराधानाभ्यां घासं प्रयच्छेत् ।' (तैब्रा. १।६।३।९–१० ) इति । हरी अश्वौ । तयोर्वशीकरणाय मुखे प्रक्षिप्तो लोहविशेष आधानम् । अन्तः मुखमध्येऽवस्थितमाधानं ययोस्तावन्तराधानौ । हस्तेन मुखे प्रक्षिप्यमाणः साज्यशर्करमुद्गादिपिण्डो घासस्तृणविशेषो वा । न ह्याधानेऽन्तरवस्थिते सति घासो भक्षयितुं शक्यः । विधत्ते– 'प्रहृत्य परिधीञ्जुहोति । निराधानाभ्यामेव घासं प्रयच्छति ।' (तैब्रा. १।६।३।१० ) इति । परिधीनामग्नौ प्रहारेणाऽऽधानस्यापनीतत्वात् घासो भक्षयितुं शक्यते । सोऽयं काल आपस्तम्बेन स्पष्टीकृतः– 'परिधीन् प्रहृत्य स१ँस्रावान्तं कृत्वा वाजिनपात्र उपस्तीर्यान्तर्वेदि बर्हिरनुविष्यिञ्चन् वाजिनं गृह्णाति नाभिघारयति' इति । तत्र पात्रे ग्रहणकाले पात्रस्याभिपूरणेनाधोवस्थितस्य बर्हिषो विशेषेण सेचनं विधत्ते– 'बर्हिषि विषिञ्चन्वाजिनमानयति । प्रजा वै बर्हिः । रेतो वाजिनम् । प्रजास्वेव रेतो दधाति ।' (तैब्रा. १।६।३।१० ) इति । सोमवत्परस्परोपहवपूर्वकं भक्षणमप्राप्तत्वादिह विधत्ते– 'समुपहूय

भक्षयन्ति । एतत्सोमपीथा ह्येते । अथो आत्मन्नेव रेतो दधते ।' (तैब्रा. १।६।३।१०-११) इति । वाजिनयागस्य सांनाय्यविकृतित्वेऽपि सांनाय्यवदिडाभक्षणं न कर्तव्यम्, किंतु सोमवद्भक्षयेत् । एतदेव वाजिनभक्षणं सोमपीथः सोमपानं येषामृत्विजां त एतत्सोमपीथाः । वाजिनभक्षणे यजमानस्य चरमभक्षणं विधत्ते– 'यजमान उत्तमो भक्षयति । पशवो वै वाजिनम् । यजमान एव पशून् प्रतिष्ठापयन्ति ।' (तैब्रा. १।६।३।११) इति ।

तैसा.

चातुर्मास्यानि– (२) वरुणप्रघासाः

**ऐन्द्राग्नमेकादशकपालं, मारुतीमामिक्षां, वारुणीमामिक्षां, कायमेककपालम् ॥**

द्वितीये वैश्वदेवाख्यं प्रथमपर्वोक्तं, तृतीये वरुणप्रघासाख्यं द्वितीयं पर्वोच्यते । तत्र विशेषहवींषि चत्वारि विधत्ते–ऐन्द्राग्नमिति । निर्वपतीति पूर्वानुवाकादनुवर्तते । तानेतान् वरुणप्रघासान् विधातुं प्रस्तौति– 'प्रजापतिः सविता भूत्वा प्रजा असृजत । ता एनमत्यमन्यन्त । ता अस्मादपाक्रामन् । ता वरुणो भूत्वा प्रजा वरुणेनाग्राहयत् । ताः प्रजा वरुणगृहीताः । प्रजापतिं पुनरुपाधावन्नाथमिच्छमानाः । स एतान् प्रजापतिर्वरुणप्रघासानपश्यत् । तान्निरवपत् । तैर्वै स प्रजा वरुणपाशादमुञ्चत् ।' (तैब्रा. १।६।४।१) इति । सविता भूत्वा उत्पादको भूत्वा । अत्यमन्यन्त अवज्ञां कृतवत्यः । वरुणो भूत्वा वरुणेन वरुणपाशरूपेण जलोदररोगेण । नाथं स्वामिनं रोगशान्तये । वरुणप्रघासान् एतन्नामकान् यागविशेषान् । इदानीं विधत्ते– 'यद्वरुणप्रघासा निरुप्यन्ते । प्रजानामवरुणग्राहाय ।' (तैब्रा. १।६।४।१-२) इति । अस्य पर्वणः कालमापस्तम्बो दर्शयति– 'ततश्चतुर्षु मासेष्वाषाढ्यां श्रावण्यां वोदवसाय वरुणप्रघासैर्यजेत ।' इति । उदवसाय पूर्वदेशान्निर्गत्य । अस्मिन् वरुणप्रघासपर्वणि द्वितीयां वेदिं विधातुं प्रस्तौति– 'तासां दक्षिणो बाहुर्न्यक्न आसीत् । सव्यः प्रसृतः । स एतां द्वितीयां दक्षिणतो वेदिमुदहन् । ततो वै स प्रजानां दक्षिणं बाहुं प्रासारयत् ।' (तैब्रा. १।६।४।२) इति । तासां प्रजानाम् । न्यक्नः शीतवातरोगेण नितरां संकुचितः । वेदिमुदहन् वेदेरुद्धननं कृतवान् । विधत्ते– 'यद्द्वितीयां दक्षिणतो वेदिमुद्धन्ति । प्रजानामेव तद्यजमानो दक्षिणं बाहुं प्रसारयति । तस्माच्चातुर्मास्ययाज्यमुष्मिंल्लोक उभयाबाहुः । यज्ञाभिजितꣳ ह्यस्य ।' (तैब्रा. १।६।४।२) इति । दक्षिणतश्चोदकप्राप्ताया वेदेर्दक्षिणभागे । यस्माच्चातुर्मास्येषु वेदिद्वयमस्ति तस्मात्तद्याजी स्वर्गे बाहुद्वयोपेतो भवति । यद्यपि सर्वेषां बाहुद्वयमस्ति तथाऽप्येक एव बाहुस्तेषां सामर्थ्योपेतः । अत एवाऽऽम्नातम्– 'तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरः ।' इति । अस्य बाहुद्वयमपि सामर्थ्यातिशयोपेतमिति विशेषः । तदेतदस्य यज्ञाभिजितं अनेन यज्ञेन संपादितम् । उभयोर्वेद्योर्मध्ये त्रयोदशाङ्गुलिपरिमितं व्यवधानं विधत्ते– 'पृथमात्राद्वेदी असंभिन्ने भवतः । तस्मात्पृथमात्रं व्यꣳसौ ।' (तैब्रा. १।६।४।२-३) इति । यस्माद्वेद्योरुक्तं व्यवधानं तस्माल्लोकेऽपि वामदक्षिणावंसौ पृथमात्रौ, यद्वा पृथमात्रं त्रयोदशाङ्गुलपरिमाणं यथा भवति तथा विभक्तौ दृश्येते । विधत्ते– 'उत्तरस्यां वेद्यामुत्तरवेदिमुपवपति । पशवो वा उत्तरवेदिः । पशूनेवावरुन्धे । अथो यज्ञपरुषोऽनन्तरित्यै ।' (तैब्रा. १।६।४।३) इति । यज्ञपरुषः यज्ञावयवस्य अन्तरित्यै अन्तरायाभावार्थम् । उत्तरवेदेरभावे तद्रूपो यज्ञावयवोऽन्तरितः स्यात् । वैश्वदेवपर्वण्युक्तानाम् 'आग्नेयमष्टाकपालम्' इत्यादीनां पञ्चहविषां ब्राह्मणमनुब्राह्मणं चात्राप्यतिदिशति– 'एतद्ब्राह्मणान्येव पञ्च हवीꣳषि ।' (तैब्रा. १।६।४।३) इति । आग्नेयादीनां पञ्चानां विधायकं पूर्वस्मिन् पर्वणि यद्ब्राह्मणमेतदेवास्मिन् पर्वणि ब्राह्मणं विधायकं येषां पञ्चानां तान्येतद्ब्राह्मणानि । अत्रापि तथैवाऽऽदौ पञ्च हवींष्यनुतिष्ठेदित्यर्थः । मुख्यब्राह्मणे विहितस्यैन्द्राग्नस्यातिदिष्टपञ्चहविरानन्तर्यं विधत्ते– 'अथैष ऐन्द्राग्नो भवति ।' (तैब्रा. १।६।४।३) इति । तस्मिन् यागे श्रुतौ देवौ प्रशंसति– 'प्राणापानौ वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति । प्राणापानावेवावरुन्धे । ओजो बलं वा एतौ देवानाम् । यदिन्द्राग्नी । यदैन्द्राग्नो भवति । ओजो बलमेवावरुन्धे ।' (तैब्रा.

१।६।४।३-४ ) । इति । ओजः मानस उत्साहः, बलं शारीरमिति विशेषः ।

मुख्यब्राह्मणविहितं आमिक्षायागमनूद्य तद्देवताकावेव मेषीमेषौ यवमयौ विधत्ते-- 'मारुत्यामिक्षा भवति । वारुण्यामिक्षा । मेषी च मेषश्च भवतः । मिथुना एव प्रजा वरुणपाशान्मुञ्चति । ' ( तैब्रा. १।६।४।४ ) इति । मारुत्यामिक्षा भवति मेषी च, वारुण्यामिक्षा भवति मेषश्चेति तत्तत्साहित्याभिधानार्थौ चकारौ । स्त्रीपुरुषरूपयोर्मेषीमेषयोरनुष्ठानेन मिथुनात्मिकाः प्रजा रोगान्मुक्ता भवन्ति । मेषीमेषयोर्गुणविशेषं विधत्ते– ' लोमशौ भवतो मेध्यत्वाय । ' ( तैब्रा. १।६।४।४ ) इति । एतच्च सूत्रकारेण स्पष्टीकृतम्– 'ऊर्णाभिर्मेषप्रतिकृती लोमशौ कुरुतः ' इति । तयोर्मेषीमेषयोः पुरतः शमीपर्णस्थापनं विधत्ते– ' शमीपर्णान्युपवपति । घासमेवाऽऽभ्यामपियच्छति । ' ( तैब्रा. १।६।४।५ ) इति । घासमपीत्यन्वयः । शमीपर्णानां शताधिकसंख्यां विधातुं प्रस्तौति– ' प्रजापतिमन्नाद्यं नोपानमत् । स एतेन शतेध्मेन हविषाऽन्नाद्यमवारुन्ध । यत्परःशतानि शमीपर्णानि भवन्ति । अन्नाद्यस्यावरुद्ध्यै । ' ( तैब्रा. १।६।४।५ ) इति । अत्तुं योग्यं शाल्यादिजन्यं यदन्नं तत् प्रजापतिर्न प्राप्नोत् । स च प्रजापतिरेतेन शमीवृक्षजन्येन शतसंख्यायुक्तेन काष्ठसमूहेन दीपितेऽग्नौ हुतेन हविषा तदन्नाद्यं संपादितवान् । अतः परःशतानि शताधिकसंख्यानि पर्णान्युपवपेत् । तत्र करीरोद्वापं विधातुं प्रस्तौति– ' सौम्यानि वै करीराणि । सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति । ' ( तैब्रा. १।६।४।५ ) इति । करीरनामकान्यङ्कुराणि सोमवल्लीसदृशत्वात् सौम्यानि । आहुतिरपि सोमसंबन्धिनी वृष्टिहेतुः । विधत्ते-- ' यत्करीराणि भवन्ति । सौम्ययैवाऽऽहुत्या दिवो वृष्टिमवरुन्धे । ' ( तैब्रा. १।६।४।५ ) इति । करीरशब्देन खर्जुरीफलान्युच्यन्त इति केचित् । तानि शमीपर्णवद्भक्ष्यत्वोपचारेण तयोः पुरत उपवपेत् । तथा च सूत्रकारः– ' अथाऽऽभ्यां शमीपर्णकरीराण्युपवपति परःशतानि परःसहस्राणि च ' इति ।

नवमं यागं प्रशंसति– ' काय एककपालो भवति । प्रजानां कंत्वाय । ' ( तैब्रा. १।६।४।६ ) इति । सुखित्वायेत्यर्थः । कायः प्रजापतिदेवताकः । दीपपात्रसदृशानि यवपिष्टनिर्मितानि पात्राणि विधत्ते– ' प्रतिपूरुषं करम्भपात्राणि भवन्ति । जाता एव प्रजा वरुणपाशान्मुञ्चति । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा वरुणपाशान्मुञ्चति । ' ( तैब्रा. १।६।४।६ ) इति । दधिसिक्ता यवसक्तवः करम्भः । यजमानस्य गृहे यावन्तः पुरुषाः मनुष्याः तत्संख्यया पात्राणि विधायैकं पात्रमधिकं कुर्यात् । अत एव सूत्रकार आह– ' आमपेषाणां पत्नी करम्भपात्राणि करोति यावन्तो यजमानस्यामात्याः सस्त्रीकास्तावन्त्येकातिरिक्तानि ' इति ।

तदेवमनुब्राह्मणगतेन अनुवाकेन वरुणप्रघासादिविधयो देवताप्रशंसाश्चोक्ताः । अथानुवाकान्तरेण हविरासादनादिप्रयोगा उच्यन्ते । तत्र वेदिद्वये हविःसादनव्यवस्थां विधत्ते– ' उत्तरस्यां वेद्यामन्यानि हवी᳘षि सादयति । दक्षिणायां मारुतीम् । अपधुरमेवैना युनक्ति । अथो ओज एवाऽऽसामवहरति । तस्माद्ब्रह्मणश्च क्षत्राच्च विशोऽन्यतोऽपक्रमिणीः । ' ( तैब्रा. १।६।५।१) इति । मारुत्या आमिक्षाया अन्यान्याग्नेयादीन्यष्टौ हवींषि । मरुतो देवानां मध्ये विशः । अतो मारुत्याः पृथग्वेदिसादनादेना विशोऽपधुरमेव युनक्ति अपक्रमणमेव प्रापयति । धुरः गमनं अपधुरम् । धूःशब्देन बहुविधहविर्वहनयोग्या भूमिरुच्यते । सा चोत्तरगता वेदिः । तस्या अपगमनं यथा भवति तथा मरुद्रूपा एना विशो वेद्यन्तरे योजितवान् भवति । किं चाऽऽसां विशामोजः बलं अवहरत्येव न्यक्करोत्येव । यस्मद्विशां न्यक्कारस्तस्माद्ब्राह्मणात्क्षत्रियाच्चेमा विशोऽन्यतो ग्रामान्तरे वाटिकान्तरे वाऽपक्रामन्ति ।

प्रचारपौर्वापर्यं पाठेनैव प्राप्तं प्रशंसति– ' मारुत्या पूर्वया प्रचरति । अनृतमेवावयजते । वारुण्योत्तरया । अन्तत एव वरुणमवयजते । ' ( तैब्रा. १।६।५।१ ) इति । मारुत्या आमिक्षायाः प्रथमप्रचारेणानृतं अयथाशास्त्रार्थानुष्ठानेन दोषं अवयजते विनाशयति । वारुण्यामिक्षाया उत्तरकालीनप्रचारेण वरुणं वरुणपाशरूपं जलोदररोगं अन्तत एवावयजते सर्वथैव विनाशयति । प्रचारा-

त्प्राचीनेष्वङ्गेषु पूर्वोक्तपौर्वापर्यवैपरीत्यं विधत्ते– ' यदेवाध्वर्युः करोति । तत्प्रतिप्रस्थाता करोति । तस्माद्यच्छ्रेयान् करोति । तत्पापीयान् करोति । ' (तैब्रा. १।६।५। १–२ ) इति । अध्वर्युरुत्तरवेद्यवस्थितताया वारुण्यामिक्षाया अनुष्ठाता, प्रतिप्रस्थाता तु दक्षिणवेद्यां मारुतीमनुतिष्ठति । तत्र यद्यदन्वाधानादिकमेकैकमङ्गमध्वर्युरनुतिष्ठति तत्तदङ्गं प्रतिप्रस्थाता तदनन्तरमेवानुतिष्ठेत् । अत एव च लोकेऽपि संदिग्धेषु लौकिकवैदिकव्यवहारेषु श्रेयान् प्रामाणिकत्वेन संप्रतिपन्नः पुरुषो यदेव करोति तदेव पापीयान् मूढोऽपि करोति ।

अत्र बौधायनेन यदिदमुक्तम्– ' अथ प्रतिप्रस्थाता पत्नीं पृच्छति पत्नि कस्ते जार इति, असाविति तं वरुणो गृह्णातु ' इति, तदिदं विधत्ते– ' पत्नीं वाचयति । मेध्यामेवैनां करोति । अथो तप एवैनामुपनयति । ' ( तैब्रा. १।६।५।२ ) इति । ' पापं प्रख्यापयेत् पापी ' इति स्मृतिकारैरुक्तत्वात् विद्यमानं जारमुद्दिश्य पत्नीं वाचयेत् । तेन च प्रख्यापनेन पत्नीं यागयोग्यां करोति । किंच सभामध्ये मानहानिसहिष्णुत्वरूपं यत्तपस्तदप्येनां पत्नीं प्रतिप्रस्थाता प्रापयति । तस्याश्च पत्न्या लज्जां मुक्त्वा जारनिर्देशं विधत्ते– ' यज्जारꣳ सन्तं न प्रब्रूयात् । प्रियं ज्ञातिꣳ रुन्ध्यात् । असौ मे जार इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयति । ' ( तैब्रा. १।६।५।२ ) इति । तैसा.

[१]**प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः ॥**

मन्त्रकाण्डे प्रधानयागविधिभ्य ऊर्ध्वं ' प्रघास्यान्, मो षू णः, यद्ग्रामे, अक्रन्कर्म ' इत्येते चत्वारो मन्त्रा आम्नाताः । तत्र प्रथममन्त्रस्य विनियोगमापस्तम्ब आह– ' प्रघास्यान् हवामह इति प्रतिप्रस्थाता पत्नीमुदानयति ' इति । पाठस्तु– प्रघास्यानिति । वरुणपाशरूपं कर्म ( प्र )घ्नन्तीति ( वरुण ! )प्रघासाः, तान् अर्हन्तीति ( वरुण ! )प्रघास्याः । यज्ञं वहन्तीति यज्ञवाहसः । दधिसर्पिर्मिश्रैः सक्तुभिर्निष्पादितं पात्रजातं करम्भशब्देनोच्यते । तेन करम्भेण दक्षिणवेदिस्थितेऽग्नौ दंपतिभ्यां हूयमानेन परस्परं समानप्रीतयः सजोषसः । तथाविधान् मरुतो हवामहे आह्वयामः । विधत्ते– ' प्रघास्यान् हवामह इति पत्नीमुदानयति । अह्वैवैनाम् । ' ( तैब्रा. १।६।५।३ ) इति । एनां पत्नीं अनेन मन्त्रपाठेन अह्वैव आहूतवानेव भवति । तैसा.

[१]**मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया ।<br>मही ह्यस्य मीढुषो यव्या । हविष्मतो मरुतो वन्दते गीः ॥**

अवशिष्टस्य मन्त्रत्रयस्य विनियोगमाह आपस्तम्बः– "अथान्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेणोत्तरां वेदिमैषीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नधि निधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणेऽग्नौ शूर्पेण जुहुतः । ' मो षू ण इन्द्र ' इति यजमानः पुरोनुवाक्यामन्वाह । ' यद्ग्रामे ' इत्युभौ याज्याम् । 'अक्रन्कर्म कर्मकृतः ' इति विपर्यन्तौ जपतः । " इति । तत्र प्रथममन्त्रपाठस्तु– मो षू ण इति । हे इन्द्र देव, नः अस्मान् पृत्सु संग्रामेषु मो मैव प्रवर्तयेति शेषः । तदेतदप्रवर्तनं सु समीचीनं, वैरिणामेवासंभवात् । हे शुष्मिन् बलवन् , ते तव प्रसादात् अवया अवयजनं अनिष्टनाशनं अस्तु स्म सर्वदा भवतु । यस्मात्कारणान्मीढुषो वृष्टिसेचनसमर्थस्य तव प्रसादादस्माकं मही भूमिः यव्या यवादिकृत्स्नधान्ययोग्या तस्मादनिष्टनाशनमित्यन्वयः । गीः अस्मदीया स्तुतिरूपा वाक् हविष्मतः करम्भपात्ररूपहविर्युक्तान् मरुतः वन्दते नमस्करोति स्तौतीत्यर्थः । तैसा.

---

( १ ) तैसं. १।८।३।१ ; कासं. ९।४ ( ९ ) ; मैसं. १।१०।२ ( ३ ) ; शुसं. ३।४४ प्रघास्यान् ( प्रघासिनो ) तो यज्ञवाहसः ( तश्च रिशादसः ) ; शब्रा. २।५।२।२१ शुसंवत् .

( १ ) ऋसं. १।१७३।१२ इन्द्र ... ह्यस्य ( इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः । महश्चिद्यस्य ) ; तैसं. १।८।३।१ ; कासं. ९।४ ( १० ) इन्द्र ( इन्द्रात्र ) देवास्तु ( देवा अस्तु ) वया ( वयाः ) ह्यस्य ( देवस्य ) षो यव्या । ( षोऽवया ) ; मैसं. १।१०।२ ( ४–५ ) इन्द्र ( इन्द्रात्र ) वया ( वयाः ) ह्यस्य ( चिद्यस्य ) ; शुसं. ३।४६ ऋसंवत्; शब्रा. २।५।२।२८ ऋसंवत् .

**¹यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यच्छुद्रे यदर्ये एनश्चकृमा वयम् । यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहा ॥**

द्वितीयमन्त्रपाठस्तु— यद्ग्राम इति । अत्र सप्त यच्छब्दाः सप्तधावाक्यभेदार्थाः । स च आदरार्थः । अर्ये स्वामिनि वैश्ये वा । एकस्य दंपत्योर्मध्ये कस्यचित् धर्मणि शास्त्रीये धर्मे । वयं यजमानो दारा दासाश्च ग्राम( ? ग्रामादि )- विषये यत्पापमधिकं चकृम तस्य सर्वस्यावयजनं विनाशकं हे करम्भपात्रजात त्वमसि, अतः स्वाहा त्वां ददामीत्यर्थः ।

एतयोरुभयोः याज्यापुरोनुवाक्ययोः हौत्रत्वमपवदितुं विधत्ते— 'यत्पत्नी पुरोनुवाक्यामनुब्रूयात् । निर्वीर्यो यजमानः स्यात् । यजमानोऽन्वाह । आत्मन्नेव वीर्यं धत्ते । उभौ याज्याᳫ सवीर्यत्वाय । ' ( तैब्रा. १।६।५।३ ) इति । याज्यादृष्टान्तेन पुरोनुवाक्यायामपि प्राप्तां पत्नीमर्थवादेन वारयति । पापरूपेण प्रविश्य वरुणो यज्ञघातीति वरुणो याज्यायामेनःशब्देन विवक्षित इति दर्शयति— ' यद्ग्रामे यदरण्य इत्याह । यथोदितमेव वरुणमवयजते ' । ( तैब्रा. १।६।५।३ ) इति । दक्षिणवेदिगतेऽग्नौ होमं विधातुं प्रस्तौति— ' यजमानदेवत्यो वा आहवनीयः । भ्रातृव्यदेवत्यो दक्षिणः । यदाहवनीये जुहुयात् । यजमानं वरुणपाशेन ग्राहयेत् ।' ( तैब्रा. १।६।५।३–४ ) इति । उत्तरदिक्स्थायां वेद्यामुत्तरवेद्युपवापेन निष्पन्न आहवनीयः । इतरवेदिगतोऽग्निः दक्षिणः । विधत्ते— ' दक्षिणेऽग्नौ जुहोति । भ्रातृव्यमेव वरुणपाशेन ग्राहयति ।' ( तैब्रा. १।६।५।४ ) इति । जुहूमपवदितुं विधत्ते— ' शूर्पेण जुहोति । अन्यमेव वरुणमवयजते ।' ( तैब्रा. १।६।५।४ ) इति । अन्नसाधने शूर्पे भवं अन्यं भोज्यद्रव्यविनाशिनमित्यर्थः । होमे गुणद्वयं क्रमेण विधत्ते— 'शीर्षन्नधिनिधाय जुहोति । शीर्षत एव वरुणमवयजते । प्रत्यङ्तिष्ठन् जुहोति । प्रत्यङ्ङेव वरुणपाशान्निर्मुच्यते ।' (तैब्रा. १।६।५।४–५) इति । करम्भपात्रपूर्णे शूर्पे शिरसि सकृन्निधाय पश्चाज्जुहुयात् । तेन शिरोरोगादिकं शाम्यति । पश्चिमाभिमुखेन होमेन प्रत्यङ्ङेव वरुणस्य प्रतिकूलत्वेन प्रबल एव सन् वरुणपाशान्निष्कृष्टो मुच्यते । तैसा.

**¹अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः ॥**

तृतीयमन्त्रपाठस्तु— अक्रन्निति । कर्मकृतः अध्वर्युप्रमुखा यजमानपत्न्यन्ताः सर्वे । मयोभुवा, मयः शिवं सुखम्, ' यद्वै शिवं तन्मयः ' इति श्रुतेः । तत्सुखं भावयित्र्या मन्त्रोच्चारणरूपया वाचा सह करम्भपात्रहोमान्तं कर्म अक्रन् कृतवन्तः । हे सुदानवः सुष्ठु हविषः प्रदातारोऽध्वर्युप्रभृतयः, देवार्थमिदं कर्म कृत्वा अस्तं प्रेत स्वगृहं गच्छत ।

अस्मिन् मन्त्रे उत्तरार्धतात्पर्यं दर्शयति— ' अक्रन्कर्म कर्मकृत इत्याह । देवानृणं निरवदाय । अनृणा गृहानुपप्रेतेति वावैतदाह ।' ( तैब्रा. १।६।५।५ ) इति । देवान् प्रति प्रत्यर्पणीयं यदृणं तन्निरवदाय निःशेषेण प्रत्यर्प्य । अथ अवभृथद्रव्यं विधातुं प्रस्तौति— ' वरुणगृहीतं वा एतद्यज्ञस्य । यद्यजुषा गृहीतस्यातिरिच्यते । तुषाश्च निष्कासश्च ।' ( तैब्रा. १।६।५।५ ) इति । वारुणयागे मेषार्थेषु यवेषु ये तुषा यश्च निष्कासः पात्रलग्न आमिक्षांशलेपः तदुभयं पूर्वं मन्त्रेण गृहीतस्य द्रव्यस्यातिरिक्तोंऽशः । अतो यज्ञसंबद्धमेतद्वरुणगृहीतमेव । विधत्ते— ' तुषैश्च निष्कासेन चावभृथमवैति । वरुणगृहीतेनैव वरुणमवयजते ।' (तैब्रा. १।६।५।५) इति । अत्रावभृथशब्देन सौमिकावभृथधर्मोपेतं कर्मोच्यते । तदेतत्प्रत्यभिज्ञापयितुं तत्रत्यविधीन् सार्थवादाननुवदति— ' अपोऽवभृथमवैति । अप्सु वै वरुणः । साक्षादेव वरुणमवयजते ।

---

( १ ) **तैसं.** १।८।३।१–२ ; **कासं.** ९।४ ( ११ ) यच्छूद्रे ... मसि ( यदेनश्चकृमा वयं यदप्सश्चकृमा वयम् । यदेकस्यापि धर्मण्येतत्तदवयजामहे ) : ३८।५ ( ५९ ) ( स्वाहा० ) ; **मैसं.** १।१०।२ ( ६ ) यच्छूद्रे ... स्वाहा ( यदेनश्चकृमा वयᳫ यदप्सश्चकृमा वयम् । तदेकस्यापि चेतसि तदेकस्यापि धर्मणि । तस्य सर्वस्याᳫ ह्योऽवयजनमसि ) ; **शुसं.** ३।४५ यच्छूद्रे .... मसि ( यदेनश्चकृमा वयमिदं तदवयजामहे ) : २०।१७ यदर्य ए ( यदर्ये यदे ) ( स्वाहा० ) ; **तैब्रा.** २।६।६।२ ( स्वाहा० ).

( १ ) **तैसं.** १।८।३।२ ; **कासं.** ९।४ ( १२ ) ; **मैसं.** १।१०।२ ( ७ ) भुवा ( भ्वा ) ; **शुसं.** ३।४७ सुदानवः ( सचाभुवः ).

'प्रतियुतो वरुणस्य पाशः' इत्याह । वरुणपाशादेव निर्मुच्यते । अप्रतीक्षमायन्ति । वरुणस्यान्तर्हित्यै । 'एधोऽस्येधिषीमहि' इत्याह । समिधैवाग्निं नमस्यन्त उपायन्ति । 'तेजोऽसि तेजो मयि धेहि' इत्याह । तेज एवाऽऽत्मन्धत्ते ।' ( तैब्रा. १।६।५।५–६ ) इति । अपः प्रति अवभृथमनुतिष्ठेत् अप्सु कुर्यादित्यर्थः । अपामधिपतित्वादप्सु वरुणस्तिष्ठति । अतोऽत्र होमेन वरुणं साक्षादेव व्यवधानमन्तरेणैव विनाशयति । कर्मानुष्ठानादूर्ध्वमुदकसमीपं 'प्रतियुतः' इत्यनेन मन्त्रेण परित्यजेत् । उदकेषु स्थितो यो वरुणस्य पाशः स एष प्रतियुतः परित्यक्तः । परित्यज्य पृष्ठदेशमपश्यन्त एव प्रत्यागच्छेयुः । आगत्य 'एधोऽसि, तेजोऽसि' इति द्वाभ्यामाहवनीये समिधावादध्यात् । हेऽग्ने, एधोऽसि अनया समिधाऽभिवृद्धोऽसि । अतस्त्वत्प्रसादाद्वयमप्येधिषीमहि समृद्धा भवेम । समिज्जन्यज्वालया तेजोऽसि, अतो मयि तेजः स्थापय । तैसा.

चातुर्मास्यानि– ( ३ ) साकमेधाः

**'अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता, मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुं, मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम् ॥**

तृतीये वरुणप्रघासाख्यं द्वितीयं चातुर्मास्यपर्वोक्तम् । चतुर्थपञ्चमषष्ठेषु साकमेधाख्यं तृतीयं पर्वोच्यते । तच्च पर्व दिनद्वयेऽनुष्ठेयम् । तदाहाऽऽपस्तम्बः– 'ततश्चतुर्षु मासेषु पूर्वस्मिन्पर्वण्युपक्रम्य द्व्यहं साकमेधैर्यजते' इति । तत्र प्रथमदिने कर्तव्यानि त्रीणि हवींषि विधत्ते– अग्नय इति । अनीकवते सैन्यवते । उद्यता सूर्येण साकमित्युदयकालविधिः । सम्यक्तपनं संतपनं, तत्संबन्धिनः सांतपनाः अनिष्टविनाशिन इत्यर्थः । मेधः यज्ञ, गृहं च मेधश्च तदुभयवन्तो गृहमेधिनः उभयपालका इत्यर्थः । सर्वासां यजमानस्य यावत्यो गावः सन्ति तावतीनाम् ।

विहितास्विष्टिषु प्रथमेष्टिदेवतागुणं प्रशंसति– 'देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् । ममेयमनीकवती तनूः । तां प्रीणीत । अथासुरानभिभविष्यथेति । ते देवा अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निरवपन् । सोऽग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः । चतुर्धाऽनीकान्यजनयत । ततो देवा अभवन् । पराऽसुराः । यदग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति । अग्निमेवानीकवन्तꣳ स्वेन भागधेयेन प्रीणाति । सोऽग्निरनीकवान्त्स्वेन भागधेयेन प्रीतः । चतुर्धाऽनीकानि जनयते ।' ( तैब्रा. १।६।६।१–२ ) इति । चतसृष्वपि दिक्षु असुरानवरोद्धुं चतुर्विधानि सैन्यानि । सूर्योदयकालं प्रशंसति– 'असौ वा आदित्योऽग्निरनीकवान् । तस्य रश्मयोऽनीकानि । साकꣳ सूर्येणोद्यता निर्वपति । साक्षादेवास्मा अनीकानि जनयति ।' ( तैब्रा. १।६।६।२ ) इति । उष्णत्वात् आदित्यस्याग्नित्वम् । उत्साहोपेतयोद्भवत्सर्वतस्त्वरया प्रसराद्रश्मीनामनीकत्वम् ।

द्वितीयाया इष्टेर्देवताया गुणं प्रशंसति– 'तेऽसुराः पराजिता यन्तः । द्यावापृथिवी उपाश्रयन् । ते देवा मरुद्भ्यः सांतपनेभ्यश्चरुं निरवपन् । तान्द्यावापृथिवीभ्यामेवोभयतः समतपन् । यन्मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति । द्यावापृथिवीभ्यामेव तदुभयतो यजमानो भ्रातृव्यान्त्संतपति ।' ( तैब्रा. १।६।६।२–३ ) इति । तानसुरान् द्यावापृथिवीभ्यामेव कृत्स्नयोरपि द्यावापृथिव्योरुभयतोऽसुराणामधस्ताच्चोपरिष्टाच्च समतपन् प्रहाराद्युपद्रवेण संतापितवन्तः । कालं प्रशंसति– 'मध्यंदिने निर्वपति । तर्हि हि तेक्ष्णिष्ठं तपति ।' ( तैब्रा. १।६।६।३ ) इति । तर्हि मध्याह्नकाले तेक्ष्णिष्ठं अतिशयेन तीक्ष्णं यथा भवति तथा सूर्यस्तपति, हि प्रसिद्धमेतत् । चरुं प्रशंसति– 'चरुर्भवति । सर्वत एवैनान्त्संतपति ।' ( तैब्रा. १।६।६।३ ) इति । चरुपाकभाण्डस्य सर्वतस्तप्यमानत्वात् शत्रूणामपि सर्वतः संतापः ।

तृतीयेष्टेः देवताविशेषणं प्रशंसति– 'ते देवाः श्वो विजयिनः सन्तः । सर्वासां दुग्धे गृहमेधीयं चरुं निरवपन् । आशिता एवाद्योपवसाम । कस्य वा हेदम् । कस्य वा श्वो भवितेति । स शृतोऽभवत् । तस्याहुतस्य नाऽऽश्नन् । नहि देवा अहुतस्याश्नन्ति । तेऽब्रुवन् ।

( १ ) तैसं. १।८।४।१.

कस्मा इमꣳ होष्याम इति । मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन् । तं मरुद्भ्यो गृहमेधिभ्योऽजुहवुः । ततो देवा अभवन् । पराऽसुराः । यस्यैवं विदुषो मरुद्भ्यो गृहमेधिभ्यो गृहे जुह्वति । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति ।' (तैब्रा. १।६।६।३–५) इति । ते देवा अस्मिन्दिने प्रथमेष्ट्या सैन्यानि संपाद्य द्वितीयेष्ट्या विरोधिनोऽसुरान् सर्वतः संतप्य पुनः परेद्युरपि जेष्याम इत्यभिप्रेत्य गृहमेधीयं निरुप्येत्थं विचारितवन्तः– इदं हविरद्य कस्य वा भवति, कस्य वा श्वो भविष्यतीति न ज्ञायते, तस्माद्वयं सह भुक्तवन्त एवाग्निसमीपे वसामेति । एतावति विचारकाले चरुः पक्वोऽभूत् । तदानीं देवा अहुतत्वात्तं चरुं नैवाशितवन्तः । यस्माद्देवाः क्वाप्यहुतं नाश्नन्ति तस्माद्युक्तमेवैतत् । ततस्ते देवाः परस्परं विचारितवन्तः । किमिति ? कस्मै देवायेमं चरुं होष्यामः ? इति । ततो निश्चित्य गृहमेधिभ्यो हुत्वा विजयं प्राप्ता असुराश्च पराभूताः ।

अस्मिन् कर्मणि ' आज्यभागौ यजति ' इत्यादिना कानिचिदङ्गानि विधास्यन्ते । तत्र यावदुक्ताङ्गोपेतमपूर्वमिदं कर्म, न तु दर्शपूर्णमासविकृतिरिति जैमिनिर्विचारितवान् । ततोऽर्थप्राप्तः सामिधेन्याद्यभावः । तमिमं विस्पष्टयितुमनुवदति– ' यद्वै यज्ञस्य पाकत्रा क्रियते । पशव्यं तत् । पाकत्रा वा एतत्क्रियते । यन्नेध्माबर्हिर्भवति । न सामिधेनीरन्वाह । न प्रयाजा इज्यन्ते । नानूयाजाः । य एवं वेद । पशुमान्भवति । ' ( तैब्रा. १।६।६।५–६ ) इति । यज्ञस्य संबन्धि यदनुष्ठानं पाकत्रा पाकेषु पाकयज्ञवदित्यर्थः । तस्य पशव्यत्वं युक्तम्, ' पाकयज्ञं वा अन्वाहिताग्नेः पशव उपतिष्ठन्ते ' इति श्रुतत्वात् । यस्मादत्रेध्माबर्हिरादयो न सन्ति तस्मादेतत्कर्म पाकयज्ञवदेव क्रियते । प्राच्यमङ्गं विधत्ते– ' आज्यभागौ यजति । यज्ञस्यैव चक्षुषी नान्तरेति । ' ( तैब्रा. १।६।६।६ ) इति । यागवेलायामुद्देश्यां देवतां प्रशंसति– ' मरुतो गृहमेधिनो यजति । भागधेयेनैवैनान्त्समर्धयति ।' (तैब्रा. १।६।६।६) इति । उदीच्यमङ्गं विधत्ते– ' अग्निं स्विष्टकृतं यजति प्रतिष्ठित्यै । ' ( तैब्रा. १।६।६।६ ) इति । अङ्गान्तरं विधत्ते– ' इडान्तो भवति । पशवो वा इडा । पशुष्वेवोपरिष्टात्प्रतितिष्ठति । ' ( तैब्रा. १।६।६।६–७ ) इति । अर्थसिद्धं चतुर्धाकरणाद्युदीच्याङ्गान्तराभावं द्योतयितुमन्तशब्दः ।

तदेवमनुब्राह्मणगतेन एकेनानुवाकेन पूर्वदिनेऽनुष्ठेया मुख्यब्राह्मणविहितास्तिस्र इष्टयो व्याख्याताः । अनुवाकान्तरेण द्वितीयदिने कर्तव्यत्वेन विहिता इष्टयो व्याख्यातव्याः । तत्राऽऽदौ तावद्गृहमेधीयशेषभूतं किंचिदङ्गं विधातुं प्रस्तौति– ' यत्पत्नी गृहमेधीयस्याश्नीयात् । गृहमेध्येव स्यात् । वि त्वस्य यज्ञ ऋध्येत । यन्नाश्नीयात् । अगृहमेधी स्यात् । नास्य यज्ञो व्यृध्येत । ' (तैब्रा. १।६।७।१ ) इति । यदि पत्नी गृहमेधीयस्य चरोर्भागं भुञ्जीत तदा यजमानो गृहेण यज्ञेन चोपेतो भवति । किंत्वस्मिन्पक्षे यजमानस्य यज्ञो व्यृद्धो भवेत् । अभोजनपक्षे तु व्यृद्धत्वदोषो न भवति । किंतु गृहमेधित्वाभावः । विधत्ते– ' प्रतिवेशं पचेयुः । तस्याश्नीयात् । गृहमेध्येव भवति । नास्य यज्ञो व्यृध्यते । ' ( तैब्रा. १।६।७।१ ) इति । प्रातिस्विकत्वेन पत्नीं विशतीति प्रतिवेशः पत्न्यर्थ ओदनः, तं दक्षिणाग्नौ पक्तारः पचेयुः । तथा च आपस्तम्बः– ' दक्षिणाग्नौ पत्न्याः प्रतिवेशमोदनं पचति ' इति । पत्नी तमोदनमश्नीयात्, ततो नोक्तदोषद्वयम्, अभोजनाभावात् गृहमेधीयभोजनाभावाच्च ।

भोजनादीन् विधातुं प्रस्तौति– ' ते देवा गृहमेधीयेनेष्ट्वा । आशिता अभवन् । आञ्जताभ्यञ्जत । अनु वत्सानवासयन् । तेभ्योऽसुराः क्षुधं प्राहिण्वन् । सा देवेषु लोकमवित्त्वा । असुरान् पुनरगच्छत् । ' ( तैब्रा. १।६।७।२ ) इति । आशिताः भुक्तवन्तः । आञ्जत नेत्रयोरञ्जनं प्रक्षिप्तवन्तः । अभ्यञ्जत अभ्यङ्गं कृतवन्तः । धेनूरनु वत्सानवासयन् स्तनपानार्थमवासृजन् । तदानीमसुरा देवानां समीपे क्षुधं प्रेरितवन्तः । सा च क्षुत्तेषु तृप्तेषु देवेषु स्थानमलब्ध्वा पुनरप्यसुरानेव प्राप्नोत् । विधत्ते– ' गृहमेधीयेनेष्ट्वा । आशिता भवन्ति । आञ्जतेऽभ्यञ्जते । अनु वत्सान्वासयन्ति । भ्रातृव्यायैव तद्यजमानः क्षुधं प्रहिणोति । ' ( तैब्रा. १।६।७।२–३ ) इति ।

तदेतदभिप्रेत्य पूर्वमाशिता एवाद्योपवसामेत्यादिर्दैवविचार उपा( १ दा )हृतः । तैसा.

**[1]पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत ।**
**वस्नेव वि क्रीणावहा इषमूर्जं शतक्रतो ॥**

अत्र गृहमेधीयसंनिधौ द्वौ मन्त्रावाम्नातौ । तयोर्विनियोगमापस्तम्ब आह– ‘ शरनिष्कासस्य दर्वी पूरयित्वा वृषभमाहूय तस्य रवते ‘ पूर्णा दर्वि परा पत ’ इत्यनुद्रुत्योत्तरया गार्हपत्ये जुहुयात् । यदृषभो न रुयाद् ब्रह्मा ब्रूयाज्जुहुधीति । ’ इति । पच्यमाने चरौ क्षीरमण्डवद्घनीभूतो योंऽश उपरि तिष्ठति सोऽयं शरनिष्कासः । तस्य रवते वृषभस्य शब्दे निष्पन्ने सति । प्रथममन्त्रपाठस्तु– पूर्णा दर्वीति । हे दर्वि, त्वं शरनिष्कासेन पूर्णा सती परापत इन्द्रं प्रति गच्छ । तत्प्रसादाद्धनेन तज्जन्यबलेन सुपूर्णा सती पुनरस्मान् प्रत्यागच्छ । हे शतक्रतो, आवां वस्नेव विक्रीणावहै । यथा लोके कश्चित्स्वकीयं धनं दत्त्वा तण्डुलादिकं क्रीणाति तद्वदहमिन्द्राय तुभ्यं शरनिष्कासं दत्त्वा त्वत्त इषमूर्जं च क्रीणामि । तदिदमुच्यते– वस्नेव वसुनेव धनेनेव विक्रीणावहा इति । तैसा.

**[2]देहि मे ददामि ते नि मे धेहि नि ते दधे ।**
**निहारमिन्नि मे हरा निहारं नि हरामि ते ॥**

द्वितीयमन्त्रपाठस्तु– देहीति । हे इन्द्र, मे यदपेक्षितं तत्त्वं देहि । तव यदपेक्षितं तदहं ददामि । दत्त्वा च त्वं मम समीपे निधेहि अवस्थापय । तव समीपेऽहमवस्थापयामि । तदुभयं सकृदेव न भवति, किन्तु निहारमित् पुनः पुनः निर्हृत्यैव समानीयैव मे समीपे निहर नितरां स्थापय । अहमपि पुनः पुनर्निर्हृत्य ते समीपे स्थापयामि ।

यथोक्तं निष्कासहोमं प्रस्तौति– ‘ ते देवा गृहमेधीयेनेष्ट्वा । इन्द्राय निष्कासं न्यदधुः । अस्मानेव श्व इन्द्रो निहितभाग उपावर्तितेति । तानिन्द्रो निहितभाग उपावर्तत । ’ (तैब्रा. १।६।७।३) इति । उपावर्तिता समीपमागमिष्यति । उपावर्तत समीपमागच्छत् । विधत्ते– ‘ गृहमेधीयेनेष्ट्वा । इन्द्राय निष्कासं निदध्यात् । इन्द्र एवैनं निहितभाग उपावर्तते । ’ ( तैब्रा. १।६।७।३ ) इति । होमाय प्राप्तमाहवनीयं वारयितुं विधत्ते– ‘गार्हपत्ये जुहोति । भागधेयेनैवैनं समर्धयति । ’ ( तैब्रा. १।६।७।३–४ ) इति । यागकाले ध्वनिं कर्तुमृषभस्याऽऽह्वानं विधत्ते– ‘ ऋषभमाह्वयति । वषट्कार एवास्य सः । अथो इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते । ’ ( तैब्रा. १।६।७।४ ) इति । तैसा.

**[1]मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यता, आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुं, ऐन्द्राग्नमेकादशकपालं, ऐन्द्रं चरुं, वैश्वकर्मणमेककपालम् ॥**

द्वितीयदिनेऽनुष्ठेयानि नव हवींषि विधत्ते– मरुद्भ्य इति । आद्यस्य हविष उत्तरहविरष्टकस्य च कालभेदात् प्रयोगभेदो द्रष्टव्यः । क्रीडा एषामस्तीति क्रीडिनः । तदेतत्क्रीडित्वं विशेषणं तस्य हविषः पाठप्राप्तं प्राथम्यं च प्रशंसति– ‘ इन्द्रो वृत्रꣳ हत्वा । परां परावतमगच्छत् । अपाराधमिति मन्यमानः । सोऽब्रवीत् । क इदं वेदिष्यतीति । तेऽब्रुवन्मरुतो वरं वृणामहै । अथ वयं वेदाम । अस्मभ्यमेव प्रथमꣳ हविर्निरुप्याता इति । त एनमध्यक्रीडन् । तत्क्रीडिनां क्रीडित्वम् । यन्मरुद्भ्यः क्रीडिभ्यः प्रथमꣳ हविर्निरुप्यते विजित्यै । ’ ( तैब्रा. १।६।७।४–५ ) इति । परां परावतं अत्यन्तदूरम् । अपाराधं द्रोहमकार्षम् । भीत्या पलायमानः स इन्द्रो मरुतां समीपे

( १ ) असं. ३।१०।७ दर्वि (दर्वे) उत्तरार्धे ( सर्वान्यज्ञान्त्संभुञ्जन्तीषमूर्जं न आ भर । ) ; तैसं. १।८।४।१ ; कासं. ९।५(१४) दर्वि ( दर्वे ) वस्नेव ( वस्न इव ) ; मैसं. १।१०।२ ( ८ ) दर्वि (दर्वे) ; शुसं. ३।४९ ; शब्रा. २।५।३।१७ ; आश्रौ. १।२।१८.

( २ ) तैसं. १।८।४।१–२ ; कासं. ९।५ ( १५ ) मे हरा ( मे हर ) हरामि ते ॥ + ( अपामित्यमिव संभरेषमूर्जꣳ शतक्रतो ॥ ) ; मैसं. १।१०।२ ( ९ ) दधे ( दधौ ) उत्तरार्धे ( अपामित्यमिव संभर को अम्बाददते ददत् । ) ; शुसं. ३।५० उत्तरार्धे ( निहारं च हरासि मे निहारं निहराणि ते स्वाहा । ) ; शब्रा. २।५।३।१९ शुसंवत् ; आश्रौ. १।२।१८ उत्तरार्धे ( अपामित्यमिव संभर कोऽम्वा ददते ददत् । ).

( १ ) तैसं. १।८।४।२–१।८।५।१.

किंचिदब्रवीत्— वृत्रो मृतो न वेतीदं समीपे गत्वा को वेदिष्यतीति। ते च मरुतो वरे दत्ते वेदिष्याम इत्यब्रुवन्। इतरेभ्योऽग्न्यादिभ्यः प्रथमो निर्वापो वरः। ततस्ते मरुत एनं भूमौ पतितं वृत्रमधिरुह्य बहुविधेन नृत्येनाक्रीडन्। क्रीडित्वा च मृतोऽयमिति ज्ञातवन्तः। तस्मादेतेषां क्रीडित्वं विशेषणं संपन्नम्। निर्वापकालं प्रशंसति— ‘साकꣳ सूर्येणोद्यता निर्वपति। एतस्मिन्वै लोक इन्द्रो वृत्रमहन्त्समृद्ध्यै।’ ( तैब्रा. १।६।७।५ ) इति। एतस्मिन्नेव लोके सूर्योदयेनावलोक्यमानभूप्रदेशे। वैश्वदेवपर्वण्युक्तमाग्नेयादिपञ्चकप्रशंसकं वरुणप्रघासपर्वण्युक्तमैन्द्राग्नप्रशंसकं च ब्राह्मणमत्रातिदिशति— ‘एतद्ब्राह्मणान्येव पञ्च हवीꣳषि। एतद्ब्राह्मण ऐन्द्राग्नः।’ ( तैब्रा. १।६।७।५ ) इति। चरोरैन्द्रत्वं प्रशंसति— ‘अथैष ऐन्द्रश्चरुर्भवति। उद्धारं वा एतमिन्द्र उदहरत। वृत्रꣳ हत्वा। अन्यासु देवतास्वधि। यदेष ऐन्द्रश्चरुर्भवति। उद्धारमेव तं यजमान उद्धरते। अन्यासु प्रजास्वधि।’ ( तैब्रा. १।६।७।५–६ ) इति। अन्यासु अग्न्यादिदेवतासु अधिकोऽयमित्येतमुद्धारं उत्कर्षाभिमानं उदहरत उत्पादितवान्। विश्वकर्मरूपामन्त्यहविषो देवतां प्रशंसति— ‘वैश्वकर्मण एककपालो भवति। विश्वान्येव तेन कर्माणि यजमानोऽवरुन्धे।’ ( तैब्रा. १।६।७।६ ) इति। तैसा.

**सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति। पितृभ्यो बर्हिषद्भ्यो धानाः। पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्॥**

चतुर्थे साकमेधाख्ये तृतीये पर्वणि प्रधानहवींष्युक्तानि। पञ्चमे तदीयशेषो महापितृयज्ञ उच्यते। आदौ तावत्त्रीणि हवींषि विधत्ते— सोमायेति। पितरोऽस्य सन्तीति पितृमान् पितृस्वामीत्यर्थः। बर्हिषि यज्ञे सीदन्तीति बर्हिषदः। धानाः भृष्टयवाः। अग्निष्वात्ताः अयज्ञनिष्ठाः। अभिवान्या मृतवत्सा धेनुः। क्षीरे यवपिष्टं प्रक्षिप्य मिश्रीकृतं द्रव्यं मन्थः। तदिदं हविस्त्रयं पितृयज्ञः। तस्य च पितृयज्ञस्य विधिमर्थवादेनोन्नयति— ‘वैश्वदेवेन वै प्रजापतिः प्रजा असृजत। ता वरुणप्रघासैर्वरुणपाशादमुञ्चत्। साकमेधैः प्रत्यस्थापयत्। त्र्यम्बकै रुद्रं निरवादयत। पितृयज्ञेन सुवर्गं लोकमगमयत्। यद्वैश्वदेवेन यजते। प्रजा एव तद्यजमानः सृजते। ता वरुणप्रघासैर्वरुणपाशान्मुञ्चति। साकमेधैः प्रतिष्ठापयति। त्र्यम्बकै रुद्रं निरवदयते। पितृयज्ञेन सुवर्गं लोकं गमयति।’ ( तैब्रा. १।६।८।१–२ ) इति। ‘प्रतिपुरुषमेककपालान्निर्वपति’ इति विधास्यमाना यागाः त्र्यम्बकाः, तैः क्रूरं रुद्रं परितोष्य निःसारितवान्। तत्र स्वर्गादिलोकहेतुत्वेनात्यन्तप्रशस्तत्वात्पितृयज्ञः कर्तव्य इत्यभिप्रायः। अत्र हेयं पक्षं पूर्वपक्षतया विधत्ते— ‘दक्षिणतः प्राचीनावीती निर्वपति। दक्षिणावृद्धि पितृणाम्।’ ( तैब्रा. १।६।८।२ ) इति। गार्हपत्यस्य दक्षिणदेशे स्थित्वा प्राचीनावीती सन् उक्तानां हविषां निर्वापं कुर्यात्। यस्मात्पितृणां संबन्धि कर्म दक्षिणावृत् प्रायेण दक्षिणस्यां दिशि वर्तते। तं पक्षं दूषयित्वा सिद्धान्तं विधत्ते— ‘अनादृत्य तत्। उत्तरत एवोपवीय निर्वपेत्। उभये हि देवाश्च पितरश्चेज्यन्ते।’ ( तैब्रा. १।६।८।२ ) इति। यत्रैकोद्दिष्टश्राद्धादौ पितर एव पूज्यन्ते तत्र दक्षिणावृत्त्वमस्तु। इह त्वाज्यभागादिदेवा अग्निष्वात्तादिपितरश्चेज्यन्ते। अतो देवानां प्रियायोत्तरतोऽवस्थानमुपवीतं च। तर्हि पितॄणां प्रीतिर्न स्यादित्याशङ्क्य विध्यन्तरेण दक्षिणावृत्त्वं संपादयति— ‘अथो यदेव दक्षिणार्धेऽधिश्रयति। तेन दक्षिणावृत्।’ (तैब्रा. १।६।८।२ ) इति। हविः पाकाय गार्हपत्यस्य दक्षिणभागेऽधिश्रयेत्। तेनैतत्कर्म पितृप्रीत्यै दक्षिणावृदपि भविष्यति। एतदेव कालरूपेण प्रशंसति— ‘सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति। संवत्सरो वै सोमः पितृमान्। संवत्सरमेव प्रीणाति। पितृभ्यो बर्हिषद्भ्यो धानाः। मासा वै पितरो बर्हिषदः। मासानेव प्रीणाति। यस्मिन् वा ऋतौ पुरुषः प्रमीयते। सोऽस्यामुष्मिँल्लोके भवति।’ ( तैब्रा. १।६।८।२–३ ) इति। ‘वसन्ते ज्योतिषा यजेत’ इति विधानात् सोमस्य संवत्सरत्वं, स एव पितॄणां पतिरित्यस्य पितृमत्त्वं, ‘मासि पितृभ्यः क्रियते’ इति अमावास्याश्राद्धाभिधानात् पितॄणां मासत्वं चोपचर्यते। ‘यदि वसन्ता प्रमीयते, वसन्तो भवति। यदि ग्रीष्मे, ग्रीष्मः’ इत्यभिधानात्तत्-

इतुदेवताप्रीतिरेवास्यामुष्मिन्नृतुसंबन्धः। भर्जनेन क्वचिदीषत्कृष्णत्वं क्वचित्कृष्णत्वं क्वचिदकृष्णत्वमित्येवंविधं त्रैविध्यं विधत्ते– ' बहुरूपा धाना भवन्ति। अहोरात्राणामभिजित्यै।' (तैब्रा. १।६।८।३) इति। अहानि अकृष्णानि, अमावास्यारात्रिः कृष्णा, अन्यास्तु रात्रय ईषत्कृष्णाः। तृतीययागदेवतां प्रशंसति– ' पितृभ्योऽग्निष्वात्तेभ्यो मन्थम्। अर्धमासा वै पितरोऽग्निष्वात्ताः। अर्धमासानेव प्रीणाति।' (तैब्रा. १।६।८।३–४) इति। बर्हिषदां अनुष्ठितयागत्वात् मासत्वम्। अग्निष्वात्तानां यागाभावादर्धमासत्वम्। एतच्च ' ये वै यज्वानः, ते पितरो बर्हिषदः' इत्यादिना वक्ष्यते। मृतवत्सां प्रशंसति– ' अभिवान्यायै दुग्धे भवति। सा हि पितृदेवत्यं दुहे।' (तैब्रा. १।६।८।४) इति। पितृदेवत्यं पितृदेवताभ्यो हितम्। मृताः पुरुषाः पितरो भवन्ति, अभिवान्या च मृतवत्सेति सजातीयत्वात्तत्र तेषां प्रीतिः।

यदुक्तमापस्तम्बेन– ' उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौति, अर्धाः पिष्टानामावृता सक्तून् कृत्वाऽभिवान्यायै दुग्धस्यार्धशरावे सक्तूनोप्यैकयेक्षुशलाकयेक्षुकाण्डेन वा दक्षिणामुखस्त्रिः प्रसव्यमनारभ्योपमन्थति।' इति, तत्रार्धशरावे मन्थनं विधत्ते– ' यत्पूर्णम्। तन्मनुष्याणाम्। उपर्यर्धो देवानाम्। अर्धः पितृणाम्। अर्ध उपमन्थति। अर्धो हि पितृणाम्।' (तैब्रा. १।६।८।४) इति। भुञ्जाना मनुष्याः पात्रपूर्णमेव घृतमिच्छन्ति। प्रयाजदेवता जुहूगतेनोपरितनाज्यभागेन तृप्यन्ति, अधोभागेन हविरभिघारणात्, अग्निहोत्रे च ' उपरिभागं देवेभ्यो हुत्वाऽर्धभागं स्वधा पितृभ्यः पितृञ्जिन्व इति भूमौ निमृजन्ति' इति तद्विधानात्। तदेतत्सर्वं अभिप्रेत्य यत्पूर्णमित्याद्युक्तम्। इक्षुशलाकां विधत्ते–'एकयोपमन्थति। एका हि पितृणाम्।' (तैब्रा. १।६।८।४–५) इति। ' यदेकमेकम् संभरेत्पितृदेवत्यानि स्युः' इत्यादौ पितृणामेकत्वसंख्याप्रीतिः प्रसिद्धा। दक्षिणामुखत्वं विधत्ते– ' दक्षिणोपमन्थति। दक्षिणावृद्धि पितृणाम्।' (तैब्रा. १।६।८।५) इति। ' प्राचीं देवा दक्षिणा पितरः' इत्यादौ दक्षिणदिक्प्रीतिः प्रसिद्धा। हस्ताभ्यां मन्थनं विधत्ते– ' अनारभ्योपमन्थति। तद्धि पितॄन् गच्छति।' (तैब्रा. १।६।८।५) इति। तृतीयसवनगताशिरादौ मन्थानं स्तम्भे निबध्य मन्थति, तत्तु देवानां प्रियम्। अत्र त्वनारभ्य बन्धनमकृत्वा हस्ताभ्यामेवोपमन्थति। तच्च देववैलक्षण्यात् पितृणां प्रियम्। यदुक्तमापस्तम्बेन– 'न प्राचीं वेदिमुद्धन्ति पितृयज्ञो हि न दक्षिणा देवयज्ञो ह्युभे दिशावन्तरोद्धत्य' इति, तामाग्नेयीं दिशमङ्गुल्या निर्दिशन् विधत्ते– ' इमां दिशं वेदिमुद्धन्ति। उभये हि देवाश्च पितरश्चेज्यन्ते।' (तैब्रा. १।६।८।५) इति। तस्या वेदेश्चतुर्विधं दैविकवैलक्षण्यं क्रमेण विधत्ते– ' चतुःस्रक्तिर्भवति। सर्वा ह्यनु दिशः पितरः। अखाता भवति। खाता हि देवानाम्। मध्यतोऽग्निराधीयते। अन्ततो हि देवानामाधीयते। वर्षीयानिध्म इध्माद्भवति व्यावृत्त्यै।' (तैब्रा. १।६।८।५–६) इति। दैविकी वेदिर्दीर्घा, न तु समचतुरस्रा। इयं तु समचतुरस्रेति व्यावृत्तिः। अग्निषु प्रकारविशेषं सूत्रकारो दर्शयति– ' प्रतिदिशं स्रक्त्योऽवान्तरदेशान्प्रति मध्यानि।' इति।

परितः कटादिभिराच्छादनं विधत्ते– ' परिश्रयति। अन्तर्हितो हि पितृलोको मनुष्यलोकात्।' (तैब्रा. १।६।८।६) इति। उन्मूलनं विधत्ते– ' यत्परुषि दिनम्। तद्देवानाम्। यदन्तरा। तन्मनुष्याणाम्। यत्समूलम्। तत्पितृणाम्। समूलं बर्हिर्भवति व्यावृत्त्यै।' (तैब्रा. १।६।८।६–७) इति। परुषि पर्वसंधौ दिनं छिन्नं तादृशं बर्हिरहिंसितत्वाद्देवानां प्रियम्। अत एव बर्हिर्लवनब्राह्मणे श्रूयते– ' प्रजापतिर्वा ओषधीः पर्वशो वेद। स एना न हिनस्ति।' इति, ' ओषधीनामहिंसायै' इति च। यदन्तरा पर्वमध्ये छिन्नं तन्मनुष्याणां प्रियं, संधिविशेषस्य तैरज्ञातत्वात्। परिशेषेण समूलत्वं पितृणां प्रियम्। बर्हिषां दक्षिणाग्रत्वं विधत्ते– ' दक्षिणा स्तृणाति। दक्षिणावृद्धि पितृणाम्।' (तैब्रा. १।६।८।७) इति। यदुक्तमापस्तम्बेन– ' आस्तरणकाले बर्हिषा त्रिः प्रसव्यं वेदिं स्तृणन्पर्येत्यौद्धवान्धारयमाणस्त्रिरस्तृणन्प्रतिपर्येत्यौद्धवः प्रस्तरः' इति, प्रसव्यं अप्रदक्षिणत्वं यथा भवति तथा, तदिदमप्रदक्षिणत्वप्रदक्षिणत्वाभ्यां षट्कृत्व आवर्तनं विधत्ते– ' त्रिः पर्येति। तृतीये वा इतो लोके पितरः।

तानेव प्रीणाति । त्रिः पुनः पर्येति । षट् संपद्यन्ते । षड् वा ऋतवः । ऋतूनेव प्रीणाति । ' ( तैब्रा. १।६।८।७-८) इति । इतः भूलोकादारभ्य तृतीयः पितृलोकः, भोगभूमेः स्वर्गस्यान्तरिक्षादूर्ध्वभावित्वात् ।

प्रस्तरस्यामन्त्रकमासादनं विधत्ते– ' यत्प्रस्तरं यजुषा गृह्णीयात् । प्रमायुको यजमानः स्यात् । यन्न गृह्णीयात् । अनायतनः स्यात् । तूष्णीमेव न्यस्येत् । न प्रमायुको भवति । नानायतनः । ' ( तैब्रा. १।६।८।८ ) इति । गृह्णीयात् सादयेत् इति । दक्षिणपरिधिवर्जनमभिप्रेत्य विधत्ते– ' यत्त्रीन्परिधीन् परिदध्यात् । मृत्युना यजमानं परिगृह्णीयात् । यन्न परिदध्यात् । रक्षाꣳसि यज्ञꣳ हन्युः । द्वौ परिधी परिदधाति । रक्षसामपहत्यै । अथो मृत्योरेव यजमानमुत्सृजति ।' ( तैब्रा. १।६।८।८-९ ) इति । ' मध्यमोत्तरौ ' इति सूत्रेऽभिहितम् । हविषामनुक्रमेण सादनं विधत्ते– ' यत्त्रीणि त्रीणि हवीꣳष्युदाहरेयुः । त्रयस्त्रय एषाꣳ साकं प्रमीयेरन् । एकैकमनूचीनान्युदाहरन्ति । एकैक एवैषामन्वञ्चः प्रमीयते । ' ( तैब्रा. १।६।८।९) इति । उदाहरेयुः आसादयेयुः । एषां यजमानबन्धूनां मध्ये । अन्वञ्चः वृद्ध( युव )बालानुक्रमगताः । एतेषां मध्य एकैक एव प्रमीयते, न तु युगपत् । ' दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमुदकुम्भमित्येकैकश आसाद्य ' इति सूत्रे यदुक्तं तद्विधत्ते– ' कशिपु कशिपव्याय । उपबर्हणमुपबर्हण्याय । आञ्जनमाञ्जन्याय । अभ्यञ्जनमभ्यञ्जन्याय । यथाभागमेवैनान्प्रीणाति । ' ( तैब्रा. १।६।८।१० ) इति । कशिपु तूलपूरितशय्यादि । उपबर्हणं शिरस आधारः । कशिपुप्रभृतीन्युदाहरन्तीत्यनुवर्तते । कशिपुप्रियः कशिपव्यः पिता, तत्परितोषार्थं कशिपु सादयेत् । एवमन्यत् । तथा सत्येनान्पितॄन् स्वस्वभागमनतिक्रम्य तोषयति ।

तदेवमनुब्राह्मणगतेनानुवाकेन पितृयज्ञे हविरासादनपर्यन्तः पूर्वप्रयोगोऽभिहितः । अनुवाकान्तरेण सामिधेन्यादिक उत्तरप्रयोगोऽभिधीयते । तत्राध्वर्योः प्रैषमन्त्रमुत्पाद्य मन्त्रं व्याचष्टे– ' अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहीत्याह । उभये हि देवाश्च पितरश्चेज्यन्ते । ' ( तैब्रा. १।६।९।१ ) इतिं । देवानां पितॄणां चोपकारी योऽग्निस्तस्मै । ' उशन्तस्त्वा ' इत्येतामृचं सामिधेनीत्वेन विधत्ते– ' एकामन्वाह । एका हि पितॄणाम् । ' ( तैब्रा. १।६।९।१ ) इति । तस्यामावृत्तिं विधत्ते– ' त्रिरन्वाह । त्रिर्हि देवानाम् । ' ( तैब्रा. १।६।९।१ ) इति । चोदकप्राप्तावाघारौ प्रशंसति– ' आघारावाघारयति । यज्ञपरुषोरनन्तरित्यै । ' ( तैब्रा. १।६।९।१ ) इति । यज्ञपरुषोः यज्ञांशयोः अलोपाय । वरणं पर्युदस्यति– ' नाऽऽर्षेयं वृणीते । न होतारम् । यदार्षेयं वृणीते । यद्धोतारम् । प्रमायुको यजमानः स्यात् । प्रमायुको होता । तस्मान्न वृणीते । यजमानस्य होतुर्गोपीथाय । ' ( तैब्रा. १।६।९।१-२ ) इति । ' अग्निर्देवो होता देवान्यक्षत् ' इत्यादिनिगदपाठ आर्षेयवरणम् । निगदावसाने ' विष्णुशर्मा मानुषः ' इत्यादिनामोच्चारणं होतृवरणम् । बर्हिर्नामिकं चतुर्थं प्रयाजं निषेधति– ' अपबर्हिषः प्रयाजान्यजति । प्रजा वै बर्हिः । प्रजा एव मृत्योरुत्सृजति । ' ( तैब्रा. १।६।९।२ ) इति । चोदकप्राप्तावाज्यभागौ प्रशंसति– ' आज्यभागौ यजति । यज्ञस्यैव चक्षुषी नान्तरेति । ' ( तैब्रा. १।६।९।२-३ ) इति । हविष्प्रचारकाले प्राचीनावीतं विधत्ते– ' प्राचीनावीती सोमं यजति । पितृदेवत्या हि । एषाऽऽहुतिः । ' ( तैब्रा. १।६।९।३) इति । चतुरवदानमपवदितुं विधत्ते– ' पञ्चकृत्वोऽवद्यति । पञ्च ह्येता देवताः । द्वे पुरोनुवाक्ये । याज्या देवता वषट्कारः । ता एव प्रीणाति । ' ( तैब्रा. १।६।९।३ ) इति । 'त्वꣳ सोम प्रचिकितः, त्वया हि नः पितरः ' इत्युभे पुरोनुवाक्ये, ' त्वꣳ सोम पितृभिः संविदानः ' इत्येका याज्या, पितृमान्सोमो देवता, वषट्कारः, ता एताः पञ्च देवता उच्यन्ते । एकैकदेवतार्थं त्रिषु हविःष्वविच्छिन्नावदानं विधत्ते– 'संततमवद्यति । ऋतूनाꣳ संतत्यै । ' ( तैब्रा. १।६।९।३-४ ) इति । तदाहाऽऽपस्तम्बः-- ' जुह्वामुपस्तीर्य सोमाय पितृमतेऽनु स्वधेति संप्रेष्यति सकृत्पुरोडाशस्यावद्यति सकृद्धानानां सकृन्मन्थस्य ' इति । द्वयोः पुरोनुवाक्ययोरेकस्या याज्यायाश्च विधिं मनसि निधाय प्रशंसति– ' प्रैवैभ्यः पूर्वया पुरोनुवाक्ययाऽऽह । प्रणयति द्वितीयया । गमयति याज्यया । तृतीये वा इतो लोके

पितरः । अह्न एवैनां पूर्वया पुरोनुवाक्ययाऽऽत्यानयति । रात्रियै द्वितीयया । ऐवैनान्याज्यया गमयति । ' ( तैब्रा. १।६।९।४ ) इति । ' त्वꣳसोम प्रचिकितः ' इत्यनया पूर्वया पितृभ्यो हविः प्रकर्षेण कथितवान्भवति । ' त्वया हि नः पितरः ' इत्यनया द्वितीयया पितॄन्प्रति हविर्नयति । ' त्वꣳसोम पितृभिः ' इत्यनया तद्धविः पितॄन् गमयति याज्यया । पितॄणां तृतीयलोकवर्तित्वादत्र मन्त्रत्रित्वं युक्तम् । किंच त्रिभिर्मन्त्रैः क्रमेणाह्नो रात्र्याश्च पितॄनानीय हविः प्रति तानागमयत्येव ।

वेदेरुत्तरत उपविश्यावदाय दक्षिणामुखो वेदिमतिक्रम्योदङ्मुखस्तिष्ठञ्जुहोति । अत्र तु तद्वैपरीत्यं सूत्रकार आह-- ' दक्षिणतोऽवदायाभिघार्योदङ्ङतिक्रम्य दक्षिणामुखस्तिष्ठन् ' इति । तदेतद्विधत्ते-- ' दक्षिणतोऽवदाय । उदङ्ङतिक्रामति व्यावृत्त्यै । ' ( तैब्रा. १।६।९।४ ) इति । ' आश्रावय, अस्तु श्रौषट्, वौषट् ' इति मन्त्रत्रयमपवदितुं क्रमेण विधत्ते-- ' आ स्वधेत्याश्रावयति । अस्तु स्वधेति प्रत्याश्रावयति । स्वधा नम इति वषट्करोति । स्वधाकारो हि पितृणाम् । ' ( तैब्रा. १।६।९।५ ) इति । पितॄन्प्रति यद्वक्तव्यं तस्य सर्वस्य स्वधाकारो वाचकः । अतः आश्रावयेत्यादिशब्दान्न ब्रूते । यस्मात्स्वधाकारः पितॄणां प्रियः । विधिवाक्ये पाठादेव प्राप्तं प्रचारक्रमं प्रशंसति-- ' सोममग्रे यजति । सोमप्रयाजा हि पितरः । सोमं पितृमन्तं यजति । संवत्सरो वै सोमः पितृमान् । संवत्सरमेव तद्यजति । पितॄन्बर्हिषदो यजति । ये वै यज्वानः । ते पितरो बर्हिषदः । तानेव तद्यजति । पितॄनग्निष्वात्तान्यजति । ये वा अयज्वानो गृहमेधिनः । ते पितरोऽग्निष्वात्ताः । तानेव तद्यजति । ' ( तैब्रा. १।६।९।५--६ ) इति । सोमः प्रथमं यष्टव्यो येषां पितॄणां ते सोमप्रयाजाः । पितृस्वामित्वेन तस्य प्राथम्यं युक्तम् । संवत्सरत्वं तु सोमस्य पूर्वमेवोक्तम् । इह लोके यज्ञं कृत्वा पितृलोकं प्राप्ता बर्हिषदः । इह यज्ञरहिता गृहमेधिनो ये गृहस्थास्ते पितृलोकं प्राप्याग्निष्वात्ता उच्यन्ते । स्विष्टकृत्संज्ञकां देवतामपवदितुं विधत्ते-- ' अग्निं कव्यवाहनं यजति । य एव पितृणामग्निः । तमेव तद्यजति । अथो यथाऽग्निꣳ स्विष्टकृतं यजति । तादृगेव तत् । ' ( तैब्रा. १।६।९।६--७ ) इति । पित्र्यं हविः कव्यं, तद्वहतीति कव्यवाहनः । अत एवान्यत्र श्रूयते-- ' त्रयो वा अग्नयः, हव्यवाहनो देवानां, कव्यवाहनः पितृणां, सहरक्षा असुराणाम् ' इति । तैसा.

**एतत्ते तत ये च त्वामनु, एतत्ते पितामह, प्रपितामह ये च त्वामनु ॥**

मुख्यब्राह्मणे पैतृकानि ( १ णि ) त्रीणि हवींषि विधाय ' एतत्ते तत' इत्याद्येकादश मन्त्रा आम्नाताः । तत्र विनियोगमाहाऽऽपस्तम्बः-- ' हविःशेषान् संप्लोम्नाय पिण्डान्कृत्वा तिसृषु स्रक्तीषु निदधाति पूर्वस्यां दक्षिणस्यामपरस्यामित्येतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रम् ' इति । संप्लोम्नाय सम्यङ्मर्दनेनैकीकृत्य । पाठस्तु-- एतदिति । तत हे पितः, ते तुभ्यं एतत् पिण्डीकृतमन्नं दत्तं, ये चान्ये त्वामनु वर्तन्ते तेभ्योऽप्येतद्दत्तम् । मध्यममन्त्रे ' ये च त्वामनु ' इत्यनुषङ्गः । प्रपितामहमन्त्रे ' एतत्ते ' इत्यनुषङ्गः । विधत्ते-- ' एतत्ते तत ये च त्वामन्विति तिसृषु स्रक्तीषु निदधाति । तस्मादा तृतीयात्पुरुषान्नाम निगृह्णन्ति । एतावन्तो हीज्यन्ते । ' ( तैब्रा. १।६।९।७ ) इति । यस्मान्मन्त्रेषु ' तत, पितामह, प्रपितामह ' इत्येवं साधारणशब्दनिर्देशः कृतः, तस्माल्लोकेऽप्या तृतीयात्पुरुषात् प्रपितामहपर्यन्तं संबन्धविशेषेणैव व्यवहरन्ति, न तु तदीयं देवदत्तविष्णुशर्मादिनामोच्चारयन्ति । यस्मात्पार्वणश्राद्धेषु पित्रादयस्त्रय एव पूज्यन्ते, न तूपरितनाः, तस्मादत्रापि त्रयाणां निर्देशो युक्तः । तैसा.

**अत्र पितरो यथाभागं मन्दध्वम् ॥**

कल्पः-- ' अत्र पितरो यथाभागं मन्दध्वमित्युक्त्वोदञ्चो निष्क्रम्य सुसंदृशं त्वा वयमित्यैन्द्रियर्चाऽऽहवनीयमुपतिष्ठन्ते ' इति । हे पितरः, अत्र स्रक्तिगतपिण्डेषु स्वस्वभागमनतिक्रम्य हृष्टा भवत । मन्दध्वमिति पदस्याभिप्रायं व्याचष्टे-- ' अत्र पितरो यथाभागं मन्दध्वमित्याह । ह्रीका हि पितरः । ' ( तैब्रा. १।६।९।७ ) इति । यस्मात्पितरो लज्जाशीलास्तस्मात्स्वभागादूर्ध्वं लज्जां वारयितुं विस्रम्भेण मन्दध्वमित्युच्यते । विधत्ते-- ' उदञ्चो निष्क्रामन्ति । एषा वै मनुष्याणां दिक् । स्वामेव तद्दिशमनु

निष्क्रामन्ति ।' ( तैब्रा. १।६।९।७ ) इति । पितृत्वदशायां दक्षिणा दिक् प्राप्ता । ततः पूर्वं मनुष्यतादशायामुत्तरा दिगेव परिशिष्यते । तैसा.

**'सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि । प्र नूनं पूर्णवन्धुरः स्तुतो यासि वशाँ॰ अनु । योजा न्विन्द्र ते हरी ॥**

आहवनीयोपस्थानमन्त्रपाठस्तु— सुसंदृशमिति । हे मघवन्, सुसंदृशं सुष्ठु कटाक्षवीक्षणेनास्मान् पश्यन्तं त्वां मन्दिषीमहि वयं तर्पयामः । त्वमप्यस्मद्दत्तैः हविर्भिः पूर्णवन्धुरः परिपूरितरथपृष्ठः अस्माभिः स्तुतः सन् वशान् अभीष्टान् देशाननुलक्ष्य नूनं प्रयासि प्रायेणाऽऽगमिष्यसि । हे इन्द्र, ते हरी तवाश्वौ योजा नु रथे नियुक्तौ हि । विधत्ते— ' आहवनीयमुपतिष्ठन्ते । न्येवास्मै तद्ध्नुवते । यत्सत्याहवनीये । अथान्यत्र चरन्ति ।' ( तैब्रा. १।६।९।८ ) इति । आहवनीये पुरोऽवस्थिते सति तमुपेक्ष्याथ तदाऽन्यत्र पैतृकवेदिमध्यस्थेऽग्नौ चरन्तीति यत्तेनास्मै निह्नुवत एनमाहवनीयमपलपन्त्येव तत्क्षमापणायोपस्थानमित्यर्थः । उपस्थानस्यावधिं विधत्ते— ' आ तमितोरुपतिष्ठन्ते । अग्निमेवोपद्रष्टारं कृत्वा । पितॄन्निरवदयन्ते ।' ( तैब्रा. १।६।९।८) इति । आ तमितोः आ ग्लानेरनुच्छ्वासेन मन्त्रमुच्चारयता यावता कालेन निरोधरूपा ग्लानिर्भवति तावदुपस्थातव्यम् । तेनोपस्थानेनाग्निमेव साक्षिणं कृत्वा पितॄन् स्वभागप्रदानेन विसृष्टवन्तो भवन्ति । मन्त्रगतस्य सुसंदृशमित्येतस्याभिप्रायं व्याचष्टे— ' अन्तं वा एते प्राणानां गच्छन्ति । य आ तमितोरुपतिष्ठन्ते । सुसंदृशं त्वा वयमित्याह । प्राणो वै सुसंदृक् । प्राणमेवाऽऽत्मन्दधते ।' ( तैब्रा. १।६।९। ८–९ ) इति । श्वासनिरोधेन ग्लानिं प्राप्तेषु कटाक्षनिरीक्षणं नाम प्राणनिरोधपरिहारः । तदेतदभिप्रेत्य प्राणो वै सुसंदृगित्युच्यते । योऽयं परिहृतनिरोधः प्राणः स एवेन्द्रस्य कटाक्षः । तं कुर्वन्तं त्वामिति मन्त्रे योजनीयम् । योजेति पदस्याभिप्रायमाह— ' योजा न्विन्द्र ते हरी इत्याह । प्राणमेव पुनर्युक्त ।' ( तैब्रा. १।६।९।९ ) इति । यथा त्वदीयावश्वौ रथे युक्तौ एवं प्राणमस्मासु योजयेत्यभिप्रायः । तैसा.

**'अक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी ॥**

कल्पः— ' अथ गार्हपत्यमुपतिष्ठन्ते अक्षन्नमीमदन्त ह्यव प्रिया अधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी इति ' इति । अक्षन् पितरो हविः अशितवन्तः । अमीमदन्त भृशं हृष्टा हि यतः प्रियास्तनूरवाधूषत हविर्भोजनसौकर्येण शिरःप्रभृत्यङ्गान्यकम्पयन्त । स्वभानवो वपुषि जनितेन स्वकीयेन तेजसा भासमाना विप्रा भोजनतृप्त्या ब्राह्मणसदृशाः सन्तो नविष्ठया मती अतिशयेन नूतनया बुद्ध्या अस्तोषत भृशमिष्टमेतदित्यादिवचनैः स्तुतिं कृतवन्तः । योजेत्यादि व्याख्यातम् । विधत्ते— ' अक्षन्नमीमदन्त हीति गार्हपत्यमुपतिष्ठन्ते ।' ( तैब्रा. १।६।९।९) इति । नन्वक्षन्नित्यादिमन्त्रः पितृप्रतिपादक उपस्थेयस्तु गार्हपत्य इति वैयधिकरण्यमाशङ्क्य मन्त्रस्यापेक्षितशेषपूरणेन वैयधिकरण्यपरिहारं श्रुतिरेव दर्शयति— ' अक्षन्नमीमदन्ताथ त्वोपतिष्ठामह इति वावैतदाह ।' ( तैब्रा. १।६।९।९ ) इति । पितरो भुक्तवन्तो हृष्टाश्च, अथ तदा साक्षिणं त्वामुपतिष्ठामह इत्येवं मन्त्रवाक्यमाह । मन्त्रस्थौ मघवन्निन्द्रेत्येतावपि शब्दावग्निपरत्वेन व्याख्येयौ । अन्नवान् परमैश्वर्ययुक्त इति तयोरर्थः । तैसा.

---

( १ ) **ऋसं.** १।८२।३ मन्दि ( वन्दि ) यासि ( याहि ); **तैसं.** १।८।५।१ ; **कासं.** ९।६ ( १८ ) ; **मैसं.** १।१०।३ ( ११ ) वयं + ( वसो ) वन्धुरः ( बन्धुर ) वशाँ॰ ( वशां ) ; **शुसं.** ३।५२ मन्दि ( वन्दि ) वन्धुरः ( बन्धुर ) ; **शब्रा.** २।६।१।३८ शुसंवत् ; **लाश्रौ.** ५।२।१० वन्धुरः स्तु ( बन्धुरः स्तु ).

( १ ) **ऋसं.** १।८२।२ ; **असं.** १८।४।६१ प्रिया (प्रियाँ) नविष्ठया .... हरी ( यविष्ठा ईमहे ) ; **सासं.** १।४।७ ( ४१५ ) ; **तैसं.** १।८।५।२ ; **कासं.** ९।६ ( २२ ); **मैसं.** १।१०।३ ( १७ ) ; **शुसं.** ३।५१ ; **शब्रा.** २।६।१।३८.

**[1]अक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः ॥**

कल्पः-- 'अथ प्राचीनावीतं कृत्वाऽन्वाहार्यपचनमभिप्रपद्यन्तेऽक्षन्पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितर इति' इति। अतीतृपन्त अस्मांश्च तर्पयन्तः (? तर्पितवन्तः)। अमीमृजन्त अस्मान् शोधितवन्तः। अत्र सूत्रकारः शाखान्तरमन्त्रमपि विनियुङ्क्ते-- 'अमीमदन्त पितरः सोम्या इत्या तमितोरुपतिष्ठन्ते' इति। तदेतदुपस्थानं विदधानः पूर्ववद्वैयधिकरण्यं परिहरति-- 'अमीमदन्त पितरः सोम्या इत्यभिप्रपद्यन्ते। अमीमदन्त पितरोऽथ त्वाऽभिप्रपद्यामह इति वावैतदाह।' (तैब्रा. १।६।९।९) इति। तैसा.

**परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः। अथा पितॄन्त्सुविदत्राꣳ अपीत यमेन ये सधमादं मदन्ति ॥**

कल्पः-- 'परेत पितरः सोम्या इति प्रवाहण्या पितॄन्प्रवाहयति' इति। पाठस्तु-- परेतेति। हे सोम्याः पितरः, पथिभिः परेत परावृत्य गृहान् गच्छतेति। कीदृशैः पथिभिः ? गम्भीरैः सुलभान्नतोयैः पूर्व्यैः पूर्वं कृतैः प्रहतैः। अथ तदा गृहान् गत्वा तस्मिन् पितृलोके यमेन साकं ये पितरः सधमादं सहस्थानस्थमादं यथा भवति तथा मदन्ति हृष्यन्ति, तान् सुविदत्रान् सुष्ठु वेदितॄन् चिरवासेन तत्रत्यवृत्तान्तज्ञान् पितॄनपि यूयं इत प्राप्नुत। तैसा.

**[2]मनो न्वा हुवामहे नाराशꣳसेन स्तोमेन पितॄणां च मन्मभिः ॥**

कल्पः-- 'मनो न्वा हुवामह इति मनस्वतीभिरुपतिष्ठते' इति। तिसृषु ऋक्षु प्रथमायाः पाठस्तु-- मन इति। नाराशंसेन मनुष्यप्रशंसायोग्येन स्तोमेन वाक्यसमूहेन पितॄणामपि मन्मभिः मननीयैर्वाक्यैः मनः पितृयज्ञानुष्ठानपरं चित्तं नु क्षिप्रं आहुवामह आह्वयामः। तैसा.

**[1]आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्यं दृशे ॥**

अथ द्वितीया-- आ न इति। क्रत्वे कर्मानुष्ठानाय दक्षाय त त्सामर्थ्याय जीवसे जीवितुं ज्योक् चिरं सूर्यं दृशे द्रष्टुं च योग्यं मन आगत्य नः अस्मान् पुनरेतु असकृत् प्राप्नोतु। तैसा.

**[2]पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातꣳ सचेमहि ॥**

अथ तृतीया-- पुनर्न इति। हे पितरः, दैव्यो जनः देवसंबन्धिपुरुषसमूहः नः अस्माकं मनः कर्मानुष्ठानपरं चित्तं ददातु असकृत् प्रयच्छतु। वयमपि व्रातं संवत्सरसंघातरूपं जीवं जीवनं सचेमहि सेवेमहि। तैसा.

**[3]यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं**
**पितरं वा जिहिꣳसिम।**
**अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु**
**दुरिता यानि चकृम करोतु मामनेनसम् ॥**

(१) तैसं. १।८।५।२.

(२) ऋसं. १०।५७।३ स्तोमेन पितॄणां (सोमेन पितॄणां); तैसं. १।८।५।२; कासं. ९।६ (२४) पितॄणां (पितॄणां); मैसं. १।१०।३ (१८); शुसं. ३।५३ न्वा हुवा (न्वाह्वा) पितॄणां (पितॄणां); शब्रा. २।६।१।३९ शुसंवत्; लाश्रौ. ५।२।११ ऋसंवत्; कौसू. ८९।१ ऋसंवत्.

(१) ऋसं. १०।५७।४ आन (आ त); तैसं. १।८।५।२-३; कासं. ९।६ (२५); मैसं. १।१०।३ (१९); शुसं. ३।५४; शब्रा. २।६।१।३९; लाश्रौ. ५।२।११ दृशे (दृशेयम्); कौसू. ८९।१.

(२) ऋसं. १०।५७।५; तैसं. १।८।५।३; कासं. ९।६ (२६); मैसं. १।१०।३ (२०); शुसं. ३।५५; शब्रा. २।६।१।३९; लाश्रौ. ५।२।११ दैव्यो (दैवो) व्रातꣳ (व्रातꣳ); कौसू. ८९।१.

(३) असं. ६।१२०।१ उत्तरार्धे (अयं तस्माद्गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् ॥); तैसं. १।८।५।३; कासं. ९।६ (२८) यन्मातरं पितरं (यत्पितरं मातरं) अग्निर्मा त (अग्निर्नस्त) दुरिता.... नसम् (चकृम यानि दुष्कृता); मैसं. १।१०।३ (१२) उत्तरार्धे (अग्निर्नस्तस्मादेनसो गार्हपत्या उन्निनेतु दुष्कृताज्जातवेदाः ॥): ४।१४।१७ (२४६) अग्निर्मा त (अग्निर्नस्त) दुरिता.... नसम् (दुरितानि यानि कानि च चकृम); तैब्रा. ३।७।१२।४ उत्तरार्धे 'अग्निर्मा तस्मादेनसः'

कल्पः– 'यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठते' इति। पाठस्तु– यदन्तरिक्षमिति। पृथिव्यादीन् लोकान् मनसा जिहिंसिम हिंसितुमिच्छेम यत्, मातरं पितरं वा हिंसितुमिच्छेमेति यत्, तत्मात्सर्वस्मादेनसः पापात् गार्हपत्यो मां प्रमुञ्चतु। अन्यान्यपि दुरितानि यानि चकृम तेभ्योऽपि मुञ्चतु। मामनेनसं सर्वापापरहितं करोतु।

यदुक्तमापस्तम्बेन– 'उदकुम्भमादाय यजमानः शुन्धन्तां पितर इति त्रिः प्रसव्यं वेदिं परिषिञ्चन् पर्येति' इति, तदेतद्विधत्ते– 'अपः परिषिञ्चति। मार्जयत्येवैनाम्। अथो तर्पयत्येव' (तैब्रा. १।६।९।९–१०) इति। एनान् पितॄन्। तद्वेदनं प्रशंसति– 'तृप्यति प्रजया पशुभिः। य एवं वेद।' (तैब्रा. १।६।९।१०) इति। चतुर्थप्रयाजवद्बर्हिर्नामकं प्रथमानूयाजं निषेधति– 'अपबर्हिषावनूयाजौ यजति। प्रजा वै बर्हिः। प्रजा एव मृत्योरुत्सृजति।' (तैब्रा. १।६।९।१०) इति। बर्हिर्यागवर्जनात्। प्रयाजानूयाजान् प्रशंसति– 'चतुरः प्रयाजान्यजति। द्वावनूयाजौ। षट् संपद्यन्ते। षड्वा ऋतवः। ऋतूनेव प्रीणाति।' (तैब्रा. १।६।९।१०–११) इति। सूत्रकारः 'युक्ता मे यज्ञमन्वासाता इति यजमानः संप्रेष्यति।' इति प्रैषानुसारेण गार्हपत्यसमीपे उपविष्टायाः पत्न्याः पूर्णपात्रानयनपर्यन्तं यदन्वासनमवोचत्तच्च पत्नीसंयाजांश्च चोदकप्राप्तान् प्रतिषेधति– 'न पत्न्यन्वास्ते। न संयाजयन्ति। यत्पत्न्यन्वासीत। यत्संयाजयेयुः। प्रमायुका स्यात्। तस्मान्नान्वास्ते। न संयाजयन्ति। पत्नियै गोपीथाय।' (तैब्रा. १।६।९।११) इति। तैसा.

**[1]प्रतिपूरुषमेककपालान्निर्वपत्येकमतिरिक्तम् ॥**

पञ्चमे पितृयज्ञोऽभिहितः। षष्ठे त्र्यम्बकपुरोडाशाः साकमेधशेषा उच्यन्ते। तान् विधत्ते– प्रतिपूरुषमिति। तद्विधिं प्रशंसति– 'प्रतिपूरुषमेककपालान्निर्वपति। जाता एव प्रजा रुद्रान्निरवदयते। एकमतिरिक्तम्। जनिष्यमाणा एव प्रजा रुद्रान्निरवदयते। एककपाला भवन्ति। एकधैव रुद्रं निरवदयते।' (तैब्रा. १।६।१०।१) इति। करम्भवाक्यवन्नैर्ऋतवाक्यवच्च व्याख्येयम्। तैसा.

**यावन्तो गृह्याः स्मस्तेभ्यः कमकरम् ॥**

मुख्यविधिसंनिधौ 'यावन्तः' इत्यादय एकादश मन्त्रा आम्नाताः। कल्पः– 'यावन्तो गृह्याः स्मस्तेभ्यः कमकरमिति निरुप्यमाणेषु यजमानो जपति' इति। गृहे भवा मनुष्याः गृह्याः, ते वयं यावन्तः इह स्थितास्तेभ्यः सर्वेभ्यः कं सुखं अकरं अकार्षम्। श्रपितेषु पुरोडाशेषु चोदकप्राप्तमभिघारणं निषेधति– 'नाभिघारयति। यदभिघारयेत्। अन्तरवचारिणꣳ रुद्रं कुर्यात्।' (तैब्रा. १।६।१०।१) इति। रुद्रं अनिष्टकारिणं क्रूरदेवम्। अन्तरवचारिणं गृहस्यान्तः प्रविश्यास्मानवरोद्धुं चरन्तम्। तैसा.

**पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छ ॥**

कल्पः– 'तानभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यामासाद्य पशूनाꣳ शर्मासीति मूते समावपति' इति। कर्षकैर्व्रीह्यादिबीजानि संग्रहीतुं तृणकटादिना पुटबन्धनं क्रियते तदिदं मूतशब्देनोच्यते। पाठस्तु– पशूनामिति। हे मूत, भक्ष्यैस्तृणादिभिर्बीजैश्चोपेतत्वात् पशूनां शर्मासि। अतो यजमानस्य मे अध्वर्योश्च सुखं यच्छ। तैसा.

**एक एव रुद्रो न द्वितीयाय तस्थे ॥**

कल्पः– 'एक एव रुद्रो न द्वितीयाय तस्थ इति दक्षिणाग्नेरेकोल्मुकं धूपायद्धरति उत्तरपूर्वमवान्तरदेशं गत्वा' इति। रुद्रो जगत्येक एवास्ति, द्वितीयाय न तस्थे, द्वितीयो रुद्रो न कोऽप्यवस्थितः। विधत्ते– 'एकोल्मुकेन यन्ति। तद्धि रुद्रस्य भागधेयम्। इमां दिशं यन्ति। एषा वै रुद्रस्य दिक्। स्वायामेव दिशि रुद्रं निरवदयते।' (तैब्रा. १।६।१०।१–२) इति। तैसा.

**आखुस्ते रुद्र पशुस्तं जुषस्व ॥**

कल्पः– 'आखुस्ते रुद्र पशुरित्याखूत्कर एकं पुरोडाशमुपवपत्यसौ ते पशुरिति वा द्वेष्यं मनसा ध्यायन् यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात्।' इति।

इति प्रतीकमात्रम्, अस्मिन्नेवानुवाकेऽन्यत्र कृत्स्नः पाठः; तैब्रा. २।६।२ प्र मुञ्च .... नसम् (उक्तो नेषद्दुरिता यानि चकृम); आश्रौ. १।२।७ (दुरिता यानि चकृम०).

(१) तैसं. १।८।६।१–२.

आखूत्करः मूषकैर्बिलादुद्धृतः पांसुराशिः । पाठस्तु— आखुरिति । हे रुद्र, मूषकस्ते प्रियः पशुः, अतस्तं सेवस्व । विधत्ते— 'रुद्रो वा अपशुकाया आहुत्यै नातिष्ठत । असौ ते पशुरिति निर्दिशेद्यं द्विष्यात् । यमेव द्वेष्टि । तमस्मै पशुं निर्दिशति । यदि न द्विष्यात् । आखुस्ते पशुरिति ब्रूयात् । न ग्राम्यान् पशून् हिनस्ति । नाऽऽरण्यान् ।' (तैब्रा. १।६।१०।२–३) इति । आहुत्यै नातिष्ठत पशुरहितामाहुतिं नाङ्गीकरोतीत्यर्थः । यं द्विष्यात्तं असाविति नामग्रहणेन निर्दिशेत् । तथा सति द्वेष्यमस्मै समर्पयत्येव । तैसा.

**एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व ॥**

कल्पः— 'चतुष्पथ एकोल्मुकमुपसमाधाय संपरिस्तीर्य सर्वेषां पुरोडाशानामुत्तरार्धात् सकृत्सकृदवदायावदाय मध्यमेनान्तिमेन वा पलाशपर्णेन जुहोत्येष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहेति' इति । अत्र स्वाहाकारोऽध्याहृतः । हे रुद्र, एषोऽवत्तः पुरोडाशानामंशः तवावदीयमानो भागः, तं भागं स्वस्रा भगिनीवद्धितकारिण्याऽम्बिकया पार्वत्या सह (अंशं ?) जुषस्व सेवस्व । विधत्ते— 'चतुष्पथे जुहोति । एष वा अग्नीनां पड्वीशो नाम । अग्निवत्येव जुहोति । मध्यमेन पर्णेन जुहोति । स्रुग्ध्येषा । अथो खलु । अन्तमेनैव होतव्यम् । अन्तत एव रुद्रं निरवदयते ।' (तैब्रा. १।६।१०।३) इति । अग्नीनां पड्वीशः पादप्रदे (? वे) शस्थानम् । यत्राग्नयः पुनः पुनः संचारेण प्रविशन्ति तादृश एवैष चतुष्पथः । अतस्तत्र होमेन अग्निवत्येव देशे हुतं भवति । पलाशशाखायां यानि त्रीणि पर्णानि तत्र मध्यमं पर्णं प्रशस्ततया स्रुग्रूपम् । वामदक्षिणपार्श्वस्थयोरन्यतरेण होमेन रुद्रो यागभूमेरन्तान्निष्काशितो भवति । 'सह स्वस्राऽम्बिकया' इत्यस्य मन्त्रभागस्य तात्पर्यं व्याचष्टे— 'एष ते रुद्र भागः सह स्वस्राऽम्बिकयेत्याह । शरद्वा अस्याम्बिका स्वसा । तया वा एष हिनस्ति । यꣳ हिनस्ति । तयैवैनꣳ सह शमयति ।' (तैब्रा. १।६।१०।४) इति । शरत्कालो हि पीनसज्वराद्युत्पादनेन हिंसकः, तद्वदियमम्बिका हिंसिका, ततः शरदित्युच्यते । एष रुद्रस्तयैव सहायभूतया प्राणिनं हिनस्ति । अतस्तया सह पुरोडाशभागसेवया तुष्टया तयैव सहैवैनं रुद्रं शमयति हिंसारहितं करोति ।

तैसा.

**भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजम् ॥**
**सुभेषजं यथाऽसति । सुगं मेषाय मेष्यै ॥**

कल्पः— 'भेषजं गवे सुभेषजमित्येताभ्यां चातुष्पथमग्निं परिषिञ्चति' इति । पाठस्तु— भेषजमिति । भेषजं सुभेषजमित्येतौ मन्त्रयोरादी । हे रुद्र, गवे अस्मदीयायै गोजात्यै भेषजं आरोग्यं कुरु । एवमन्यत्र । तात्कालिकं रोगोपशमनं आत्यन्तिकं वा सुभेषजं तद्यथा असति यथा भवति तथा कुरु । मेषः वाहकः । मेषी दोग्ध्री । तयोः सुगं सुष्ठु गमनं रोगराहित्येन संचरणं यथा भवति तथा कुरु । गवाश्वादिशब्दैः पश्वादयः सर्वेऽप्युपलक्ष्यन्ते इत्याह— 'भेषजं गव इत्याह । यावन्त एव ग्राम्याः पशवः । तेभ्यो भेषजं करोति ।' (तैब्रा. १।६।१०।४) इति ।

तैसा.

**[1]अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम् ।**
**यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात् ॥**

कल्पः— 'अवाम्ब रुद्रमदिमहीति यजमानो जपति' इति । पाठस्तु— अवेति । हे अम्ब पार्वति, रुद्रमुद्दिश्य अवादिमहि पुरोडाशावदानं अकार्ष्म । त्रीणि अम्बकानि नेत्राणि यस्यासौ त्र्यम्बकः, तमुद्दिश्य अवादिमहि ।

(१) **तैसं.** १।८।६।२; **कासं.** ९।७ (३०) उत्तरार्धे (यथा नो वस्यसस्करद्यथा नः श्रेयसस्करद्यथा नो व्यवसाययात् ॥); **मैसं.** १।१०।४ (२३) उत्तरार्धे (यथा नो वस्यसस्करद्यथा नः श्रेयसस्करत् । यथा नो भूयसस्करद्यथा नः प्रतरं तिराद्यथा नो व्यवसाययात् ॥); **शुसं.** ३।५८ अवाम्ब (अव) मदि (मदी) शेषं कासंवत्; **शब्रा.** २।६।२।११ शुसंवत्; **लाश्रौ.** ५।३।५ मदिम (मयक्ष्म) सः क (सस्क) वस्यसः क (वसीयस्क) तः क (तस्क)।

आदरार्थं पुनर्वचनम् । किमर्थमवदानं कृतमित्युच्यते- असौ रुद्रो नः अस्मान् श्रेयसः अध्ययनादिभिः श्रेष्ठान् यथा करत् करोति, वस्यसः वसुमत्तमान् यथा करोति, पशुमतः गवाश्वादियुक्तान् यथा करोति, व्यवसाययात् व्यवसाययति शास्त्रार्थनिश्चययुक्तान् यथा करोति तदर्थमवदानं कृतम् । 'यथा नः श्रेयसः' इत्याद्यभिधानान्मन्त्रस्याऽऽशीःपरत्वं दर्शयति– 'अवाम्ब रुद्रमदिमहीत्याह । आशिषमेवैतामाशास्ते ।' ( तैब्रा. १।६।१०।४ ) इति । तैसा.

**[1]त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।**
**उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥**

कल्पः– 'त्र्यम्बकं यजामह इति त्रिः प्रदक्षिणमग्निं पर्येति' इति । पाठस्तु– त्र्यम्बकमिति । शोभनः शरीरगन्धः पुण्यगन्धो वा यस्यासौ सुगन्धिः, 'यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति' इति श्रुतेः । पुष्टिं शरीरधनादिविषयां वर्धयतीति पुष्टिवर्धनः, तादृशं त्र्यम्बकं यजामहे पूजयामः । लोके यथा उर्वारुकफलानि बन्धनात् वृन्तात् स्वयमेव मुच्यन्ते तद्वदहं त्र्यम्बकप्रसादेन मृत्योर्मुक्षीय मोचनयुक्तो भूयासम् । अमृतात् चिरजीवितात् स्वर्गादेर्वा मा मुक्षीय । चतुर्थपादार्थ( ? र्थे ) मन्त्रस्य तात्पर्यातिशयं दर्शयति– 'त्र्यम्बकं यजामह इत्याह । मृत्योर्मुक्षीय माऽमृतादिति वावैतदाह ।' ( तैब्रा. १।६।१०।५ ) इति । यजमानः '( त्र्यम्बकं ) यजामहे' इति यदाह, एतद्वचनं 'मृत्योर्मुक्षीय' इत्येवाऽऽह । मोचने एव तात्पर्यं, तच्छेषत्वेनान्यदित्यर्थः । यदुक्तमापस्तम्बेन– 'ऊर्ध्वान्पुरोडाशानुदस्य प्रतिलभ्य त्र्यम्बकं यजामह इति यजमानस्याञ्जलौ समोप्य भगः स्थ भगस्य वो लिप्सीयेत्यपादायैतेनैव कल्पेन त्रिः समावर्तयेयुः' इति, तदेतत्सर्वमभिप्रेत्य सर्वेषां पुरुषाणां हस्ते स्थितस्य पुरोडाशस्योत्क्षेपणं विधत्ते– 'उत्किरन्ति । भगस्य लीप्सन्ते ।' ( तैब्रा. १।६।१०।५ ) इति । यदेतत्पिण्डानामुपरि क्षेपणं तेन सौभाग्याभिमानिनो भगनामकस्य देवस्य सकाशादेतान् पुरोडाशान् लब्धुमिच्छन्ति । अत एवोत्क्षिप्तः पुनरञ्जलौ पतति । तैसा.

**[1]एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीहि ॥**

कल्पः– 'तान्मूते समावपन्ति मूतयोर्मूतेषु वैष ते रुद्र भाग इति वृक्ष आसजन्ति वृक्षयोर्वृक्षेषु वाऽपि वा मूतयोः समोप्याविवधं कृत्वा शुष्के स्थाणौ वल्मीकवपायां वाऽवधाय' इति । पाठस्तु– एष इति । हे रुद्र, एष वृक्षादौ सज्यमानः पुरोडाशसंघस्तव भागः, तं सेवस्व । अवसेन पाथेयरूपतया तव रक्षकेणानेन भागेन युक्तो मूजवतः एतन्नामकत्वेन प्रसिद्धात्पर्वतात् परः परभागे वर्तमानः अतीहि अतिक्रम्य गच्छ । विधत्ते– 'मूते कृत्वा सजन्ति । यथा जनं यतेऽवसं करोति । तादृगेव तत् ।' ( तैब्रा. १।६।१०।५ ) इति । यथा लोके दूरदेशवर्तिनं बन्धुजनं प्रति गच्छते पुरुषाय अवसं रक्षकं पाथेयं करोति, तत् वृक्षाग्रे पुरोडाशसञ्जनं तादृगेव भवति । मन्त्रे भागनिर्देशो रुद्रस्य निःशेषेण विसर्जनार्थं इति दर्शयति– 'एष ते रुद्र भाग इत्याह निरवत्त्यै ।' ( तैब्रा. १।६।१०।५ ) इति । तैसा.

**अवततधन्वा पिनाकहस्तः कृत्तिवासाः ॥**

कल्पः– 'अवततधन्वा पिनाकहस्तः कृत्तिवासोमिति त्रिरवताम्यन्ति' इति । प्राणायामत्रयं कुर्वन्तीत्यर्थः । ओमित्यनेन वाक्यशेषः पूरितः । अस्मद्विरोधिनं पाप्मानं हन्तुमयं रुद्रः पिनाकनामकं धनुर्हस्ते गृहीत्वा अवततधन्वा ज्याकर्षणेन विस्तारितधनुष्कः कृत्तिवासाः चर्मवसन ओं भवतु । अथवा अस्मद्विषये अवततधन्वा आरोपितमौर्वीकधनुर्युक्तो भवतु । चतुष्पथप्रत्यागमनादीन्

---

( १ ) ऋसं. ७।५९।१२ ; तैसं. १।८।६।२ ; कासं. ९।७ ( ३२ ) पुष्टिवर्धनम् ( रयिपोषणम् ) ; मैसं. १।१०।४ ( २५ ) ; शुसं. ३।६० 'पुष्टिवर्धनम् ( पतिवेदनम् ) चतुर्थचरणे ( इतो मुक्षीय मामुतः )' इति पाठान्तरमपि पठितम् ; शब्रा. २।६।२।१२ : २।६।२।१४ शुसंस्थितपाठान्तरवत् ; नाउ. ५६ ; लाश्रौ. ५।३।७ ; नि. १४।३५.

( १ ) तैसं. १।८।६।२–१।८।११।१.

क्रमेण विधत्ते– 'अप्रतीक्षमायन्ति । अपः परिषिञ्चति । रुद्रस्यान्तर्हित्यै । प्र वा एतेऽस्माल्लोकाच्च्यवन्ते । ये त्र्यम्बकैश्चरन्ति । आदित्यं चरुं पुनरेत्य निर्वपति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति ।' (तैब्रा. १।६।१०।५–६) इति । तैसा.

चातुर्मास्यानि– (४) शुनासीर्यम्, इन्द्रतुरीयम्, पञ्चेध्मीयम्, अपामार्गहोमः

**ऐन्द्राग्नं द्वादशकपालं, वैश्वदेवं चरुं, इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं, वायव्यं पयः, सौर्यमेककपालम् । द्वादशगवꣳ सीरं दक्षिणा ॥**

षष्ठे साकमेधाः समापिताः । सप्तमे शुनासीर्यमिन्द्रतूर्यं (? तुरीयं) चेति कर्मद्वयं पञ्चेध्मीयमन्त्रा अपामार्गहोममन्त्राश्चोच्यन्ते । तत्र शुनासीर्यहवींषि विधत्ते– ऐन्द्राग्नमिति । शुनासीराय, शुनः वायुः, सीरः आदित्यः, ताभ्यां युक्तः शुनासीरः । द्वादशभिर्बलीवर्दैरुह्यमानं सीरं लाङ्गलम् । अत्र वैश्वदेवगतानामाग्नेयादीनां पञ्चानां हविषां ब्राह्मणमनुब्राह्मणं चातिदिशति– 'एतद्ब्राह्मणान्येव पञ्च हवीꣳषि ।' (तैब्रा. १।७।१।१) इति । अथोपदिश्यमानेषु पञ्चसु ऐन्द्राग्नवैश्वदेवयोः पूर्वमेव प्रशस्तत्वादवशिष्टानि त्रीणि प्रशंसति, अथवा तयोर्विकल्पमभिप्रेत्य तदभावपक्षानुसारेण तावुपेक्ष्यावशिष्टान्येव प्रशंसति– 'अथेन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं निर्वपति । संवत्सरो वा इन्द्राशुनासीरः । संवत्सरेणैवास्मा अन्नमवरुन्धे । वायव्यं पयो भवति । वायुर्वै वृष्ट्यै प्रदापयिता । स एवास्मै वृष्टिं प्रदापयति । सौर्य एककपालो भवति । सूर्येण वा अमुष्मिँल्लोके वृष्टिर्धृता । स एवास्मै वृष्टिं नियच्छति । द्वादशगवꣳ सीरं दक्षिणा समृद्ध्यै ।' (तैब्रा. १।७।१।१–२) इति । अस्य च शुनासीर्यस्य कालं बौधायन आह– 'अथातश्चतुर्षु मासेषु शुनासीरीयहविर्भिर्यक्ष्यमाणो भवति' इति । तत्र पूर्वेभ्यस्त्रिभ्यः पर्वभ्यः ऊर्ध्वं प्रत्येकं मासचतुष्टयमतिवाह्य क्रियमाणमिदं संवत्सरादूर्ध्वं प्रवर्तते । तदेतदभिप्रेत्य 'संवत्सरो वा इन्द्राशुनासीरः' इत्युक्तम् । वायुसूर्याभ्यां युक्त इन्द्रः संवत्सरे समाप्तत्वात् संवत्सर इत्युच्यते । वायोः पुरोवातरूपेण वृष्टिप्रदापयितृत्वम् । 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः' इति स्मरणात् सूर्यस्य स्वर्गे वृष्टिधारकत्वम् । तैसा.

**आग्नेयमष्टाकपालं निर्वपति, रौद्रं गावीधुकं चरुं, ऐन्द्रं दधि, वारुणं यवमयं चरुम् । वहिनी धेनुर्दक्षिणा ॥**

अथेन्द्रतुरीयस्य हवींषि विधत्ते– आग्नेयमिति । गावीधुकं अरण्यधान्यविशेषनिष्पन्नम् । पृष्ठे भारं वहतीति वहिनी । इन्द्रतूर्यं (? तुरीयं) विधातुं प्रस्तौति– 'देवासुराः संयत्ता आसन् । ते देवा अग्निमब्रुवन् । त्वया वीरेणासुरानभिभवामेति । सोऽब्रवीत् । त्रेधाऽहमात्मानं विकरिष्य इति । स त्रेधाऽऽत्मानं व्यकुरुत । अग्निं तृतीयम् । रुद्रं तृतीयम् । वरुणं तृतीयम् । सोऽब्रवीत् । क इदं तुरीयमिति । अहमितीन्द्रोऽब्रवीत् । सं तु सृजावहा इति । तौ समसृजेताम् । स इन्द्रस्तुरीयमभवत् । यदिन्द्रस्तुरीयमभवत् । तदिन्द्रतुरीयस्येन्द्रतुरीयत्वम् । ततो वै देवा व्यजयन्त ।' (तैब्रा. १।७।१।२–३) इति । वीरत्वसिद्धये शरीरत्रयरूपेण विकारः । स त्रेधा विकृतोऽग्निरिन्द्रं प्रति पप्रच्छ– मयेदं रूपत्रयं युद्धसमर्थं संपादितम् । अथ कोऽन्य इदं चतुर्थं रूपं विजयसमर्थं करिष्यतीति । अहमेव करिष्यामीति इन्द्रोऽब्रवीत् । तत्त्वया तथा क्रियताम्, किंत्वावां युद्धविजयक्षमौ संसृष्टौ भवावेति । इन्द्र एव तुरीयो यस्मिन्कर्मणि तत्कर्मेन्द्रतुरीयम् । अत्रान्यदीयरूपापेक्षया तुरीयत्वम्, अनुष्ठाने तु पाठक्रमेण वरुणस्तुरीयः । विधत्ते– 'यदिन्द्रतुरीयं निरुप्यते विजित्यै ।' (तैब्रा. १।७।१।३) इति । चतुर्देवप्रियांशसंपादनेन दक्षिणां प्रशंसति– 'वहिनी धेनुर्दक्षिणा । यद्वहिनी । तेनाऽऽग्नेयी । यद्गौः । तेन रौद्री । यद्धेनुः । तेनैन्द्री । यत्स्त्री सती दान्ता । तेन वारुणी समृद्ध्यै ।' (तैब्रा. १।७।१।४) इति । गोत्वं जातिः, धेनुत्वं नवप्रसवत्वम् । अस्य चेन्द्रतुरीयस्य कर्मणः शुनासीर्यदिने एवानुष्ठानमापस्तम्बो दर्शयति– 'ततश्चतुर्हविषेन्द्रतुरीयेण यजते' इति । तैसा.

( इति १ ) दशसप्ता सप्तदशस्य विष्टुतिः ' इति । प्रथमपर्याये प्रथमामृचं त्रिर्गायेत् । द्वितीयपर्याये मध्यमां त्रिर्गायेत् । तृतीयपर्याये मध्यमामुत्तमां च त्रिर्गायेत् । सेयं सप्तदशस्तोमसंबन्धिनी विष्टुतिर्दशसप्तेत्यभिधीयते । ' यद्याव इन्द्र ' इत्यस्यामृच्युत्पन्नं साम वैरूपम् ।

तैसा.

**उदीचीमा तिष्ठानुष्टुप् त्वा छन्दसामवत्वेकविꣳशः स्तोमो वैराजꣳ साम मित्रावरुणौ देवता बलं द्रविणम् ॥**

चतुर्थमन्त्रपाठस्तु— उदीचीमिति । एकविंशस्तोम एवमाम्नातः— ' सप्तभ्यो हिं करोति स तिसृभिः स तिसृभिः स एकया सप्तभ्यो हिं करोति स एकया स तिसृभिः स तिसृभिः सप्तभ्यो हिं करोति स तिसृभिः स एकया स तिसृभिः सप्तसप्तिन्येकविंशस्य विष्टुतिः ' इति । प्रथमपर्याये उत्तमां सकृद्गायेत् । द्वितीयपर्याये प्रथमां, तृतीयपर्याये मध्यमां सकृद्गायेत् । सेयमेकविंशस्तोमसंबन्धिनी विष्टुतिः ( इति १ ) सप्तसप्तिनीत्यभिधीयते इत्यर्थः । ' पिबा सोममिन्द्र मन्दतु त्वा ' इत्यस्यामृच्युत्पन्नं साम वैराजम् ।

तैसा.

**ऊर्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणम् ॥**

पञ्चममन्त्रपाठस्तु— ऊर्ध्वामिति । त्रिणवस्तोम एवमाम्नातः— ' नवभ्यो हिं करोति स तिसृभिः स पञ्चभिः स एकया नवभ्यो हिं करोति स एकया स तिसृभिः स पञ्चभिर्नवभ्यो हिं करोति स पञ्चभिः स एकया स तिसृभिर्वज्रो वै त्रिणवः ' इति । प्रथमपर्याये प्रथमां त्रिर्गायेत्, मध्यमां पञ्चकृत्वो गायेत्, उत्तमां सकृद्गायेत् । द्वितीयपर्याये प्रथमां सकृद्गायेत्, मध्यमां त्रिर्गायेत्, उत्तमां पञ्चकृत्वो गायेत् । तृतीयपर्याये प्रथमां पञ्चकृत्वो गायेत्, मध्यमां सकृद्गायेत्, उत्तमां त्रिर्गायेत् । सोऽयं त्रिरावृत्तनवसंख्योपेतत्वात् त्रिणवनामको वज्रसमानः । त्रयस्त्रिंशस्तोम एवमाम्नातः— ' एकादशभ्यो हिं करोति स तिसृभिः स सप्तभिः स एकयैकादशभ्यो हिं करोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिं करोति स सप्तभिः स एकया स तिसृभिरन्तो वै त्रयस्त्रिंशः ' इति । प्रथमपर्याये प्रथमां त्रिर्गायेत्, मध्यमां सप्तकृत्वः, उत्तमां सकृत् । द्वितीयपर्याये प्रथमां सकृत्, द्वितीयां त्रिः, तृतीयां सप्तकृत्वः । तृतीयपर्याये प्रथमां सप्तकृत्वः, द्वितीयां सकृत्, तृतीयां त्रिरिति । सोऽयं त्रयस्त्रिशः स्तोमानामन्तः । यत्तु वाजपेये उज्जित्यनुवाके त्रयोदशस्तोमश्चतुर्दशस्तोम इत्यादिकमाम्नातं तत्सर्वमुन्नेयस्तोमाभिप्रायेणेति द्रष्टव्यम् । उन्नयनप्रकारस्तु सामसूत्रे द्रष्टव्यः । ' प्रो ष्वस्मै पुरोरथम् ' इत्यस्यामृच्युत्पन्नं साम शाक्वरम् । ' रेवतीर्नः सधमादे ' इत्यस्यामृच्युत्पन्नं साम रैवतम् । त्रिषु मन्त्रेषु ब्राह्मणक्षत्रियवैश्या द्रव्यरक्षका उक्ताः । चतुर्थे शारीरबलस्य तद्रक्षकत्वम् । पञ्चमे वर्चसः प्रख्यातशूरनामकृतस्य तेजसो धनरक्षकत्वम् ।

विधत्ते— ' दिशो व्यास्थापयति । दिशामभिजित्यै । ' ( तैब्रा. १।७।७।१ ) इति । यजमानं दिक्षु प्रस्थापितवतोऽध्वर्योर्मानसमनुक्रमणं विधातुं प्रस्तौति— ' यदनु प्रक्रामेत् । अभि दिशो जयेत् । उत्तु माद्येत् । ' ( तैब्रा. १।७।७।१ ) इति । यद्यध्वर्युर्यजमानमनु पादेन प्रक्रामेत् दिशामभिजयो भवेत्, किंतु उन्माद्येत् बुद्धिभ्रमं प्राप्नुयात् । विधत्ते— ' मनसाऽनु प्रक्रामति । अभि दिशो जयति । नोन्माद्यति । ' ( तैब्रा. १।७।७।१ ) इति । प्रक्रमणस्य कृतत्वाद्दिग्विजयः । पादेन तदकरणादुन्मादाभावः । समिदादीनि दिशां नामानि प्रशंसति— ' समिधमा तिष्ठेत्याह । तेज एवावरुन्धे । उग्रामा तिष्ठेत्याह । इन्द्रियमेवावरुन्धे । विराजमा तिष्ठेत्याह । अन्नाद्यमेवावरुन्धे । उदीचीमा तिष्ठेत्याह । पशूनेवावरुन्धे । ऊर्ध्वामा तिष्ठेत्याह । सुवर्गमेव लोकमभिजयति । ' ( तैब्रा. १।७।७।१–२ ) इति । समिच्छब्दस्य दीप्तिप्रतिपादकतया तेजःप्राप्तिः । उग्रशब्दः इन्द्रियबलोपेतत्वमाचष्टे इतीन्द्रियप्राप्तिः । ' अन्नं वै विराट् ' इतिश्रुत्यनुसारेणान्नप्राप्तिः । ' यर्हि पशुमाप्रीतमुदञ्चं नयन्ति ' इति पशोरुत्तरदिक्संबन्धश्रवणात् पशुप्राप्तिः । स्वर्गलोकस्योर्ध्वभावित्वादभिजयः । विहितं मानसमनुक्रमणं प्रशंसति— ' अनूज्जिहीते । सुवर्गस्य लोकस्य समष्ट्यै । ' ( तैब्रा. १।७।७।२) इति ।

तैसा.

**ईदृङ् च, अन्यादृङ् च, एतादृङ् च, प्रतिदृङ् च, मितश्च, संमितश्च, सभराः । शुक्रज्योतिश्च, चित्रज्योतिश्च, सत्यज्योतिश्च, ज्योतिष्माꣳश्च, सत्यश्च, ऋतपाश्च, अत्यꣳहाः ॥**

कल्पः— 'मारुतमेकविꣳशतिकपालं निर्वपति वैश्वदेवीमामिक्षां तस्यारण्येऽनुवाक्यतृतीयैर्गणैः कपालान्युपदधातीदृङ् चान्यादृङ् चेत्येताभ्यां मध्येऽरण्येऽनुवाक्येन' इति । पाठस्तु— ईदृङ्ङिति । ईदृङ्ङित्यादीनि मरुद्विशेषाणां नामधेयानि । तद्रूपेण भावितत्वात् कपालनामपि तन्नाम । हे प्रथमकपाल, त्वं ईदृङ् चासि एतन्नामकमेवासि । एवमन्यत्रापि योज्यम् । विधत्ते— 'मारुत एष भवति । अन्नं वै मरुतः । अन्नमेवावरुन्धे ।' (तैब्रा. १।७।७।३) इति । एष पुरोडाश इत्यर्थः । तस्मिन् गुणं विधत्ते— 'एकविꣳशतिकपालो भवति प्रतिष्ठित्यै ।' (तैब्रा. १।७।७।३) इति । 'एकविꣳशः स्तोमानां प्रतिष्ठा' इत्युक्तत्वात् प्रतिष्ठाहेतुत्वम् । कपालोपधानमन्त्राणां शेषं पूरयितुं विधत्ते— 'योऽरण्येऽनुवाक्यो गणः । तं मध्यत उपदधाति । ग्राम्यैरेव पशुभिरारण्यान् पशून् परिगृह्णाति । तस्माद्ग्राम्यैः पशुभिरारण्याः पशवः परिगृहीताः ।' (तैब्रा. १।७।७।३) इति । अत्राऽऽम्नातः ईदृङ् चेत्यादिः सप्तसंख्यायुक्त एको गणः । शुक्रज्योतिश्चेत्यादिः सप्तसंख्यायुक्तोऽपरो गणः । तयोर्गणयोर्मध्ये गणान्तरं प्रक्षेपणीयम् । अरण्ये गत्वाऽध्येतव्यो योऽनुवाकस्तस्मिन्ननुवाके स गण आम्नातः । तथाहि— 'धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयꣳश्च । निलिम्पश्च विलिम्पश्च विक्षिपः ।' (तैआ. ४।२४) इति । एतस्य गणस्य मध्यत उपधाने सत्युभयतोऽवस्थितैर्ग्राम्यैः पशुभिः परितोऽवबध्याऽऽरण्यान् पशून् परिगृह्णाति । यस्मादत्रारण्यगणो मध्ये प्रक्षिप्तस्तस्माल्लोकेऽप्यरण्यवासिनो हरिणादय आनीयमानाः पलायनं वारयितुं ग्रामे परिचयवद्भिर्हरिणादिभिरुभयत एकपाशेन बद्ध्वा परिगृहीता भवन्ति । तैसा.

**अग्नये स्वाहा, सोमाय स्वाहा, सवित्रे स्वाहा, सरस्वत्यै स्वाहा, पूष्णे स्वाहा, बृहस्पतये स्वाहा, इन्द्राय स्वाहा, घोषाय स्वाहा, श्लोकाय स्वाहा, अꣳशाय स्वाहा, भगाय स्वाहा, क्षेत्रस्य पतये स्वाहा, पृथिव्यै स्वाहा, अन्तरिक्षाय स्वाहा, दिवे स्वाहा, सूर्याय स्वाहा, चन्द्रमसे स्वाहा, नक्षत्रेभ्यः स्वाहा, अद्भ्यः स्वाहा, ओषधीभ्यः स्वाहा, वनस्पतिभ्यः स्वाहा, चराचरेभ्यः स्वाहा, परिप्लवेभ्यः स्वाहा, सरीसृपेभ्यः स्वाहा ॥**

कल्पः— 'अग्नये स्वाहेति षट्पार्थानि पुरस्तादभिषेकस्य जुहोति' इति, 'इन्द्राय स्वाहेति षट्पार्थान्युपरिष्टादभिषेकस्य जुहोति' इति च, 'पृथिव्यै स्वाहेति षड्भूतानामवेष्टीः' इति । च, 'अद्भ्यः स्वाहेति षड्भूतानामवेष्टीः' इति च एतस्मिन्नवेष्टिविनियोगेऽप्यभिषेकात्पूर्वं षट्कमेकं तत ऊर्ध्वमपरं षट्कमिति द्रष्टव्यम् । पाठस्तु— अग्नय इति । अत्र चतुर्थ्यन्तैरुक्ताः सर्वे देवताविशेषा द्रष्टव्याः । तत्र पार्थानि विधातुं प्रस्तौति— 'पृथिर्वैन्यः । अभ्यषिच्यत । स राष्ट्रं नाभवत् । स एतानि पार्थान्यपश्यत् । तान्यजुहोत् । तैर्वै स राष्ट्रमभवत् ।' (तैब्रा. १।७।७।३-४) इति । वेनस्य पुत्रः पृथिनामा कश्चिद्राजा राजसूये पार्थहोमं विनैवाभ्यषिच्यत । ततः स राष्ट्रं न प्राप्नोत् । अतो राष्ट्रप्राप्तये पार्थसंज्ञकानि 'अग्नये स्वाहा' इत्यादीनि मन्त्रवाक्यान्यपश्यत् । तैर्हुत्वा राष्ट्रं प्राप्नोत् । विधत्ते— 'यत्पार्थानि जुहोति । राष्ट्रमेव भवति ।' (तैब्रा. १।७।७।४) इति । भवत्येव प्राप्नोत्येव । षष्ठसप्तममन्त्रौ प्रशंसति— 'बार्हस्पत्यं पूर्वेषामुत्तमं भवति । ऐन्द्रमुत्तरेषां प्रथमम् । ब्रह्म चैवास्मै क्षत्रं च समीची दधाति । अथो ब्रह्मन्नेव क्षत्त्रं प्रतिष्ठापयति ।' (तैब्रा. १।७।७।४) इति । 'बृहस्पतये स्वाहा' इत्येतन्मन्त्रवाक्यं पूर्वेषां षण्णां मन्त्राणां चरमम् । 'इन्द्राय स्वाहा' इत्येतद्वाक्यमुत्तरेषां षण्णां प्रथमम् । तथा सति बृहस्पतेरिन्द्रस्य च ब्राह्मणक्षत्त्रियाभिमानिदेवत्वादस्मै यजमानाय तज्जातिद्वयं समीची दधाति परस्परस्नेहयुक्तं करोतीत्यर्थः । किंच, तयोर्मन्त्रयोः पूर्वोत्तरभावेन ब्राह्मणे क्षत्त्रियं प्रतिष्ठापयति ब्राह्मणानुकूलं करोतीत्यर्थः । विधत्ते— 'षट् पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात् । द्वादश संपद्यन्ते । द्वादश मासाः

संवत्सरः । संवत्सरः खलु वै देवानां पूः । देवानामेव पुरं मध्यतो व्यवसर्पति । तस्य न कुतश्चनोपाव्याधो भवति ।' (तैब्रा. १।७।७।५) इति । वसन्ते वसन्ते देवैः सोमस्य पीयमानत्वाद्भोगस्थानत्वेन संवत्सरो देवानां पुरमिव भवति । यथा पुरे पण्यवीथी व्यवस्थिताभ्या-मुभयतो वाटिकाभ्यां युक्ता भवति, तस्यां गच्छन्पुरुष-श्चोरैरविद्धो भवति, तद्वत्पार्थयोः षट्कयोर्मध्येऽभिषेकाय यजमानो देवपुरमध्ये प्रविशति, तस्य कुतोऽप्यन्यस्मा-द्बाधो न भवति । विधत्ते– ' भूतानामवेष्टीर्जुहोति । अत्रात्र वै मृत्युर्जायते । यत्र यत्रैव मृत्युर्जायते । तत एवैनमवयजते । तस्माद्राजसूयेनेजानः सर्वमायुरेति । सर्वे ह्यस्य मृत्यवोऽवेष्टाः । तस्माद्राजसूयेनेजानो नाभि-चरितवै । प्रत्यगेनमभिचारः स्तृणुते ।' (तैब्रा. १।७।७। ५–६) इति । भूतानां यक्षराक्षसपिशाचादीनां मृत्यु-हेतूनामवयजनस्य विनाशस्य हेतवः (आहुतयः ?), ' पृथिव्यै स्वाहा ' इत्यादिद्वादशमन्त्रसाध्या आहुतयो भूतानामवेष्टयः, ता जुहुयात् । अत्रात्र संध्याकाले मध्यरात्रे निर्जनदेशे उच्छिष्टदेशे बाल्याद्यवस्थायां च भूतोपद्रवरूपो मृत्युरुत्पद्यते । अनेन तु होमेन तत एव देशात्कालादवस्थाविशेषाच्चैनं मृत्युमवयजते नाशयति । यस्मात् मृत्युर्नाशितस्तस्माद्राजसूयेनेष्टवतो यजमानस्याप-मृत्युपरिहारेण कृत्स्नायुःप्राप्तिर्भवति । यस्मात् वैरिभिरा-पादितो भूताद्युपद्रवो राजसूययाजिनं न प्राप्नोति तस्मादयं नाभिचरितवै नाभिचरणीयः । स च परैः कृतोऽभिचारः प्रत्यक् कर्तुरेवाभिमुखो भूत्वा तमेनं अभिचारकर्तारं स्तृणुते हिनस्ति । तैसा.

अभिषेकः

### सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् ॥

त्रयोदशेऽनुवाके दिग्व्यास्थापनमुक्तम् । चतुर्दशे अभिषेक उच्यते । कल्पः– ' अग्रेण प्रशास्तुर्धिष्णियं खादिरीमौदुम्बरीं वाऽऽसन्दीं प्रतिष्ठाप्य सोमस्य त्विषि-रसीति तस्यां शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य ' इति । पाठस्तु– सोमस्येति । हे शार्दूलचर्म, त्वं सोमस्य दीप्तिरसि अतस्तवेव मे दीप्तिर्भूयात् । विधत्ते– ' सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति शार्दूलचर्मोप-स्तृणाति । यैव सोमे त्विषिः । या शार्दूले । तामेवाव-रुन्धे ।' (तैब्रा. १।७।८।१) इति । शार्दूलचर्मगतां दीप्तिं दृष्ट्वा सोमदीप्तित्वेन भावनादुभयावरोधः । तैसा.

### अमृतमसि मृत्योर्मा पाहि ॥

कल्पः– ' अमृतमसीति तस्मिञ्छतमानं हिरण्यं निधाय ' इति । तस्मिन् शार्दूलचर्मणि । पाठस्तु– अमृतमिति । हिरण्यस्यामृतत्वमसकृत्पूर्वमुक्तम् । हिरण्यस्य स्थापनं तत्प्रमाणं च क्रमेण विधत्ते– ' मृत्योर्वा एष वर्णः । यच्छार्दूलः । अमृतꣳ हिरण्यम् । अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति । अमृतमेव मृत्योर-न्तर्धत्ते । शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति ।' (तैब्रा. १।७।८।१–२) इति । वर्णः देहः । तैसा.

### दिद्योन्मा पाहि ॥

कल्पः– ' दिद्योन्मा पाहीति सौवर्णेन शतमानेन शत-क्षरेण शतकृष्णलेन यजमानस्य शीर्षन्नधि निधत्ते ' इति । हे दिद्योत् द्योतनात्मक शिरस्यभिषेकजलसेचनार्थे स्थापित शतच्छिद्रयुक्त सुवर्णपात्र, त्वं मां रक्ष । विधत्ते– ' दिद्योन्मा पाहीत्युपरिष्टादधिनिदधाति । उभयत एवास्मै शर्म दधाति ।' (तैब्रा. १।७।८।२) इति । उभयतः अधस्तादुपरिष्टाच्च अमृतरूपस्य सुवर्णस्य स्थितत्वात् सुखं भवति । तैसा.

### अवेष्टा दन्दशूकाः ॥

कल्पः– ' अवेष्टा दन्दशूका इति दक्षिणत आसीनं क्लीबं सीसेन विध्यति ' इति । दन्दशूकाः सर्पाः अवेष्टाः विनाशिताः । विधत्ते– ' अवेष्टा दन्दशूका इति क्लीबꣳ सीसेन विध्यति । दन्दशूकानेवावयजते । तस्मात्क्लीबं दन्द-शूका दꣳशुकाः ।' (तैब्रा. १।७।८।२) इति । यस्मा-त्सर्पत्वेन भावितं सीसं क्लीबे पातितं तस्माल्लोकेऽपि क्लीबं पुंस्त्वरहितं पलायनाद्यक्षमं बहुवल्मीकोपेतेऽरण्ये गच्छन्तं सर्पा दन्दशूका दंशुका भवन्ति दंशशीला इत्यर्थः । तैसा.

**निरस्तं नमुचेः शिरः ॥**

कल्पः– ' सव्येन पदा लोहितायसं निरस्यति निरस्तं नमुचेः शिर इति ' इति । लोहितायसं ताम्रं पूर्वं फेनेन पातितं यन्नमुचेः शिरस्तदिदं ताम्ररूपं संनिरस्तं परित्यक्तम् । एतच्च ताम्रं नापितस्योपरि प्रक्षेप्तव्यम् । अत एवाऽऽपस्तम्ब आह– ' तामारोहन्यजमानोऽवेष्टा दन्दशूका इति दक्षिणेन पदा सीसं षण्डकाय प्रत्यस्यति, निरस्तं नमुचेः शिर इति सव्येन लोहितायसं केशवापाय, तौ बहिर्वेदि निरस्यतः ' इति । विधत्ते– ' निरस्तं नमुचेः शिर इति लोहितायसं निरस्यति । पाप्मानमेव नमुचिं निरवदयते । ' ( तैब्रा. १।७।८।२ ) इति । तैसा.

**सोमो राजा वरुणो देवा धर्मसुवश्च ये । ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रꣳ सुवन्ताम् ॥**

कल्पः– ' ऊर्ध्वबाहुं तिष्ठन्तं माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चति सोमो राजेत्यभिमन्त्र्य सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति पालाशेन पुरस्तादध्वर्युरेवमितरत्रौदुम्बरेण दक्षिणतो ब्रह्मा राजन्यो वाऽऽश्वत्थेन पश्चाद्वैश्यो नैयग्रोधेनोत्तरतो जन्यः ' इति । जन्यः सखा । अभिमन्त्रणमन्त्रपाठस्तु– सोम इति । यः सोमो राजा वरुणो यो राजा ये चान्ये देवा गृहपत्यग्न्यादयः धर्मसुवः धर्ममनुजानन्तः सन्ति ते सर्वे तव वाचमनुजानन्तु । एवं प्राणादिषु योज्यम् । तैसा.

**सोमस्य त्वा द्युम्नेनाभि षिञ्चाम्यग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा ॥**

अभिषेकमन्त्रपाठस्तु– सोमस्येति । हे यजमान, त्वां सोमस्य द्युम्नेन दीप्त्या अभिषिञ्चामि । एवमग्नेस्तेजसेत्यादौ योज्यम् । अभिमन्त्रणमन्त्रस्य प्रयोजनं दर्शयति– ' प्राणा आत्मनः पूर्वेऽभिषिच्या इत्याहुः । सोमो राजा वरुणः । देवा धर्मसुवश्च ये । ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तामित्याह । प्राणानेवाऽऽत्मनः पूर्वानभिषिञ्चति । ' ( तैब्रा. १।७।८।२–३ ) इति । आत्मनः यजमानस्य प्राणा वागादयो ये सन्ति ते यजमानाभिषेकात्पूर्वमभिषिच्या इत्याहुरभिज्ञाः । युक्तो हि तेषाममूर्तानां मन्त्रपाठमात्रेणाभिषेकः । मन्त्रे हि सोमादयो देवा वागादीनभिषिक्ताननुजानन्त्वित्येवावबुध्यते । तस्मात्तत्पाठ एवाभिषेकः । स च पाठः प्रथमतः कृत इत्यसौ पूर्वाभिषेकः । अभिषेकमन्त्रे प्रथमभागस्य शाखान्तरपाठं निराकृत्यात्रत्यं पाठं विधत्ते– ' यद्ब्रूयात् । अग्नेस्त्वा तेजसाऽभिषिञ्चामीति । तेजस्व्येव स्यात् । दुश्चर्मा तु भवेत् । सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्याह । सौम्यो वै देवतया पुरुषः । स्वयैवैनं देवतयाऽभिषिञ्चति । ' ( तैब्रा. १।७।८।३–४ ) इति । ' सोमो वै रेतोधाः ' इत्यादौ रेतोधारिणः पुरुषस्य सोमत्वनिरूपणात् पुरुषः सोमदेवत्यः । सोमदेवतयाऽभिषेके सति लावण्यलाभाद्दुश्चर्मत्वं न भवेत् । उक्तभागानां पाठं तत्तत्प्राप्त्या प्रशंसति– ' अग्नेस्तेजसेत्याह । तेज एवास्मिन्दधाति । सूर्यस्य वर्चसेत्याह । वर्च एवास्मिन्दधाति । इन्द्रस्येन्द्रियेणेत्याह । इन्द्रियमेवास्मिन्दधाति । मित्रावरुणयोर्वीर्येणेत्याह । वीर्यमेवास्मिन्दधाति । मरुतामोजसेत्याह । ओज एवास्मिन्दधाति । ' ( तैब्रा. १।७।८।४–५ ) इति । तैसा.

**क्षत्राणां क्षत्रपतिरसि ॥**

कल्पः– ' क्षत्राणां क्षत्रपतिरसीत्यभिषिच्यमानमभिमन्त्रयते ' इति । हे यजमान, त्वं क्षत्रियाणां पतिरसि । नात्र केषांचित्पतिः, किंतु सर्वेषां क्षत्रियाणाम् । अनेनैवाभिप्रायेण क्षत्रशब्दस्य द्विरुक्तिः । मन्त्रसामर्थ्यादशेषक्षत्रियपतित्वसिद्धिं दर्शयति– ' क्षत्राणां क्षत्रपतिरसीत्याह । क्षत्राणामेवैनं क्षत्रपतिं करोति । ' ( तैब्रा. १।७।८।५ ) इति । तैसा.

**अति दिवस्पाहि ॥**

कल्पः– ' कृष्णविषाणया वासांसि विचृत ( ? त्य ) एकं द्वे सर्वाणि वैतान्युत्कर उदस्यत्यति दिवस्पाहीति ' इति । यान्यभिषेककाले लेपलिप्तानि वस्त्राणि तेषामेव त्यागः । हे यजमान, दिवः द्योतमानान् अन्यान्पार्थिवानतिक्रम्य त्वमेव सर्वां भूमिं पाहि । द्युशब्दस्येतरपुरुष-

परत्वं दर्शयति— 'अति दिवस्पाहीत्याह । अत्यन्यान्पाहीति वावैतदाह ।' ( तैब्रा. १।७।८।५ ) इति ।
तैसा.

**समाववृत्रन्नधरागुदीचीरहिं बुध्नियमनु संचरन्तीस्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयानाः ॥**

कल्पः— 'समाववृत्रन्निति येऽभिषिच्यमानस्य लेपा व्यवस्रवन्ति तान् पात्रैरुन्मार्ष्टि' इति । पाठस्तु— समाववृत्रन्निति । या आपो लेपरूपेण स्रवन्ति अधराक् अधोगताः, उदीचीः ऊर्ध्वे गताः, समाववृत्रन् सम्यगावृत्य स्थिताः, न हीयते इत्यहिः उत्तमाङ्गं, बुध्नस्य पादस्य अग्रभागो बुध्नियः, शिरःप्रभृति पादाग्रपर्यन्तमनुक्रमेण संचरन्त्यः ता आपः पर्वतस्य वृषभस्य पृष्ठे पर्वतसदृशस्य वर्षणक्षमस्य मेघस्योपरि नद्यां नाव इव चरन्ति । यद्वा नावः नौयोग्या बहुलाश्चरन्ति । कीदृश्यः ? स्वसिचः स्वं आत्मीयं यजमानक्षेत्रं सिञ्चन्तीति स्वसिचः । इयानाः आगच्छन्त्यः, बाहुल्येन सर्वत्र प्रभवन्त्य इत्यर्थः । वस्त्रनिरसनमन्त्रः पूर्वमाम्नातोऽपि सामर्थ्यात्पश्चात्प्रयोक्तव्यः । लेपोदकानामूर्ध्वाधोभागयोः सम्यगावृत्य स्थित्या राष्ट्रध्रौव्यसंपत्तिं दर्शयति— 'समाववृत्रन्नधरागुदीचीरित्याह । राष्ट्रमेवास्मिन्ध्रुवमकः ।' ( तैब्रा. १।७।८।५ ) इति ।
तैसा.

**रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि ॥**

कल्पः— 'आग्नीध्रे प्रेरकं जुहोति रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि स्वाहेति' इति । अत्र स्वाहाकारोऽध्याहृतः । हे रुद्र, यत्तव परं उत्कृष्टं नाम शर्वादिकं 'नमः शिवाय (? शर्वाय च) पशुपतये' इत्यादिश्रुतिप्रसिद्धं क्रयि जपपरान् पुरुषान् फलप्रदानेन क्रीणाति वशीकरोतीति क्रयि, तस्मै नाम्ने हुतमसि अभिषेकशेषभूतं पात्रस्थं जलं हुतमस्तु । तच्च यमस्येष्टमस्तु । विधत्ते— 'उच्छेषणेन जुहोति । उच्छेषणभागो वै रुद्रः । भागधेयेनैव रुद्रं निरवदयते ।' ( तैब्रा. १।७।८।५ ) इति । 'यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति' इति श्रुतत्वाद्रुद्रस्योच्छेषणभागत्वम् । तत्रैव कंचिद्विशेषं विधत्ते— 'उदङ्पर्येत्याग्नीध्रे जुहोति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते ।' (तैब्रा. १।७।८।६) इति । नाम्न आहुतिप्रदानेन प्रयोजनं दर्शयति— 'रुद्र यत्ते क्रयी परं नामेत्याह । यद्वा अस्य क्रयी परं नाम । तेन वा एष हिनस्ति । यꣳ हिनस्ति । तेनैवैनꣳ सह शमयति ।' ( तैब्रा १।७।८।६ ) इति । एष रुद्रस्तेनैव शर्वादिनाम्ना स्वक्रोधविषयं पुरुषं हिनस्ति । तथा सति यो वध्योऽस्ति तमेनं पुरुषं तेनैव घातकेन नाम्ना सह शमयति । आहुतिदानेन घातकं नाम शाम्यति, तदानीमेव वध्योऽपि शाम्यति, वध्यत्वं निवर्तत इत्यर्थः । यमेष्टमित्यस्य पदस्य तात्पर्यं दर्शयति— 'तस्मै हुतमसि यमेष्टमसीत्याह । यमादेवास्य मृत्युमवयजते ।' ( तैब्रा. १।७।८।६ ) इति । यमस्येष्टसिद्धौ तदनुग्रहादेव यजमानस्यापमृत्युं विनाशयति ।
तैसा.

**प्रजापते न त्वदेतान्यन्यो**
**विश्वा जातानि परि ता बभूव ।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु**
**वयꣳ स्याम पतयो रयीणाम् ॥**

कल्पः— 'अत्रैतेषामभिषेकाणां मुख्यपात्रे संस्रावान् समवनीय प्रतिहितस्य गृहानेत्यान्वारब्धयोः प्रतिहिते च महिष्यां च जुहोति प्रजापते न त्वदेतान्यन्य इति' इति । प्रतिहितः अत्यन्तप्रियपुत्रः, तं च महिषीं च स्पर्शयित्वा जुहुयात् । पाठस्तु— प्रजापत इति । हे प्रजापते, त्वदन्यः कोऽपि पुरुषः उत्पन्नानि तान्येतानि विश्वानि न परिबभूव परिभवितुं समर्थो नाभूत् । परिभवः सृष्टेरप्युपलक्षणम् । सृष्टिसंहारयोरशक्त इत्यर्थः । अतस्ते तव वयं यत्कामा जुहुमस्तत् फलमस्माकमस्तु । वयं धनानां पतयः स्याम । विधत्ते— 'प्रजापते न त्वदेतान्यन्य इति तस्यै गृहे जुहुयात् । यां कामयेत राष्ट्रमस्यै प्रजा स्यादिति । राष्ट्रमेवास्यै प्रजा भवति ।' ( तैब्रा. १।७।८।७ ) इति । अस्यै प्रजा राष्ट्रं स्यात् । प्रियाया भार्यायाः पुत्रो राष्ट्रं पालयितुं समर्थो भूयादित्यर्थः । विधत्ते— 'पर्णमयेना-

ध्वर्युरभिषिञ्चति । ब्रह्मवर्चसमेवास्मिन्त्विषिं दधाति । औदुम्बरेण राजन्यः । ऊर्जमेवास्मिन्नन्नाद्यं दधाति । आश्वत्थेन वैश्यः । विशमेवास्मिन्पुष्टिं दधाति । नैयग्रोधेन जन्यः । मित्राण्येवास्मै कल्पयति । अथो प्रतिष्ठित्यै । ' ( तैब्रा. १।७।८।७-८ ) इति । ब्रह्मवर्चसमेव त्विषिं अध्ययनादिकृतमुत्कर्षम् । ऊर्जमेव अन्नाद्यं बलप्रदं अन्नं प्रियं चान्नम् । विशमेव पुष्टिं करप्रदातृप्रजासंपत्तिम् । तैसा.

रथेन विजयः

**इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात् ॥**

चतुर्दशे अभिषेक उक्तः । पञ्चदशे रथेन विजयोऽभिधीयते । कल्पः– ' इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहृत्य ' इति । पाठस्तु– इन्द्रस्येति । वार्त्रघ्नो वैरिघाती योऽयमिन्द्रस्य वज्रः, हे रथ, स एव त्वमसि । त्वया सहकारिणा सहितोऽयं यजमानो वृत्रं वैरिणं वध्यात् । विधत्ते– ' इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति रथमुपावहरति विजित्यै । ' ( तैब्रा. १।७।९।१ ) इति । तैसा.

**मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेन ॥**

कल्पः– ' अथ दक्षिणं योग्यं युनक्ति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेनेति ' इति । हे दक्षिणाश्व, त्वां प्रशास्त्रोः आज्ञापयित्रोः मित्रावरुणयोः प्रशिषा प्रशासनेन यज्ञसंबन्धि( ? न्ध )निमित्तं रथे युनज्मि । मित्रावरुणपदाभिप्रायं दर्शयति– ' मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीत्याह । ब्रह्मणैवैनं देवताभ्यां युनक्ति । ' ( तैब्रा. १।७।९।१ ) इति । ब्रह्मणा मन्त्रेण प्रतिपादिताभ्यां मित्रावरुणदेवताभ्यां प्रशासितो युनक्ति । रथस्याश्वत्रयोपेतत्वं विधत्ते– ' प्रष्टिवाहिनं युनक्ति । प्रष्टिवाही वै देवरथः । देवरथमेवास्मै युनक्ति । ' ( तैब्रा. १।७।९।१ ) इति । तादृशं रथं प्रकारान्तरेण प्रशंसति– ' त्रयोऽश्वा भवन्ति । रथश्चतुर्थः । द्वौ सव्येष्ठसारथी । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं युनक्ति । ' ( तैब्रा. १।७।९।१,२ ) इति । सव्येष्ठेत्यत्र दक्षिणस्थेत्यध्याहार्यम् । ततः पार्श्वद्वयवर्तिनौ द्वौ सारथी संपद्येते । तैसा.

**विष्णोः क्रमोऽसि, विष्णोः क्रान्तमसि, विष्णोर्विक्रान्तमसि ॥**

कल्पः– ' विष्णोः क्रमोऽसीति रथं यजमानोऽत्येति ' इति । पाठस्तु– विष्णोरिति । यजमानस्य मम हे प्रथमप्रक्रम, त्वं विष्णोर्व्यापनशीलस्य जगदीश्वरस्य त्रिविक्रमावतारस्य क्रमोऽसि प्रथमपदप्रक्षेपेण जितो भूलोकोऽसि । हे द्वितीयप्रक्रम, त्वं क्रान्तं विष्णोर्द्वितीयपदप्रक्षेपेण जितमन्तरिक्षमसि । हे तृतीयप्रक्रम, त्वं विक्रान्तं विष्णोः पराक्रमेण जितं त्रिविष्टपमसि । विधत्ते– ' विष्णुक्रमान्क्रमते । विष्णुरेव भूत्वेमाँल्लोकानभिजयति । ' ( तैब्रा. १।७।९।२ ) इति । प्रियपुत्रस्यान्वारम्भणं विधत्ते– ' यः क्षत्रियः प्रतिहितः । सोऽन्वारभते । राष्ट्रमेव भवति । ' ( तैब्रा. १।७।९।२ ) इति । प्राप्नोतीत्यर्थः । ' प्र ससाहिषे ' इत्येतामृचं विधत्ते– ' त्रिष्टुभाऽन्वारभते । इन्द्रियं वै त्रिष्टुक् । इन्द्रियमेव यजमाने दधाति । ' ( तैब्रा. १।७।९।२ ) इति । तैसा.

**मरुतां प्रसवे जेषम् ॥**

कल्पः– ' मरुतां प्रसवे जेषमिति प्रयाति ' इति । मरुत्संज्ञकानां देवानामनुज्ञायां सत्यामहं जेष्यामि । तदनुज्ञायां जयहेतुतां दर्शयति– ' मरुतां प्रसवे जेषमित्याह । मरुद्भिरेव प्रसूत उज्जयति । ' ( तैब्रा. १।७।९।३ ) इति । तैसा.

**आप्तं मनः ॥**

कल्पः– ' सधनू राजन्यः पुरस्तादुत्तरतो वाऽवस्थितो भवति तस्मा एतानिषूनस्यत्याप्तं मन इति ' इति । मनः अभिमतं आप्तं प्राप्तम् । अमुमेवार्थं दर्शयति– ' आप्तं मन इत्याह । यदेव मनसैप्सीत् । तदापत् । ' ( तैब्रा. १।७।९।३ ) इति । ऐप्सीत् आप्तुमिष्टवान् । आपत् प्राप्नोति । विधत्ते– ' राजन्यं जिनाति । अनाक्रान्त एवाऽऽक्रमते । ' ( तैब्रा. १।७।९।३ ) इति । बाणविमोकेन राजन्ये जिते सति स्वयं शत्रुणाऽनपक्रान्त एव सन् शत्रुमाक्रान्तवान् भवति । तैसा.

**समहमिन्द्रियेण वीर्येण ॥**

कल्पः— 'तं जित्वा समहमिन्द्रियेण वीर्येणेति प्रदक्षिणमावर्तते' इति। हस्तादीन्द्रियगतेन सामर्थ्येनाहं संगतोऽभूवम्। मन्त्रपाठेन वीर्यसंगतिं दर्शयति— 'वि वा एष इन्द्रियेण वीर्येणर्ध्यते। यो राजन्यं जिनाति। समहमिन्द्रियेण वीर्येणेत्याह। इन्द्रियमेव वीर्यमात्मन्धत्ते।' (तैब्रा. १।७।९।३–४) इति। तैसा.

**पशूनां मन्युरसि तवेव मे मन्युर्भूयात्॥**

कल्पः— 'पशूनां मन्युरसीति वाराही उपानहावुपमुच्य' इति। पाठस्तु— पशूनामिति। हे वराहचर्मनिर्मित उपानत्, त्वं पशूनां मन्युरूपाऽसि। अतो यथा तव मन्युरूपत्वं तद्वन्ममापि वैरिषु मन्युर्भूयात्। विधत्ते— 'पशूनां मन्युरसि तवेव मे मन्युर्भूयादिति वाराही उपानहावुपमुञ्चते। पशूनां वा एष मन्युः। यद्वराहः। तेनैव पशूनां मन्युमात्मन्धत्ते।' (तैब्रा. १।७।९।४) इति। वराहस्याभिनिवेशाधिक्यं मन्युरूपत्वम्। वाराहत्वं प्रशस्योपानह उपमोकं प्रशंसति— 'अभि वा इयꣳ सुषुवाणं कामयते। तस्येश्वरेन्द्रियं वीर्यमादातोः। वाराही उपानहावुपमुञ्चते। अस्या एवान्तर्धत्ते। इन्द्रियस्य वीर्यस्यानात्यै।' (तैब्रा. १।७।९।४) इति। इयं भूमिः सुषुवाणं अभिषिक्तं अभिलक्ष्य तदीयमिन्द्रियं वीर्यमादातुं कामयते। कामयित्वा च तस्येन्द्रियं वीर्यमादातुमीश्वरा शक्ता भवति। उपानदुपमोकेन भूम्याः सकाशादन्तर्धानं कृतवान् भवति। तस्यान्तर्धानमनात्यै भूम्या वीर्यस्य अस्वीकाराय भवति। तैसा.

**नमो मात्रे पृथिव्यै माऽहं मातरं पृथिवीꣳ हिꣳसिषं मा मां माता पृथिवी हिꣳसीत्॥**

कल्पः— 'नमो मात्र इत्यवरोक्ष्यन् पृथिवीमभिमन्त्र्य' इति। पाठस्तु— नम इति। अन्योन्यहिंसाभावप्रार्थनं विस्पष्टम्। एतदेव दर्शयति— 'नमो मात्रे पृथिव्या इत्याहाहिꣳसायै।' (तैब्रा. १।७।९।५) इति। तैसा.

**इयदस्यायुरस्यायुर्मे धेहि, ऊर्गस्यूर्जं मे धेहि, युङ्ङसि वर्चोऽसि वर्चो मयि धेहि॥**

कल्पः— 'अवरुह्य मणीन्प्रतिमुञ्चत इयदसीति राजतमूर्गसीत्यौदुम्बरं युङ्ङसीति सौवर्णम्' इति। औदुम्बरं ताम्रमयम्। पाठस्तु— इयदिति। हे राजतमणे, त्वं इयदसि एतावत्परिमाणोऽसि। अत्र तत्परिमाणं हस्तेनाभिनीयते। परिमितत्वादेवाऽऽयुःस्वरूपोऽसि, तस्मादायुर्मे प्रयच्छ। हे ताम्रमणे, ऊर्गसि बलरूपोऽसि, अतो बलं मे प्रयच्छ। हे सौवर्णमणे, युङ्ङसि धारयितुं योग्योऽसि, धारिते सति च वर्चोऽसि तेजस्वी भवसि, अतो मे कान्तिं प्रयच्छ। मन्त्राणां पाठादेव तदुक्तफलसिद्धिं दर्शयति— 'इयदस्यायुरस्यायुर्मे धेहीत्याह। आयुरेवाऽऽत्मन्धत्ते। ऊर्गस्यूर्जं मे धेहीत्याह। ऊर्जमेवाऽऽत्मन्धत्ते। युङ्ङसि वर्चोऽसि वर्चो मयि धेहीत्याह। वर्च एवाऽऽत्मन्धत्ते।' (तैब्रा. १।७।९।५) इति। विधत्ते— 'एकधा ब्रह्मण उपहरति। एकधैव यजमान आयुरूर्जं वर्चो दधाति।' (तैब्रा. १।७।९।५) इति। तदिदं सूत्रकारेण स्पष्टीकृतम्— 'उपहूतायामिडायामुन्मुच्य मणीन् ब्रह्मणे ददाति' इति। तैसा.

**अग्नये गृहपतये स्वाहा, सोमाय वनस्पतये स्वाहा, इन्द्रस्य बलाय स्वाहा, मरुतामोजसे स्वाहा॥**

कल्पः— 'अग्नये गृहपतये स्वाहेति रथविमोचनीयान् होमान् हुत्वा' इति। पाठस्तु— अग्नय इति। स्पष्टोऽर्थः। विधत्ते— 'रथविमोचनीया जुहोति प्रतिष्ठित्यै।' (तैब्रा. १।७।९।५) इति। पाठप्राप्तामाहुतिसंख्यां प्रशंसति— 'त्रयोऽश्वा भवन्ति। रथश्चतुर्थः। तस्माच्चतुर्जुहोति।' (तैब्रा. १।७।९।६) इति। तैसा.

**हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥**

कल्पः— 'हꣳसः शुचिषदिति सह संग्रहीत्रा रथवाहने रथमत्यादधाति' इति। अश्वस्य प्रग्रहं सम्यक् गृह्णातीति संग्रहीता। पाठस्तु— हंस इति। हन्ति पृथिवीमिति हंसो रथः। शुचौ देवयजने रथवाहने च सीदतीति शुचिषत्। स्वस्योपरि यजमानं वासयतीति वसुः। तरुगुल्माद्यनवरुद्धेऽन्तरिक्षे सीदतीत्यन्तरिक्षसत्। होता होतृसमानः। तदेव कथमित्युच्यते— वेद्यां सीदतीति वेदिषत्। अतिथि-

सदृशश्च । तदपि कथमित्युच्यते— दुरोणेषु गृहेषु सीदतीति दुरोणसत् । यो यस्तमारोढुं नयति तस्य तस्य गृहे सीदति । नृषु मनुष्येषु उपकारं कर्तुं सीदतीति नृषत् । वरे श्रेष्ठे राजादिगृहे सीदतीति वरसत् । ऋते यज्ञे वाजपेयादौ सीदतीत्यृतसत् । सूर्यं वोढुं व्योमनि आकाशे सीदतीति व्योमसत् । 'अप्सुयोनिर्वा अश्वः' (तैसं. २।३।१२।३) इति श्रुतेः अद्भ्यो जातैरश्वैरुपेतत्वादब्जाः । गोशब्दवाच्याद्वज्रात् जायते इति गोजाः । एतच्च 'स्फ्यस्तृतीयꣳ रथस्तृतीयम्' (तैसं. ५।२।६।२) इत्याम्नातम् । ऋतजाः, प्रष्टिवाहिनः ऋतार्थे यज्ञार्थे जातत्वात् । अद्रिभ्यः पाषाणसदृशेभ्यो दृढेभ्यः काष्ठेभ्यो जातत्वादद्रिजाः । ईदृशो रथो बृहत् प्रौढं राजसूयाख्यमृतं यज्ञं संपादयत्विति शेषः । विधत्ते— 'यदुभौ सहावतिष्ठेताम् । समानं लोकमियाताम् । सह संग्रहीत्रा रथवाहने रथमादधाति । सुवर्गादेवैनं लोकादन्तर्दधाति ।' (तैब्रा. १।७।९।६) इति । अश्वप्रग्रहधारी यः संग्रहीता यश्च रथादवरूढो यजमानस्तावुभौ सह स्वर्गरूपायां वेद्यां यद्यवतिष्ठेतां तदानीं यज्वा चेतरश्च सदृशं लोकं प्राप्नुयाताम् । तच्चायुक्तम् । तस्मात् रथे एवावस्थितेन संग्रहीत्रा सह तं रथं रथवाहने काष्ठे स्थापयेत् । तथा सति संग्रहीता वेदिरूपात्स्वर्गादन्तर्हितो भवति । मन्त्रं विनियुङ्क्ते— 'हꣳसः शुचिषदित्यादधाति । ब्रह्मणैवैनमुपावहरति । ब्रह्मणा दधाति ।' (तैब्रा. १।७।९।६) इति । पूर्वं 'इन्द्रस्य वज्रोऽसि' इति मन्त्रेणैवैनं रथमुपावहृतवान् , तस्मादिदानीमपि 'हंसः' इति मन्त्रेण रथमाधातुं युक्तम् । मन्त्रगतच्छन्दोविशेषं प्रशंसति— 'अतिच्छन्दसा दधाति । अतिच्छन्दा वै सर्वाणि छन्दाꣳसि । सर्वेभिरेवैनं छन्दोभिरादधाति । वर्ष्म वा एषा छन्दसाम् । यदतिच्छन्दाः । यदतिच्छन्दसा दधाति । वर्ष्मैवैनꣳ समानानां करोति ।' (तैब्रा. १।७।९।७) इति । हंसमन्त्रस्य च्छन्दोऽतिजगती । सा च गायत्र्यादीनि अल्पच्छन्दांसि अतिक्रम्य वर्तते इति तस्या अतिच्छन्दस्त्वम् । अत एव च्छन्दसां तत्रान्तर्भावात्सर्वच्छन्दोरूपत्वम् । तथा सत्यनया रथे आहिते सति सर्वैश्छन्दोभिराहितो भवति । किंच, एषा अतिजगती सर्वेषां छन्दसां शरीरम्, अत्रत्यैरक्षरैः कैश्चित्क्वचित्कस्यचिच्छन्दसः संपादयितुं शक्यत्वात् । तथा सत्यनया रथाधाने यजमानः सर्वेषां समानानां शरीरस्थानीयो भवति । तैसा.

आसनोपविष्टस्य सेवा

**मित्रोऽसि, वरुणोऽसि ॥**

पञ्चदशे दिग्विजयोऽभिहितः । षोडशे विजयादूर्ध्वमासने उपविश्य (? विष्टस्य) सर्वैः सेव्यत्वं वर्ण्यते । कल्पः— 'मित्रोऽसीति दक्षिणं बाहुं यजमान उपावहरते, वरुणोऽसीति सव्यम्' इति । पूर्वं 'हिरण्यवर्णावुषसाम्' इति मन्त्रेण यजमानस्य बाहू उद्गृहीतौ, तयोरिदानीमधस्तादुपावहरणमुच्यते । हे दक्षिणबाहो, त्वं मित्रोऽसि, मित्रवद्भोजनादाविष्टार्थप्रापकत्वात् । हे वामबाहो, त्वं वरुणोऽसि, शौचादावनिष्टनिवारकत्वात् । तैसा.

**समहं विश्वैर्देवैः ॥**

कल्पः— 'समहं विश्वैर्देवैरिति वैश्वदेव्यामिक्षायां हस्तावुपावहरते' इति । अहं सर्वैः देवैः संगच्छेयम् (? य) । मित्रशब्दस्य सूर्यवाचित्वात् तन्नाम्ना व्यवहृतस्य दक्षिणबाहोरहोरूपत्वं, वरुणशब्दस्य अन्धकारवदावरकवाचित्वात् तन्नाम्ना व्यवहृतस्य रात्रिरूपत्वमिति व्याचष्टे— 'मित्रोऽसि वरुणोऽसीत्याह । मैत्रं वा अहः । वारुणी रात्रिः । अहोरात्राभ्यामेवैनमुपावहरति ।' (तैब्रा. १।७।१०।१) इति । मित्रावरुणयोरनेकदेवरूपत्वात् सर्वदेवसंबन्धिन्यां आमिक्षायां मित्रावरुणात्मकत्वेन निरूपितयोर्हस्तयोरुपावहरणं युक्तमित्येतद्दर्शयति— 'मित्रोऽसि वरुणोऽसीत्याह । मैत्रो वै दक्षिणः । वारुणः सव्यः । वैश्वदेव्यामिक्षा । स्वमेवैनौ भागधेयमुपावहरति ।' (तैब्रा. १।७।१०।१) इति । विश्वैर्देवैरितिपदोच्चारणेन तत्संबन्धिनीनां प्रजानां यजमानभोग्यत्वं संपद्यते इत्यभिप्रेत्य व्याचष्टे— 'समहं विश्वैर्देवैरित्याह । वैश्वदेव्यो वै प्रजाः । ता एवाऽऽद्याः कुरुते ।' (तैब्रा. १।७।१०।१–२) इति । तैसा.

**क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि ॥**

कल्पः— 'खादिरीमासन्दीं प्रतिष्ठाप्य क्षत्रस्य नाभिरसीति तस्यां कृत्यधीवासमास्तीर्य' इति । कृत्यधीवासं

चर्मपटः। पाठस्तु— क्षत्रस्येति। हे कृत्यधीवास, क्षत्रस्योपवेशनाय त्वं नाभिवन्मध्यस्थानमसि। मातृवद्धारकत्वेन क्षत्रस्य योनिः कारणमसि। विधत्ते— 'क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसीत्यधीवासमास्तृणाति सयोनित्वाय।' (तैब्रा. १।७।१०।२) इति। योनिरसीति चर्मपटस्य कारणत्वेन भावनया सकारणत्वं क्षत्रस्य संपद्यते। तैसा.

**स्योनामा सीद सुषदामा सीद, मा त्वा हिꣳसीन्मा मा हिꣳसीत्॥**

कल्पः— 'स्योनामा सीद सुषदामा सीदेति तामासाद्य यजमानो मा त्वा हिꣳसीन्मा मा हिꣳसीदित्युपविशति' इति। हे मदीयशरीर, स्योनां सुखकरीं एनामासन्दीं प्रत्यासीद समीपस्थं भव। सुषदां सुखेनोपवेष्टुं योग्यामासीद। इयमासन्दी त्वां शरीरं मा हिंसीत्। मामपि शरीरस्वामिनं मा हिंसीत्। मन्त्रद्वयार्थस्य विस्पष्टतां दर्शयति— 'स्योनामा सीद सुषदामा सीदेत्याह। यथायजुरेवैतत्। मा त्वा हिꣳसीन्मा मा हिꣳसीदित्याहाहिꣳसायै।' (तैब्रा. १।७।१०।२) इति। तैसा.

**नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुः॥**

कल्पः— 'निषसाद धृतव्रत इत्यासीनमनुमन्त्रयते' इति। पाठस्तु— नि षसादेति। अयं यजमानः धृतव्रतः स्वीकृतयज्ञः वरुणः अनिष्टनिवारकः भूत्वा निषसाद अस्यामासन्द्यामुपविवेश। पस्त्यासु बहुषु वैरिगृहेषु आगत्य साम्राज्यं कर्तुं सुक्रतुः शोभनसंकल्पः भवतु। साम्राज्यमुद्दिश्य सम्यक्संकल्पसिद्धिमेव दर्शयति— 'नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुरित्याह। साम्राज्यमेवैनꣳ सुक्रतुं करोति।' (तैब्रा. १।७।१०।२) इति। तैसा.

**ब्रह्मा३न्, त्वꣳ राजन् ब्रह्माऽसि सविताऽसि सत्यसवः, ब्रह्मा३न्, त्वꣳ राजन् ब्रह्माऽसीन्द्रोऽसि सत्यौजाः, ब्रह्मा३न्, त्वꣳ राजन् ब्रह्माऽसि मित्रोऽसि सुशेवः, ब्रह्मा३न्, त्वꣳ राजन् ब्रह्माऽसि वरुणोऽसि सत्यधर्मा॥**



कल्पः— 'तमृत्विजो रत्निनश्च सर्वतः पर्युपविशन्ति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत उद्गाता, उपविष्टेषु ब्रह्मा३न् ओमित्यध्वर्यु राजा मन्त्रयते त्वꣳ राजन् ब्रह्माऽसीतीतरः प्रत्याहैवं ब्रह्माणं होतारमुद्गातारं चोत्तरोत्तरेणेतरे प्रत्याहुः' इति। एतेषामष्टानां मन्त्राणां पाठस्तु— ब्रह्मा३निति। दूरादाह्वातुं प्लुतिः। हे राजन्, त्वमेव ब्रह्माऽसि ब्राह्मणोऽसि, न त्वहम्। कुतः? यतस्त्वमेव सविताऽसि ब्राह्मणधर्मान् पालयन् अस्माकमनुष्ठानायानुज्ञाताऽसि। सत्यसवस्तु अमोघानुज्ञः। अतो ब्राह्मणवर्णाश्रमधर्माणां त्वदधीनत्वात्त्वमेव ब्रह्मा। तथेन्द्रोऽसि परमैश्वर्यवानसि। सत्यौजाः अमोघवीर्योऽसि। तथा मित्रोऽसि शिष्टपरिपालनाय देव(? मित्र)नामाऽसि। सुशेवः सुष्ठु सेवितुं योग्योऽसि। तथा वरुणोऽसि अनिष्टनिवारकोऽसि। सत्यधर्मा शास्त्रीयधर्मयुक्तोऽसि। यथा लोके पराराष्ट्रं जित्वा समागत्य सिंहासने समासीनं राजानमध उपविष्टाः पुरोहितादयो बहुभिः आशीर्भिः स्तुतिभिश्च स्तुवन्ति तद्वदत्रापि सेवोपचारः क्रियते। एतयाऽऽशीर्वादरूपया सेवया ब्राह्मणेषु यत्सामर्थ्यं शापानुग्रहरूपं तद्राजनि प्रतिष्ठापितं भवति। तदेतदभिप्रेत्य वाजसनेयिनो बृहदारण्यके क्षत्रियसृष्टिप्रस्तावे समामनन्ति— 'क्षत्रात्परं नास्ति तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति' इति। यथोक्तार्थपरत्वेन मन्त्रान् व्याचष्टे— 'ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि सविताऽसि सत्यसव इत्याह। सवितारमेवैनꣳ सत्यसवं करोति। ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसीन्द्रोऽसि सत्यौजा इत्याह। इन्द्रमेवैनꣳ सत्यौजसं करोति। ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि मित्रोऽसि सुशेव इत्याह। मित्रमेवैनꣳ सुशेवं करोति। ब्रह्मा३न्त्वꣳ राजन् ब्रह्माऽसि वरुणोऽसि सत्यधर्मेत्याह। वरुणमेवैनꣳ सत्यधर्माणं करोति।' (तैब्रा. १।७।१०।२-३) इति।

सवितेन्द्रो मित्र इति देवतापदानामुच्चारणेन तद्देवताप्रियाणां छन्दसामुच्चारणं संपद्यते इति दर्शयति— 'सविताऽसि सत्यसव इत्याह। गायत्रीमेवैतेनाभिव्याहरति। इन्द्रोऽसि सत्यौजा इत्याह। त्रिष्टुभमेवैतेनाभि-

व्याहरति । मित्रोऽसि सुशेव इत्याह । जगतीमेवैतेनाभिव्याहरति । सत्यमेता देवताः । सत्यमेतानि छन्दाꣳसि । सत्यमेवावरुन्धे ।' (तैब्रा. १।७।१०।३-४) इति । एता इन्द्रादयो देवताः सत्यं पालयन्ति, एतानि गायत्र्यादिछन्दांसि च सत्यं अमोघं फलं प्रयच्छन्ति । अतः उभयोः सत्यरूपत्वादिन्द्रादिपदोच्चारणेन गायत्र्याद्युच्चारणसिद्धिः । तेन यजमानः सत्यवादित्वमेव सर्वतः संपादयति ।

वरुणपदोच्चारणेन अनुष्टुबुच्चारणसिद्धिं दर्शयति-- 'वरुणोऽसि सत्यधर्मेत्याह । अनुष्टुभमेवैतेनाभिव्याहरति । सत्यानृते वा अनुष्टुप् । सत्यानृते वरुणः । सत्यानृते एवावरुन्धे ।' (तैब्रा. १।७।१०।४) इति । 'विश्वे देवस्य नेतुः' इत्यस्यामनुष्टुभि प्रथमपादः सप्ताक्षर इत्यनृतत्वम् । उत्तरे त्रयः पादा अष्टाक्षरा इति सत्यत्वम् । एतच्च 'एकस्मादक्षरादनाप्तं प्रथमं पदम्' इत्यादिब्राह्मणेनैव दर्शितम् । वरुणोऽपि क्वचिदनिष्टकारित्वादनृतरूपः । क्वचित्तन्निवर्तकत्वात्सत्यरूपः । एतच्च 'वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणान् चतुष्कपालान्निर्वपेद्वरुणमेव स्वेन भागधेयेनोपधावति स एवैनं वरुणपाशान् मुञ्चति' इत्यादिषु ब्राह्मणेषु स्पष्टं द्रष्टव्यम् । अत उभयरूपत्वसाम्याद्वरुणपदोच्चारणेनानुष्टुबुच्चारिता भवति । तेन च यजमानोऽनृतं त्यक्तुं सत्यं वक्तुं च समर्थत्वात् सत्यानृते स्वाधीने करोति । वेदनं प्रशंसति– 'नैनꣳ सत्यानृते उदिते हिꣳस्तः । य एवं वेद ।' (तैब्रा. १।७।१०।५) इति ।

तैसा.

**इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य ॥**

कल्पः– 'इन्द्रस्य वज्रोऽसीति स्फ्यं ब्रह्मा राज्ञे प्रयच्छति' इति । पाठस्तु– इन्द्रस्येति । हे स्फ्य, वज्रतृतीयांशत्वात् त्वं वज्रोऽसि, 'स्फ्यस्तृतीयम्' इति श्रुतेः । यतो विरोधिघाती त्वं, तेन कारणेन मे मदर्थं रध्य द्यूतस्थानपरिलेखनरूपं कार्यं साधय । विधत्ते– 'इन्द्रस्य वज्रोऽसि वार्त्रघ्न इति स्फ्यं प्रयच्छति । वज्रो वै स्फ्यः । वज्रेणैवास्मा अवरपरꣳ रन्धयति । एवꣳ हि तच्छ्रेयः । यदस्मा एते रध्येयुः ।' (तैब्रा. १।७।१०।५) इति । रध्येत्युच्चारणेनास्मै यजमानायावरं परं चापेक्षितं सर्वकार्यं रन्धयति साधयति । यत् यदि यजमानायैते कार्यविशेषा रध्येयुः सिध्येयुः, एवं सति श्रेयो हि तत्प्रशस्ततरं खलु ।

तैसा.

**दिशोऽभ्ययꣳ राजाऽभूत् ॥**

कल्पः– 'दिशोऽभ्ययꣳ राजाऽभूदिति पञ्चाक्षान् राज्ञे प्रयच्छति' इति । अयं यजमानः ऊर्ध्वदिक्सहिताः पञ्च दिशोऽभिलक्ष्य राजाऽभूत् । विधत्ते– 'दिशोऽभ्ययꣳ राजाऽभूदिति पञ्चाक्षान् प्रयच्छति । एते वै सर्वेऽयाः । अपराजायिनमेवैनं करोति ।' (तैब्रा. १।७।१०।५) इति । अक्षाः कपर्दकाः सुवर्णनिर्मिताः । विभीतकफलानि सौवर्णानीत्येके । ते चाक्षा द्यूतस्थाने निवपनीयाः । तथा चाऽऽपस्तम्बेन दर्शितम्– 'अक्षावापोऽधिदेवनमुद्धत्यावोक्ष्याक्षान्निवपेत्सौवर्णान् परःशतान्परःसहस्रान्वा' इति । तेभ्यः पञ्चाक्षानुद्गृह्य जितवानयं राजेत्यभिप्रायेण तस्मै राज्ञे दद्यात् । एत एव पञ्चाक्षा अयाः सर्वे संपद्यन्ते । अयशब्दोऽक्षवाची । पञ्चदिग्वर्त्यक्षाभिप्रायेण पञ्चाक्षाणां दत्तत्वाद्राशिस्थाः सर्वेऽप्यक्षा दत्ता भवन्ति । तथा सत्येनं यजमानमपराजायिनं कदाचिदपि पराजयरहितमेव करोति । विधत्ते– 'ओदनमुद्ब्रुवते । परमेष्ठी वा एषः । यदोदनः । परमामेवैनꣳ श्रियं गमयति ।' (तैब्रा. १।७।१०।६) इति । अधिदेवनकाले ओदनं पणत्वेन सर्वे परस्परं ब्रूयुः । 'अन्नाद्वै प्रजाः प्रजायन्ते' इति श्रुतेरोदनः परमेष्ठिरूपः । तथा सत्योदनपणप्रतिज्ञया परमां श्रियं यजमानः प्राप्नोति ।

तैसा.

**सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३न् ॥**

कल्पः– 'मङ्गल्यनाम्नो राजाऽऽह्वयति सुश्लोकाँ३ इति संग्रहीतारं सुमङ्गलाँ३ इति भागदुघं सत्यराजा३निति क्षत्तारम्' इति । शोभनः श्लोकः स्तुतिः यस्यासौ सुश्लोकः कोशाध्यक्षोऽश्वप्रग्रहधारी वा । तावुभावपि स्वस्वकार्यं सम्यगनुतिष्ठन्तौ शोभनस्तुतियुक्तौ भवतः । शोभनं मङ्गलं मर्यादानुल्लङ्घनेन प्रजाभ्यः करादानरूपं यस्य भागदुघस्य सोऽयं सुमङ्गलः । सत्यस्य अवश्यम्भाविनो-

ऽन्तःपुररक्षणस्य स्वामी क्षत्ता सत्यराजा। एतेषां संबोधनानि प्लुतयश्च दूराद्धानार्थाः। द्वयोः सानुनासिकत्वं सांप्रदायिकम्। स्वकीयाः संग्रहीत्रादयः सुश्लोकादयो भूयासुरित्येवमाशीःपरतया व्याचष्टे– 'सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३नित्याह। आशिषमेवैतामाशास्ते।' (तैब्रा. १।७।१०।६) इति। विधत्ते– 'शौनःशेपमाख्यापयते। वरुणपाशादेवैनं मुञ्चति।' (तैब्रा. १।७।१०।६) इति। शुनःशेपेन दृष्टं शस्त्रं शौनःशेपं, तदध्वर्युर्होतारं वाचयेत्, तेन यजमानं वरुणपाशात् मोचयतीति। तत्र ऋक्संख्यां विधत्ते– 'परःशतं भवति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति।' (तैब्रा. १।७।१०।६–७) इति। परःशतं शतादधिकम्। ऋक्संख्या चाऽऽपस्तम्बेन स्पष्टीकृता– 'शौनःशेपमाख्यापयत ऋचो गाथामिश्राः परःशताः परःसहस्रा वा' इति। विधत्ते– 'मारुतस्य चैकविꣳशतिकपालस्य वैश्वदेव्यै चाऽऽमिक्षाया अग्नये स्विष्टकृते समवद्यति। देवताभिरेवैनमुभयतः परिगृह्णाति।' (तैब्रा. १।७।१०।७) इति। समवद्यति समस्य एकीकृत्य अवद्येत्। तेन उभयतः कर्मद्वये अवस्थिताभिर्देवताभिरेव एनं यजमानं उभयोः पार्श्वयोः पालितवान् भवति। तैसा.

**अपां नप्त्रे स्वाहा, ऊर्जो नप्त्रे स्वाहा, अग्नये गृहपतये स्वाहा॥**

कल्पः– 'अवभृथेन प्रचर्यापां नप्त्रे स्वाहेत्यप्सु जुहोत्यूर्जो नप्त्रे स्वाहेत्यन्तरा दर्भस्तम्बे स्थाणौ वल्मीकवपायां वा हुत्वाऽग्नये गृहपतये स्वाहेति प्रत्येत्य गार्हपत्ये हुत्वा' इति। अपां नप्त्रे नपातयित्रे विनाशमकुर्वते वह्नये। न खल्वग्निरपो नाशयति, किंतूत्पादयति, 'अग्नेरापः' इति सृष्टिप्रकरणे श्रवणात्। ऊर्जो बलस्य नपातयित्रे वह्नये ऊर्जो नप्त्रे। उदराग्निना भुक्तेऽन्ने जीर्णे सति बलं वर्धते, न तद्विनाश्यते। विधत्ते– 'अपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाऽग्नये गृहपतये स्वाहेति तिस्र आहुतीर्जुहोति। त्रय इमे लोकाः। एष्वेव लोकेषु प्रतितिष्ठति।' (तैब्रा. १।७।१०।७) इति। तैसा.

संसृपां होमाः

**आग्नेयमष्टाकपालं निर्वपति। हिरण्यं दक्षिणा। सारस्वतं चरुम्। वत्सतरी दक्षिणा। सावित्रं द्वादशकपालम्। उपध्वस्तो दक्षिणा। पौष्णं चरुम्। श्यामो दक्षिणा। बार्हस्पत्यं चरुम्। शितिपृष्ठो दक्षिणा। ऐन्द्रमेकादशकपालम्। ऋषभो दक्षिणा। वारुणं दशकपालम्। महानिरष्टो दक्षिणा। सौम्यं चरुम्। बभ्रुर्दक्षिणा। त्वाष्ट्रमष्टाकपालम्। शुण्ठो दक्षिणा। वैष्णवं त्रिकपालम्। वामनो दक्षिणा॥**

षोडशे जितवतो राज्ञ इतरसेव्यत्वरूप उपचारो वर्णितः। सप्तदशे संसृपां हवींषि दशसंख्याकानि विधीयन्ते। उपरतस्तनपाना वत्सतरी। शुक्लकायः शुण्ठः। तान्येतानि हवींषि प्रशंसति– 'वरुणस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्। तत्सꣳसृद्भिरनु समसर्पत्। तत्सꣳसृपाꣳ सꣳसृप्त्वम्। अग्निना देवेन प्रथमेऽहन्ननु प्रायुङ्क्त। सरस्वत्या वाचा द्वितीये। सवित्रा प्रसवेन तृतीये। पूष्णा पशुभिश्चतुर्थे। बृहस्पतिना ब्रह्मणा पञ्चमे। इन्द्रेण देवेन षष्ठे। वरुणेन स्वया देवतया सप्तमे। सोमेन राज्ञाऽष्टमे। त्वष्ट्रा रूपेण नवमे। विष्णुना यज्ञेनाऽऽप्नोत्। यत्सꣳसृपो भवन्ति। इन्द्रियमेव तद्वीर्यं यजमान आप्नोति।' (तैब्रा. १।८।१।१–२) इति। सुषुवाणस्य सुष्ठु सोममभिषेचनीयकर्मण्यभिषुतवतः वरुणस्य इन्द्रियसामर्थ्यं दशधा भूत्वा परापतत् विनष्टम्। स च वरुणस्तदिन्द्रियं संसृप्शब्दाभिहितैर्यथोक्तहविर्भिः अनुक्रमेण सम्यक् प्राप्तवान्। सम्यक् सृप्यते प्राप्यते वीर्यमाभिरग्न्यादिभिर्देवताभिरिति संसृपो देवताः, तासां हवींष्यपि तन्नामकानि। सः वरुणः प्रथमेऽहनि देवेन द्योतनात्मकेन अग्निना सहाष्टाकपालं प्रायुङ्क्त, आग्नेयमष्टाकपालं निरवपदित्यर्थः। द्वितीयेऽहनि वाग्रूपया सरस्वत्या चरुं निरवपत्। तृतीये प्रसवकारणेन सवित्रा सह द्वादशकपालं निरवपत्। चतुर्थे पशुभिरुपलक्षितेन पूष्णा सह चरुं निरवपत्। पञ्चमे ब्राह्मणाभिमानिना बृहस्पतिना सह चरुं निरवपत्। षष्ठे द्योतनात्मकेनेन्द्रेण

सहैकादशकपालं निरवपत् । सप्तमे स्वकीयदेवतारूपेण अतीतकल्पगतवरुणेन सह दशकपालं निरवपत् । अष्टमे राज्ञा यजमानेन सोमेन सह चरुं निरवपत् । नवमे रूपवता त्वष्ट्रा सहाष्टाकपालं निरवपत् । दशमे यज्ञरूपेण विष्णुना सह त्रिकपालं निरुप्य तदिन्द्रियमाप्नोत् । यदि यजमानस्यापि संसृपो यागा भवेयुस्तदाऽसौ यजमानः इन्द्रियसामर्थ्यं प्राप्नोतीति । उत्पत्तिविधिभिर्विहितानां संसृपामनेनार्थवादेन भिन्नदिनानुष्ठानविधिरुन्नेयः । अन्यं प्रकारविशेषं विधत्ते– 'पूर्वा पूर्वा वेदिर्भवति । इन्द्रियस्य वीर्यस्यावरुद्ध्यै ।' (तैब्रा. १।८।१।२) इति । पूर्वा पूर्वदिग्गता । दिनभेदेन बहुवेदित्वद्योतनार्था वीप्सा । तत्प्रकारश्चापस्तम्बेन स्पष्टीकृतः– 'श्वोभूते परेण सौमिकदेवयजनं दशभिः सप्तभिर्वा ससृपां हविर्भिर्यजत आग्नेयमष्टाकपालमिति पूर्वे पूर्वे देवयजनमध्यवस्यति यत्र पूर्वस्याहवनीयस्तत्रोत्तरस्य गार्हपत्य उत्तमायाः प्राग्वंश आहवनीयो बहिर्गार्हपत्यः' इति ।

अष्टमनवमदशमानां हविषां स्वस्वदिनेषु कंचित्कालविशेषं विधत्ते– 'पुरस्तादुपसदाꣳ सौम्येन प्रचरति । सोमो वै रेतोधाः । रेत एव तद्दधाति । अन्तरा त्वाष्ट्रेण । रेत एव हितं त्वष्टा रूपाणि विकरोति । उपरिष्टाद्वैष्णवेन । यज्ञो वै विष्णुः । यज्ञ एवान्ततः प्रतितिष्ठति ।' (तैब्रा. १।८।१।२–३) इति । अभिषेचनीयात्सोमयागादूर्ध्वं दशपेयः सोमयागः कर्तव्यः । तस्य च संसृप्यागसंबन्धिनि सप्तमेऽहन्येका दीक्षा कर्तव्या । तत ऊर्ध्वं त्रिषु दिनेषूपसदः कर्तव्याः । तत्र प्रथमोपसद्दिने उपसद्यागात्पूर्वं सौम्याख्येन संसृपाऽष्टमहविषा प्रचरेत् । मध्यमोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदोर्मध्ये त्वाष्ट्रेण नवमहविषा प्रचरेत् । तृतीयोपसद्दिने पौर्वाह्णिकापराह्णिकोपसदावनुष्ठाय उपरिष्टाद्वैष्णवेन दशमहविषा प्रचरेत् । सोमस्य रेतोधारणहेतुत्वात् प्रथमतस्तत्प्रयोगे यजमानो रेतो दधाति । ततस्त्वष्टुः प्रयोगे सति धृतं रेतोऽवष्टभ्य त्वष्टा रूपाणि विविधानि करोति । विष्णोर्यज्ञरूपत्वात् अन्ते तद्धविःप्रयोगे सति यजमानो राजसूयादूर्ध्वमपि यज्ञानुष्ठाने एव प्रतिष्ठितो भवति । दशपेयतन्त्रमध्ये त्रयाणां हविषामनुष्ठानमापस्तम्बेन स्पष्टीकृतम्– 'अपराह्णे दशपेयस्य तन्त्रं प्रक्रमयति' इत्युपक्रम्यैवं पठ्यते– 'एका दीक्षा तिस्र उपसदः पुरस्तादुपसदाꣳ सौम्यं चरुं निर्वपति अन्तरा त्वाष्ट्रमष्टाकपालमुपरिष्टाद्वैष्णवं त्रिकपालम्' इति ।

तैसा.

दशपेयः

**सद्यो दीक्षयन्ति, सद्यः सोमं क्रीणन्ति ॥**

सप्तदशे संसृपां हवींष्युक्तानि । अष्टादशे दशपेय उच्यते । तत्र दीक्षासोमक्रययोश्चोदकप्राप्तं दिनभेदमपवदितुं विधत्ते– सद्य इति । तैसा.

**पुण्डरिस्रजां प्र यच्छति ॥**

प्रकृतौ 'अप्सु स्नात्यपोऽश्नाति' इति यद्विहितं तदपवदितुं विधत्ते– पुण्डरिस्रजामिति । तदेतत्सूत्रकारः स्पष्टीचकार– 'अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते' इति । प्रतिमोचयेदित्यर्थः । तदेतत्प्रशंसति– 'जामि वा एतत्कुर्वन्ति । यत्सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति । पुण्डरिस्रजां प्रयच्छत्यजामित्वाय । अङ्गिरसः सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत्पुण्डरीकमभवत् । यत्पुण्डरिस्रजां प्रयच्छति । साक्षादेव दीक्षातपसी अवरुन्धे ।' (तैब्रा. १।८।२।१) इति । तैसा.

**दशभिर्वत्सतरैः सोमं क्रीणाति ॥**

चोदकप्राप्तानि हिरण्यवासःप्रभृतीनि दशविधक्रयद्रव्याण्यपवदितुं विधत्ते– दशभिरिति । वत्सतराः उपरतस्तनपानाः । अत एव सूत्रकारो विशिनष्टि– 'दशभिर्वत्सतरैः सोमं क्रीणाति' इति । अत्र संख्यां प्रशंसति– 'दशभिर्वत्सतरैः सोमं क्रीणाति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे ।' (तैब्रा. १।८।२।१–२) इति । साण्डत्वं विधाय प्रशंसति– 'मुष्करा भवन्ति सेन्द्रत्वाय ।' (तैब्रा. १।८।२।२) इति । सेन्द्रत्वं इन्द्रियसामर्थ्यसहितत्वम् । तैसा.

**दशपेयो भवति ॥**

प्रधानं कर्म विधत्ते— दशपेय इति। दशसु वैकृतचमसेषु पातव्यः सोमरसः यस्मिन् क्रतौ स क्रतुर्दशपेयः। यद्वा, एकैकस्मिन् पात्रे दशभिः ब्राह्मणैः पातव्यः सोमो यस्मिन् स दशपेयः। एतदेवाभिप्रेत्य सूत्रकार आह— 'श्वोभूते पात्रसंसादनकाले दश चमसानधिकान् प्रयुनक्ति तानुन्नयनकाल उन्नयति भक्षणकाले दश दशैकैकस्मिंश्चमसे ब्राह्मणाः सोमपाः सोमं भक्षयन्ति' इति। तं विधिं प्रशंसति— 'दशपेयो भवति। अन्नाद्यस्यावरुद्ध्यै।' (तैब्रा. १।८।२।२) इति। तैसा.

**शतं ब्राह्मणाः पिबन्ति ॥**

विधत्ते— शतमिति। एकैकस्मिन्पात्रे दश दश ब्राह्मणा इति मिलित्वा शतं ब्राह्मणाः पिबन्ति। प्रशंसति— 'शतं ब्राह्मणाः पिबन्ति। शतायुः पुरुषः शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति।' (तैब्रा. १।८।२।२) इति। तैसा.

**सप्तदशꣳ स्तोत्रं भवति ॥**

विधत्ते— सप्तदशमिति। अस्मिन् क्रतौ यद्यत्स्तोत्रं तस्य सर्वस्य सप्तदशस्तोमत्वमेव कुर्यात्। प्रशंसति— 'सप्तदशꣳ स्तोत्रं भवति। सप्तदशः प्रजापतिः। प्रजापतेराप्त्यै।' (तैब्रा. १।८।२।२-३) इति। तैसा.

**प्राकाशावध्वर्यवे ददाति ॥**

विधत्ते— प्राकाशाविति। प्राकाशौ सुवर्णदर्पणौ। प्रशंसति— 'प्राकाशावध्वर्यवे ददाति। प्रकाशमेवैनं गमयति।' (तैब्रा. १।८।२।३) इति। तैसा.

**स्रजमुद्गात्रे ॥**

हिरण्यस्रजो दानं विधत्ते— स्रजमिति। तथा च सूत्रकारः— 'दक्षिणाकाले हिरण्यप्राकाशावध्वर्यवे ददाति हिरण्यस्रजमुद्गात्रे' इति। प्रशंसति— 'स्रजमुद्गात्रे। व्येवास्मै वासयति।' (तैब्रा. १।८।२।३) इति। अस्य यजमानस्य व्येव विशिष्टमेव दुकूलादिकं वासयति उत्तरीयत्वेनाऽऽच्छादयति। तैसा.

**रुक्मꣳ होत्रे ॥**

वर्तुलस्य स्वर्णाभरणस्य दानं विधत्ते— रुक्ममिति। प्रशंसति— 'रुक्मꣳ होत्रे। आदित्यमेवास्मा उन्नयति।' (तैब्रा. १।८।२।३) इति। उदयं प्रापयतीत्यर्थः। तैसा.

**अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् ॥**

विधत्ते— अश्वमिति। ददातीत्यनुषज्यते। द्वाभ्यामेकद्रव्यदानं वाचनिकम्। प्रशंसति— 'अश्वं प्रस्तोतृप्रतिहर्तृभ्याम्। प्राजापत्यो वा अश्वः। प्रजापतेराप्त्यै।' (तैब्रा. १।८।२।३) इति। अश्वमेधप्रकरणे 'प्रजापतेरक्ष्यश्वयत्तत्परापतत्' इति श्रुतेरश्वस्य प्राजापत्यत्वम्। तैसा.

**द्वादश पष्ठौहीर्ब्रह्मणे ॥**

बालगर्भिणीनां गवां दानं विधत्ते— द्वादशेति। वत्सद्वारा अभिवृद्धिसूचनादायुष्याभिवृद्ध्या प्रशंसति— 'द्वादश पष्ठौहीर्ब्रह्मणे। आयुरेवावरुन्धे।' (तैब्रा. १।८।२।४) इति। तैसा.

**वशां मैत्रावरुणाय ॥**

वन्ध्याया गोर्दानं विधत्ते— वशामिति। वशाशब्देन बुद्धिस्थं वशित्वमभिप्रेत्य प्रशंसति— 'वशां मैत्रावरुणाय। राष्ट्रमेव वश्यकः।' (तैब्रा. १।८।२।४) इति। तैसा.

**ऋषभं ब्राह्मणाच्छꣳसिने ॥**

रेतःसेचनसमर्थस्य गोर्दानं विधत्ते— ऋषभमिति। ऋषभशब्देन बुद्धिस्थमिन्द्रियमित्यभिप्रेत्य प्रशंसति— 'ऋषभं ब्राह्मणाच्छꣳसिने। राष्ट्रमेवेन्द्रियाव्यकः।' (तैब्रा. १।८।२।४) इति। तैसा.

**वाससी नेष्टापोतृभ्याम् ॥**

द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते— वाससी इति। धौतवस्त्रयोः शुद्धिहेतुत्वमभिप्रेत्य प्रशंसति— 'वाससी नेष्टापोतृभ्याम्। पवित्रे एवास्यैते।' (तैब्रा. १।८।२।४) इति। तैसा.

**स्थूरि यवाचितमच्छावाकाय ॥**

स्थूलस्य यवपूर्णशकटस्य दानं विधत्ते— स्थूरीति। 'वारुणं यवमयं चरुम्' इति श्रुतत्वाद्यवप्रियं वरुणं स्वकीयभागप्रदानेन स्वकीयदेशान्ताद्बहिर्निःसारितवान् भवतीत्यभिप्रेत्य प्रशंसति— 'स्थूरि यवाचितमच्छावाकाय।

अन्तत एव वरुणमवयजते ।' (तैब्रा. १।८।२।४) इति । तैसा.

**अनड्वाहमग्नीधे ॥**

विधत्ते– अनड्वाहमिति । वह्निद्वारकेणोभयोः संबन्धेन प्रशंसति–' अनड्वाहमग्नीधे । वह्निर्वा अनड्वान् । वह्निरग्नीत् । वह्निनैव वह्नि यज्ञस्यावरुन्धे ।' (तैब्रा. १।८।२।५) इति । दर्शपूर्णमासयोः आग्नेयहविर्युक्तस्य शकटस्य वहनादनड्वान् वह्निः । अग्नेरिन्धनादाग्नीध्रोऽपि वह्निः । उभयोः संबन्धे सति वह्निरूपेणानडुहा यज्ञस्य वह्नि वाहकं आग्नीध्राद्यृत्विग्जातं स्वाधीनं करोति । तैसा.

**भार्गवो होता भवति । श्रायन्तीयं ब्रह्मसामं भवति । वारवन्तीयमग्निष्टोमसामम् । सारस्वतीरपो गृह्णाति ॥**

चोदकप्राप्तं होतृसामान्यादिकं बाधितुं विशेषान् विधत्ते– भार्गव इति । प्रकृतौ यः कोऽपि होतेत्यत्रापि तत्प्राप्तौ भृगुगोत्रोत्पन्न एवेति विशेष्यते । प्रकृतौ ब्राह्मणाच्छंसिनं प्रति आज्यस्तोत्रे गायत्रसाम्नो विहितत्वात्तदपवादाय श्रायन्तीयं सामात्र विधीयते । 'श्रायन्त इव सूर्यम्' इत्यस्यामृच्युत्पन्नं साम श्रायन्तीयम् । प्रकृतौ यज्ञायज्ञियस्याग्निष्टोमसामत्वात्तदपोह्य वारवन्तीयं साम विधीयते । 'अश्वं न त्वा वारवन्तम्' इत्यस्यामृच्युत्पन्नं वारवन्तीयं साम । प्रकृतौ 'वहन्तीनां गृह्णाति' इति प्रवाहमात्रगतानामपां वसतीवरित्वादत्रापि तत्प्राप्तौ सरस्वतीगता एवाऽऽपो विधीयन्ते ।

इन्द्रवीर्यत्वेन त्रयं प्रशंसति–' इन्द्रस्य सुषुवाणस्य त्रेधेन्द्रियं वीर्यं परापतत् । भृगुस्तृतीयमभवत् । श्रायन्तीयं तृतीयम् । सरस्वती तृतीयम् । भार्गवो होता भवति । श्रायन्तीयं ब्रह्मसामं भवति । वारवन्तीयमग्निष्टोमसामम् । सारस्वतीरपो गृह्णाति । इन्द्रियस्य वीर्यस्यावरुद्ध्यै ।' (तैब्रा. १।८।२।५–६) इति ।

वारवन्तीयस्य इन्द्रवीर्यत्वाभावेनात्र स्तुतेरप्रतीतत्वात् तेन सह स्तोतुं श्रायन्तीयमपि पुनरुपादत्ते-- 'श्रायन्तीयं ब्रह्मसामं भवति । इन्द्रियमेवास्मिन्वीर्यꣳ श्रयति । वारवन्तीयमग्निष्टोमसामम् । इन्द्रियमेवास्मिन्वीर्यं वारयति ।' (तैब्रा. १।८।२।६) इति । सामनाम्नि श्रयतिधातोः प्रतीतत्वात् यजमानेन वीर्यमाश्रीयते । द्वितीयनाम्नि वारयितृत्वप्रतीतेरस्मिन्यजमाने प्रयुक्तं वैरिवीर्यं निवारितं भवति । तैसा.

दिशामवेष्टयः, पशुबन्धः, सात्यदूतहोमाश्च

**आग्नेयमष्टाकपालं निर्वपति । हिरण्यं दक्षिणा । ऐन्द्रमेकादशकपालम् । ऋषभो दक्षिणा । वैश्वदेवं चरुम् । पिशङ्गी पष्ठौही दक्षिणा । मैत्रावरुणीमामिक्षाम् । वशा दक्षिणा । बार्हस्पत्यं चरुम् । शितिपृष्ठो दक्षिणा ॥**

अष्टादशे दशपेयोऽभिहितः । एकोनविंशे दिशामवेष्टयः, पशुद्वयं, सात्यदूतानां हवींषि च विधीयन्ते । तत्रादौ पञ्च हवींषि विधत्ते-- आग्नेयमिति । पिशङ्गी पिङ्गलवर्णा । दिग्व्यास्थापनप्रयुक्तोन्मादपरिहारेण अवेष्टिविधिं प्रस्तौति-- 'ईश्वरो वा एष दिशोऽनून्मदितोः । यं दिशोऽनु व्यास्थापयन्ति । दिशामवेष्टयो भवन्ति । दिक्ष्वेव प्रतितिष्ठत्यनुन्मादाय ।' (तैब्रा. १।८।३।१) इति । यं यजमानं अध्वर्युः प्रस्थापयति एष यजमानः दिशोऽनुप्राप्य दिग्भ्रमेण उन्मदितोः उन्मत्तो भवितुं ईश्वरः प्रभुः भवति । विधिवाक्यावगतं देवतापञ्चकं प्रशंसति– 'पञ्च देवता यजति । पञ्च दिशः । दिक्ष्वेव प्रतितिष्ठति ।' (तैब्रा. १।८।३।१) इति । आग्नेयादीनां चतुर्णां मध्ये एकैकयागादूर्ध्वं पञ्चमहविषि अभिघारणं विधत्ते– 'हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयति । यजमानदेवत्यो वै बृहस्पतिः । यजमानमेव तेजसा समर्धयति ।' (तैब्रा. १।८।३।१) इति । यजमानस्य देवता उक्ता अग्न्यादयश्चतस्रस्ताभ्यो हितो यजमानदेवत्यः । तैसा.

**आदित्यां मल्हां गर्भिणीमा लभते । मारुतीं पृश्निं पष्ठौहीम् ॥**

अवेष्टीर्विधाय द्विपशुयुक्तं पशुबन्धकर्म विधत्ते– आदित्यामिति । अदितिर्देवता यस्याः सा इत्यादित्या, मल्हा मणिला गलस्तनयुक्तेत्यर्थः । पृश्निः अल्पतनुः

श्वेतवर्णा वा । अदितेर्भूमित्वेन राष्ट्रत्वं मरुतां च वैश्यत्वमसकृदुक्तं, तदेतदभिप्रेत्य प्रशंसति— 'आदित्यां मल्हां गर्भिणीमालभते । मारुतीं पृश्निं पष्ठौहीम् । विशं चैवास्मै राष्ट्रं च समीची दधाति ।' (तैब्रा. १।८।३।२) इति । करप्रदानेन विशः सम्यक्त्वं, सस्यनिष्पादकत्वेन राष्ट्रस्य सम्यक्त्वम् । पाठप्राप्तं क्रमं प्रशंसति— 'आदित्यया पूर्वया प्रचरति । मारुत्योत्तरया । राष्ट्र एव विशमनुबध्नाति ।' (तैब्रा. १।८।३।२) इति । आश्रावणस्य चोदकप्राप्तं उच्चध्वनित्वमादित्ययागेऽनूद्यापवदितुं विधत्ते— 'उच्चैरादित्याया आ श्रावयति । उपांशु मारुत्यै । तस्माद्राष्ट्रं विशमतिवदति ।' (तैब्रा. १।८।३।२) इति । यस्माद्राष्ट्ररूपायामादित्येष्टौ उच्चध्वनिः, विड्रूपायां मारुतीष्टौ उपांशुध्वनिः, तस्माल्लोकेऽपि राष्ट्रमुज्जित्य तत्पालको राजादिः सहस्रकरदानाय विशमतिवदति निर्भर्त्सयतीत्यर्थः । पूर्वोक्तं पशुविशेषणं प्रशंसति— 'गर्भिण्यादित्या भवति । इन्द्रियं वै गर्भः । राष्ट्रमेवेन्द्रियाव्यकः । अगर्भा मारुती । विड्वै मरुतः । विशमेव निरिन्द्रियामकः ।' (तैब्रा. १।८।३।२-३) इति । गर्भस्य इन्द्रियकार्यत्वादिन्द्रियत्वं, तेन गर्भेण राष्ट्रगता ब्राह्मणक्षत्रियप्रजा इन्द्रिययुक्ता भवन्ति । मारुत्या गर्भराहित्येन वैश्या निरिन्द्रिया इतरापेक्षया क्षीणसामर्थ्या भवन्ति । ननु पष्ठौही बालगर्भिणी इत्यसकृदुक्तं, कथमगर्भा मारुतीतीहोच्यते ? नायं दोषः, पञ्चवर्षीया अपि पष्ठौहीशब्दवाच्यत्वात् । तैसा.

**अश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति । सरस्वते सत्यवाचे चरुम् । सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालम् । तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा ॥**

पशुबन्धं विधाय सात्यदूतानां हवींषि विधत्ते— अश्विभ्यामिति । पूष्णे चेति देवतासमुच्चयो द्रष्टव्यः । सत्यं वक्तीति सत्यवाक्, तस्मै सरस्वन्नामकाय देवाय । सत्यप्रसवाय अमोघानुज्ञानाय । तिसृभिरिषुभिर्युक्तं धनुः तिसृधन्वं, तत्प्रक्षेपाय निर्मिता शुष्कदृतिः । तदुभयमत्र देयम् । तेषु हविःषु प्रथमं प्रशंसति— 'देवासुराः संयत्ता आसन् । ते देवा अश्विनोः पूषन्वाचः सत्यꣳ संनिधाय । अनृतेनासुरानभ्यभवन् । तेऽश्विभ्यां पूष्णे पुरोडाशं द्वादशपालं निरवपन् । ततो वै ते वाचः सत्यमवारुन्धत । यदश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति । अनृतेनैव भ्रातृव्यानभिभूय । वाचः सत्यमवरुन्धे ।' (तैब्रा. १।८।३।३-४) इति । वाचः संबन्धि यत्सत्यं अनृतपरित्यागेन भाषणं तत्सर्वं स्वकीयमश्विनोः पूष्णि च निक्षेपरूपेणावस्थाप्य युष्मान्न हनिष्याम इत्यनृतेन वचनेनासुराणामग्रे भाषां कृत्वा तद्विश्वासेन युद्धसंनाहं परित्यज्य कदाचिन्निद्राणानसुरान् निहतवन्तः । ततोऽनृतदोषपरिहारक्षमं पूर्वनिक्षिप्तं वाचः सत्यं ग्रहीतुमश्विनोः पूष्णः स्वोत्कोचरूपं पुरोडाशं निरुप्य तत्सत्यं स्वाधीनं कृतवन्तः । तद्वद्यजमानस्यापि द्रष्टव्यम् ।

द्वितीयं हविः प्रशंसति— 'सरस्वते सत्यवाचे चरुम् । पूर्वमेवोदितम् । उत्तरेणाभिगृणाति ।' (तैब्रा. १।८।३।४) इति । पूर्वं प्रथमहविःप्रशंसार्थे 'वाचः सत्यमवरुन्धे' इति यदुक्तं तदेवोत्तरेण 'सत्यवाचे' इत्यनेन देवताविशेषणेन विधिवाक्यविशेषो गृणाति उच्चारयति । अतः अनेनापि यागेन सत्यस्वीकार एव दृढो भवतीत्यभिप्रायः ।

'सत्यप्रसवाय' इत्येतद्विशेषणं प्रशंसति— 'सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं प्रसूत्यै ।' (तैब्रा. १।८।३।४) इति । विधत्ते— 'दूतान् प्रहिणोति । आविद एता भवन्ति । आविदमेवैनं गमयन्ति । अथो दूतेभ्य एव न छिद्यते ।' (तैब्रा. १।८।३।४-५) इति । प्रतिराजभ्यो दूतान् प्रेषयति । एते दूता आविदो भवन्ति, एतदीयं शासनमा समन्ताद्वेदयन्ति ख्यापयन्तीति आविदः । तेन दूतप्रेषणेन एनं यजमानं आविदं गमयन्ति, आ समन्ताद्वेद्यते ख्याप्यते इत्यावित् कीर्तिः, तां प्रापयन्ति । किंच अयं दूतेभ्यो न विच्छिद्यते सर्वतः प्रेषयितुं कदाचिद्दूता न लभ्यन्ते इत्येवं विच्छेदो न भवति, किंतु सर्वदा बहवो दूताः संनिहिता वर्तन्ते । दूतप्रेषणप्रकारः सूत्रकारेण स्पष्टीकृतः— 'तान्यभ्यवस्नाय प्रतिराजभ्यः प्रहिणोत्यभ्यषिक्षि राजाऽभूवमित्यावेदयते'

इति । तानि तिसृधन्वादीनि दक्षिणाद्रव्याणि अभ्यवस्नाय अभित आक्रम्य स्नात्वा तानि प्रतिराजभ्यो दर्शयितुं दूतहस्ते दत्त्वा प्रेषयति । स च दूतो राज्ञ एतद्वचनं तेषामग्रे कथयति 'अभिषिक्तोऽस्मि, युष्माकं सर्वेषां राजाऽभूवम्' इति । दक्षिणां प्रशंसति– 'तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा समृद्ध्यै ।' (तैब्रा. १।८।३।५) इति । तैसा.

प्रयुजां यागाः

**आग्नेयमष्टाकपालं निर्वपति । सौम्यं चरुम् । सावित्रं द्वादशकपालम् । बार्हस्पत्यं चरुम् । त्वाष्ट्रमष्टाकपालम् । वैश्वानरं द्वादशकपालम् । दक्षिणो रथवाहनवाहो दक्षिणा । सारस्वतं चरुं निर्वपति । पौष्णं चरुम् । मैत्रं चरुम् । वारुणं चरुम् । क्षैत्रपत्यं चरुम् । आदित्यं चरुम् । उत्तरो रथवाहनवाहो दक्षिणा ॥**

एकोनविंशे दिशामवेष्टयः पशुबन्धः सात्यदूतानां हवींषि चोक्तानि । अथ विंशे प्रयुजां हवींष्युच्यन्ते । तत्प्रकारः सूत्रकारेण दर्शितः– 'अपराह्णे षड्भिः प्रयुजां हविर्भिर्यजत आग्नेयमष्टाकपालमिति दक्षिणो रथवाहनवाहो दक्षिणा श्वोभूते षड्भिरुत्तरो रथवाहनवाहः' इति । तान्येतानि हवींषि विधत्ते– आग्नेयमिति । रथस्य वाहनं रथवाहनं अन्यच्छकटं, यस्मिन् शकटे रथस्येषयोरग्रमवस्थाप्यते । तस्य रथवाहनस्य शकटस्य वाहकः दक्षिणः यः बलीवर्दः असौ पूर्वषट्के दातव्यः । एवमुत्तरषट्केऽपि योज्यम् । अत्र पूर्वषट्कगतं प्रथमं हविः प्रशंसति– 'आग्नेयमष्टाकपालं निर्वपति । तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति ।' (तैब्रा. १।८।४।१) इति । उपरिष्टात्परकीयपक्षा उपन्यस्यन्ते– 'मासि मास्येतानि हवींषि निरुप्याणीत्याहुः' इति, तत्पक्षानुसारेण फाल्गुनमासमारभ्य क्रमेणैकैकस्मिन् मासे एकैकं हविः निर्वपणीयम् । तथा हि– फाल्गुन्याः पौर्णमास्याः प्रागेव राजसूयमुपक्रम्य पवित्रनामकमग्निष्टोमं आनुमतादीनि चानुष्ठाय फाल्गुन्यां पौर्णमास्यामारभ्य वैश्वदेववरुणप्रघाससाकमेधांश्चतुर्षु मासेषु निष्पाद्य द्वितीयस्यां फाल्गुन्यां पौर्णमास्यां शुनासीरीयेन्द्रतुरीयादिकमनुष्ठाय उत्तरदिनेषु देविकादीनि यथोक्तक्रमेण रत्निनां हवींषि चानुष्ठाय फाल्गुनामावास्यायामभिषेचनीयार्थं दीक्षयित्वा तस्य दीक्षा वर्धनीयाः । तथा चापस्तम्ब आह– 'तथाऽभिषेचनीयस्योक्थ्यस्य दीक्षाः प्रवर्धयति यथा संवत्सरस्य दशरात्रेऽवशिष्टे दशपेयो भविष्यति' इति । स च दशपेयः संवत्सरे दशरात्रीरवशेष्य पञ्चम्यामुपक्रम्यते, पञ्चभिर्दिनैर्निष्पाद्यत्वेन नवम्यां समाप्यते । दशम्यां प्रातः सात्यदूतानि निरुप्यापराह्णे प्रयुजां हवींष्युपक्रमितव्यानि । तथा सत्याग्नेयस्य फाल्गुनरूपो द्वितीयः शिशिरमासः प्राप्यते । तस्मिन् शिशिरे तन्निर्वापाच्छिशिरद्वारा तद्धविः स्तूयते । कुरुपञ्चालदेशवर्तिनो राजानः प्राच्येषु देशेषु सस्याभिवृद्धिमवगत्य दिग्विजयाय प्राञ्चः प्रयान्ति । यस्मादाग्नेययागकालः शिशिरः सस्याभिवृद्धिहेतुस्तस्मात्प्राञ्चो यान्तीत्येवं स्तुतिः ।

द्वितीयं हविः प्रशंसति– 'सौम्यं चरुम् । तस्माद्वसन्तं व्यवसायाऽऽदयन्ति ।' (तैब्रा. १।८।४।१) इति । उक्तक्रमेण वासन्तिकयोः प्रथममासि सौम्यं चरुं निर्वपति । यस्मादन्नस्य देवता सोमोऽत्र चरुणेज्यते तस्मात्प्रथमो वसन्तमास आगतोऽयमिति निश्चित्य प्राग्देशं जेतुं गता राजानस्तत्रत्यं धान्यं सर्वमुपहृत्य स्वसेनामादयन्ति 'वसन्तः समुपस्थितः, सम्यक्पक्वं समृद्धमन्नं कामं भुञ्जताम्' इति वदन्तो हस्तेन सर्वां सेनां प्रेरयन्ति ।

तृतीयं हविः प्रशंसति– 'सावित्रं द्वादशकपालम् । तस्मात्पुरस्ताद्यवानाꣳ सवित्रा विरुन्धते ।' (तैब्रा. १।८।४।१) इति । यस्मात् द्वितीये वसन्तमासे सावित्रयागः कृतस्तस्मात्पुरस्तात्पूर्वस्यां दिशि गता राजानः सवित्राऽनुज्ञाताः सन्तो यवानां विरुन्धते यवादीनि धान्यानि परकीयाणि विशेषेणावरुन्धते यथा कृषीवलाः न गृह्णन्ति तद्वदवरोधं कुर्वते ।

चतुर्थं प्रशंसति– 'बार्हस्पत्यं चरुम् । सवित्रैव विरुध्य । ब्रह्मणा यवानादधते ।' (तैब्रा. १।८।४।१) इति । यस्मात्प्रथमे ग्रीष्मे मासि बार्हस्पत्ययागः कृतस्तस्माद्ब्रह्मणा बृहस्पतिनाऽनुज्ञाताः सन्तो यवानादधते पूर्वे

सवितृप्रसादाद्ये यवाः परदेशवर्तिभ्यः कृषीवलेभ्योऽवरुद्धा-स्तान्सर्वानानीय स्वगृहेषु स्थापयन्ति ।

पञ्चमं प्रशंसति— 'त्वाष्ट्रमष्टाकपालम् । रूपाण्येव तेन कुर्वते ।' ( तैब्रा. १।८।४।१-२ ) इति । यस्माद्-द्वितीये ग्रीष्मे मासि त्वाष्ट्रयागः कृतस्तेन कारणेन रूप-निर्मात्रा त्वष्ट्राऽनुज्ञाताः सन्तो रूपाण्येव परकीयधान्यानां यथेष्टभोजनेन पुष्टिमन्त्येव शरीराणि कुर्वते ।

षष्ठं प्रशंसति— 'वैश्वानरं द्वादशकपालम् । तस्मा-ज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति ।' ( तैब्रा. १।८।४।२ ) इति । यस्माद्वार्षिके प्रथमे मासि वैश्वानर-यागः कृतस्तस्माद्वैश्वानरेणानुज्ञाता जघन्ये नैदाघे द्वितीय-स्मिन् ग्रीष्ममासेऽपगते सति वर्षर्तुप्रथममासे परकीयराष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यङ्मुखाः कुरुपञ्चाला राजानो यान्ति । तदेतदुपलक्षणं, सर्वेऽपि राजानः उक्तरीत्या कुर्वन्तीति द्रष्टव्यम् ।

उत्तरषट्कस्य प्रथमं हविः प्रशंसति— 'सारस्वतं चरुं निर्वपति । तस्मात् प्रावृषि सर्वा वाचो वदन्ति ।' ( तैब्रा. १।८।४।२ ) इति । यस्माद्द्वितीये वार्षिकमासि सारस्वतयागः कृतस्तस्मात्प्रावृषि वृष्ट्या संतुष्टाः कृषीवलाः 'त्वया कृषिकार्यं मया कृषिकार्यं क्रियते, बीजानि सन्ति, के वाऽनड्वाहः' इत्यादिकाः सर्वा वाचः परस्परं वदन्ति । उत्तरहविःपञ्चकं प्रशंसति— 'पौष्णेन व्यवस्यन्ति । मैत्रेण कृषन्ते । वारुणेन विधृता आसते । क्षैत्रपत्येन पाचयन्ते । आदित्येनाऽऽदधते ।' ( तैब्रा. १।८।४।२ ) इति । शारदे प्रथमे मासि पौष्ण-यागस्य कृतत्वात्तेन पौष्णेन व्यवस्यन्ति पूषदेवताया अनु-ग्रहेण पुष्टिमान् 'एतावतीं भूमिं कृषामि' इत्यादि-निश्चयं कुर्वन्ति । शारदे द्वितीये मासि मैत्रयागस्य कृतत्वात् मित्रदेवताया अनुग्रहेण निर्विघ्नाः कृषन्ति । हैमन्ते प्रथमे मासि वारुणयागस्य कृतत्वात् वरुणदेव-ताया अनुग्रहेण गोमयादिकं प्रक्षिप्य नीरपूर्णं क्षेत्रं विशेषेण धृतवन्तः पोषयन्त आसते । हैमन्ते द्वितीये मासि क्षैत्रपत्ययागस्य कृतत्वात् क्षेत्रपतिदेवताया अनुग्रहेण सस्यमध्ये यथेष्टमुत्पन्नं निरर्थकं तृणादिकमुन्मूल्य फलपाकं संपादयन्ति । शैशिरे प्रथमे मास्यादित्ययागस्य कृतत्वात् अदितिदेवताया अनुग्रहेण पक्वानि धान्यानि स्वगृहेष्वा-दधते ।

यथोक्तं प्रतिमासनिर्वापं परपक्षत्वेनोपन्यस्यति— 'मासि मास्येतानि हवीꣳषि निरुप्याणीत्याहुः । तेनैवर्तून् प्रयुङ्क्त इति ।' ( तैब्रा. १।८।४।३ ) इति । तेनैव प्रतिमासं पृथङ्निर्वापेणैव सर्वानृतून् प्रयुक्तवान् भवति ऋतुधर्मान् यथायथं प्रयुक्तवान् भवति । यस्मादृतुप्रयोग-स्तेषु संपद्यते तस्मादेतानि प्रयुजां हवींषीत्यभिप्रायः । तं पक्षं निराकृत्य पक्षान्तरं विधत्ते— 'अथो खल्वाहुः । कः संवत्सरं जीविष्यतीति । षडेव पूर्वेद्युर्निरुप्याणि । षडु-त्तरेद्युः । तेनैवर्तून् प्रयुङ्क्ते ।' ( तैब्रा. १।८।४।३) इति । आयुष्परिमाणस्य अवगन्तुमशक्यत्वात् 'धर्मस्य त्वरिता गतिः' इतिन्यायेन दिनद्वये निरुप्याणि । तथा सति षट्संख्यायाः 'षड्वा ऋतवः' इतिश्रुत्यनुसारेण ऋतुप्रयोगसिद्धिः । प्रयुजां हविष्ट्वमप्युपपन्नमित्यभिप्रायः । दक्षिणाद्वयं प्रशंसति— 'दक्षिणो रथवाहनवाहः पूर्वेषां दक्षिणा । उत्तर उत्तरेषाम् । संवत्सरस्यैवान्तौ युनक्ति । सुवर्गस्य लोकस्य समष्ट्यै ।' ( तैब्रा. १।८।४।३-४ ) इति । शकटयुगस्योभयोरन्तयोर्बद्धावेतावनड्वाहौ, तयो-र्दानेन सवत्सरस्योभयोर्मासषट्कयोरन्तौ संपादितवान् भवति, तेन स्वर्गः प्राप्यते । तैसा.

सौत्रामणी

**स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व ॥**

विंशेऽनुवाके प्रयुजां हवींष्युक्तानि । एकविंशे सौत्रा-मण्या मन्त्राः पशवो हवींषि चोच्यन्ते । कल्पः— 'अग्रेण गार्हपत्यमवटं खात्वा तस्मिन् सुरायाः कल्पेन सुरां संदधाति परिस्रुद्द्रवति स्वाद्वीं त्वा स्वादुनेति शष्पैः सुरां संसृजति' इति । पाठस्तु— स्वाद्वीमिति । हे सुरे, स्वाद्वीं त्वा स्वादुना सोमेन संसृजामि । अत्र सोमशब्देन व्रीहियवा-द्यङ्कुरं शष्पशब्दाभिधेयं बालतृणमुपलक्ष्यते । सोमस्यौ-षधिराजत्वेन उपलक्षयितुं शक्यते । कीदृशीं त्वाम् ? तीव्रां

उग्रगन्धां, अमृतां अमृतवदाप्यायनकारिणीम्। अत एव बलीवर्दाश्वादीन् आप्यायितुं पाययन्ति। कीदृशेन सोमेन ? तीव्रेण। वमनाद्युपयुक्तौषधित्वेन तीव्रत्वम्। अमृतेन 'अपाम सोमममृता अभूम' इत्यादिश्रुतेनामृतत्व-प्रापकेण। एवंविधसोमात्मकेन शष्पेण संसृष्टत्वात्त्वं सोमोऽसीति। तस्माद्देवतात्रयार्थं त्वं पच्यस्व। सुत्राम्णे सुष्ठु रक्षकाय।

सक्तुप्रभृतिकद्रव्यविधानाय प्रस्तौति— 'इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं परापतत्। स यत्प्रथमं निरष्ठीवत्। तत्कलमभवत्। यद्द्वितीयम्। तद्बदरम्। यत्तृतीयम्। तत्कर्कन्धु। यन्नस्तः। स सिꣳहः। यदक्ष्योः। स शार्दूलः। यत्कर्णयोः। स वृकः। य ऊर्ध्वः। स सोमः। याऽवाची। सा सुरा।' (तैब्रा. १।८।५।१-२) इति। सोमममभिषुतवत इन्द्रस्य सामर्थ्यं दशधा भिन्नं सत्पतितमभूत्। युक्तं चैतत्, अभिषवस्य वधरूपत्वात्, 'घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति' इति श्रुतेः। स चेन्द्रो वक्त्रेण त्रिवारं निष्ठीवनं कृतवान्। तेन द्रव्यत्रयमभूत्। प्रथमनिष्ठीवनेन कलं बालखर्जूरफलमभूत्। बदरं क्रमुकपरिमितं सूक्ष्मं बदरीफलम्। कर्कन्धु हरीतकीपरिमितं स्थूलं बदरीफलम्। तदेतत्त्रयं मुखच्छिद्रान्निःसृतम्। यत्तु वीर्यं नासिकाछिद्रान्निःसृतं स सिंहमृगोऽभूत्। यच्चाक्षिच्छिद्राभ्यां निःसृतं स शार्दूलोऽभवत्। यदपि कर्णच्छिद्राभ्यां निर्गतं स वृक आरण्यश्वाऽभूत्। यो वीर्यभागो मूर्धच्छिद्रादूर्ध्वो निर्गतः स सोमोऽभवत्। या च वीर्यकला पायुगुह्याभ्यामवाची निर्गता सा सुरा अभवत्। यद्यपि कलादीन्यष्टैव द्रव्याणि तथापि च्छिद्रदशकान्निर्गतत्वेन दशधा वीर्यपातोऽभिहितः।

द्रव्याणि विधत्ते— 'त्रयाः सक्तवो भवन्ति। इन्द्रियस्यावरुद्ध्यै। त्रयाणि लोमानि। त्विषिमेवावरुन्धे। त्रयो ग्रहाः। वीर्यमेवावरुन्धे।' (तैब्रा. १।८।५।२-३) इति। त्रयाः त्रिविधाः सक्तवो भवेयुः कर्तव्या इत्यर्थः। कलैर्बदरैः कर्कन्धुभिश्च निष्पाद्यत्वात्त्रिविधाः। सक्तूनां इन्द्रियाभिवृद्धिहेतुत्वात् इन्द्रियसंपत्तिः। त्रयाणि सिंहशार्दूलवृकाणां संबन्धीनि त्रीणि त्रिविधानि लोमानि संपाद्यानि। त्रयः त्रिसंख्याकाः अश्विसरस्वतीसुत्रामदेवताका ग्रहा ग्रहीतव्याः। लोमभिः त्विषिः दीप्तिः संपद्यते ग्रहैश्च वीर्यम्।

सौत्रामण्या द्रव्यान्तरत्वशङ्कां वारयन् सक्तुत्रयादीनि द्रव्याणि प्रशंसति— 'नाम्ना दशमी। नव वै पुरुषे प्राणाः। नाभिर्दशमी। प्राणा इन्द्रियं वीर्यम्। प्राणानेवेन्द्रियं वीर्यं यजमान आत्मन्धत्ते।' (तैब्रा. १।८।५।३) इति। सक्तुत्रयलोमत्रयग्रहत्रयैर्निष्पन्ना नवसंख्या। तत्र सौत्रामणीदशमीत्वं नामरूपेणैव, न तु द्रव्यरूपेण, यथोक्तद्रव्यनिष्पाद्यकर्मसंघनामत्वात्। पुरुषेऽपि मुख्यच्छिद्राणि शिरसि सप्त अधो द्वे इति नवसंख्याकानि प्राणाधारत्वात्प्राणा इत्युच्यन्ते। नाभिस्तु दशमी। सा च च्छिद्राभासरूपत्वान्न मुख्यच्छिद्रम्। यथा सौत्रामणी न द्रव्यं तद्वत्। नवच्छिद्रगताश्च प्राणा इन्द्रियशब्देन वीर्यशब्देन चोच्यन्ते। अतोऽत्र द्रव्यगतया नवसंख्यया प्राणान् इन्द्रियं वीर्यं च यजमाने संपादयति।

विधत्ते— 'सीसेन क्लीबाच्छष्पाणि क्रीणाति। न वा एतदयो न हिरण्यम्। यत्सीसम्। न स्त्री न पुमान्। यत्क्लीबः। न सोमो न सुरा। यत्सौत्रामणी समृद्ध्यै।' (तैब्रा. १।८।५।३-४) इति। सीसक्लीबशष्पाणामन्तरालवर्तित्वं साम्यम्। सीसं अयसोऽधिकं हिरण्यात्तु न्यूनम्। क्लीबोऽपि स्त्रिया अधिकः पुरुषात्तु न्यूनः। शष्पाण्यपि सुराजनकत्वात् सुराया अधिकानि सोमवत्पूतत्वाभावात्ततो न्यूनानि। तान्येतानि सौत्रामणीहेतुतया तच्छब्देन निर्दिश्यन्ते।

सोमेन संसृजामीत्यस्याभिप्रायं दर्शयति— 'स्वाद्वीं त्वा स्वादुनेत्याह। सोममेवैनां करोति।' (तैब्रा. १।८।५।४) इति। देवतार्थपाकस्य प्रसिद्धतां दर्शयति— 'सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पच्यते।' (तैब्रा. १।८।५।४) इति। शष्पैः संसृष्टायास्त्रिषु दिनेषु तथैव निवासं विधत्ते— 'तिस्रः सꣳसृष्टा वसति। तिस्रो हि रात्रीः क्रीतः सोमो वसति।' (तैब्रा. १।८।५।४-५) इति। क्रीतसोमस्य त्रिरात्रवासोऽन्यत्र प्रसिद्धः।

तथा च श्रूयते— 'तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् । स तिस्रो रात्रीः परिमुषितोऽवसत् । तस्मात्तिस्रो रात्रीः क्रीतः सोमो वसति ।' (तैसं. ६।१।६।५) इति । तैसा.

'पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता ।
वारेण शश्वता तना ॥
'वायुः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः ।
इन्द्रस्य युज्यः सखा ॥

कल्पः— 'पुनातु ते परिस्रुतमिति वालमयेन पवित्रेण सुरां पावयति' इति । यथा शुद्ध्यर्थं जलं वस्त्रेण गालितं भवति, तद्वदियं वालपवित्रेण गालिता कार्या । पाठस्तु— पुनात्विति । हे इन्द्र, ते त्वदर्थं सूर्यस्य दुहिता (सुरां पावयतु ?) सूर्यसंबन्धिनी दुहितृस्थानीया दीप्तिः परिस्रुतं द्रवीभूतं सोमं पूर्वमन्त्रेण सोमीकृतं सुराद्रव्यं वारेण वालजन्येन पवित्रेण पुनातु शोधयतु । कीदृशेन वारेण ? शश्वता शाश्वतेन दृढेन, तना विस्तीर्णेन । पवित्रेण अनेन पूतः सोमो वायुवच्छीघ्रगामी भूत्वा प्रत्यङ् अधोवर्ती पात्राभिमुखः सन् अभितः (? अति) शीघ्रं द्रुतोऽभवत् । कीदृशः सोमः ? इन्द्रस्य युज्यः योग्यः सखा । विधत्ते— 'पुनातु ते परिस्रुतमिति यजुषा पुनाति व्यावृत्त्यै ।' (तैब्रा. १।८।५।५) इति । लौकिकजलादिकं न मन्त्रेणाऽऽविलं पुनन्तीति ततो व्यावृत्तिर्भवति । साधनं विधत्ते— 'पवित्रेण पुनाति । पवित्रेण हि सोमं पुनन्ति ।' (तैब्रा. १।८।५।५) इति । दशापवित्रेण सोमस्य शोधनं प्रसिद्धम् । सोमसाम्याय वालस्वीकार इति दर्शयति— 'वारेण शश्वता तनेत्याह । वारेण हि सोमं पुनन्ति ।' (तैब्रा. १।८।५।५) इति । वालेन सोमशोधनं सोमप्रकरणे सूत्रकारेण दर्शितम् 'शुक्लामूर्णास्तुकां यजमानः प्रयच्छति तां स काले दशापवित्रस्य नाभिं कुरुते' इति । 'वायुः पूतः' इत्यस्या ऋचः प्रयोगं पुरुषभेदेन व्यवस्थापयति— 'वायुः पूतः पवित्रेणेति नैतया पुनीयात् । व्यृद्धा ह्येषा । अतिपवितस्यैतया पुनीयात् ।' (तैब्रा. १।८।५।५) इति । द्विविधो हि सोमपाः सोमवामी जीर्णसोमश्चेति । तत्र सोमवामिनः सोमो बहिर्निर्गत इति 'प्राङ्सोमो अतिद्रुतः' इत्येतादृशः पाठस्तस्मिन् युक्तः, प्रत्यङ्ङित्यस्यार्थस्य तस्मिन्नभावात्, तं प्रत्येषा व्यृद्धा समृद्धिहीना । यस्त्वतिपवितो जीर्णसोमस्तं प्रत्यर्थसद्भावात् समृद्धैव । तदेतत्सूत्रकारेण विशदीकृतम्— 'प्राङ्सोमो अतिद्रुत इति सोमवामिनः प्रत्यङ्सोमो अतिद्रुत इति सोमातिपवितस्य' इति । तैसा.

'कुविदङ्ग यवमन्तो यवं चि-
द्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि
ये बर्हिषो नमोवृक्तिं न जग्मुः ॥

कल्पः— 'अपरस्मिन् खरे सुराग्रहान् गृह्णाति कुविदङ्गेति' इति । पाठस्तु— कुविदिति । अङ्गशब्दः प्रियसंबोधनवाची । हे प्रिया अश्विसरस्वतीसुत्रामेन्द्राः, ये यज्वानो बर्हिषो यागस्य नमोवृक्तिं नमस्कारविनाशं न जग्मुः न प्रापुः, किन्त्वत्यन्तश्रद्धालवोऽनु-

---

(१) **ऋसं.** ९।१।६ पुनातु (पुनाति); **तैसं.** १।८।२१।१; **कासं.** १२।९ (२३); **मैसं.** २।३।८ (३८), ३।११।७ (५१); **शुसं.** १९।४ ऋसंवत्; **तैब्रा.** २।६।१।२.

(२) **असं.** ६।५१।१ वायुः (वायोः); **तैसं.** १।८।२१।१; **कासं.** १२।९ (२४); **मैसं.** २।३।८ (३९) वायुः (वायोः) द्रुतः (स्रुतः): ३।११।७ (५२) प्रत्यङ् (प्राक्): ३।११।७ (५३) वायुः (वायोः) प्रत्यङ् (प्रत्यक्) द्रुतः (स्रुतः); **शुसं.** १९।३ वायुः (वायोः) प्रत्यङ् (प्रत्यङ्क्), वायुः (वायोः) प्रत्यङ् (प्राङ्क्) इति पाठेन पुनः पठितः; **तैब्रा.** २।६।१। २—३ प्रत्यङ् (प्राङ्) इति पाठेनापि पठितः; **शब्रा.** ५।५। ४।२२ द्रुतः (स्रुतः).

(१) **ऋसं.** १०।१३१।२ कृणुत (कृणुहि); **असं.** २०।१२५। २ ऋसंवत्; **तैसं.** १।८।२१।१—२, ५।२।११।२; **कासं.** १२।९ (२५), १४।३ (२२), ३७।१८ (५५); **मैसं.** ३।११।४ (३१), २।३।८ (४०) बर्हिषो नमोवृक्तिं (बर्हिषा नम उक्तिं); **शुसं.** १०।३२, १९।६, २३।३८ कृणुत (कृणुहि) नमोवृक्तिं न जग्मुः (नम उक्तिं यजन्ति); **तैब्रा.** २।६।१।३; **शब्रा.** ५।५। ४।२४ शुसंवत्.

तिष्ठन्ति, तेषामेषां यज्वनां हविर्विषयाणि भोजनानि इहेह कृणुत । ग्रहणपात्राणामनेकत्वाद्वीप्सा । तत्रोपमानमुच्यते । कुविच्छब्दो बह्वर्थवाची । चिच्छब्दः समुच्चये । यथा लोके यवमन्तः यवादिधान्योपेताः कृषिकाः कुवित् यवंचित् बहुलं यवं अन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि अनुपूर्वं तत्परीक्षाक्रमेण वियूय इदं पक्वमिदमपक्वमिति पृथक्कृत्य दान्ति लुनन्ति, तथा यूयमपि नमस्कारादिरहितो नास्तिकोऽयं यज्वा श्रद्धालुरयं यज्वेति विविच्य श्रद्धालोर्हवींषि भुङ्ध्वम् । विधत्ते– 'कुविदङ्गेत्यनिरुक्तया प्राजापत्यया गृह्णाति । अनिरुक्तः प्रजापतिः । प्रजापतेराप्त्यै । ' ( तैब्रा. १।८।५।५–६) इति । अस्यां ऋचि प्रस्तुतानि अश्विसरस्वत्यादिनामानि न श्रुतानि, किंतु अङ्गेति साधारणशब्दः श्रुतः, तस्मादत्रेयं देवतेतिविशेषनिरुक्तवर्जितेयमृक् । प्रजापतिर्जगदीश्वरोऽपि मूर्तिरहितत्वादनिरुक्तः । अत एव जगत्कारणप्रतिपादनपरे नासदासीयसूक्ते श्रूयते– 'को अद्धा वेद क इह प्रवोचत् । कुत आजाता कुत इयं विसृष्टिः ' इति, 'यो अस्याध्यक्षः परमे व्योमन् । सो अङ्ग वेद यदि वा न वेद ' इति च । अतो निरुक्तराहित्यसाम्यादस्याः प्राजापत्यत्वम् । अत्र ग्रहाणां भिन्नत्वेन मन्त्रान्तरप्रसक्तिं वारयितुं विधत्ते– 'एकयर्चा गृह्णाति । एकधैव यजमाने वीर्यं दधाति । ' ( तैब्रा. १।८।५।६ ) इति । तैसा.

**[1]आश्विनं धूम्रमा लभते, सारस्वतं मेषम्, ऐन्द्रमृषभम् ॥**

मन्त्रानुक्त्वा पशून् विधत्ते– आश्विनमिति । मलिनश्वैत्यवर्णोपेतः धूम्रः । अत्रत्या देवताः प्रशंसति– 'आश्विनं धूम्रमालभते । अश्विनौ वै देवानां भिषजौ । ताभ्यामेवास्मै भेषजं करोति । सारस्वतं मेषम् । वाग्वै सरस्वती । वाचैवैनं भिषज्यति । ऐन्द्रमृषभꣳ सेन्द्रत्वाय । ' ( तैब्रा. १।८।५।६–७ ) इति । तैसा.

**ऐन्द्रमेकादशकपालं निर्वपति । सावित्रं द्वादशकपालम् । वारुणं दशकपालम् । सोमप्रतीकाः पितरस्तृप्णुत ॥**

(१) तैसं. १।८।२१।२.

पशून् विधाय पुरोडाशान् विधत्ते– ऐन्द्रमिति । कल्पः– ' दक्षिणेऽग्नौ शतातृण्णां स्थालीं प्रबद्धां धारयति तस्या बिल उदीचीनदशं पवित्रं वितत्य यन्मे मनः परागतमिति तस्मिञ्शतमानं हिरण्यं निधाय सोमप्रतीकाः पितरस्तृप्णुतेति तस्मिन्सुराशेषमानयति ' इति । सोमप्रतीकाः सोमप्रमुखाः । तैसा.

**वडबा दक्षिणा ॥**

दक्षिणां विधत्ते– वडबेति । अश्वस्य योषिद्वडवेति । तैसा.

पशुभेदेन प्रसक्तं यूपभेदमपोह्य यूपैक्यं विधत्ते– ' यत्त्रिषु यूपेष्वालभेत । बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात् । भ्रातृव्यमस्मै जनयेत् । एकयूप आलभते । एकधैवास्मिन्निन्द्रियं वीर्यं दधाति । नास्मै भ्रातृव्यं जनयति । ' ( तैब्रा. १।८।६।१ ) इति । अस्माद्बहिर्धा यजमानशरीराद्बहिर्देशे । प्रकृतौ यद्देवत्यः पशुस्तद्देवत्यः पुरोडाश इत्यभिधानादत्रापि तत्प्राप्तौ निषेधति– ' नैतेषां पशूनां पुरोडाशा भवन्ति । ग्रहपुरोडाशा ह्येते । ' ( तैब्रा. १।८।६।१ ) इति । ग्रहा एवात्र पुरोडशस्थानीया इत्यर्थः । यदुक्तं सूत्रकारेण– ' सर्वेषामेका पुरोरुगेका पुरोनुवाक्यैकः प्रैष एका याज्या' इति, तत्र त्रयाणां ग्रहाणां याज्यानुवाक्ये विधत्ते– ' युवꣳ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः । सर्वा एव देवताः प्रीणाति । ' ( तैब्रा. १।८।६।१ ) इति । ' युवꣳ सुरामम् ' इत्याद्यृग्द्वयं ब्राह्मणग्रन्थे प्रथमकाण्डस्य चतुर्थप्रपाठके द्वितीयानुवाके समाम्नातम्, अतस्तत्रैव व्याख्यास्यते । तत्र चाश्विशब्दो यथा श्रुतस्तथैवेन्द्रावतमितीन्द्रशब्दोऽपि श्रुतः । ' सरस्वती त्वा ' इति सरस्वतीशब्दोऽपि श्रुतः । ततोऽनयोः सर्वदेवत्यत्वं, प्रकृतानां सर्वेषां देवानां प्रतीयमानत्वात् । विधत्ते– ' ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारम् । ब्राह्मणो ह्याहुत्या उच्छेषणस्य पाता । ' ( तैब्रा. १।८।६।२ ) इति । हुतायाः सुरायाः शेष उच्छेषणम् । तत्रैवानुकल्पं विधत्ते– ' यदि ब्राह्मणं न विन्देत् । वल्मीकवपायामवनयेत् । सैव ततः प्रायश्चित्तिः । ' ( तैब्रा. १।८।६।२ ) इति । येयमवनयनक्रिया सैव ततः तत्र ब्राह्मणपानाभाववैकल्ये प्रायश्चित्तिः । पशूनां पुरोडाशानां

च विलक्षणदेवत्यत्वं प्रशंसति– 'यद्वै सौत्रामण्यै व्यृद्धम् । तदस्यै समृद्धम् । नानादेवत्याः पशवश्च पुरोडाशाश्च भवन्ति समृद्ध्यै ।' (तैब्रा. १।८।६।२) इति । कर्मान्तरे पशोः पुरोडाशस्य चैकदेवत्यत्वविधानात् भिन्नदेवत्यत्वं समृद्धिहीनं भवति । यदेवान्यत्र समृद्धिहीनं भिन्नदेवत्यत्वं सौत्रामण्यां क्रियते तद्भिन्नदेवत्यत्वं सौत्रामण्यामस्यां वाचनिकत्वात् समृद्धं संपद्यते । तस्मादत्र समृद्ध्यै पशवश्च पुरोडाशाश्च भिन्नदेवत्या भवन्ति । ऐन्द्रस्य पशोः पुरोडाशस्य च नैरन्तर्यं प्रशंसति– 'ऐन्द्रः पशूनामुत्तमो भवति । ऐन्द्रः पुरोडाशानां प्रथमः । इन्द्रिये एवास्मै समीची दधाति ।' (तैब्रा. १।८।६।२–३) इति । 'ऐन्द्रमृषभम्' इति पशुविधीनामन्ते पठितम्, तदनन्तरमेव 'ऐन्द्रमेकादशकपालं निर्वपति' इति पुरोडाशविधीनामादौ पठितम्, तस्मादैन्द्रयोर्नैरन्तर्यात् अस्य यजमानस्य दक्षिणवामभागस्थे द्वे अपीन्द्रिये सम्यक्स्थापिते भवतः ।

प्रकृतौ पशूनामङ्गयागात्पूर्वं पुरोडाशप्रचारो विहितः, अत्र त्वङ्गयागादूर्ध्वं तदीयेभ्योऽनुयाजेभ्यः पुरा तं प्रचारं विधत्ते– 'पुरस्तादनूयाजानां पुरोडाशैः प्रचरति । पशवो वै पुरोडाशाः । पशूनेवावरुन्धे ।' (तैब्रा. १।८।६।३) इति । पशुप्रयोगमध्ये प्रचारात्पुरोडाशानां पशुत्वम् । पुरोडाशदेवताः प्रशंसति– 'ऐन्द्रमेकादशकपालं निर्वपति । इन्द्रियमेवावरुन्धे । सावित्रं द्वादशकपालं प्रसूत्यै । वारुणं दशकपालम् । अन्तत एव वरुणमवयजते ।' (तैब्रा. १।८।६।३) इति ।

वडवायाः सौत्रामण्याश्च साम्येन दक्षिणां प्रशंसति– 'वडबा दक्षिणा । उत वा एषाऽश्वꣳ सूते । उताश्वतरम् । उत सोम उत सुरा । यत्सौत्रामणी समृद्ध्यै ।' (तैब्रा. १।८।६।३–४) इति । एषा वडबा यदश्वमश्वतरं वोभयं प्रसूते । अश्वगर्दभजातिद्वयसंगमादुत्पन्नोऽश्वतरः । या सौत्रामणी साऽपि तद्वत् सोमः सुरा वेत्युभयरूपा भवति । अतः सदृशदक्षिणा समृद्धिकरी ।

सोमवामिन उक्तास्त्रय एव पशवः, सोमातिपवितस्य तु विशेषं विधत्ते– 'बार्हस्पत्यं पशुं चतुर्थमतिपवितस्याऽऽलभते । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैव यज्ञस्य व्यृद्धमपिवपति ।' (तैब्रा. १।८।६।४) इति । व्यृद्धं विकलाङ्गं अपिवपति समृद्धं करोति । पूर्वपशुवत्समानदेवत्यपुरोडाशाभावप्रसक्तौ प्रकृतिवत् तादृशस्य पुरोडाशस्य प्रतिप्रसवं विधत्ते– 'पुरोडाशवानेष पशुर्भवति । न ह्येतस्य ग्रहं गृह्णन्ति ।' (तैब्रा. १।८।६।४) इति । पूर्वेषां पशूनां समानदेवत्या ग्रहा एव पुरोडाशस्थानीया इत्युक्तम् । अत्र तु ग्रहाभावात्पुरोडाशः कार्यः । विधत्ते– 'सोमप्रतीकाः पितरस्तृप्णुतेति शतातृण्णायाꣳ समवनयति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति ।' (तैब्रा. १।८।६।४–५) इति । शतातृण्णा शतच्छिद्रा स्थाली । दक्षिणाग्नेरुपरि शतातृण्णायां (? या) बन्धनं यत्सूत्रकारेणोक्तं तदिदं विधत्ते– 'दक्षिणेऽग्नौ जुहोति । पापवस्यसस्य व्यावृत्त्यै ।' (तैब्रा. १।८।६।५) इति । पापवस्यसं पापेन धनवत्तरत्वम् । निषिद्धां हि सुरां स्वकीयद्रव्यत्वेन संपादयन् पुरुषः पापाचरणेन धनवत्तरो भवति । तस्य व्यावृत्तिः कर्तव्या । सोमाज्यादिवदाहवनीय एव तद्धोमे व्यावृत्तिर्न भवेत् । तस्माद्दक्षिणेऽग्नौ जुहुयात् । शतातृण्णायां हिरण्यस्थापनं विधत्ते– 'हिरण्यमन्तरा धारयति । पूतामेवैनां जुहोति ।' (तैब्रा. १।८।६।५) इति । अन्तरा दक्षिणाग्निसुरयोर्मध्ये । सा च सुरा हिरण्यस्पर्शेन पूता भवति । परिमाणं विधत्ते– 'शतमानं भवति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति ।' (तैब्रा. १।८।६।५) इति । दक्षिणाग्नौ शतातृण्णायाः स्थापनं विधत्ते– 'यत्रैव शतातृण्णां धारयति । तन्निदधाति प्रतिष्ठित्यै ।' (तैब्रा. १।८।६।५–६) इति । 'त्वꣳ सोम प्रचिकितः' इत्यादिभिरुपस्थानं विधत्ते– 'पितॄन्वा एतस्येन्द्रियं वीर्यं गच्छति । यꣳ सोमोऽतिपवते । पितॄणां याज्यानुवाक्याभिरुपतिष्ठते । यदेवास्य पितॄनिन्द्रियं वीर्यं गच्छति । तदेवावरुन्धे ।' (तैब्रा. १।८।६।६) इति । यं यजमानं पीतः सोमः अतिशयेन शोधयति स्वयं तदुदरे जीर्णत्वादेतस्येन्द्रियमिति पूर्वत्रान्वयः । संख्यां विधत्ते– 'तिसृभिरुपतिष्ठते । तृतीये वा इतो लोके पितरः । तानेव प्रीणाति ।'

(तैब्रा. १।८।६।६) इति । तदेतदापस्तम्बेन स्पष्टीकृतम्– ‘स्रवन्ति सौमीभिः पितृमतीभिस्तिसृभिस्तिसृभिरुत्तरोत्तराभिरुपतिष्ठन्ते त्वꣳसोम प्रचिकित इत्येताः समाम्नाता भवन्ति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा पश्चाद्धोता’ इति । ‘त्वꣳसोम प्रचिकितः, त्वया हि नः पितरः, त्वꣳ सोम पितृभिः’ इत्यध्वर्योरेतास्तिस्रः । ‘बर्हिषदः पितरः, आऽहं पितॄन्, उपहूताः पितरः’ इति ब्रह्मण एतास्तिस्रः । ‘अग्निष्वात्ताः पितरः, ये अग्निष्वात्ताः, वान्यायै दुग्धे’ इति होतुरेतास्तिस्रः । तानेतानुपस्थातॄन् विधत्ते– ‘अथो त्रीणि वै यज्ञस्येन्द्रियाणि । अध्वर्युर्होता ब्रह्मा । त उपतिष्ठन्ते । यान्येव यज्ञस्येन्द्रियाणि । तैरेवास्मै भेषजं करोति ।’ (तैब्रा १।८।६।६–७) इति । इन्द्रियवद्व्यवहारनिर्वाहकत्वादृत्विजां यज्ञेन्द्रियत्वम् ।

तदेवमेतदन्तेनानुब्राह्मणेन मन्त्रकाण्डोक्ताः प्रधानकर्मविधयस्तन्मन्त्राश्च व्याख्याताः । अथानुब्राह्मणशेषेण व्याख्येयमन्त्रकाण्डनिरपेक्षो राजसूयप्रयोगोऽभिधीयते । तत्राऽऽरम्भकाले कर्तव्यं पवित्राख्यं सोमयागं विधत्ते– ‘अग्निष्टोममग्र आहरति । यज्ञमुखं वा अग्निष्टोमः । यज्ञमुखमेवाऽऽरभ्य सवमाक्रमते ।’ (तैब्रा. १।८।७।१) इति । सोमयागानां सर्वेषां प्रकृतित्वेनाग्निष्टोमस्य यज्ञमुखत्वम् । सवं अभिषेकयुक्तं राजसूयं आक्रमते प्राप्नोति । विधत्ते– ‘अथैषोऽभिषेचनीयश्चतुस्त्रिꣳशपवमानो भवति । त्रयस्त्रिꣳशद्वै देवताः । ता एवाऽऽप्नोति । प्रजापतिश्चतुस्त्रिꣳशः । तमेवाऽऽप्नोति ।’ (तैब्रा.१।८।७।१) इति । अथ अग्निष्टोमादूर्ध्वं, न तु तदनन्तरम्, आनुमतादिभी रत्निहविःपर्यन्तैः यागैरग्निष्टोमाभिषेचनीययोर्व्यवहितत्वात् । प्रकृतौ बहिष्पवमानमाध्यंदिनपवमानार्भवपवमानानां क्रमेण त्रिवृत्पञ्चदशसप्तदशस्तोमा विहिताः । अत्र तु तान् परित्यज्य चतुस्त्रिंशस्तोमः प्रयोक्तव्यः । ‘समिधमातिष्ठ’ इत्यनुवाके त्रयस्त्रिंशस्तोमविधायकं ब्राह्मणमुदाहृतम् । तत्रैवावस्थितिविशेषेणैकां स्तोत्रीयामधिकां संपाद्य चतुस्त्रिंशस्तोमं कुर्यात् । स चाऽऽवृत्तिविशेषः सामसूत्रे द्रष्टव्यः । ‘ये देवा दिव्येकादश स्थ’ इतिमन्त्रे त्रयस्त्रिंशद्देवा उक्ताः । यद्वा वाजसनेयिनः शाकल्यब्राह्मणेऽधीयते– ‘अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्यास्त एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशौ’ (शब्रा. ११।६।३।५) इति । पूर्वोक्ताः कर्मभुज एताः सू( ? एतासू )पास्या इति तत्तत्प्रकरणादवगम्यते । एतासां त्रयस्त्रिंशद्देवतानां प्रजारूपाणां पालकोऽन्यः प्रजापतिश्चतुस्त्रिंशः । यथोक्तस्तोमे तु यथोक्तसर्वदेवताप्राप्तिर्भवति ।

पवमानशब्देन प्रथमस्य बहिष्पवमानस्यैव सहसा बुद्धिस्थत्वात्तत्रैवायं चतुस्त्रिंशस्तोम इति भ्रमं व्युदसितुं त्रिष्वपि पवमानेष्वेतं स्तोमं विधत्ते– ‘सꣳशर एष स्तोमानामयथापूर्वम् । यद्विषमाः स्तोमाः । एतावान्वै यज्ञः । यावान्पवमानाः । अन्तःश्लेषणं वा अन्यत् । यत्समाः पवमानाः । तेनासꣳशरः । तेन यथापूर्वम् ।’ (तैब्रा. १।८।७।१–२) इति ।

एतस्मिन्पवमाने चतुस्त्रिंशस्तोमं कृत्वैतयोस्तदकरणे सति यद्वैषम्यं भवति, स एष स्तोमानां संशरः सम्यग्घिसनं भवति । द्वितीयतृतीयपवमानयोश्चोदकप्राप्तौ यौ पञ्चदशसप्तदशस्तोमौ तयोः प्रथमपवमानप्रयुक्तत्वाच्चतुस्त्रिंशस्तोमान्न्यूनत्वेन हिंसैव भवति । किंच अयथापूर्वत्वं परो दोषः । स्तोमेषु दुष्टेषु यज्ञस्य किमायातमिति न शङ्कनीयं, पवमानस्तोमदोषस्य यज्ञभ्रंशे पर्यवसानात् । एते त्रयः पवमाना इति यावान् एतावान् एव मुख्यो यज्ञः । अन्यत् सर्वं यज्ञस्यान्तःश्लेषणम् । यथा भित्तेर्दार्ढ्यायान्तर्दृढकाष्ठं पाषाणो वा प्रक्षिप्यते तद्वद्यज्ञस्यान्यदङ्गजातं संपूर्त्यर्थमेव क्रियते, न तु मुख्यस्वरूपम् । त्रयाणामपि पवमानानां चतुस्त्रिंशस्तोमे सति पूर्वोक्तदोषद्वयं न भवति ।

अभिषेचनीयस्योक्थ्यसंस्थारूपत्वं विधत्ते– ‘आत्मनैवाग्निष्टोमेनर्ध्नोति । आत्मना पुण्यो भवति । प्रजा वा उक्थानि । पशव उक्थानि । यदुक्थ्यो भवत्यनुसंतत्यै ।’ (तैब्रा. १।८।७।२–३) इति । अग्निष्टोमे द्वादशैव शस्त्राणि । उक्थ्ये तु तेभ्य ऊर्ध्वं त्रीणि शस्त्राणि । तथा सति द्वादशशस्त्रयुक्तेनाग्निष्टोमभागेनायं यजमान आत्मनैव स्वयमेव धनादिभिः समृद्धो भवति । स्वर्गहेतुपुष्ट्या युक्तश्च भवति । तत उत्तरभाविनां त्रयाणां प्रजापशुरूपत्वात् पञ्चदशस्तोत्रयुक्तोक्थ्यरूपत्वे सति प्रजासु पशुषु च समृद्धिरनुसंतता भवति ।

बहिष्पवमानस्तोत्रस्य प्रारम्भे चोदकप्राप्तां 'उपास्मै गायता नरः' इत्येतामृचं बाधितुमृगन्तरं विधत्ते– 'उप त्वा जामयो गिर इति प्रतिपद्भवति । वाग्वै वायुः । वाच एवैषोऽभिषेकः । सर्वासामेव प्रजानाꣳ सूयते । सर्वा एनं प्रजा राजेति वदन्ति ।' (तैब्रा.१।८।८।१) इति । प्रतिपद्यते उपक्रम्यतेऽनयेति प्रतिपत्, आदौ पठनीयेत्यर्थः । अस्यामृचि 'वायोरनीके अस्थिरन्' इति गिरां वायुसमीपे स्थितिः पठ्यते । स च वायुर्वाक्स्वरूपः, कोष्ठाग्निप्रेरितस्य वायोः कण्ठताल्वाद्यभिघातेनाक्षरविशेषोत्पत्तेः । अभिषेचनीये योऽभिषेकः क्रियते सोऽयं वाच एवाभिषेकः । तत्कथमित्युच्यते– सर्वासामेव प्रजानां मध्ये सूयते अभिषिच्यते, सर्वाश्च प्रजा एनं राजेति वदन्त्यः सेवन्ते, तस्मात्तादृशवाक्प्रेरकवायुप्रतिपादिका सेयमृगेवाऽऽदौ पाठ्या ।

ऋगन्तरपाठं विधत्ते– 'एतमु त्यं दशक्षिप इत्याह । आदित्या वै प्रजाः । प्रजानामेवैतेन सूयते ।' (तैब्रा. १।८।८।१ ) इति । इत्याह इत्येतामृचं पठेत् । अस्यामृचि 'समादित्येभिरख्यत' इत्यादित्याः श्रूयन्ते । ते चाऽऽदित्या एव प्रजाः, अदितेरुत्पन्नत्वात् । तेन मन्त्रपाठेन प्रजानामेव मध्ये अभिसूयते अभिषिच्यते । ऋगन्तरपाठं विधत्ते– 'यन्ति वा एते यज्ञमुखात् । ये संभार्या अक्रन् । यदाह पवस्व वाचो अग्रिय इति । तेनैव यज्ञमुखान्न यन्ति ।' (तैब्रा.१।८।८।१–२) इति । सम्यग्भ्रियन्ते धीयन्ते पोष्यन्ते वा तृचा याभिराद्याभिर्ऋग्भिस्ताः तृचानामाद्या ऋचः संभार्याः । तादृश ऋचो य उद्गातारोऽक्रन् कुर्वन्ति पठन्ति त एत उद्गातारो यज्ञमुखात् यन्ति वै अपगच्छन्त्येव । 'पवस्व' इत्यृचः पाठे तु तत्र 'हे सोम, त्वं अग्रियः अग्रे भव आदिभूतः सन् वाचः शोधय' इत्यभिधानात् यज्ञमुखात् अपगमनं न भवति । उच्छन्द्युक्ताः काश्चिदृचो विधत्ते– 'अनुष्टुक्प्रथमा भवति । अनुष्टुगुत्तमा । वाग्वा अनुष्टुक् । वाचैव प्रयन्ति । वाचोद्यन्ति । उद्वतीर्भवन्ति । उद्वद्वा अनुष्टुभो रूपम् । आनुष्टुभो राजन्यः । तस्मादुद्वतीर्भवन्ति ।' (तैब्रा. १।८।८।२–३ ) इति । स्तोत्रस्याद्यावन्ते त्वनुष्टुभावृचौ भवतः । तथा सति अनुष्टुप्छन्दसो वाग्विशेषत्वेन वाग्रूपत्वात् वाचैव प्रारम्भसमाप्ती कृते भवतः । यद्यपि 'उप त्वा जामयो गिरः' इत्यादयो गायत्र्यः, तथाऽप्युच्छन्द्युक्ताभिर्ऋग्भिरनुष्टुप्त्वं संपद्यते । अनुष्टुभो हि स्वरूपमुच्छन्द्युक्तं, तस्योत्कृष्टत्वात् । यद्वा सौरीष्वनुष्टुप्छन्दस्कासु 'उद्यन्नद्य मित्र(म्)' इत्यादिषूच्छब्ददर्शनादनुष्टुब्रूपं उच्छब्दैरुपेतम् । अनुष्टुभः संबन्धी राजन्यः, 'अनुष्टुप्छन्दसां प्रतिष्ठा' इति श्रुतेर्यथा छन्दसां मध्ये अनुष्टुभ उत्तमत्वं तद्वद्राज्ञः सर्वपालकत्वेन उत्तमत्वात् । तस्मात्प्रशस्तत्वात् उच्छब्दयुक्ता ऋचः कार्याः । स्तोत्रसमापिकां ऋचं विधत्ते– 'सौर्यनुष्टुगुत्तमा भवति । सुवर्गस्य लोकस्य संतत्यै ।' ( तैब्रा. १।८।८।३) इति । पूर्वोक्ता उद्वतीरिमां च सौरीं सामसूत्रे जानीयात् । सूर्यस्य स्वर्गवाचित्वात् सौर्या समापने स्वर्गः संततो भवति ।

प्राकृतानि पृष्ठस्तोत्राण्यपवदितुमन्यानि पृष्ठस्तोत्राणि विधत्ते– 'यो वै सवादेति । नैनꣳ सव उपनमति । यः सामभ्य एति । पापीयान्त्सुषुवाणो भवति । एतानि खलु वै सामानि । यत्पृष्ठानि । यत्पृष्ठानि भवन्ति । तैरेव सवान्नैति ।' ( तैब्रा. १।८।८।३–४ ) इति । यो यजमानः सवादेति प्रस्तुतात्सोमाभिषवादपगच्छति, एनं सवो नोपनमति भावी सोमाभिषवो न प्राप्नोति । तर्हि वर्तमानं सोमाभिषवं करोत्विति चेत्, मैवम् । यः सामभ्यः अपगच्छति असौ सुषुवाणः पापीयान् भवति । वर्तमानं सोमाभिषवं कुर्वतोऽपि सामराहित्यात् पापिष्ठत्वम् । तर्हि सामान्यपि कानिचिद्गायत्विति चेत्, मैवम् । नहि यानि कानिचित्सामान्यत्र मुख्यानि, किंतु पृष्ठस्तोत्रगतान्येव । तस्मात् प्रयुज्यमानैस्तैरेव पृष्ठस्तोत्रैः सवान्नैति सोमाभिषवान्नापगच्छति । पृष्ठविशेषस्वरूपं चान्यतोऽवगन्तव्यम् ।

पृष्ठस्तोत्रगतान्युभयविधसामानि प्रशंसति– 'यानि देवराजानाꣳ सामानि । तैरमुष्मिँल्लोक ऋध्नोति । यानि मनुष्यराजानाꣳ सामानि । तैरस्मिँल्लोक ऋध्नोति । उभयोरेव लोकयोर्ऋध्नोति । देवलोके च मनुष्यलोके च ।' ( तैब्रा. १।८।८।४ ) इति । एतच्च सामद्वैविध्यमन्यतो द्रष्टव्यम् । प्राप्तानेव स्तोमान् प्रशंसति–

'एकविँशोऽभिषेचनीयस्योत्तमो भवति । एकविँशः केशवपनीयस्य प्रथमः । सप्तदशो दशपेयः । विड्वा एकविँशः । राष्ट्रँ सप्तदशः । विश एवैतन्मध्यतोऽभिषिच्यते । तस्माद्वा एष विशां प्रियः । विशो हि मध्यतोऽभिषिच्यते ।' ( तैब्रा. १।८।८।४–५ ) इति ।

अभिषेचनीयो दशपेयः केशवपनीय एवमत्रत्यानां त्रयाणां सोमयागानामनुक्रमः । तत्राभिषेचनीयस्योक्थ्यविकृतित्वादुक्थ्ये चोत्तमस्तोत्रस्यैकविंशस्तोमयुक्तत्वादभिषेचनीयस्याप्युत्तम एकत्रिंशो भवति । दशपेये सर्वेषु स्तोत्रेषु सप्तदशस्तोमो वाचनिकः । केशवपनीयेऽप्यग्निष्टोमगताः स्तोमा विपर्ययेण प्रयुज्यन्ते । अग्निष्टोमे च त्रिवृत्पञ्चदशः सप्तदश एकविंश इत्येष क्रमः । केशवपनीये त्वेकविंशः सप्तदशः पञ्चदशस्त्रिवृदित्येतादृशः क्रमो भवति । तत्राभिषेचनीये योऽन्त्य एकविंशो यश्च केशवपनीये प्रथम एकविंशस्तयोरुभयोः प्रजारूपयोर्मध्ये दशपेयगतस्य सप्तदशस्तोत्ररूपस्यावस्थितत्वादेतद्राष्ट्रं विश एवैतन्मध्यतस्तद्द्वयोर्विशोर्मध्येऽभिषिक्तं भवति । यस्मात्सप्तदशस्तोमरूपस्य राष्ट्रस्य पालक एष राजा यथोक्तरीत्या विशां मध्ये प्रजानां मध्येऽभिषिच्यते तस्मादेव कारणात् विशां प्रजानां प्रियो भवति ।

अवरोहक्रमानुष्ठितस्तोमयुक्तं केशवपनीयं विधत्ते– 'यद्वा एनमदो दिशोऽनु व्यास्थापयन्ति । तत्सुवर्गं लोकमभ्यारोहति । यदिमं लोकं न प्रत्यवरोहेत् । अति जनं वेयात् । उद्वा माद्येत् । यदेष प्रतीचीनः स्तोमो * भवति । इममेव तेन लोकं प्रत्यवरोहति । अथो अस्मिन्नेव लोके प्रतितिष्ठत्यनुन्मादाय ।' ( तैब्रा. १।८।८।५–६ ) इति । अद इत्यनेन प्रत्यक्षत्वं हस्तेनाभिनीय प्रदर्श्यते । यदा 'समिधमातिष्ठ' इत्यादिभिर्मन्त्रैरस्माकं दृष्टिपथ एवैनं राजानं दिशो व्यास्थापयन्ति तदानीमेवायं स्वर्गं लोकमभ्यारोहति । अभ्यारुह्य च पुनरिमं लोकं प्रति नावरोहेच्चेत्तदानीमत्रत्यं बन्धुजनमतिक्रम्य यत्र क्वापि गच्छेदुन्मत्तो वा भवेत् । प्रतीचीनस्तोमोऽग्निष्टोमाद्विपर्ययेण प्रत्यावृत्ताः स्तोमा यस्य केशवपनीयस्य स एष यद्यत्र भवेत्तर्हि केशवपनीयेनेममेव लोकं प्रत्यवरोहति । किंचोन्मादाभावायास्मिन्नेव लोके प्रतितिष्ठति ।

यो रुक्मोऽभिषेककाले पुरुषस्याधस्तादवस्थापितः, यश्चान्यः शिरसि त्रातुं धृतः, तावुभौ प्रशंसति– 'इयं वै रजता । असौ हरिणी । यद्रुक्मौ भवतः । आभ्यामेवैनमुभयतः परिगृह्णाति ।' ( तैब्रा. १।८।९।१ ) इति । अधस्तनो रुक्मो राजतो भूमिस्वरूपः, उपरितनस्तु हिरण्मयो द्युलोकः । तत आभ्यां द्यावापृथिवीरूपाभ्यामधस्तादुपरिष्टाच्च परिगृहीतो भवति । ननु– 'अमृतमसि मृत्योर्मा पाहीति हिरण्यमुपास्यति' इति श्रवणादधस्तनोऽपि रुक्मो राजतो न भवति । नायं दोषः, रजतस्यापि हिरण्यावान्तरभेदत्वात्, 'तस्माद्रजतँ हिरण्यमदक्षिण्यम्' इति पुनराधाने श्रवणात् । होतृब्राह्मणेऽपि द्वैविध्यमाम्नातम्– 'तद्दुर्वर्णँ हिरण्यमभवत् । तद्दुर्वर्णस्य हिरण्यस्य जन्म । स द्वितीयमतप्यत । सोऽताम्यत् । स प्राङ्बाधत । स देवानसृजत । तदस्य प्रियमासीत् । तत्सुवर्णँ हिरण्यमभवत्' इति च ।

उपरितनं रुक्मं पुनः प्रशंसति– 'वरुणस्य वा अभिषिच्यमानस्याऽऽपः । इन्द्रियं वीर्यं निरघ्नन् । तत्सुवर्णँ हिरण्यमभवत् । यद्रुक्ममन्तर्दधाति । इन्द्रियस्य वीर्यस्यानिर्घाताय ।' ( तैब्रा. १।८।९।१ ) इति । आपो वीर्यं निरघ्नन् निर्गमितवत्यः । तच्च निर्गतं वीर्यं सुवर्णमभवत् । तस्य च रुक्मस्य परिमाणं छिद्राणि च विधत्ते– 'शतमानो भवति शताक्षरः । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति ।' ( तैब्रा. १।८।९।१–२ ) इति । हिरण्यद्रव्यं प्रशंसति– 'आयुर्वै हिरण्यम् । आयुष्या एवैनमभ्यतिक्षरन्ति । तेजो वै हिरण्यम् । तेजस्या एवैनमभ्यतिक्षरन्ति । वर्चो वै हिरण्यम् । वर्चस्या एवैनमभ्यतिक्षरन्ति ।' ( तैब्रा. १।८।९।२ ) इति । हिरण्यदानेनापमृत्योः परिहर्तुं शक्यत्वात्तस्याऽऽयुष्ट्वम् । तत्संबन्धादायुर्हिता एवाऽऽप एवं यजमानमभितः क्षरन्ति ।

* अत्र 'प्रतीचीनस्तोमः' इति सामासिकं पदं केशवपनीयपरं भाष्यकारस्याभिमतम् । सर्वेषु पुस्तकेषु व्यस्ते पदे मुद्रिते उपलभ्येते । उभयपाठयोरुच्चारणसाम्यात् वैदिका अप्यत्र प्रमाणभावं न भजन्ते ।

सुवर्णस्य दीप्तिमत्त्वात् तेजस्त्वम् । तत्संबन्धादापस्ते-जस्याः । शरीरशोभा वर्चः । तच्चाऽऽभरणसंबन्धाज्जायते इति हिरण्यस्य वर्चस्त्वम् । तद्योगादापो वर्चस्याः ।

अथ व्युष्टिद्विरात्रं विधत्ते— 'अप्रतिष्ठितो वा एष इत्याहुः । यो राजसूयेन यजत इति । यदा वा एष एतेन द्विरात्रेण यजते । अथ प्रतिष्ठा । अथ संवत्सरमाप्नोति । यावन्ति संवत्सरस्याहोरात्राणि । तावतीरेतस्य स्तोत्रीयाः । अहोरात्रेष्वेव प्रतितिष्ठति ।' (तैब्रा. १।८।१०।१) इति । राजसूयेनेष्ट्वाऽपि द्विरात्राननुष्ठानेन संपूर्त्यभावादप्रतिष्ठि-तत्वम् । अत्रत्येषु स्तोमेषु आवर्त्यमानाः स्तोत्रीया ऋचो विंशत्यधिकसप्तशतसंख्याकाः संपद्यन्ते । तथा च संवत्सर-गताहोरात्रसंख्यासामान्यादहोरात्रेषु प्रतिष्ठितत्वं संवत्सर-प्राप्तिर्भवति ।

द्विरात्रावयवावहर्विशेषौ विधत्ते— 'अग्निष्टोमः पूर्वमह-र्भवति । अतिरात्र उत्तरम् । नानैवाहोरात्रयोः प्रति-तिष्ठति ।' ( तैब्रा. १।८।१०।१–२ ) इति । विलक्षण-योरह्नोरनुष्ठितत्वादहोरात्रयोरस्य विविधप्रतिष्ठोपपद्यते । तयोरनुष्ठानाय शुक्लकृष्णपक्षौ विधत्ते— 'पौर्णमास्यां पूर्वमहर्भवति । व्यष्टकायामुत्तरम् । नानैवार्धमासयोः प्रतितिष्ठति ।' ( तैब्रा. १।८।१०।२ ) इति । तयो-रुभयोर्विलक्षणपक्षत्वादुभयोरर्धमासयोरस्य विविधा प्रतिष्ठो-पपद्यते । पक्षान्तरत्वेन विलक्षणयोर्मासयोर्द्वयोरनुष्ठानं विधत्ते— 'अमावास्यायां पूर्वमहर्भवति । उदृद्दष्ट उत्त-रम् । नानैव मासयोः प्रतितिष्ठति ।' ( तैब्रा. १।८। १०।२ ) इति । एकेनाह्ना निष्पाद्यः सोमयागोऽहः-शब्देनोपलक्ष्यते । तादृशश्चाग्निष्टोमः पूर्वमहः । तच्चा-मावास्यायां कर्तव्यम् । उदृदृष्टं शुक्लप्रतिपत्, उत्कर्षेण दर्शनस्य तत्रोपक्रमात् । तस्मिन्नुदृदृष्टे उत्तरं द्वितीय-महरतिरात्राख्यं कर्तव्यम् । तथा सति विलक्षणयोर्मासयोः कृतत्वाद्विविधप्रतिष्ठा भवति ।

प्रकारान्तरं विधत्ते— 'अथो खलु । ये एव समान-पक्षे पुण्याहे स्याताम् । तयोः कार्यं प्रतिष्ठित्यै ।' (तैब्रा. १।८।१०।२ ) इति । अथो खलु अथवेत्यर्थः । समान-श्चासौ पक्षश्च, तत्र ये पुण्यदिने ज्योतिःशास्त्रप्रसिद्धे शुभावहे दिने, तयोरिदं कर्म कार्यं, न त्वत्र पक्षभेदो विवक्षितः । मासभेदस्तु दूरापेतः । अस्मिन्द्विरात्रे दोषमु-द्भाव्य परिहरन् प्रशंसति— 'अपशव्यो द्विरात्र इत्याहुः । द्वे ह्येते छन्दसी । गायत्रं च त्रैष्टुभं च । जगतीमन्तर्यन्ति । न तेन जगती कृतेत्याहुः । यदेनां तृतीयसवने कुर्वन्तीति । यदा वा एषाऽहीनस्याहर्भजते । साह्नस्य वा सवनम् । अथैव जगती कृता । अथ पशव्यः ।' (तैब्रा. १।८। १०।३ ) इति । 'जागताः पशवः' इति श्रुत्यन्तरे पशूनां जगतीसंबन्धश्रवणाद्द्विरात्रे च जगत्या अन्तरितत्वाद-पशव्यो द्विरात्र इत्याक्षेपवादिन आहुः । अथैवं मन्यसे— विद्यत एव जगती, 'जागतं तृतीयसवनम्' इतिश्रुते-स्तृतीयसवने जगत्याः कृतत्वादिति, तदयुक्तं खलु । अहीने तावन्मात्रेण जगत्यनुष्ठानं न संपूर्णं, किं तर्हि ? यदा द्विरात्रस्यैतस्याहीनस्यैकमहः कृत्स्नं जगती व्याप्नोति तदा जगत्यनुष्ठानं संपूर्णं भवति । साह्नः एकेनाह्ना निष्पन्नत्वादेकाहः । तस्य तु तृतीयसवनसंबन्धमात्रेणापि जगत्यनुष्ठानं संपूर्णं भवति । तस्मादत्र कृत्स्नस्याह्नो जगतीव्याप्त्यभावादपशव्यत्वं तदवस्थमित्याक्षेपवादिना-मभिप्रायः । तस्मिन्नाक्षेपे भङ्ग्यन्तरेण परिहारोऽप्यन्त-र्भूतः । तत्कथमित्युच्यते— वाक्ये यदेतिशब्दं परित्यज्य परिहारो योजनीयः । एषा जगती प्रकृतस्य द्विरात्रस्या-हीनस्य कृत्स्नस्याहर्भजते । तस्मादत्र जगती कृता । तस्मादयं द्विरात्रः पशव्य इति परिहारः । यद्यपि तस्मि-न्नहनि छन्दोन्तराणि सन्ति तथापि जगतीव्याप्तावुपायः सप्तमकाण्डेऽङ्गिरसां द्विरात्रे समाम्नातः— 'वैखानसं पूर्वेऽहन्साम भवति तेन जगत्यै नैति' इति । वैखानस-नामकं साम पूर्वस्मिन्दिने गायेत् । यत्र( ? तच्च ) जगतीसंबद्धमिति तदहः कृत्स्नं जगत्या नापगच्छति । अतो वैखानससाममहिम्नैव कृत्स्नेऽप्यह्नि जगत्याः पूरि-तत्वाद्द्विरात्रः पशव्य एव ।

अस्य द्विरात्रस्य व्युष्टिनाम प्रशंसति— 'व्युष्टिर्वा एष द्विरात्रः । य एवं विद्वान्द्विरात्रेण यजते । व्येवास्मा उच्छति । अथो तम एवापहते ।' ( तैब्रा. १।८।१०। ४ ) इति । विशिष्ट उषःकालो यस्मिन्द्विरात्रे सोऽयं

व्युष्टिः । यो यजमान एवं व्युष्टिनाम विद्वान् यजतेऽस्मै यजमानार्थे विशेषेण उच्छत्येव सर्वं कर्तव्यजातं बुद्धौ प्रकाशत एव । किंच तमो बुद्धिमान्द्यं अयं यजमानो विनाशयत्येव । यदुक्तं सूत्रकारेण– 'क्षत्त्राणां धृतिस्त्रिष्टोमोऽग्निष्टोमः पञ्चापवर्गस्तेनान्ते यजते संतिष्ठते राजसूयः' इति । क्षत्त्राणां धृतिरिति कर्मनामधेयम् । स च कर्मविशेषः प्रकृतिवत्त्रिवृदादिस्तोमचतुष्टयो न भवति, किं तर्हि ? त्रिभिरेव स्तोमैरुपेतः । तमेतं विधत्ते– 'अग्निष्टोममन्तत आहरति । अग्निः सर्वा देवताः । देवतास्वेव प्रतितिष्ठति ।' (तैब्रा. १।८।१०।४) इति । अग्निविषयः स्तोमो यस्य क्रतोरन्ते सोऽयमग्निष्टोमः । 'यज्ञायज्ञा वो अग्नये' इत्येतस्यामाग्नेय्यामृचि स्तोत्रकाले आवृत्त्या स्तोमं संपादयति । तेन च क्रतुः संस्थितो भवति । तस्मादयमग्निष्टोमः । अग्नेश्च सर्वदेवतारूपत्वमसकृदुक्तम् । तस्माद्राजसूयसमाप्त्यवसरेऽनुष्ठितेनाग्निष्टोमेन यजमानो देवतासु प्रतितिष्ठत्येव ।

तैसा.

[१]युवꣳ सुराममश्विना । नमुचावासुरे सचा ।
विपिपाना शुभस्पती । इन्द्रं कर्मस्वावतम् ॥

द्वितीयानुवाके सौत्रामणिशेषा मन्त्रा उच्यन्ते । तत्र आश्विनसारस्वतैन्द्रग्रहेषु त्रिष्वपि साधारणं याज्यानुवाक्यायुगलम् । तथा च सौत्रामणिब्राह्मणमेवमाम्नातम्– 'युवꣳ सुराममश्विनेति सर्वदेवत्ये याज्यानुवाक्ये भवतः' इति । तत्र पुरोनुवाक्यामाह–युवमिति । हे अश्विनौ, नमुचावासुरे नमुचिनामके कस्मिंश्चिदसुरे सचा संबद्धं सुरामं सुरया संपादितमिमं पात्रस्थं द्रव्यशेषं विपिपाना विशेषेण पिबन्तौ शुभस्पती शोभनस्य कर्मणः पालकौ युवां कर्मस्वेतेषु इन्द्रमावतं सहपानेन पालयतम् ।

तैब्रासा.

[१]पुत्रमिव पितरावश्विनोभा ।
इन्द्रावतं कर्मणा दꣳसनाभिः ।
यत्सुरामं व्यपिबः शचीभिः ।
सरस्वती त्वा मघवन्नभीष्णात् ॥

याज्यामाह– पुत्रमिवेति । हे अश्विनौ, युवां उभौ यथा लोके पितरौ पुत्रं पालयतस्तद्वत् यजमानं अनेन कर्मणा रक्षतम् । दंसनाशब्दः कर्मवाची । शचीशब्दः शक्तिवाची । हे इन्द्र, यत् यस्मात्कारणात् कर्मविशेषेण याभिः शक्तिभिः सह त्वं सुरया संपादितमिमं रसविशेषं विशेषेण पीतवांस्तस्माद्यजमानं रक्षेति शेषः । हे मघवन्, इयं सरस्वती त्वामभीष्णात् भिषज्यतु पानेन परितोषयत्वित्यर्थः ।

तैब्रासा.

[२]अहाव्यग्ने हविरास्ये ते ।
स्रुचीव घृतं चमू इव सोमः ।
वाजसनिꣳ रयिमस्मे सुवीरम् ।
प्रशस्तं धेहि यशसं बृहन्तम् ॥

अथ मन्त्रद्वयेन सुराया अनुमन्त्रणम् । तथा च सूत्रकारः– 'हुतां हूयमानां वा यजमानोऽनुमन्त्रयते' इति । तत्र प्रथमं मन्त्रमाह– अहावीति । हे अग्ने, ते तव आस्ये मुखे अहावि इदं द्रव्यं हुतम् । यथा स्रुचि जुह्वादौ घृतं निहितं यथा वा चमू चमसेषु सोमः निहितस्तद्वत् । तस्मादस्मे अस्मासु सुवीरं शोभनकर्मशूरं पुत्रं धेहि संपादय । कीदृशम् ? वाजसनिं अन्नदातारं, रयिं धनवन्तं, प्रशस्तं विद्यादिगुणयुक्तं, यशसं यशस्विनं, बृहन्तं महान्तं सर्वकार्यसमर्थम् ।

तैब्रासा.

---

(१) ऋसं. १०।१३१।४; असं. २०।१२५।४; कासं. १७।१९ (१०२), ३८।९ (१०७) नमुचावा (नमुचा आ); मैसं. ३।११।४ (३०) नमुचावा (नमुचा आ) शुभ ... तम् (सरस्वतीन्द्रं कर्मस्वावत); शुसं. १०।३३ : २०।७६ उत्तरार्धे (विपिपानाः सरस्वतीन्द्रं कर्मस्वावत ॥); तैब्रा. १।४।२।१; शब्रा. ५।५।४।२५.

(१) ऋसं. १०।१३१।५ वतं कर्मणा दꣳ (वथुः काव्यैर्दं) भीष्णात् (भिष्णक्); असं. २०।१२५।५ ऋसंवत्; कासं. १७।१९ (१०४) रावश्वि (रा अश्वि) कर्मणा दꣳ (काव्यैर्दꣳ) भीष्णात् (भिष्णक्): ३८।९ (१०८) रावश्वि (रा अश्वि) शेषं ऋसंवत्; मैसं. ३।११।४ (३२) रावश्वि (रा अश्वि) शेषं ऋसंवत्; शुसं. १०।३४, २०।७७ ऋसंवत्; तैब्रा. १।४।२।१; शब्रा. ५।५।४।२६ ऋसंवत्.

(२) ऋसं. १०।९१।१५ चमू इव (चम्वीव); कासं. ३८।९ (११०) ऋसंवत्; मैसं. ३।११।४ (३६) ऋसंवत्; शुसं. २०।७९ ऋसंवत्; तैब्रा. १।४।२।१-२.

[1]यस्मिन्नश्वास ऋषभास उक्षणः ।
वशा मेषा अवसृष्टास आहुताः ।
कीलालपे सोमपृष्ठाय वेधसे ।
हृदा मतिं जनय चारुमग्नये ॥

अथ द्वितीयं मन्त्रमाह– यस्मिन्निति । यस्मिन्नग्नौ अश्वादय आहुताः । ( अश्वासः ? ) अश्वमेधयागे अश्वा हुताः । 'ऐन्द्रमृषभम्' इत्यादिषु विहितेषु कर्मसु ऋषभा हुताः । 'ऐन्द्रमुक्षाणम्' इत्यादिषूक्षाणो हुताः । सेचनसमर्था उक्षाणः, पुंगवगात्रा ऋषभाः । 'मैत्रावरुणीं वशामालभेत' इत्यादिषु विहितेषु वशा हुताः । 'सारस्वतं मेषम्' इत्यादिषु मेषा हुताः । ते च सर्वे अवसृष्टासः यजमानेन समर्पिताः । तादृशाय अग्नये हृदा अन्तःकरणेन चारुं मतिं कर्मानुष्ठानविषयत्वेन समीचीनां बुद्धिं जनय अहं संपादयामि । कीदृशायाग्नये ? कीलालपे अन्नरसपायिने । सोमयागस्थितानि पृष्ठानि यस्यासौ सोमपृष्ठः, तस्मै । वेधसे विधात्रे । तैब्रासा.

[2]नाना हि वां देवहितꣳ सदो मितम् ।
मा सꣳसृक्षाथां परमे व्योमन् ।
सुरा त्वमसि शुष्मिणी सोम एषः ।
मा मा हिꣳसीः स्वां योनिमाविशन् ॥

---

(१) ऋसं. १०।९१।१४ जनय ( जनये ); कासं. ३८।९ (१०९) सृष्टास ( सृष्टा ); मैसं. ३।११।४ (३७) ऋसंवत्; शुसं. २०।७८; तैब्रा. १।४।२।२.

(२) कासं. १७।१९ (१११) प्रथमपादे ( नाना हि देवैश्चकृपे सदो वां ) चतुर्थपादे ( मा माꣳ हिꣳसिष्टं यत्स्वं योनिमाविशाथः ) : ३७।१८ (५७) हितꣳ सदो मितम् ( कृतꣳ सदस्कृतं ) स्वां ( स्वं ); मैसं. २।३।८ (४३) सदो मितम् ( सदस्कृतं ) हिꣳसीः स्वां ( हिꣳ सिष्टꣳ स्वꣳ ) विशन् ( विशन्तौ ); शुसं. १९।७ सदो मितम् ( सदस्कृतं ) विशन् ( विशन्ती ); ऐब्रा. ३७।४ सदो मितम् ( सदस्कृतं ) व्योमन् ( व्योमनि ) चतुर्थपादे ( राजा मैनं हिंसिष्टं स्वां योनिमाविशन्तौ ); तैब्रा. १।४।२।२ : २।६।१।४ सदो मितम् ( सदः कृतम् )

[1]यदत्र शिष्टꣳ रसिनः सुतस्य ।
यदिन्द्रो अपिबच्छचीभिः ।
अहं तदस्य मनसा शिवेन ।
सोमꣳ राजानमिह भक्षयामि ॥

कल्पः– 'ब्राह्मणं परिक्रीणीयादुच्छेषणस्य पातारं नाना हि वां ... ... भक्षयामीति वा स्वयं पिबेत्' इति । अत्र सुरोच्छेषस्य ब्रह्माणं ( ? ब्राह्मणं ) पातारं किंचिन्मूल्यदानेन परिक्रीणीयात्, 'नाना हि वाम्' इतिमन्त्रेण 'यदत्र' इतिमन्त्रेण ( च ) वा स्वयं पिबेदित्यर्थः । हे सोमग्रहसुराग्रहौ, वां युवयोः सदः निवासस्थानं नाना मितं पृथगेव संपादितम् । अतः परमे व्योमन् प्रकृष्टे आकाशे भक्षणस्थाने मा संसृक्षाथां परस्परसंसृष्टौ मा भूताम् । हे पात्रस्थद्रव्य, त्वं शुष्मिणी बलवती सुराऽसि । एष खलु सोमः सुप्रसिद्धविभवः । त्वं स्वां योनिं स्वकीयस्थानं उदररूपं आविशन् मामिह मा हिंसीः । अत्र पात्रे रसिनः रसवतः सुतस्य अभिषुतस्य यच्छिष्टमस्ति यच्च इन्द्रः शचीभिः स्वशक्तिभिः सह अपिबत् तत्रास्य पात्रस्थद्रव्यस्यैकदेशं सोमं राजानं अहं शिवेन भक्तियुक्तेन मनसा इह कर्मणि भक्षयामि । तैब्रासा.

[2]द्वे स्रुती अशृणवं पितॄणाम् ।
अहं देवानामुत मर्त्यानाम् ।
ताभ्यामिदं विश्वं भुवनꣳ समेति ।
अन्तरा पूर्वमपरं च केतुम् ॥

---

(१) कासं. १७।१९ (१०९) यदि ( यस्ये ) तृतीयपादे ( तेनाहमद्य मनसा सुतस्य ) : ३८।२ (१२) शिष्टꣳ ( रिप्तं ); मैसं. २।३।८ (४२) यदिन्द्रो ( यमस्येन्द्रो ) तदस्य ( तमस्य ) शिवेन ( घृतेन ) : ३।११।७ (६०) यदिन्द्रो ( यमस्येन्द्रो ) तदस्य ( तमस्य ); शुसं. १९।३५ शिष्टꣳ ( रिप्तꣳ ); ऐब्रा. ३५।७, ३९।६ अहं ( इदं ); तैब्रा. १।४।२।३ : २।६।३।२ शुसंवत्; आश्रौ. १।३।९ ऐब्रावत्.

(२) ऋसं. १०।८८।१५ पितृ ( पितॄ ) विश्वं ... केतुम् ( विश्वमेजत्समेति यदन्तरा पितरं मातरं च ); कासं. १७।१९ (११४) स्रुती ( सृती ) पितृ ( पितॄ ) चतुर्थपादे ( यदन्तरा पितरं मातरं च ): ३८।२ (२५) ऋसंवत्; मैसं. २।३।८ (४४)

कल्पः- 'द्वे स्रुती... च केतुमिति वा वल्मीकवपायामवनयेत्' इति। पितृणां अस्मत्पूर्वपुरुषाणां द्वे स्रुती अशृणवं द्वौ मार्गौ इति शास्त्रमुखेणाहं श्रुतवानस्मि। तयोर्मध्ये देवानामेको मार्गः, येन गत्वा ब्रह्मलोके देवा भूत्वा न पुनरावर्तन्ते, उत अपि च मर्त्या येन गत्वा स्वर्गमनुभूय पुनरावर्तन्ते। ताभ्यां उभाभ्यां मार्गाभ्यां इदं विश्वं भुवनं शास्त्रार्थानुष्ठानपरं सर्वप्राणिजातं समेति सम्यग्गच्छति। पूर्वं केतुं चिह्नं पृथिवीं अपरं केतुं दिवं चान्तरा द्यावापृथिव्योर्मध्ये द्वे स्रुती वर्तेते इत्यर्थः। तैब्रासा.

**[1]यस्ते देव वरुण गायत्रछन्दाः पाशः।**
**तं त एतेनावयजे ॥**

कल्पः- 'यस्ते देव वरुण गायत्रछन्दाः पाशस्तं त एतेनावयजे स्वाहेत्याश्विनपात्रमवभृथे प्रविध्यन्ति' इति। हे वरुणदेवते, त्वदीयः पाशः गायत्र्याख्येण छन्दसा युक्तो यः विद्यते तं पाशं एतेन पात्रेण विनाशयामि। तैब्रासा.

**यस्ते देव वरुण त्रिष्टुप्छन्दाः पाशः।**
**तं त एतेनावयजे ॥**
**यस्ते देव वरुण जगतीछन्दाः पाशः।**
**तं त एतेनावयजे ॥**

कल्पः- 'एतेनैव त्रिष्टुप्छन्दा इति सारस्वतस्य जगतीछन्दा इत्यैन्द्रस्य' इति। एतेन 'यस्ते देव' इति मन्त्रेण त्रिष्टुप्छन्दा इतिविशेषयुक्तेन सारस्वतस्य पात्रं प्रविध्यन्ति। एवमुत्तरत्रापि। पाठस्तु- यस्त इति। समाप्ताः सौत्रामणिशेषा मन्त्राः। तैब्रासा.

ताभ्या (याभ्या) शेषं ऋसंवत्; शुसं. १९।४७ स्रुती (सृती) शेषं ऋसंवत्; तैब्रा. १।४।२।३ : २।६।३।५ उत्तरार्धे (याभ्यामिदं विश्वमेजत्समेति। यदन्तरा पितरं मातरं च॥); शब्रा. १४।९। १।४ स्रुती (सृती) विश्वं... केतुम् (विश्वमेजत्समेति यदन्तरा पितरं मातरं च).

(१) तैब्रा. १।४।२।३-४.

सौत्रामण्यां अभिषेके राज्ञः आत्मनिरूपणम्

**[1]कोऽसि कतमोऽसि कस्मै त्वा काय त्वा।**
**सुश्लोक सुमङ्गल सत्यराजन् ॥**

'यजमानमालभते कोऽसीति' (काश्रौ. १९।१०२)। अध्वर्युः यजमानं स्पृशति। हे यजमान, त्वं कः प्रजापतिः असि। अत्यन्तं कः कतमः श्रेष्ठः प्रजापतिरसि। प्रजापतयो बहवः, तत्रोत्तमोऽसि। कस्मै प्रजापतिपदप्राप्तये, त्वामहमभिषिक्तवानिति शेषः। काय प्रजापतिभावाय चाभिषिक्तवान्। 'सुश्लोकेत्यालब्धो ह्वयति' (काश्रौ. १९।१०३)। अध्वर्युणा स्पृष्टो यजमानः सुश्लोकादिसंज्ञान्नरानाह्वयति। हे सुश्लोक, एहीति शेषः। शोभनः श्लोकः कीर्तिः यस्य। शोभनं मङ्गलं उदयो यस्य स सुमङ्गलः। हे सुमङ्गल, त्वमेहि। हे सत्यराजन्, एहि। सत्यः अविनाशी राजा प्रभुर्यस्य सः। शुम.

**[2]शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि।**
**राजा मे प्राणो अमृतꣳ सम्राट् चक्षुर्विराट् श्रोत्रम् ॥**

'अङ्गानि चाऽऽलभते यथालिङ्गं शिरो म इति प्रतिमन्त्रम्।' (काश्रौ. १९।१०४)। यजमानो यथालिङ्गमङ्गान्यालभते। अभिषिक्तो यजमान इन्द्ररूपः आत्मानं सर्वात्मकं पश्यन्नाह- हे मम शिरः, श्रीः शोभा अस्तु, वर्तते वा। मे मुखं यशोऽस्तु। केशाः श्मश्रूणि मुखलोमानि च त्विषिः दीप्तिरस्तु। राजा दीप्यमानः मे मम प्राणः मुखवायुः अमृतमस्तु। चक्षुरिन्द्रियं सम्राट् अस्तु। सम्यक् राजते सम्राट्। श्रोत्रमिन्द्रियं विराट् विविधं राजमानमस्तु। शुम.

(१) कासं. ३८।४ (४५) (कोऽसि को नामासि कस्मै त्वा काय त्वा सुश्लोका३ सुमङ्गला३ सत्यराजा३न्॥); शुसं. २०।४; तैब्रा. २।६।५।३ उत्तरार्धे (सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३न्).

(२) कासं. ३८।४ (४६); मैसं. ३।११।८ (६४); शुसं. २०।५; तैब्रा. २।६।५।३-४ णो अमृ (णोऽमृ).

[1]जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड्
भामः ।
मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः ॥

मे जिह्वा रसनेन्द्रियं भद्रं कल्याणरूपमस्तु । वाक् वागिन्द्रियं महः, मह्यते पूज्यते महः, पूज्यमाना अस्तु । मनः मन्युः क्रोधरूपमस्तु क्रोधफलं ददातु । भामः क्रोधः स्वराट् स्वेनैव राजमानोऽस्तु, न तु कुतश्चित्प्रतिहन्यतामित्यर्थः । तदुक्तम्– ' शक्तिरहितोऽपि कुप्यति मानं चोद्वहति सेवकजनोऽपि । अर्थरहितोऽपि कामी जानाति विधिं विडम्बयितुम् ॥ ' इति । अङ्गुल्यः मोदाः अनन्दरूपाः सन्तु । मोदन्ते ते मोदाः । अङ्गानि प्रमोदाः प्रकृष्टहर्षाः सन्तु । मे मम मित्रं सहः अस्तु । सहते अभिभवति शत्रुमिति सहः रिपुनाशकमस्तु ।
शुम.

[2]बाहू मे बलमिन्द्रियꣳ हस्तौ मे कर्म वीर्यम् ।
आत्मा क्षत्रमुरो मम ॥

( १ ) बाहू मे बलमिन्द्रियं च वर्तेते । हस्तौ मे कर्म च वीर्यं वर्तेते । आत्मा अन्तरात्मा क्षत्रं वर्तेते उरश्च मम । शुउ.

( २ ) मे बाहू बलमस्तु बलवन्तौ स्तामित्यर्थः । इन्द्रियं च बलं स्वकार्यक्षममस्तु । मे हस्तौ कर्म चास्तु सत्कर्मकुशलौ सामर्थ्यवन्तौ च स्तामित्यर्थः । मम आत्मा अन्तरात्मा उरः हृदयं च क्षत्रं क्षतात्त्राणकरमस्तु ।
शुम.

[3]पृष्टीर्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणी ।
ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः ॥

( १ ) पृष्टीर्मे पृष्ठदेशो मे राष्ट्रं वर्तेते । उदरं च अंसौ ग्रीवा च श्रोणी च ऊरू च अरत्नी च जानुनी च विशो मे वर्तेते । अन्यान्यप्यङ्गानि यानि सर्वतः ।
शुउ.

( २ ) मे मम पृष्टीः पृष्ठप्रदेशः राष्ट्रं देशः देशवत्सर्वाधारमस्तु । मे मम उदरं, अंसौ स्कन्धौ, ग्रीवाः कण्ठदेशाः, श्रोणी कटिदेशौ, ऊरू सक्थिनी, अरत्नी हस्तदेशौ, जानुनी च सर्वतः अन्यान्यङ्गानि च विशः प्रजाः सन्तु प्रजावत् पोष्याः सन्तु । शुम.

[1]नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत् ।
आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः ।
जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा
प्रतिष्ठितः ॥

( १ ) नाभिर्मे चित्तं विज्ञानं च वर्तेते । चित्तविज्ञानयोः को विशेषः ? इति चेत् , विज्ञानं विज्ञप्तिः , तज्जः संस्कारश्चित्तम् । पायुर्मे अपचितिर्भसच्च वर्तेते । पायुः गुदप्रदेशः । अपचितिः पूजा । भसच्छब्देन स्त्रीप्रजननं गौडा आहुः । न च यजमानस्यैतद्भवति । अतः पत्नीविषयमेतत् । आनन्दनन्दौ आण्डौ मे वर्तेते । भगः सौभाग्यं पसो मे वर्तेते । भगः महदैश्वर्यम् । ' पसः पसतेः स्पृशतिकर्मणः ' इति शिश्नमुच्यते । जङ्घाभ्यां पद्भ्यां च धर्मोऽस्मि । धर्मे प्रति हि राजा भवति । विशि प्रतिष्ठितोऽस्मि । शुउ.

( २ ) मे नाभिः चित्तं ज्ञानरूपमस्तु । पायुर्मे गुदेन्द्रियं विज्ञानं ज्ञानजनितसंस्काराधारमस्तु । भसत् स्त्रीप्रजननं अपचितिः प्रजारूपमस्तु सुभगमस्तु । यजमानपत्नीविषयमेतत् । मे आण्डौ वृषणौ आनन्दनन्दौ स्तां आनन्देन संभोगजनितसुखेन नन्दतस्तौ तत्सुखभोक्तारौ भवतामित्यर्थः । ' पसः पसतेः स्पृशतिकर्मणः ' इति यास्कोक्तेः पसो लिङ्गं भगः सौभाग्यं चास्तु । भगः ऐश्वर्यं, सौभाग्यं संपत्तिः । सर्वदा भोगासक्तमस्त्वित्यर्थः । जङ्घाभ्यां

( १ ) कासं. ३८।४ (४७); मैसं. ३।११।८ (६५); शुसं. २०।६; तैब्रा. २।६।५।४–५ मित्रं (चित्तं).

( २ ) कासं. ३८।४ (४८); मैसं. ३।११।८ (६६); शुसं. २०।७; तैब्रा. २।६।५।५.

( ३ ) कासं. ३८।४ (४९) श्रोणी (श्रोण्यौ); मैसं. ३।११।८ (६७) कासंवत्; शुसं. २०।८; तैब्रा. २।६।५।५ कासंवत्.

( १ ) कासं. ३८।४ (५०–५१) नन्दावा (नन्दा अ); मैसं. ३।११।८ (६८, ७०) नन्दावा (नन्दा आ) धर्मोऽस्मि (धीरोऽस्मि); शुसं. २०।९; तैब्रा. २।६।५।५–६.

पद्भ्यां च अहं धर्मोऽस्मि। उपलक्षणमेतत्, सर्वाङ्गैर्धर्मरूपोऽस्मि। धर्मरूपत्वादेव विशि प्रजायां राजा प्रतिष्ठितोऽस्मि। धर्मप्रतिष्ठितो हि राजा भवति। शुम.

**[1]प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु। प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन् प्रति प्राणेषु प्रति तिष्ठामि पुष्टे प्रति द्यावापृथिव्योः प्रति तिष्ठामि यज्ञे॥**

'कृष्णाजिनेऽवरोहति प्रति क्षत्र इति' (काश्रौ. १९।१०९)। आसन्दीतो यजमानः कृष्णाजिनेऽवतरति। अहं क्षत्रे प्रतितिष्ठामि क्षत्रियजातौ प्रतिष्ठायुक्तो भवामि। राष्ट्रे देशे, अश्वेषु, गोषु, अङ्गेषु करपादाद्यवयवेषु, आत्मन् आत्मनि चित्ते, प्राणेषु पञ्चसु, पुष्टे पुष्टौ समृद्धौ, द्यावापृथिव्योः स्वर्गेहलोकयोः, यज्ञे ज्योतिष्टोमादौ च प्रतितिष्ठामि। क्रियापदावृत्तिः फलातिशयद्योतनार्था। क्षत्रियदेशयोः प्रतिष्ठा वशीकरणम्, गोऽश्वप्रतिष्ठा तत्प्राप्तिः, प्राणाङ्गप्रतिष्ठा नीरोगत्वम्, आत्मप्रतिष्ठा निराधित्वम्, पुष्टप्रतिष्ठा धनसमृद्धिः, द्यावापृथिव्योः प्रतिष्ठा उभयलोककीर्तिः, यज्ञे प्रतिष्ठा यज्ञकरणम्। वश्यविश्वः पशुमान् निराधिव्याधिः श्रीमान् यज्ञकर्ता च भवेयमिति भावः। शुम.

राजसूये अभिषेचनीयेऽह्नि श्रोतव्यं शौनःशेपाख्यानम्

**[2]हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस। तस्य ह शतं जाया बभूवुः। तासु पुत्रं न लेभे। तस्य ह पर्वतनारदौ गृह ऊषतुः। स ह नारदं पप्रच्छ॥**

'उक्तं द्वात्रिंशदध्यायैः कर्म वर्णत्रयान्वितम्। अथ त्वष्टभिरध्यायैर्वर्ण्यते राजकर्तृकम्॥ तत्र क्रतौ राजसूये बह्विष्टिपशुसोमके। मध्येऽभिषेचनीयेऽह्नि शौनःशेपं श्रुतं श्रुतौ॥ त्रयस्त्रिंशोऽयमध्यायः शौनःशेपेतिनामवान्। हरिश्चन्द्रकथा तत्र कथिता बहुपुत्रदा॥ तदेतदुपाख्यानं दर्शयति– हरिश्चन्द्र इति। हरिश्चन्द्रो नाम राजर्षिः, 'प्रस्कण्वहरिश्चन्द्रावृषी' इति पाणिनिना सूत्रितत्वात्। स च वेधसो नृपतेः पुत्र इक्ष्वाकुवंशोद्भवो राजा पुत्रहीन आस। स च शतसंख्यानां जायानां मध्ये कस्यांचिदपि जायायां पुत्रं न लेभे। तस्य राज्ञो गृहे पर्वतनारदनामानौ यावृषी तौ निवासं चक्रतुः। तयोर्मध्ये नारदमृषिमेतया गाथया राजा पप्रच्छ। ऐब्रासा.

**यं न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न। किंस्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारदेति॥**

तां गाथां दर्शयति– यमिति। ये देवमनुष्यादयो विजानन्ति विवेकज्ञानयुक्ताः, ये च पश्वादयो न विजानन्ति विवेकज्ञानरहिताः, ते सर्वेऽपि नु क्षिप्रं यमिमं पुत्रमिच्छन्ति तेन पुत्रेण किंस्विद्विन्दते किं नाम फलं पिता लभते, हे नारद, मे मह्यं तत्फलमाचक्ष्वेति राज्ञः प्रश्नः। ऐब्रासा.

**स एकया पृष्टो दशभिः प्रत्युवाच॥**

तस्योत्तरमवतारयति– स इति। स नारदः एकया गाथया पृष्टः सन् दशभिर्गाथाभिः प्रत्युत्तरमुक्तवान्। ऐब्रासा.

**[3]ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति। पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्॥**

तत्र प्रथमां गाथामाह– ऋणमिति। उत्पन्नस्य सुखेन जीवतः पुत्रस्य मुखं पिता यदि पश्येत्तदानीमस्मिन् पुत्रे स्वकीयमृणं लौकिकं वैदिकं च संनयति सम्यगवस्थापयति। लौकिकस्यावस्थापनात् पुत्रपौत्रादिभिर्ऋणं प्रत्यर्पणीयमिति स्मृतिकारा आहुः। वैदिकं तु 'त्रिभिर्ऋणवा जायते' इत्यादिश्रुत्युक्तं पूर्वमेवोदाहृतम्। तस्य च पुत्रावस्थापनं संपत्तिनामकेन कर्मणा संपद्यते। तच्च कर्म वाजसनेयिभिराम्नातम्– 'अथातः संपत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति। स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति' (इति)। ब्रह्म मया कर्तव्यं वेदाध्ययनं मयाऽनुष्ठेया यज्ञाश्च मया संपाद्या उत्तमा लोकाश्चेत्येतत्सर्वं पुत्रेण त्वयैव संपादनीयमिति पितृवाक्य-

(१) कासं. ३८।४ (५१–५२); मैसं. ३।११।८ (७०–७१) (प्रति ब्रह्मन् प्रतितिष्ठामि क्षत्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु। प्रति प्रजायां प्रतितिष्ठामि पुष्टे प्रति प्राणेषु प्रतितिष्ठाम्यात्मन् द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे॥); शुसं. २०।१०; तैब्रा. २।६।५।६; हिगृ. २०।७।४.

(२) ऐब्रा. ३३।१–६.

स्यार्थः। सर्वमहं संपादयिष्यामीति पुत्रवाक्यस्य अर्थः। अत्रारण्यककाण्डे संक्षिप्य संदर्शयिष्यते– 'सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते' इति। एवमृणं पुत्रे समर्पयति। तथैवामृतत्वं मरणरहितं मुक्तिपदं च गच्छति, पुत्रार्पितलौकिकवैदिकभारस्याविघ्नेन तत्त्वज्ञानसंपादनात्। ऐब्रासा.

**यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि।**
**यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः॥**

द्वितीयां गाथामाह– यावन्त इति। पृथिव्यां भोगाः सस्यनिवासादयः। जातवेदसि अग्नौ भोगा दहनपचनादयः। अप्सु भोगाः स्नानपानादयः। प्राणिनामेते सर्वे भोगा यावन्तः सन्ति ततः तावद्भ्यः सर्वेभ्यो भोगेभ्यो भूयान् अभ्यधिकः पितुः पुत्रे भोगो विद्यते, अत्यन्तसुखहेतुत्वात्। तथा चाऽऽहुः– 'पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः' इति। ऐब्रासा.

**शश्वत्पुत्रेण पितरोऽत्यायन्बहुलं तमः।**
**आत्मा हि जज्ञ आत्मनः स इरावत्यतितारिणी॥**

तृतीयां गाथामाह– शश्वदिति। पितरः जनका उत्पन्नेन पुत्रेण शश्वत् सर्वदा लोकद्वयेऽपि बहुलं अभ्यधिकं तम ऐहिकमामुष्मिकं च दुःखं अत्यायन् अतिक्रामन्ति। तथा च बौधायन आह– 'पुदिति नरकस्याऽऽख्या दुःखं च नरकं विदुः। पुत्तस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च॥' इति। किंच, हि यस्मात्कारणात् पितुः पुत्र उत्पन्न इत्युक्ते सति पिता स्वस्मात् स्वयमेव जज्ञे उत्पन्न इत्युक्तं भवति। ततः पिता यथा स्वयं स्वकीयं दुःखं विनाशयति तथा पुत्रोऽप्येतद्दुःखं विनाशयतीति द्रष्टव्यम्। तस्मात्स पुत्र इरावती अन्नयुक्ता अतितारिणी नदीसमुद्रादेरतितरणहेतुर्नौरिति शेषः। यथा नौर्दुर्घटं नद्यादिकं तारयत्येवं पुत्रोऽप्यैहिकमामुष्मिकं च दुःखं तारयतीत्यर्थः। ऐब्रासा.

**किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः।**
**पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः॥**

चतुर्थीं गाथामाह– किमिति। अत्र मलाजिनश्मश्रुतपःशब्दैराश्रमचतुष्टयं विवक्षितम्। मलरूपाभ्यां शुक्लशोणिताभ्यां संयोगान्मलशब्देन गार्हस्थ्यं विवक्षितम्। कृष्णाजिनसंयोगादजिनशब्देन ब्रह्मचर्यं विवक्षितम्। क्षौरकर्मराहित्याच्छ्मश्रुशब्देन वानप्रस्थ्यं विवक्षितम्। इन्द्रियनियमसद्भावात्तपःशब्देन पारिव्राज्यं विवक्षितम्। मलं गार्हस्थ्यं किं नु किं नाम सुखं करिष्यति? न किंचिदित्यर्थः। एवमुत्तरत्रापि योज्यम्। हे ब्रह्माणः विप्राः विप्रक्षत्त्रियाद्याः, सर्वे यूयं सुखहेतुत्वात्पुत्रमिच्छध्वम्। स वै स एव पुत्रः अवदावदः लोकः। वदितुमयोग्यानि निन्दावाक्यानि अवदाः, तैर्वाक्यैर्नोद्यते न कथ्यते इत्यवदावदः, (एवं प्रपदेन तेन कथ्यत इति अवदावदः?) दोषराहित्यान्निन्दानर्ह इत्यर्थः। तादृशो लोको भोगहेतुः पुत्रः। तस्मादाश्रमेभ्योऽप्याधिक्येन पुत्रेच्छा कर्तव्या। यद्यपि हरिश्चन्द्र एवात्र प्रष्टा तथापि तेन सह ऋषीणां बहूनां सभायामवस्थानाद्ब्रह्माण इति संबोधनम्। ऐब्रासा.

**अन्नं ह प्राणः शरणं ह वासो**
**रूपं हिरण्यं पशवो विवाहाः।**
**सखा ह जाया कृपणं ह दुहिता**
**ज्योतिर्ह पुत्रः परमे व्योमन्॥**

पञ्चमीं गाथामाह– अन्नमिति। अन्नादयो लोके सुखहेतुत्वेन प्रसिद्धाः। तथाहि शरीरे प्राणावस्थितिहेतुत्वादन्नमेव प्राणः। वासः शीतोपद्रवाद्रक्षकत्वेन शरणं गृहसमानम्। हिरण्यं कर्णाभरणादिकं दृष्टिप्रियत्वाद्रूपसंपादकम्। पशवः गवाश्वादयः विवाहविशेषेण निर्वाहकाः। जाया भोगे सहकारित्वात् सखा ह सखिस्वरूपैव। एवमेते सुखहेतुत्वेन प्रसिद्धा अपि तात्कालिकमल्पमेव सुखं प्रयच्छन्ति। दुहिता ह पुत्रीति कृपणं केवलदुःखकारित्वाद्दैन्यहेतुः। तथा च स्मर्यते– 'संभवे स्वजनदुःखकारिका संप्रदानसमयेऽर्थहारिका। यौवनेऽपि बहुदोषकारिका दारिका हृदयदारिका पितुः॥' इति। पुत्रो ह पुत्रस्तु ज्योतिः स्वरूपं त (? पत) मोनिवारकत्वेन। स हि पितरं परमे व्योमन् उत्कृष्टे आकाशे परब्रह्मस्वरूपेऽवस्थापयति। 'आकाशस्तल्लिङ्गात्' इत्यनेन व्याससूत्रेणाऽऽकाशव्योमादिशब्दानां ब्रह्मपरत्वं निर्णीतम्।

पुत्रस्य च ब्रह्मज्ञानहेतुत्वं पूर्वमेव 'अमृतत्वं च गच्छति' इत्यत्र प्रतिपादितम्। ऐब्रासा.

**पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम्।**
**तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥**

षष्ठीं गाथामाह– पतिरिति। पत्युः आकारद्वयमस्ति, वर्तमानपुरुषाकार एकः, रेतोरूपेण गर्भाकारो द्वितीयः। जायाया अप्याकारद्वयमस्ति, पतिरूपमाकारं प्रति जाया भवति, गर्भरूपमाकारं प्रति माता भवति। अतः स तादृशः पतिः स्वयं रेतोरूपेण गर्भो भूत्वा पूर्वमवस्थितां जायां भविष्यदाकारेण मातरं सतीं प्रविशति। तस्यां मातरि पुनर्नवो भूत्वा। पूर्वमन्यस्यां मातर्युत्पन्नो जरठः, इदानीं पुनर्नूतनबालो भूत्वा तस्यां इदानींतन्यां अस्यां मातरि गर्भपाके सति दशमे मास्युत्पद्यते। तस्मात् पुत्रः स्वस्मादन्यो न भवति। ऐब्रासा.

**तज्जाया जाया भवति यदस्यां जायते पुनः।**
**आभूतिरेषा भूतिर्बीजमेतन्निधीयते ॥**

सप्तमीं गाथामाह– तदिति। यत् यस्मात्कारणात् अस्यां गर्भधारिण्यां अयं पिता पुत्ररूपेण पुनर्जायते तत् तस्मात्कारणाल्लोकप्रसिद्धा या जाया अस्ति सा जायतेऽस्यामिति व्युत्पत्त्या जायाशब्दवाच्या भवति। किंच एषा भूत्याभूतिशब्दाभ्याममभिधीयते। भवत्यस्यां पुत्ररूपेण पतिरिति एषा भूतिशब्दवाच्या, रेतोरूपेणाऽऽगत्य अस्यां पुत्ररूपेण भवतीति आभूतिशब्दवाच्या। एतदेतस्यां स्त्रियां बीजं रेतोरूपं निधीयते प्रक्षिप्यते तस्मादुक्ताः शब्दा उपपद्यन्ते। ऐब्रासा.

**देवाश्चैतामृषयश्च तेजः समभरन्महत्।**
**देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः ॥**

अष्टमीं गाथामाह– देवा इति। एतां एतस्यां योषिति देवाश्च महर्षयश्च स्वकीयं महत् तेजः रेतोरूपं सारं समभरन् पुत्रोत्पादनाय संपादितवन्तः। स्वयमेव संपाद्य ततो मनुष्यानित्यब्रुवन्– हे मनुष्याः, येयमिदानीं जायारूपेण वर्तते सेयं पुनर्वो युष्माकं पुत्ररूपे जन्मनि जननी भवति। ऐब्रासा.

**नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः।**
**तस्मात्पुत्रो मातरं स्वसारं चाधिरोहति ॥**

नवमीं गाथामाह– नेति। लोकः लोकजन्यं सुखं अपुत्रस्य नास्ति। नहि पुत्रदर्शनेन यत्सुखं तदन्यदर्शनेन क्वचिदपि दृश्यत इति यदस्ति तत् सर्वे गोमहिष्यादयो जानन्ति यस्मात्तस्मादेव कारणात् पशुजातौ जातः पुत्रो वत्सः स्वकीयां मातरं भगिनीं वा पुत्रोत्पादनार्थमधिरोहति। ऐब्रासा.

**एष पन्था उरुगायः सुशेवो**
**यं पुत्रिण आक्रमन्ते विशोकाः।**
**तं पश्यन्ति पशवो वयांसि च**
**तस्मात्ते मात्राऽपि मिथुनी भवन्ति ॥**

दशमीं गाथामाह– एष इति। पुत्रिणः पुत्रवन्तः देवमनुष्यादयः विशोकाः शोकरहिताः सन्तो यं पन्थानं सुखानुभवरूपं मार्गं आक्रमन्ते प्राप्नुवन्ति, एष पन्थाः पुत्रसुखानुभवरूपो मार्गः उरुगायः उरुभिः महद्भिः शास्त्रज्ञैः राजामात्यादिभिश्च गीयते। तथा सुशेवः सुष्ठु सेवितुं योग्यः, सुखाधिक्यस्य विद्यमानत्वात्। तं पुत्रसुखानुभवरूपं पशवः गवादयः वयांसि पक्षिणः संपश्यन्ति जानन्ति। तस्मात्ते पशुपक्ष्यादयः पुत्रसुखार्थं मात्रा सह मिथुनी भवन्ति, (किं?) किमुतान्यया स्त्रिया सहेत्यर्थः। ऐब्रासा.

**इति हास्मा आख्याय ॥**

नारदेनोक्तां दशमीं गाथां निगमयति– इतीति। ह अनेनैव प्रकारेण अस्मै तस्मै हरिश्चन्द्राय आख्याय उत्तरमभिधाय अवस्थित इति शेषः। ऐब्रासा.

**अथैनमुवाच– वरुणं राजानमुपधाव, पुत्रो मे जायतां, तेन त्वा यजा इति ॥**

पुत्रनिमित्तलाभप्रतिपादिका नारदोक्ता दश गाथा उदाहृत्य पुत्रजन्मोपायोपदेशपरं नारदवाक्यमवतारयति– अथेति। अथ पुत्रेच्छानिमित्तकथनानन्तरं एनं पुत्रार्थिनं हरिश्चन्द्रं नारद उवाच– हे हरिश्चन्द्र, वरुणं राजानमुपधाव प्रार्थयस्व। येन प्रकारेण निश्चयः सोऽभिधीयते– हे वरुण, त्वत्प्रसादान्मे पुत्रो जायतां, ततस्तेन पुत्रेण त्वां यजे त्वामुद्दिश्य यज्ञं करवाणीति। ऐब्रासा.

**तथेति । स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजा इति । तथेति । तस्य पुत्रो जज्ञे रोहितो नाम ॥**

प्रार्थनाप्रकारं नारदोपदेशं उक्त्वा हरिश्चन्द्रवृत्तान्तं दर्शयति— तथेतीति । नारदोपदेशमङ्गीकृत्य हरिश्चन्द्रो वरुणमुपससार प्रार्थयामास । स वरुणोऽपि तथाऽस्त्विति तदीयपुत्रोत्पत्त्यै वरं दत्तवान् । तेन च वरेणोत्पन्नस्य रोहित इत्येतन्नामाभूत् । ऐब्रासा.

**तं होवाच— अजनि वै ते पुत्रो यजस्व माऽनेनेति । स होवाच— यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति । निर्दशो न्वस्त्वथ त्वा यजा इति । तथेति ॥**

अथ बहुभिः पर्यायैर्वरुणस्योक्तिर्हरिश्चन्द्रस्य प्रत्युक्तिश्चेत्युभयं प्रतिपाद्यते । तत्र प्रथमं पर्यायं दर्शयति— तमिति । तं हरिश्चन्द्रं वरुण उवाच— हे हरिश्चन्द्र, ते पुत्रोऽजनि वै उत्पन्न एव, अनेन पुत्रेण मामुद्दिश्य यागं कुर्विति । एवं वरुणेनोक्ते हरिश्चन्द्रः पुनः प्रत्युवाच— यागार्थः पशुर्यदा निर्दशो भवति तदा स पशुर्मेध्यो यागयोग्यो भवति । निर्गतान्यशौचदिनानि दशसंख्याकानि यस्मात्पशोः सोऽयं निर्दशः । तस्मादयं नु क्षिप्रं निर्दशोऽस्तु । अथ अनन्तरं त्वा प्रति अहं यजे इति एतद्वाक्यं वरुणः तथाऽस्त्वित्यङ्गीचकार । ऐब्रासा.

**स ह निर्दश आस । तं होवाच— निर्दशो न्वभूद्यजस्व माऽनेनेति । स होवाच— यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति । दन्ता न्वस्य जायन्तामथ त्वा यजा इति । तथेति ॥**

द्वितीयमुक्तिप्रत्युक्तिपर्यायं दर्शयति— स इति । दशदिनाशौचापगमे शुद्धत्वाद्यथा यागयोग्यत्वं तथा दन्तोत्पन्नत्वादवयवसंपूर्त्या यागयोग्यत्वमित्यभिप्रायः । स्पष्टमन्यत् । ऐब्रासा.

**तस्य ह दन्ता जज्ञिरे । तं होवाच— अज्ञत वा अस्य दन्ता यजस्व माऽनेनेति । स होवाच— यदा वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति । दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति । तथेति ॥**

तृतीयं पर्यायं दर्शयति— तस्येति । अज्ञत वै जाता एव । पद्यन्ते पतन्ति । प्रथमोत्पन्नानां दन्तानामस्थायित्वेन मुख्यपशववयवत्वाभावात्तत्पाते सति पशोर्मेध्यत्वम् । ऐब्रासा.

**तस्य ह दन्ता पेदिरे । तं होवाच— अपत्सत वा अस्य दन्ता यजस्व माऽनेनेति । स होवाच— यदा वै पशोर्दन्ताः पुनर्जायन्तेऽथ स मेध्यो भवति । दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति । तथेति ॥**

चतुर्थं पर्यायं दर्शयति— तस्येति । अपत्सत वै पतिताः । पुनरुत्पन्नानां दन्तानां स्थिरत्वेन संपूर्णावयवत्वात् पशोर्मेध्यत्वम् । ऐब्रासा.

**तस्य ह दन्ताः पुनर्जज्ञिरे । तं होवाच— अज्ञत वा अस्य पुनर्दन्ता यजस्व माऽनेनेति । स होवाच— यदा वै क्षत्रियः सांनाहुको भवत्यथ स मेध्यो भवति । संनाहं नु प्राप्नोत्वथ त्वा यजा इति । तथेति ॥**

पञ्चमं पर्यायं दर्शयति— तस्येति । अज्ञत वै जाता एव । पश्वन्तरस्य पुनर्दन्तोत्पत्तिमात्रेण मेध्यत्वेऽप्यस्य पशोः क्षत्रियत्वात् स्वजात्युचितधनुर्बाणकवचादिसंनाहशीलित्वे सति जात्युचितव्यापारसंपूर्तौ मेध्यत्वम् । तस्मान्नु क्षिप्रमेवासौ संनाहं प्राप्नोतु अनन्तरमेव यजा इत्युत्तरं वरुणोऽङ्गीचकार । ऐब्रासा.

**स ह संनाहं प्रापत् । तं होवाच— संनाहं नु प्राप्नोद्यजस्व माऽनेनेति । स तथेत्युक्त्वा पुत्रमामन्त्रयामास—ततायं वै मह्यं त्वामददात्, हन्त त्वयाऽहमिमं यजा इति ॥**

षष्ठं पर्यायं दर्शयति— स इति । संनाहप्राप्तेरूर्ध्वं स हरिश्चन्द्रो वरुणोक्तिमङ्गीकृत्य पुत्रमामन्त्र्यैवमुवाच । उपलालनार्थं पुत्रे पितृवाचिततशब्दप्रयोगः । हे तत हे पुत्र, अयमेव वरुणो मह्यं त्वां पुत्रवरेण दत्तवान्, हन्त दुष्टोऽहमिमं वरुणं यत्त्वया पुत्रेण यजै यागरूपां पूजां करवाणीति हरिश्चन्द्रस्योक्तिः । ऐब्रासा.

**स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ। स संवत्सरमरण्ये चचार ॥**

अथ रोहितनाम्नः पुत्रस्य कृत्यं दर्शयति– स इति। स ह स खलु रोहिताख्यः पुत्रः पितुर्वाक्यं निषिध्य स्वरक्षणार्थं धनुः स्वीकृत्यारण्यं प्रत्युपगतोऽभूत्। कस्मिंश्चिदरण्ये नैरन्तर्येण स रोहितः संवत्सरं चचारेति।

ऐब्रासा.

**अथ हैक्ष्वाकं वरुणो जग्राह। तस्य होदरं जज्ञे। तदु ह रोहितः शुश्राव। सोऽरण्याद्ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच– नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम। पापो नृषद्वरो जन इन्द्र इच्चरतः सखा ॥ चरैवेति ॥**

रोहितस्य अरण्ये संवत्सरचरणानन्तरं( ? र )भाविनं हरिश्चन्द्रादीनां वृत्तान्तं दर्शयति– अथेति। अथ रोहितस्यारण्ये संवत्सरवासानन्तरमेव ऐक्ष्वाकं इक्ष्वाकुवंशोत्पन्नं हरिश्चन्द्रं वरुणो देवो रोगरूपेण जग्राह। वरुणेन गृहीतस्य हरिश्चन्द्रस्योदरं जज्ञे जलेन पूरितं उच्छूनं महोदरनामकं रोगस्वरूपमुत्पन्नम्। तदु ह तदपि सर्वमरण्ये स्थितो रोहितः पुत्रो मनुष्यमुखाच्छुश्राव। श्रुत्वा च स रोहितः पितरं द्रष्टुमरण्याद्ग्रामं प्रत्याजगाम। आगच्छन्तं रोहितं मार्गमध्ये इन्द्रः केनचिद्ब्राह्मणपुरुषरूपेण प्राप्येदमुक्तवान्– आ समन्तात् श्रान्तः आश्रान्तः सर्वत्र पर्यटनेन श्रान्तिं प्राप्तः, तद्विपरीतः अनाश्रान्तः एकत्रैव निवासशीलः, तादृशाय तथाविधस्य पुरुषस्य श्रीः बहुविधा संपन्नाऽस्ति। यद्वा 'नाना' इति पदच्छेदः। श्रान्ताय सर्वत्र पर्यटनेन श्रान्तस्य नाना श्रीः बहुविधा संपदस्ति इति अनेन प्रकारेण रोहित, वयं नीतिकुशलानां पुरुषाणां मुखाच्छुश्रुम। वरो जनः विद्यादिभिः श्रेष्ठोऽपि पुरुषो नृषत् पापः, नृषु मनुष्येषु सीदतीति नृषत्, श्रेष्ठोऽपि बन्धुगृहेषु सर्वदाऽवस्थितः तैरवज्ञातः पापः तुच्छो भवेत्। अतस्तव पितृगृहे वासो न युक्तः। न चारण्ये चरतो मम सहायो नास्तीति शङ्कनीयम्। इन्द्र एव परमेश्वर एव चरतस्तव सखा भविष्यति। तस्माच्चरैव सर्वथाऽरण्ये चरस्वेत्येवमुवाच। एवं बहुष्वपि पर्यायेषु द्रष्टव्यम्।

ऐब्रासा.

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह द्वितीयं संवत्सरमरण्ये चचार। सोऽरण्याद्ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच– पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः। शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥ चरैवेति ॥**

तत्रेन्द्ररोहितयोः संवादे प्रथमं पर्यायं दर्शयित्वा द्वितीयं पर्यायं दर्शयति– चरेति। ब्राह्मणरूपस्येन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येवं मामुक्तवानिति मनसि ब्राह्मणवाक्ये महान्तमादरं कृत्वा पुनरप्येकं संवत्सरमरण्ये चरित्वा पश्चात् पितरं द्रष्टुं ग्रामं तमागच्छन्तं पुनरपीन्द्रो ब्राह्मणरूपेणाऽऽगत्यैवमुवाच– चरतः पर्यटनं कुर्वतः पुरुषस्य जङ्घे पुष्पिण्यौ भवतः। यथा पुष्पयुक्तो वृक्षः शाखा ( ? पुष्पयुक्ता वृक्षशाखा ) लता वा ( अथवा ? ) सुगन्धोपेता सेव्या भवति, एवं चरतो जङ्घे श्रमजयेन सेव्ये भवतः। तथैव आत्मा मध्यदेहः भूष्णुः वर्धिष्णुः फलग्रहिः आरोग्यरूपफलयुक्तो भवति। यथा वर्धमानो वृक्षः कालेन फलानि गृह्णात्येवं चरतः पुरुषस्य बीजादिदीपनादिपाटवेन मध्यदेह आरोग्यरूपं फलं गृह्णाति। तथैवास्य चरतः पुरुषस्य सर्वे पाप्मानः सर्वपापानि प्रपथे प्रकृष्टे तीर्थक्षेत्रादिमार्गे श्रमेण तत्तद्देवतादिदर्शने तीर्थयात्रादिप्रयासेन हताः विनाशिताः सन्तः शेरे शेरते शयाना इव भवन्ति। यथा शयानाः पुरुषाः स्वकार्ये कृषिवाणिज्यादिकं कर्तुमशक्ताः एवं पुण्येन विनष्टाः पाप्मानो नरकं दातुमसमर्था इत्यर्थः। तस्मात्सर्वथाऽरण्ये चर, न पितुर्गृहेऽवतिष्ठस्व। ऐब्रासा.

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार। सोऽरण्याद्ग्राममेयाय। तमिन्द्रः पुरुषरूपेण पर्येत्योवाच– आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः। शेते निपद्यमानस्य चराति चरतो भगः ॥ चरैवेति ॥**

तृतीयं पर्यायं दर्शयति– चरेति। भगः सौभाग्यं आसीनस्य उपविष्टस्य आस्ते तथैव तिष्ठति, न तु वर्धते, अभिवृद्धिहेतोरुद्योगस्याभावात्। तिष्ठत उपवेशनं परित्यज्य उत्था( प ? )नं कुर्वतः पुरुषस्य भगः ऊर्ध्वः अभिवृद्धे-

रुन्मुखः तिष्ठति, कृषिवाणिज्याद्युद्योगस्य संभावितत्वात् । निपद्यमानस्य भूमौ शयानस्य भगः शेते निद्रां करोति विद्यमानधनरक्षादिचिन्ताया अप्यभावात् सर्वथैव विनश्यति । चरतः तेषु तेषु देशेषु अर्जनार्थं पर्यटनं कुर्वतः पुरुषस्य भगः सौभाग्यं चरति दिने दिने वर्धते । तस्मात् त्वं चरैवेति, न त्वेकत्र तिष्ठ । ऐब्रासा.

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार । सोऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच— कलिः शयानो भवति संजिहानस्तु द्वापरः । उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरन् ॥ चरैवेति ॥**

चतुर्थं पर्यायं दर्शयति— चरेति । चतस्रः पुरुषस्यावस्थाः, निद्रा तत्परित्यागः उत्थानं संचरणं चेति । ताश्चोत्तरोत्तरश्रेष्ठत्वात् कलिद्वापरत्रेताकृतयुगैः समानाः । ततश्चरणस्य सर्वोत्तमत्वाच्चरैवेति । ऐब्रासा.

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह पञ्चमं संवत्सरमरण्ये चचार । सोऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच— चरन्वै मधु विन्दति चरन्स्वादुमुदुम्बरम् । सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् ॥ चरैवेति ॥**

पञ्चमं पर्यायं दर्शयति— चरेति । चरन्नेव पुरुषः क्वचिद्वृक्षाग्रे मधु माक्षिकं लभते । क्वचित् स्वादु मधुरं उदुम्बरादिफलविशेषं लभते । एतदुभयमुपलक्षणम्, तत्र तत्र विद्यमानं भोगविशेषं लभते । तत्र सूर्यो दृष्टान्तः । यः सूर्यः सर्वत्र चरन्नपि न तन्द्रयते कदाचिदप्यलसो न भवति तस्य सूर्यस्य श्रेमाणं श्रेष्ठत्वं जगद्वन्द्यत्वं पश्य । तस्माच्चरैव । ऐब्रासा.

**चरैवेति वै मा ब्राह्मणोऽवोचदिति ह षष्ठं संवत्सरमरण्ये चचार । सोऽजीगर्तं सौयवसिमृषिमशनया परीतमरण्य उपेयाय ॥**

इत्थमिन्द्रकृतेन रोहितोपदेशेन चरतो रोहितस्य स्वजीवने पितुरारोग्ये च कारणभूतं श्रेयोलाभं दर्शयति— चरेति । षष्ठे संवत्सरे पूर्ववदरण्यसंचारी स ह रोहितः कंचिदृषिं तस्मिन्नरण्ये उपेयाय प्राप्तवान् । कीदृशमृषिम्? अजीगर्तनामकं सूयवसस्य पुत्रं अशनया परीतं अन्नालाभेन क्षुत्पीडितम् । ऐब्रासा.

**तस्य ह त्रयः पुत्रा आसुः शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति । तं होवाच— ऋषेऽहं ते शतं ददामि, अहमेषामेकेनाऽऽत्मानं निष्क्रीणा इति । स ज्येष्ठं पुत्रं निगृह्णान उवाच— न न्विममिति नो एवेममिति । कनिष्ठं माता । तौ ह मध्यमे संपादयांचक्रतुः शुनःशेपे । तस्य ह शतं दत्त्वा स तमादाय सोऽरण्याद्ग्राममेयाय ॥**

अथाजीगर्तरोहितयोः संवादं दर्शयति— तस्येति । तस्याजीगर्तस्य शुनःपुच्छादिनामकास्त्रयः पुत्रा आसुः । पुत्रवन्तमृषिं रोहित उवाच ह— ऋषे, ते तुभ्यं अहं गवां शतं ददामि । (* दत्त्वा चाहमेषां पुत्राणां मध्ये एकेन केनचित्पुत्रेणाऽऽत्मानं मद्देहं वरुणान्निष्क्रीणै मूल्यं दत्त्वा आत्मानं मोचयामीति । एवमुक्तः सोऽजीगर्तः) ज्येष्ठं पुत्रं शुनःपुच्छनामकं हस्तेन निगृह्णानः स्वसमीपे समाकर्षन् रोहितं प्रत्येवमुवाच— तुभ्यमेकः पुत्रो दीयते, इमं तु शुनःपुच्छं तु न ददामि, मम प्रियत्वादिति । ततो माता कनिष्ठं हस्तेन गृहीत्वैवमुवाच— इमं शुनोलाङ्गूलं मम प्रियं नो एव सर्वथा न ददामीति । ततस्तावुभौ मातापितरौ मध्यमे पुत्रे शुनःशेपे दानं संपादयांचक्रतुः अङ्गीकृतवन्तौ । ततस्तस्याजीगर्तस्य स रोहितो गवां शतं दत्त्वा तं शुनःशेपमादायावस्थितः । ततः स रोहितस्तेन शुनःशेपेन सहारण्यात्स्वकीयं ग्रामं प्रत्याजगाम । ऐब्रासा.

**स पितरमेत्योवाच— तत हन्ताहमनेनाऽऽत्मानं निष्क्रीणा इति । स वरुणं राजानमुपससारानेन त्वा यजा इति । तथेति । भूयान्वै ब्राह्मणः क्षत्रियादिति वरुण उवाच । तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच । तमेतमभिषेचनीये पुरुषं पशुमालेभे ॥**

---

* कंसस्थितो ग्रन्थः कुत्रापि पुस्तकेऽनुपलभ्यमानोऽप्यावश्यक इति आदर्शपुस्तकसंपादकेन स्वयं विरच्य प्रक्षिप्त इति तेनैव टिप्पणीरूपेण कथ्यते स्म ।

तदागमनादूर्ध्वकालीनं वृत्तान्तं दर्शयति– स इति। स रोहितः पितरमागत्यैवमुवाच– हे तत पितः, हन्त आवयोर्हर्षः संपन्नः। अहमनेन शुनःशेपरूपेण मूल्येनाऽऽत्मानं मद्देहं वरुणान्निष्क्रीणै मूल्यं दत्त्वाऽऽत्मानं मोचयामीत्यर्थः। तथोक्ते स हरिश्चन्द्रो वरुणमुपेत्यानेन शुनःशेपेन ब्राह्मणेन त्वा त्वां यक्ष्यामीत्युक्तवान्। स वरुणोऽपि तथेत्यङ्गीकृत्य एवमुवाच– क्षत्रियात् तव पुत्रात् रोहितादप्ययं ब्राह्मणो भूयान् अभ्यधिक एव मम प्रिय इति। उक्त्वा तस्मै हरिश्चन्द्राय कर्तव्यत्वेन राजसूयमुपदिदेश च। स हरिश्चन्द्रो राजसूयं प्रक्रम्य तस्य मध्ये योऽयमभिषेचनीयाख्य एकाहः सोमयागः तस्मिन् तमेतं शुनःशेपं पुरुषं पशुमालेभे सवनीयपशुत्वेनाऽऽलब्धुं निश्चितवान्। ऐब्रासा.

**तस्य ह विश्वामित्रो होताऽऽसीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गाता। तस्मा उपाकृताय नियोक्तारं न विविदुः। स होवाचाजीगर्तः सौयवसिः– मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति। तस्मा अपरं शतं ददुः। तं स निनियोज॥**

हरिश्चन्द्रस्य राजसूयानुष्ठानं दर्शयति– तस्येति। विश्वामित्रादयो महर्षयः तस्य हरिश्चन्द्रस्य यागे राजसूये होत्रादयश्चत्वारो महर्त्विज आसन्। तत्र जमदग्निरध्वर्युरभिषेचनीये सोमयागे तं शुनःशेपं सवनीयपशुत्वेनोपाकृतवान्। बर्हिर्युक्तया प्रक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीकार उपाकरणम्। तत ऊर्ध्वं यूपबन्धनं नियोजनम्। तस्य क्रूरकर्मत्वादध्वर्युर्न नियोजने प्रवृत्तः। तत उपाकृतायास्मै उपाकरणेन संस्कृतस्य शौ( ? शु )नःशेपस्य नियोक्तारं यूपे बन्धनकर्तारं क्रूरं कंचिदपि पुरुषं न विविदुः न लेभिरे। तदानीं सूयवसस्य पुत्रः शुनःशेपस्य पिता सोऽजीगर्तः ( उवाच– ) मह्यं पूर्वस्माच्छतादपरं गोशतं हे यजमानर्त्विजः, दत्त, ततोऽहमेनं शुनःशेपं यूपे नियोक्ष्यामि, रशनया कक्ष्यां शिरसि पादयोर्बद्ध्वा रशनाग्रस्य यूपे बन्धनं नियोजनं, तदहं करिष्यामीति। तस्मै अजीगर्ताय अपरं गोशतं ददुः। तं च शुनःशेपं सः अजीगर्तः निनियोज। धातोर्द्विर्भावं परित्यज्योपसर्गस्य द्विर्भावश्छान्दसः। ऐब्रासा.

**तस्मा उपाकृताय नियुक्तायाऽऽप्रीताय पर्यग्निकृताय विशसितारं न विविदुः। स होवाचाजीगर्तः सौयवसिः– मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति। तस्मा अपरं शतं ददुः। सोऽसिं निःशान एयाय॥**

अथ विशसनप्रवृत्तिं दर्शयति– तस्मा इति। उपाकरणनियोजने पूर्वमुक्ते। आप्रीसंज्ञिताभिरेकादशभिः प्रयाजयाज्याभिर्यद्यजनं तदाप्रीणनम्। दर्भरूपेणोल्मुकेन त्रिःप्रदक्षिणीकरणं तत् पर्यग्निकरणम्। तथाविधसंस्कारचतुष्टययुक्ताय तस्मै तस्य शुनःशेपस्य विशसितारं हिंसितारं पुरुषं क्रूरात्मानं कंचिदपि पुरुषं न लेभिरे। ततोऽजीगर्तः पूर्ववदपरं गोशतं गृहीत्वा मारयितुमसिं खड्गं निःशानो निशितं तीक्ष्णं कुर्वन्नेवेयाय जगाम। ऐब्रासा.

**अथ ह शुनःशेप ईक्षांचक्रे– अमानुषमिव वै मा विशसिष्यन्ति, हन्ताहं देवता उपधावामीति। स प्रजापतिमेव प्रथमं देवतानामुपससार 'कस्य नूनं कतमस्यामृतानाम्' इत्येतयर्चा॥**

पितुरजीगर्तस्य ( ? शुनःशेपस्य ) वृत्तान्तं दर्शयति– अथेति। अथ पितुः पुत्रमारणोद्योगानन्तरं शुनःशेपः पुत्रो मनस्येवमीक्षांचक्रे विचारितवान्– अन्यत्र 'पर्यग्निकृतं पुरुषमारण्यांश्चोत्सृजन्त्यहिंसायै' इति श्रुतेः पर्यग्निकरणादूर्ध्वं मनुष्यं परित्यजन्ति। एते तु मां अमानुषमिव मनुष्यव्यतिरिक्तमजादिपशुमिव विशसिष्यन्ति मारयिष्यन्ति। हन्त हा कष्टमेतत्संपन्नम्। अहमितः परं रक्षार्थं देवता उपधावामि भजामीति। विचार्य देवानां मध्ये प्रथमं मुख्यं प्रजापतिमेव 'कस्य नूनम्' ( ऋसं. १।२४।१ ) इत्यृचा उपससार सेवितवान्। ऐब्रासा.

**तं प्रजापतिरुवाच– अग्निर्वै देवानां नेदिष्ठः, तमेवोपधावेति। सोऽग्निमुपससार 'अग्नेर्वयं प्रथमस्यामृतानाम्' इत्येतयर्चा॥**

तस्य प्रजापतेः सहकारित्वेनाग्नेः सेवां दर्शयति– तमिति। तं सेवकं शुनःशेपं प्रजापतिरेवमुक्तवान्– अग्निः

सर्वेषां देवानां नेदिष्ठः हविर्वहनेन अतिसमीपवर्ती, अतस्तमेवोपास्स्व । इत्युक्तः शुनःशेपः 'अग्नेर्वयम्' (ऋसं. १।२४।२) इत्यृचा अग्निमुपासितवान् । ऐब्रासा.

**तमग्निरुवाच– सविता वै प्रसवानामीशे, तमेवोपधावेति । स सवितारमुपससार 'अभि त्वा देव सवितः' इत्येतेन तृचेन ॥**

तस्य चाग्नेः सहकारित्वेन सवितुरुपासनं दर्शयति– तमिति । प्रसवानां सर्वेषु कार्येषु प्रेरणारूपाणामनुज्ञानात् सविता ईशः स्वामी भवति । तस्मात्तमेवोपधावेत्यग्निनोपदिष्टः 'अभि त्वा' (ऋसं. १।२४।३–५) इति तृचेन सवितारमुपासितवान् । ऐब्रासा.

**तं सवितोवाच– वरुणाय वै राज्ञे नियुक्तोऽसि, तमेवोपधावेति । स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता ॥**

तस्य च सवितुः सहकारित्वेन वरुणस्योपासनं दर्शयति– तमिति । हे शुनःशेप, वरुणार्थे त्वं यूपे बद्धोऽसि, अतो वरुणं उपास्स्वेति सवित्रोक्तः पूर्वस्मात् सवितृविषयात् तृचात् उत्तराभिरेकत्रिंशत्संख्याकाभिर्ऋग्भिः वरुणमुपासितवान् । 'न हि ते क्षत्त्रम्' (ऋसं. १।२४।६–१५) इत्याद्याः सूक्तशेषभूता दशर्चः, 'यच्चिद्धि ते विशः' (ऋसं. १।२५।१–२१) इत्यादिकमेकविंशत्यृचं सूक्तमित्येवमेकत्रिंशत्संख्या द्रष्टव्या । ऐब्रासा.

**तं वरुण उवाच– अग्निर्वै देवानां मुखं सुहृदयतमः, तं नु स्तुहि, अथ त्वोत्स्रक्ष्याम इति । सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या ॥**

तस्य च वरुणस्य सहकारित्वेन पुनरप्यग्नेरुपासनं दर्शयति– तमिति । अयमग्निः सर्वेषां देवानां मुखं मुखस्थानीयः, अग्निद्वारेणैव सर्वैर्देवैर्हविःस्वीकारात् । अत एव प्रीत्या हविर्वहनादतिशयेन सुहृदयः । सुहृदयतमं तमग्निं नु क्षिप्रं स्तुहीति वरुणेनोक्तः पूर्वोक्ताभ्य ऋग्भ्य उत्तराभिर्द्वाविंशतिसंख्याकाभिर्ऋग्भिरग्निं तुष्टाव । 'वसिष्वा हि' (१।२६।१–१०) इत्यादिकं दशर्चं सूक्तम्, 'अश्वं न त्वा' (१।२७।१–१२) इत्यादिकं त्रयोदशर्चं सूक्तम् । तत्रान्त्यां परित्यज्य वसिष्व(१ष्वादि)सूक्तद्वयगता ऋचो द्वाविंशतिसंख्याकाः । ऐब्रासा.

**तमग्निरुवाच– विश्वान्नु देवान् स्तुहि, अथ त्वोत्स्रक्ष्याम इति । स विश्वान् देवांस्तुष्टाव 'नमो महद्भ्यो नमो अर्भकेभ्यः' इत्येतयर्चा ॥**

अग्नेः सहकारित्वेन विश्वेषां देवानामुपासनं दर्शयति– तमिति । यद्यपि वरुणपाशेन बद्धत्वाद्वरुण एव शुनःशेपमुत्स्रष्टुं समर्थस्तथाप्यग्न्यादीनां सहकारित्ववचनं दार्ढ्यार्थं द्रष्टव्यम् । विश्वे देवा गणरूपा न भवन्ति, किन्तु सर्वे देवाः, तान् 'नमो महद्भ्यः' (ऋसं. १।२७।१३) इत्येतयर्चोपासितवान् । ऐब्रासा.

**तं विश्वे देवा ऊचुः– इन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमः, तं नु स्तुहि, अथ त्वोत्स्रक्ष्याम इति । स इन्द्रं तुष्टाव 'यच्चिद्धि सत्य सोमपाः' इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभिः ॥**

तेषां च विश्वेषां देवानां सहकारित्वेनेन्द्रस्योपासनं दर्शयति– तमिति । ओजोबलादिशब्दाः पूर्वाचार्यैरेवं व्याख्याताः– 'ओजो दीप्तिर्बलं दाक्ष्यं प्रसह्यकरणं सहः । सुजनः सन् पारयिष्णुरुपक्रान्तसमाप्तिकृत् ॥' इति । इष्ठप्रत्ययतमप्प्रत्ययाभ्यां तत्र तत्रातिशय उच्यते । तादृशमिन्द्रं 'यच्चिद्धि सत्यसोमपाः' (ऋसं. १।२९।१–७) इत्यनेन सप्तर्चेन सूक्तेनोत्तरस्मिन्नपि 'आव इन्द्रम्' (ऋसं. १।३०।१–१५) इत्यादिके द्वाविंशत्यृचे सूक्ते पञ्चदशभिर्ऋग्भिश्च तुष्टाव । ऐब्रासा.

**तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ । तमेतया प्रतीयाय 'शश्वदिन्द्रः' इति ॥**

पूर्वमप्यनुग्रहेण चरैवेत्येवमिन्द्रो रोहितं प्रत्युपदिदेश । तस्योपदेशस्य फलपर्यवसायित्वमनुस्मरतस्तस्येन्द्रस्य शुनःशेपस्तुतौ प्रीत्यतिशयं दर्शयति– तस्मा इति । शुनःशेपेनेन्द्रः स्तूयमानः प्रीतो भूत्वा तस्मै शुनःशेपाय सुवर्णमयं दिव्यं रथं आरोहणार्थं स्वकीयेन मनसैव ददौ । शुनःशेपोऽपि तदीयमनुग्रहमवगत्य पूर्वोक्ताभ्यः पञ्चदशभ्यः

उत्तरया ' शश्वदिन्द्रः ' ( ऋसं. १।३१।१६ ) इत्येतयर्चा तं रथं प्रतीयाय मनसैव प्रतिजगाम। ऐब्रासा.

**तमिन्द्र उवाच– अश्विनौ नु स्तुहि, अथ त्वोत्स्रक्ष्याम इति। सोऽश्विनौ तुष्टावात उत्तरेण तृचेन ॥**

इन्द्रस्य सहकारित्वेनाश्विनोरुपासनं दर्शयति– तमिति। पूर्वोक्तायाः ' शश्वदिन्द्रः ' इत्यस्या उत्तरेण ' आश्विनावश्वावत्या ' ( १।३०।१७–१९ ) इति तृचेनाऽऽश्विनौ स्तुतवान्। ऐब्रासा.

**तमश्विना ऊचतुः– उषसं नु स्तुहि, अथ त्वोत्स्रक्ष्याम इति। स उषसं तुष्टावात उत्तरेण तृचेन ॥**

अश्विनोः सहकारित्वेनोषस उपास्तिं दर्शयति– तमिति। ' कस्त उषः ' ( १।३०।२०–२२ ) इत्यादिक उत्तरस्तृचः। ऐब्रासा.

**तस्य ह स्मर्च्यृक्तायां वि पाशो मुमुचे। कनीय ऐक्ष्वाकस्योदरं भवति। उत्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचे। अगद ऐक्ष्वाक आस ॥**

अथोक्तानां सर्वासां देवतानामनुग्रहेण शुनःशेपस्य बन्धमोक्षं हरिश्चन्द्रस्य आरोग्यं च दर्शयति– तस्येति। तस्य पूर्वोक्तस्य तृचस्य संबन्धिन्यामृच्यृच्येकैकस्यामृच्युक्तायां क्रमेण शुनःशेपस्य पाशो विमुमुचे विशेषेण मुक्तोऽभूत्। ऐक्ष्वाकस्य हरिश्चन्द्रस्य यन्महोदरं तदपि क्रमेण कनीयः अत्यल्पं भवति। उत्तमस्यामृच्युक्तायां पाशो विमुमुच एव सर्वात्मना मुक्तोऽभूत्। ऐक्ष्वाकोऽपि अगदः निःशेषेण रोगरहित आस। ऐब्रासा.

**तमृत्विज ऊचुः– त्वमेव नोऽस्याह्नः संस्थामधिगच्छेति। अथ हैतं शुनःशेपोऽञ्जःसवं ददर्श। तमेताभिश्चतसृभिरभिसुषाव ' यच्चिद्धि त्वं गृहेगृहे ' इति। अथैनं द्रोणकलशमभ्यवनिनाय ' उच्छिष्टं चम्वोर्भर ' इत्येतयर्चा। अथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवांचकार। अथैनमवभृथमभ्यवनिनाय ' त्वं नो अग्ने वरुणस्य विद्वान् ' इत्येताभ्याम्। अथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकार ' शुनश्चिच्छेपं निदितं सहस्रात् ' इति ॥**

बन्धनान्मुक्तस्य शुनःशेपस्योत्तरकालीनं वृत्तान्तं दर्शयति– तमिति। देवतानुग्रहयुक्तं तं शुनःशेपं विश्वामित्रादयः सर्वे ऋत्विज एवमूचुः– हे शुनःशेप, त्वमेव नः अस्माकं अस्याह्नोऽभिषेचनीयाख्यस्य संस्थां समाप्तिमधिगच्छ प्राप्नुहि, अनुष्ठापयेत्यर्थः। तैरेवमुक्ते सति अनन्तरं शुनःशेप एतं अभिषेचनीयाख्यं सोमयागं अञ्जःसवं ददर्श, अञ्जसा ऋजुमार्गेण सवः सोमाभिषवः यस्मिन् यागे सः अञ्जःसवः, तादृशं प्रयोगप्रकारं निश्चितवान्। निश्चित्य च तं सोमं ' यच्चिद्धि ' ( ऋसं. १।२८।५–८ ) इत्यादिभिश्चतसृभिर्ऋग्भिरभिषुतं कृतवान्। अथैनमभिषुतं सोममेतया ' उच्छिष्टं चम्वोः ' ( ऋसं. १।२८। ९ ) इत्यृचा द्रोणकलशमभिलक्ष्यावनिनाय द्रोणकलशे प्रक्षिप्तवान्। अथ अनन्तरं अस्मिन् हरिश्चन्द्रेऽन्वारब्धे शुनःशेपदेहमुपस्पृष्टवति सति उक्ताभ्य ऋग्भ्यः पूर्वाभिः ' यत्र ग्रावा ' ( ऋसं. १।२८।१–४ ) इत्यादिभिश्चतसृभिर्ऋग्भिः स्वाहाकारसहिताभिः सोमं जुहवांचकार। ' यत्र ग्रावा ' इत्यादिकं सूक्तं नवर्चं, तत्र यच्चिद्धि इति पञ्चमी, तामारभ्य चतसृभिर्ऋग्भिरभिषवः, ' उच्छिष्टम् ' इत्यादिका नवमी, तया द्रोणकलशे प्रक्षेपः, ' यत्र ग्रावा ' इत्यादिभिश्चतसृभिर्होम इत्येवं कृत्स्नस्य सूक्तस्य विनियोगः। अथ होमानन्तरमेव कर्तव्यमवभृथमभिलक्ष्य अवनिनाय सर्वमवभृथसाधनं तद्देशे नीत्वा 'त्वं नो अग्ने' ( ऋसं. ४।१।४–५ ) इत्यादिकाभ्यामृग्भ्यामवभृथयागं कृतवान्। अथ तथा कृत्वा तत ऊर्ध्वमेनमाहवनीयमग्निं ' शुनश्चित् ' ( ऋसं. ५।२।७ ) इत्यनयोपस्थापयांचकार हरिश्चन्द्रं उपस्थाने प्रेरयामास। सोऽयमञ्जःसवः, इष्टिपशुसांकर्यमन्तरेण अञ्जसा ऋजुमार्गेण अनुष्ठितत्वात्। ऐब्रासा.

**अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद। स होवाचाजीगर्तः सौयवसिः– ऋषे पुनर्मे पुत्रं देहीति। नेति होवाच विश्वामित्रः। देवा वा इमं मह्यमरासतेति। स ह देवरातो वैश्वामित्र आस। तस्यैते कापिलेयबाभ्रवाः ॥**

विश्वामित्राजीगर्तयोः कंचित्संवादं दर्शयति—अथेति । अथ अभिषेचनीयसमाप्तेरनन्तरं हरिश्चन्द्रसहितेष्वृत्विक्षु विस्मितेषु स शुनःशेप इत ऊर्ध्वं कस्य पुत्रोऽस्त्विति विचारे सति तदीयेच्छैव नियामिकेति महर्षीणां वचनं श्रुत्वा शुनःशेपः स्वेच्छया विश्वामित्रपुत्रत्वमङ्गीकृत्य सहसा तदीयमङ्कमाससाद । पुत्रो हि सर्वत्र पितुरङ्के निषीदति । तदानीं सूयवसपुत्रः अजीगर्तः विश्वामित्रं प्रत्येवमुवाच— हे महर्षे, मदीयपुत्रमेनं पुनरपि मह्यं देहीति । स विश्वामित्रो नेति निराकृत्यैवमुवाच— प्रजापत्यादयो देवा एवेमं शुनःशेपं मह्यमरासत दत्तवन्तः, तस्मात्तुभ्यं न दास्यामीति । स च शुनःशेपो देवैर्दत्तत्वात् देवरात इति नामधारी विश्वामित्रपुत्र एवाऽऽस । तस्य च देवरातस्यैते कपिलगोत्रोत्पन्ना बभ्रुगोत्रोत्पन्नाश्च बन्धवोऽभवन् । ऐब्रासा.

**स होवाचाजीगर्तः सौयवसिः— त्वं वेहि विह्वयावहा इति । स होवाचाजीगर्तः सौयवसिः— आङ्गिरसो जन्मनाऽस्याजीगर्तिः श्रुतः कविः । ऋषे पैतामहात्तन्तोर्माऽपगाः पुनरेहि माम् ॥ इति । स होवाच शुनःशेपः— अदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत । गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिरः ॥ इति ॥**

अथ शुनःशेपाजीगर्तयोः संवादं दर्शयति— स इति । विश्वामित्रेण निराकृतः सोऽजीगर्तः शुनःशेपं प्रत्येवमुवाच— हे पुत्र, त्वं वा त्वमेव विश्वामित्रादपगतः सन्निहि अस्मद्गृहे गच्छ । त्वदीयमाता चाहं चोभावावां विह्वयावहै विशेषेण तवाऽऽह्वानं करवावहै । इत्युक्त्वा तूष्णीमवस्थितं तं शुनःशेपं प्रति पुनरपि कयाचिद्गाथयैवमुवाच— हे शुनःशेप, त्वं जन्मना आङ्गिरसः अङ्गिरोगोत्रोत्पन्नः आजीगर्तिः अजीगर्तस्य पुत्रः कविः विद्वान् श्रुतः इत्येवं सर्वत्र प्रसिद्धः । अतो हे महर्षे शुनःशेप, पैतामहात् पितामहेन प्रजापतिना संपादितात्तन्तोः संतानात् अङ्गिरोवंशान्मा अपगाः अपगतो मा भव । तस्मात्पुनरपि मामेहि मद्गृहे समागच्छ । इत्युक्तः शुनःशेपः स्वयमपि गाथया प्रत्युत्तरं ददौ— शासः विशसनहेतुः खड्गः । हे अजीगर्त, मद्वधाय शासहस्तं खड्गहस्तं त्वां सर्वेऽप्यदर्शुः दृष्टवन्तः । यत्क्रूरं कर्म शूद्रेषु अत्यन्तनीचेष्वपि नालप्सत न लब्धवन्तः लौकिका जनाः तादृशं क्रौर्यं त्वया कृतम् । हे अङ्गिरः आङ्गिरसगोत्रोत्पन्न अजीगर्त, मत् मां निमित्तीकृत्य त्वं गवां शतानि त्रीण्यवृणीथा वृतवानसि । तदिदमत्यन्तकष्टं इत्युक्तवान् । ऐब्रासा.

**स होवाचाजीगर्तः सौयवसिः— तद्वै मा तात तपति पापं कर्म मया कृतम् । तदहं निह्नुवे तुभ्यं प्रतियन्तु शता गवाम् ॥ इति । स होवाच शुनःशेपः— यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम् । नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतम् ॥ इति ॥**

पुनरप्यजीगर्तशुनःशेपयोरुक्तिप्रत्युक्ती दर्शयति— स इति । शुनःशेपेनोपालब्धः अजीगर्तः स्वकीयमनुतापं दर्शयितुं कांचिद्गाथामेवमुवाच— हे तात पितृवदुपलालनीय शुनःशेप, मया यत्पापं कृतं तद्वै मा तपति तदेव मां मनसि संततं करोति । अहं तत्पापं निह्नुवे परिहरामि । गवां शतानि पूर्वं मया गृहीतानि त्रीणि यानि तानि तुभ्यं त्वदर्थं प्रतियन्तु प्रत्येकमेव प्राप्नुवन्तु । इतरयोः पुत्रयोर्गावो मा भूवन्, तवैव सर्वाः सन्त्विति । ततः स शुनःशेपो गाथया प्रत्युत्तरं ददौ— यः पुमान् धर्मशास्त्रभीतिरहितः सकृत्पापकं कुर्यात् स पुमान् ततः पापात् अन्यत् एनत् पापं तदभ्यासवशात् कुर्यादेव । त्वं तु शौद्रान्न्यायात् नीचजातिसंबन्धिनः क्रूरादाचरणान्न अपागाः अपगतो न भवसि । असंधेयं प्रतिसंधानरहितं पापं त्वया कृतम् । इत्येषा शुनःशेपस्य प्रत्युक्तिः । ऐब्रासा.

**असंधेयमिति ह विश्वामित्र उपपपाद । स होवाच विश्वामित्रः— भीम एव सौयवसिः शासेन विशिशासिषुः । अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रताम् ॥ इति ॥**

अथ विश्वामित्रकृत्यं दर्शयति— असंधेयमिति । असंधेयं अप्रतिसमाधेयं पापमिति शुनःशेपेन यदीरितं तदेतदप्रतिसमाधेयत्वं विश्वामित्र उपपपाद युक्तिभिरुपपादितवान् ।

तदुपपादनार्थमेव विश्वामित्र इमां गाथामुवाच– सूयवसस्य पुत्रोऽजीगर्तः भीम एव भयहेतुरेव सन् शासेन हस्तगत-खड्गेन स विशिशासिषुः अस्थात् विशसनकर्तुमिच्छुः अवस्थितवान् । अतो हे शुनःशेप, एतस्य पापिष्ठस्य पुत्रो मा भूः, किंतु ममैव पुत्रतामुपेहि । ऐब्रासा.

**स होवाच शुनःशेपः– स वै यथा नो ज्ञपयाऽऽ राजपुत्र तथा वद । यथैवाऽऽङ्गिरसः सन्नुपेयां तव पुत्रताम् ॥ इति । स होवाच विश्वामित्रः– ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात् । उपेया दैवं मे दायं तेन वै त्वोपमन्त्रये ॥ इति ॥**

अथ शुनःशेपविश्वामित्रयोरुक्तिप्रत्युक्ती दर्शयति– स इति । विश्वामित्रेणैवं बोधितः शुनःशेपः पुनरपि गाथया विश्वामित्रं प्रत्येवमुवाच । अयं विश्वामित्रो जन्मना क्षत्रियः सन् स्वकीयेन तपोमहिम्ना ब्राह्मण्यं प्राप्तवानित्येवं तद्वृत्तान्तं सूचयितुं हे राजपुत्रेति संबोधितवान् । स वै तथाविधो राजजातीय एव सन् यथा येन प्रकारेण नः अस्माभिः सर्वैः आ समन्तात् ज्ञपय ब्राह्मणत्वेन ज्ञायसे तथैवास्मद्विषयेऽपि त्वं वद । कथं वदितव्यमिति तदुच्यते– अहमिदानीमङ्गिरोगोत्रः सन् तत्परित्यागेन तव पुत्रत्वं येनैव प्रकारेणोपेयां तथैवानुगृहाणेति शेषः । एतद्वाक्याभिप्रायः पूर्वैः संक्षिप्य दर्शितः– 'पुराऽऽत्मानं नृपं विप्र (? प्रं) तपसा कृतवानसि । एवमाङ्गिरसं मा त्वं वैश्वामित्रमृषे कुरु ॥' इति । ततो विश्वामित्रो गाथया प्रत्युत्तरमुक्तवान्– हे शुनःशेप, त्वं मे पुत्राणां मध्ये ज्येष्ठः स्याः ज्येष्ठो भव । तव पुत्रादिरूपा प्रजाऽपीतरस्याः श्रेष्ठा स्यात् । मे मह्यं विश्वामित्राय दैवं देवैः प्रसन्नैर्दत्तं दायं पुत्रत्वरूपं लाभमुपेयाः प्राप्नुहि । तेन वै तेनैव प्रकारेण त्वा उपमन्त्रये त्वां पुत्रत्वेन व्यवहरामि । ऐब्रासा.

**स होवाच शुनःशेपः– संज्ञानानेषु वै ब्रूयात्सौहार्दाय मे श्रियै । यथाऽहं भरतऋषभोपेयां तव पुत्रताम् ॥ इति । अथ ह विश्वामित्रः पुत्रानामन्त्रयामास– मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः । ये के च भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्वम् ॥ इति ॥**

पुनरपि शुनःशेपविश्वामित्रयोर्वृत्तान्तं दर्शयति– स इति । विश्वामित्रेण प्रलोभितः शुनःशेपः स्वकार्यदाढर्यार्थं गाथयैवमुवाच–संज्ञानानेषु मद्विषयैकमत्यं प्राप्तेषु त्वदीयपुत्रेषु ( स )र्वोऽपि मां ब्रूयात् ज्येष्ठभ्रातृत्वेन व्यवहरतु । तच्च मे मम सौहार्दाय भ्रातृभिरितरैः स्नेहातिशयाय श्रियै धनलाभाय च संपद्यते । हे भरतऋषभ भरतवंशश्रेष्ठ विश्वामित्र, अहं तव पुत्रतां यथोपेयां तथैवैतेषां पुत्राणामग्रेऽनुगृहाणेति शेषः । ततो विश्वामित्र इतरान् पुत्रानाहूय गाथयैवमाज्ञापितवान्– यो मधुच्छन्दा नाम यश्चर्षभो योऽपि रेणुर्योऽप्यष्टक एते मुख्या हे पुत्रकाः, शृणोतन मदीयामाज्ञां शृणुत, केचिद्यूयं सर्वे भ्रातरः स्थ ते सर्वेऽप्यस्मै शुनःशेपादस्मादपि ज्यैष्ठ्याय न कल्पध्वं ज्येष्ठत्वाभिमानं मा कुरुत, किंत्वसावेव युष्माकं मध्ये ज्येष्ठो भूत्वाऽवतिष्ठतामिति । ऐब्रासा.

**तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः । पञ्चाशदेव ज्यायांसो मधुच्छन्दसः । पञ्चाशत्कनीयांसः ॥**

अथ विश्वामित्रपुत्राणां वृत्तान्तमाह– तस्येति । मधुच्छन्दोनामकः कश्चित् पुत्रो मध्यमः, ततोऽपि ज्येष्ठाः कनिष्ठाश्च प्रत्येकं पञ्चाशत्संख्याका इत्येवमेकशतं तस्य पुत्राः । ऐब्रासा.

**तद्ये ज्यायांसो न ते कुशलं मेनिरे । ताननु व्याजहार– अन्तान्वः प्रजा भक्षीष्टेति । त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो वैश्वामित्रा दस्यूनां भूयिष्ठाः ॥**

तेषां मध्ये ज्येष्ठानां वृत्तान्तमाह– तदिति । तत् तेष्वेकशतसंख्याकेषु पुत्रेषु मध्ये ये मधुच्छन्दसो ज्येष्ठाः पञ्चाशत्संख्याकाः सन्ति ते शुनःशेपस्य विश्वामित्रपुत्रत्वं कुशलं न मेनिरे इदं समीचीनमित्येवं नाङ्गीकृतवन्तः । तान् ज्येष्ठान् पञ्चाशत्संख्याकाननुलक्ष्य विश्वामित्रो व्याजहार व्याहरणं शापरूपं वाक्यमुक्तवान्– हे ज्येष्ठपुत्राः, युष्माकं मदीयाज्ञातिलङ्घिनां प्रजाः पुत्रादिका अन्तान्भक्षीष्ट चण्डालादिरूपान्नीचजातिविशेषान् भजतामिति । त एते शप्ताः सन्तोऽन्ध्रत्वादिपञ्चविधनीचजातिविशेषाः

भवन्ति । इतिशब्दस्य तत्प्रदर्शनार्थत्वादन्येऽपि नीचजातिविशेषाः सर्वे विवक्षिताः । उद्गतः अन्तः उदन्तः अत्यन्तनीचजातिः, तत्र भवाः उदन्त्याः । ते बहवः अनेकविधा वैश्वामित्रा विश्वामित्रसंततिजा दस्यूनां तस्कराणां मध्ये भूयिष्ठाः अत्यधिकाः । ऐब्रासा.

**स होवाच मधुच्छन्दाः पञ्चाशता सार्धम्—**
**यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् ।**
**पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसि ॥**
**इति ॥**

ज्येष्ठानां वृत्तान्तमुक्त्वा मधुच्छन्दसस्तत्कनिष्ठानां च वृत्तान्तं गाथया दर्शयति— स इति । कनिष्ठपुत्राणां पञ्चाशता सह मधुच्छन्दोनामकः स मध्यमः पुत्रः शुनःशेपं प्रत्येवमुवाच— हे शुनःशेप, नः अस्माकं पिता विश्वामित्रो यत्कार्यं त्वदीयज्येष्ठपुत्रत्वरूपं संजानीते सम्यग्जानाति अङ्गीकरोति, तस्मिन् कार्ये वयं तिष्ठामहे तत्कार्यमङ्गीकुर्मः । सर्वे वयं त्वा शुनःशेपनामानं त्वां पुरस्कुर्महे पुरस्कृत्य ज्येष्ठं कृत्वा वर्तामहे । त्वामन्वञ्चः शुनशेपमनुगच्छन्तः स्मसि भवामः इत्युक्तवान् । ऐब्रासा.

**अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव ॥**

विश्वामित्रवृत्तान्तं दर्शयति— अथेति । अथ मधुच्छन्दःसहितानां पञ्चाशत्कनिष्ठपुत्राणां शुनःशेपविषयज्येष्ठपुत्रत्वाङ्गीकारानन्तरं स विश्वामित्रः प्रतीतः तेषु प्रत्ययं मदनुकूला इति विश्वासं प्राप्तः प्रीत्या पुत्रान् गाथाभिस्तुष्टाव । ऐब्रासा.

**ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ ।**
**ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा ॥**

तत्र प्रथमां गाथामाह— त इति । हे मधुच्छन्दःप्रमुखाः कनिष्ठपुत्राः, ये यूयं मे मानं मदीयं मतं अनुगृह्णन्तः आनुकूल्येन स्वीकुर्वन्तः मां विश्वामित्रं वीरवन्तं स्वधर्मशूरपुत्रयुक्तं अकर्त कृतवन्तः ते वै तादृशा यूयं बहुविधपुत्र( ? पशु )युक्ता बहुविधानुकूलपुत्र( ? शूरपुत्र )युक्ताश्च भविष्यथ । ऐब्रासा.

**पुर एत्रा वीरवन्तो देवरातेन गाथिनाः ।**
**सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनम् ॥**

द्वितीयां गाथामाह— पुर इति । गाथिनशब्दो विश्वामित्रस्य पितरमाचष्टे । हे गाथिनाः गाथिपौत्राः, पुर एत्रा युष्माकं पुरतो गन्त्रा मुख्येन देवरातेन सह यूयं सर्वे वीरवन्तः श्रेष्ठपुत्रयुक्ता राध्याः स्थ सर्वैः पुरुषैराराधनीयाः पूज्या भवथ । हे पुत्राः मधुच्छन्दःप्रभृतयः, एष देवरातः वः युष्माकं सद्विवाचनं सन्मार्गस्य विशेषतोऽध्यापनं करिष्यतीति शेषः । ऐब्रासा.

**एष वः कुशिका वीरो देवरातस्तमन्वित ।**
**युष्मांश्च दायं म उपेता विद्यां यामु च विद्मसि ॥**

तृतीयां गाथामाह— एष इति । हे कुशिकाः कुशिकनाम्नो मत्पितामहस्य संबन्धिनः मधुच्छन्दःप्रभृतयः, एष देवरातः वः युष्माकं ज्येष्ठभ्रातेति शेषः । तं देवरातं यूयं अन्वित अनुगता भवत । मे मदीयं दायं धनं युष्मांश्चोपेता प्राप्स्यति । चकाराद्देवरातं च । यामु च यामपि कांचिद्वेदशास्त्रादिरूपां विद्यां विद्मसि वयं जानीमः साऽपि युष्मानुपेता प्राप्स्यति । ऐब्रासा.

**ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः ।**
**देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः ॥**

चतुर्थीं गाथामाह— त इति । हे वैश्वामित्राः विश्वामित्रस्य मम पुत्राः, ये गाथिनाः गाथिपौत्राः ते यूयं सर्वेऽपि सम्यञ्चः समीचीनबुद्धयः ये साकं देवरातेन सार्धं सरातयः रातिः धनसंपत्तिः तया युक्ताः सन्तः देवराताय मदीयश्रेष्ठपुत्रस्य देवरातस्य धृत्यै धारणं युष्मत्पोषणं श्रैष्ठ्याय युष्माकं मध्ये श्रेष्ठत्वं च तस्थिरे अङ्गीकृतवन्तः । ऐब्रासा.

**अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः ।**
**जह्नूनां चाऽऽधिपत्ये दैवे वेदे च गाथिनाम् ॥**

पञ्चमीं गाथामाह— अधीयतेति । 'इक् स्मरणे' इति धातुः । अधीयत स्मृतिकारैर्महर्षिभिः स्मर्यते । कथमिति तदुच्यते— अयं देवरातः द्व्यामुष्यायणत्वादुभयोरजीगर्तविश्वामित्रयोः संबन्धिनी ये रिक्थे धने तयोर्ऋषिः द्रष्टा । तदुभयमर्हतीत्यर्थः । अजीगर्तस्य कूटस्थ ऋषिर्जह्नुसंज्ञकः, तस्य वंशे जाताः सर्वे जह्नवः, तेषां चाधिपत्ये स्वामित्वे देवरातो योग्यः । तथा दैवे

देवसंबन्धिनि यागादिकर्मणि वेदे च मन्त्ररूपे समर्थः । गाथिनां अस्मत्पितृवंशोत्पन्नानां च सर्वेषामाधिपत्ये योग्यः । ऐब्रासा.

**तदेतत्परऋक्शतगाथं शौनःशेपमाख्यानम् ॥**

उक्तमुपाख्यानमुपसंहरति– तदिति । 'कस्य नूनम्' (इत्यादयः) 'निधारय' इत्यन्ताः सप्ताधिकनवतिसंख्याका ऋचः, 'त्वं नः, स त्वम्' इत्यादिकास्तिस्र ऋचः, एवमृचां शतम् । परःशब्दोऽधिकवाची । पूर्वोक्तादृक्शतात्परः अधिकाः एकत्रिंशत्संख्याकाः 'यं न्विमम्' इत्याद्या गाथा यस्मिन्नाख्याने तदेतत्परऋक्शतगाथम् । शुनःशेपेन दृष्टाः सप्ताधिकनवतिसंख्यायुक्ता ऋचो याः सन्ति, अन्येन दृष्टास्तिस्र ऋचो याः सन्ति, ब्राह्मणे प्रोक्ता एकत्रिंशद्गाथाविशेषा ये सन्ति, तैः सर्वैरुपेतं 'हरिश्चन्द्रो ह वैधसः' इत्यादिकं सर्वं शुनःशेपविषयमाख्यानम् । ऐब्रासा.

**तद्धोता राज्ञेऽभिषिक्तायाऽऽचष्टे ॥**

तस्याऽऽख्यानस्य राजसूयक्रतौ विनियोगं दर्शयति– तदिति । राजसूयक्रतौ अभिषेचनीयाख्ये कर्मणि यदा राजाऽभिषिक्तो भवति तदानीं तस्मै राज्ञे तदाख्यानं होता कथयेत् । ऐब्रासा.

**हिरण्यकशिपावासीन आचष्टे । हिरण्यकशिपावासीनः प्रतिगृह्णाति । यशो वै हिरण्यम् । यशसैवैनं तत्समर्धयति ॥**

तत्रेतिकर्तव्यं दर्शयति– हिरण्येति । होता यदोपाख्यानं कथयति तदानीं हिरण्यकशिपौ सुवर्णनिर्मितसूत्रैर्निष्पादिते कशिपौ स होतोपविशेत् । तदाख्यानमध्येऽध्वर्युश्च हिरण्यकशिपावासीनो वक्ष्यमाणं प्रतिगरं ब्रूयात् । हिरण्यस्य यशोहेतुत्वाद्यशस्त्वम् । तथा सति एनं राजानं यशसैव समृद्धं करोति । ऐब्रासा.

**ओमित्यृचः प्रतिगरः । एवं तथेति गाथायाः । ओमिति वै दैवम् । तथेति मानुषम् । दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुञ्चति ॥**

अध्वर्युणा प्रयोक्तव्यं प्रतिगरविशेषं दर्शयति– ओमिति । होत्रा प्रयुक्ताया एकैकस्या ऋचोऽन्तेऽध्वर्योः 'ओम्' इत्येतादृशः प्रतिगरो भवति । ओमित्येतच्छन्दोरूपं दैवं देवैरङ्गीकारार्थे प्रयुज्यते । तत्तथेत्यन्तं (? तथेति) मानुषं मनुष्या अङ्गीकारे तथेतिशब्दं प्रयुञ्जते । तत् तेन प्रतिगरेण दैवेन मानुषेण चाध्वर्युरेनं राजानं पापात् ऐहिकात् अपकीर्तिरूपात् एनसो नरकहेतोश्च प्रमुञ्चति प्रमुक्तं करोति । ऐब्रासा.

**तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानम् । न हास्मिन्नल्पं चनैनः परिशिष्यते ॥**

क्रत्वर्थत्वेनोपाख्यानं विधाय क्रतुनिरपेक्षपुरुषार्थत्वेन विधत्ते– तस्मादिति । यस्मादुपाख्यानं पापप्रशमनहेतुस्तस्मादयजमानोऽपि राजसूयक्रतुरहितोऽपि राजा विजिती यदि विजयोपेतः स्यात्तदानीमेतच्छौनःशेपमाख्यानमाख्यापयेत । तस्य राज्ञो यः कश्चिद्ब्राह्मण उपाख्यानं ब्रूयात् । तथा सति तस्मिन् राजनि अल्पं चन किंचिदप्येनः पापं न ह वै परिशिष्यते । सर्वं पापं नश्यतीत्यर्थः । ऐब्रासा.

**सहस्रमाख्यात्रे दद्यात् । शतं प्रतिगरित्रे । एते चैवाऽऽसने । श्वेतश्चाश्वतरीरथो होतुः ॥**

आख्यानप्रयुक्तां दक्षिणां विधत्ते– सहस्रमिति । योऽयमाख्याता होता तस्मै क्रत्वर्थदक्षिणामन्तरेण उपाख्यानप्रयुक्तां दक्षिणां गोसहस्ररूपां दद्यात् । प्रतिगरित्रे अध्वर्यवे गोशतं दद्यात् । ये हिरण्यकशिपूरूपे द्वे आसने स्तः एते अपि ताभ्यामेव दद्यात् । अश्वतरीभ्यां संकीर्णजातियुक्ताभ्यामधिकशक्तिभ्यां युक्तो रथः अश्वतरीरथः । स च रजतेनालङ्कृतत्वात् श्वेतः । सोऽपि तादृशो होतुर्देयः । ऐब्रासा.

**पुत्रकामा हाप्याख्यापयेरन् । लभन्ते ह पुत्राँल्लभन्ते ह पुत्रान् ॥**

पूर्वमयज्ञसंयुक्तः कल्पो विजयिनो राज्ञोऽभिहितः । इदानीं पुत्रकामानां (अपि ?) सर्वेषामपि विधत्ते– पुत्रकामा इति । ये पुत्रकामाः सन्ति ते ह प्रसिद्धमेतदुपाख्यानं आख्यापयेरन् ब्राह्मणमुखाच्छृणुयुरित्यर्थः । ते पुत्राँल्लभन्ते । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ।

ऐब्रासा.

क्षत्रियकर्तृको होमः

[1]प्रजापतिर्यज्ञमसृजत । यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम् । ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त हुतादश्चाहुतादश्च । ब्रह्मैवानु हुतादः क्षत्रमन्वहुतादः । एता वै प्रजा हुतादो यद्ब्राह्मणाः । अथैता अहुतादो यद्राजन्यो वैश्यः शूद्रः ॥

'शौनःशेपप्रसङ्गेन याः क्रिया राजकर्तृकाः । तद्विशेषविधानार्थमध्यायोऽत्र प्रवक्ष्यते ॥' तत्राऽऽदौ किंचिदुपाख्यानमाह— प्रजापतिरिरिति । पुरा प्रजापतिर्ज्योतिष्टोमाख्यं यज्ञं सृष्ट्वा तदनन्तरं ब्राह्मणक्षत्रियजातिद्वयं तत ऊर्ध्वं हुतादश्चाहुतादश्चेत्युभयविधाः प्रजा असृजत । तत्र ब्राह्मणजातिमेवानु तद्व्यक्तिभूता हुतादः सृष्टाः । क्षत्रियजातिमनु तद्व्यक्तिसजातीया अहुतादः प्रजाः सृष्टाः । ये ब्राह्मणाः सन्ति एताः प्रजा आर्त्विज्यसद्भावात् हुतशेषं अदन्ति भक्षयन्तीति हुतादः । ये राजन्यवैश्यशूद्राः एताः प्रजा आर्त्विज्याभावाद्धुतशेषं न भक्षयन्तीति अहुतादः । इत्थं यज्ञं चतुरो वर्णांश्च स प्रजापतिः सृष्टवान् । ऐब्रासा.

ताभ्यो यज्ञ उदक्रामत् । तं ब्रह्मक्षत्रे अन्वैताम् । यान्येव ब्रह्मण आयुधानि तैर्ब्रह्मान्वैत् । यानि क्षत्रस्य तैः क्षत्रम् । एतानि वै ब्रह्मण आयुधानि यद्यज्ञायुधानि । अथैतानि क्षत्रस्याऽऽयुधानि यदश्वरथः कवच इषुधन्वे ॥

अथ सृष्टस्य यज्ञस्य वृत्तान्तमाह— ताभ्य इति । स यज्ञः ताभ्यः प्रजाभ्योऽपरक्त उत्क्रम्य दूरेऽगच्छत् । तं गच्छन्तं यज्ञं ब्राह्मणजातिक्षत्रियजाती द्वे अन्वैतां पश्चादगच्छताम् । ब्राह्मणस्य योग्यानि यान्यायुधानि तैः सह क्षत्रिय( ? ब्राह्मण )जातिर्यज्ञमन्वगच्छत् । क्षत्रियस्य योग्यानि यान्यायुधानि तैः सह क्षत्रियजातिर्यज्ञमन्वगच्छत् । यानि यज्ञायुधत्वेन शाखान्तरे श्रूयन्ते— 'स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्यां ( ? म्या ) चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि' इति, तान्येव ब्राह्मणजातेरुचितान्यायुधानि । योऽयमश्वयुक्तो रथो यश्च कवचो यदपि बाणयुक्तं धनुरेतान्यपि क्षत्रियजातेरुचितान्यायुधानि । ऐब्रासा.

(१) ऐब्रा. ३४।१—८.

तं क्षत्रमनन्वाप्य न्यवर्तत । आयुधेभ्यो ह स्मास्य विजमानः पराङेवैति । अथैनं ब्रह्मान्वैत् । तमाप्नोत् । तमाप्त्वा परस्तान्निरुध्यातिष्ठत् । स आप्तः परस्तान्निरुद्धस्तिष्ठञ्ज्ञात्वा स्वान्यायुधानि ब्रह्मोपावर्तत । तस्माद्धाप्येतर्हि यज्ञो ब्रह्मण्येव ब्राह्मणेषु प्रतिष्ठितः ॥

यज्ञमनुगच्छन्त्योर्ब्राह्मणक्षत्रियजात्योर्मध्ये ब्राह्मणजातेर्यज्ञप्राप्तिं दर्शयति— तमिति । क्षत्रं क्षत्रियजातिः तं यज्ञमनन्वाप्य अनुगमनेन प्राप्तिमलब्ध्वा तस्मादनुगमान्न्यवर्तत । यज्ञोऽस्य क्षत्रियस्याऽऽयुधेभ्यो धनुरादिभ्यो विजमानो भीतिं प्राप्नुवन् पराङेव पुनरावृत्तिरहित एव एति स्म पलाय्य दूरे गतः । अथ अनन्तरं एवं( ? नं ) यज्ञं ब्रह्म ब्राह्मणजातिः अन्वैत् अन्वगच्छत् । अनुगम्य च तं यज्ञमाप्नोति स्म । आप्त्वा च तं यज्ञमतिक्रम्य परस्तात् परभागे निरुध्य यज्ञगमनं प्रतिबु(? ब )ध्यातिष्ठत् । ( अत्र ? ) यज्ञ आप्तस्तथा ब्राह्मणजात्या प्राप्तः परस्तात् परभागे निरुद्धो गमनात्प्रतिबद्धस्तत्रैव तिष्ठन् ब्राह्मणस्य हस्ते स्फ्यकपालादीनि स्वकीयान्यायुधानि ज्ञात्वा ब्राह्मणजातिं प्रति उपावर्तत समीपे आगच्छत् । यस्मादेवं तस्मादिदानीमपि यज्ञो ब्रह्मण्येव आर्त्विज्ययोग्यायां ब्राह्मणजातावेव तत्रापि प्रयोगकुशलेषु ब्राह्मणेषु प्रतिष्ठितो वर्तते । ऐब्रासा.

अथैनत्क्षत्रमन्वागच्छत् । तदब्रवीत्— उप माऽस्मिन्यज्ञे ह्वयस्वेति । तत्तथेत्यब्रवीत् । तद्वै निधाय स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तस्वेति । तथेति तत्क्षत्रं निधाय स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तत । तस्माद्धाप्येतर्हि क्षत्रियो यजमानो निधायैव स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तते ॥

अथ क्षत्रियस्य यज्ञप्राप्तिं दर्शयति– अथेति । अथ ब्राह्मणस्य यज्ञप्राप्तेरनन्तरं एनत् ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजातिः अन्वागच्छत् । आगत्य च तद्ब्रह्म प्रति एवमब्रवीत्– हे ब्राह्मण, मा क्षत्रियं अस्मिन् यज्ञे उपह्वयस्व अनुजानीहि, मां आहूय यज्ञेन संयोजयेत्यर्थः । तदुक्तं कार्यं तथैवास्त्विति ब्राह्मणोऽब्रवीत् । उक्त्वा च क्षत्रियायैवं बुद्धिप्रदानं कृतवान्– हे क्षत्रिय, तद्वै तथा सति तव यज्ञप्राप्तावपेक्षायां सत्यां स्वकीयानि धनुरादीन्यायुधानि क्वचित्स्थापनीयानि । तान्यवस्थाप्य ब्राह्मणस्यैव योग्यैः स्फ्यकपालाद्यायुधैः ब्राह्मणस्य योग्येन शान्तिश्रद्धालुत्वयुक्तेन रूपेण वेषेण च युक्तो ब्रह्म भूत्वा ब्राह्मणसदृशो भूत्वा यज्ञं प्रति उपावर्तस्वेति । तत्क्षत्रं स च क्षत्रियः तथेत्यङ्गीकृत्य स्वकीयानि धनुरादीन्यायुधानि परित्यज्य शान्तवेषेण यज्ञं प्राप्तवान् । यस्मादादिसृष्टावेवं संपन्नं तस्मादिदानीमपि क्षत्रियो ब्राह्मणवेषेण धनुरादिरहितेन यज्ञमनुतिष्ठति । ऐब्रासा.

**अथातो देवयजनस्यैव याच्ञः । तदाहुः– यद्ब्राह्मणो राजन्यो वैश्यो दीक्षिष्यमाणः क्षत्रियं देवयजनं याचति कं क्षत्रियो याचेदिति ॥**

क्षत्रियस्य यज्ञप्राप्तिमुक्त्वा देवयजनलाभं वक्तुं प्रश्नमुद्भावयति– अथेति । अथ क्षत्रियस्य यज्ञेच्छानन्तरं यतो देवयजनमपेक्षितं अतः कारणाद्देवयजनस्यैव, देवा इज्यन्ते यस्मिन् देशे स देवयजनः, तस्यैव याच्ञः याचनं अभिधीयते इति शेषः । तत् तत्र देवयजने ब्रह्मवादिनः प्रश्नमाहुः । यत् यस्मात्कारणात् ब्राह्मणादयस्त्रयो वर्णाः क्षत्रियं अभिषिक्तं राजानं प्रति देवयजनं याचन्ति तस्माद्राज्ञोऽपि देवयजनो याचितव्यः । क्षत्रियः राजा कमन्यं स्वामिनं याचेदिति प्रश्नः । ऐब्रासा.

**दैवं क्षत्रं याचेदित्याहुः । आदित्यो वै दैवं क्षत्रम् । आदित्य एषां भूतानामधिपतिः ॥**

तस्योत्तरमाह– दैवमिति । राज्ञो मनुजेषु मध्ये स्वाम्यन्तराभावेऽपि देवसंबन्धिक्षत्रियजातेः स्वामित्वात्तत्रैव याचनमुचितमित्युत्तरमाहुः । योऽयमादित्योऽस्ति असावेव दैवं देवसंबन्धि क्षत्रं क्षत्रियजातिः । अयमादित्यः एषां प्राणिनां तमोनिवारणेनाधिष्ठाता पालयिता । ततः स्वामित्वात्तत्समीपे याचनमुचितम् । ऐब्रासा.

**स यदहर्दीक्षिष्यमाणो भवति तदहः पूर्वाह्ण एवोद्यन्तमादित्यमुपतिष्ठेत– 'इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमम्' 'देव सवितर्देवयजनं मे देहि देवयज्यायै' इति देवयजनं याचति ॥**

तस्य प्रकारं दर्शयति– स इति । स राजा यस्मिन्नेवाहनि दीक्षितुमुद्युक्तस्तस्याह्नः पूर्वाह्णकाले एवोद्यन्तं ऊर्ध्वं गच्छन्तं आदित्यं ऋग्यजुर्भ्यामुपतिष्ठेत । 'इदं श्रेष्ठम्' इत्यृचः प्रतीकम्, 'देव सवितः' इत्यादिकं यजुषः । हे देव सवितः, देवयज्यायै देवसंबन्धियागार्थं मे मह्यं देवयजनं देवोचितयागदेशं देहि इत्यनेन प्रकारेण देशं याचेत् । ऋचा उपस्थानं यजुषा याचनं इति व्यवस्थया द्रष्टव्यम् । ऐब्रासा.

**स यत्तत्र याचित उत्तरां सर्पति 'ओं तथा ददामि' इति हैव तदाह ॥**

राज्ञा याचितस्याऽऽदित्यस्य प्रत्युत्तरं संपादयति– स इति । आदित्यो यद्यपि तत्र तदानीमनेन राज्ञा याचितः सन्नुत्तरां यत्र स्वयं तिष्ठति तस्मादनन्तरभाविनीं दिशं प्रति सर्पति गच्छेत् तदानीं तत् तेन सर्पणेन 'ओं तथा ददामि' इत्येवमुत्तरमाह ब्रूते । लोकेऽपि पृष्टः पुरुषो वाचा वा हस्तशिरश्चालनाद्वि(? दि) ना वोत्तरं प्रयच्छति तद्वदत्रापि सर्पणमेव उत्तरमस्तु । सर्पणस्याभिप्रायः 'ओं तथा ददामि' इत्यनेन कथितः । ओं त्वदुक्तमङ्गीकरोमि तथा तेनैव प्रकारेण देवयजनं ददामि । ऐब्रासा.

**तस्य ह न काचन रिष्टिर्भवति देवेन सवित्रा प्रसूतस्य, उत्तरोत्तरिणीं ह श्रियमश्नुते, अश्नुते ह प्रजानामैश्वर्यमाधिपत्यं, य एवमुपस्थाय याचित्वा देवयजनमध्यवसाय दीक्षते क्षत्रियः सन् ॥**

तामेतां देवयजनयाच्ञां प्रशंसति– तस्येति । यः पुमान् क्षत्रियः स्वयं राजा सन् एवमृचाऽऽदित्यमुपस्थाय यजुषा याचित्वा ततो देवयजनं निश्चित्य दीक्षते दीक्षां प्राप्नोति तस्य राज्ञः सवित्रा देवेन प्रसूतस्य अनुज्ञातस्य रिष्टिः

हिंसा काचन काचिदपि न भवति । न केवलं हिंसाराहित्यं, किंतु उत्तरोत्तरिणीं दिने दिने वर्धमानां श्रियमश्नुते प्राप्नोति । किंच प्रजानां सर्वासामैश्वर्यं ईश्वरत्वं नियमनसामर्थ्यं आधिपत्यं अधिष्ठाय पालयितृत्वं तत्तद्योगक्षेमसंपादनं अश्नुते प्राप्नोति । ऐब्रासा.

**अथात इष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य । स पुरस्ताद्दीक्षाया आहुतिं जुहुयात् । चतुर्गृहीतमाज्यमाहवनीय इष्टापूर्तस्यापरिज्यान्यै ॥**

तस्यैव क्षत्रियस्य होमं विधत्ते— अथेति । अथ देवयजननिश्चयानन्तरं यस्मादनुष्ठेयस्य इष्टापूर्तस्य अपरिज्यानिः विनाशाभावः अपेक्षितः, अतः कारणाद्यजमानस्य क्षत्रियस्य राज्ञ इष्टापूर्तस्य अपरिज्यानिसंज्ञको होमोऽभिधीयते इति शेषः । इष्टापूर्तशब्दार्थः पूर्वाचार्यैर्दर्शितः— 'वर्णाश्रमान्वयी धर्म इष्टं पूर्तमथेतरत् । प्रपातटाकादिरूपं तच्च सर्वत्र दृश्यते । स्मार्तं पूर्तं श्रौतमिष्टमिति केचिदिहोचिरे ॥' इति । स राजा दीक्षायाः पूर्वमाहुतिं जुहुयात् । चतुर्गृहीतमाज्यं द्रव्यं, आहवनीयो होमस्थानं, अनुष्ठेयस्य इष्टापूर्तस्य फलपर्यवसायित्वलक्षणो विनाशाभावः प्रयोजनम् । ऐब्रासा.

**'पुनर्न इन्द्रो मघवा ददातु' 'ब्रह्म पुनरिष्टं पूर्तं दात्स्वाहा' इति ॥**

होमे मन्त्रं दर्शयति— पुनरिति । 'पुनर्नः' इत्यादिकं ऋचः प्रतीकम्, 'ब्रह्म' इत्यादिकं यजुः । ब्रह्म वेदरूपो मन्त्रः इष्टं पूर्तं यथोक्तलक्षणं पुनर्दात् भूयो भूयो ददातु । तदर्थमिदं स्वाहा हुतमस्तु । ऐब्रासा.

**अथानूबन्ध्यायै समिष्टयजुषामुपरिष्टात् 'पुनर्नो अग्निर्जातवेदा ददातु' 'क्षत्त्रं पुनरिष्टं पूर्तं दात्स्वाहा' इति ॥**

दीक्षणीयेष्टेः पूर्वकालीनं होमं विधायानुबन्ध्याख्यपशोरुत्तरकालीनं होमं विधत्ते— अथेति । अथ प्राचीनहोमकथनानन्तरं उच्यते इति शेषः । अनुबन्ध्यायै अनुबन्ध्याख्यपशोः संबन्धीनि यानि त्रीणि समिष्टयजूंषि सन्ति तेषामुपरिष्टाज्जुहुयादिति शेषः । 'पुनर्नः' इत्यृचः प्रतीकम् । इयं पूर्वोक्ता चेत्यृग्द्वयं शाखान्तरगतम् । क्षत्त्रं क्षत्त्रियजातिः इष्टं पूर्तं च पुनर्दात् भूयो ददातु, तदर्थं स्वाहुतमिदमस्तु । ऐब्रासा.

**सैषेष्टापूर्तस्यापरिज्यानिः क्षत्त्रियस्य यजमानस्य यद्देते आहुती । तस्माद्देते होतव्ये ॥**

पूर्वोत्तरकालीनमाहुतिद्वयं प्रशंसति— सेति । योऽयं क्षत्त्रियो राजा यजमानः तस्यैते पूर्वोत्तरकालीने आहुती विद्येते । सैषाऽऽहुतिक्रिया इष्टस्य पूर्तस्य चापरिज्यानिः अविनाशहेतुः, तस्मात्कारणादेते उभे आहुती होतव्ये । ऐब्रासा.

**तदु ह स्माऽऽह सौजात आराह्लिः— अजीतपुनर्वण्यं वा एतद्यदेते आहुती इति । यथा ह कामयेत तथैते कुर्यात् । य इतोऽनुशासनं कुर्यादितीमे त्वेव जुहुयात् ॥**

अथ प्रकारान्तरेणाऽऽहुतिद्वयं विधत्ते— तदिति । तदु ह तत्रैव पूर्वोक्तहोमस्थाने सौजातनामकः कश्चिदृषिः स चाऽऽराह्लनामकस्य पुत्र एवमुवाच । कथमिति तदुच्यते— एते वक्ष्यमाणे आहुती इति यदस्ति तदेतदजीतपुनर्वण्यं वै, नष्टमप्राप्तं वा यद्वस्तु तदेतदजीतं, तस्य पुनरपि वनसाधनं प्राप्तिकारणं अजीतपुनर्वण्यं, वक्ष्यमाणमाहुतिद्वयं एतन्नामकमित्यर्थः । इति यदेतत्सौजातस्य मतं तदेव यथेत्यादिना प्रशस्यते । यः पुमानितः सौजातवाक्यात् अनुशासनं उपदिष्टमनुष्ठानं कुर्यात् स पुमान् यथा येनैव प्रकारेण कामयेत तथा तनैव प्रकारेण सिद्धं फलमुद्दिश्यैते कुर्यात् । एतदनुष्ठानेन काम्यमानं फलं सिध्यति, तस्मात्कारणादिमे एवाऽऽहुती जुहुयात्, न तु पूर्वे । ऐब्रासा.

**ब्रह्म प्रपद्ये ब्रह्म मा क्षत्त्राद्गोपायतु ब्रह्मणे स्वाहेति ॥**

तत्र दीक्षणीयेष्टेः प्राचीनहोममन्त्रं दर्शयति— ब्रह्मेति । ब्रह्म ब्राह्मणजातिं प्रपद्ये रक्षकतया प्राप्नोमि । ब्रह्म सा ब्राह्मणजातिः मां क्षत्त्रात् क्षत्त्रियजातेर्गोपायतु पालयतु । ब्रह्मणे ब्राह्मणजातये स्वाहुतमिदमस्तु । अनेन मन्त्रेणाऽऽहवनीये चतुर्गृहीतमाज्यं जुहुयात् । ऐब्रासा.

**तत्तदिती ३ँ ॥**

अस्या आहुतेः पूज्यतां दर्शयति– तदिति । सर्वेऽपि याज्ञिकाः पूज्यहोमप्रसङ्गे तदा तदा तत्तदित्येवमेतदेवानुष्ठानमुदाहरन्ति । पूजार्था सानुनासिका प्लुतिः । ऐब्रासा.

**ब्रह्म वा एष प्रपद्यते यो यज्ञं प्रपद्यते । ब्रह्म वै यज्ञः । यज्ञादु ह वा एष पुनर्जायते यो दीक्षते । तं ब्रह्म प्रपन्नं क्षत्त्रं न परिजिनाति । ब्रह्म मा क्षत्त्राद्गोपायत्वित्याह यथैनं ब्रह्म क्षत्त्राद्गोपायेत् । ब्रह्मणे स्वाहेति तदेनत्प्रीणाति । तदेनत्प्रीतं क्षत्त्राद्गोपायति ॥**

अथ मन्त्रतात्पर्यं दर्शयति– ब्रह्मेति । यः पुमान् यज्ञं प्रपद्यते प्रारभते एष पुमान् ब्रह्म वै ब्राह्मणजातिमेव प्रारभते । ब्रह्म वै ब्राह्मणजातिरेव यज्ञः, तया जात्या साध्यत्वात् । एवं सति यः पुमान् दीक्षते दीक्षां प्राप्नोति एष पुमान् पूर्वं जातोऽपि यज्ञादु ह वा अनुष्ठीयमानाद्यज्ञादेव पुनरपि जायते । ब्रह्म प्रपन्नं यज्ञोपक्रमेण यज्ञरूपब्राह्मणजातिं प्रपन्नं तं यजमानं क्षत्त्रं क्षत्त्रियजातिः न परिजिनाति नैव हिनस्ति । एतावता 'ब्रह्म प्रपद्ये' इत्यस्य मन्त्रपादस्य तात्पर्यं दर्शयति । यस्तु मध्यमो मन्त्रभागः 'ब्रह्म मा क्षत्त्राद्गोपायतु' इत्येवं ब्रूते तस्मिन्भागे ब्राह्मणजातिरेनं यजमानं क्षत्त्रियजातेर्यथा गोपायेत् रक्षेत् तथा स मध्यमभागो ब्रूते । 'ब्रह्मणे स्वाहा' इत्येतादृशो यस्तृतीयभागः तत् तेन भागेन ब्रह्म ब्राह्मणजातिं प्रीणाति तर्पयति । तदेतद्ब्रह्म प्रीतं सत् यजमानं क्षत्त्रियजातेर्गोपायति रक्षति । ऐब्रासा.

**अथानूबन्ध्यायै समिष्टयजुषामुपरिष्टात् ॥**

पूर्वकालीनं होमं विधायोत्तरकालीनं होमं विधत्ते– अथेति । पूर्ववद्व्याख्येयम् । ऐब्रासा.

**क्षत्त्रं प्रपद्ये क्षत्त्रं मा ब्रह्मणो गोपायतु क्षत्त्राय स्वाहेति । तत्तदिती ३ँ । क्षत्त्रं वा एष प्रपद्यते यो राष्ट्रं प्रपद्यते । क्षत्त्रं हि राष्ट्रम् । तं क्षत्त्रं प्रपन्नं ब्रह्म न परिजिनाति । क्षत्त्रं मा ब्रह्मणो गोपायत्वित्याह यथैनं क्षत्त्रं ब्रह्मणो गोपायेत् । क्षत्त्राय स्वाहेति तदेनत्प्रीणाति । तदेनत्प्रीतं ब्रह्मणो गोपायति ॥**

तस्मिन् होमे मन्त्रं तदीयतात्पर्यं च दर्शयति– क्षत्त्रमिति । पालनीयो देशः राष्ट्रम् । तच्च क्षत्त्रियेण पालनीयत्वात्क्षत्त्रस्वरूपम् । अन्यत् सर्वं ब्रह्मवाक्यवद्व्याख्येयम् । ऐब्रासा.

**सैषेष्टापूर्तस्यैवापरिज्यानिः क्षत्त्रियस्य यजमानस्य यदेते आहुती । तस्मादेते एव होतव्ये ॥**

तदेतदाहुतिद्वयं प्रशंसति– सेति । पूर्वोक्ताहुतिद्वयविषयवाक्यवद्व्याख्येयम् । एवकारः पूर्वोक्ताहुतिद्वयव्यावृत्त्यर्थः । एतदेव सौजाताख्यस्य महर्षेर्मतं प्रशस्तम् । ऐब्रासा.

**अथैन्द्रो वै देवतया क्षत्त्रियो भवति । त्रैष्टुभश्छन्दसा । पञ्चदशः स्तोमेन । सोमो राज्येन । राजन्यो बन्धुना । स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति यत्कृष्णाजिनमध्यूहति, यद्दीक्षितव्रतं चरति, यदेनं ब्राह्मणा अभिसंगच्छन्ते । तस्य ह दीक्षमाणस्येन्द्र एवेन्द्रियमादत्ते । त्रिष्टुब्वीर्यम् । पञ्चदशस्तोम आयुः । सोमो राज्यम् । पितरो यशस्कीर्तिम् । अन्यो वा अयमस्मद्भवति, ब्रह्म वा अयं भवति, ब्रह्म वा अयमुपावर्तत इति वदन्तः ॥**

क्षत्त्रियस्याऽऽहवनीयोपस्थानं विधातुं प्रस्तौति– अथेति । अथ होमकथनानन्तरं, उपस्थानं उच्यते इति शेषः । योऽयं क्षत्त्रियोऽस्ति सोऽयं देवतयैन्द्रो वा इन्द्रसंबद्ध एव भवति । देवतानां मध्ये इन्द्रः क्षत्त्रियस्याभिमा(नि)नी देवतेत्यर्थः । तथा छन्दसा त्रैष्टुभः छन्दसां मध्ये त्रिष्टुप् एतदभिमानिनी । स्तोमानां मध्ये पञ्चदश एतदभिमानी । राज्येन निमित्तेनायं सोमरूपः सोम एव तदीयराज्याभिमानी । बन्धुना पितृपितामहादिबन्धुवर्गेण राजन्यो राजजातीयः । एवं सति स ह स खलु क्षत्त्रियो दीक्षमाण एव दीक्षां स्वीकुर्वन्नेव ब्राह्मणत्वजातिं प्राप्नोति । कथमिति तदुच्यते– ब्राह्मणयजमानवत् कृष्णाजिनमध्यूहति आच्छादयतीति यदस्ति, तथा दीक्षितव्रतं मुष्टिबन्धनवाङ्नियमादिकं चरतीति यदस्ति, तथा ब्राह्मणा ऋत्विजो

भूत्वैनं क्षत्रियमभितः संगच्छन्ते संगता भवन्तीति यदस्ति, तेन सर्वेण संस्कारेण क्षत्रियो ब्राह्मण्यं प्राप्नोति। तस्य ह तादृशस्यैव क्षत्रियस्य दीक्षमाणस्य दीक्षां प्राप्नुवत इन्द्रियं चक्षुरादिपाटवं इन्द्र एवाऽऽदत्ते अपहरति। तथा वीर्यं युद्धादिसामर्थ्यं त्रिष्टुबपहरति। पञ्चदशस्तोम आयुरपहरति। सोमो राज्यमपहरति। पितरो यशस्कीर्तिमपहरन्ति। ऐहिकं युद्धादिविषयकं यशः, आमुष्मिकी यज्ञदानविषया कीर्तिः। एवमपहरतां इन्द्रत्रिष्टुबादीनां कोऽभिप्राय इति सोऽभिधीयते— अयं क्षत्रियोऽस्मदिन्द्रादिभ्योऽन्य एव स्वतन्त्र एव भवति। पूर्वमस्मदधीनः सन् इदानीं यागं कुर्वन् ब्रह्म वै ब्राह्मण एवायं भवति। कथमिति तदुच्यते— अयं क्षत्रियो ब्रह्म वै ब्राह्मणजातिमेव कृष्णाजिनाच्छादनादिभिरुपेत्य वर्तते। तथा सति अस्मदपेक्षामन्तरेणैव सर्वपुरुषार्थसाधनसमर्थत्वादस्मदधीनतां परित्यज्य अन्य एव स्वतन्त्रो भवतीति स्वाभिप्रायं परस्परं वदन्तः सर्वमप्येतदीयमपहरन्ति। ऐब्रासा.

**स पुरस्ताद्दीक्षाया आहुतिं हुत्वाऽऽहवनीयमुपतिष्ठेत ॥**

तस्योपद्रवस्य शान्त्यर्थमुपस्थानं विधत्ते— स इति। दीक्षणीयेष्टेः पूर्वोक्तामाहुतिं हुत्वा तत्राऽऽहवनीयं वक्ष्यमाणेन मन्त्रेणोपतिष्ठते। ऐब्रासा.

**नेन्द्राद्देवताया एमि न त्रिष्टुभश्छन्दसो न पञ्चदशात्स्तोमान्न सोमाद्राज्ञो न पित्र्याद्बन्धोर्मा म इन्द्र इन्द्रियमादित मा त्रिष्टुब्वीर्यं मा पञ्चदशस्तोम आयुर्मा सोमो राज्यं मा पितरो यशस्कीर्तिं सहेन्द्रियेण वीर्येणाऽऽयुषा राज्येन यशसा बन्धुनाऽग्निं देवतामुपैमि गायत्रीं छन्दस्त्रिवृतं स्तोमं सोमं राजानं ब्रह्म प्रपद्ये ब्राह्मणो भवामीति ॥**

तं मन्त्रं दर्शयति— नेति। क्षत्रियोऽहं इन्द्ररूपाया मदीयदेवताया नैमि पृथग्भूतो न गच्छामि। तथा मय्यभिमानिभ्यश्छन्दस्तोमराजबन्धुभ्यो नापगच्छामि। अयमिन्द्रो मदीयमिन्द्रियं माऽऽदित माऽपहरतु। तथा त्रिष्टुबादयो वीर्यादीन् माऽपहरन्तु। तेषामिन्द्रादीनामनुग्रहमिन्द्रियादिभिः सहावस्थितो भूत्वा तत्पालनसमर्थमग्निं देवतामुपैमि। तथा गायत्रीत्रिवृत्स्तोमब्राह्मणजातीः प्रपद्ये प्राप्नोमि, तेषामग्न्यादीनामनुग्रहात् ब्राह्मणो भवामि। ऐब्रासा.

**तस्य ह नेन्द्र इन्द्रियमादत्ते न त्रिष्टुब्वीर्यं न पञ्चदशस्तोम आयुर्न सोमो राज्यं न पितरो यशस्कीर्तिं य एवमेतामाहुतिं हुत्वाऽऽहवनीयमुपस्थाय दीक्षते क्षत्रियः सन् ॥**

अनेन मन्त्रेण यदुपस्थानं तत्प्रशंसति— तस्येति। यः पुमान् क्षत्रियजातियुक्तः सन्नुक्तक्रमेण दीक्षायाः प्राचीनामाहुतिं हुत्वा 'नेन्द्रात्' इत्यादिमन्त्रेणाऽऽहवनीयमुपस्थाय पश्चाद्दीक्षां प्राप्नोति तस्य क्षत्रियस्य इन्द्रियादीनिन्द्रादयो नापहरन्ति। ऐब्रासा.

**अथाऽऽग्नेयो वै देवतया क्षत्रियो दीक्षितो भवति। गायत्रश्छन्दसा। त्रिवृत्स्तोमेन। ब्राह्मणो बन्धुना। स होदवस्यन्नेव क्षत्रियतामभ्युपैति। तस्य होदवस्यतोऽग्निरेव तेज आदत्ते। गायत्री वीर्यम्। त्रिवृत्स्तोम आयुः। ब्राह्मणा ब्रह्म यशस्कीर्तिम्। अन्यो वा अयमस्मद्भवति, क्षत्रं वा अयं भवति, क्षत्रं वा अयमुपावर्तत इति वदन्तः ॥**

पूर्वहोमानन्तरमुपस्थानं विधायोत्तरहोमादूर्ध्वमुपस्थानं विधातुं प्रस्तौति— अथेति। अथ पूर्वोपस्थानानन्तरं उत्तरोपस्थानं वक्ष्यत इति शेषः। अयं यजमानः पुरा क्षत्रियोऽपीदानीं दीक्षितः सन् ब्राह्मण्यं प्राप्य देवतयाऽग्निसंबद्धो भवति। अग्निरस्य ब्राह्मणस्य स्वामी। एवं गायत्रीत्रिवृद्ब्राह्मणजातिसंबन्धो द्रष्टव्यः। तादृश इदानीं ब्राह्मणः सन् उदवस्यन्नेव उदवसानीयेष्ट्या सोमयागं समापयन्नेव ब्राह्मण्यं परित्यज्य क्षत्रियत्वं प्राप्नोति। तस्मादु( ? तस्यो )दवसानीयेष्टिं कुर्वतो यजमानस्य तेजःप्रभृतीनग्न्यादयोऽपहरन्ति। ब्रह्म वेदः, तदध्ययनं ऐहिकं यशः, तदनुष्ठाननिमित्ताऽऽमुष्मिकी कीर्तिः। अपहरतामग्न्यादीनां कोऽभिप्रायः ? सोऽभिधीयते— अयमिदानीं ब्राह्मणः सन् अस्मदन्यः स्वतन्त्रो भवति। अयं क्षत्रं वै

क्षत्त्रिय एव भवति । तदपि कथमिति तदुच्यते– अयं यागकाले ब्राह्मणः सन् यागादूर्ध्वं ब्राह्मण्यं परित्यज्य स्वकीयां क्षत्त्रियजातिमेवोपेत्य वर्तते । तस्मादस्यास्मत्तोऽन्यत्वमिति परस्परं वदन्तोऽग्न्यादयस्तेजआदीनपहरन्ति । ऐब्रासा.

**सोऽनूबन्ध्यायै समिष्टयजुषामुपरिष्टाद्धुत्वाऽऽहुतिमाहवनीयमुपतिष्ठेत ॥**

तच्छान्त्यर्थमुपस्थानं विधत्ते– स इति । पूर्ववद्व्याख्येयम् । ऐब्रासा.

**नाग्नेर्देवताया एमि न गायत्र्याश्छन्दसो न त्रिवृतः स्तोमान्न ब्रह्मणो बन्धोर्मा मेऽग्निस्तेज आदित मा गायत्री वीर्यं मा त्रिवृत्स्तोम आयुर्मा ब्राह्मणा ब्रह्म यशस्कीर्तिं सह तेजसा वीर्येणाऽऽयुषा ब्रह्मणा यशसा कीर्त्येन्द्रं देवतामुपैमि त्रिष्टुभं छन्दः पञ्चदशं स्तोमं सोमं राजानं क्षत्त्रं प्रपद्ये क्षत्त्रियो भवामि । देवाः पितरः पितरो देवा योऽस्मि स सन्यजे । स्वं म इदमिष्टं स्वं पूर्तं स्वं श्रान्तं स्वं हुतम् । तस्य मेऽयमग्निरुपद्रष्टाऽयं वा रुपश्रोताऽसावादित्योऽनुख्यातेदमहं य एवास्मि सोऽस्मीति ॥**

तत्रोपस्थाने मन्त्रमाह– नेति । अत्र 'नाग्नेर्देवतायाः' इत्यादि 'क्षत्त्रियो भवामि' इत्यन्तं पूर्वमन्त्रवद्व्याख्येयम् । हे देवा अग्न्यादयः, पितरः पालकाः, यूयं शृणुतेति शेषः । पितरो देवा इति पुनर्वचनमादरार्थम् । भवदनुग्रहात्कृष्णाजिनाच्छादनादिसंस्कारेण यो ब्राह्मणोऽस्मि यज्ञसमाप्तिपर्यन्तं स एव ब्राह्मणः सन् यजे यागं कुर्वे । मे मम इदमिष्टं श्रौतं कर्म स्वं स्वाधीनं जातम् । तथा पूर्तं स्मार्तमपि कर्म स्वं स्वाधीनं जातम् । तथा श्रान्तं श्रमरूपं तपोऽपि स्वं स्वाधीनं जातम् । हुतं अन्यदपि काम्यहोमादिकं स्वं स्वाधीनं जातम् । तस्य तादृशस्य इष्टापूर्तादियुक्तस्य मे मम अयं भूलोकावस्थितः अग्निः उपद्रष्टा समीपे स्थित्वा साक्षित्वेनावलोकयिता । अयं अन्तरिक्षावस्थितः वायुः उपश्रोता तस्याग्नेर्मुखादस्मद्वृत्तान्तं श्रोष्यति । असौ द्युलोकावस्थित आदित्यः तं वायुमनु पश्चात्ख्याता स्वर्गलोके कथयिष्यतीदं कर्माहं कृतवानिति । एवं फलपर्यन्तं कर्मणि समाप्ते सति कर्मोपक्रमात्पूर्वं य एव क्षत्त्रियोऽस्मि स एवोर्ध्वं क्षत्त्रियो भूत्वा तिष्ठामीति । ऐब्रासा.

**तस्य ह नाग्निस्तेज आदत्ते न गायत्री वीर्यं न त्रिवृत्स्तोम आयुर्न ब्राह्मणा ब्रह्म यशस्कीर्तिं य एवमेतामाहुतिं हुत्वाऽऽहवनीयमुपस्थायोदवस्यति क्षत्त्रियः सन् ॥**

अनेन मन्त्रेण यदुपस्थानं तत्प्रशंसति– तस्येति । पूर्वं 'तस्य ह नेन्द्र इन्द्रियम्' इत्यादि यद्वाक्यमुक्तं तद्वद्व्याख्येयम् । ऐब्रासा.

**अथातो दीक्षाया आवेदनस्यैव । तदाहुः– यद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्ति, कथं क्षत्त्रियस्याऽऽवेदयेदिति ॥**

क्षत्त्रियस्य दीक्षितत्वावेदनमन्त्रे संदेहात् प्रश्नमुद्भावयति– अथेति । अथ दीक्षानन्तरं देवानां मनुष्याणां चाग्रे यत एतदीयदीक्षा कथनीया, अतः कारणाद्दीक्षाया आवेदनस्य प्रकटीकरणस्यैव कश्चिन्निर्णय उच्यते । तत्र तस्मिन्नावेदने संदिहाना ब्रह्मवादिनः प्रश्नमाहुः । ब्राह्मणस्य दीक्षाया ऊर्ध्वं 'अदीक्षिष्टायं ब्राह्मणः' इति मन्त्रेण दीक्षा प्रख्यापनीया । तथा च तैत्तिरीया आमनन्ति– 'अदीक्षिष्टायं ब्राह्मण इति । त्रिरुपांश्वाह देवेभ्य एवैनं प्राह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राह' इति । एवं सति क्षत्त्रियस्य दीक्षावेदने किमस्मिन्मन्त्रे ब्राह्मणशब्दः क्षत्त्रियपरत्वेनोहनीय आहोस्विदविकृत एव पठनीय इति प्रश्नाभिप्रायः । ऐब्रासा.

**यथैवैतद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्त्येवमेवैतत्क्षत्त्रियस्याऽऽवेदयेत्पुरोहितस्याऽऽर्षेयेणेति ॥**

तत्रोत्तरमाह– यथेति । अत्र शब्दो नोहितव्यः । अविकृत एव ब्राह्मणशब्दः क्षत्त्रियदीक्षावेदनेऽपि प्रयोक्तव्यः । यदि ब्राह्मणप्रवरोऽपेक्षितस्तदानीं पुरोहितस्य ब्राह्मणस्य संबन्धिनाऽऽर्षेयेण प्रयोगः कर्तव्यः । तथा चापस्तम्बः क्षत्त्रियवैश्ययोरपि ब्राह्मणशब्देनैवाऽऽवेदनं दर्शयति– 'अदीक्षिष्टायं ब्राह्मणोऽसावमुष्य पुत्रोऽमुष्य

पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्तेति ब्राह्मणो वा एष जायते यो दीक्षते तस्माद्राजन्यवैश्या अपि ब्राह्मण इत्येवाऽऽवेदयति ' इति । ऐब्रासा.

**तत्तदिती३ँ ॥**

ईदृशस्याऽऽवेदनस्य पूज्यतां दर्शयति– तदिति । पूर्ववद्व्याख्येयम् । ऐब्रासा.

**निधाय वा एष स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तत । तस्मात्तस्य पुरोहितस्याऽऽर्षेयेण दीक्षामावेदयेयुः । पुरोहितस्याऽऽर्षेयेण प्रवरं प्रवृणीरन् ॥**

ब्राह्मणत्वेनाऽऽवेदनमुपपादयति– निधायेति । स्वान्यायुधानि धनुरादीनि ब्रह्मण आयुधानि स्फ्यकपालादीनि यस्मात्स्वायुधपरित्यागपूर्वकं ब्रह्मायुधस्वीकारेण ब्राह्मणो भूत्वा यज्ञं प्राप्तवांस्तस्मात्तस्य यजमानस्य पुरोहितसंबन्धिना गोत्रेण दीक्षावेदनं तथा प्रवरोऽपि विज्ञेयः । ऐब्रासा.

**अथातो यजमानभागस्यैव । तदाहुः– प्राश्नीयात्क्षत्त्रियो यजमानभागा३म् , न प्राश्नीया३दिति ॥**

दर्शपूर्णमासयोः यजमानभागप्राशनं विहितं, तदत्र दीक्षणीयादीष्टिषु चोदकप्राप्तं, क्षत्त्रियस्य तत्प्राशने निर्णयं वक्तुं विचारमवतारयति– अथेति । दीक्षावेदननिर्णयानन्तरं दीक्षणीयादीष्टयो यतो बुद्धिस्थाः अतः कारणात्तत्र यजमानभागस्यैव प्रकारविशेष उच्यत इति शेषः । तत्तस्मिन्भागे ब्रह्मवादिनो विचारमाहुः– क्षत्त्रियो ब्राह्मणवत् किं यजमानभागं प्राश्नीयात् , उत न ? इति । विचारार्थे प्लुतिद्वयम् । ऐब्रासा.

**यत्प्राश्नीयादहुताद्धुतं प्राश्य पापीयान्स्यात् । यन्न प्राश्नीयाद्यज्ञादात्मानमन्तरियात् । यज्ञो वै यजमानभागः ॥**

पक्षद्वये दोषमुद्भावयति– यदिति । हुतमत्तीति हुतात् , तादृशो न भवतीत्यहुतात् । ' अथैता अहुतादो यद्राजन्यो वैश्यः शूद्रः ' इति पूर्वमुक्तम् । अतोऽयं क्षत्त्रियोऽहुतात् योग्यतारहितो यदि हुतशेषं प्राश्नीयात्तदानीं पापीयान् अत्यन्तपापयुक्तो भवेत् । अप्राशनपक्षे तु यज्ञादात्मानमन्तरियात् विच्छिन्द्यात् यजमानभागस्य यज्ञहेतुत्वेन यज्ञस्वरूपत्वात् तद्भागराहित्ये यज्ञात्स्वयं विच्छिन्नो भवति । ऐब्रासा.

**स ब्रह्मणे परिहृत्यः ॥**

उक्तदोषद्वयं परिहर्तुं पक्षान्तरमाह– स इति । स यजमानभागः ऋत्विग्विशेषाय ब्रह्मणे परिहृत्यः परितः सर्वात्मना समर्पणीयः । ऐब्रासा.

**पुरोहितायतनं वा एतत्क्षत्त्रियस्य यद्ब्रह्मा । अर्धात्मो ह वा एष क्षत्त्रियस्य यत्पुरोहितः । उपाह परोक्षेणैव प्राशितरूपमाप्नोति । नास्य प्रत्यक्षं भक्षितो भवति ॥**

तत्समर्पणे दोषद्वयराहित्यं दर्शयति– पुरोहितेति । ऋत्विग्रूपो ब्रह्मेति यदस्त्येतत्क्षत्रियस्य पुरोहितायतनं पुरोहितस्थानम् । पुरोहितो योऽस्त्येष क्षत्त्रियस्यार्धात्मो ह वा अर्धदेह एव । उ ह वा इति निपातसमूहोऽवधारणार्थः । अर्धशरीरस्थानीयपुरोहितरूपेण ब्रह्मणा तस्मिन् भागे भक्षिते सति परोक्षेणैव व्यवधानेनैव प्राशितरूपं प्राशितसादृश्यं प्राप्नोत्येव । अहशब्दः उपशब्दश्च मिलित्वाऽवधारणार्थौ । अस्य क्षत्त्रियस्य प्रत्यक्षं अव्यवधानेन स्वमुखे( न ) स भागो भक्षितो न भवति । एवं सति व्यवधानेन भक्षितत्वाद्यज्ञान्तरायो न भविष्यति । स्वमुखेन भक्षणाभावादयं पापीयानपि न भविष्यति । ऐब्रासा.

**यज्ञ उ ह वा एष प्रत्यक्षं यद्ब्रह्मा । ब्रह्मणि हि सर्वो यज्ञः प्रतिष्ठितः । यज्ञे यजमानः । यज्ञ एव तद्यज्ञमप्यत्यर्जन्ति । यथाऽप्स्वापः, यथाऽग्नावग्निं, तद्वै नातिरिच्यते । तदेनं न हिनस्ति । तस्मात्स ब्रह्मणे परिहृत्यः ॥**

ब्रह्मणस्तद्भागप्राशनं प्रशंसति– यज्ञ इति । यो ब्रह्माऽस्त्येष प्रत्यक्षं अव्यवधानं यथा भवति तथा यज्ञ उ ह वै यज्ञस्वरूप एव, तत्साधकत्वात् । किंच ब्रह्मण्येव सर्वो यज्ञः प्रतिष्ठितः, वेदत्रयवैकल्यपरिहर्तृत्वेन ब्रह्मणो

भिषग्रूपत्वस्योक्तत्वात् । तस्मिंश्च प्रतिष्ठिते यज्ञे यजमानोऽपि प्रतिष्ठितः, तत्फलभागित्वात् । एवं सति तत् तेन भागप्राशनेन यज्ञ एव ब्रह्मरूपे भागरूपं यज्ञमप्युत्सर्जन्ति सम्यक् प्रक्षिपन्ति । तत्र दृष्टान्तः– यथा लोके अप्सु प्रक्षिप्ता आप एकत्वेन संसृज्यन्ते, यथा वा अग्नौ प्रक्षिप्तमग्निं एकीभूतं पश्यामः, तथा तद्वै ब्रह्मणा प्राशितं हविर्नातिरिच्यते अतिरिक्तं न भवति, किन्तु यज्ञरूपेण ब्रह्मणा सहैकीभवति । तदेकीभूतं हविरेनं क्षत्रियं न हिनस्ति न बाधते । तस्मात्स यजमानभागो ब्रह्मणे समर्पणीयः । ऐब्रासा.

**अग्नौ हैके जुह्वति 'प्रजापतेर्विभान्नाम लोकस्तस्मिंस्त्वा दधामि सह यजमानेन स्वाहा' इति । तत्तथा न कुर्यात् । यजमानो वै यजमानभागः । यजमानं ह सोऽग्नौ प्रवृणक्ति । य एनं तत्र ब्रूयाद्यजमानमग्नौ प्रावार्क्षीः, प्रास्याग्निः प्राणान्धक्ष्यति, मरिष्यति यजमान इति । शश्वत्तथा स्यात् । तस्मात्तस्याऽऽशां नेयादाशां नेयात् ॥**

पक्षान्तरमुपन्यस्य दूषयति– अग्नाविति । एके याज्ञिकास्तं यजमानभागमग्नौ जुह्वति । तत्र 'प्रजापतेः' इत्यादिको मन्त्रः । प्रजापतेः संबन्धी यो लोकस्तस्य विभानित्येतन्नामधेयम्, विशेषेण भातीति तद्व्युत्पत्तेः । यजमानभाग, यजमानेन सह त्वां तस्मिंल्लोके दधामि प्रक्षिपामि । तदर्थमिदं स्वाहुतमस्तु । अनेन मन्त्रेण यद्धोमानुष्ठानमस्ति तत्तथा न कुर्यात् । यजमानभागस्य यजमानस्वरूपत्वेन तस्य भागस्य होमे स होमकर्ता यजमानमेवाग्नौ प्रवृणक्ति प्रवृक्तं दग्धं करोति । तत्र तदानीं यः शत्रुरागत्यैनं कर्तारं ब्रूयात् शपेत । कथमिति तदुच्यते– हे होमकर्तः, त्वं यजमानमग्नौ प्रावार्क्षीः प्रवृक्तवान् दग्धवानसि, अस्य यजमानस्य प्राणानग्निः प्रकर्षेण धक्ष्यति, स यजमानो मरिष्यतीति, स शापोऽवश्यं तथैव स्यात् । तस्मात्तस्य होमस्याऽऽशां इच्छामपि नेयात् न प्राप्नुयात् । अभ्यासोऽध्यायसमाप्त्यर्थः । ऐब्रासा.

क्षत्रियस्य फलचमसभक्षः, न सोमभक्षः

**[१]विश्वन्तरो ह सौषद्मनः श्यापर्णान्परिचक्षाणो विश्यापर्णं यज्ञमाजह्रे । तद्धानुबुध्य श्यापर्णास्तं यज्ञमाजग्मुः । ते ह तदन्तर्वेद्यासांचक्रिरे । तान्ह दृष्ट्वोवाच– पापस्य वा इमे कर्मणः कर्तार आसते, अपूतायै वाचो वदितारो यच्छ्यापर्णा इमानुत्थापयत, इमे मेऽन्तर्वेदि माऽऽसिषतेति । तथेति तानुत्थापयांचक्रुः ॥**

'क्षत्रियो यजमानो यस्तस्य होमादि वर्णितम् । फलनामा तु चमसस्तस्यैवात्रोपवर्ण्यते ॥' तत्राऽऽदौ क्षत्रियस्य सोमभक्षराहित्यप्रदर्शनार्थमुपाख्यानमाह– विश्वन्तर इति । शोभनं सद्म राजगृहं यस्य राज्ञः सोऽयं सुषद्मा, तस्य पुत्रः सौषद्मनः । स च विश्वन्तरनामकः । स कदाचिद्यागं चिकीर्षुः श्यापर्णनामकान् ब्राह्मणविशेषान् परिचक्षाण आर्त्विज्ये निराकुर्वन् विश्यापर्णं यज्ञमाजह्रे श्यापर्णनामकब्राह्मणविरहितमेव यज्ञमनुष्ठितवान् । तद्ध तत्सर्वं श्यापर्णनामका ब्राह्मणा अनुबुध्य मनुष्यमुखादवगत्य विश्वन्तरेण राज्ञा तदानीमनाहूता एव तं यज्ञमाजग्मुः । आगत्य ते ह त एव श्यापर्णास्तदन्तर्वेदि तस्य यज्ञस्य वेदिमध्ये आसांचक्रिरे राजानुज्ञामन्तरेण स्वयमेवोपविष्टवन्तः । राजा तानुद्दण्डान् श्यापर्णान्दृष्ट्वा स्वकीयान् वेत्रपाणीन् पुरुषानुवाच– यत् ये श्यापर्णाः सन्ति, इमे अपूतायै वाचो वदितारः अपूतां वाचं मदीयावज्ञारूपां वदन्तः पापस्य कर्मणः कर्तारः धौर्त्यरूपं व्यापारं कर्तुमुद्यताः इहाऽऽसते । इमे श्यापर्णाः मेऽन्तर्वेदि मदीयाया वेदेर्मध्ये माऽऽसिषत, स्वयमेवोपविष्टा( न्) इमान् धूर्तान् हे वेत्रपाणयः, उत्थापयत । इत्येवं राज्ञोक्ता वेत्रपाणयस्तथेत्यङ्गीकृत्य तान् श्यापर्णान् उत्थापयांचक्रुः । ऐब्रासा.

**ते होत्थाप्यमाना रुरुविरे– ये तेभ्यो भूतवीरेभ्योऽसितमृगाः कश्यपानां सोमपीथमभिजिग्युः पारिक्षितस्य जनमेजयस्य विकश्यपे यज्ञे,**

---

(१) ऐब्रा. ३५।१–७.

**तैस्ते तत्र वीरवन्त आसुः, कः स्वित्सोऽस्माका-(? कम)स्ति वीरो य इमं सोमपीथमभि-जेष्यतीति ॥**

तेषां श्यापर्णानां वृत्तान्तमाह– त इति । वेत्रपाणिभि-रुत्थाप्यमानास्ते श्यापर्णा ब्राह्मणा रुरुविरे रवं शब्दं परस्परमुच्चैर्ध्वनिं कृतवन्तः । तत्र धृष्टाः केचिदन्यान् प्रति काचित्पुरातनीं कथामूचुः– परिक्षितः पुत्रो जनमेजयाख्यो यो राजा स कदाचित् कश्यपवंशोत्पन्नान् ब्राह्मणान् विहाय विकश्यपं यज्ञं भूतवीरसंज्ञकैर्ब्राह्मणैर्ऋत्विग्भिः कारयामास । तदानीं कश्यपानां मध्ये ये केचिदसित-मृगनामकाः पुरुषाः सोमपीथं जनमेजयसंबन्धिनं सोमयागं तेभ्यो भूतवीरसंज्ञकेभ्यो ब्राह्मणेभ्यो बलादाकृष्य स्वयमभि-जिग्युः अभितो जयं प्राप्ताः, बहुषु यज्ञप्रयोगेषु विजिगीषु-कथां कृत्वा तान् भूतवीरान् ब्राह्मणान् पराजयं प्रापय्य स्वयमसितमृगनामानो ये जितवन्तः, तैरसितमृगैस्ते कश्य-पास्तत्र जनमेजयस्य यज्ञे वीरवन्तः शूरपुरुषोपेता आसुः । एतां कथामुदाहृत्य श्यापर्णाः स्वकीयानेवं पृच्छन्ति– अस्माकं राज्ञा तिरस्कृतानामस्माकं मध्ये यः पुमानिमं सोमपीथं विश्वंतरस्य राज्ञः सोमयागमभिजेष्यति स तादृशो वीरः कश्चिदस्ति यः कोऽपि किमस्तीत्येवमुच्चैः शब्दं चक्रुः । ऐब्रासा.

**अयमहमस्मि वो वीर इति होवाच रामो मार्ग-वेयः ॥**

तस्य श्यापर्णानां प्रश्नस्य तन्मध्ये केनचिदुक्तमुत्तरं दर्शयति– अयमिति । मृगवुर्नाम काचिद्योषित्, तस्याः पुत्रो रामनामा कश्चिद्ब्राह्मण एवमुवाच– हे श्यापर्णाः, वः युष्माकं मध्ये वीरः परकीयान् विजेतुं शूरः अहं अयमस्मि भवतां पुरो वर्तमानोऽस्मीति । ऐब्रासा.

**रामो हाऽऽस मार्गवेयोऽनूचानः श्यापर्णी-यस्तेषां होत्तिष्ठतामुवाच– अपि नु राजन्नित्थंविदं वेदेरुत्थापयन्तीति । यस्त्वं कथं वेत्थ ब्रह्मबन्ध-विति ॥**

तस्य रामस्य वृत्तान्तमाह– राम इति । श्यापर्णीयः श्यापर्णानां ब्राह्मणानां संबन्धी मृगवुपुत्रो रामः अनूचानः साङ्गवेदशास्त्रपारंगत आस तत्रावस्थितवान् । तेषां श्यापर्णानां वेदेरुत्तिष्ठतां मध्येऽवस्थितो रामो विश्वंतरं प्रत्येवमुवाच– हे राजन्, इत्थंविदं यागसंबन्धिप्रयोग-प्रकाराभिज्ञं मामपि त्वदीया वेत्रपाणयो नु क्षिप्रं वेदे-रुत्थापयन्ति तदेतदयुक्तमिति । तच्छ्रुत्वा विश्वंतरो राजैवमुवाच– हे ब्रह्मबन्धो ब्राह्मणाधम राम, यत्त्वं धाष्ट्र्याद्ब्रवीषि स त्वं कथं वेत्थेति । अत्र राजोवाचेत्य-ध्याहर्तव्यम् । ऐब्रासा.

**यत्रेन्द्रं देवताः पर्यवृञ्जन्– विश्वरूपं त्वाष्ट्रम-भ्यमंस्त, वृत्रमस्तृत, यतीन्सालावृकेभ्यः प्रादात्, अरुर्मघानवधीत्, बृहस्पतेः प्रत्यवधीदिति, तत्रेन्द्रः सोमपीथेन व्यार्ध्यत । इन्द्रस्यानु व्यृद्धिं क्षत्त्रं सोमपीथेन व्यार्ध्यत । अपीन्द्रः सोमपीथेऽभवत् । त्वष्टुराऽमुष्य सोमम् । तद्व्यृद्धमेवाद्यापि क्षत्त्रं सोमपीथेन । स यस्तं भक्षं विद्यायः क्षत्त्रस्य सोमपीथेन व्यृद्धस्य, येन क्षत्रं समृध्यते, कथं तं वेदेरुत्थापयन्तीति ॥**

अथ रामः स्वकीयं वेदनं राज्ञोऽग्रे प्रकटयति– यत्रेति । हे विश्वंतर, मदीयं वेदनं शृणु । पुरा कदाचि-द्देवता इन्द्रस्योपरि पञ्चापराधान् संपाद्येन्द्रं पर्यवृञ्जन् यज्ञेषु परितो वर्जितवन्तः । यत्र यदा वर्जनं कृतं तत्र तदेन्द्रः सोमपीथेन व्यार्ध्यत सोमपानेन वियुक्तोऽभूत् । इन्द्रस्य येऽपराधास्तेऽभिधीयन्ते– त्वष्टुः पुत्रं विश्वरूपनामानं ब्राह्मणं अभ्यमंस्त इन्द्रो हिंसितवान्, तथा तेन त्वष्ट्रो-त्पादितं वृत्रनामानं ब्राह्मणं अस्तृत हिंसितवान् । एत-दुभयं तैत्तिरीयैः ‘ विश्वरूपो वै त्वाष्ट्रः, त्वष्टा हतपुत्रः ’ इत्यनुवाकद्वये विस्पष्टमाम्नातम् । तथा यतिवेषधरान-सुरान् शस्त्रेण छित्त्वा सालावृकेभ्यः अरण्यश्वभ्यः प्रादात् । तथाऽन्यानप्यरुर्मघनामकान् ब्राह्मणवेषानसुरानवधीत् । तथा स्वगुरोः बृहस्पतेर्वाक्यं स्वकीयेन वाक्येन प्र( त्य )-वधीत् । सोऽयं प्रतिघातो न युक्तः । तथा चाऽऽपस्तम्बः स्मरति– ‘ वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जये-च्छ्रेयसां च ’ इति । एते पञ्चापराधाः, तैर्निमित्तभूतै-रिन्द्रस्य सोमपाने निवारिते सति व्यृद्धिं तन्निवारणमनु क्षत्त्रं

सर्वाऽपि क्षत्रियजातिः सोमपीथेन व्यार्ध्यत सोमपानेन वियुक्ताऽभूत् । तदूर्ध्वं सोमपीथे सोमपानेऽपि स प्रवृत्तोऽभूत् । कथमिति तदुच्यते । अमुष्य त्वष्टुः सोमं आ बलात् अपिबदिति शेषः । तथा च तैत्तिरीया आमनन्ति – 'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्' इति । तत् तथा सति इन्द्रेण बलात्सोमे पीते सति क्षत्रियान्तरस्य तत्सामर्थ्याभावादिदानीमपि क्षत्त्रं सोमपीथेन व्यृद्धमेव सोमपानरहितमेवावतिष्ठते । येन भक्षविशेषेण क्षत्त्रं समृद्धं भवति तादृशो योऽन्यो भक्षः सोमपानेन वियुक्तस्य क्षत्त्रस्य संभवति, तं भक्षं यः पुमान् विद्यात्, तं तादृशं क्षत्रियभक्षविदं अस्मदादिपुरुषं कथमेते वेत्रपाणयो वेदेरुत्थापयन्तीति रामस्योपालम्भः । ऐब्रासा.

**वेत्थ ब्राह्मण त्वं तं भक्षा३म् । वेद हीति । तं वै नो ब्राह्मण ब्रूहीति । तस्मै वै ते राजन्निति होवाच ॥**

अथ रामविश्वंतरयोरुक्तिप्रत्युक्ती दर्शयति– वेत्थेति । हे ब्राह्मण राम, त्वं तादृशं भक्षं किं वेत्थेति विश्वन्तरस्य प्रश्नः । तदर्था प्लुतिः । वेद हि जानाम्येवेति रामोऽब्रवीत् । हे ब्राह्मण, त्वं वै तमेव क्षत्रियभक्षं नः अस्माकं ब्रूहीति विश्वन्तरः पप्रच्छ । हे राजन्, तस्मै ते वै तादृशाय पृच्छते तुभ्यमेव कथयामीति राम उवाच । ऐब्रासा.

**त्रयाणां भक्षाणामेकमाहरिष्यन्ति सोमं वा दधि वाऽपो वा ॥**

क्षत्रियस्य हेया भक्षास्त्रिविधाः, उपादेयो भक्ष एकः, तत्र हेयान् भक्षान् दर्शयति– त्रयाणामिति । हेयानां त्रयाणां मध्ये भक्षमेकं क्षत्रियस्य तवानभिज्ञा ऋत्विज आहरिष्यन्ति । कं भक्षमित्याशङ्क्य सोमं वा दधि वा जलं वेत्युक्तम् । ऐब्रासा.

**स यदि सोमं, ब्राह्मणानां स भक्षः, ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि । ब्राह्मणकल्पस्ते प्रजायामाजनिष्यत आदाय्यापाय्यावसायी यथाकामप्रयाप्यः । यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामाजायते । ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः । स ब्रह्मबन्धवेन जिज्यूषितः ॥**

तत्र सोमपक्षे दोषं दर्शयति– स इति । सः अनभिज्ञः ऋत्विग्यदि ते विश्वंतरस्य क्षत्रियस्य सोमं भक्षमाहरेदिति शेषः । स सोमो ब्राह्मणानां योग्यो भक्षः, तेन भक्षेण ब्राह्मणान् जिन्विष्यसि प्रीणयिष्यसि, न तु क्षत्रियस्य तव प्रीतिः । तथा सति ते तव राज्ञः प्रजायां संततौ ब्राह्मणकल्पः ईषदसमाप्तो ब्राह्मणः आजनिष्यते । क्षत्रियधर्मेण शौर्येण रहितत्वात्तस्य ब्राह्मणसदृशत्वम् । स च पुत्रो ब्राह्मणवत् वक्ष्यमाणगुणचतुष्टयोपेतो भवति । आदानं प्रतिग्रहः, तच्छील आदायी । प्रतिग्रहश्च ब्राह्मणगुणः । ऋत्विग्भूत्वा सोमं आ समन्तात् पाययतीति आपायी । तदेतद्याजनमपि ब्राह्मणगुणः । अवसं अन्नं, तस्य संबन्धि याचनं आवसः, तमावसमेति प्राप्नोति इत्यावसायी । परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः । कामं इच्छां अनतिक्रम्य यथाकामं तदनुसारेण प्रयाप्यः निर्वासयितुं शक्यः, क्षत्रियवैश्यादिवत् शौर्यधनाद्यभावात् यः कोऽप्यागत्य दुर्बलं ब्राह्मणं तद्गृहात्तदीयग्रामाद्वा निष्कासयितुमिच्छति, तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निःसारयितुं शक्यते । एवमेते चत्वारो धर्मा ब्राह्मणगुणाः । सोमं भक्षयतो राज्ञ एतद्गुणकः पुत्रो जायते । किंच यदा प्रमादात्क्षत्रियाय पापं क्षत्रियस्य किंचिन्निषिद्धाचरणं भवति, तदानीं तेन पापेन तस्य क्षत्रियस्य प्रजायां संततौ ब्राह्मणकल्पः शौर्यराहित्यादिना ब्राह्मणसदृशः पुत्र आजायते । अस्मात्पापिनः क्षत्रियात् द्वितीयो वा तृतीयो वा पुत्रो वा पौत्रो वा ब्राह्मणतामभ्युपैतोः शौर्यादिगुणरहितं ब्राह्मण्यं प्राप्तुं ईश्वरः समर्थो भवति । स ब्राह्मणसदृशः क्षत्रियपुत्रो ब्राह्मणबन्धवेन ब्राह्मणानां क्रमबन्धुत्वेन ब्राह्मणोचितयाच्ञादिना जिज्यूषितो जीवितुमिष्टः, नीचरूपदैन्यवृत्त्या जीवितुं प्रवृत्तो भवतीत्यर्थः । ऐब्रासा.

**अथ यदि दधि, वैश्यानां स भक्षः, वैश्यांस्तेन भक्षेण जिन्विष्यसि । वैश्यकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य बलिकृदन्यस्याऽऽद्यो यथाकामज्येयः । यदा वै क्षत्रियाय पापं भवति वैश्य-**

**कल्पोऽस्य प्रजायामाजायते । ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा वैश्यतामभ्युपैतोः । स वैश्यतया जिज्यूषितः ॥**

सोमस्य भक्षत्वे दोषमुक्त्वा दध्नो भक्षत्वे दोषमाह– अथेति । यदि ते दधिरूपं भक्षमाहरेत्तदा दध्नो वैश्यभक्षत्वात्तेन वैश्यान् प्रीणयिष्यसि । तव संततौ वैश्यसमानः पुत्रः आजनिष्यते । वैश्यश्च वाणिज्यं कुर्वन्नन्यस्य राज्ञो बलिकृत् बलिं पूजां करोति, करं प्रयच्छतीत्यर्थः । अत एवान्यस्य राज्ञः आद्यो भक्ष्यः अधीनो भवतीत्यर्थः । तस्य राज्ञः कामं इच्छां अनतिक्रम्य ज्येयः अभिभवनीयः भवति । 'ज्या अभिभवे' इति धातुः । त एते करप्रदानपराधीनत्वतिरस्कार्यत्वाख्या वैश्यगुणाः । यदा क्षत्रियस्य किंचित् पापं संभवति तदा तस्य संततौ वैश्यसदृशः पुत्रो जायते । अस्मात्क्षत्रियात्पापिनः अन्यः पुत्रः पौत्रो वा वैश्यतां प्राप्तुं समर्थो भवति । स च वैश्यवृत्त्या करप्रदानादिना जीवितुं प्रवृत्तो भवति । ऐब्रासा.

**अथ यद्यपः, शूद्राणां स भक्षः, शूद्रांस्तेन भक्षेण जिन्विष्यसि । शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यः । यदा वै क्षत्रियाय पापं भवति शूद्रकल्पोऽस्य प्रजायामाजायते । ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतोः । स शूद्रतया जिज्यूषितः ॥**

दधिभक्षे दोषमुक्त्वा जलभक्षे दोषमाह-- अथेति । यदि ते क्षत्रियस्य कश्चिदृत्विक् अपः जलभक्षं आहरेत्, तदानीं स जलात्मकः शूद्राणां भक्षः तेन भक्षेण शूद्रान् प्रीणयिष्यसि । ततस्तव संततौ शूद्रसदृशः पुत्र उत्पद्यते । शूद्रश्चान्यस्य उत्तमवर्णत्रयस्य प्रेष्यः प्रेषणीयः भृत्यो भवति । तथा कामोत्थाप्यः मध्यरात्रादौ यदाकदाचिद्दिन इच्छा भवति तदानीमयमुत्थाप्यते । तथा तदीयं कामं इच्छामनतिक्रम्य वध्यः कुपितेन स्वामिना ताड्यो भवति । एते शूद्रगुणाः । क्षत्रियस्य कदाचित् पापे सति शूद्रसमानः पुत्रो जायते । तस्मात्क्षत्रियादन्यः पुत्रः पौत्रो वा शूद्रत्वं प्राप्तुं समर्थो भवति । स पुत्रः शूद्रतया शूद्रवर्णतया दासत्ववृत्त्या जीवितुं प्रवृत्तो भवति । ऐब्रासा.

**एते वै ते त्रयो भक्षा राजन्निति होवाच येषामाशां नेयात्क्षत्रियो यजमानः ॥**

अथ क्षत्रियोचितं भक्षं दर्शयितुं उक्तानां भक्षाणां क्षत्रियेण हेयतां संगृह्याऽऽह– एत इति । क्षत्रियो यागं कुर्वन् येषां भक्षाणां आशां इच्छामपि नेयात् न प्राप्नुयात्, हे राजन् विश्वंतर, ते त्रयोऽप्येते पूर्वमुक्ताः । ऐब्रासा.

**अथास्यैष स्वो भक्षः । न्यग्रोधस्यावरोधाश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाण्यभिषुणुयात् । तानि भक्षयेत् । सोऽस्य स्वो भक्षः ॥**

उपादेयं भक्षं दर्शयति– अथेति । अथ हेयभक्षकथनानन्तरं उपादेयो भक्षः कथ्यत इति शेषः । अस्य राज्ञ एष वक्ष्यमाणः स्वो भक्षः । कोऽसाविति सोऽभिधीयते– न्यग्रोधस्यावरोधाः शाखाभ्योऽवाङ्मुखत्वेन प्ररोहन्तो मूलविशेषाः । तथैवोदुम्बराश्वत्थप्लक्षाख्यानां वृक्षाणां फलानि च । तानि सर्वाण्यभिषुणुयात् । अभिषुत्य च तानि रसं भक्षयेत् । सोऽयमस्य क्षत्रियस्य स्वोचितो भक्षः । ऐब्रासा.

**यतो वा अधि देवा यज्ञेनेष्ट्वा स्वर्गं लोकमायन् । तत्रैतांश्चमसान्न्युब्जन् । ते न्यग्रोधा अभवन् । न्युब्जा इति हाप्येनानेतर्ह्याचक्षते कुरुक्षेत्रे । ते ह प्रथमजा न्यग्रोधानाम् । तेभ्यो हान्येऽधिजाताः ॥**

अथ न्यग्रोधप्रशंसार्थं तदुत्पत्तिं दर्शयति– यत इति । देवाः पुरा यतो वा अधि यस्य कुरुक्षेत्रस्योपरि यज्ञेनेष्ट्वा स्वर्गं लोकमायन् प्राप्नुवन् तत्र तस्मिन् यज्ञदेशे एतान् सोमचमसान् न्युब्जन् अधोमुखानस्थापयन् । अधोमुखास्ते चमसा न्यग्रोधवृक्षा अभवन् । एतर्हि इदानीमपि तस्मिन्कुरुक्षेत्रे एनान्न्यग्रोधवृक्षान् न्युब्जा इत्यनेन नाम्नाऽऽचक्षते । ते कुरुक्षेत्रदेशस्था वृक्षा भूलोकवर्तिनां सर्वेषां न्यग्रोधवृक्षाणां मध्ये प्रथमजाः प्रथमत उत्पन्नाः ।

तेभ्यः तद्देशवर्तिन्यग्रोधवृक्षेभ्यः अन्ये देशान्तरवर्तिनः न्यग्रोधाः अभिजाताः आधिक्येनोत्पन्नाः । ऐब्रासा.

**ते यन्न्यञ्चोऽरोहंस्तस्मान्यङ्रोहति न्यग्रोहः । न्यग्रोहो वै नाम तत् । न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥**

न्यग्रोधशब्दं निर्वक्ति– त इति । ते चमसा यत् यस्मात्कारणात् न्यञ्चः अधोमुखाः अरोहन् प्रादुर्भूताः तस्मात्कारणान्यङ् अधोमुखो रोहति प्रादुर्भवतीति व्युत्पत्त्या न्यग्रोहः संपन्नः । स च वस्तुतो न्यग्रोह इत्येव नामार्हति, तस्य नाम्नो व्युत्पत्त्यनुसारित्वात् । तथापि न्यग्रोहं सन्तं वृक्षं लौकिका हकारस्य धकारादेशं कृत्वा न्यग्रोध इति परोक्षनाम्ना व्यवहरन्ति, देवानां पूज्यानामाचार्योपाध्यायादीनां परोक्षनामप्रियत्वात् । ऐब्रासा.

**तेषां यश्चमसानां रसोऽवाङैत्तेऽवरोधा अभवन् । अथ य ऊर्ध्वस्तानि फलानि ॥**

न्यग्रोधवृक्षस्योत्पत्तिमुक्त्वा तदीयानामवरोधानां फलानां चोत्पत्तिं दर्शयति– तेषामिति । तेषां अधोमुखत्वेनावस्थितानां चमसानां वटवृक्षत्वे सति चमसगतो यो रसः सोऽवाङैत् अधोमुखोऽगच्छत् । ते रसविशेषाः अवरोधाः अधोमुखत्वेनोत्पन्नाः वटशाखाभ्यो निर्गता मूलविशेषा अभवन् । अथ तद्वैलक्षण्येन यो रस ऊर्ध्वो निरगच्छत्तानि रसरूपाणि वटफलान्यभवन् । ऐब्रासा.

**एष ह वाव क्षत्त्रियः स्वाद्भक्षान्नैति यो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयति । उपाह परोक्षेणैव सोमपीथमाप्नोति । नास्य प्रत्यक्षं भक्षितो भवति । परोक्षमिव ह वा एष सोमो राजा यन्न्यग्रोधः । परोक्षमिवैष ब्रह्मणो रूपमुपनिगच्छति यत्क्षत्त्रियः पुरोधयैव दीक्षयैव प्रवरेणैव ॥**

तेषामेवावरोधानां फलानां च क्षत्त्रियभक्षत्वं प्रशंसति– एष इति । यः पुमान् न्यग्रोधवृक्षस्यावरोधांश्चाधोमुखानि मूलानि च तत्फलानि च भक्षयति एष एव क्षत्त्रियः स्वोचिताद्भक्षान्नापैति । किंचायं क्षत्त्रियः परोक्षेणैव न्यग्रोधव्यवधानेनैव सोमपीथं सोमपानं उपाह प्राप्नोति सर्वथा प्राप्नोति । अस्य क्षत्त्रियस्य प्रत्यक्षं अव्यवधानं यथा भवति तथा सोमो भक्षितो न भवति, न्यग्रोधेन व्यवहितत्वात् । योऽयं न्यग्रोधः एष परोक्षमेव यथा भवति तथा वर्तमानः सोमो राजा । योऽयं क्षत्त्रियोऽस्त्येषोऽपि परोक्षमिव व्यवधानेनैव ब्राह्मणो भूत्वा रूपं तदीयवेषमुपनिगच्छति, पुरोधयैव पुरोहितद्वारेण दीक्षयैव दीक्षारूपसंस्कारेण च प्रवरेणैव पुरोहितगोत्रेण च ब्राह्मण्यस्य संपादितत्वादिति शेषः । ऐब्रासा.

**क्षत्त्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः । क्षत्त्रं राजन्यः । नितत इव हीह क्षत्त्रियो राष्ट्रे वसन्भवति प्रतिष्ठित इव । नितत इव न्यग्रोधोऽवरोहैर्भूम्यां प्रतिष्ठित इव ॥**

प्रकारान्तरेण न्यग्रोधक्षत्त्रिययोः साम्यमापाद्य प्रशंसति– क्षत्त्रमिति । यो न्यग्रोधोऽस्ति एतन्न्यग्रोधस्वरूपं वनस्पतीनां मध्ये क्षत्त्रं वै क्षत्त्रियजातिरेव । राजन्यः देशाधिपतिरपि क्षत्त्रं मनुष्याणां मध्ये क्षत्त्रियजातिः । किंचायं क्षत्त्रियः इह राष्ट्रे स्वदेशे वसन्नितत इव हि तत्तद्ग्रामेषु संचरणेन नितरां संतत एव भवति । तथा प्रतिष्ठित इव राज्यस्थैर्येण चलनरहित एव भवति । न्यग्रोधवृक्षोऽप्यधोमुखैरवरोधैर्नितत इव नितरां व्याप्त एव भवति । तथा भूम्यां प्रतिष्ठित इव स्थिर एव भवति । तस्मादस्त्युभयोः साम्यम् । ऐब्रासा.

**तद्यत्क्षत्त्रियो यजमानो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्यात्मन्नेव तत्क्षत्त्रं वनस्पतीनां प्रतिष्ठापयति, क्षत्त्र आत्मानम् ॥**

न्यग्रोधवृक्षमुपसंहरति–तदिति । तत् तस्मात् न्यग्रोधक्षत्त्रिययोः सादृश्यसद्भावात् यः क्षत्त्रियः पुरुषो यागं कुर्वन् न्यग्रोधवृक्षस्यावरोधान् फलानि च भक्षयेत् तदानीं वनस्पतीनां संबद्धं क्षत्त्रं क्षत्त्रियजातिं आत्मन्येव स्वोदरमध्ये एव प्रतिष्ठापयति । तथैवाऽऽत्मानं स्वस्वरूपं वनस्पतिसंबन्धिनि क्षत्त्रे न्यग्रोधे प्रतिष्ठापयति । ऐब्रासा.

**क्षत्त्रे ह वै स आत्मनि क्षत्त्रं वनस्पतीनां प्रतिष्ठापयति । न्यग्रोध इवावरोधैर्भूम्यां प्रति राष्ट्रे**

**तिष्ठति । उग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्त्रियो यजमानः ॥**

उपसंहृतं तं भक्षं पुनरपि प्रशंसति— क्षत्त्र इति । यः क्षत्त्रियो यागं कुर्वन्नेतं न्यग्रोधसंबन्धिनं भक्षं भक्षयति स क्षत्त्रियः स्वयं वनस्पतीनां संबन्धिनि क्षत्त्रे न्यग्रोधे प्रतिष्ठितः सन्नात्मनि स्वस्मिन् वनस्पतीनां संबन्धि क्षत्त्रं न्यग्रोधं प्रतिष्ठापयति । यथा न्यग्रोधोऽवरोधैर्भूम्यां प्रतिष्ठितः एवमयं राजा राष्ट्रे प्रतितिष्ठति । अस्य राष्ट्रमुग्रं तेजस्वि सत् अव्यथ्यं केनापि व्यथितुमशक्यं भवति ।

ऐब्रासा.

**अथ यदौदुम्बराणि । ऊर्जो वा एषोऽन्नाद्याद्वनस्पतिरजायत यदुदुम्बरः । भौज्यं वा एतद्वनस्पतीनाम् । ऊर्जमेवास्मिंस्तदन्नाद्यं भौज्यं च वनस्पतीनां क्षत्त्रे दधाति ॥**

न्यग्रोधस्यावरोधान् फलानि च प्रशस्यौदुम्बरादिप्रशंसां क्रमेण दर्शयति— अथेति । अथ न्यग्रोधप्रशंसानन्तरं उदुम्बरप्रशंसा कथ्यते । यत् यान्यौदुम्बराणि फलानि भक्षत्वेनोक्तानि तेषामुत्पादको यदुदुम्बरोऽस्त्येष ऊर्जः रसात् अन्नाद्याच्च वनस्पतिरूपोऽजायत । एतदुदुम्बरफलं वनस्पतीनां मध्ये भौज्यं वै भोजनार्हमेव । तत्तेन औदुम्बरभक्षेण अस्मिन् क्षत्त्रे ऊर्जमेव रसमेव तथाऽन्नाद्यं वनस्पतीनां मध्ये भोजनयोग्यं द्रव्यमवस्थापयति ।

ऐब्रासा.

**अथ यदाश्वत्थानि । तेजसो वा एष वनस्पतिरजायत यदश्वत्थः । साम्राज्यं वा एतद्वनस्पतीनाम् । तेज एवास्मिंस्तत्साम्राज्यं च वनस्पतीनां क्षत्त्रे दधाति ॥**

अश्वत्थफलानि प्रशंसति—अथेति । अथ औदुम्बरप्रशंसानन्तरं अश्वत्थफलानि प्रशस्यन्ते । यान्यश्वत्थफलानि सन्ति तेषां जनको योऽश्वत्थ एष वनस्पतिस्तेजस एवोदपद्यत । एतदश्वत्थफलं वनस्पतीनां संबन्धि साम्राज्यस्वरूपमेव । तत् तेन अश्वत्थफलभक्षेण तेज एव वनस्पतीनां साम्राज्यं चास्मिन् क्षत्त्रे स्थापयति ।

ऐब्रासा.

**अथ यत्प्लाक्षाणि । यशसो वा एष वनस्पतिरजायत यत्प्लक्षः । स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनाम् । यश एवास्मिंस्तत्स्वाराज्यवैराज्ये च वनस्पतीनां क्षत्त्रे दधाति ॥**

प्लक्षफलानि प्रशंसति—अथेति । अथ अश्वत्थप्रशंसानन्तरं यानि प्लक्षफलानि विद्यन्ते तानि प्रशस्यन्ते । योऽयं प्लक्षोऽस्त्येष वनस्पतिर्यशस एवोत्पन्नः । एतत्प्लक्षफलं वतस्पतीनां संबन्धि स्वाराज्यवैराज्यरूपम् । स्वातन्त्र्येण राजत्वं स्वाराज्यम् । विशेषेण राजत्वं वैराज्यम् । तत् तेन प्लक्षफलेन अस्मिन् क्षत्त्रे यशश्च स्वाराज्यवैराज्ये च संपादयति ।

ऐब्रासा.

**एतान्यस्य पुरस्तादुपक्लृप्तानि भवन्ति । अथ सोमं राजानं क्रीणन्ति । ते राज्ञ एवाऽऽवृतौपवसथात्प्रतिवेशैश्चरन्ति । अथौपवसथ्यमहः । एतान्यध्वर्युः पुरस्तादुपकल्पयेत— अधिषवणं चर्माधिषवणे फलके द्रोणकलशं दशापवित्रमद्रीन्पूतभृतं चाऽऽधवनीयं च स्थालीमुदञ्चनं चमसं च । तद्यदेतद्राजानं प्रातरभिषुण्वन्ति तदेनानि द्वेधा विगृह्णीयादभ्यन्यानि सुनुयान्माध्यंदिनायान्यानि परिशिंष्यात् ॥**

भक्षद्रव्यं प्रशस्य तस्य प्रयोगमाह— एतानीति । एतानि न्यग्रोधावरोधादीनि अस्य राज्ञोऽर्थे सोमक्रयात्पूर्वमुपक्लृप्तानि संपादितानि भवन्ति, तत ऊर्ध्वं सोमक्रयः । ततस्तेऽध्वर्युप्रभृतयो राज्ञ एवाऽऽवृता सोमस्यैव प्रकारेणौपवसथाद्दिनात्पूर्वं प्रतिवेशैः प्रसिद्धैः क्रियाविशेषैश्चरन्त्यनु( ति )ष्ठेयुः । अथ अनन्तरं औपवसथ्यमहः । औपवसथ्येऽहन्यध्वर्युः पुरस्तात् प्रथमं एतानि वक्ष्यमाणानि चर्मादीन्युपकल्पयेत्( ? त) संपादयेत् । यस्मिंश्चर्मणि सोमोऽभिषूयते तच्चर्म अधिषवणाख्यम् । ययोः फलकयोरभिषूयते ते फलके अधिषवणसंज्ञके । द्रोणकलशं प्रौढदारुपात्रम् । दशापवित्रं वस्त्रम् । अद्रयः अभिषवणार्था ग्रावाणः । पूतभृदाधवनीयौ पात्रविशेषौ । स्थाली कुम्भः । उदञ्चनं उन्नयनपात्रम् । चमसः भक्षार्थं दारुपात्रम् । एतान्यध्वर्युः संपाद्य तत ऊर्ध्वं यत् यदा

एतदेतं राजानं प्रातःकालेऽभिषुण्वन्ति तत् तदानीमेतानि न्यग्रोधावरोधादीनि द्वेधा विभजेत् । तत्रान्यानि एकभागगतानि तस्मिन् प्रातःसवनेऽभिषुणुयात् । इतरभागगतानि तु माध्यंदिनसवनाय स्थापयेत् ।

ऐब्रासा.

**तद्यत्रैतांश्चमसानुन्नयेयुस्तदेतं यजमानचमसमुन्नयेत् । तस्मिन्द्वे दर्भतरुणके प्रास्ते स्याताम् । तयोर्वषट्कृतेऽन्तःपरिधि पूर्वं प्रास्येत् 'दधिक्राव्णो अकारिषम्' इत्येतयर्चा सस्वाहाकारया । अनुवषट्कृतेऽपरं 'आ दधिक्राः शवसा पञ्च कृष्टीः' इति ॥**

अथास्य फलचमसोन्नयनादिप्रयोगं दर्शयति— तदिति । तत ऊर्ध्वं यत्र यदा एतान् ब्रह्महोत्रादिचमसान् दशसंख्याकान् उन्नयेयुः तत् तदानीं यजमानस्य राज्ञश्चमसमुन्नयेत् । अभिषुतेन न्यग्रोधावरोधादिना पूरयेत् । तस्मिन् पूरिते चमसेऽल्पं दर्भद्वयं प्रक्षिप्य तयोर्मध्ये प्रथमप्रक्षिप्तं दर्भं वषट्कृते वषट्कारे कृते सति 'दधिक्राव्णः' इत्येतयर्चा स्वाहाकारसहितया परिधीनामन्तः प्रक्षिपेत् । अनुवषट्कृते अनुवषट्कारे कृते सति अपरं दर्भं 'आ दधिक्राः' इत्यनयर्चा पूर्ववत् स्वाहाकारसहितया परिधीनामन्तः प्रक्षिपेत् ।

ऐब्रासा.

**तद्यत्रैतांश्चमसानाहरेयुस्तदेतं यजमानचमसमाहरेत् । तान्यत्रोद्गृह्णीयुस्तदेनमुपोद्गृह्णीयात् । तद्यदेळां होतोपह्वयेत यदा चमसं भक्षयेदथैनमेतया भक्षयेत् ॥**

अथास्य फलचमसस्य भक्षणं विधत्ते— तदिति । ततः होमादूर्ध्वं यत्र यदा एतान् होत्रादीनां चमसान् ऋत्विज आहरेयुः तत् तदानीमेतं यजमानस्य राज्ञः चमसमाहरेत् । तानाहृतान् होत्रादिचमसान् यत्र यदा उद्गृह्णीयुः भक्षणार्थमूर्ध्वं धारयेयुः तत् तदानीं एतं यजमानस्य राज्ञः चमसमुपोद्गृह्णीयात् ऊर्ध्वं धारयेत् । तत ऊर्ध्वं यदा होता इळामुपह्वयेत, उपहूय च स्वकीयं चमसं यदा भक्षयेत्, अथ तदानीमेनं यजमानचमसं एतया वक्ष्यमाणयर्चा राजा भक्षयेत् ।

ऐब्रासा.

**'यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि ॥ इति ॥**

तामृचं पठति— यदिति । रसिनः रसयुक्तस्य सुतस्य अभिषुतस्य अवरोधादिद्रव्यस्य अत्र पात्रे यच्छिष्टं योऽवशिष्टो भागः यच्च पात्रस्थं द्रव्यं इन्द्रः शचीभिः कर्मविशेषैः संस्कृतमपिबत् । शचीशब्दः कर्मनामसु पठितः । अस्य द्रव्यस्य संबन्धि तदिदं शिष्टं शिवेन भक्तियुक्ततया मङ्गलेन मनसा इह कर्मणि सोमं राजानं सोमराजरूपं भावयित्वा भक्षयामि ।

ऐब्रासा.

**'शिवो ह वा अस्मा एष वानस्पत्यः शिवेन मनसा भक्षितो भवति । उग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः ॥**

तदिदं समन्त्रकभक्षणं प्रशंसति— शिव इति । यः क्षत्रियो यजमान एवं उक्तेन प्रकारेण एतं फलचमसरूपं भक्षं भक्षयति अस्मै यजमानाय एष वानस्पत्यः वानस्पत्यो भक्षः शिवो ह वै मङ्गलः हितकारी भूत्वा शिवेन मनसा भक्तियुक्तेन मङ्गलेन मनसा भक्षितो भवति । अस्य राज्ञो राष्ट्रं उग्रं शत्रूणामभिभवनायोग्ररूपं भूत्वा केनाप्यव्यथ्यं व्यथयितुमशक्यं भवति । भयं चलनं वा कदाचिदपि नास्य राष्ट्रस्य भवतीत्यर्थः ।

ऐब्रासा.

**'शं न एधि हृदे पीतः प्र ण आयुर्जीवसे सोम तारीः' इत्यात्मनः प्रत्यभिमर्शः ॥**

भक्षणादूर्ध्वं मन्त्रेणाऽऽत्मस्पर्शं विधत्ते— शमिति । हे सोम सोमस्थानीयावरोधादिभक्ष, अस्माभिः पीतः सन् नः अस्माकं हृदये शं एधि सुखहेतुर्भव । जीवसे चिरजीवनाय नः अस्माकं आयुः प्रतारीः प्रकर्षेण संपादय । इत्यनेन मन्त्रेणाऽऽत्मनः स्वकीयहृदयस्य प्रत्यभिमर्शः हस्तेन संपूर्णः स्पर्शः कर्तव्यः ।

ऐब्रासा.

---

(१) ऐब्रा. ३५।७. शेषाः स्थलादिनिर्देशाः (राका. पृ. १७९) इत्यत्र द्रष्टव्याः ।

(२) ऐब्रा. ३५।७-८.

**ईश्वरो ह वा एषोऽप्रत्यभिमृष्टो मनुष्यस्याऽऽयुः प्रत्यवहर्तोरनर्हन्मा भक्षयतीति। तद्यदेतेनाऽऽत्मानमभिमृशत्यायुरेव तत्प्रतिरते ॥**

अथान्वयव्यतिरेकाभ्यामभिमर्शं प्रशंसति— ईश्वर इति। एषः अवरोधादिभक्षः अप्रत्यभिमृष्टः मन्त्रपूर्वकात्मस्पर्शरहितः सन् मनुष्यस्य राज्ञ आयुः प्रत्यवहर्तोः विनाशयितुं ईश्वरः समर्थः भवति। केनाभिप्रायेणेति सोऽभिधीयते— अनर्हन् भक्षयितुमयोग्यः सन् मा भक्षयतीति तस्य भक्षस्याभिप्रायः। सोऽयं व्यतिरेकः। तद्यदित्यादिरन्वयः। तत् तदा भक्षणादूर्ध्वं यथैतेन 'शं नः' इत्यादिमन्त्रेणाभिमृशति तत् तेनाभिमर्शनेन आयुरेव प्रतिरते प्रकर्षेण वर्धयति। ऐब्रासा.

**'आप्यायस्व समेतु ते, सं ते पयांसि समु यन्तु वाजाः' इति चमसमाप्याययत्यभिरूपाभ्याम्। यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥**

द्वाभ्यामृग्भ्यां तस्य चमसस्य पूरणं विधत्ते— आप्यायस्वेति। प्रथमायामृचि 'आप्यायस्व' इति श्रवणात् द्वितीयस्यास्तृतीयपादे च 'आप्यायमानः' इति श्रवणादिदं मन्त्रद्वयं आप्यायनस्याभिरूपं अनुकूलम्। यज्ञे यदङ्गं अभिरूपं अनुकूलं क्रियते तदङ्गं समृद्धं संपूर्णं भवति। ऐब्रासा.

**तद्यत्रैतांश्चमसान्सादयेयुस्तदेतं यजमानचमसं सादयेत्। तान्यत्र प्रकम्पयेयुस्तदेनमनु प्रकम्पयेत्। अथैनमाहृतं भक्षयेत्। 'नराशंसपीतस्य देव सोम ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामि' इति प्रातःसवने नाराशंसो भक्षः। ऊर्वैरिति माध्यंदिने। काव्यैरिति तृतीयसवने ॥**

भक्षिताप्यायितस्य नाराशंससंज्ञस्य चमसस्य प्रयोगं विधत्ते— तदिति। तत् तस्मादाप्यायनादूर्ध्वं यत्र यदा एतान् होत्रादीनां चमसानाप्यायितान् सादयेयुः तदानीं एतं यजमानस्य राज्ञश्चमसं सादयेत्। तान् होत्रादीनां चमसान् यदा प्रकम्पयेयुः तदैवैनं राजचमसमनु प्रकम्पयेत्। अथ अनन्तरं एनं चमसं भक्षणार्थमाहृतं 'नराशंस' इत्यादिमन्त्रेण भक्षयेत्। हे (सोम) सोमसदृश फलचमस देव, नराशंसपीतस्य, नराः मनुष्याः ऋभुप्रमुखाः शस्यन्ते यस्मिन् सवनविशेषे सोऽयं नराशंसः, तत्र देवैः पीतस्य ऊमनामभिः पितृभिश्च भक्षितस्य मतिविदः अस्मदभिप्रायाभिज्ञस्य ते भक्षयामि। इति अनेन मन्त्रेण प्रातःसवने नाराशंसचमससंबन्धी भक्षः कर्तव्यः। इतरयोस्तु सवनयोः तस्मिन् मन्त्रे ऊमैः इत्यस्य पदस्य स्थाने 'ऊर्वैः, काव्यैः' इति पदद्वयं क्रमेण पठनीयम्। ऐब्रासा.

**ऊमा वै पितरः प्रातःसवने, ऊर्वा माध्यंदिने, काव्यास्तृतीयसवने। तदेतत्पितृनेवामृतान्सवनभाजः करोति ॥**

त्रिविधमन्त्रतात्पर्यं दर्शयति— ऊमा इति। ऊमाः ऊर्वाः काव्याः इत्येते सवनत्रयगताः पितृविशेषाः। अतस्तच्छब्दप्रयोगेण तान् पितॄन् सवनभाजः करोति। पितरश्च द्विविधाः— मृता अमृताश्च। इदानीं मनुष्याः सन्तो मरणादूर्ध्वं पितृलोकं प्राप्ता मृताः। सृष्टिमारभ्य पितृलोकेऽवस्थिता अमृता ऊमादयः तथाविधत्वादमृतशब्देन विशेष्यन्ते। ऐब्रासा.

**सर्वो हैव सोऽमृत इति ह स्माऽऽह प्रियव्रतः सोमापो यः कश्च सवनभागिति ॥**

अथ मन्त्रतात्पर्ये मतान्तरं दर्शयति— सर्व इति। न केवलमूमादय एव पितरः प्रसिद्धा अमृताः, किंतु यः कोऽपि पिता सवनभाग्भवति स सर्वोऽप्यूमादिशब्दैरुपलक्षितत्वादमृत एव भवतीति सोमापः सोमपः प्रियव्रताख्यो महर्षिराह स्म। ऐब्रासा.

**अमृता ह वा अस्य पितरः सवनभाजो भवन्ति, उग्रं हास्य राष्ट्रमव्यथ्यं भवति, य एवमेतं भक्षं भक्षयति क्षत्त्रियो यजमानः ॥**

इदानीं नराशंसचमसभक्षं प्रशंसति— अमृता इति। अस्य राज्ञो भक्षयितुः पितरः पितृपितामहादयः सर्वेऽपि सवनभाजः सन्तः अमृताः मरणरहिताः देवा भवन्ति। उग्रमित्यादि पूर्ववत्। ऐब्रासा.

**समान आत्मनः प्रत्यभिमर्शः समानमाप्यायनं चमसस्य ॥**

'शं नः' इत्यादिमन्त्रेण स्वदेहस्पर्शनं 'आप्यायस्व' इति मन्त्रद्वयेन चमसपूरणं च प्रातःसवने यदुक्तं तदुत्तरयोः सवनयोरतिदिशति– समान इति । ऐब्रासा.

**प्रातःसवनस्यैवाऽऽवृता प्रातःसवने चरेयुः । माध्यंदिनस्य माध्यंदिने । तृतीयसवनस्य तृतीयसवने ॥**

फलचमसे विद्यमानं प्रयोगविशेषं अभिधाय अवशिष्टं सोमचमसगतं प्रयोगं सवनत्रयेऽप्यतिदिशति–प्रातरिति । सोमविषयस्य प्रातःसवनस्यैव आवृता प्रकारेण फलचमसविषयप्रातःसवने चरेयुः अनु( ति )ष्ठेयुः । एवमितरत्रापि योज्यम् । ऐब्रासा.

**तमेवमेतं भक्षं प्रोवाच रामो मार्गवेयो विश्वंतराय सौषद्मनाय ॥**

उक्तं फलचमसभक्षमुपसंहरति– तमिति । ऐब्रासा.

**तस्मिन् होवाच प्रोक्ते– सहस्रमु ह ब्राह्मण तुभ्यं दद्मः, सश्यापर्ण उ मे यज्ञ इति ॥**

अथ विश्वंतरस्य वाक्यं दर्शयति– तस्मिन्निति । तस्मिन् राजभक्षे रामेण प्रोक्ते सति स राजा रामं प्रत्येवमुवाच– हे ब्राह्मण राम, तुभ्यं वयं सहस्रमु ह गवां सहस्रं संपूर्णं दद्मः । पुरा मे यज्ञो विश्यापर्ण आसीत् । इदानीं तु सश्यापर्ण एवास्तु । भवदीयाः श्यापर्णनामकाः सर्वे ब्राह्मणा अस्मिन् यज्ञे वसन्त्विति । ऐब्रासा.

**एतमु हैव प्रोवाच तुरः कावषेयो जनमेजयाय पारिक्षिताय । एतमु हैव प्रोचतुः पर्वतनारदौ सोमकाय साहदेव्याय, सहदेवाय सार्ञ्जयाय, बभ्रवे दैवावृधाय, भीमाय वैदर्भाय, नग्नजिते गान्धाराय । एतमु हैव प्रोवाचाग्निः सनश्रुताय अरिंदमाय, क्रतुविदे जानकये । एतमु हैव प्रोवाच वसिष्ठः सुदासे पैजवनाय । ते ह ते सर्वे एव महज्जग्मुरेतं भक्षं भक्षयित्वा । सर्वे हैव महाराजा आसुः । आदित्य इव ह स्म श्रियां प्रतिष्ठितास्तपन्ति सर्वाभ्यो दिग्भ्यो बलिमावहन्तः ॥**

इदानीं संप्रदायकथनेन भक्षं प्रशंसति– एतमिति । एतं पूर्वोक्तमेव भक्षं कवषस्य पुत्रः तुरनामको महर्षिः परिक्षित्पुत्राय जनमेजयसंज्ञकाय प्रोवाच । अयमेकः संप्रदायः । तथैतमेव भक्षं पर्वतनारदाख्यावृषी सहदेवस्य पुत्राय सोमकाय प्रोचतुः । सोमकश्चान्यस्मै सहदेवाय प्रोवाच । सहदेवश्च सार्ञ्जयाय प्रोवाच । सार्ञ्जयश्च बभ्रवे प्रोवाच । बभ्रुश्च दैवावृधाय प्रोवाच । दैवावृधश्च भीमाय प्रोवाच । भीमश्च वैदर्भाय प्रोवाच । वैदर्भश्च नग्नजिते प्रोवाच । नग्नजिच्च गान्धाराय प्रोवाच । अयं द्वितीयः संप्रदायः । तथैतमेव भक्षं अग्निनामको महर्षिः सनश्रुताय प्रोवाच । सनश्रुतश्चारिंदमाय प्रोवाच । अरिंदमश्च क्रतुविदे प्रोवाच । क्रतुविच्च जानकये प्रोवाच । अयं तृतीयः संप्रदायः । तथैतमेव भक्षं वसिष्ठो महर्षिः सुदासे महर्षये प्रोवाच । सुष्ठु धनं दासतीति सुदाः । अथवा सुष्ठु शत्रून् दस्यति उपक्षयतीति सुदाः । स च पैजवनाय प्रोवाच । * यद्वा 'सहदेवाय सार्ञ्ज(या)य' इत्यादिषु वाक्येषु सहदेवादिनाम्नां सार्ञ्जयादिपदानि विशेषणतया योज्यानि । द्वितीयस्तच्छब्द एतच्छब्दार्थः । ते हैते तुरादयः पैजवनान्ताः सर्वे एव पुरुषा एतं फलचमसभक्षं भक्षयित्वा महज्जग्मुः महत्त्वं प्राप्ताः । महत्त्वस्यैव 'सर्वे ह' इत्यादिकं विवरणम् । सर्वेऽप्येते महाराजाः सार्वभौमा आसुः । यथाऽऽदित्यो द्युलोके प्रतिष्ठितस्तपत्येवमेते श्रियां गजाश्वादिकायां संपदि प्रतिष्ठिताः सन्तस्तपन्ति शत्रूणां तापं कुर्वन्ति । तथा सर्वाभ्यो दिग्भ्यः सर्वदिगवस्थितेभ्यो राजभ्यः सकाशाद्बलिमावहन्तः करमाददानाः स्वामिनो भवन्ति । ऐब्रासा.

**आदित्य इव ह वै श्रियां प्रतिष्ठितस्तपति, सर्वाभ्यो दिग्भ्यो बलिमावहति, उग्रं हास्य राष्ट्रमव्यथ्यं भवति, य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानो यजमानः ॥**

नराशंसभक्षं पुनरपि फलकथनेन प्रशंसति– आदित्य इति । पूर्ववद्व्याख्येयम् । अभ्यासोऽध्यायसमाप्त्यर्थः । ऐब्रासा.

---

* 'अयं चतुर्थः संप्रदायः' इति ग्रन्थेनात्र भवितव्यम् ।

राजसूये स्तोत्रशस्त्रविशेषाः

**[1]अथातः स्तुतशस्त्रयोरेव ॥**

'फलाख्यचमसो भक्षो राज्ञो यज्ञे प्रकीर्तितः । उच्यते राजयज्ञेऽस्मिन् विशेषः स्तोत्रशस्त्रयोः ॥' तदेतत्प्रतिजानीते– अथेति । अथ राज्ञो भक्षे विशेषकथनानन्तरं यतः स्तुतशस्त्रयोर्विशेषो जिज्ञासितः अतः कारणात्तयोरेव विशेष उच्यते इति शेषः । ऐब्रासा.

**ऐकाहिकं प्रातःसवनमैकाहिकं तृतीयसवनम् । एते वै शान्ते क्लृप्ते प्रतिष्ठिते सवने यदैकाहिके । शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै ॥**

तं विशेषं वक्तुमादौ विशेषरहितमंशं दर्शयति– ऐकाहिकमिति । एकाहे प्रकृतिभूते यत्प्रातःसवनं, यच्च तृतीयसवनमुक्तं तदुभयं राज्ञो विकृतावपि तथैव प्रयोक्तव्यम्, न तु तयोः कश्चिद्विशेषोऽस्ति । ऐकाहिकें ये उभे प्रातःसवनतृतीयसवने स्तः एते एव शान्ते सुखकरे क्लृप्ते स्वभ्यस्ते प्रतिष्ठिते संपन्ने । अतस्तयोः प्रकृतिवदनुष्ठानं शान्त्यै सुखार्थं क्लृप्त्यै स्वभ्यासार्थं प्रतिष्ठित्यै च संपत्त्यर्थं अप्रच्युत्यै विनाशराहित्यार्थं भवति । ऐब्रासा.

**उक्तो माध्यंदिनः पवमानो य उभयसाम्नो बृहत्पृष्ठस्य । उभे हि सामनी क्रियेते ॥**

यथा प्रातःसवनतृतीयसवनयोः प्राकृताद्विशेषो नास्ति तथा माध्यंदिनसवनेऽपि मरुत्वतीयमैकाहिकं होत्रकशस्त्राणि चैकाहिकानि । स्तोत्रे तु विशेषोऽस्ति तमिमं दर्शयति– उक्त इति । बृहद्रथंतरं चेत्युभयविधं साम यस्मिन्नभिजिदादौ सोऽयमुभयसामा । बृहत्साम पृष्ठं स्तोत्रं यस्मिन्नभिजिदादौ सोऽयं बृहत्पृष्ठः । तादृशस्योभयसाम्नो बृहत्पृष्ठस्याभिजिदादेर्यो माध्यंदिनः पवमान उक्तः स एवात्र राजयज्ञे माध्यंदिनः पवमानो द्रष्टव्यः । न चोभयसामत्वं बृहत्पृष्ठत्वं चोभयं व्याहतमिति शङ्कनीयम्, माध्यंदिनपवमानस्तोत्रे रथंतरं साम पृष्ठस्तोत्रे बृहत्सामेत्येवमुभयसामत्वस्य व्यवस्थितत्वात् । उभे हीत्यनेनेयमेव व्यवस्था स्पष्टीक्रियते । यद्यपि मरुत्वतीयशस्त्रावयवाः प्रतिपदादयः प्राकृता एव तथापि तदनुवादेनात्र प्रशंसा क्रियते । ऐब्रासा.

**'आ त्वा रथं यथोतये, इदं वसो सुतमन्धः' इति राथंतरी प्रतिपद्राथंतरोऽनुचरः । पवमानोक्थं वा एतद्यन्मरुत्वतीयम् । पवमाने वा अत्र रथंतरं कुर्वन्ति बृहत्पृष्ठं सवीवधतायै । तदिदं रथंतरं स्तुतमाभ्यां प्रतिपदनुचराभ्यामनुशंसति ॥**

तत्र प्रतिपदनुचरौ दर्शयति– आ त्वेति । 'आ त्वा रथम्' इति यत्तृचः सोऽयं मरुत्वतीयशस्त्रस्य प्रतिपत् । तस्मिंस्तृचे रथंतरं सामोद्गातृभिर्गीयते । तस्मादियं प्रतिपद्राथंतरी । 'इदं वसो सुतमन्धः' इत्ययं तृचोऽनुचरः, छन्दोदेवतादिना पूर्वेण समानत्वात् । रथंतरसामाधारस्य पूर्वस्य तृचस्यानुसारित्वादस्यापि राथंतरत्वम् । यन्मरुत्वतीयं शस्त्रमस्ति एतत्पवमानोक्थं वै, पवमानस्तोत्रानुसारेण शस्यमानत्वात् । उक्थं शस्त्रम् । तच्च द्विविधम्– पवमानोक्थं ग्रहोक्थं च । अतोऽत्र पवमानोक्थमिति विशेष्यते । अस्मिंश्च माध्यंदिनपवमानस्तोत्रे सामगा रथंतरं साम कुर्वन्ति । पृष्ठस्तोत्रं तु बृहत्सामोपेतं कुर्वन्ति । तदेतदुभयं सवीवधतायै संपद्यते । उभयतः शिक्यद्वयेन जलकुम्भद्वयं वोढुं यः काष्ठविशेषः पुरुषाणामंसे स्थीयते (? स्थाप्यते) स वीवध इत्युच्यते । सामद्वयेऽपि तस्य माध्यंदिनसवनप्रयोगस्य वीवधसदृशत्वाद्वीवधेन सह वर्तत इति सवीवधत्वम् । यदिदं रथंतरं साम माध्यंदिने पवमाने स्तुतं तदिदमाभ्यां 'आ त्वा रथम्, इदं वसो सुतम्' इत्येताभ्यां प्रतिपदनुचराभ्यामनुशंसेत् । ऐब्रासा.

**अथो ब्रह्म वै रथंतरं क्षत्त्रं बृहत् । ब्रह्म खलु वै क्षत्त्रात्पूर्वम् । ब्रह्मपुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदिति । अथान्नं वै रथंतरम् । अन्नमेवास्मै तत्पुरस्तात्कल्पयति । अथेयं वै पृथिवी रथंतरम् । इयं खलु वै प्रतिष्ठा । प्रतिष्ठामेवास्मै तत्पुरस्तात्कल्पयति ॥**

(१) ऐब्रा. ३६।१–४.

ब्रह्मान्नपृथिवीरूपत्वेन रथंतरं प्रशंसति– अथो इति । यद्रथंतरं साम तद्ब्राह्मणजातिस्वरूपम् , उभयोः प्रजापतिमुखजत्वात् । तथा बृहत्सामक्षत्त्रियजात्योः प्रजापतेर्बाहुजत्वसाम्यादेकत्वम् । ब्राह्मणजातिः क्षत्त्रियजातेः पूर्वभाविनी । अतो बृहत्सामसाध्यात्पृष्ठस्तोत्रात्पूर्वं रथंतरसामसाध्यस्य पवमानस्तोत्रस्यानुष्ठानेऽयमभिप्रायः– ब्रह्म ब्राह्मणजातिः पुरस्तात् पूर्वकाले यस्य राष्ट्रस्य तदिदं ब्रह्मपुरस्तात् ( यदिदं ? ) मे राज्ञो राष्ट्रं उग्रं अव्यथ्यं असत् भवेदित्यभिप्रायः । किंच अन्नहेतुत्वाद्रथंतरं साम अन्नात्मकम् । तत् तेन रथंतरप्रयोगेणास्मै राज्ञे अन्नमेव पुरस्तात्कल्पयति प्रथमतः संपादयति । किंच यद्रथंतरं साम इयं पृथिवी भूमिस्वरूपमेव । इयं च भूमिः प्राणिनां प्रतिष्ठा आधारा ( ? रः ) । तत् तेन रथंतरप्रयोगेणास्मै यजमानाय राज्ञे प्रतिष्ठामेव कल्पयति । ऐब्रासा.

**समान इन्द्रनिहवोऽविभक्तः । सोऽह्नाम् । उद्वान्ब्राह्मणस्पत्यः । उभयसाम्नो रूपम् । उभे हि सामनी क्रियेते ॥**

' इन्द्र नेदीय एदिहि ' इति ' उत्तिष्ठ ब्रह्मणस्पते ' इत्येतत्प्रगाथद्वयं प्रशंसति– समान इति । इन्द्रो नितरामाहूयते यस्मिन् प्रगाथे सोऽत्र च प्रकृतौ च समान एक एव । तस्यैवेदं व्याख्यानमविभक्त इति । अविकृत इत्यर्थः । स प्रगाथोऽह्नां रूपमिति शेषः । अहःप्रयोगस्य निष्पादकत्वात्तद्रूपत्वम् । यः प्रगाथः उद्वान् उच्छब्दयुक्तः ब्राह्मणस्पत्यः ब्रह्मणस्पतिदेवताकश्च, ' उत्तिष्ठ ब्रह्मणस्पते ' इत्येवं श्रुतत्वात् । सोऽपि शंसनीयः । किंचासौ प्रगाथः उभयसाम्नो रूपं, हि यस्मादुभे ये बृहद्रथंतरे सामनी तस्मिन्प्रगाथे सामगैरभिधीयेते । ऐब्रासा.

**समान्यो धाय्या अविभक्ताः । ता अह्नाम् ॥**

धाय्यानामृचां प्रकृतौ विकृतौ चैकत्वमाह– समान्य इति । समान्य इत्यस्य व्याख्यानं अविभक्ता इति । ताश्च अहर्विशेषनिष्पादकत्वात् तत्स्वरूपाः ।

ऐब्रासा.

**ऐकाहिको मरुत्वतीयः प्रगाथः ॥**

' प्र व इन्द्राय बृहते ' इत्यस्य मरुत्वतीयप्रगाथस्य प्रकृतिविकृत्योरेकत्वं दर्शयति– ऐकाहिक इति । ऐब्रासा.

**' जनिष्ठा उग्रः सहसे तुराय ' इति सूक्तमुग्रवत्सहस्वत् । तत्क्षत्त्रस्य रूपम् । ' मन्द्र ओजिष्ठः ' इत्योजस्वत् । तत्क्षत्त्रस्य रूपम् । ' बहुलाभिमानः ' इत्यभिवत् । अभिभूत्यै रूपम् । तदेकादशर्चं भवति । एकादशाक्षरा वै त्रिष्टुप् । त्रैष्टुभो वै राजन्यः । ओजो वा इन्द्रियम् । वीर्यं त्रिष्टुप् । ओजः क्षत्त्रम् । वीर्यं राजन्यः । तदेनमोजसा क्षत्त्रेण वीर्येण समर्धयति । तद्गौरिवीतं भवति । एतद्वै मरुत्वतीयं समृद्धं यद्गौरिवीतम् । तस्योक्तं ब्राह्मणम् ॥**

मरुत्वतीये शस्त्रे निविद्धानीयं सूक्तं प्रशंसति– जनिष्ठा इति । ' जनिष्ठाः ' इत्यस्मिन्पादे उग्रशब्दसहःशब्दयोर्विद्यमानत्वात्तदेतत्सूक्तं उग्रवत् सहस्वत् , तच्चोभयं क्षत्त्रियजातेः स्वरूपम् । क्षत्त्रियोऽपि क्रूरो बलवांश्च । द्वितीयपादस्य पूर्वभागे ' मन्द्र ओजिष्ठः ' इति श्रुतत्वात् सूक्तं ओजःशब्दोपेतम् । ओजो नाम बलहेतुरष्टमो धातुः । तस्य च धातोः क्षत्त्रिये संपूर्णत्वादोजःशब्दोपेतं सूक्तं क्षत्त्रियस्य स्वरूपम् । तदुत्तरभागे ' बहुलाभिमानः ' इति श्रुतत्वादभिवत् अभिशब्दोपेतम् । तच्च अभिभूत्यै शत्रूणामभिभवस्य स्वरूपम् । किंच तत्सूक्तं एकादशर्चं भवति । त्रिष्टुप् चैकादशाक्षरा । राजन्यश्च त्रिष्टुप्संबन्धी, तयोः प्रजापतिबाहुजत्वात् । किंच यत्त्रिष्टुबोजःप्रभृतीनां हेतुत्वात्तत्स्वरूपम् । ओजः बलहेतुरष्टमो धातुः । वीर्यं शरीरबलम् । इन्द्रियं चक्षुरादिपाटवम् । राजन्यश्चौजःप्रभृतीनां स्वरूपभूतः । तत्रौजः पूर्वमेवोक्तम् । क्षत्त्रं क्षत्त्रियजातियुक्तत्वम् । वीर्यं शरीरादिबलम् । एवं च राजयज्ञे तत् तेन त्रिष्टुप्छन्दस्कसूक्तपाठेन एनं राजानं ओजःक्षत्त्रवीर्यैः समृद्धं करोति । किंचैतत्सूक्तं गौरिवीताख्येन महर्षिणा दृष्टत्वात् गौरिवीताख्यं भवति । यस्मादेतद्गौरिवीतं तस्मादेतन्मरुत्वतीयशस्त्रं समृद्धं संपूर्णं भवति । तस्य च गौरिवीतनाम्नः सूक्तस्य ब्राह्मणं ' तद्वा एतद्यजमानजननम् ' इत्यादिना पूर्वमेवोक्तम् । ऐब्रासा.

**'त्वामिद्धि हवामहे' इति बृहत्पृष्ठं भवति। क्षत्त्रं वै बृहत्। क्षत्त्रेणैव तत्क्षत्त्रं समर्धयति। अथो क्षत्त्रं वै बृहदात्मा यजमानस्य निष्केवल्यम्। तद्यत्बृहत्पृष्ठं भवति, क्षत्त्रं वै बृहत्, क्षत्त्रेणैवैनं तत्समर्धयति। अथो ज्यैष्ठ्यं वै बृहत्, ज्यैष्ठ्येनैवैनं तत्समर्धयति। अथो श्रैष्ठ्यं वै बृहत्, श्रैष्ठ्येनैवैनं तत्समर्धयति॥**

अथ निष्केवल्यशस्त्रमाह– त्वामिति। 'त्वामिद्धि' इत्यादिकस्तृचो निष्केवल्यशस्त्रस्य स्तोत्रियप्रतिपद्रूपात् बृहत्साम्न आधारत्वात् बृहद्रूपः। तेन च साम्ना पृष्ठस्तोत्रस्य निष्पाद्यत्वात् पृष्ठस्वरूपश्च भवति। 'त्वामिद्धि' इत्यस्यामृचि उत्पन्नं बृहत्साम क्षत्त्रं वै क्षत्त्रियजातिरूपमेव। अतः क्षत्त्रेणैव 'त्वामिद्धि' इति तृचरूपेण तत्क्षत्त्रं यजमानरूपं समृद्धं करोति। अथो अपि चोक्तरीत्या क्षत्त्रमेव बृहद्रूपं निष्केवल्यशस्त्रं यजमानस्य आत्मा देहभूतः। तत् तथा सति यत् यदि बृहत्पृष्ठशब्दद्वयवाच्यं 'त्वामिद्धि' इत्यादिकं निष्केवल्यं भवेत् तत् तेन निष्केवल्येन 'क्षत्त्रं वै बृहत्' इति पूर्वमुक्तत्वात् क्षत्त्रेणैव 'त्वामिद्धि' इत्यादिना बृहद्रूपेण निष्केवल्येनैनं यजमानं समृद्धं करोति। अथो अपि च 'त्वामिद्धि' इत्यादिकं बृहद्रूपं ज्यैष्ठ्यं वै वयोवृद्धेः स्वरूपम्। अतो ज्यैष्ठ्येनैव वयोवृद्ध्यैवैनं राजानं समृद्धं करोति। अथो अपि च 'त्वामिद्धि' इत्यादिकं बृहद्रूपं श्रैष्ठ्यं वै गुणोत्कर्ष एव। तथा सति श्रैष्ठ्येनैव गुणोत्कर्षेणैव यजमानं समृद्धं करोति। ऐब्रासा.

**'अभि त्वा शूर नोनुमः' इति रथंतरमनुरूपं कुर्वन्ति। अयं वै लोको रथंतरम्। असौ लोको बृहत्। अस्य वै लोकस्यासौ लोकोऽनुरूपः। अमुष्य लोकस्यायं लोकोऽनुरूपः। तद्यद्रथंतरमनुरूपं कुर्वन्त्युभावेव तल्लोकौ यजमानाय संभोगिनौ कुर्वन्ति। अथो ब्रह्म वै रथंतरं, क्षत्त्रं बृहत्। ब्रह्मणि खलु वै क्षत्त्रं प्रतिष्ठितं, क्षत्त्रे ब्रह्म। अथो साम्न एव सयोनितायै॥**

निष्केवल्यशस्त्रस्य प्रतिपदमुक्त्वा अनुरूपमाह– अभीति। 'अभि त्वा शूर' इत्येष तृचो निष्केवल्यशस्त्रस्यानुरूपः कार्यः। यद्यपि 'त्वामिद्धि' 'अभि त्वा' इत्येतौ प्रगाथावृग्द्वयात्मकौ तथापि प्रग्रथनेन तृचत्वं संपाद्य प्रतिपदनुचरत्वं द्रष्टव्यम्। 'अभि त्वा' इत्ययं तृचो रथंतरसाम्न आधारत्वात् रथंतरमित्युच्यते। बृहद्रथंतरशब्दाभ्यां विवक्षितं 'त्वामिद्धि, अभि त्वा' इति तृचद्वयं मिलित्वा प्रशस्यते। भूलोकः रथंतरस्वरूपः, स्वर्गलोकः बृहत्स्वरूपः, तावेतौ लोकौ परस्परानुरूपौ। अस्मिँल्लोके दत्तेन हविषा देवाः स्वर्गे जीवन्ति। स्वर्गादागतया वृष्ट्या मनुष्या जीवन्ति। तदेतत्परस्परमनुरूपत्वम्। एवं सति बृहद्रथंतररूपाभ्यां प्रतिपदनुचराभ्यामुभावेव लोकौ यजमानार्थे समीचीनभोगयुक्तौ कुर्वन्ति। अथो अपि च प्रजापतिमुखजत्वसाम्येन रथंतरस्य ब्राह्मणरूपत्वात् तदीयबाहुजत्वसाम्येन बृहतः क्षत्त्रियरूपत्वाच्च बृहद्रथंतराभिधानयोस्तृचयोरनुष्ठानेन ब्रह्मक्षत्त्रयोः परस्परा( ? रस्य ) प्रतिष्ठा भवति। अथो अपि च तृचद्वयानुष्ठानं निष्केवल्यशस्त्रस्य तृचद्वयाश्रितसाम्नश्च सयोनित्वाय समानस्थानत्वाय संपद्यते। ऐब्रासा.

**'यद्वावान' इति धाय्या। तस्या उक्तं ब्राह्मणम्॥**

धाय्यां दर्शयति– यदिति। तस्या धाय्यायाः प्रशंसारूपं ब्राह्मणं 'ते देवा अब्रुवन् सर्वे वा अवोचथाः' इत्यादिना पूर्वमेवोक्तम्। ऐब्रासा.

**'उभयं शृणवच्च नः' इति सामप्रगाथ उभयसाम्नो रूपम्। उभे हि सामनी क्रियेते॥**

सामाधारभूतं प्रगाथं दर्शयति– उभयमिति। 'उभयम्' इत्यादिप्रगाथो बृहद्रथंतरसामद्वयस्य स्वरूपम्। यस्मादेते उभयसामनी अस्मिन् प्रगाथे सामगैर्गीयेते तस्मात्तद्रूपत्वं युक्तम्। ऐब्रासा.

**'तमु ष्टुहि यो अभिभूत्योजाः' इति सूक्तमभिवदभिभूत्यै रूपम्॥**

निष्केवल्यशस्त्रे निविद्धानीयं सूक्तं दर्शयति– तमिति। अभिवत् अभिशब्दोपेतं सूक्तं तस्मात् अभिभूत्यै शत्रूणामभिभवस्य स्वरूपम्। ऐब्रासा.

**'अषाह्ळमुग्रं सह्मानमाभिः' इत्युग्रवत्सहमानवत्तत्क्षत्त्रस्य रूपम् ॥**

तस्या ऋचः तृतीयपादमनूद्य प्रशंसति— अषाहूळमिति । उग्रशब्दसहमानशब्दयुक्तमिदं सूक्तम् । तच्च शब्दद्वयवाच्यं क्षत्त्रियजातेः स्वरूपम् । क्षत्त्रियो ह्युग्रो भूत्वा शत्रूनभिभवति । ऐब्रासा.

**तत्पञ्चदशर्चं भवति । ओजो वा इन्द्रियं वीर्यं पञ्चदश । ओजः क्षत्त्रं वीर्यं राजन्यः । तदेनमोजसा क्षत्त्रेण वीर्येण समर्धयति ॥**

तत्सूक्तगतामृक्संख्यां प्रशंसति— तदिति । पूर्वोक्तत्रिष्टुप्प्रशंसावाक्यवदिदं पञ्चदशस्तोमप्रशंसावाक्यं व्याख्येयम् । ऐब्रासा.

**तद्भारद्वाजं भवति । भारद्वाजं वै बृहत् । आर्षेयेण सलोमा ॥**

ऋषिद्वारा सूक्तं प्रशंसति— तदिति । भरद्वाजेन दृष्टत्वादिदं सूक्तं भारद्वाजम् । बृहत्सामापि तथा भारद्वाजम् । तादृशबृहद्योगादयं क्रतुरार्षेयेण सलोमा । आर्षेयो भरद्वाजमुनिसंबन्धः । लोमशब्देन केशयुक्तो मूर्धोपलक्ष्यते । सलोमा सशिरस्कः संपूर्ण इत्यर्थः । भरद्वाजमुनिदृष्टस्य बृहतः संपूर्णत्वात् बृहद्द्वारा भरद्वाजमुनिसंबन्धे सति क्रतोरपि संपूर्णत्वं द्रष्टव्यम् । ऐब्रासा.

**एष ह वाव क्षत्त्रिययज्ञः समृद्धो यो बृहत्पृष्ठः । तस्माद्यत्र क्व च क्षत्त्रियो यजेत बृहदेव तत्र पृष्ठं स्यात् । तत्समृद्धम् ॥**

इदानीं बृहद्रथंतरसामोपेतप्रकृतक्रतुसंबन्धमुपजीव्य एकसामकेऽपि क्षत्त्रिययज्ञे पृष्ठस्तोत्रस्य बृहत्सामसाध्यत्वं विधत्ते— एष इति । यः क्रतुर्द्विसामको बृहत्पृष्ठोपेत एष एव क्षत्त्रिययज्ञः समृद्धः संपूर्णः । यस्मादेवं तस्माद्यत्र क्व चैकसामकेनापि क्रतुना क्षत्त्रियो यजेत तत्र पृष्ठस्तोत्रं बृहत्सामयुक्तमेव कुर्यात् । तदेतदनुष्ठानं समृद्धं संपूर्णं भवति । ऐब्रासा.

**ऐकाहिका होत्राः । एता वै शान्ताः क्लृप्ताः प्रतिष्ठिता होत्रा यदैकाहिकाः शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै । ताः सर्वरूपा भवन्ति सर्वसमृद्धाः सर्वरूपतायै सर्वसमृद्ध्यै सर्वरूपाभिर्होत्राभिः सर्वसमृद्धाभिः सर्वान् कामानवाप्नवामेति । तस्माद्यत्र क्व चैकाहा असर्वस्तोमा असर्वपृष्ठा ऐकाहिका एव तत्र होत्राः स्युः । तत्समृद्धम् ॥**

माध्यंदिने सवने होतुः शस्त्रविशेषमभिधाय होत्रकाणां विशेषाभावं दर्शयति— ऐकाहिका इति । मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां याः क्रियास्ता होत्राः । ताश्चैकाहिका एकाहे प्रकृतिरूपे विहिता एवात्र विकृतिरूपेण क्षत्त्रिययज्ञे कर्तव्याः । एताश्च होत्राः शान्तत्वादिगुण-( ? णि )काः । शान्तादिशब्दार्थाः पूर्ववद्व्याख्येयाः । एताश्चैकाहिकाः होत्राः सर्वरूपाः सर्वसमृद्धाश्च भवन्ति । तत्तद्विकृतिषु होत्रकाणां ये विशेषा उक्तास्तद्रूपत्वं सर्वरूपत्वं तत्फलसमृद्धिः सर्वसमृद्धिः । एतच्चोभयमिन्द्राभिष्टवनेन क्षत्त्रियप्रतिपादनसामर्थ्यात्संपद्यते । अतः सर्वरूपतायै सर्वलोकप्राप्त्यर्थं तत्र च सर्वभोगसमृद्ध्यर्थमुक्ता होत्रकाः संपद्यन्ते । ततः क्षत्त्रियाः पुरुषाः सर्वरूपाभिः सर्वसमृद्धाभिरैकाहिकाभिर्होत्राभिः सर्वान् कामानवाप्नवामेत्यभिप्रायेण ऐकाहिकहोत्रानुष्ठानं कुर्युः । एकाहाश्च द्विविधाः— सर्वस्तोमसर्वपृष्ठाः तद्विपरीताश्च पृष्ठ्ये षडहे प्रतिपादिताः । त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशरूपाः षट्संख्याकाः सर्वे स्तोमाः । तस्मिन्नेव पृष्ठ्यषडहे रथंतरबृहद्वैरूपवैराजशाक्वररैवतानि षट्संख्याकानि सर्वपृष्ठानि । तै सर्वैः स्तोमैः पृष्ठैश्च युक्तेभ्य एकाहेभ्यो व्यतिरिक्ताः कतिपयस्तोमपृष्ठयुक्ता एकाहा असर्वस्तोमा असर्वपृष्ठाश्च । यस्मादैकाहिका होत्राः पूर्वोक्तरीत्या प्रशस्तास्तस्माद्यत्र क्व वाऽसर्वस्तोमा असर्वपृष्ठाश्चैकाहा अनुष्ठीयन्ते तत्र सर्वत्रैकाहिका एव होत्राः स्युः, न तु नूतनो विशेषः कश्चिदस्ति । तत् तादृशं कर्म समृद्धं फलेन संपूर्णम् । ऐब्रासा.

**उक्थ्य एवायं पञ्चदशः स्यादित्याहुः । ओजो वा इन्द्रियं वीर्यं पञ्चदश । ओजः क्षत्त्रं वीर्यं राजन्यः । तदेनमोजसा क्षत्त्रेण वीर्येण समर्धयति ॥**

अथ क्षत्रिययज्ञस्य संस्थाविशेषो निर्णेतव्यः। तदर्थमादौ केषांचित्पक्षमुपन्यस्यति— उक्थ्य इति। अयं क्षत्रिययज्ञ उक्थ्यसंस्थ एव सर्वेष्वपि स्तोत्रेषु पञ्चदशस्तोम एव स्यादित्येवमेके ब्रह्मवादिन आहुः। ओजो वा इत्यादिकं पूर्ववद्व्याख्येयम्। ऐब्रासा.

**तस्य त्रिंशत्स्तुतशस्त्राणि भवन्ति। त्रिंशदक्षरा वै विराट्। विराळन्नाद्यम्। विराज्येवैनं तदन्नाद्ये प्रतिष्ठापयति। तस्मात्तदुक्थ्यः पञ्चदशः स्यादित्याहुः॥**

उक्थ्ये स्तोत्रशस्त्रसंख्यां प्रशंसति— तस्येति। तस्य उक्थ्यस्य पञ्चदश स्तोत्राणि पञ्चदश शस्त्राणीत्येवं त्रिंशत्संख्या। तथा सति अक्षरद्वारा विराड्रूपत्वाद्विराजश्चान्नसाधनत्वादेनं यजमानं विराट्साम्येनान्नाद्ये प्रतिष्ठापयति। तस्मादेवं पञ्चदशस्तोत्रशस्त्रत्वात्तदुक्थ्यः स क्षत्रिययज्ञः उक्थ्यसंस्थः पञ्चदशस्तोमयुक्तः स्यादित्येवं केचिदाहुः। ऐब्रासा.

**ज्योतिष्टोम एवाग्निष्टोमः स्यात्॥**

अथ स्वपक्षमाह— ज्योतिष्टोम इति। योऽयं क्षत्रियाणां ज्योतिष्टोमः सोऽग्निष्टोमसंस्थ एव स्यात्। ऐब्रासा.

**ब्रह्म वै स्तोमानां त्रिवृत्। क्षत्त्रं पञ्चदशः। ब्रह्म खलु वै क्षत्त्रात्पूर्वम्। ब्रह्मपुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदिति। विशः सप्तदशः। शौद्रो वर्ण एकविंशः। विशं चैवास्मै तच्छौद्रं च वर्णमनुवर्त्मानौ कुर्वन्ति। अथो तेजो वै स्तोमानां त्रिवृत्। वीर्यं पञ्चदशः। प्रजातिः सप्तदशः। प्रतिष्ठैकविंशः। तदेनं तेजसा वीर्येण प्रजात्या प्रतिष्ठयाऽन्ततः समर्धयति। तस्माज्ज्योतिष्टोमः स्यात्॥**

तस्मिन्नग्निष्टोमे ये त्रिवृदादयश्चत्वारः स्तोमाः तान् ब्राह्मणादिवर्णचतुष्टयरूपेण तेजआदिगुणचतुष्टयरूपेण च प्रशंसति— ब्रह्मेति। प्रजापतेः मुखबाहुमध्यदेहपादेभ्य उत्पत्तिसाम्यात् त्रिवृदादिस्तोमानां ब्राह्मणादिवर्णचतुष्टयरूपत्वम्। तत्र ब्राह्मणपूर्वकं राष्ट्रं मदीयमुग्रं अव्यथनीयं वाऽस्त्वित्यभिप्रायेण क्षत्रियस्य त्रिवृत्पञ्चदशौ क्रमेणानुष्ठेयौ। (ततः) सप्तदशैकविंशयोरनुष्ठानं (१नेन) वैश्यशूद्रौ वर्णौ क्षत्रियस्यानुगामिनौ कुर्वन्ति। त्रिवृदादिस्तोमानां तेजोवीर्यप्रजननप्रतिष्ठासाधनत्वात् तत्तद्रूपत्वम्। तेषामनुष्ठानेनैनं क्षत्रियं अन्ततः यज्ञस्यान्ते तेजआदिभिः समृद्धं करोति। तस्मात् क्षत्रियस्य त्रिवृदादिस्तोमचतुष्टयविशिष्टो ज्योतिष्टोमः स्यात्। ऐब्रासा.

**तस्य चतुर्विंशतिः स्तुतशस्त्राणि भवन्ति। चतुर्विंशत्यर्धमासो वै संवत्सरः। संवत्सरे कृत्स्नमन्नाद्यम्। कृत्स्न एवैनं तदन्नाद्ये प्रतिष्ठापयति। तस्माज्ज्योतिष्टोम एवाग्निष्टोमः स्यादग्निष्टोमः स्यात्॥**

अग्निष्टोमसंस्थे तस्मिन् स्तोत्रशस्त्रसंख्यां प्रशंसति— तस्येति। तस्य अग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य द्वादश स्तोत्राणि द्वादश शस्त्राणि एवं चतुर्विंशतिसंख्या। ततोऽर्धमासद्वारा संवत्सरत्वम्। संवत्सरे च द्विः संस्थानां पठ्यमानत्वादन्नाद्यं कृत्स्नं संपूर्णं भवति। तेनैनं यजमानं संपूर्ण एवान्नाद्ये प्रतिष्ठापयति। तस्मात्क्षत्रियस्य ज्योतिष्टोमः अग्निष्टोमसंस्थ एव स्यात्, न तूक्थ्यसंस्थ इति। अभ्यासोऽध्यायसमाप्त्यर्थः। ऐब्रासा.

अभिषेको राज्ञः

**[१]अथातः पुनरभिषेकस्यैव॥**

'स्तुतशस्त्रविशेषोऽस्य क्षत्रियस्योपवर्णितः। क्रतौ समाप्तेऽथ पुनरभिषेकोऽत्र वर्ण्यते॥' तमेतमभिषेकं प्रतिजानीते— अथेति। अथ क्रतुसमाप्त्यनन्तरं यतः क्षत्रियोऽभिषेकमर्हत्यतः कारणात् पुनरभिषेकस्यैव विधिरुच्यते इति शेषः। राज्ञः पूर्वमभिषिक्तत्वादयं पुनरभिषेको भवति। इतरस्यापि क्षत्रियस्य माहेन्द्रग्रहाय प्रस्तुते साम्न्यभिषेकस्याऽऽध्वर्यवस्य विद्यमानत्वादयं पुनरभिषेको भवति। ऐब्रासा.

**सूयते ह वा अस्य क्षत्त्रं यो दीक्षते क्षत्त्रियः सन्। यदाऽवभृथादुदेत्यानूबन्ध्ययेष्ट्वोदवस्यति। अथैनमुदवसानीयायां संस्थितायां पुनरभिषिञ्चन्ति॥**

(१) ऐब्रा. ३७।१—२.

तं विधत्ते– सूयत इति । यः पुमान् क्षत्त्रियः सन् दीक्षते दीक्षां प्राप्नोति अस्य क्षत्त्रस्य पुरुषस्य क्षत्त्रं सर्वेषां प्राणिनां क्षतात्त्राणनं सूयते प्रवर्तते अस्मात्स क्षत्त्रियो यदाऽवभृथादुदेत्य अवभृथाख्यं कर्म समाप्तं कृत्वा ततोऽनूबन्ध्याख्यया कयाचित्पशुस्थानीयया इष्ट्वा यागं कृत्वा पश्चादुदवस्यति उदवसानीयाख्ययेष्ट्या कर्मावसानं करोति अथ तदानीमेनं क्षत्त्रियं उदवसानीयेष्टौ समाप्तायां पुनरपि कर्माङ्गत्वेनर्त्विजोऽभिषिञ्चेयुः । ऐब्रासा.

**तस्यैते पुरस्तादेव संभारा उपक्लृप्ता भवन्ति– औदुम्बर्यासन्दी, तस्यै प्रादेशमात्राः पादाः स्युः, अरत्निमात्राणि शीर्षण्यानूच्यानि, मौञ्जं विवयनं, व्याघ्रचर्माऽऽस्तरणम्, औदुम्बरश्चमसः, उदुम्बरशाखा । तस्मिन्नेतस्मिंश्चमसेऽष्टातयानि निषुतानि भवन्ति– दधि मधु सर्पिरातपवर्ष्या आपः शष्पाणि च तोक्मानि च सुरा दूर्वा ॥**

तस्याभिषेकसाधनानि विधत्ते– तस्येति । तस्य पुनरभिषेकस्य एते वक्ष्यमाणाः संभाराः संपादनीया द्रव्यविशेषाः पुरस्तादेवोपक्लृप्ता अभिषेककालात्प्रागेव संपादिता भवेयुः । के वस्तुविशेषाः संपादनीयास्तेऽभिधीयन्ते– उदुम्बरकाष्ठैर्निर्मिता काचिदासन्दी । तस्यै तस्या आसन्द्याश्चत्वारः पादाः प्रादेशपरिमिताः । तेषां पादानां शिरसि उपरिभागेऽवस्थितानि शीर्षण्यानि अन्वक् तिर्यक् अवस्थितानि काष्ठान्यनूच्यानि तानि शीर्षण्यानूच्यानि अरत्निपरिमितानि । प्रादेशद्वयं अरत्निः । विविधं वयनं रज्जूनामोतप्रोतरूपेण संयोजनम् । तच्च मौञ्जं मुञ्जतृणेन निर्मितम् । ईदृश्या आसन्द्या उपरि आस्तरणं व्याघ्रचर्म । दध्यादिप्रक्षेपार्थः प्रौढ उदुम्बरकाष्ठनिर्मितश्चमसः । तथा काचित् सूक्ष्मोदुम्बरशाखा । तस्मिन्नेतस्मिन्नौदुम्बरे प्रौढे चमसे वक्ष्यमाणदध्यादिद्रव्याण्यष्टातयानि । अत्र द्वितयत्रितयादिवत् ' संख्याया अवयवे तयप्' (पा. ५।२।४२) इति सूत्रेण तयप्प्रत्ययः । अष्टसंख्याका अवयवा येषां दध्यादीनां तान्यष्टातयानि । दीर्घश्छान्दसः । तानि च निषुतानि नितरां सुतानि प्रक्षिप्तानि भवन्ति । चमसे प्रक्षेप्याण्यष्ट द्रव्याणि कानीति तान्युच्यन्ते– दधि मधु सर्पिरित्येतानि त्रीणि प्रसिद्धानि । आतपयुक्तवर्षभवाः आतपवर्ष्याः, तादृश्य आपश्चतुर्थं द्रष्टव्यम् । शष्पाणि श्यामतृणानि पञ्चमं द्रव्यम् । तोक्मानि अङ्कुराणि षष्ठं द्रव्यम् । सुरा दूर्वेति द्रव्यद्वयं प्रसिद्धम् । ऐब्रासा.

**तद्यैषा दक्षिणा स्फ्यवर्तनिर्वेदेर्भवति तत्रैतां प्राचीमासन्दीं प्रतिष्ठापयति । तस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वौ । इयं वै श्रीः । तस्या एतत्परिमितं रूपं यदन्तर्वेदि । अथैष भूमाऽपरिमितो यो बहिर्वेदि । तद्यदस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वा उभयोः कामयोरुपाप्त्यै यश्चान्तर्वेदि यश्च बहिर्वेदि ॥**

संपादिताया आसन्द्याः प्रतिष्ठापनं विधत्ते– तदिति । पुरा वेदिपरिग्रहार्थे स्फ्येन रेखात्रयं कृतं दक्षिणा प्रतीच्युदीची च । तत्र देवयजनदेशे यैषा वेदेः संबन्धिनी दक्षिणा स्फ्यवर्तनिः स्फ्यस्य रेखा भवति तत्र तस्यां रेखायामेतामासन्दीं प्राचीं प्रागग्रां अवस्थापयेत् । तस्याश्चाऽऽसन्द्या उत्तरदिग्गतौ द्वौ पादावन्तर्वेदि तिष्ठतः । दक्षिणदिग्गतौ द्वौ पादौ बहिर्वेदि स्थापनीयौ । इयं भूमिः श्रीर्वै संपद्रूपैव । तस्या भूमेरन्तर्वेदि यद्रूपमस्ति एतत् परिमितं अल्पम् । अथ बहिर्वेदि यः प्रदेशोऽस्ति एष भूमा बहुलः । अत एवापरिमितः इयानिति परिच्छेदरहितः । एवं सति वेदेर्मध्ये बहिश्च आसन्द्या द्वौ द्वौ पादाविति यदस्ति तदुभयोः कामयोः प्राप्त्यै भवति । यश्च कामो वेदिमध्ये लभ्यते, यश्चान्यः कामो वेदेर्बहिर्लभ्यते तदुभयसिद्ध्यर्थं एवं स्थापनम् । ऐब्रासा.

**व्याघ्रचर्मणाऽऽस्तृणात्युत्तरलोम्ना प्राचीनग्रीवेण । क्षत्त्रं वा एतदारण्यानां पशूनां यद्व्याघ्रः । क्षत्त्रं राजन्यः । क्षत्त्रेणैव तत्क्षत्त्रं समर्धयति ॥**

प्रतिष्ठापिताया आसन्द्या उपरि चर्मास्तरणं विधत्ते– व्याघ्रेति । उत्तराणि ऊर्ध्वभागे लोमानि यस्य चर्मणः तदुत्तरलोम । प्राच्यां दिशि ग्रीवा यस्य चर्मणः तत् प्राचीनग्रीवम् । तादृशेन व्याघ्रचर्मणा तामासन्दीमास्तृणीयात् । अरण्ये एवावस्थिता आरण्याः पशवो हरिणादयः । यो व्याघ्रोऽस्ति एतदारण्यानां पशूनां मध्ये

क्षत्त्रं क्षत्त्रियवच्छूरः । योऽयं राजन्यो यजमानः सोऽपि क्षत्त्रं क्षत्त्रियजातित्वाच्छूरः । अतश्चर्मास्तरणात् व्याघ्रचर्मरूपेण क्षत्त्रेणैव यजमानरूपं क्षत्त्रं समृद्धं करोति ।

ऐब्रासा.

**तां पश्चात्प्राङुपविश्याऽऽच्य जानु दक्षिणमभिमन्त्रयत उभाभ्यां पाणिभ्यामालभ्य ॥**

आसन्द्या अभिमन्त्रणं विधत्ते— तामिति । प्रतिष्ठापिताया आसन्द्याः पश्चाद्भागे यजमानः प्राङ्मुख उपविश्य दक्षिणं यज्जान्वस्ति तदाच्य तत् भूमिस्पृष्टं यथा भवति तथा न्यग्भूतं कृत्वा सव्यजानूर्ध्वमुखमेवावस्थाप्य उभाभ्यां पाणिभ्यामासन्दीमालभ्य स्पृष्ट्वा वक्ष्यमाणमन्त्रेणाभिमन्त्रयेत् ।

ऐब्रासा.

**अग्निष्ट्वा गायत्र्या सयुक्छन्दसाऽऽरोहतु सवितोष्णिहा सोमोऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वे देवा जगत्या तानहमनु राज्याय साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायाऽऽरोहामि ॥**

तं मन्त्रं दर्शयति— अग्निरिति । हे आसन्दि, त्वा त्वां गायत्र्या छन्दसा सयुक् सहितः अग्निरारोहतु । उष्णिहा छन्दसा सहितः सविताऽऽरोहतु । एवं सोमबृहस्पतिमित्रावरुणेन्द्रविश्वे (? श्व )देवा अनुष्टुबादिच्छन्दोभिः सहितास्त्वामारोहन्तु । तान् अग्न्यादीन् देवान् अनु पश्चात् अहमारोहामि । किमर्थम् ? राज्यादिसिद्ध्यर्थम् । राज्यं देशाधिपत्यम् । साम्राज्यं धर्मेण पालनम् । भौज्यं भोगसमृद्धिः । स्वाराज्यं अपराधीनत्वम् । वैराज्यं इतरेभ्यो भूपतिभ्यो वैशिष्ट्यम् । एतदुक्तं ऐहिकम् । अथाऽऽमुष्मिकमुच्यते— पारमेष्ठ्यं प्रजापतिलोकप्राप्तिः । तत्र राज्यं ऐश्वर्यम् । माहाराज्यं तत्रत्येभ्य इतरेभ्य आधिक्यम् । आधिपत्यं तानितरान्प्रति स्वामित्वम् । स्वावश्यं अपारतन्त्र्यम् । आतिष्ठत्वं चिरकालवासित्वम् ।

ऐब्रासा.

**इत्येतामासन्दीमारोहेद्दक्षिणेनाग्रे जानुनाऽथ सव्येन ॥**

अनेन मन्त्रेणाभिमन्त्रणादूर्ध्वमारोहणं विधत्ते— इतीति । इतिशब्दः पूर्वोक्तमभिमन्त्रणमन्त्रं परामृशति । तेनैव मन्त्रेण तामासन्दीमारोहेत् । तत्रायं प्रकारः— दक्षिणेन जानुना प्रथमं समारोहेत्, ततः सव्येनाऽऽरोहेत् ।

ऐब्रासा.

**तत्तदिती ३ँ ॥**

आरोहणं प्रशंसति— तदिति । तत् आरोहणमित्येवं सर्वे जनाः पूजयन्ति । पूजार्थेयं प्लुतिः ।

ऐब्रासा.

**चतुरुत्तरैर्वै देवाश्छन्दोभिः सयुग्भूत्वैतां श्रियमारोहन् । यस्यामेत एतर्हि प्रतिष्ठिता अग्निर्गायत्र्या सवितोष्णिहा सोमोऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वे देवा जगत्या ॥**

मन्त्रतात्पर्यं दर्शयति— चतुरिति । चत्वार्यक्षराण्येकैकस्माच्छन्दस उत्तराण्यधिकानि येषु गायत्र्यादिषु जगत्यन्तेषु छन्दःसु तानि चतुरुत्तराणि । तादृशैश्छन्दोभिः सयुग्भूत्वा साहित्यं प्राप्य देवा अग्न्यादयः एतामासन्दीं श्रियं ऐश्वर्यरूपां आरोहन् । यस्यामासन्द्यां एते अग्न्यादय इदानीमपि प्रतिष्ठिता वर्तन्ते । 'देवाश्छन्दोभिः सयुग्भूत्वा' इत्ययमर्थः ' अग्निर्गायत्र्या ' इत्यादिना स्पष्टीकृतः ।

ऐब्रासा.

**ते एते अभ्यनूच्येते 'अग्नेर्गायत्र्यभवत्सयुग्वा' इति ॥**

उक्तमर्थं मन्त्रसंवादेन द्रढयति— ते इति । ते एते देवच्छन्दसी परस्परसहिते कयाचिदृचाऽभ्यनूच्येते । सेयमृक् ' अग्नेः ' इत्यादिका । येयं गायत्री सेयमग्नेः सयुग्वा सहवासिनी अभवदिति तस्या ऋचोऽर्थः ।

ऐब्रासा.

**कल्पते ह वा अस्मै योगक्षेमः, उत्तरोत्तरिणीं ह श्रियमश्नुते, अश्नुते ह प्रजानामैश्वर्यमाधिपत्यं, य एवमेता अनु देवता एतामासन्दीमारोहति क्षत्त्रियः सन् ॥**

क्षत्त्रियस्याऽऽरोहणं प्रशंसति— कल्पत इति । यः पुमान् स्वयं क्षत्त्रियः सन् ( आरोहति ? ) एता देवता अनु स्वयमप्युक्तेन प्रकारेणैतामासन्दीमारोहति, अस्मै

क्षत्रियाय योगक्षेमः कल्पते सिध्यति । अप्राप्तस्य लाभस्य प्राप्तिर्योगः, प्राप्तस्य वस्तुनो रक्षणं क्षेमः । योगसहितः क्षेमः योगक्षेमः । किंचायं क्षत्रिय उत्तरोत्तरिणीं दिने दिने वर्धमानां श्रियं प्राप्नोति । तथा सर्वासां प्रजानामैश्वर्यं नियामकत्वं आधिपत्यं अधिकत्वेन पालनं च प्राप्नोति । ऐब्रासा.

**अथैनमभिषेक्ष्यन्नपां शान्तिं वाचयति ॥**

अभिषेककर्तुः शान्तिमन्त्रवाचनं विधत्ते– अथेति । अथ आसन्द्यारोहणानन्तरं एनं आरूढं क्षत्रियं योऽन्योऽभिषेक्ष्यति स पुमान् अपां शान्तिं जलदेवतानां शान्तिकरं मन्त्रं वाचयेत् क्षत्रियस्याग्रे स्वयं सकृदुक्त्वा तं क्षत्रियं पाठयेत् । ऐब्रासा.

**[1]शिवेन मा चक्षुषा पश्यताऽऽपः शिवया तन्वोपस्पृशत त्वचं मे । सर्वाँ अग्नीँरप्सुषदो हुवे वो मयि वर्चो बलमोजो निधत्त ॥ इति ॥**

एतं शान्तिमन्त्रं दर्शयति– शिवेनेति । हे आपो देवताः, शिवेन शान्तेन अनुग्रहयुक्तेन चक्षुषा मामवलोकयत । तथा शिवया शान्तया तन्वा मदीयां त्वचमुपस्पृशत । अप्सु जलेषु सीदन्ति इत्यप्सुषदः और्वादयोऽग्नयः, तानग्नीन् सर्वान् वः युष्मदर्थं हुवे आह्वयामि । यूयमपि वर्चः कान्तिं बलं शरीरबलं तत्कारणमोजश्च मयि निधत्त संपादयत । ऐब्रासा.

**[2]नैतस्याभिषिषिचानस्याशान्ता आपो वीर्यं निर्हणन्निति ॥**

तदेतच्छान्तिमन्त्रवाचनं प्रशंसति– नेति । अशान्ता उग्रा आपः । तथा चान्यत्र श्रूयते– 'दिव्या आपोऽशान्ताः' इति । ताश्चाऽऽपः शान्तिवाचनाभावेऽभिषिषिचानस्य अभिषेकं प्राप्तस्यैतस्य क्षत्रियस्य वीर्यं निर्हरेयुः विनाशयेयुः । सति तु शान्तिपाठे न निर्हणन् नैव विनाशयन्तीत्यनेनाभिप्रायेण शान्तिं वाचयेत् । ऐब्रासा.

(१) असं. १।३३।४ पू.; तैसं. ५।६।१।२ तन्वो (तनुवो); मैसं. २।१३।१ (६) सर्वाँ (सर्वे); ऐब्रा. ३७।२.
(२) ऐब्रा. ३७।२–३.

**अथैनमुदुम्बरशाखामन्तर्धायाभिषिञ्चति ॥**

अभिषेकप्रकारं विधत्ते– अथेति । अथ शान्तिवाचनानन्तरं एनं क्षत्रियं उदुम्बरशाखामन्तर्धाय शिरस्युदुम्बरशाखया व्यवधानं कृत्वा चमसस्थैर्दध्यादिभिरभिषिञ्चेत् । तिस्र ऋचः एकं यजुर्व्याहृतयश्चेत्येतेऽभिषेकमन्त्राः । ऐब्रासा.

**इमा आपः शिवतमा इमाः सर्वस्य भेषजीः । इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोऽमृताः ॥**

तत्र प्रथमामृचमाह– इमा इति । आप इत्यनेन दध्यादिसर्वद्रव्याण्युपलक्ष्यन्ते । इमा दध्यादिसहिता आपः शिवतमा अतिशयेन शान्ताः । तथा इमा आपः सर्वस्य दारिद्र्यादिरोगस्य भेषजीः औषधरूपाः । तथा इमा आपो राष्ट्रस्य वर्धनीः अभिवृद्धिहेतवः, अत एवेमा आपो राष्ट्रभृतः राष्ट्रधारिण्यः स्वयं चामृताः विनाशरहिताः । ऐब्रासा.

**याभिरिन्द्रमभ्यषिञ्चत्प्रजापतिः**
**सोमं राजानं वरुणं यमं मनुम् ।**
**ताभिरद्भिरभिषिञ्चामि त्वा–**
**महं राज्ञां त्वमधिराजो भवेह ॥**

द्वितीयामृचमाह– याभिरिति । हे क्षत्रिय, पुरा प्रजापतिः याभिर्दध्यादिसहिताभिरद्भिः इन्द्रादीनभ्यषिञ्चत् ताभिरद्भिः त्वामहमभिषिञ्चामि । त्वं चेह लोके राज्ञां सर्वेषां अधिको राजा भव । ऐब्रासा.

**[1]महान्तं त्वा महीनां सम्राजं चर्षणीनाम् । देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥**

तृतीयामृचमाह– महान्तमिति । जनित्री तवोत्पादिका मातृरूपा देवी त्वां महीनां महान्तं महतामपि पुरुषाणां मध्ये अतिशयेन महान्तं चर्षणीनां मनुष्याणां च सर्वेषां सम्राजं सम्यग्धर्मेण पालयितारं कृत्वा अजीजनत् उत्पादितवती । अतो भवदीया जनित्री माता स्वयं तदा पुण्यात्मा भूत्वोत्पादितवती । ऐब्रासा.

(१) ऋसं. १०।१३४।१; सासं. १।४।३ (३७९), २।७।५ (१०९०); ऐब्रा. ३७।३.

**'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय ॥**

तिस्र ऋचोऽभिधाय यजुर्दर्शयति- देवस्येति । हे क्षत्रिय, सवितुः प्रेरकस्य देवस्य परमेश्वरस्य प्रसवे अनुज्ञायां सत्यां त्वामभिषिञ्चामि । केन साधनेन ? अश्विनोः देवयोः संबन्धिभ्यां बाहुभ्यां, न तु मदीयाभ्याम् । तथा पूष्णः देवस्य हस्ताभ्याम् । मणिबन्धपर्यन्तौ दण्डाकारौ बाहू । अङ्गुलिसहितावग्रभागौ हस्तौ । तथा अग्निसंबन्धिना तेजसा शरीरकान्त्या, सूर्यस्य संबन्धिना वर्चसा बाह्यप्रकाशेन, इन्द्रसंबन्धिना इन्द्रियेण चक्षुरादिपाटवेन । कस्मै प्रयोजनायायमभिषेकः ? तव शारीरबलाय, श्रियै हस्त्यश्वादिसंपदे, यशसे कीर्त्यै, अन्नाद्याय अन्नसमृद्धये । ऐब्रासा.

**भूरिति य इच्छेदिममेव प्रत्यन्नमद्यादिति । अथ य इच्छेद्‌द्विपुरुषं भूर्भुव इति । अथ य इच्छेत्त्रिपुरुषं वाऽप्रतिमं वा भूर्भुवः स्वरिति ॥**

अथ कामनाभेदेन व्याहृतीर्दर्शयति- भूरिति । योऽभिषेक्ता इममेव अभिषिच्यमानं क्षत्रियं प्रति 'असावन्नमद्यात्, नीरोगो भवेत्' इतीच्छेत् कामयेत तं 'भूः' इति व्याहृत्या अभिषिञ्चेत् । अथ यः अभिषेक्ता पुत्रपौत्राभ्यां पुरुषाभ्यां सहितमिमं क्षत्रियं प्रति 'अन्नमद्यात्' इति कामयेत तदानीं 'भूर्भुवः' इति व्याहृतिद्वयेन अभिषिञ्चेत् । अथ योऽभिषेक्ता पुत्रपौत्रप्रपौत्रैस्त्रिभिः पुरुषैर्युक्तमिमं क्षत्रियमिच्छेत् 'पुरुषत्रयपर्यन्तं जीवित्वा सुखेनान्नमद्यात्' इति कामयेत, अथवा तमेतं 'अप्रतिमं स्वतुल्यक्षत्रियान्तररहितं कुर्याम्' इति कामयेत तदानीं 'भूर्भुवः स्वः' इति व्याहृतित्रयेणाभिषिञ्चेत् । ऐब्रासा.

**तद्धैक आहुः- सर्वाप्तिर्वा एषा यदेता व्याहृतयः । अतिसर्वेण हास्य परस्मै कृतं भवतीति तमेतेनाभिषिञ्चेत् 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय' इति ॥**

अथ कंचित्पूर्वपक्षमुत्थापयति- तदिति । तद्ध तस्मिन्नेवाभिषेके ब्रह्मवादिनः केचिदेवमाहुः- या एता व्याहृतयः सन्ति एषा व्याहृतिरूपा सर्वाप्तिर्वै सर्वफलप्राप्तिसाधनम् । अतो व्याहृतिभिरभिषेके सति अस्याभिषिच्यमानस्य परस्मै परस्य स्वस्मादन्यस्य क्षत्रियस्य अतिसर्वेण तदपेक्षामात्रमभिक्रम्य कृत्स्नेनापि मन्त्रजातेन अभिषेचनं कृतं भवति । तदेतदधिकाभिषेचनमयुक्तमित्यभिप्रेत्य तं क्षत्रियमेतेन 'देवस्य त्वा' इत्यादिना यजुषा अभिषिञ्चेत्, न तु व्याहृतिभिरिति तेषां पक्षः । ऐब्रासा.

**तदु पुनः परिचक्षते- यदसर्वेण वाचोऽभिषिक्तो भवतीश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह स्माऽऽह सत्यकामो जाबालोऽयमेताभिर्व्याहृतिभिर्नाभिषिञ्चन्तीति ॥**

तं पक्षं दूषयति- तदिति । तदु तदपि पूर्वोक्तं मतं पुनरन्येऽभिज्ञाः परिचक्षते निराकुर्वन्ति- यं क्षत्रियं एताभिर्व्याहृतिभिर्नाभिषिञ्चन्ति एष क्षत्रियो यत् यस्मात्कारणात् असर्वेण संपूर्तिरहितेन वाचः वाक्येन मन्त्रेणाभिषिक्तो भवति । तस्मादयं स्वोचितादायुषः पुरा प्रैतोः प्रैतुं मर्तुं ईश्वरः समर्थो भवति । तस्मात् आयुःक्षयहेतुत्वादयं पक्षो न युक्त इति जाबालायाः पुत्रः सत्यकामो महर्षिराह । ऐब्रासा.

**ईश्वरो ह सर्वमायुरैतोः, सर्वमाप्नोद्विजयेन, इत्यु ह स्माऽऽहोद्दालक आरुणिर्यमेताभिर्व्याहृतिभिरभिषिञ्चन्तीति । तमेतेनैवाभिषिञ्चेत् 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय भूर्भुवः स्वः' इति ॥**

पूर्वपक्षं दूषयित्वा सिद्धान्तमाह- ईश्वर इति । यं क्षत्रियं एताभिर्व्याहृतिभिरभिषिञ्चन्ति स क्षत्रियः सर्वमायुरैतोः सर्वमायुः प्राप्तुमीश्वरः समर्थो भवति । ततो विजयेन शत्रूनभिभूय सर्वं भोगमाप्नोत् प्राप्नोति इत्येवं अरुणपुत्र उद्दालक आह स्म । तस्मात्तं क्षत्रियं एतेन

(१) ऐब्रा. ३७।३-४.

व्याहृत्यन्तेनैव यजुषाऽभिषिञ्चेत्, न केवलेन । सोऽयं व्याहृत्यन्तो मन्त्रो नित्यप्रयोगे द्रष्टव्यः । काम्यप्रयोगे तु व्याहृतिविकल्पः पूर्वमुक्तः । ऐब्रासा.

**अथैतानि ह वै क्षत्त्रियादीजानाद्व्युत्क्रान्तानि भवन्ति– ब्रह्मक्षत्रे ऊर्गन्नाद्यमपामोषधीनां रसो ब्रह्मवर्चसमिरापुष्टिः प्रजातिः । क्षत्त्ररूपं तत् । अथो अन्नस्य रस ओषधीनां क्षत्त्रं प्रतिष्ठा । तद्यदेवामू पुरस्तादाहुती जुहोति तदस्मिन्ब्रह्मक्षत्त्रे दधाति ॥**

अभिषेकाङ्गं होमं विधत्ते– अथेति । अथ अभिषेकानन्तरं होम उच्यत इति शेषः । ईजानात् यागं कृतवतः क्षत्त्रियात् एतानि वक्ष्यमाणानि व्युत्क्रान्तानि अपगतानि भवन्ति । तानि निर्दिश्यन्ते– ब्रह्मक्षत्रे एतस्य समीपे वर्तमानं जातिद्वयम् । ऊर्क् क्षीरादिरसः । अन्नाद्यं ओदनादिकम् । तदेतदुभयं अपामोषधीनां रसः सारः । अपां रसः क्षीरादिः । ओषधीनां रसः अन्नाद्यम् । ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः । इरापुष्टिः अन्नसमृद्धिः । प्रजातिः पुत्रोत्पादनम् । तच्च सर्वं क्षत्त्रस्य स्वरूपं, अत्यन्तमपेक्षितत्वात् । एतेषां व्युत्क्रान्तौ क्षत्त्रियस्य स्वरूपहानिरेव भवति । अथो अपि च अन्नस्य ओदनस्य रसः रसस्य क्षीरादेः ओषधीनामन्नकारणानां व्रीहियवादीनां क्षत्त्रं प्रतिष्ठा क्षत्त्रिय आश्रयः । तस्मादुक्तो व्यतिक्रमः क्षत्त्रियस्य न युक्तः । तत् तथा सति यद्यमू बुद्धिस्थे आहुती अभिषिक्तस्य क्षत्त्रियस्य पुरस्ताज्जुहुयात्, तत् तदानीमस्मिन् अभिषिक्ते ब्राह्मणजातिं क्षत्त्रियजातिं तदुपलक्षितमन्नादिकं च सर्वमवस्थापयति । ' ब्रह्म प्रपद्ये स्वाहा, क्षत्त्रं प्रपद्ये स्वाहा ' इत्याहुतिद्वयं जुहुयादिति तात्पर्यार्थः । ऐब्रासा.

**अथ यदौदुम्बर्यासन्दी भवत्यौदुम्बरश्चमस उदुम्बरशाखोर्ग्वा अन्नाद्यमुदुम्बर ऊर्जमेवास्मिंस्तदन्नाद्यं दधाति ॥**

अभिषेकसाधनानि क्रमेण प्रशंसितुमादावासन्द्यादित्रयं प्रशंसति– अथेति । आसन्दीचमसशाखानां कारणभूतो य उदुम्बरः सोऽयं रसस्य अन्नस्य स्वरूपभूतः । तेनास्मिन् यजमाने रसमन्नं च संपादयति । ऐब्रासा.

**अथ यद्दधि मधु घृतं भवत्यपां स ओषधीनां रसोऽपामेवास्मिंस्तदोषधीनां रसं दधाति ॥**

दध्यादित्रयं प्रशंसति– अथेति । दधिघृतयोः पशुभक्षिततृणोदकजन्यत्वात् ओषधिरसत्वम्, मधुनः मधुकरानीतपुष्परसजन्यत्वात् ओषधिसारत्वम् । ऐब्रासा.

**अथ यदातपवर्ष्या आपो भवन्ति तेजश्च ह वै ब्रह्मवर्चसं चाऽऽतपवर्ष्या आपस्तेज एवास्मिंस्तद्ब्रह्मवर्चसं च दधाति ॥**

आतपसहिता वृष्टिजन्या अपः प्रशंसति– अथेति । आतपसंबन्धात् तेजस्त्वं, आहुतिफलरूपवृष्टिसंबन्धाद्ब्रह्मवर्चसत्वम् । ऐब्रासा.

**अथ यच्छष्पाणि च तोक्मानि च भवन्तीरायै तत्पुष्ट्यै रूपमथो प्रजात्या इरामेवास्मिंस्तत्पुष्टिं दधात्यथो प्रजातिम् ॥**

श्यामतृणान्यङ्कुराणि च प्रशंसति– अथेति । तृणानामङ्कुराणां च पश्वन्नत्वात् तद्भक्षणेन पशुषु पुष्टिप्रजोत्पादनयोर्दृष्टत्वात् इरापुष्टिप्रजातिरूपत्वम् । ऐब्रासा.

**अथ यत्सुरा भवति क्षत्त्ररूपं तदथो अन्नस्य रसः क्षत्त्ररूपमेवास्मिंस्तद्दधात्यथो अन्नस्य रसम् ॥**

सुरां प्रशंसति– अथेति । सुराया क्षत्त्रियस्यैव मदयोगात् क्षत्त्ररूपत्वं, व्रीह्याद्यङ्कुरजन्यत्वादन्नरसत्वम् । ऐब्रासा.

**अथ यद्दूर्वा भवति क्षत्त्रं वा एतदोषधीनां यद्दूर्वा । क्षत्त्रं राजन्यः । नितत इव हीह क्षत्त्रियो राष्ट्रे वसन्भवति प्रतिष्ठित इव । नितत्तेव दूर्वाऽवरोधैर्भूम्यां प्रतिष्ठितेव । तद्यद्दूर्वा भवत्योषधीनामेवास्मिंस्तत्क्षत्त्रं दधात्यथो प्रतिष्ठाम् ॥**

दूर्वां प्रशंसति– अथेति । ओषधिजातौ दूर्वायाः क्षत्त्रियजातित्वं राजसंबन्धिक्षत्त्रियजातिसाम्यादवगन्तव्यम् । तदेव साम्यं ' नितत: ' इत्यादिना प्रपञ्च्यते । इह राष्ट्रे क्षत्त्रियो वसन् तेषु ग्रामेषु संचरन् स्वपुरुषस्थापनाच्च स्वयं नितरां ततो विस्तृत एव राज्यैश्वर्येण प्रतिष्ठित एव भवति । दूर्वा चावरोधैरधोमुखैः स्वकीयमूलैर्नितरां ततेव व्याप्ता स्थैर्यादेकत्र प्रतिष्ठिता भवति । तत् तथा सति

यत् यत्र दूर्वा भवति तदानीमोषधिसंबन्धिक्षत्त्रियजातिं अस्मिन् यजमाने संपादयति । अपि च प्रतिष्ठां स्थैर्यमपि च संपादयति । ऐब्रासा.

**एतानि ह वै यान्यस्मादीजानाद् व्युत्क्रान्तानि भवन्ति तान्येवास्मिंस्तद्दधाति । तैरेवैनं तत्समर्धयति ॥**

प्रत्येकं प्रशस्य समुदायरूपेण प्रशंसति— एतानीति । ईजानात् यागं कृतवतः अस्मात्क्षत्त्रियात् यान्येवैतानि दध्युदुम्बरादीनि व्युत्क्रान्तानि भवन्ति तान्येवास्मिन् क्षत्त्रिये संपाद्य तैरेवैनं समृद्धं करोति । ऐब्रासा.

**अथास्मै सुराकंसं हस्त आदधाति ॥**

अभिषिक्तस्य क्षत्त्रियस्य पानपात्रं विधत्ते— अथेति । अथ अभिषेकानन्तरं अस्मै अस्य क्षत्त्रियस्य हस्ते सुरायुक्तकांस्यपात्रमादध्यात् । ऐब्रासा.

**[1]स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥**

तत्र मन्त्रमाह— स्वादिष्ठयेति । हे सोम तत्समानसुराद्रव्य, स्वादिष्ठया अतिशयेन स्वादुभूतया मदिष्ठया अतिशयेन मदहेतुभूतया त्वदीयया धारया पवस्व यजमानं शोधय । हे द्रव्यविशेष, इन्द्राय पातवे इन्द्रस्य पानार्थं सुतः अभिषुतः संपादितोऽसि । ऐब्रासा.

**[2]इत्याधाय शान्तिं वाचयति ॥**

मन्त्रान्तरेण शान्तिवाचनं विधत्ते— इतीति । इति अनेन पूर्वोक्तमन्त्रेण हस्ते सुरायुक्तं कांस्यपात्रमाधाय वक्ष्यमाणमन्त्रेण शान्तिं वाचयेत् । ऐब्रासा.

**[3]नाना हि वां देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमनि । सुरा त्वमसि शुष्मिणी सोम एष राजा मैनं हिंसिष्टं स्वां योनिमाविशन्तौ ॥ इति ॥**

तं मन्त्रं दर्शयति— नानेति । हे सुरासोमौ, वां युवयोः देवहितं देवैः संपादितं सदः स्थानं नाना कृतं पृथगेव निष्पादितम् । अतः परमे व्योमनि उत्कृष्टे उदराकाशे मा संसृक्षाथां संसर्गं मा कुरुतम् । संसर्गे हि सोमस्य बाधा स्यात् । हे मद्य, त्वं शुष्मिणी बलवती सुराऽसि । एष तु सोमो राजा । तौ बलवन्तौ युवां उभौ स्वां योनिं आविशन्तौ उदरमध्ये विभागेन स्वं स्वं स्थानं प्रविशन्तौ एनं पातारं मा हिंसिष्टं हिंसितं उपद्रुतं मा कुरुतम् । इत्येतं मन्त्रं क्षत्त्रियस्याग्रे कथयित्वा तं वाचयेत् । ऐब्रासा.

**[1]सोमपीथस्य चैषा सुरापीथस्य च व्यावृत्तिः ॥**

तस्य मन्त्रस्य तात्पर्यार्थं दर्शयति— सोमेति । एषा मन्त्रप्रतिपाद्या सोमपानसुरापानयोः परस्परव्यावृत्तिः, ' मा संसृक्षाथाम् ' इति संसर्गस्य निषिद्धत्वात् । ऐब्रासा.

**पीत्वा यं रातिं मन्येत तस्मा एनां प्रयच्छेत् । तद्धि मित्रस्य रूपम् । मित्र एवैनां तदन्ततः प्रतिष्ठापयति । तथा हि मित्रे प्रतितिष्ठति ॥**

पीतशेषस्य दानं विधत्ते— पीत्वेति । कांस्यपात्रगतां सुरां क्षत्त्रियः स्वयं पीत्वा यं पुरुषं रातिं स्वस्य धनदातारं मित्रं मन्येत तस्मै पुरुषाय एनां अवशिष्टां सुरां प्रयच्छेत् । तदेकपात्रगतद्रव्यपानं मित्रस्य रूपम्, परस्परं मित्रयोः सहभोजनदर्शनात् । तत् तेन दानेन अन्ततः पानान्ते मित्र एवैनां सुरां प्रतिष्ठापयति । तथा हि तथैव कुर्वन् स्वयमपि मित्रे प्रतिष्ठितो भवति । ऐब्रासा.

**प्रतितिष्ठति य एवं वेद ॥**

वेदनं प्रशंसति— प्रतीति । ऐब्रासा.

**अथोदुम्बरशाखामभि प्रत्यवरोहति । ऊर्ग्वा अन्नाद्यमुदुम्बरः । ऊर्जमेव तदन्नाद्यमभि प्रत्यवरोहति ॥**

आसन्द्या अवरोहं विधत्ते— अथेति । अथ अभिषेकपानानन्तरं भूमौ उदुम्बरशाखामवस्थाप्य तामभिलक्ष्य प्रत्यवरोहेत् । योऽयमुदुम्बरः स ऊर्ग्वै रसरूप एव,

(१) ऋसं. ९।१।१; सासं. १।५।१ (४६८), २।१।५ (६८९); शुसं. २६।२५; ऐब्रा. ३७।४, ३९।६; नि. ११।३.

(२) ऐब्रा. ३७।४.

(३) ऐब्रा. ३७।४. शेषाः स्थलादिनिर्देशाः राका. पृ. १७९ इत्यत्र द्रष्टव्याः ।

(१) ऐब्रा. ३७।४—७.

तत्फले माधुर्यसद्भावात् । तथा अन्नाद्यस्वरूपश्च, तद्भक्षणेनोदरपूरणात् । तस्मादुदुम्बरशाखायां प्रत्यवरोहेन(? ण) ऊर्जे अन्नाद्यं चाभिलक्ष्यावरोहति । ऐब्रासा.

**उपर्येवाऽऽसीनो भूमौ पादौ प्रतिष्ठाप्य प्रत्यवरोहमाह ॥**

तत्र प्रकारं विधत्ते– उपरीति । आसन्द्या उपर्येव स्वयमुपविष्टः प्रथमतः पादौ भूमाववस्थाप्य प्रत्यवरोहसाधनभूतं मन्त्रं पठेत् । ऐब्रासा.

**प्रतितिष्ठामि द्यावापृथिव्योः प्रतितिष्ठामि प्राणापानयोः प्रतितिष्ठाम्यहोरात्रयोः प्रतितिष्ठाम्यन्नपानयोः प्रति ब्रह्मन्प्रति क्षत्त्रे प्रत्येषु त्रिषु लोकेषु तिष्ठामि ॥**

तं मन्त्रं दर्शयति– प्रतीति । भूमौ यदवरोहणं तत् द्यावापृथिव्यादिषु सर्वेष्ववस्थानमिति मन्त्रार्थः ।

ऐब्रासा.

**अन्ततः सर्वेणाऽऽत्मना प्रतितिष्ठति, सर्वस्मिन्ह वा एतस्मिन्प्रतितिष्ठति, उत्तरोत्तरिणीं ह श्रियमश्नुते, अश्नुते ह प्रजानामैश्वर्यमाधिपत्यं, य एवमेतेन पुनरभिषेकेणाभिषिक्तः क्षत्त्रियः प्रत्यवरोहति ॥**

अनेन मन्त्रेण क्रियमाणं प्रत्यवरोहं प्रशंसति– अन्तत इति । यः क्षत्त्रियः उक्ताभिषेकादूर्ध्वं अनेन मन्त्रेण प्रत्यवरोहति स पुरुषः अन्ततः अभिषेकस्यान्ते धनिकत्वादिना सर्वेण रूपेण प्रतिष्ठितो भवति । एतस्मिन् सर्वस्मिन् द्यावापृथिव्यादिके प्रतिष्ठितो भवति । उत्तरेत्यादि पूर्ववद्योजनीयम् । ऐब्रासा.

**एतेन प्रत्यवरोहेण प्रत्यवरुह्योपस्थं कृत्वा प्राङासीनः 'नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मणे' इति त्रिष्कृत्वो ब्रह्मणे नमस्कृत्य 'वरं ददामि जित्या अभिजित्यै विजित्यै संजित्यै' इति वाचं विसृजते ॥**

प्रत्यवरोहादूर्ध्वं कर्तव्यं विधत्ते– एतेनेति । प्रत्यवरुह्येति दीर्घश्छान्दसः । पूर्वोक्तेन प्रत्यवरोहमन्त्रेण प्रत्यवरुह्य भूमावुपस्थं आसनविशेषं कृत्वा प्राङ्मुख आसीनो नमस्कारमन्त्रं त्रिः पठित्वा 'वरम्' इत्यादिमन्त्रेण वाचं विसृजेत् । वाग्विसर्गो लौकिकव्यवहारः । जितिः जयमात्रम् । अभितः सर्वेषु देवेषु जितिः अभिजितिः । प्रबलदुर्बलशत्रूणां तारतम्येन विविधो जयो विजितिः । पुनःशत्रुत्वराहित्याय सम्यग्जयः संजितिः । एतत्सिद्ध्यर्थं ब्राह्मणाय वरं गां ददामि । ऐब्रासा.

**स यत् 'नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मणे' इति त्रिष्कृत्वो ब्रह्मणे नमस्करोति ब्रह्मण एव तत्क्षत्त्रं वशमेति । तद्यत्र वै ब्रह्मणः क्षत्त्रं वशमेति तद्राष्ट्रं समृद्धं तद्वीरवत् । आ हास्मिन्वीरो जायते ॥**

नमस्कारमन्त्रं प्रशंसति– स इति । स क्षत्त्रियो मन्त्रेण नमस्करोतीति यदस्ति तेन ब्रह्मणः ब्राह्मणस्यैव क्षत्त्रियजातिर्वशमेति । तेन ब्राह्मणाधीनत्वेन तद्राष्ट्रं सर्ववसुसमृद्धं वीरपुरुषोपेतं च भवति । अस्मिन् क्षत्त्रिये वीरः पुरुष आजायते । ऐब्रासा.

**अथ यत् 'वरं ददामि जित्या अभिजित्यै विजित्यै संजित्यै' इति वाचं विसृजत एतद्वै वाचो जितं यद्ददामीत्याह । यदेव वाचो जिता३म्, तन्म इदमनु कर्म संतिष्ठाता इति ॥**

वरदानमन्त्रं प्रशंसति– अथेति । 'वरम्' इत्यादिमन्त्रेण वाचं विसृजते इति यदस्ति तस्मिन् मन्त्रस्वरूपे ददामीति यदाह एतदेव वाक्संबन्धि जितं जयः । यदेव वाचो जितमस्ति । पूजार्थो जितामिति दीर्घः(? प्लुतः) । तत् वाग्जयरूपं मे मदीयमिदं कर्मानुसृत्य संतिष्ठातै समाप्तं भवति सम्यगवतिष्ठतामिति तस्य मन्त्रस्याभिप्रायः ।

ऐब्रासा.

**विसृज्य वाचमुपोत्थायाऽऽहवनीये समिधमभ्यादधाति ॥**

समिदाधानं विधत्ते– विसृज्येति । उक्तेन प्रकारेण वाङ्नियमं परित्यज्य तस्मादासनादुत्थितो वक्ष्यमाणमन्त्रेणाऽऽहवनीये समिधं प्रक्षिपेत् । ऐब्रासा.

**'समिदसि सम्वेङ्क्ष्वेन्द्रियेण वीर्येण स्वाहा' इति ॥**

तं मन्त्रं दर्शयति— समिदिति । हे काष्ठ, त्वं समिदसि समिन्धनसाधनमसि । इङ्खतिधातोर्लोण्मध्यमपुरुषैकवचनमेङ्क्ष्वेति । स च गत्यर्थः । उशब्दोऽनर्थकः । इन्द्रियपाटवेन शरीरसामर्थ्येन च सम्वेङ्क्ष्व संयोजय । त्वदर्थं स्वाहुतमिदमस्तु । ऐब्रासा.

**इन्द्रियेणैव तद्वीर्येणाऽऽत्मानमन्ततः समर्धयति ॥**

मन्त्रस्य तात्पर्यार्थं दर्शयति— इन्द्रियेणेति । तत् तेन समिदाधानमन्त्रेण आत्मानं अभिषेककर्मान्ते वीर्येन्द्रियाभ्यां समृद्धं करोति । ऐब्रासा.

**आधाय समिधं त्रीणि पदानि प्राङुदङ्ङभ्युत्क्रामति ॥**

समिदाधानादूर्ध्वं कर्तव्यं विधत्ते— आधायेति । समिधं प्रक्षिप्य प्राङ्मुख उदङ्मुखो वा पदत्रयमभित उत्क्रामेत् । यद्वा प्राङुदङ्ङित्यन्तरालवर्तिनीमैशानीं दिशमभिलक्ष्योत्क्रामेत् । ऐब्रासा.

**क्लृप्तिरसि दिशां मयि देवेभ्यः कल्पत । कल्पतां मे योगक्षेमोऽभयं मेऽस्तु ॥**

तत्र मन्त्रं दर्शयति— क्लृप्तिरिति । दिग्विशेषमभिलक्ष्य क्रियमाण हे पदोत्क्रमण, त्वं दिशां क्लृप्तिः कल्पनं स्वाधीनत्वसंपादकमसि । अतो मयि सेवार्थं कल्पत कल्पनं सामर्थ्यं कुरु । बहुवचनं छान्दसम् । मे मम योगसहितः क्षेमः कल्पतां संपद्यताम् । तथैव मे मम अभयं भयराहित्यमस्तु । ऐब्रासा.

**इत्यपराजितां दिशमुपतिष्ठते जितस्यैवापुनःपराजयाय । तत्तदितीँ३ ॥**

दिगुपस्थानं विधत्ते— इतीति । इत्यनेन पूर्वोक्तेन 'क्लृप्तिरसि' इत्यादिमन्त्रेण पराजयरहितां प्राचीमुदीचीं वा दिशमुपतिष्ठते । अथवा दिशं ऐशानीं अपराजितां उपतिष्ठते । पूर्वं जितस्यैव दिग्विशेषस्य पुनःपराजयराहित्यार्थमुपस्थानम् । लोकाश्च तदुपस्थानमिति सर्वे पूजयन्ति । पूजार्थेयं सानुनासिकप्लुतिः । ऐब्रासा.

**देवासुरा वा एषु लोकेषु संयेतिरे । त एतस्यां प्राच्यां दिशि येतिरे । तांस्ततोऽसुरा अजयन् । ते दक्षिणस्यां दिशि येतिरे । तांस्ततोऽसुरा अजयन् । ते प्रतीच्यां दिशि येतिरे । तांस्ततोऽसुरा अजयन् । त उदीच्यां दिशि येतिरे । तांस्ततोऽसुरा अजयन् । त एतस्मिन्नवान्तरदेशे येतिरे य एष प्राङुदङ् । ते ह ततो जिग्युः ॥**

'अपराजितां दिशमुपतिष्ठते' इति यदुक्तं तत्रैशान्या दिशो मुख्यापराजितत्वं दर्शयति— देवासुरा इति । पुरा कदाचिद्देवाश्चासुराश्च एषु भूरादिषु लोकेषु निमित्तेषु संयेतिरे युद्धं कृतवन्तः । तत्र प्राच्यादिषु चतसृषु दिक्षु यत्र यत्र युद्धं कृतं तत्र तत्रासुराणामेव विजयोऽभूत् । य एष प्राङुदङ्दिग्द्वयस्पर्शी कश्चिदवान्तरदेशः ऐशानात्मकः एतस्मिन् देशे यदा युद्धं कृतं तदा ते देवास्ततो देशान्निमित्तभूतात् जिग्युः जयं प्राप्ताः । तस्मादियमैशानी दिगपराजिता पूर्वोक्तमन्त्रेणोपस्थेया । ऐब्रासा.

**तं यदि क्षत्त्रिय उपधावेत्सेनयोः समायत्योस्तथा मे कुरु यथाऽहमिमां सेनां जयानीति । स यदि तथेति ब्रूयात् 'वनस्पते वीड्वङ्गो हि भूयाः' इत्यस्य रथोपस्थमभिमृश्याथैनं ब्रूयात् ॥**

तमेतमभिषिक्तक्षत्त्रियवृत्तान्तं तावदवस्थाप्य तत्प्रसङ्गागतं पुरुषान्तरवृत्तान्तं दर्शयति— तमिति । कस्मिंश्चिद्देशे युद्धार्थमुभे सेने परस्परं समागच्छतः । तयोः समागच्छन्त्योः सेनयोर्मध्ये यः कोऽपि क्षत्त्रियो विजयार्थी सन् तमभिषिक्तं ऐशानीदिगुपस्थानमुक्तं राजानं यद्युपधावेत् शरणं गच्छेत् । केनाभिप्रायेणेति सोऽभिधीयते— हेऽभिषिक्त, यथाऽहमिमां शत्रुसेनां जयानि तथा मेऽनुग्रहं कुर्विति तदभिप्रायः । तदानीं सोऽभिषिक्तः क्षत्त्रियो यदि तथेत्यङ्गीकारं ब्रूयात्तदानीं 'वनस्पते' इत्यृचा जयार्थिनः पुरुषस्य रथोर्ध्वभागमभिमृश्यानन्तरमेनं जयार्थिनं प्रति वक्ष्यमाणं मन्त्रं ब्रूयात् । ऐब्रासा.

**आतिष्ठस्वैतां ते दिशमभिमुखः संनद्धो रथोऽभिप्रवर्ततां स उदङ् स प्रत्यङ् स दक्षिणा स प्राङ् सोऽभ्यमित्रम् ॥ इति ॥**

तं मन्त्रं दर्शयति— आतिष्ठस्वेति । हे जयार्थिन्, एतां ऐशानीं दिशमातिष्ठस्व प्राप्नुहि । ते रथः एता-

मैशानीं दिशं प्रत्यभिमुखः संनद्धः सर्वायुधादिसंनाहोपेतोऽमितः प्रवर्तताम् । ततः स रथः उदङ्मुखः प्रवर्तताम् । ततः स रथः प्रत्यङ्मुखः प्रवर्तताम् । ततः स रथो दक्षिणामुखः प्रवर्तताम् । ततः स रथः प्राङ्मुखः प्रवर्तताम् । तत ऊर्ध्वे अभ्यमित्रं त्वदीयं शत्रुं प्रति प्रवर्तताम् । ऐब्रासा.

**'अभीवर्तेन हविषा' इत्येवैनमावर्तयेत् । अथैनमन्वीक्षेताप्रतिरथेन शासेन सौपर्णेनेति ॥**

जयार्थिनं प्रत्येतन्मन्त्रकथनादूर्ध्वमभिषिक्तस्य कर्तव्यं दर्शयति– अभीवर्तेनेति । 'अभीवर्तेन' इत्यादिना सूक्तेन एनं जयार्थिनं उक्तक्रमेण दिक्ष्वावर्तयेत् । अथ अनन्तरं आवर्तमानमेनं सूक्तत्रयेणान्वीक्षेत । 'आशुः शिशानः' (ऋसं. १०।१०३।१–१३) इत्यप्रतिरथं सूक्तम्, 'शास इत्था' (ऋसं. १०।१५२।१–५) इति शाससूक्तम्, 'प्रधारयन्तु मधुनः' (खिल. १।३।१–७) इति सौपर्णसूक्तम् । ऐब्रासा.

**जयति ह तां सेनाम् ॥**

अभिषिक्तस्य कृत्यमुक्त्वा जयार्थिनः कृत्यं दर्शयति– जयतीति । ऐब्रासा.

**यद्यु वा एनमुपधावेत्संग्रामं संयतिष्यमाणस्तथा मे कुरु यथाऽहमिमं संग्रामं संजयानीति । एतस्यामेवैनं दिशि यातयेत् । जयति ह तं संग्रामम् ॥**

सेनाद्वययुद्धे जयार्थे प्रयोगमुक्त्वा पुरुषद्वंद्वयुद्धेऽपि तमाह– यदीति । यः कोऽपि पुमान् संयतिष्यमाणो युद्धं करिष्यंस्तं संग्रामं जेतुं एनं अभिषिक्तं यद्युपधावेत् । तथा मे कुर्विति पूर्ववत् । ऐब्रासा.

**यद्यु वा एनमुपधावेद्राष्ट्रादपरुध्यमानस्तथा मे कुरु यथाऽहमिदं राष्ट्रं पुनरवगच्छानीति । तामेवैनं दिशमुपनिष्क्रमयेत् । तथा ह राष्ट्रं पुनरवगच्छति ॥**

राष्ट्राद्भ्रष्टस्य पुनरपि राष्ट्रप्राप्त्यर्थं प्रयोगं दर्शयति– यदीति । यथा वै सेनयोर्युद्धे पुरुषयोर्युद्धे चाभिषिक्तेनोदीचीं( ? नैशानीं ) दिशं प्रति प्रस्थापितस्य जयस्तथैव राष्ट्रभ्रष्टोऽप्यभिषिक्तेनैशानीं दिशं प्रस्थापितो राष्ट्रं पुनः प्राप्नोति । ऐब्रासा.

**उपस्थायामित्राणां व्यपनुत्तिं ब्रुवन्गृहानभ्येति 'अप प्राच इन्द्र विश्वाँ अमित्रान्' इति । सर्वतो हास्मा अनमित्रमभयं भवति, उत्तरोत्तरिणीं ह श्रियमश्नुते, अश्नुते ह प्रजानामैश्वर्यमाधिपत्यं, य एवमेतामित्राणां व्यपनुत्तिं ब्रुवन्गृहानभ्येति ॥**

इत्थं प्रासङ्गिकं प्रयोगत्रयमुक्त्वा प्रकृतमेवाभिषिक्तविषयं प्रयोगमाह– उपस्थायेति । पूर्वत्र 'क्लृप्तिरसि' इत्यादिमन्त्रेणाभिषिक्तस्य पदत्रयाभ्युत्क्रमणं ऐशानीदिगुपस्थानं चाभिहितम् । तां दिशमुपस्थाय अनन्तरं अमित्राणां शत्रूणां व्यपनुत्तिं विशेषेण अपनोदनहेतुं अत एव व्यपनुत्त्यभिधानां 'अप प्राचः' इत्यादिकामृचं ब्रुवन् स्वगृहानभिगच्छेत् । तस्यामृचि द्वितीयपादे 'नुदस्व' इति श्रवणात् इयमृगमित्राणां व्यपनुत्तिः । अस्मै एवं गृहमागच्छतोऽस्य यजमानस्य सर्वतः सर्वासु दिक्षु शत्रुराहित्यलक्षणमभयं भवति । न केवलं भयराहित्यं, किंतु उत्तरोत्तराभिवृद्धिसंपत्प्राप्त्युपायादिकमपि । यथोक्तमन्त्रोच्चारणेन यो गृहानभ्यागतो भवति । ऐब्रासा.

**एत्य गृहान्पश्चाद्गृह्यस्याग्नेरुपविष्टायान्वारब्धाय ऋत्विगन्ततः कंसेन चतुर्गृहीतास्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोत्यनार्त्या अरिष्ट्या अज्यान्या अभयाय ॥**

गृहप्राप्तेरूर्ध्वं कर्तव्यं विधत्ते– एत्येति । गृहान्प्रत्यागत्य योऽयं गृह्यो गृहे वर्तमान औपासनोऽग्निस्तस्य पश्चाद्भाग उपविष्टायाऽऽसीनाय ऋत्विजेऽन्वारब्धाय उपसृष्टवते क्षत्रियाय तादृशस्य क्षत्रियस्य अनार्त्यादिसिद्ध्यर्थं ऋत्विक् अध्वर्युः अन्ततः सर्वप्रयोगान्ते कंसेन कांस्यपात्रेण चतुर्गृहीताः चतुर्वारं स्वीकृताः ऐन्द्रीः इन्द्रदेवताकाः वक्ष्यमाणैस्त्रिभिर्मन्त्रैः तिस्र आज्याहुतीः प्रपदं यथा भवति तथा जुहुयात् । प्रपदं प्रकृष्टं पदम् । तथा चाऽऽहुः– 'पादा यस्यास्तु यावन्तो यावदक्षरसंमिताः । ऋच्यध्ययनमेतेषां प्रपदं तद्विदुर्बुधाः ॥' इति । अतः प्रपदशब्देन अक्षरपादादिवैकल्यरहितं लाक्षणिकमुच्चारण-

मभिधीयते। अनार्तिः व्याधिपीडाराहित्यम्। अरिष्टिः शत्रुभिरहिंसा। अज्यानिः द्रव्यहानिराहित्यम्। अभयं चोरादिभयराहित्यम्। ऐब्रासा.

**पर्यूषु प्रधन्व वाजसातये परि वृत्रा भूर्ब्रह्म प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये। सह प्रजया सह पशुभिर्णि सक्षणिर्द्विषस्तरध्या ऋणया न ईयसे स्वाहा॥**

उक्ताहुत्यर्थं प्रथमं मन्त्रमाह– पर्यूष्विति। अत्र 'पर्यूषु' इत्यादिकाया ऋचः 'परि वृत्राणि सक्षणिः' इति द्वितीयः पादः। तस्मिन् पादे 'वृत्राणि' इति यत्पदं तस्य पदस्य मध्ये 'भूः' इत्यादिकं 'पशुभिः' इत्यन्तं पदजातं प्रक्षेपणीयम्। 'वृत्रा' इत्येतदक्षरद्वयं पुरस्तात्, 'णि' इत्येतत्परस्तात्, मध्ये प्रक्षेपः। अत एवास्योच्चारणस्य प्रपदमिति नाम संपन्नम्। प्रक्षिप्तं पदजातं यस्मिन्नुच्चारणे तदुच्चारणं प्रपदम्। तत्र तावत्संहितायामाम्नाताया ऋचोऽयमर्थः:– हे इन्द्र, वाजसातये अन्नलाभाय। पर्यूषु इतिनिपातत्रयसमूहेन परित इत्येतावानेवार्थोऽभिधीयते। परितः सर्वतः प्रधन्व प्रकर्षेण धारय। धारणार्थो धन्वतिधातुः। अस्मभ्यं अन्नं दातुं चित्तं धारयेत्यर्थः। वृत्राणि शत्रून् परि सक्षणिः परितो निराकरिष्णुर्भव। सक्षणिधातुः औचित्यान्निराकरणं ब्रूते। द्विषः शत्रून् तरध्यै तरीतुं ऋणयाः प्रयत्नं प्राप्तः नः अस्मदर्थं ईयसे चेष्टसे इति। अस्यामृचि वृत्राणीति पदस्य मध्ये प्रक्षिप्तस्य भूरित्यादिपशुभिरित्यन्तपदजातस्यायमर्थः:– अयं क्षत्त्रियः असौ विष्णुगुप्तादिनामकः भूरादीन् प्रपद्यते शरणं गच्छति। भूः पृथिवी। ब्रह्म वेदः। प्राणः प्रसिद्धः। अमृतं मरणरहितम्। देवतारूपं भूरादिकं शरणं प्रपन्नस्य क्षत्त्रियस्य प्रजया पुत्रादिरूपया सह पशुभिः गवादि(भि)श्च सह स्वस्तये क्षेमार्थं त्वं शर्म सुखं वर्म कवचं अभयं भयरहितं देवतादिरूपं स्थानं च कुर्विति शेषः। एतत्सिद्ध्यर्थं स्वाहा तुभ्यमिदं सुहुतमस्तु। ऐब्रासा.

**अनु हि त्वा सुतं सोम मदामसि महे सम भुवो ब्रह्म प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये। सह प्रजया सह पशुभि( ? भी )र्य राज्ये वाजाँ अभि पवमान प्रगाहसे स्वाहा॥**

प्रपदनामकं प्रथमं मन्त्रमुक्त्वा तन्नामकं द्वितीयं मन्त्रमाह– अन्विति। अत्रापि 'अनु हि त्वा' इत्येतस्यामृचि 'महे समर्य राज्ये' इति द्वितीयः पादः। तत्र समर्येति यत्पदं तस्य 'सम' इत्यक्षरद्वयमधस्तात्कृत्वा 'र्य' इत्येतत्तृतीयमक्षरमुपर्यवस्थाप्य 'भुवः' इत्यादिकं पदजातं प्रक्षेपणीयम्। तस्या ऋचोऽयमर्थः:- हे सोम, सुतं अभिषुतं त्वां अनुमदामसि वयं हृष्यामः। समरं युद्धं, तमर्हतीति समर्यः शूरः, तथाविध हे इन्द्र, महे महति राज्ये। एनं क्षत्त्रियं स्थापयेति शेषः। हे पवमान शोधक, वाजान् अन्नानि अभिप्रगाहसे सर्वतः प्रकर्षेण गाहसे विलोडयसि, संपादयसीत्यर्थः। पदमध्ये प्रक्षिप्तस्य पदजातस्याऽऽदौ भुव इत्यन्तरिक्षमुच्यते। ब्रह्मेत्यादिकं स्वाहाकारश्च पूर्ववत्। ऐब्रासा.

**अजीजनो हि पवमान सूर्यं विधारे श स्वर्ब्रह्म प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये। सह प्रजया सह पशुभिः क्मना पयो गोजीरया रंहमाणः पुरं ध्या स्वाहा॥ इति॥**

प्रपदनामकं तृतीयं मन्त्रमाह– अजीजन इति। 'अजीजनः' इत्यस्यामृचि 'विधारे शक्मना' इति द्वितीयः पादः। तत्रत्यस्य शक्मनेति पदस्य 'श' इत्येकमक्षरमधस्तादुच्चार्य 'क्मना' इत्यक्षरद्वयमुपरिष्टादवस्थाप्य मध्ये स्वरित्यादिकं पशुभिरित्यन्तं पदजातं प्रक्षेपणीयम्। तस्या ऋचोऽयमर्थः:– हे पवमान शोधकेन्द्र, त्वं सूर्यमजीजनः उत्पादितवानसि। शक्मना स्वशक्त्या पयः जलं विधारे विशेषेण मेघमध्ये धारयसि। गोजीरया गवां जीवनेन निमित्तेन रंहमाणः वृष्टिप्रदानार्थं संचरन् पुरं पूर्णफलं ध्या चिन्तय। गोजीरयेत्युपलक्षणम्, सर्वप्राणिजीवननिमित्तमित्यर्थः। अत्रापि शक्मनेतिपदमध्ये प्रक्षिप्तस्य पदजातस्याऽऽदौ स्वरिति द्युलोकोऽभिधीयते। ब्रह्मेत्यादिकं स्वाहाकारान्तं पूर्ववत्। एतेषां प्रपदनामकानां मन्त्राणां लक्षणं पूर्वमेव 'पादा यस्यास्तु' इति श्लोकेनोदाहृतम्। 'पर्युषु' इत्यादिका( या ) ऋचो मध्ये 'भूर्ब्रह्म

प्राण' इत्यादिकाया अस्या ऋचो यावन्तः पादा यावदक्षरसंमितास्तेषां सर्वेषां पतनं प्रपदमिति तस्य लक्षणवाक्यस्यार्थः । ऐब्रासा.

**अनार्तो ह वा अरिष्टोऽजीतः सर्वतो गुप्तस्त्रय्यै विद्यायै रूपेण सर्वा दिशोऽनु संचरत्यैन्द्रे लोके प्रतिष्ठितः, यस्मा एता ऋत्विगन्ततः कंसेन चतुर्गृहीतास्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोति ॥**

उक्तमन्त्रत्रयसाध्या आहुतीः प्रशंसति– अनार्त इति । यस्मै क्षत्रियाय ऋत्विक् अध्वर्युः अन्ततः अभिषेकप्रयोगान्ते यथोक्तक्रमेण जुहोति, असौ क्षत्रियः अनार्तः रोगरहितः अरिष्टः शत्रुभिरहिंसितः अजीतः तैः शत्रुभिर्युद्धेऽप्यजितः सर्वतो गुप्तः इन्द्रेण रक्षितः । केन साधनेन रक्षित इति तदुच्यते– त्रय्यै विद्यायै रूपेण । वेदत्रयोक्तमन्त्रेणेत्यर्थः । तेन रक्षितः सन् सर्वा दिशः प्राच्याद्या अनुसंचरति अनुक्रमेण विजयार्थं प्रवर्तते, मरणादूर्ध्वमैन्द्रे लोके प्रतिष्ठितो भवति । ऐब्रासा.

**अथान्ततः प्रजातिमाशास्ते गवामश्वानां पुरुषाणाम् 'इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो वीरस्त्राता निषीदतु ॥' इति ॥**

होमादूर्ध्वमाशीर्मन्त्रपाठं विधत्ते– अथेति । अथ होमानन्तरं अन्ततः प्रयोगान्ते 'इह गावः' इत्यादिमन्त्रेण गवादीनां प्रजातिं उत्पत्तिं आशास्ते प्रार्थयते । मन्त्रस्यायमर्थः– हे गावः, इह मद्राष्ट्रे प्रजायध्वं प्रकर्षेणोत्पन्ना भवत । एवमश्वाः पुरुषाश्च । इह उ अस्मिन्नेव राष्ट्रे सहस्रदक्षिणः यागेषु सहस्रसंख्यदक्षिणादानशीलो वीरः पुत्रः त्राता प्रजानां रक्षकः सन्निषीदतु । ऐब्रासा.

**बहुर्ह वै प्रजया पशुभिर्भवति य एवमेतामन्ततः प्रजातिमाशास्ते गवामश्वानां पुरुषाणाम् ॥**

अनेन मन्त्रेण प्रार्थनं प्रशंसति– बहुरिति । य एवमाशासानः क्षत्रियः स प्रजादिभिर्बहुः वै भूत( ? प्रभूत ) एव भवति । ऐब्रासा.

**एष ह वाव क्षत्रियोऽविकृष्टो यमेवंविदो याजयन्ति ॥**

पुनरभिषेकपर्यन्तेऽस्मिन् क्षत्रिययागे याजयितॄणामृत्विजां वेदनं प्रशंसति– एष इति । एवं उक्ताभिषेकप्रकारं जानन्तः ऋत्विजो यं क्षत्रियं याजयन्ति एष एव क्षत्रियः सर्वेष्वविकृष्टो नापकृष्टः । न ह्यस्य कदाचिदप्यपकर्षो भवति । ऐब्रासा.

**अथ ह तं व्येव कर्षन्ते, यथा ह वा इदं निषादा वा सेळगा वा पापकृतो वा वित्तवन्तं पुरुषमरण्ये गृहीत्वा कर्तमन्वस्य वित्तमादाय द्रवन्ति, एवमेव त ऋत्विजो यजमानं कर्तमन्वस्य वित्तमादाय द्रवन्ति यमनेवंविदो याजयन्ति ॥**

ऋत्विजामभिषेकपरिज्ञानाभावं निन्दति– अथेति । अनेवंविदः अभिषेकप्रकारमजानन्तः ऋत्विजो यं क्षत्रियं याजयन्ति तं क्षत्रियं विकर्षन्ते एव विकृष्टं अपकृष्टं कुर्वन्त्येव । तत्रेदं निदर्शनमुच्यते–निषादा नीचजातयो मनुष्याः । सेळगाः चोराः । इळा अन्नं, तया सह वर्तन्त इति सेळाः धनिकाः, तान् धनापहारार्थं गच्छन्तीति चौराः सेळगाः । पापकृतः हिंसाकारिणः । त्रिविधा दुष्टाः पुरुषाः वित्तवन्तं बहुधनोपेतं पुरुषं अरण्यमध्ये गृहीत्वा कर्तमन्वस्य कस्मिंश्चिदन्धकूपादिरूपे गर्ते तं प्रक्षिप्य तदीयं धनमपहृत्य द्रवन्ति पलायन्ते, एवमेवानभिज्ञा ऋत्विजो यजमानं नरकरूपं कर्तमन्वस्य नरकहेतौ दुरनुष्ठानेऽवस्थाप्य दक्षिणारूपेण तदीयं द्रव्यमपहृत्य स्वगृहेषु गच्छन्ति । ऐब्रासा.

**एतद्ध स्म वै तद्विद्वानाह जनमेजयः पारिक्षितः– एवंविदं हि वै मामेवंविदो याजयन्ति, तस्मादहं जयामि, अभीत्वरीं सेनां जयाम्यभीत्वर्या सेनया, न मा दिव्या न मानुष्य इषव ऋच्छन्ति, एष्यामि सर्वमायुः, सर्वभूमिर्भविष्यामीति ॥**

उक्ताभिषेकपर्यन्तं क्षत्रिययागमुदाहरणमुखेन प्रशंसति –एतदिति । परिक्षितो राज्ञः पुत्रो जनमेजयः तदेतत्सर्वं प्रयोगमाहात्म्यं विद्वान् सभामध्ये एवमुवाच– अहमप्येवंवित् ऋत्विजोऽप्येवंविदः, तस्मादभिषेकान्तेन यागेन द्वंद्वयुद्धे जयामि । किंच, अभीत्वरीं अभितो युद्धार्थमुद्युक्तां परकीयां सेनां तादृश्या सेनया जयामि ।

तथाविधं मां दिव्या इषवो देवप्रेरिता बाणा न प्राप्नुवन्ति, मानुष्यश्चेषवो न प्राप्नुवन्ति। अपमृत्युरहितः सर्वमप्यायुः प्राप्स्यामि। सर्वा चतुःसागरपरिवेष्टिता भूमिर्यस्याधीना सोऽयं सर्वभूमिः, तादृशो भविष्यामीति। ऐब्रासा.

**न ह वा एनं दिव्या न मानुष्य इषव ऋच्छन्ति, एति सर्वमायुः, सर्वभूमिर्भवति, यमेवंविदो याजयन्ति याजयन्ति ॥**

जनमेजयवाक्योदाहरणे दृढीकृतमर्थं निगमयति— नेति। स्पष्टोऽर्थः। ऐब्रासा.

ऐन्द्रमहाभिषेकः

*** [1]अथात ऐन्द्रो महाभिषेकः ॥**

'पुनः कार्योऽभिषेकोऽन्ते क्रत्वङ्गत्वेन वर्णितः। अभिषेकः पुमर्थो यस्तस्योपोद्घात उच्यते ॥' तत्राऽऽदाविन्द्रस्याभिषेकं प्रतिजानीते— अथेति। अथ मानुषक्षत्रियाभिषेकोक्त्यनन्तरं यतो दैवोऽभिषेको बुभुत्सितः अतः कारणादिन्द्रसंबन्धी महाभिषेकः कथ्यते इति शेषः। आरोहणाभ्युत्क्रोशनाभिमन्त्रणादिभिः वक्ष्यमाणैरस्याभिषेकस्य महत्त्वं द्रष्टव्यम्। ऐब्रासा.

**ते देवा अब्रुवन् सप्रजापतिकाः— अयं वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमः, इममेवाभिषिञ्चामहा इति। तथेति तद्वै तदिन्द्रमेव ॥**

तदभिषेकार्थं देवविवादं दर्शयति— त इति। प्रजापतिना सह वर्तन्ते इति सप्रजापतिकाः तेऽग्न्यादयो देवाः परस्परमिदमब्रुवन् हस्तेनेन्द्रं प्रदर्श्य कथयन्ति (स्म) — अयमेवेन्द्रः देवानां मध्ये ओजिष्ठः अतिशयेनाष्टमधातुयुक्तः। बलिष्ठः अतिशयेन शरीरबलयुक्तः। सहिष्ठः अतिशयेन वैर्यभिभवशीलः। सत्तमः अतिशयेन स्वभक्तेषु साधुः। पारयिष्णुतमः अतिशयेन प्रक्रान्तस्य कार्यस्य समाप्तिकृत्। तस्मादिममेव सर्वे वयमभिषिञ्चामहै इति कैश्चिदुक्ते सति अन्ये सर्वेऽपि तथेत्यङ्गीकृत्य तद्वै तदानीमेव तदिन्द्रमेव तं सर्वैरनुमतमिन्द्रमेव अभ्यषिञ्चन्निति शेषः। ऐब्रासा.

**तस्मा एतामासन्दीं समभरन्नृचं नाम। तस्यै बृहच्च रथंतरं च पूर्वौ पादावकुर्वन्, वैरूपं च वैराजं चापरौ, शाकररैवते शीर्षण्ये, नौधसं च कालेयं चानूच्ये, ऋचः प्राचीनातानान्, सामानि तिरश्चीनवायान्, यजूंष्यतीकाशान्, यश आस्तरणम्, श्रियमुपबर्हणम्। तस्यै सविता च बृहस्पतिश्च पूर्वौ पादावधारयताम्, वायुश्च पूषा चापरौ, मित्रावरुणौ शीर्षण्ये, अश्विनावनूच्ये। स एतामासन्दीमारोहत् ॥**

तत्र प्रकारं दर्शयति— तस्मा इति। तस्मा इन्द्रार्थे एतां वक्ष्यमाणां वेदमयीमासन्दीं समभरन्। ऋचं नामेत्यासन्द्या विशेषणम्। ऋग्रूपां एतन्नामिकामित्यर्थः। तस्यै तस्याः ऋग्रूपाया आसन्द्याः बृहदादीन्यष्ट सामानि पूर्वपादाद्यष्टावयवानकुर्वन्। आसन्द्यां शयानस्येन्द्रस्य शिरोदेशस्थं फलकं शीर्षण्यम्। तच्च पाददेशाविष्कृतस्य फलकस्याप्युपलक्षणम्। अत एव शीर्षण्ये इति द्विवचनमुच्यते। अनूच्ये पार्श्वद्वयवर्तिनी फलके। ऋग्रूपा ये मन्त्राः सन्ति तान् प्राचीनातानान् प्राक्प्रत्यगायतत्वेन विस्तारितान् दीर्घतन्तुविशेषानकुर्वन्। गीयमानानि सामानि तिरश्चीनवायान् तिर्यक्त्वेन वयनहेतून् रज्जुविशेषानकुर्वन्। यजूंषि अतीकाशान् रज्ज्वन्तरालच्छिद्रविशेषानकुर्वन्। यत् यशः कीर्तिः देवतारूपं तदासन्द्या उपर्यास्तरणम्। या तु श्रीः संपदभिमानिनी देवता तां उपबर्हणं शिरस उपधानमकुर्वन्। तस्यै तस्या आसन्द्याः पादादीनष्टावयवान् सवित्रादयोऽष्टौ देवा अधारयन्। इन्द्र एतां वेदमयीमासन्दीं वक्ष्यमाणैः षण्मन्त्रैरारोहत्। ऐब्रासा.

* पूर्वाध्याये क्रत्वर्थो राजसूयाङ्गं राजाभिषेक उक्तः। अथ एकोनचत्वारिंशेऽध्याये पुरुषार्थः स्वतन्त्रो राजाभिषेको वक्ष्यते। तदर्थमष्टात्रिंशेऽध्याये दैव ऐन्द्रो महाभिषेक उच्यते। सोऽयं पुरुषार्थो राजाभिषेको राजसूयाङ्गराजाभिषेकप्रसङ्गेन ब्राह्मणे उक्तत्वात् अस्माभिरप्यत्रैव संगृहीतः।

(१) ऐब्रा. ३८।१.

'वसवस्त्वा गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नाऽऽरोहन्तु तानन्वारोहामि साम्राज्याय, रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नाऽऽरोहन्तु तानन्वारोहामि भौज्याय, आदित्यास्त्वा जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नाऽऽरोहन्तु तानन्वारोहामि स्वाराज्याय, विश्वे त्वा देवा आनुष्टुभेन च्छन्दसैकविंशेन स्तोमेन वैराजेन साम्नाऽऽरोहन्तु तानन्वारोहामि वैराज्याय, साध्याश्च त्वाऽऽप्त्याश्च देवाः पाङ्क्तेन च्छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नाऽऽरोहन्तु तानन्वारोहामि राज्याय, मरुतश्च त्वाऽङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्नाऽऽरोहन्तु तानन्वारोहामि पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायाऽऽरोहामि ' इत्येतामासन्दीमारोहत् ॥

तान्मन्त्रान्दर्शयति– वसव इति । वस्वादयो देवगणाः गायत्र्यादिच्छन्दोभिः त्रिवृदादिस्तोमैः रथंतरादिसामभिश्च सह हे आसन्दि, त्वां प्रथमत आरोहन्तु । ताननु पश्चादहमारोहामि । आप्त्या इत्यनेनापि वस्वादिशब्दवत् कश्चिद्देवगणविशेष उच्यते । साम्राज्यादीन्यारोहणप्रयोजनानि । एते च शब्दाः पूर्वाध्याये 'व्याघ्रचर्मणाऽऽस्तृणाति ' इत्यस्मिन् खण्डे व्याख्याताः । एतैः षड्भिर्मन्त्रैरिन्द्र उक्तामासन्दीमारोहत् । ऐब्रासा.

तमेतस्यामासन्द्यामासीनं विश्वे देवा अब्रुवन्– न वा अनभ्युत्क्रुष्ट इन्द्रो वीर्यं कर्तुमर्हति, अभ्येनमुत्क्रोशामेति । तथेति । तं विश्वे देवा अभ्युदक्रोशन्– ' इमं देवा अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं राजानं राजपितरं परमेष्ठिनं पारमेष्ठ्यं क्षत्त्रमजनि क्षत्त्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजनि पुरां भेत्ताऽजन्यसुराणां हन्ताऽजनि ब्रह्मणो गोप्ताऽजनि धर्मस्य गोप्ताऽजनि ' इति ॥

इन्द्रारोहणादूर्ध्वं देवानामभ्युत्क्रोशनं दर्शयति– तमिति । एतस्यां वेदमय्यामासन्द्यामासीनं तमिन्द्रं प्रति विश्वे सर्वे देवाः परस्परमिदमब्रुवन् । यथा लोके बन्दिनो गुणकथनेन राज्ञः कीर्तिं कुर्वन्त्येवमत्रापि गुणकीर्तनं अभ्युत्क्रोशनम् । तेन रहितोऽनभ्युत्क्रुष्ट इन्द्रो युद्धादौ वीर्यं कर्तुं नैवार्हति, कीर्तिमन्तरेण परेषां भीत्यनुदयात् । तस्मादभित एनमिन्द्रं अभ्युत्क्रोशाम उद्घोषयाम इति विचार्य तथैवाङ्गीकृत्य तमिन्द्रं सर्वे देवा अभ्युदक्रोशन् । इममित्यादिरभ्युत्क्रोशनप्रकारः । हे देवाः, इममिन्द्रमभितः उत्क्रोशत उद्घोषयत । कीदृशमिन्द्रम् ? सम्राट्स्वरूपं अत एव साम्राज्यं कर्तुमर्हम् । भोजं भोक्तारं अत एव भोजपितरं भोजपालकम् । स्वराड्रूपत्वादेव स्वाराज्यं कर्तुमर्हम् । राजरूपत्वादेव राजपितरं सर्वेषां राज्ञां पालकम् । परमेष्ठिरूपत्वात् पारमेष्ठ्यं पदमनुभवितुं योग्यम् । क्षत्त्रमजनि ईदृशी क्षत्त्रियजातिर्लोके समुत्पन्ना । तज्जातिमान् क्षत्त्रियः पुरुषः समुत्पन्नः । सर्वस्य प्राणिजातस्याधिपतिः समुत्पन्नः । विशां प्रजानामत्ता भोक्ता समुत्पन्नः । पुरां परकीयाणां भेत्ता विदारयिता समुत्पन्नः । असुराणां हन्ता घातकः समुत्पन्नः । ब्रह्मणः वेदस्य गोप्ता रक्षकः समुत्पन्नः । धर्मस्य वेदोक्तस्य गोप्ता रक्षकः समुत्पन्नः । इत्ययमभ्युत्क्रोशमन्त्रः । ऐब्रासा.

तमभ्युत्क्रुष्टं प्रजापतिरभिषेक्ष्यन्नेतयर्चाऽभ्यमन्त्रयत ॥

अभ्युत्क्रोशनादूर्ध्वं प्रजापतिकर्तव्यं दर्शयति– तमिति । एतया ' निषसाद ' इति वक्ष्यमाणया । ऐब्रासा.

"निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय

---

( १ ) ऋसं. १।२५।१० ( भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय० ); तैसं. १।८।१६।१ ऋसंवत्; कासं. २।७ ( ४३ ), ७।१४ ( ८३ ), १५।८ ( २३ ), ३८।४ ( ४४ ) ऋसंवत्; मैसं. १।६।२ ( ३२ ), २।६।१२ ( ३६ ), २।७।१६ ( २३१ ), ४।४।६ ( ७ ) ऋसंवत्; शुसं. १०।२७, २०।२ ऋसंवत्; ऐब्रा. ३८।२, ३९।४; तैब्रा. २।६।५।१-२ ऋसंवत्; शब्रा. १२।८।३।१० ऋसंवत्.

राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय सुक्रतुः ॥ ' इति ॥

'एतयर्चाऽभ्यमन्त्रयत' इत्यत्र योऽयं मन्त्र ऋक्शब्देन विवक्षितस्तं मन्त्रं दर्शयति— निषसादेति । धृतव्रतः स्वीकृतनियमः वरुणः सर्वस्यानिष्टस्य निवारयिता इन्द्रः पस्त्यासु गृहेषु आगत्य साम्राज्यादिफलसिद्ध्यर्थं सुक्रतुः शोभनसंकल्पो भूत्वा निषसाद अस्यामासन्द्यां निषण्णवान् । ऐब्रासा.

'तमेतस्यामासन्द्यामासीनं प्रजापतिः पुरस्तात्तिष्ठन् प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चत् 'इमा आपः शिवतमाः' इत्येतेन तृचेन, 'देवस्य त्वा' इति च यजुषा, 'भूर्भुवः स्वः' इत्येताभिश्च व्याहृतिभिः ॥

अनेन मन्त्रेणाभिमन्त्रितस्य इन्द्रस्याभिषेकप्रकारं दर्शयति— तमिति । एतस्यां पूर्वोक्तायां वेदमय्यामासन्द्यामासीनं तमिन्द्रं प्रजापतिरभ्यषिञ्चत् । किं कुर्वन् ? पुरस्तात् आसन्द्याः पूर्वस्यां दिशि प्रत्यङ्मुखस्तिष्ठन् । किं कृत्वा ? आर्द्रया आर्द्रपत्रोपेतया उदुम्बरशाखया सुवर्णमयेन च पवित्रेणान्तर्धाय व्यवधानं कृत्वा । केन मन्त्रेण ? 'इमा आपः शिवतमाः' इत्यादिकेन ऋत्वङ्गाभिषेके प्रोक्तेन त्रिविधेन मन्त्रजातेन । ऐब्रासा.

अथैनं प्राच्यां दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय ॥

इन्द्रस्य प्रजापतिकृताभिषेकादूर्ध्वं दिग्भेदेन देवविशेषैरभिषेकः कृतः । तत्र प्राच्यां दिश्यभिषेकं दर्शयति— अथेति । अथ प्राजापत्यभिषेकानन्तरं एनं इन्द्रं प्राच्यां दिश्यवस्थिता वसवो देवाः एकत्रिंशत्सु (? त्रिंशति) अहःसु पूर्वोक्तैः मन्त्रैरभ्यषिञ्चन् । तच्च साम्राज्यसिद्धये भवति । ऐब्रासा.

तस्मादेतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव तेऽभिषिच्यन्ते सम्राळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमनु ॥

इदानींतनलौकिकाचारप्रदर्शनेन इन्द्रस्य प्राच्यां दिशि तमभिषेकं द्रढयति— तस्मादिति । यस्माद्वसुभिः प्राच्यां दिश्यभिषेकः कृतः तस्मादिदानीमपि प्राच्यानां पूर्वदिग्वर्तिनां मनुष्याणां ये के च राजानः सन्ति ते सर्वेऽपि देवानां च वसूनां च संबन्धिनीमेतामेव विहितिं पूर्वोक्तमेव विधानमनु साम्राज्यसिद्ध्यर्थमभिषिच्यन्ते । अत एवाभिषिक्तानेनान् राज्ञः सम्राळित्यनेन शब्देन व्यवहरन्ति । ऐब्रासा.

अथैनं दक्षिणस्यां दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय । तस्मादेतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव तेऽभिषिच्यन्ते भोजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमनु । अथैनं प्रतीच्यां दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय । तस्मादेतस्यां प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपाच्यानां स्वाराज्यायैव तेऽभिषिच्यन्ते स्वराळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमनु । अथैनमुदीच्यां दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय । तस्मादेतस्यामुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते विराळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमनु । अथैनमस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाऽऽप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय । तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां

(१) ऐब्रा. ३८।२—३.

**राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते राजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमनु । अथैनमूर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायेति । स परमेष्ठी प्राजापत्योऽभवत् ॥**

दिगन्तरेऽपि देवान्तैरिन्द्राभिषेकं दर्शयति– अथेति । प्रथमपर्यायवद्व्याख्येयम् । सत्वतां, दक्षिणस्यां दिशि वर्तमानाः प्राणिनः सत्वन्नामकाः, तेषां ये राजानोऽभिषिक्तास्ते भोजेत्यनेन शब्देन व्यवह्रियन्ते । प्रतीच्यां दिशि वर्तमानाः प्राणिनो नीच्या अपाच्याश्च । निकर्षमवन्तीति नीच्याः । अपकर्षमवन्तीत्यपाच्याः । जात्या निकर्षः । व्यवहारेणापकर्षः । उभयविधानां प्राणिनां ये राजानः सन्ति ते स्वराडिति शब्देन व्यवह्रियन्ते । उदीच्यां दिशि हिमवन्तं परेण हिमवत्पर्वतपरभागे जनपदा ग्रामविशेषा उत्तरकुरुनामका उत्तरमद्रनामकाः सन्ति तत्रत्या राजानो विराडिति शब्देन व्यवह्रियन्ते । मध्यमा दिक् मध्यदेशः । स प्राच्यादिभिः सर्वाभिरपेक्षितत्वेन ध्रुवो भवति । तदपेक्षयैव पूर्वा पश्चिमेत्यादिव्यवहारः । स च देशः सर्वेषां वैदिकानामाश्रयः । तत्र ये वशदेशैरुशीनरदेशैश्च सहिताः कुरुपञ्चालदेशाः सन्ति तेषां देशानां ये राजानस्ते राजेत्यने नशॅब्देन व्यवह्रियन्ते । ऊर्ध्वायां दिशि स्वर्गरूपायां मनुष्यस्य संचाराभावात् तत्र राजानो नोदाहृताः । किंत्विन्द्रस्यैवाभिषेक उक्तः । तस्यां दिश्यभिषेकेण स इन्द्रः परमेष्ठी परमपदेऽवस्थितः प्रजापतिसंबन्ध्यभवत् । ऐब्रासा.

**स एतेन महाभिषेकेणाभिषिक्त इन्द्रः सर्वा जितीरजयत्, सर्वाँल्लोकानविन्दत्, सर्वेषां देवानां श्रैष्ठ्यमतिष्ठां परमतामगच्छत्, साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं जित्वाऽस्मिँल्लोके स्वयंभूः स्वराळमृतोऽमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ॥**

कृत्स्नमिन्द्राभिषेकं निगमयति– स इति । पूर्वोक्ताभिषेकेणाभिषिक्त इन्द्रो जितीः जेतव्याः सर्वा युद्धभूमीरजयत् । तेन जयेन सर्वान् लोकानविन्दत् अलभत । देवानां मध्ये श्रैष्ठ्यं अतिशयेन प्रशस्तत्वं, अतिष्ठां सर्वानतिक्रम्यावस्थानं, परमतां उत्कृष्टत्वं अगच्छत् । जातित उत्तमत्वं श्रैष्ठ्यम् । गुणैरुत्तमत्वं परमत्वम् । साम्राज्यादीनि पदान्यस्मिन् लोके जित्वा प्राप्य स्वयंभूः प्रजापतिरूपः स्वराट् स्वतन्त्रराजः अमृतः इतरमनुष्यवदल्पकाले मरणरहितः सन् अमुष्मिन् परोक्षे स्वर्गे लोके सर्वान् कामान् भोगान् प्राप्य अमृतः मरणरहितः मुक्तः समभवत् । अभ्यासोऽध्यायसमाप्त्यर्थः । ऐब्रासा.

ऐन्द्रमहाभिषेको राज्ञः, अभिषेकैतिह्यम्

**'स य इच्छेदेवंवित्क्षत्त्रियम्– अयं सर्वा जितीर्जयेत, अयं सर्वाँल्लोकान् विन्देत, अयं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यम्, अयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुष आऽन्तादा परार्धात्पृथिव्यै समुद्रपर्यन्ताया एकराळिति, तमेतेनैन्द्रेण महाभिषेकेण क्षत्त्रियं शापयित्वाऽभिषिञ्चेत् ॥**

' पुरुषार्थाभिषेकार्थमादावैन्द्राभिषेचनम् । उक्तमत्र पुमर्थोऽयमभिषेक उदीर्यते ॥ ' तमभिषेकं विधत्ते– स इति । एवंवित् इन्द्रसंबन्धिमहाभिषेकवित् य आचार्यः क्षत्त्रियं प्रति सर्वजयादिफलमिच्छेत् स आचार्यः क्षत्त्रियमेतं शापयित्वा शपथं कारयित्वा एतेन पूर्वोक्तेन इन्द्रसंबन्धिना महाभिषेकविधानेन तं क्षत्त्रियमभिषिञ्चेत् । कीदृशी फलेच्छेति सा अभिधीयते– अयं क्षत्त्रियो जेतव्याः सर्वा युद्धभूमीर्जयेत्, तथा सर्वान् लोकान् देशविशेषान् लभेत, सर्वेषां राज्ञां मध्ये श्रैष्ठ्याद्याधिपत्यान्तगुणयुक्तो भवेत्, समन्तपर्यायी देशतः कालतः सर्वव्यापी स्यात् । आ अन्तात् समुद्रतीरपर्यन्तं

---

(१) ऐब्रा. ३९।१–९.

सार्वभौमत्वं देशव्याप्तिः, आ परार्धात् परार्धशब्दाभिधेयकालसंख्यापर्यन्तं सार्वायुषत्वं कालव्याप्तिः। एवंविधो भूत्वा समुद्रपर्यन्ताया पृथिव्या एक एव राजाऽस्त्वित्यनया इच्छया आचार्यो महाभिषेकेण तमभिषिञ्चेत्। ऐब्रासा.

**'यां च रात्रीमजायेथा यां च प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोकं सुकृतमायुः प्रजां वृञ्जीयं यदि मे द्रुह्येः' इति ॥**

शापयित्वेति यदुक्तं तमेव शपथप्रकारं दर्शयति— यामिति। अभिषिच्यमान हे क्षत्रिय, यद्याचार्याय मे द्रुह्येः द्रोहं कुर्याः तदानीं त्वं यां रात्रिमजायेथाः यस्यां रात्रावुत्पन्नोऽसि, यां च रात्रिं प्रेतासि यस्यां रात्रौ मरिष्यसि, तदुभयमन्तरेण उत्पत्तिमरणदिनयोर्द्वयोर्मध्ये ते तवेष्टापूर्ते श्रौतस्मार्तकर्मद्वयं तथा पुण्यलोकं तद्धेतुभूतमन्यदपि सुकृतं दीर्घमायुः प्रजां पुत्रादिकां वृञ्जीयं त्वत्तो वर्जयेयमित्येतदाचार्यस्य वाक्यम्। तदेतदङ्गीकारयित्वा पश्चादभिषिञ्चेत्। ऐब्रासा.

**स य इच्छेदेवंवित्क्षत्त्रियः- अहं सर्वा जितीर्जयेयम्, अहं सर्वांल्लोकान्विन्देयम्, अहं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेयं साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यम्, अहं समन्तपर्यायी स्यां सार्वभौमः सार्वायुष आऽन्तादा परार्धात्पृथिव्यै समुद्रपर्यन्ताया एकराळिति, स न विचिकित्सेत्। स ब्रूयात्सह श्रद्धया यां च रात्रीमजायेऽहं यां च प्रेतास्मि तदुभयमन्तरेणेष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथा यदि ते द्रुह्येयमिति ॥**

आचार्यः क्षत्त्रियार्थं यादृशीं फलपरम्परां कामयित्वा शपथं कारयति क्षत्त्रियोऽपि तादृशीं फलपरम्परां कामयमानः शपथं कुर्यात्। तदेतत्क्षत्त्रियवाक्यं दर्शयति— स इति। यः क्षत्त्रियः एवंवित् महाभिषेकमाहात्म्याभिज्ञः सर्वजयादिकं समुद्रपर्यन्तं पृथिव्यामेकराजत्वपर्यन्तं फलजातमिच्छेत्। पूर्वत्राऽऽचार्यवाक्यत्वात् 'जयेत, विन्देत' इत्यादिप्रथमपुरुषप्रयोगः, अत्र तु क्षत्त्रियवाक्यत्वात् 'जयेयम्' इत्याद्युत्तमपुरुषप्रयोगः। स क्षत्त्रियः फलकामी न विचिकित्सेत्। आचार्योक्तेऽर्थे संशयं न कुर्यात्। स क्षत्त्रिय आचार्यस्याभीष्टं शपथमेवं कुर्यात्— हे आचार्य, अहं यदि ते द्रुह्येयं तदानीं त्वं मम जन्ममरणमध्यवर्तीष्टापूर्तादिकं सर्वं वृञ्जीथाः नाशयेरिति श्रद्धया सहितं शपथं ब्रूयात्। ऐब्रासा.

**अथ ततो ब्रूयात्- चतुष्टयानि वानस्पत्यानि संभरत नैयग्रोधान्यौदुम्बराण्याश्वत्थानि प्लाक्षाणीति ॥**

संभारान् विधत्ते- अथेति। अथ क्षत्त्रियशपथानन्तरं यत आचार्येण अभिषेकः कर्तव्यस्ततः कारणादाचार्यः परिचारकान् ब्रूयात्— वनस्पतिसंबन्धीनि न्यग्रोधादीनि फलानि चतुर्विधानि हे परिचारकाः, संपादयतेति। ऐब्रासा.

**क्षत्त्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः। यन्नैयग्रोधानि संभरन्ति क्षत्त्रमेवास्मिंस्तद्दधाति। भौज्यं वा एतद्वनस्पतीनां यदुदुम्बरः। यदौदुम्बराणि संभरन्ति भौज्यमेवास्मिंस्तद्दधाति। साम्राज्यं वा एतद्वनस्पतीनां यदश्वत्थः। यदाश्वत्थानि संभरन्ति साम्राज्यमेवास्मिंस्तद्दधाति। स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनां यत्प्लक्षः। यत्प्लाक्षाणि संभरन्ति स्वाराज्यवैराज्ये एवास्मिंस्तद्दधाति ॥**

तत्र वृक्षचतुष्टयं क्रमेण प्रशंसति— क्षत्त्रमिति। न्यग्रोधस्य वनस्पतीनां मध्ये राजवद्व्याप्त्याधिक्यात्क्षत्त्रत्वम्। उदुम्बरादीनां भौज्यादिसाधनत्वात्तद्रूपत्वम्। अतश्चतुर्विधफलसंपादनेन यजमाने क्षात्त्रभौज्यादिफलानि संपादयति। ऐब्रासा.

**अथ ततो ब्रूयात्- चतुष्टयान्यौषधानि संभरत तोक्मकृतानि व्रीहीणां महाव्रीहीणां प्रियंगूनां यवानामिति ॥**

संभारान्तराणि विधत्ते— अथेति। अथ नैयग्रोधादिफलसंपादनानन्तरं यतो व्रीह्याद्यङ्कुरसंपादनमपेक्षितं तत आचार्य एवं ब्रूयात्— हे परिचारकाः, तोक्मकृतान्यङ्कुरनिमित्तान्योषधिद्रव्याणि चतुर्विधानि संपादयत।

सूक्ष्मबीजरूपा व्रीहयः । प्रौढबीजरूपा महाव्रीहयः । प्रियंगवो यवाश्च प्रसिद्धाः । ऐब्रासा.

**क्षत्त्रं वा एतदोषधीनां यद्व्रीहयः । यद्व्रीहीणां तोक्म संभरन्ति क्षत्त्रमेवास्मिंस्तद्दधाति । साम्राज्यं वा एतदोषधीनां यन्महाव्रीहयः । यन्महाव्रीहीणां तोक्म संभरन्ति साम्राज्यमेवास्मिंस्तद्दधाति । भौज्यं वा एतदोषधीनां यत्प्रियंगवः । यत्प्रियंगूनां तोक्म संभरन्ति भौज्यमेवास्मिंस्तद्दधाति । सैनान्यं वा एतदोषधीनां यद्यवाः । यद्यवानां तोक्म संभरन्ति सैनान्यमेवास्मिंस्तद्दधाति ॥**

चतुर्विधमोषधिद्रव्यं प्रशंसति– क्षत्त्रमिति । ओषधीनां मध्ये व्रीहीणां बलहेतुत्वात्क्षत्त्रत्वम् । महाव्रीह्यादीनामप्यनुष्ठानद्वारा साम्राज्यहेतुत्वात्तद्रूपत्वम् । अतो व्रीह्यादितोक्मनां अङ्कुराणां संपादनेन यजमाने क्षत्त्रसाम्राज्यादिकं सर्वं संपादयति । ऐब्रासा.

**अथास्मा औदुम्बरीमासन्दीं संभरन्ति । तस्या उक्तं ब्राह्मणम् । औदुम्बरश्चमसो वा पात्री वा, उदुम्बरशाखा । तानेतान् संभारान्संभृत्यौदुम्बर्यां पात्र्यां वा चमसे वा समावपेयुः । तेषु समोप्तेषु दधि मधु सर्पिरातपवर्ष्या आपोऽभ्यानीय प्रतिष्ठाप्यैतामासन्दीमभिमन्त्रयेत ॥**

आसन्द्यादिसंभारान् विधत्ते– अथेति । अथ वानस्पत्यौषधिसंभारानन्तरं अस्मै क्षत्त्रियाय औदुम्बरीमासन्दीं संपादयेयुः । तस्याश्चाऽऽसन्द्या विधायकं ब्राह्मणं 'प्रादेशमात्राः पादाः' इत्यादिना पूर्वमेवोक्तम् । चतुष्कोणो दण्डयुक्तः पात्रविशेषः चमसः । आकारनियमरहिता पात्री । तयोरन्यतरदौदुम्बरं संपादयेत् । यद्वा, पात्री मृन्मयी । शाखा चौदुम्बरी संपादनीया । ततः पात्रीचमसयोरन्यतरस्मिन् वानस्पत्यौषधिसंभारान् समावपेयुः । समोप्तेषु तेषु संभारे(षु) दध्यादीनां सेचनं कृत्वा चमसं भूमौ प्रतिष्ठाप्यैतामासन्दीं वक्ष्यमाणमन्त्रेणाभिमन्त्रयेत् । ऐब्रासा.

**'बृहच्च ते रथंतरं च पूर्वौ पादौ भवतां वैरूपं च वैराजं चापरौ शाक्वररैवते शीर्षण्ये नौधसं च कालेयं चानूच्ये ऋचः प्राचीनाताना: सामानि तिरश्चीनवाया यजूंष्यतीकाशा यश आस्तरणं श्रीरुपबर्हणं सविता च ते बृहस्पतिश्च पूर्वौ पादौ धारयतां वायुश्च पूषा चापरौ मित्रावरुणौ शीर्षण्ये अश्विनावनूच्ये' इति ॥**

तं मन्त्रं दर्शयति– बृहदिति । इन्द्रासन्दीप्रतिपादकवाक्यवदयं मन्त्रो व्याख्येयः । ऐब्रासा.

**अथैनमेतामासन्दीमारोहयेत् ॥**

अभिमन्त्रणादूर्ध्वमाचार्यकर्तव्यं दर्शयति– अथेति । अथाभिषिक्तमेनं क्षत्त्रियमेतस्यामासन्द्यामारूढं कुर्यात् । ऐब्रासा.

**'वसवस्त्वा गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नाऽऽरोहन्तु तानन्वारोह साम्राज्याय, रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नाऽऽरोहन्तु तानन्वारोह भौज्याय, आदित्यास्त्वा जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नाऽऽरोहन्तु तानन्वारोह स्वाराज्याय, विश्वे त्वा देवा आनुष्टुभेन च्छन्दसैकविंशेन स्तोमेन वैराजेन साम्नाऽऽरोहन्तु तानन्वारोह वैराज्याय, मरुतश्च त्वाऽङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्नाऽऽरोहन्तु तानन्वारोह पारमेष्ठ्याय, साध्याश्च त्वाऽऽप्त्याश्च देवाः पाङ्क्तेन च्छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नाऽऽरोहन्तु तानन्वारोह राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायाऽऽरोह' इत्येतामासन्दीमारोहयेत् ॥**

तत्र मन्त्रं दर्शयति– वसव इति । इन्द्रारोहणमन्त्रवद्व्याख्येयम् । तत्राऽऽरोहणकर्तुरप्रयोज्यत्वादारोहामीत्युत्तमपुरुषः, अत्र त्वाचार्यप्रयोज्यत्वादारोहेति मध्यमपुरुषः । तत्रत्ययोः पञ्चमषष्ठमन्त्रयोरत्र क्रमविपर्यासोऽध्ययनसंप्रदाय-

प्रासः । अनेन मन्त्रेण आचार्यः आसन्यां क्षत्रियमारोहयेत् । ऐब्रासा.

**तमेतस्यामासन्द्यामासीनं राजकर्तारो ब्रूयुः— न वा अनभ्युत्क्रुष्टः क्षत्रियो वीर्यं कर्तुमर्हति, अभ्येनमुत्क्रोशामेति । तथेति । तं राजकर्तारोऽभ्युत्क्रोशन्ति– ' इमं जना अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं परमेष्ठिनं पारमेष्ठ्यं राजानं राजपितरं क्षत्रमजनि क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजन्यमित्राणां हन्ताऽजनि ब्राह्मणानां गोप्ताऽजनि धर्मस्य गोप्ताऽजनि ' इति ॥**

आरोहणादूर्ध्वमभ्युत्क्रोशनं विधत्ते– तमिति । राज्ञः कर्तारो राजकर्तारः पितृभ्रात्रादयः । इन्द्रविषयाभ्युत्क्रोशनवाक्यवदिदं वाक्यं व्याख्येयम् । ऐब्रासा.

**तमभ्युत्क्रुष्टमेवंविदभिषेक्ष्यन्नेतयर्चाऽभिमन्त्रयेत ॥**

आचार्यस्य क्षत्रियाभिमन्त्रणं विधत्ते– तमिति । पूर्ववद्व्याख्येयम् । ऐब्रासा.

**' निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय सुक्रतुः ॥ ' इति ॥**

एतयर्चेत्युक्तं मन्त्रं दर्शयति– निषसादेति । पूर्ववद्व्याख्येयम् । ऐब्रासा.

**तमेतस्यामासन्द्यामासीनमेवंवित्पुरस्तात्तिष्ठन्प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभिषिञ्चति ' इमा आपः शिवतमाः ' इत्येतेन तृचेन ' देवस्य त्वा ' इति च यजुषा ' भूर्भुवः स्वः ' इत्येताभिश्च व्याहृतिभिः ॥**

अभिमन्त्रणादूर्ध्वमभिषेकप्रकारं दर्शयति– तमिति । इन्द्राभिषेकवाक्यवद्व्याख्येयम् । ऐब्रासा.



**' प्राच्यां त्वा दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय, दक्षिणस्यां त्वा दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय, प्रतीच्यां त्वा दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय, उदीच्यां त्वा दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय, ऊर्ध्वायां त्वा दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्याय, अस्यां त्वा ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाऽऽप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय ' इति । स परमेष्ठी प्राजापत्यो भवति ॥**

अभिषेकादूर्ध्वमभिमन्त्रणमाह– प्राच्यामिति । उक्तेन मन्त्रेणाभिमन्त्रितः क्षत्रियः परमेष्ठिपदस्य योग्यो भूत्वा प्रजापतेः संबन्धी ( भवती )ति । ऐब्रासा.

**स एतेनैन्द्रेण महाभिषेकेणाभिषिक्तः क्षत्रियः सर्वा जितीर्जयति, सर्वांल्लोकान्विन्दति, सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं, जित्वाऽस्मिंल्लोके स्वयंभूः स्वराळमृतोऽमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः संभवति, यमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाऽभिषिञ्चति ॥**

महाभिषेकमुपसंहरति– स इति । यं क्षत्रियमाचार्यः स्वद्रोहराहित्याय शपथं कारयित्वेन्द्रसंबन्धिना महाभि-

षेकेणाभिषिञ्चति सोऽभिषिक्तः क्षत्रियः इन्द्रवत्सर्वे जयादिफलं प्राप्नोति । ऐब्रासा.

**इन्द्रियं वा एतदस्मिँल्लोके यद्दधि । यद्दध्नाऽभिषिञ्चतीन्द्रियमेवास्मिंस्तद्दधाति । रसो वा एष ओषधिवनस्पतिषु यन्मधु । यन्मध्वाऽभिषिञ्चति रसमेवास्मिंस्तद्दधाति । तेजो वा एतत्पशूनां यद्घृतम् । यद्घृतेनाभिषिञ्चति तेज एवास्मिंस्तद्दधाति । अमृतं वा एतदस्मिँल्लोके, यदापः । यदद्भिरभिषिञ्चत्यमृतत्वमेवास्मिंस्तद्दधाति ॥**

अभिषेकसाधनानि दध्यादिद्रव्याणि प्रशंसति– इन्द्रियमिति । दध्न इन्द्रियपाटवहेतुत्वात् इन्द्रियत्वम् । मधुनः पुष्पजन्यत्वेन औषधिवनस्पतिरसत्वम् । घृतस्य स्निग्धभास्वरत्वेन पशुतेजस्त्वम् । अपां चाऽऽप्यायनहेतुत्वादमृतत्वम् । एतैर्द्रव्यैरभिषिक्ते सति यजमान इन्द्रियादिकं संपादयति । ऐब्रासा.

**सोऽभिषिक्तोऽभिषेक्त्रे ब्राह्मणाय हिरण्यं दद्यात्, सहस्रं दद्यात्, क्षेत्रं चतुष्पाद्दद्यात् । अथाप्याहुः– 'असंख्यातमेवापरिमितं दद्यात्, अपरिमितो वै क्षत्रियोऽपरिमितस्यावरुद्धयै' इति ॥**

आचार्याय दक्षिणादानं विधत्ते– स इति । हिरण्यस्यैव संख्या (सहस्रमिति), सहस्रनिष्कपरिमितमित्यर्थः । चतुष्पाच्छब्देन गवादिकमभिधीयते । पूर्वोक्तसहस्रपक्षमपेक्ष्याधिकाभिप्रायेण असंख्यातमिति पक्षान्तरमुक्तम् । तस्यैव व्याख्यानमपरिमितमिति । इयदेवेति संख्यानियमो नास्ति, किन्तु स्वशक्त्यनुसारेण प्रभूतमेव दद्यात् । क्षत्रियो हि देशाधिपतित्वेन अपरिमितः बहुधनयुक्तः, अतः अपरिमितस्य प्रभूतस्य फलस्य सिद्धयर्थमित्यभिप्रायेण पक्षान्तरम् । ऐब्रासा.

**अथास्मै सुराकंसं हस्त आदधाति– 'स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥' इति ॥**

दक्षिणायां दत्तायामाचार्यकर्तव्यं दर्शयति– अथेति । अथ दक्षिणास्वीकारादनन्तरं अस्मै अस्य क्षत्रियस्य हस्ते सुरया पूर्णं कांस्यपात्रं 'स्वादिष्ठया' इति मन्त्रेण स्थापयेत् । स च मन्त्रः ऋत्वङ्गाभिषेके व्याख्यातः । ऐब्रासा.

**तां पिबेत्– 'यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि ॥, अभि त्वा वृषभा सुते सुतं सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥' इति ॥**

क्षत्रियकर्तव्यं दर्शयति– तामिति । तां कांस्यपात्रस्थां सुरां क्षत्रियः 'यदत्र' इति मन्त्रद्वयेन पिबेत् । अत्र कांस्यपात्रे रसिनो रसयुक्तस्य सुतस्य अभिषुतस्य व्रीह्याद्यङ्कुरजन्यस्य पेयद्रव्यस्य यच्छिष्टं योऽवस्थितो भागः, यच्च द्रव्यं शचीभिः कर्मविशेषैः संस्कृतं इन्द्रः अपिबत् । शचीशब्दः कर्मनाम । इह अस्मिन्नभिषेककर्मणि सोमं राजानं सोमसदृशं अस्य पेयद्रव्यस्य तदिदं स्वरूपं शिवेन शान्तेन भक्तियुक्तेन मनसा भक्षयामि । सोऽयमेको मन्त्रः । हे वृषभ श्रेष्ठ इन्द्र, त्वाऽभि त्वामभिलक्ष्य सुते अस्मिन्द्रव्येऽभिषुते सति पीतये तव पानार्थं सुतं अभिषुतं द्रव्यं सृजामि त्वद्धस्ते ददामि । तृम्प तेन द्रव्येण तृप्तो भव । मदं हर्षं व्यश्नुहि विशेषेण प्राप्नुहि । अयं द्वितीयो मन्त्रः । ऐब्रासा.

**यो ह वाव सोमपीथः सुरायां प्रविष्टः सहैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य भक्षितो भवति, न सुरा ॥**

तदिदं पानं प्रशंसति– य इति । यो ह वाव यः खलु सोमपीथः सोमस्य पानविशेषः सुरायां सुराद्रव्ये प्रविष्टोऽस्ति एतेन सोमपानविशेषेण सहैव पूर्वोक्तेन्द्राभिषेकविधानेनाभिषिक्तस्य क्षत्रियस्य द्रव्यविशेषो भक्षितो भवति, न तु सुरा भक्षिता भवति । सोऽयं मन्त्रद्वयस्य महिमा । ऐब्रासा.

**तां पीत्वाऽभिमन्त्रयेत– 'अपाम सोमम्, शं नो भव' इति ॥**

पानादूर्ध्वमभिमन्त्रणं विधत्ते-- तामिति । ‘ अपाम सोमम् ’ इत्यृगेका ‘ शं नो भव ’ इति द्वितीया । ताभ्याममिमन्त्रयेत । ऐब्रासा.

**तद्यथैवादः प्रियः पुत्रः पितरं प्रिया वा जाया पतिं सुखं शिवमुपस्पृशत्या विस्रसः, एवं हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वाऽन्यद्वाऽन्नाद्यं सुखं शिवमुपस्पृशत्या विस्रसः ॥**

इदानीं दृष्टान्तेन पानं प्रशंसति— तदिति । तत् तत्र पाने अदः लौकिकं निदर्शनमुच्यते— यथैव प्रियः पुत्रः शिवं सुखं यथा भवति तथा पितरमुपस्पृशति, प्रिया वा जाया च पतिं यथा स्पृशति । शिवं शान्तम् । शास्त्रनिषिद्धमार्गेण यत्सुखं तन्नरकहेतुत्वादुग्रम्, विहितमार्गेण तु तदभावाच्छान्तम् । सुखस्पर्शस्यावधिः आविस्रस इत्यनेनोच्यते । आ विस्रसः आ विस्रंसनात्, देहपातपर्यन्तं इत्यर्थः । यथा स्पर्शद्वयं दृष्टसुखहेतुः एवं हैव अनेनैव प्रकारेण पूर्वोक्तैन्द्रमहाभिषेकविधिनाऽभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वाऽन्यानि अन्नद्रव्याणि देहपातपर्यन्तं शान्तसुखस्पर्शप्रदानि । ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण तुरः कावषेयो जनमेजयं पारिक्षितमभिषिषेच । तस्मादु जनमेजयः पारिक्षितः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वेन च मेध्येनेजे ॥**

उक्तं महाभिषेकं चिरंतनशिष्टाचारोदाहरणेन प्रशंसति— एतेनेति । कवषस्य पुत्रः तुरनामको महर्षिः परिक्षित-(? त्)पुत्रं जनमेजयं उक्तविधानेन अभिषिषेच । तस्मादेव कारणात् जनमेजयः सर्वतः सर्वासु दिक्षु पृथिवीं समन्तं अन्तेन समुद्रतीरेण संयुक्तं यथा भवति तथा जयन् विजयं प्राप्नुवन् परीयाय परितश्चचार, अभिषेकमाहात्म्येनैव दिग्विजयं कृतवानित्यर्थः । अभिषेकप्रसादादेव मेध्येन यागयोग्येन अश्वेन च ईजे इष्टवान् , अश्वमेधं कृतवानित्यर्थः । ऐब्रासा.

**तदेषाऽभि यज्ञगाथा गीयते ॥**

अस्मिन्नर्थे कांचिद्गाथामुदाहरति— तदिति । तत् तस्मिन् जनमेजयवृत्तान्ते एषा वक्ष्यमाणा यज्ञविषया गीतिः वैदिकैरभितो गीयते । ऐब्रासा.

**‘ आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम् । अश्वं बबन्ध सारंगं देवेभ्यो जनमेजयः ॥ ’ इति ॥**

तां गाथां दर्शयति—आसन्दीति । आसन्दीवानिति देशविशेषस्य नामधेयम् । तस्मिन् देशे जनमेजयः देवेभ्यः देवार्थे यागयोग्यमश्वं बबन्ध । कीदृशमश्वम् ? धान्यादं धान्यमेवात्ति, रुक्मिणं रुक्मशब्देन ललाटगतं श्वेतलाञ्छनमुपलक्ष्यते, तद्युक्तम् । हरितवर्णा स्रक् यस्यासौ हरितस्रक् । पुष्पमालेव वर्णो देहं व्याप्य वर्तते इत्यर्थः । सारं कर्मसु श्रेष्ठं यागं गच्छतीति सारंगः । इत्यनया गाथया जनमेजयस्याभिषेकमहिमोदाहृतः । ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण च्यवनो भार्गवः शार्यातं मानवमभिषिषेच । तस्मादु शार्यातो मानवः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वेन च मेध्येनेजे । देवानां हापि सत्रे गृहपतिरास ॥**

जनमेजयवच्छार्यातनामकं राजानमुदाहरति— एतेनेति । भृगोः पुत्रश्च्यवननामको महर्षिः मनुवंशोत्पन्नं शार्यातनामकं राजानमभिषिषेच । तस्मात्फलं पूर्ववत् । किंच देवानां संबन्धिनि सत्रेऽपि शार्यातो गृहपतिरभूत् । ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण सोमशुष्मा वाजरत्नायनः शतानीकं सात्राजितमभिषिषेच । तस्मादु शतानीकः सात्राजितः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वेन च मेध्येनेजे ॥**

शतानीकनामकं राजानमुदाहरति— एतेनेति । सोमशुष्मनामकः कश्चिन्महर्षिः । स च वाजरत्नस्य पौत्रः । तथाविधो मुनिः सत्राजितः पुत्रं शतानीकनामकं क्षत्रियमभिषिषेच । शेषं पूर्ववत् । ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदावाम्बाष्ठ्यमभिषिषिचतुः । तस्माद्वाम्बाष्ठ्यः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वेन च मेध्येनेजे ॥**

आम्बाष्ठ्यनामानं राजानमुदाहरति– एतेनेति ।

ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदौ युधांश्रौष्टिमौग्रसैन्यमभिषिषिचतुः । तस्मादु युधांश्रौष्टिरौग्रसैन्यः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वेन च मेध्येनेजे ॥**

युधांश्रौष्टिनामकमुग्रसेनस्य पुत्रं राजानमुदाहरति– एतेनेति ।

ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण कश्यपो विश्वकर्माणं भौवनमभिषिषेच । तस्मादु विश्वकर्मा भौवनः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वेन च मेध्येनेजे ॥**

भुवनाख्यस्य पुत्रं विश्वकर्मनामकं राजानमुदाहरति– एतेनेति ।

ऐब्रासा.

**भूमिर्ह जगावित्युदाहरन्ति ॥**

भौवनाभिषेकमाहात्म्यं प्रशंसितुं पुरातनमहर्षिप्रोक्तमुदाहरणं दर्शयति– भूमिरिति । भूमिर्देवता जगौ भौवनं प्रति किंचिद्वाक्यं गाथारूपमुक्तवती इत्येवं पूर्वे महर्षय उदाहरन्ति ।

ऐब्रासा.

**'न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन्भौवन मां दिदासिथ । निमङ्क्ष्येऽहं सलिलस्य मध्ये मोघस्त एष कश्यपायाऽऽस संगरः ॥' इति ॥**

तां गाथां दर्शयति– नेति । भुवनाख्यस्य पुत्र हे विश्वकर्मन्, कश्चिदपि मनुष्यो मां भूमिं दातुं नार्हति । अत एव मीमांसका विचार्य सर्वस्वदाने महाभूमिदानं निवारितवन्तः । एवं सति त्वं मां भूमिं दिदासिथ कश्यपाय त्वदीयाचार्याय दातुमिच्छसि । अहं तु सलिलस्य समुद्रस्य मध्ये निमङ्क्ष्ये निमज्जनं करिष्ये । तथा सति ते कश्यपाय त्वदीयाचार्यस्य कश्यपस्यैष संगरः भूमिप्रतिग्रहविषयो मोघ आस व्यर्थ एव बभूवेति । ईदृशमपि महाभूमिमज्जनं महाभिषेकमहिम्ना निवारितमिति तात्पर्यार्थः ।

ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण वसिष्ठः सुदासं पैजवनमभिषिषेच । तस्मादु सुदाः पैजवनः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वेन च मेध्येनेजे ॥**

सुदा इत्येतन्नामकं पिजवनस्य पुत्रं राजानमुदाहरति– एतेनेति ।

ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण संवर्त आङ्गिरसो मरुत्तमाविक्षितमभिषिषेच । तस्मादु मरुत्त आविक्षितः समन्तं सर्वतः पृथिवीं जयन् परीयाय । अश्वेन च मेध्येनेजे ॥**

अविक्षिन्नामकस्य पुत्रं मरुत्तनामानं राजानमुदाहरति– एतेनेति । संवर्तनामको महर्षिरङ्गिरसः पुत्रः ।

ऐब्रासा.

**तदप्येष श्लोकोऽभिगीतः ॥**

तेन कृतं मरुत्ताभिषेकं प्रशंसितुं श्लोकमुदाहरति– तदिति । तस्मिन्नपि मरुत्ताभिषेकमाहात्म्ये एष वक्ष्यमाणः श्लोकः पादबद्धो मन्त्रः अभिगीतः अभितः सर्वैः पठितः ।

ऐब्रासा.

**'मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आविक्षितस्य कामप्रेर्विश्वे देवाः सभासदः ॥' इति ॥**

तं श्लोकं दर्शयति– मरुत इति । मरुत्तनाम्नो राज्ञो गृहे मरुत्संज्ञका देवा भोजनकाले परिवेषणकर्तारो भूत्वाऽवसन् । तथैव आविक्षितस्य अविक्षित्पुत्रस्य कामप्रेः सर्वकामपूरितस्य मरुत्तस्य गृहे विश्वे सर्वे देवाः सभासदः सभायामुपविष्टाः सेवन्ते इति शेषः । इत्येष सर्वोऽपि महाभिषेकस्य महिमेत्यभिप्रायः ।

ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयोऽङ्गमभिषिषेच । तस्मादङ्गः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वेन च मेध्येनेजे ॥**

अङ्गनामकं राजानमुदाहरति— एतेनेति । उदमयनामकः कश्चिन्महर्षिरत्रेः पुत्रोऽङ्गं अभिषिषेच । ऐब्रासा.

**स होवाचालोपाङ्गो दश नागसहस्राणि दश दासीसहस्राणि ददामि ते, ब्राह्मणोप माऽस्मिन्यज्ञे ह्वयस्वेति ॥**

तस्य अङ्गाभिषेकस्य माहात्म्यं दर्शयितुं कंचिद्वृत्तान्तमाह— स इति । योऽयमङ्गनामको राजोक्तः सोऽयमलोपाङ्गः संपूर्णावयव इत्यर्थः । महदस्याङ्गसौष्ठवम् । स कदाचित् स्वकीयाभिषेककर्तरि उदमयनामके पुरोहिते स्वार्थे यागं कुर्वाणे सति तं प्रत्येवमुवाच । हे ब्राह्मण, अस्मिंस्त्वदीये यज्ञे मामुपह्वयस्व समाह्वानं कुरु । अहमागत्य त्वदीययज्ञे दक्षिणासंपूर्त्यर्थं तुभ्यं गजसहस्राणि दासीसहस्राणि च ददामीति । सेयं बहुदानसंपत्तिः सद्बुद्धिश्च महाभिषेकप्रसादलब्धा । ऐब्रासा.

**तदप्येते श्लोका अभिगीताः ॥**

एवमेवार्थं प्रपञ्चयितुं श्लोकानुदाहरति— तदिति । तस्मिन्नप्यङ्गराजपुरोहितस्य यागे दानप्रतिपादका एते पञ्च श्लोका अभितो गीताः सर्वतोऽभिज्ञैः पठिताः । ऐब्रासा.

**याभिर्गोभिरुदमयं प्रैयमेधा अयाजयन् ।**
**द्वे द्वे सहस्रे बद्वानामात्रेयो मध्यतोऽददात् ॥**

तत्र प्रथमं श्लोकमाह—याभिरिति । प्रियमेधस्य पुत्राः प्रैयमेधा महर्षयः उदमयनामकं अङ्गराजपुरोहितं याभिर्गोभिः दक्षिणारूपाभिः अयाजयन् । ता गावो वक्ष्यन्त इति शेषः । बद्वमिति शतकोटिसंख्याया नामधेयम् । बद्वानां शतकोटिसंख्याकानां गवां मध्ये प्रतिदिनं द्वे द्वे सहस्रे मध्यतः माध्यंदिनसवने अत्रिपुत्र उदमयो दत्तवान् । ऐब्रासा.

**अष्टाशीतिः सहस्राणि श्वेतान्वैरोचनो हयान् ।**
**प्रष्टीन्निश्चृत्य प्रायच्छद्यजमाने पुरोहिते ॥**

द्वितीयं श्लोकमाह— अष्टाशीतिरिति । वैरोचनः विरोचनस्य पुत्रः अङ्गनामकः राजा स्वकीयपुरोहिते उदमयनामके यजमाने यागं कुर्वाणे स्वयमागत्य अष्टाशीतिसहस्रसंख्याकानश्वान् श्वेतवर्णान् प्रष्टीन् पृष्ठवाहनयोग्यवयस्कान् निश्चृत्य स्वकीयाश्वबन्धनस्थानान्निःसार्य प्रायच्छत् दत्तवान् । ऐब्रासा.

**देशाद्देशात्समोह्ळानां सर्वासामाढ्यदुहितृणाम् ।**
**दशाददात्सहस्राण्यात्रेयो निष्ककण्ठ्यः ॥**

तृतीयं श्लोकमाह— देशादिति । देशाद्देशात् दिग्विजयकाले तत्तद्देशविशेषात् समोह्ळानां सम्यगासमन्तात् ऊढानां आनीतानां आढ्यदुहितृणां धनिकपुत्रीणां सर्वासां दश सहस्राणि आत्रेयः अङ्गराजपुरोहितः दत्तवान् । ताश्च दुहितरो निष्ककण्ठ्यः आभरणोपेतकण्ठयुक्ताः । ऐब्रासा.

**दश नागसहस्राणि दत्त्वाऽऽत्रेयोऽवचत्नुके ।**
**श्रान्तः पारिकुटान्प्रैप्सद्दानेनाङ्गस्य ब्राह्मणः ॥**

चतुर्थं श्लोकमाह— दशेति । अङ्गराजस्य पुरोहितो ब्राह्मण आत्रेयः अवचत्नुकनामदेशे गजसहस्राणि दशसंख्याकानि दत्त्वा दानेन श्रान्तः सन् पारिकुटान् परिचारकान् प्रैप्सत् प्रेषितवान् , हे परिचारकाः, यूयं दत्त इत्येवमुक्तवानित्यर्थः । ऐब्रासा.

**शतं तुभ्यं शतं तुभ्यमिति स्मैव प्रताम्यति ।**
**सहस्रं तुभ्यमित्युक्त्वा प्राणान्स्म प्रतिपद्यते ॥**
**इति ॥**

पञ्चमं श्लोकमाह— शतमिति । परिचारकाणामप्यग्रे एकैकशो वक्तुमशक्तः तुभ्यं शतं तुभ्यं शतमिति शतसंख्यां प्रोक्त्वा तत्रापि प्रताम्यति स्मैव ग्लानिमेव प्राप्तवान् । ततः शतसंख्यां परित्यज्य सहस्रं तुभ्यमित्युक्त्वा तस्यामपि संख्यायां बहुशः प्रोक्तायामाश्रान्तः सन् प्राणान् प्रतिपद्यते स्म, मध्ये मध्ये श्रमपरिहाराय दीर्घश्वासं कृतवानित्यर्थः । अङ्गराजस्य पुरोहितायाप्येतादृशसामर्थ्यं महाभिषेकप्रसादलब्धमिति तात्पर्यार्थः । ऐब्रासा.

**एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं दौष्षन्तिमभिषिषेच । तस्मादु भरतो दौष्षन्तिः समन्तं सर्वतः पृथिवीं जयन्परीयाय । अश्वैरु च मेध्यैरीजे ॥**

दुष्षन्तस्य पुत्रं भरताख्यं राजानमुदाहरति— एतेनेति । ममताख्यायाः स्त्रियाः पुत्रो दीर्घतमा इत्येतन्नामा मुनि-

भरतमभिषिषेच । भरतोऽपि दिग्विजयेन पृथिवीं परीत्य मेध्यैरश्वैरपीजे । उ चेति निपातयोः समूहः समुच्चयार्थः । ऐब्रासा.

**तदप्येते श्लोका अभिगीताः ॥**

भरताभिषेकमाहात्म्यं दर्शयितुं श्लोकान् उदाहरति- तदिति । तत् तस्मिन् भरताभिषेकमाहात्म्येऽपि एते वक्ष्यमाणाः पञ्च श्लोका अभितः परिगीयन्ते । ऐब्रासा.

**हिरण्येन परीवृतान्कृष्णाञ्शुक्लदतो मृगान् ।**
**मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च ॥**

तत्र प्रथमं श्लोकमाह- हिरण्येनेति । मृगशब्देनात्र गजा विवक्षिताः । मृगवदिति बाहुल्यविवक्षया मृगशब्दः । ते च गजाः हिरण्येन परीवृताः सर्वाभरणयुक्ताः शरीरपुष्ट्या वर्णोत्कर्षे सति अत्यन्तं कृष्णाः प्रतिभासन्ते । शुक्लाभ्यां दन्ताभ्यां युक्ताः । तादृशान् गजान् मष्णारनामके देशे भरतो राजा दत्तवान् । शतमित्यादि तत्संख्योच्यते । बद्वं वृन्दमित्येतौ पर्यायौ । वृन्दशब्दश्च शतकोटिवाचित्वेन गणिते ग्रन्थकारैर्दर्शितः- 'एकं दश च शतं च सहस्रं चायुतनियुते तथा । प्रयुतकोट्यर्बुदं वृन्दं स्थानं स्थानाद्दशगुणं स्यात् ॥' इति । तानि च शतकोटिरूपाणि बद्वानि सप्ताधिकशतसंख्याकानि । तावतो गजान् दत्तवानित्यर्थः । ऐब्रासा.

**भरतस्यैष दौष्यन्तेरग्निः साचीगुणे चितः ।**
**यस्मिन्सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे ॥**

द्वितीयं श्लोकमाह- भरतस्येति । साचीगुणनामके कस्मिंश्चिद्देशे दुष्यन्तपुत्रस्य भरतस्यैषोऽग्निश्चितः अग्निचयनं कृतवानित्यर्थः । यस्मिन्नग्निचयने सहस्रसंख्याका ब्राह्मणाः बद्वशः प्रत्येकं शतकोटिसंख्यया गा विभेजिरे गवां विभागं कृतवन्तः । ऐब्रासा.

**अष्टासप्ततिं भरतो दौष्यन्तिर्यमुनामनु ।**
**गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतं हयान् ॥**

तृतीयं श्लोकमाह- अष्टेति । 'मेध्यैरश्वैरीजे' इत्युक्तं, तेषामश्वानां संख्याऽत्रोच्यते । अष्टाधिका सप्ततिरष्टासप्ततिः, तामष्टासप्ततिं दुष्यन्तपुत्रो भरतो यमुनामनु यमुनायास्तीरे अबध्नात् बद्धवान्, तावतोऽश्वमेधान् कृतवानित्यर्थः । गङ्गायां गङ्गातीरे वृत्रघ्ननामके देशे पञ्चाधिकपञ्चाशत्संख्याकान् हयानबध्नात्, तावतोऽश्वमेधान् कृतवान् । ऐब्रासा.

**त्रयस्त्रिंशच्छतं राजाऽश्वान्बद्ध्वाऽय(? यं) मेध्यान् ।**
**दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः ॥**

चतुर्थं श्लोकमाह- त्रयस्त्रिंशदिति । यमुनातीरे गङ्गातीरे चानुष्ठिता अश्वाः त्रयस्त्रिंशदधिकशतसंख्याकाः । तावतोऽश्वान् मेध्यान् यज्ञयोग्यान् विध्युक्तक्रमेण बन्धनं कृत्वा सोऽयं राजा दौष्यन्तिः मायवत्तरः अतिशयेन मायावी सन् राज्ञः स्वकीयशत्रोर्मायां अत्यगात् अतिक्रान्तवान् । ऐब्रासा.

**महाकर्म भरतस्य न पूर्वे नापरे जनाः ।**
**दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्च मानवाः ॥**
**इति ॥**

पञ्चमं श्लोकमाह- महाकर्मेति । भरतस्य राज्ञो यदेतन्महाकर्म तदेतत्पूर्वे पित्रादयो न कर्तुं शक्ताः, अपरे जनाः पुत्रपौत्रादयश्च न कर्तुं शक्ताः । तत्र दृष्टान्तः- यथा मनुष्यो दिवं स्वर्गं हस्ताभ्यां स्प्रष्टुमशक्तः एवं पञ्च मानवाः निषादपञ्चमाश्चत्वारो वर्णाः नोदापुः तदीयं कर्म प्राप्तुमशक्ताः । सोऽयं सर्वोऽपि महाभिषेकस्य महिमेत्यर्थः । ऐब्रासा.

**एतं ह वा ऐन्द्रं महाभिषेकं बृहदुक्थ ऋषिर्दुर्मुखाय पाञ्चालाय प्रोवाच । तस्मादु दुर्मुखः पाञ्चालो राजा सन्विद्यया समन्तं सर्वतः पृथिवीं जयन्परीयाय ॥**

अथ संप्रदायकथनमुखेन महाभिषेकं प्रशंसति- एतमिति । बृहदुक्थनामकः कश्चिदृषिः पञ्चालदेशस्वामिने दुर्मुखनाम्ने राज्ञे तमेतं इन्द्रसंबन्धिनं महाभिषेकं प्रोवाच । तस्मादेव कारणात् स राजा सन् विद्यया महाभिषेकज्ञानेनैव सर्वासु दिक्षु समन्तं समग्रां पृथिवीं जयन् परीयाय परितः संचचार । ऐब्रासा.

**एतं ह वा ऐन्द्रं महाभिषेकं वासिष्ठः सात्यहव्योऽत्यरातये जानंतपये प्रोवाच । तस्मादत्यराति-**

**र्जानंतपिरराजा सन्विद्यया समन्तं सर्वतः पृथिवीं जयन्परीयाय ॥**

अथ ब्राह्मणस्योक्ताभिषेकाधिकाराभावेऽपि तद्विद्याधिकारसद्भावात्फलसिद्धिं दर्शयति— एतमिति । वसिष्ठगोत्रोत्पन्नो वासिष्ठः सत्यहव्यस्य पुत्रः सात्यहव्यः तादृशो मुनिः अत्यरातिनामकाय जनंतपपुत्राय ब्राह्मणाय नमेतं महाभिषेकं प्रोवाच । तस्मादेव कारणादयं अत्यरातिर्जानंतपिः स्वयमराजा सन्नपि अभिषेकविद्यया जयं प्राप्तः परितो गतवान् । ऐब्रासा.

**स होवाच वासिष्ठः सात्यहव्यः— अजैषीर्वै समन्तं सर्वतः पृथिवीं, महन्मा गमयेति । स होवाचात्यरातिर्जानंतपिः— यदा ब्राह्मणोत्तरकुरूञ्जयेयमथ त्वमु हैव पृथिव्यै राजा स्याः, सेनापतिरेव तेऽहं स्यामिति । स होवाच वासिष्ठः सात्यहव्यः— देवक्षेत्रं वै तत्, न वै तन्मर्त्यो जेतुमर्हति, अद्रुक्षो वै म आ त इदं दद इति । ततो हात्यरातिं जानंतपिमात्तवीर्यं निःशुक्रममित्रतपनः शुष्मिणः शैब्यो राजा जघान ॥**

यथाऽभिषेके शपथं कृत्वा गुरुद्रोहो न कर्तव्यः एवं विद्यायामपीति दर्शयति— स इति । सात्यहव्यो वासिष्ठो गुरुः अत्यरातिं शिष्यमेवमुवाच— हे अत्यराते, विद्यासामर्थ्यात् पृथिवीं जितवानसि, अतो मां गुरुं महत् गमय महत्त्वं ऐश्वर्यं प्रापय । ततः शिष्योऽत्यरातिरेवमुवाच— मा भूदिदानीं तव महत्त्वम्, हे ब्राह्मण आचार्य, यदाऽहं उत्तरकुरुनामकान् हिमवत्पर्वतस्योत्तरदेशान् जयेयं तदानीं त्वमेव पृथिव्या राजा भव, अहं तु त्वदीयसेनापतिरेव भवामीति । ततः सात्यहव्यो वासिष्ठः स गुरुरेवमुवाच— हे अत्यराते, मेरोरुत्तरतो यदस्ति तद्देवक्षेत्रं, अतस्तत्क्षेत्रं मनुष्यो जेतुं नैवार्हति । त्वं तु मे मह्यं अद्रुक्षो वै द्रोहं कृतवानेव । मदपेक्षितं महत्त्वं दातुमनिच्छुः सन् वञ्चनार्थं यत्किंचिदुक्तवानसि । अतः शपथोल्लङ्घिनो गुरुद्रोहिणस्तवेदं सामर्थ्यमाददे अपहरामीति । ततः सामर्थ्यापहरणादत्यरातिं जानंतपिं गुरुणाऽपहृतवीर्यं अपहृततेजस्कं कश्चिच्छत्रुतापनः शिबिपुत्रः शुष्मिणाख्यो राजा जघान हतवान् । ऐब्रासा.

**तस्मादेवंविदुषे ब्राह्मणायैवंचक्रुषे न क्षत्रियो द्रुह्येन्नेद्राष्ट्रादवपद्येयं नेद्वा मा प्राणो जहदिति जहदिति ॥**

एतद्वृत्तान्तकथनफलं दर्शयति— तस्मादिति । यस्मात् गुरुद्रोहे महती हानिरुक्ता तस्मात् एवंविदुषे महाभिषेकाभिज्ञाय एवंचक्रुषे अभिषेककर्त्रे ब्राह्मणाय आचार्याय क्षत्रियो न द्रुह्येत् । केनाभिप्रायेणेति सोऽभिधीयते— राष्ट्रात् अस्माद्देशात् नेत् अवपद्येयं नैव भ्रष्टो भूयासम्, अथवा मा प्राणो नेत् जहत् नैव परित्यजतु इत्यभिप्रायः । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ।

ऐब्रासा.

राजाभिषेकः

**[१]व्याघ्रोऽयमग्नौ चरति प्रविष्टः । ऋषीणां पुत्रो अभिशस्तिपा अयम् । नमस्कारेण नमसा ते जुहोमि । मा देवानां मिथुया कर्म भागम् ॥**

अथ पञ्चदशषोडशसप्तदशेषु अनुवाकेषु यज्ञसंयुक्तालौकिको राजाभिषेकोऽभिधीयते । तत्रास्मिन्ननुवाके तावदादौ होममन्त्रा उच्यन्ते । कल्पः— 'व्याघ्रोऽयमग्नाविति सप्ताऽऽहुतीर्हुत्वा' इति । तत्र प्रथमामृचमाह— व्याघ्र इति । अयं अभिषेकार्हो राजा अस्मिन्नाहुत्याधारेऽग्नौ प्रविष्टः व्याघ्रवदप्रधृष्यो भूत्वा लोके चरति । सोऽयमृषीणां ऋत्विजां पुत्रः, अभिषेकसंस्कारेण तैरुत्पादितत्वात्, अभिशस्तिपाः पापेभ्यः पाता रक्षिता भवत्विति शेषः । हे अग्ने, ते तव नमस्कारेण युक्तोऽहं नमसा उपनतेन हविषा जुहोमि । देवानां भागं मिथुया कर्म यथा मिथ्या भवति तथा वयं मा कार्ष्म, किंतु सत्यमेव कुर्म इत्यर्थः । तैब्रासा.

---

(१) असं. ४।३९।९ व्याघ्रोऽयमग्नौ च (अग्नावग्निश्च) अदम् (उ); तैसं. १।३।७।२ (अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्भागधेयम् ॥); तैब्रा. २।७।१५।१.

**[1]सावीर्हि देव प्रसवाय पित्रे । वर्ष्माणमस्मै वरिमाणमस्मै । अथास्मभ्यꣳ सवितः सर्वताता । दिवे दिव आसुवा भूरिपश्वः ॥**

अथ द्वितीयामाह– सावीरिति । हे देव, प्रसवाय प्रजानां प्रेरकाय पित्रे पालकाय अस्मै राज्ञे वर्ष्माणं सावीर्हि सर्वथा प्रेरय । अस्य राज्ञो देहो यथा सर्वान् पालयति तथा त्वमनुगृहाणेत्यर्थः । किंच, अस्मै राज्ञे वरिमाणं उरुत्वं राज्यविस्तारं सावीः प्रेरय अनुजानीहि । अथ अनन्तरं हे सवितः, सर्वे देवाः तायन्ते विस्तीर्यन्ते एष्विति सर्वताता ये यज्ञास्तेषु सर्वताता अस्मभ्यं अस्मदर्थे भूरिपश्वः भूरीन् बहुलान् पशून् आसुव सर्वतः प्रेरय । तैब्रासा.

**[2]भूतो भूतेषु चरति प्रविष्टः । स भूतानामधिपतिर्बभूव । तस्य मृत्यौ चरति राजसूयम् । स राजा राज्यमनुमन्यतामिदम् ॥**

अथ तृतीयामाह– भूत इति । भूतेषु प्राणिजातेषु मध्ये प्रविष्टोऽयं भूतः स्वयमुद्भूतः चरति सर्वनियामकत्वेन प्रवर्तते । अत एव भूतानां प्राणिनां सर्वेषामधिपतिः स्वामी बभूव । तस्य राज्ञो मृत्यौ दुष्टशिक्षारूपमरण(? णे) निमित्तभूते सति राजसूयं चरति । राजा सूयते अभिषिच्यतेऽस्मिन् कर्मणीति राजसूयाख्यमिममभिषेक- (? राजसूयमभिषेकाख्य )मिदं कर्म च दुष्टशिक्षार्थं प्रवर्तते इत्यर्थः । सोऽभिषिक्तो राजा राज्यमिदमनुमन्यतां दुष्टशिक्षाशिष्टपरिपालनरूपं यद्राजकृत्यं तदङ्गीकरोतु । तैब्रासा.

(१) असं. ७।१४।३ सवाय ( थमाय ) तः सर्वताता । दिवे ( तर्वार्याणि दिवो ); कासं. ३७।९ ( १२ ) सवाय ( थमाय ) तः सर्वताता ( तर्वार्याणि ); तैब्रा. २।७।१५।१ ; आश्रौ. १।४।१० सवाय ( थमाय ) ; शाश्रौ. ५।१४।३ आश्रौवत्.

(२) असं. ४।८।१ चरति प्रविष्टः ( पय आ दधाति ) मृत्यौ च ( मृत्युश्च ); कासं. ३७।९ ( १३ ) मृत्यौ च ( मृत्योश्च ); तैब्रा. २।७।१५।१–२.

**[1]येभिः शिल्पैः पप्रथानामदृꣳहत् । येभिर्द्यामभ्यपिꣳशत्प्रजापतिः । येभिर्वाचं विश्वरूपाꣳ समव्ययत् । तेनेममग्न इह वर्चसा समङ्ग्धि ॥**

अथ चतुर्थीमाह– येभिरिति । प्रजापतिर्येभिः शिल्पैः यैः कौशलैः पप्रथानां विस्तारयुक्तामिमां पृथिवीं अदृंहत् दृढीकृतवान् । तथा येभिः कर्मकौशलैः द्यां द्युलोकं अभ्यपिंशत् अभितः चन्द्रतारकादिभिः सुरूपामकरोत् तथा येभिः यैः कर्मकौशलैः वाचमिमामुच्चार्यमाणां विश्वरूपां नानापदार्थवाचकत्वेनानेकरूपां समव्ययत् सम्यक्संपादितवान् । तेन तथाविधकौशलजातेन वर्चसा तद्योगेन बलेन च हे अग्ने, इमं राजानमिह लोके समङ्ग्धि समर्थं कुरु, तथाविधसामर्थ्येन संयोजयेत्यर्थः । तैब्रासा.

**[2]येभिरादित्यस्तपति प्रकेतुभिः । येभिः सूर्यो ददृशे चित्रभानुः । येभिर्वाचं पुष्कलेभिरव्ययत् । तेनेममग्न इह वर्चसा समङ्ग्धि ॥**

अथ पञ्चमीमाह– येभिरिति । येभिः प्रकेतुभिः प्रकृष्टतेजोविशेषैः अयमादित्यः सर्वत्र तापं करोति । किंच, येभिः यैस्तेजोविशेषैः सूर्यः चित्रभानुः ददृशे विचित्ररश्मियुक्तोऽयमिति प्राणिभिर्दृश्यते । येभिः यैस्तेजोविशेषैः पुष्कलैः संपूर्णैर्वाचं शब्दात्मिकां अव्ययत् विविधां परिवृतां सर्वो जन्तुरकरोत् । तेनेत्यादि पूर्ववत् । तैब्रासा.

**[3]आऽयं भातु शवसा पञ्च कृष्टीः । इन्द्र इव ज्येष्ठो भवतु प्रजावान् । अस्मा अस्तु पुष्कलं चित्रभानु । आऽयं पृणक्तु रजसी उपस्थम् ॥**

अथ षष्ठीमाह– आऽयमिति । अयं राजा शवसा बलेन पञ्च कृष्टीः पञ्चसंख्याकान् मनुष्यान् निषादपञ्चमान्

(१) कासं. ३७।९ ( १४ ) रूपाꣳ समव्ययत् । तेनेममग्न (रूपेभिरव्यथँस्तेनेममग्न); तैब्रा. २।७।१५।२.

(२) कासं. ३७।९ (१५) यत् । तेनेममग्न (थँस्तेनेममग्न) ; तैब्रा. २।७।१५।२.

(३) कासं. ३७।९ ( १६ ) प्रजावान् ( प्रजानाम् ) उत्तरार्धे ( अस्मिन्नस्तु पुष्कलं चित्रभान्वाऽयं पृणातु रजसा विमानम् ॥ ); तैब्रा. २।७।१५।३.

ब्राह्मणादिवर्णविशेषान् आभातु समन्ताद्दीपयतु। किंचायं राजा स्वयमिन्द्र इव ज्येष्ठः प्रशस्यतमः प्रजावान् स्वाधीनप्रजायुक्तो भवतु। अस्मै राज्ञे विद्यमानं सर्ववस्तुजातं पुष्कलं संपूर्णं चित्रभानु विचित्रत्वेन भासमानं स्वस्वकार्यक्षममस्तु। किंचायं राजा रजसी रञ्जनात्मिके द्यावापृथिव्यौ उपस्थं तत्समीपस्थितं अन्तरिक्षं च आपृणक्तु तेजसा सर्वतः प्राप्नोतु पालयत्वित्यर्थः। तैब्रासा.

**[1]यत्ते शिल्पं कश्यप रोचनावत्। इन्द्रियावत्पुष्कलं चित्रभानु। यस्मिन्त्सूर्या अर्पिताः सप्त साकम्। तस्मिन्राजानमधिविश्रयेमम्॥**

अथ सप्तमीमाह— यदिति। हे कश्यपाख्य प्रजापते, ते तव यच्छिल्पं कर्मकौशलं रोचनावत् दीप्तिमत् इन्द्रियावत् वीर्योपेतं पुष्कलं संपूर्णं चित्रभानु विचित्रत्वेन भासमानम्। किंच, यस्मिंस्त्वदीये शिल्पे सप्तसंख्याकाः सूर्याः साकमर्पिताः सहावस्थापिताः। ते च सप्त सूर्याः आरण्यकाण्डे 'आरोगो भ्राजः' इत्यनुवाके प्रपञ्चिताः। तस्मिन् शिल्पे इमं राजानमधिविश्रय अधिकत्वेनाऽऽश्रितं कुरु। तैब्रासा.

**[2]द्यौरसि पृथिव्यसि॥**

कल्पः— 'द्यौरसि पृथिव्यसीति यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति' इति। पाठस्तु— द्यौरिति। हे शार्दूलचर्म, त्वं द्युलोकरूपमसि भूलोकरूपमसि। तैब्रासा.

**[3]व्याघ्रो वैयाघ्रेऽधि।**
**विश्रयस्व दिशो महीः।**
**विशस्त्वा सर्वा वाञ्छन्तु।**
**मा त्वद्राष्ट्रमधिभ्रशत्॥**

कल्पः— 'तस्मिन्राजोपविशति। व्याघ्रो वैयाघ्र इत्यासीनमभिमन्त्रयते' इति। पाठस्तु— व्याघ्र इति। हे राजन्, त्वं व्याघ्रवदप्रधृष्यो भूत्वा व्याघ्रसंबन्धिनि चर्मणि अधि उपरिस्थितो महीः महतीः दिशः प्राच्यादिकाः विश्रयस्व विशेषेणाऽऽश्रितो भव। सर्वा विशः प्रजाः त्वां वाञ्छन्तु कामयन्तु। इदं राष्ट्रं त्वत् मा अधिभ्रशत् त्वत्सकाशाद्भ्रष्टं मा भूत्। तैब्रासा.

**[1]या दिव्या आपः पयसा संबभूवुः। या अन्तरिक्ष उत पार्थिवीर्याः। तासां त्वा सर्वासाꣳ रुचा। अभिषिञ्चामि वर्चसा॥**

**[2]अभि त्वा वर्चसा सिचं दिव्येन। पयसा सह। यथाऽऽसा राष्ट्रवर्धनः। तथा त्वा सविता करत्॥**

**[3]इन्द्रं विश्वा अवीवृधन्। समुद्रव्यचसं गिरः। रथीतमꣳ रथीनाम्। वाजानाꣳ सत्पतिं पतिम्॥**
**[4]वसवस्त्वा पुरस्तादभिषिञ्चन्तु गायत्रेण छन्दसा॥**
**रुद्रास्त्वा दक्षिणतोऽभिषिञ्चन्तु त्रैष्टुभेन छन्दसा॥**

---

(१) **असं.** १३।३।१० शिल्पं (चन्द्रं) इन्द्रियावत् (यत्संहितं) पादत्रयमात्रम्; **कासं.** ३७।९ (१७); **तैब्रा.** २।७।१५।३; **तैआ.** १।७।१-२.

(२) **तैब्रा.** २।७।१५।३.

(३) **असं.** ४।८।४ (व्याघ्रो अधि वैयाघ्रे वि क्रमस्व दिशो महीः। विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्वतीः॥); **कासं.** ३७।९ (१८) वैयाघ्रेऽधि (वैयाघ्रे अधि) शेषं असंवत्; **तैब्रा.** २।७।१५।३-४.

(१) **असं.** ४।८।५ (या आपो दिव्याः पयसा मदन्त्यन्तरिक्ष उत वा पृथिव्याम्। तासां त्वा सर्वासामपामभि षिञ्चामि वर्चसा॥); **कासं.** ३७।९ (१९) दिव्या आपः (आपो दिव्याः) रिक्ष (रिक्ष्या) वीर्याः (वासः); **तैब्रा.** २।७।१५।४ : ३।१।२।३ पू.; **आगृ.** ४।७।१३ रिक्ष (रिक्ष्या) पू.

(२) **असं.** ४।८।६ सिचं ... राष्ट्र (सिचन्नापो दिव्याः पयस्वतीः। यथासो मित्र); **कासं.** ३६।१५ (४२), ३७।९ (२०) दिव्येन (यज्ञेन) यथाऽऽसा राष्ट्र (यथासो मित्र); **तैब्रा.** २।७।१५।४-५.

(३) **ऋसं.** १।११।१; **सासं.** १।३।१२ (३४३), २।३।६ (८२७); **तैसं.** ४।६।३।४; **कासं.** १८।३ (२९), ३६।१५ (४३), ३७।९ (२१); **मैसं.** २।१०।५ (५१); **शुसं.** १२।५६, १५।६१, १७।६१; **तैब्रा.** २।७।१५।५, २।७।१६।३.

(४) **तैब्रा.** २।७।१५।५-६.

**आदित्यास्त्वा पश्चादभिषिञ्चन्तु जागतेन छन्दसा ॥**

**विश्वे त्वा देवा उत्तरतोऽभिषिञ्चन्त्वानुष्टुभेन छन्दसा ॥**

**बृहस्पतिस्त्वोपरिष्टादभिषिञ्चतु पाङ्क्तेन छन्दसा ॥**

कल्पः– 'अथैनं तोक्मावास्ताभिर्दूर्वावास्ताभिर्वाऽद्भिरभिषिञ्चति । या दिव्या आप इति प्रतिपद्याऽऽपाङ्क्तात्' इति । यास्वप्सु तोक्मानि व्रीह्यङ्कुराणि अवास्तानि प्रक्षिप्तानि, ता आपः तोक्मावास्ताः, एवं दूर्वावास्ता अपि । पाठस्तु– या दिव्या इति । दिव्याः दिवि भवाः आपः याः पयसा क्षीरेण सह संबभूवुः, अन्तरिक्षे याः संबभूवुः, उत अपि च पार्थिवीः पृथिव्यामुत्पन्ना या आपः, तासां सर्वासां रुचा दीप्त्या वर्चसा बलेन हे राजन्, त्वामभिषिञ्चामि । पयसा दिव्येन सह वर्चसा बलेन त्वामभितः सिञ्चं सर्वतः सिक्तं करोमि । यथा लोके सविता स्वयं राष्ट्रवर्धनः आस तथा त्वामपि राष्ट्रवर्धनं करोतु । विश्वा गिरः सर्वाः स्तुतिरूपा वाचः त्वां अवीवृधन् वर्धितवत्यः । कीदृशं त्वाम्? इन्द्रं परमैश्वर्ययुक्तं, समुद्रव्यचसं समुद्रवद्व्यापिनं, रथीनां रथीतमं रथयुक्तानां राज्ञां मध्येऽतिशयेन रथस्वामिनं, वाजानां अन्नानां पतिं पालकं, तथा सत्पतिं सन्मार्गवर्तिनां पालकम् । हे राजन्, त्वां पुरस्तात् पूर्वस्यां दिशि गायत्रच्छन्दोभिमानिदेवेन सह वसवोऽभिषिञ्चन्तु । एवं रुद्रास्त्वेत्यादि वाक्येष्वपि योजनीयम् । तैब्रासा.

**अरुणं त्वा वृकमुग्रं खजंकरम् । रोचमानं मरुतामग्रे अर्चिषः । सूर्यवन्तं मघवानं विषासहिम् । इन्द्रमुक्थ्येषु नामहूतमं हुवेम ॥**

कल्पः– 'अरुणं त्वा वृकमित्येनमभिमन्त्र्य' इति । पाठस्तु– अरुणमिति । हे राजन्, त्वामुक्थ्येषु स्तोत्रेषु इन्द्रं हुवेम इन्द्रत्वेनाऽऽह्वयाम, इन्द्रनाम्नैव व्यवहराम इत्यर्थः । कीदृशं त्वाम्? अरुणं उदयकालीनसूर्यसदृशं, वृकं आरण्यमृगवच्छत्रूणां भयहेतुं, अत एवोग्रं, खजंकरं खजः शत्रूणां भर्त्सनं तत्करोतीति खजंकरः तं, मरुतां देवानां अर्चिषः अग्रे रोचमानं तदीयप्रकाशादप्यधिकेन प्रकाशेन युक्तमित्यर्थः, सूर्यवन्तं उपमानार्थे सूर्योऽस्यास्तीति सूर्यवान् तं, मघवानं अन्नवन्तं, विषवद्वैरिणः सहते अभिभवतीति विषासहिः तं, नामहूतमं युद्धेषु शत्रूनतिशयेन तत्तन्नाम्नाऽऽह्वयतीति नामहूतमः, तम् । तैब्रासा.

[1]**प्र बाहवा सिसृतं जीवसे नः । आ नो गव्यूतिमुक्षतं घृतेन । आ नो जने श्रवयतं युवाना । श्रुतं मे मित्रावरुणा हवेमा ॥**

कल्पः– 'प्र बाहवेति बाहू प्रसार्य' इति । पाठस्तु– प्रेति । हे बाहवा उभौ बाहू, नः अस्माकं जीवसे जीवनाय प्रसिसृतं प्रसृतौ भवतम् । नः अस्माकं गव्यूतिं गोसमूहं घृतेन उक्षतं सिञ्चतम् । युवाना तरुणौ परस्परमिश्रितौ वा युवां नः अस्मान् जने जनसमूहे आश्रवयतं सर्वत्र प्रख्यापयतम् । हे मित्रावरुणरूपौ बाहू, मे मदीयं इमा हवा इदमाह्वानं श्रुतं शृणुतम् । तैब्रासा.

[2]**इन्द्रस्य ते वीर्यकृतः । बाहू उपावहरामि ॥**

कल्पः– 'इन्द्रस्य ते वीर्यकृत इत्युपावहरति' इति । पाठस्तु– इन्द्रस्येति । तैब्रासा.

[3]**अभि प्रेहि वीरयस्व । उग्रश्चेत्ता सपत्नहा ॥**

पञ्चदशे राजाभिषेक उक्तः । षोडशे तदङ्गत्वेन रथारोहणमुच्यते । कल्पः– 'अग्रेणाग्निं रथोऽवस्थितो भवत्यभि प्रेहीति तं राजाऽभ्येति' इति । पाठस्तु– अभीति । सोऽयं मन्त्रोऽष्टमेऽनुवाके व्याख्यातः । (हे यजमान, रथमभिलक्ष्य प्रेहि प्रकर्षेण गच्छ । गत्वा च वीरयस्व विक्रमं कुरु । उग्रः तीव्रशासनः चेत्ता जयोपायाभिज्ञः सपत्नहा वैरिघाती च भव ।) । तैब्रासा.

---

(१) ऋसं. ७।६२।५; तैसं. १।८।२२।३; कासं. ४।१६ (१२७); मैसं. ४।११।२ (६६) नः (ना); शुसं. २१।९ नो जने (मा जने); तैब्रा. २।७।१५।६, २।८।६।७–८.

(२) तैब्रा. २।७।१५।६.

(३) असं. ४।८।२ वीरयस्व (माप वेन); कासं. ३७।९ (२२); तैब्रा. २।७।८।१, २।७।१६।१.

**[१]आतिष्ठ वृत्रहन्तमः । तुभ्यं देवा अधिब्रवन् ॥**

कल्पः– ‘ आतिष्ठ वृत्रहन्तम इत्यारोहन्तमभिमन्त्रयते ’ इति । पाठस्तु– आतिष्ठेति । अयमपि तत्रैव व्याख्यातः । ( हे यजमान त्वं . . . . रथमातिष्ठ आरोह । देवास्तुभ्यं त्वदर्थमधिब्रुवन् अधिकोऽयं यजमान इति ब्रुवन्तु । ) ।

तैब्रासा.

**[२]अङ्कौ न्यङ्कावभितो रथं यौ । ध्वान्तं वाताग्रमनुसंचरन्तौ । दूरेहेतिरिन्द्रियावान्पतत्री । ते नोऽग्नयः पप्रयः पारयन्तु ॥**

कल्पः– ‘ अङ्कौ न्यङ्काविति रथचक्रे अभिमृशति ’ इति । पाठस्तु– अङ्काविति । अङ्क इति दक्षिणचक्रस्य नाम, न्यङ्क इति उत्तरचक्रस्य । रथमभितः रथस्य पार्श्वयोः यावङ्कौ यौ च न्यङ्कौ विद्येते । एकैकस्मिन् पार्श्वे चक्रद्वयं, रथस्य चक्रचतुष्टयोपेतत्वात् । अथवा अङ्कशब्दश्चक्रवाची, न्यङ्कशब्दश्चक्रयुक्तपक्षवाची । यावङ्कौ तौ यौ च न्यङ्कौ तौ ध्वान्तं ध्वनियुक्तं वाताग्रं वायोः पूर्वभागं अनुसंचरन्तौ वायोरपि शीघ्रवेगेन गच्छत इत्यर्थः । दूरेहेतिरित्यादिभिस्त्रिभिः शब्दैस्त्रयोऽग्निविशेषा उच्यन्ते । ते त्रयोऽप्यग्नयः पप्रयः गमनं पूरयन्तो नः अस्मान् पारयन्तु गमनसमाप्तिं प्रापयन्तु । तैब्रासा.

**[३]नमस्त ऋषे गद । अव्यधायै त्वा स्वधायै त्वा । मा न इन्द्राभितस्त्वदृष्वारिष्टासः । एवा ब्रह्मन्तवेदस्तु ॥**

कल्पः– ‘ नमस्त ऋष इति पुरोहितमभिमन्त्रयते ’ इति । पाठस्तु– नम इति । हे ऋषे अतीन्द्रियद्रष्टः पुरोहित, ते तुभ्यं नमोऽस्तु । गद अस्मभ्यं हितं कथय । अव्यधायै शत्रुकृतबाधाराहित्याय त्वा त्वां भजाम इति शेषः । स्वधायै अन्नार्थं त्वां भजामः । हे ऋष्व पुरोहितात्मन्नृषे, इन्द्र परमैश्वर्यसंपन्न, नः अस्माकं त्वत् तव प्रसादात् अरिष्टासः अस्माभिर्हिंसितुं बाधितुमशक्याः प्रत्यवायाः अभितः सर्वतः मा भूवन् । हे ब्रह्मन्, तवेत् तवैव प्रसादात् एव इत्थमेवास्तु । तैब्रासा.

**[१]तिष्ठा रथे अधि यद्वज्रहस्तः ॥**

कल्पः– ‘ तिष्ठा रथे इति सारथिम् ’ इति । अभिमन्त्रयते इत्यनुवर्तते । पाठस्तु– तिष्ठेति । हे सारथे, यस्मात्त्वं वज्रहस्तः तस्माद्रथेऽप्यधितिष्ठ अधिरुह्य स्थितो भव । तैब्रासा.

**[२]आ रश्मीन्देव युवसे स्वश्वः ॥**

कल्पः– ‘ आ रश्मीनिति रश्मीनालभेत ’ इति । पाठस्तु– आ रश्मीनिति । हे देव रथप्रवर्तक, स्वश्वः शोभनाश्वयुक्तः त्वं रश्मीन् प्रग्रहान् आयुवसे आदाय मिश्रीकुरु । तैब्रासा.

**[३]आतिष्ठ वृत्रहन्नातिष्ठन्तं परि । अनु त्वेन्द्रो मदत्वनु त्वा मित्रावरुणौ ॥**

कल्पः– ‘ आतिष्ठ वृत्रहन्निति षड्भिरारूढम् ’ इति । अभिमन्त्रयते इत्यनुवर्तते । तत्र चतुर्णां मन्त्राणां प्रतीकानि दर्शयति– आतिष्ठेति । तैब्रासा.

---

( १ ) **असं.** ४।८।२ वृत्रहन्तमः ( मित्रवर्धन ); **कासं.** ३७।९ ( २२ ) वृत्रहन्तमः ( मित्रवर्धनः ) ब्रवन् ( ब्रुवन् ); **तैब्रा.** २।७।८।१ कासंवत्, २।७।१६।१.

( २ ) **तैसं.** १।७।७।२–३ ; **तैब्रा.** २।७।१६।१ ; **ताब्रा.** १।७।५ अङ्कौ न्यङ्काव ( अङ्का न्यङ्कू अ ) मनु ( मभि ) रिन्द्रिया ( रिन्द्रिय ); **माश्रौ.** ७।१।२।३० यौ - - - यन्तु ( ये ध्वान्ता वाताग्निमभिसंचरन्ति । दूरेहेतिः पतत्री वाजिनीवाँस्ते नोऽग्नयः पप्रयः पालयन्तु ॥ ); **मागृ.** १।१३।४ पूर्वार्धे ( अङ्कू न्यङ्कावभितो रथं ये ध्वान्ता वाता अग्निमभि ये संचरन्ति । ) शेषं माश्रौवत्; **पागृ.** ३।१४।६ चरन्तौ ( चरन्तम् ) यावान्पतत्री ( यवान्पतत्रि ).

( ३ ) **तैब्रा.** २।७।१६।१–२.

( १ ) **ऋसं.** ५।३३।३ ( तिष्ठा रथमधि तं वज्रहस्त ); **शुसं.** १०।२२ ( तिष्ठा रथमधि यं वज्रहस्त ); **तैब्रा.** २।७।१६।२ ; **शब्रा.** ५।४।३।१४ शुसंवत्.

( २ ) **ऋसं.** ५।३३।३ रश्मीन् ( रश्मिं ) युव ( यम ); **शुसं.** १०।२२ युवसे स्वश्वः ( यमसे स्वश्वान् ); **तैब्रा.** २।७।१६।२ ; **शब्रा.** ५।४।३।१४ शुसंवत्.

( ३ ) **तैब्रा.** २।७।१६।२.

[1]द्यौश्च त्वा पृथिवी च प्रचेतसा ।
शुक्रो बृहद्दक्षिणा त्वा पिपर्तु ।
अनु स्वधा चिकिताꣳ सोमो अग्निः ।
अनु त्वाऽवतु सविता सवेन ॥

पञ्चमं मन्त्रमाह– द्यौरिति । अत्रापि पादत्रयं तस्मिन्नेव ( अष्टमे ) अनुवाके व्याख्यातम् । ( द्यौश्च पृथिवी चेत्येते प्रचेतसा प्रकृष्टज्ञानयुक्ते सत्यौ त्वां रक्षताम् । योऽयं सोमयागे शुक्राख्यो ग्रहः स त्वां पिपर्तु पालयतु । तथा बृहत्साम त्वां पिपर्तु । दक्षिणा त्वां पिपर्तु । स्वधाशब्दोपलक्षितमन्नं त्वामनुचिकित्सतां तवानिष्टं निवारयत्वित्यर्थः । तथा सोमोऽग्निश्चेत्येतावुभौ त्वदीयमनिष्टं निवारयेताम् । ) हे राजन्, सविता देवः सवेन प्रेरणेन त्वा अनु अवतु अनुकूलः सन् रक्षतु । तैब्रासा.

[2]इन्द्रं विश्वा अवीवृधन् । समुद्रव्यचसं गिरः ।
रथीतमꣳ रथीनाम् । वाजानाꣳ सत्पतिं पतिम् ॥

अथ षष्ठमन्त्रमाह– इन्द्रमिति । अयं मन्त्रः पूर्वानुवाके व्याख्यातः । तैब्रासा.

[3]परि मा सेन्या घोषाः । ज्यानां वृञ्जन्तु गृध्नवः ।
मेथिष्ठाः पिन्वमाना इह । मां गोपतिमभिसंविशन्तु ॥

कल्पः– ' परि मा सेन्या इति द्वे वाचयित्वा ' इति । तत्र प्रथमामाह– परीति । सेन्याः परकीयायां सेनायां भवाः ज्यानां धनुर्गतानां घोषाः नादाः मा परिवृञ्जन्तु मां परितो वर्जयन्तु । तदीया धनुर्घोषा मद्विषये मा प्रवर्तन्ताम् । कीदृशा घोषाः ? गृध्नवः परराष्ट्रग्रहणेच्छावन्तः, मेथिष्ठाः श्रोत्रसंगमनोचिताः, इह अस्मिन्कर्मणि युद्धविशेषे वा पिन्वमाना अप्रतिकूलत्वेन मां प्रीणयन्तः, तादृशा ज्याघोषाः गोपतिं भूपतिं मां अभिसंविशन्तु अभितः सम्यक् प्रविशन्तु । ये शत्रुसंबन्धिनो घोषास्ते सर्वेऽप्यप्रतिकूलत्वेन स्वकीयघोषा भवन्त्वित्यर्थः । तैब्रासा.

[1]तन्मेऽनुमतिरनुमन्यताम् ।
तन्माता पृथिवी तत्पिता द्यौः ।
तद्ग्रावाणः सोमसुतो मयोभुवः ।
तदश्विना शृणुतꣳ सौभगा युवम् ॥

अथ द्वितीयामाह– तदिति । अनुमत्याख्या देवी तन्मदीयं कर्म अनुमन्यतां अङ्गीकरोतु । पृथिव्याख्या माता तदनुमन्यताम् । द्युलोकरूपः पिता तदनुमन्यताम् । सोमसुतः सोममभिषुण्वन्तः मयोभुवः सुखस्य भावयितारः ग्रावाणः पाषाणाः तदनुमन्यन्ताम् । हेऽश्विनौ, सौभगा युवं भाग्यवन्तौ युवां तच्छृणुतम् । तैब्रासा.

[2]अव ते हेड उदुत्तमम् ॥

कल्पः– ' उत्तराभिस्तिसृभिरभिमन्त्र्य ' इति । तत्र द्वयोः प्रतीके दर्शयति– अवेति । तैब्रासा.

[3]एना व्याघ्रं परिषस्वजानाः ।
सिꣳहꣳ हिन्वन्ति महते सौभगाय ।
समुद्रं न सुहुवं तस्थिवाꣳसम् ।
मर्मृज्यन्ते द्वीपिनमप्स्वन्तः ॥

अथ तृतीयामाह– एनेति । व्याघ्रं व्याघ्रवत्केनाप्यप्रधृष्यं सिंहं सिंहसमानशक्तियुक्तं एनं राजानं परिषस्वजानाः आलिङ्गयन्तः ब्राह्मणा बान्धवाश्च महते सौभगाय हिन्वन्ति प्रीणयन्ति आशीर्वादान् कुर्वन्तीत्यर्थः । समुद्रं न समुद्रमिव सुखेनाऽऽह्वातुं शक्यं तस्थिवांसं तस्मिन्स्थानेऽवस्थितमेनं

---

( १ ) **असं.** ६।५३।१ ( द्यौश्च म इदं पृथिवी च प्रचेतसौ शुक्रो बृहन्दक्षिणया पिपर्तु । अनु स्वधा चिकितां सोमो अग्निर्वायुर्नः पातु सविता भगश्च ॥ ); **कासं.** ३७।९ ( २७ ) शुक्रो ( यज्ञो ) चिकिताꣳ ( चिकिते ) ; **तैब्रा.** २।७।८।२ चतुर्थपादे ( आऽयं पृणक्तु रजसी उपस्थम् ) , २।७।१६।२.

( २ ) **तैब्रा.** २।७।१६।३ शेषाः स्थलादिनिर्देशाः राका. २४१ पृष्ठे द्रष्टव्याः ।

( ३ ) **तैब्रा.** २।७।१६।३.

---

( १ ) **ऋसं.** १।८९।४ प्रथमपादे ( तन्नो वातो मयोभु वातु भेषजं ) सौभगा ( धिष्ण्या ) ; **शुसं.** २५।१७ ऋसंवत् ; **तैब्रा.** २।७।१६।३–४.

( २ ) **तैब्रा.** २।७।१६।४.

( ३ ) **असं.** ४।८।७ हुवं त ( भुवस्त ) ; **कासं.** ३७।९ (२८) जानाः ( जाꣳ ) सौभगाय ( धनाय ) उत्तरार्धे ( मर्मृज्यन्ते द्वीपिनमप्स्वन्तररुषं न सुभ्वरतस्थिवाँसम् ॥ ) ; **मैसं.** २।१।९ ( १२ ) हिन्वन्ति ( मृजन्ति ) सौभगाय ( धनाय ) समुद्रं न सुहुवं ( मह्हिषं नः सुभ्वं ) ; **तैब्रा.** २।७।१६।४.

मर्मृज्यन्ते अभिषेकलेपान् पुनः पुनः शोधयन्ति । तत्र दृष्टान्तः— अप्स्वन्तः जलमध्ये द्वीपिनं गजं यथा प्रक्षाल्यन्ति त्वद्वदित्यर्थः । तैब्रासा.

'उदसावेतु सूर्यः । उदिदं मामकं वचः ।
उदिहि देव सूर्य । सह वग्नुना मम ॥

अहं वाचो विवाचनम् । मयि वागस्तु धर्णसिः । यन्तु नदयो वर्षन्तु पर्जन्याः । सुपिप्पला ओषधयो भवन्तु ॥

कल्पः— 'उदसावेत्वित्यादित्यमुदीक्षयति' इति । पाठस्तु— उदिति । असौ राजा सूर्यसमो भूत्वा उदेतु उदयं अभिवृद्धिं गच्छतु । मामकं मदीयं इदं आशीर्वादरूपं वचः उदेतु अभिवृद्धिं गच्छतु । हे सूर्य देव दीप्यमान राजन्, मम ब्राह्मणस्य सह वग्नुना वचनेन आशीर्वादेन सह त्वं उदिहि अभ्युदयं गच्छ । अहं पुरोहितो वाचो धर्माधर्मात्मिकाया विवाचनं विशेषेणाभिवदनसामर्थ्यं प्राप्नुयामिति शेषः । येयं मयि स्थिता आशीर्वादरूपा वाक् सा धर्णसिः धरणशीला सुप्रतिष्ठिताऽस्तु । नदयः नद्यः सर्वा यन्तु पूर्णाः प्रवहन्तु । पर्जन्याः मेघाः स्वस्वकाले वर्षन्तु । ओषधयो व्रीह्यादयः सुपिप्पलाः शोभनफलोपेता भवन्तु । तैब्रासा.

अन्नवतामोदनवतामामिक्षवताम् । एषाꣳ राजा भूयासम् ॥

कल्पः—'अन्नवतामिति जनपदाननुवीक्षते' इति । पाठस्तु— अन्नवतामिति । अदनीयानि प्रशस्तभक्ष्यभोज्यानि येषु ग्रामेषु ते ग्रामा अन्नवन्तः । प्रभूतेन व्रीहिप्रियङ्ग्वाद्योदनेन युक्ता ओदनवन्तः । आमिक्षशब्देन दधिक्षीरादिरसद्रव्याण्युपलक्ष्यन्ते, तैर्युक्ता आमिक्षवन्तः । तादृशानामेषां ग्रामाणां राजा स्वामी भूयासम् । तैब्रासा.

ये केशिनः प्रथमाः सत्रमासत । येभिराभृतं यदिदं विरोचते । तेभ्यो जुहोमि बहुधा घृतेन । रायस्पोषेणेमं वर्चसा सꣳसृजाथ ॥

(१) तैब्रा. २।७।१६।४—२।७।१७।२.

षोडशे राजाभिषेकाङ्गं रथारोहणमुक्तम् । सप्तदशे तदङ्गं वपनमभिधीयते । कल्पः— 'ये केशिनो नर्ते ब्रह्मण इति द्वे आहुती हुत्वा' इति । तत्र प्रथमामाह— य इति । केशाः येषां सन्ति ते केशिनः । केशिनः अग्निवायुसूर्याः, शाखान्तरे 'त्रयः केशिनः' इत्याम्नानात् । ते च देवाः (? ये केशिनो देवाः) प्रथमाः इतरेभ्यो देवेभ्यः पूर्वे प्रवृत्ताः (। केशिनो ये ?) सत्रमासत अनुष्ठितवन्तः, यदिदं जगद्विरोचते विशेषेण प्रकाशते तदिदं सर्वं येभिः यैर्देवैः आभृतं संपादितं, तेभ्यो देवेभ्यो घृतेन बहुधा बहुप्रकारं जुहोमि । हे देवाः केशिनः, इमं राजानं धनपुष्ट्या बलेन च संयोजयथ । तैब्रासा.

नर्ते ब्रह्मणस्तपसो विमोकः ।
द्विनाम्नी दीक्षा वशिनी ह्युग्रा ।
प्र केशाः सुवते काण्डिनो भवन्ति ।
तेषां ब्रह्मेदीशे वपनस्य नान्यः ॥

अथ द्वितीयामाह— नेति । ब्रह्मणः परिवृढात् एतस्माद्वपनादृते अभिषेकाख्यव्रतरूपात् तपसो विमोको विसर्गः समाप्तिर्नास्ति । उपक्रान्तं हि व्रतं समापनीयम् । अस्य चाभिषेकाख्यव्रतस्य वपनेनैव समाप्तिः । व्रतरूपा चेयमभिषेकदीक्षा द्विनाम्नी नामद्वययुक्ता । तस्याश्च वशिनीत्येकं नाम । तया हि सर्वाः प्रजा वशीक्रियन्ते । उग्रेत्यपरं नाम । तया हि दीक्षया शत्रवोऽभिभूयन्ते । दीक्षाया द्विविधव्रतत्वं सोमप्रकरणेऽप्याम्नातम्— 'एतद्वै सुजघनं नाम व्रतमिति प्रथमम् । एतद्वै क्षुरपवि नाम व्रतमिति द्वितीयम्' । अतोऽस्य व्रतस्य समाप्तये वपनं कुर्यात् । अस्य राज्ञः केशाः प्रसुवते प्रकर्षेणात्यन्ता वर्धन्ते । अत एव काण्डिनः बहुसमूहयुक्ताः भवन्ति । तेषां वर्धमानानां बहुसमूहयुक्तानां केशानां वपनस्य ब्रह्मेत् प्रजापतिरेव ईशे समर्थो भवति, न त्वन्यः कश्चित् । तस्मात् प्रजापतिरूपोऽयं पुरोहितो वपनं करोत्वित्यर्थः । तैब्रासा.

आरोह प्रोष्ठं विषहस्व शत्रून् ।
अवास्राग्दीक्षा वशिनी ह्युग्रा ।

**देहि दक्षिणां प्रतिरस्वाऽऽयुः ।**
**अथा मुच्यस्व वरुणस्य पाशात् ॥**

कल्पः– ' यजमानायतन औदुम्बरीमासन्दीं प्रतिष्ठापयति ताꣳ राजाऽऽरोहत्यारोह प्रोष्ठमित्यारोहन्तमभिमन्त्रयते ' इति । पाठस्तु– आरोहेति । हे राजन्, प्रोष्ठं आसन्दीरूपं मञ्चकमारोह । शत्रून् विषहस्व विशेषेणाभिभव । येयं वशिन्युग्रा चेति द्विनाम्नी दीक्षा सेयं यस्मादवाक्प्राक् अवसृष्टा समाप्ता तस्मात् पुरोहिताय दक्षिणां देहि । आयुः प्रतिरस्व त्वमपि दीर्घमायुः प्राप्नुहि । अथ अनन्तरं वरुणस्य पाशात् अस्माद्व्रयनिर्बन्धात् मुच्यस्व मुक्तो भव । तैब्रासा.

[1]**येनावपत्सविता क्षुरेण ।**
**सोमस्य राज्ञो वरुणस्य विद्वान् ।**
**तेन ब्रह्माणो वपतेदमस्योर्जेमम् ।**
**रय्या वर्चसा सꣳसृजाथ ॥**

कल्पः– ' तस्यामासीनः केशान् वापयते येनावपत्सविता क्षुरेण ( इति ) ' इति । पाठस्तु– येनेति । पुरा विद्वान् सविता राज्ञः राजाभिषेकं प्राप्नुवतः सोमस्य वरुणस्य च केशान् येन क्षुरेण अवपत् तेन क्षुरेण हे ब्राह्मणाः प्रजापतिरूपाः पुरोहिताः, अस्येदं केशजातं वपत । इमं च राजानं ऊर्जा क्षीरादिरसेन रय्या धनेन वर्चसा बलेन च संसृजाथ संयोजयत । तैब्रासा.

[2]**मा ते केशाननु गाद्वर्च एतत् ।**
**तथा धाता करोतु ते ।**
**तुभ्यमिन्द्रो बृहस्पतिः ।**
**सविता वर्च आदधात् ॥**

कल्पः– ' मा ते केशानिति केशान् प्रकीर्यमाणाननुमन्त्रयते ' इति । पाठस्तु– मेति । हे राजन्, ते वर्चः बलं केशाननु मा गात् माऽपगच्छतु । ते तव एतद्यथा भवति तथा धाता करोतु । तुभ्यं त्वदर्थं इन्द्रबृहस्पतिसवितारः नूतनमप्यधिकं वर्चः बलं संपादयन्तु । तैब्रासा.

[1]**तेभ्यो निधानं बहुधा व्यैच्छन् ।**
**अन्तरा द्यावापृथिवी अपः सुवः ।**
**दर्भस्तम्बे वीर्यकृते निधाय ।**
**पौꣳस्येनेमं वर्चसा सꣳसृजाथ ॥**

कल्पः– ' तान्समोप्य दर्भस्तम्बे निदधाति तेभ्यो निधानम् ( इति ) ' इति । पाठस्तु– तेभ्य इति । तेभ्यः तत्केशार्थं निधानं स्थापनप्रदेशं बहुधा बहुप्रकारं व्यैच्छन् ब्राह्मणा विशेषेणेच्छां कृतवन्तः । किं स्थानमिति तदुच्यते– ते द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्यं एकं स्थानमैच्छन्, अपः जलं द्वितीयं स्थानमैच्छन्, सुवः स्वर्गरूपं तृतीयं स्थानमैच्छन् । वीर्यकृते सामर्थ्येन संपादिते दर्भस्तम्बे तान्केशान्निधाय इमं राजानं पौंस्येन वर्चसा पौरुषेण बलेन संसृजाथ हे ब्राह्मणाः, संयोजयत । तैब्रासा.

[2]**बलं ते बाहुवोः सविता दधातु ।**
**सोम स्त्वाऽनक्तु पयसा घृतेन ।**
**स्त्रीषु रूपमश्विनैतन्निधत्तम् ।**
**पौꣳस्येनेमं वर्चसा सꣳसृजाथ ॥**

कल्पः– ' अथैनमाज्यमिश्रेण पयसाऽनक्ति बलं ते बाहुवोरिति बाहू ' इति । पाठस्तु– बलमिति । हे राजन्, ते बाहुवोर्बलं सविता संपादयतु । सोमस्त्वां पयसा घृतेन च समनक्तु सम्यगक्तं करोतु । अश्विना हे अश्विनौ,

---

( १ ) **असं.** ६।६८।३ मस्यो ... सृजाथ ( मस्य गोमानश्ववानयमस्तु प्रजावान् ) ; **तैब्रा.** २।७।१७।२; **आगृ.** १।१७।१० मस्यो ... सृजाथ (मस्याऽऽयुष्माञ्जरदष्टिर्यथासत्); **कौगृ.** १।२८। १५ क्षुरेण । सोमस्य ( श्मश्रूण्यग्रे क्षुरेण ) मस्यो . . . सृजाथ ( मद्याऽऽयुष्मान् दीर्घायुरयमस्तु वीरोऽसौ ) ; **हिगृ.** २०।१।४८ ; **मागृ.** १।२१।६ वपते ... सृजाथ ( वपत्वायुष्मानयं जरदष्टिरस्तु ) ; **पागृ.** २।१।११ मस्यो . . . सृजाथ ( मस्याऽऽयुष्यञ्जरदष्टिर्यथासत् ).

( २ ) **तैब्रा.** २।७।१७।२ ; **मागृ.** १।२१।८ करोतु ( दधातु ) मिन्द्रो + ( वरुणो ) आदधात् ( आदधुः ).

( १ ) **तैब्रा.** २।७।१७।३ ; **हिगृ.** २०।१।५० पू. ; **मागृ.** १।२१।१० बहुधा व्यैच्छन् ( महतं न विन्दन् ) वी अपः सुवः ( व्योरपस्युः ) पू.

( २ ) **तैब्रा.** २।७।१७।३–४.

एतत् रमणीयं रूपमेतदीयासु स्त्रीषु निधत्तं स्थापयतम् । पौंस्येनेत्यादि पूर्ववत् । तैब्रासा.

**यत्सीमन्तं कङ्कतस्ते लिलेख ।**
**यद्वा क्षुरः परिववर्ज वपᳪस्ते ।**
**स्त्रीषु रूपमश्विनैतन्निधत्तम् ।**
**पौᳪस्येनेमᳪ सᳪसृजाथो वीर्येण ॥**

कल्पः— 'यत्सीमन्तमिति शिरः' इति । आज्यमिश्रेण पयसाऽनक्तीत्यनुवर्तते । पाठस्तु— यदिति । हे राजन्, ते तव वपनात्पुरा कङ्कतः केशलघिमा(? म) संपादकः शलाकाविशेषः यत्सीमन्तं लिलेख शिखावशेषाय वपनीयस्थापनीययोः केशभागयोर्विभागं चकार । यद्वा अथवा क्षुरोऽयं वपन् वपनं कुर्वन् यत्केशजातं परिववर्ज वपनमकृत्वा स्थापितवान् । सीमन्तलेखनात्मकं यद्दर्शनीयं रूपं यच्च वपनवर्जननिमित्तं रूपमेतदुभयं हे अश्विनौ, एतदीयासु स्त्रीषु अलंकाराय निधत्तम् । इमं तु राजानं पौंस्येन पुरुषसंबन्धिना वीर्येण संसृजाथः संयोजयतम् । तैब्रासा.

वैश्याया वेश्याया वा पुत्रोऽभिषेकानर्हः

**'शूद्रा यदर्यजारा न पोषाय धनायतीत्याह ।**
**तस्माद्वैशीपुत्रं नाभिषिञ्चन्ते ॥**

यत् यदा कदाचित् दासी स्वकीयस्वामिना जारेण युक्ता भवति तदा सा दासी स्वामिस्वीकारमात्रेणात्यन्तं हृष्यति, न तु स्वकीयकुटुम्बपोषाय धनमात्मन इच्छति न हि स्वामिस्वीकाराद्धनमधिकं मन्यते । यस्मादत्र दास्या धनराहित्यं सूचितं तस्माद्दासीवन्नीचजातेः वैश्यस्त्रियाः पुत्रं धनानर्हं राज्यार्थं नाभिषिञ्चन्ते । तैब्रासा.

राजसूये पवित्राख्यसोमयागस्य पूर्णाहुतिः, अनुमतादियागाः

**'पूर्णाहुतिं जुहोति । सर्वं वै पूर्णम् । सर्वं परिगृह्य सूया इति । तस्यां वरं ददाति । सर्वं वै वरः । सर्वं परिगृह्य सूया इति । स यदि कामयेत— जुहुयादेताम् । यद्यु कामयेत— अपि नाद्रियेत ॥**

(१) तैब्रा. ३।९।७।३.
(२) शब्रा. ५।२।३।१—१०.

ब्राह्मणक्षत्रियोभयकर्तृकसंस्थारूपो वाजपेय उक्तः । अथैकतरकर्तृको विकृतिभूतो राजसूयो विधास्यते । तत्र अकृतवाजपेयस्य राजन्यस्यैव राजसूयेऽधिकारः, न तु तेनेष्टवतः, राज्यफलादपि साम्राज्यफलस्यातिशयितत्वेन उत्तमफलसाधनयागानन्तरं अवरफलहेतुक्रतुकरणस्यायुक्तत्वात् । अत एव कात्यायनः— 'राज्ञो राजसूयः । अनिष्टिनो वाजपेयेन' (काश्रौ. १५।१—२) इति । इष्टि—पशु—सोम—दर्वीहोमैः शतप्रधानो राजसूयः । तत्र 'श्वोभूतेऽनुमत्यै पुरोडाशमष्टाकपालं'. इत्यादिना विहिताः इष्टयः, 'अथ श्येनीं विचित्रगर्भामदित्या आलभते' इत्यादिना विहिताः पशवः, पवित्राभिषेचनीय—दशपेय—केशवपनीय—व्युष्टि—द्विरात्र— शतधृतिसंज्ञकाः सप्त सोमयागाः, पञ्चवातीयादयो दर्वीहोमाः । तत्र पवित्रनामके प्रथमसोमयागे प्रकृतिसमानत्वेन वक्तव्याभावात् तं परित्यज्य तदवसाने कर्तव्यं पूर्णाहुतिप्रभृति वैशेषिकमुत्तरतन्त्रमभिधीयते । पूर्णाहुतेः कालं कात्यायनः सूत्रयामास— 'पवित्रश्चतुर्दीक्षः । सहस्रदक्षिणः । माघीपक्षयजनीये दीक्षा । तदन्ते पूर्णाहुतिर्गृहेष्विच्छतः०' (काश्रौ. १५।१।४—७) इति । तद्विधत्ते— पूर्णेति । आज्यपूर्णया जुह्वा हूयते इति पूर्णाहुतिः । सा अनाम्नातमन्त्रत्वात् प्राजापत्या, 'यत् तूष्णीम् । तत् प्राजापत्यम् ।' (तैब्रा. २।१।४।६) इति श्रुतेः । तां जुहुयादित्यर्थः । पूर्णाहुतिकरणस्य कामनाधीनत्वं विवृणोति— सर्वमिति । पूर्णपदेन सर्वमुच्यते । सर्वं जगत् परिगृह्य स्वाधीनं कृत्वा पश्चात् राजसूयानुष्ठानेन सूयै अभिषिक्तो भूयासं इति अभिप्रायेण पूर्णाहुतिं कुर्यादित्यर्थः । तस्यां दक्षिणां विधत्ते— तस्यामिति । तस्यां हुतायामित्यर्थः । पूर्णाहुतेः इतराङ्गवत् अवश्यकर्तव्यत्वे प्राप्ते कामनानुसारेणैव करणीयत्वमाह— स यदि कामयेतेति । पूर्णाहुतिकरणेच्छायां सत्यां तदनुष्ठानं, विपर्यये तद्विपर्यय इत्यर्थः । शब्रासा.

**अथ श्वोभूतेऽनुमत्यै हविरष्टाकपालं पुरोडाशं निर्वपति । स ये जघनेन शम्यां पिष्यमाणानामवशीयन्ते पिष्टानि वा तण्डुला वा तान् स्रुवे**

**सार्धꣳ संवपति । अन्वाहार्यपचनादुल्मुकमाद-दते । तेन दक्षिणा यन्ति । स यत्र स्वकृतं वेरिणं विन्दति श्वभ्रप्रदरं वा ॥**

आरम्भणीयस्थानीयात् पवित्राख्यात् अग्निष्टोमादहः परस्मिन्नहनि कर्तव्यं विधत्ते– अथ श्वोभूत इति । सूत्रकृता पवित्रादनन्तरमुक्तम्– 'श्वः प्रभृत्यन्वहं पञ्चोत्तराणि (हवींषि) । अष्टाकपालोऽनुमत्यै' (काश्रौ. १५।१।८–९) इति । यागानुष्ठानस्य आधारत्वेनानुज्ञाकरणात् अनुमतिः पृथिवी । 'इयं वा अनुमतिः' इति ह्याम्नायते । तस्यै अष्टसु कपालेषु संस्कृतं पुरोडाशात्मकं हविर्निर्वपेत् । अत्रोत्तरं तन्त्रं सूत्रे संगृहीतम्– 'शम्यायाः पश्चात् हविष्यमन्नं स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे वाऽग्नौ जुहोति– एष ते निर्ऋत इति । अनपेक्षमेत्यानुमतस्य संवपनादि करोति । वासो देयम्' (काश्रौ. १५।१।१०–१२) इति । तत्सर्वं क्रमेण विधत्ते– स ये जघनेनेत्यादिना 'श्वोभूत आग्नावैष्णवम्' इत्यतः प्राक्तनेन । शम्यां जघनेन 'एनपा द्वितीया' (पा. २।३।३१) इति द्वितीया । पश्चिमायां दिशि दृषदमभ्याधातुं अधःस्थापितायाः शम्यायाः पश्चात् ये तण्डुलपिष्टलेशाः अवशीर्यन्ते अधः पतन्ति तान् स्रुवेण सोऽध्वर्युः सार्धं सह संवपेत् । उल्मुकेन सार्धं दक्षिणदिग्गमनं विधत्ते– अन्वाहार्येति । तस्य उल्मुकस्य स्थापनाय देशविशेषं विधत्ते– स यत्रेति । इरिणं ऊषरक्षेत्रम् । तच्च स्वकृतं स्वतः सिद्धं, न तु यतः कुतश्चिदानीयोषाः प्रक्षिप्ताः । तस्मिन् श्वभ्रप्रदरे गर्ताकारेण विदीर्णप्रदेशे वा । शब्रासा.

**तदग्निꣳ समाधाय जुहोति– 'एष ते निर्ऋते भागस्तं जुषस्व स्वाहा' इति । इयं वै निर्ऋतिः । सा यं पाप्मना गृह्णाति तं निर्ऋत्या गृह्णाति । तद्यदेवास्या अत्र नैर्ऋतꣳ रूपं तदेवैतच्छमयति । तथो हैनꣳ सूयमानं निर्ऋतिर्न गृह्णाति । अथ यत् स्वकृते वेरिणे जुहोति श्वभ्रप्रदरे वा । एतदु ह्यस्यै निर्ऋतिगृहीतम् ॥**

उल्मुकाग्निमाधाय स्रुवपूरितेन द्रव्येण जुहुयात् । तत्र मन्त्रं विधत्ते– एष त इति । निर्ऋते पापदेवते, एषः तण्डुलपिष्टशेषः ते तव भागः । तं भागं जुषस्व सेवस्व । स्वाहाशब्दो हवनलिङ्गमिति । भूमिर्द्विविधा– शालिगोधूमादिसर्वसस्याढ्या तदयोग्या च । तत्र आद्यभूमिरूपा अनुमतिः, द्वितीयभूमिरूपा निर्ऋतिः । सैवानिष्टकारिणी पापदेवता । तथा भूमिः पापिष्ठं जनं पीडयितुं गृह्णाति । तत् तथा सति अस्याः भूमेः अत्र अस्मिन् राजसूयानुष्ठानदेशे नैर्ऋतं रूपं एतेन होमेन शमितवान् भवतीति । तथो हैनमित्यादिना नैर्ऋतहोमस्य प्रयोजनकथनम् । एतदु ह्यस्या इति । एतत् एव इरिणप्रदरात्मकं स्थानं अस्यै अस्याः भूमेः संबन्धि निर्ऋतिगृहीतं निर्ऋत्या पापदेवतया आश्रयत्वेन स्वीकृतम् । अतस्तत्र नैर्ऋतहोमानुष्ठानं युक्तमिति । शब्रासा.

**अथाप्रतीक्षं पुनरायन्ति । अथानुमत्या अष्टाकपालेन पुरोडाशेन प्रचरति । इयं वा अनुमतिः । स यस्तत्कर्म शक्नोति कर्तुम् । यच्चिकीर्षति । इयꣳ ह्यस्मै तदनुमन्यते । तदिमामेवैतत् प्रीणाति । अनयाऽनुमत्याऽनुमतः सूया इति ॥**

पुनरागमनं विधत्ते– अथाप्रतीक्षमिति । अप्रतीक्षम् । यत्र निर्ऋत्यै होमः कृतः तं प्रदेशमनभीक्षमाणा एव पुनर्गच्छेयुः । अथानुमतस्य हविषः प्रचारं विधत्ते– अथानुमत्या इति । प्रचरन्तीति । आनुमतहविषः संवपनादिकं कुर्युरित्यर्थः । तथैवाऽऽम्नातमुदाहृतम्– इयं वा अनुमतिरिति । भूमिरूपा अनुमतिः । तत्र यत् कर्म करोति, यत् कर्तुमिच्छति तत् सर्वं भूम्यात्मिका अनुमतिर्देवता अनुजानाति । तया अनुमत्या अनुज्ञातः सूये राजसूयाख्यं कर्म करवाणि इत्यनेन अभिप्रायेणानुमतहविर्निर्वापः । तत् तेन हविषा भूमिमेव प्रीणितवान् भवति । शब्रासा.

**अथ यदष्टाकपालो भवति । अष्टाक्षरा वै गायत्री । गायत्री वा इयं पृथिवी । अथ यत् समानस्य हविष उभयत्र जुहोति । एषा ह्येवैत-**

**दुभयम् । तस्य वासो दक्षिणा । यद्वै सवासा अरण्यं नोदाशᳬसते । निधाय वै तद्वासोऽतिमुच्यते । तथो हैनᳬ सूयमानमासङ्गो न विन्दति ॥**

हविःश्रपणसाधनकपालगतां अष्टसंख्यां गायत्रीद्वारा पृथिवीयोग्यत्वेन प्रशंसति– अथ यदष्टेति । अथ यत् समानस्येति । अस्यार्थः– समानस्य एकमेव हविः उभयत्र अनुमत्यै निर्ऋत्यै च हूयते, उभयोरपि पृथिव्यात्मकत्वादिति । तस्य दक्षिणां विधत्ते– तस्य वास इति । तत् प्रशंसति– यद्वै सवासा इति । यथा लोके पुरुषो वस्त्रसहितः सन् अरण्यगमनं चौरादिभयात् न कामयते । तत् वस्त्रं भयरहिते स्थाने निधाय चेत् गच्छति तदा अतिमुच्यते भयात् विमुक्तो भवति, तद्वत् वासोदानेन सूयमानमेनं यजमानं आसङ्गः भयं न प्राप्नोति । शब्रासा.

**अथ श्वोभूत आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति । तेन यथेष्ट्यैवं यजते । तद्य-देवादः प्रजातमाग्नावैष्णवं दीक्षणीयᳬ हविस्तदेवैतत् । अग्निर्वै सर्वा देवताः । अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति । अग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यः । तत् सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य सूया इति । तस्माद् दाग्नावैष्णवः एकादशकपालः पुरोडाशो भवति । तस्य हिरण्यं दक्षिणा । आग्नेयो वा एष यज्ञो भवति । अग्ने रेतो हिरण्यम् । यो वै विष्णुः स यज्ञः । अग्निरु वै यज्ञ एव । तदु तदाग्नेयमेव । तस्माद्धिरण्यं दक्षिणा ॥**

तदनन्तरदिवसे अनुष्ठेयं कर्म विधत्ते– अथ श्वोभूत इति । अग्निर्विष्णुश्चोभौ देवता यस्य हविषः, तं निर्वपेत् । तेन यथेष्ट्येति । प्रकृतीष्टिवदेवेष्टिः कार्या । तेन अनुमतीष्टिवत् तन्मध्ये वैकृतं तन्त्रं किञ्चिदपि न विद्यते इति भावः । तद्यदेवेति । अदः अमुष्मिन् विप्रकृष्टे सोमप्रकरणे प्रज्ञातं दीक्षणीयं दीक्षायां निरुप्तं आग्नावैष्णवं हविः तदेवेदानीं निरूप्यमाणं हविरिति तत्तादात्म्येन प्रशंसा । हविषो देवतासंबन्धं प्रशंसति– अग्निर्वा इति । अग्नेः सर्वदेवतात्मकत्वं प्रतिपादयति– अग्नौ हीति । अग्नौ हि सर्वा देवता हूयन्ते । अतः सर्वदेवतार्थं हविर्होमाधिकरणत्वात् अग्निः सर्वदेवतात्मकः । सः अग्निः यज्ञस्य अवरार्धः आदौ स्थितः, विष्णुः परार्धः यज्ञस्य चरमभागेऽवस्थितः । तथाहि प्रकृतिभूतस्याग्निष्टोमस्य आदौ दीक्षणीयायां आग्नावैष्णवे हविषि अग्नेः प्रथमदेवतात्वेन संबन्धः, अवसाने चोदवसानीयेष्टिस्थाने विष्णुदेवताका पूर्णाहुतिर्हूयते । यद्वा, आज्यशस्त्रे प्रथमे ' भूरग्निर्ज्योतिः ' ( ऐब्रा. २।५ ) इति अग्नेः प्राथम्यम्, चरमशस्त्रे चाग्निमारुते ' विष्णोर्नु कं ' ( ऋसं. १।१५४।१ ) इति श्रवणात् विष्णोश्चरमत्वम् । एतदेवाभिप्रेत्य ऐतरेयकम्– ' अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः ' ( ऐब्रा. १।१ ) इति । तत् सर्वा इत्यादि । तस्मात् तन्मध्यवर्तिनीः वक्ष्यमाणाः सर्वाश्च सोमदेवताः अग्निसाध्यं विश्वात्मकं सर्वं यज्ञं एतेन आग्नावैष्णवेन हविषा परिगृह्य परिवेष्ट्य स्वाधीनं कृत्वा सूयै राजसूयाख्यं कर्म करवाणि इति हेतोर्यस्मादेवं तस्मादित्यन्वयः । दक्षिणां विधत्ते– तस्य हिरण्यमिति । आग्नेयो वा इति । अस्यायमर्थः– यज्ञः अग्निदेवत्यः खलु, तमन्तरेण यज्ञनिष्पत्तेरसंभवात् । हिरण्यमग्ने रेतः । विष्णोर्यज्ञात्मकत्वं श्रुतिप्रसिद्धम् । विश्वात्मकस्य यज्ञस्य च अग्निसाध्यत्वात् तद्रूपत्वम् । तस्मात् परंपरया तदु तत् विष्णुदेवत्यमपि कर्म तदाग्नेयं अग्निदेवत्यमेव जातम् । तस्मात् आग्नावैष्णवस्य हविषः आग्नेयं हिरण्यं दक्षिणाऽङ्गत्वेन भवितुं युक्तमिति । शब्रासा.

**अथ श्वोभूतेऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति । तेन यथेष्ट्यैवं यजते । एतेन वा इन्द्रो वृत्रमहन् । एतेनो एव व्यजयत । याऽस्येयं विजितिस्ताम् । तथो एवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यᳬ हन्ति । तथो एव विजयते । विजितेऽभयेऽनाष्ट्रे सूया इति । तस्माद् दग्नीषोमीय एकादशकपालः पुरोडाशो भवति । तस्योत्सृष्टो गौर्दक्षिणा । उत्सर्जं वा अमुं चन्द्रमसं**

**घ्नन्ति । पौर्णमासेनाह घ्नन्ति । आमावास्येनोत्सृजन्ति । तस्मादुत्सृष्टो गौर्दक्षिणा ॥**

तस्मात् परेद्युरनुष्ठेयं कर्म विधत्ते– अथ श्वोभूत इति । तेन अग्नीषोमीयेण हविषा यजेत । यथेष्ट्येति । सर्वेष्टीनां पौर्णमासेष्टिः प्रकृतिभूता, तद्वदत्रापि तदीयमङ्गजातं कुर्यादित्यर्थः । एतेन वा इत्यादि । एतेन हविषा वृत्रं हत्वा विजितवतः अस्य इन्द्रस्य इयं परिदृश्यमाना या विजितिः अस्ति, तां इन्द्रो व्यजयत इति संबन्धः । तथा एषः अपि अनुष्ठाता एतेन हविषा सर्वान् शत्रून् जयति । तस्य दक्षिणां विधत्ते– उत्सृष्टो गौरिति । कियन्तं कालं शकटवहनादौ विनियोज्य पश्चात् य उत्सृज्यते स उत्सृष्टः । तां दक्षिणां प्रशंसति– उत्सर्जमिति । अमुं अन्तरिक्षे दृश्यमानं चन्द्रमसं उत्सृज्योत्सृज्य घ्नन्ति । तदेव विवृणोति– पौर्णमासेनेति । पौर्णमासीमारभ्य खलु देवाः घ्नन्ति, प्रतिदिवसमेकैककलापचार एव तस्य हननमित्यर्थः । अमावास्याकालमारभ्य उत्सृजन्ति, प्रतिदिवसं तस्य एकैककलावृद्धेः । तस्मात् अस्य हविषः सोमदेवतासंबन्धादेव तादृशो गौर्दक्षिणात्वेन युक्त इत्यर्थः ।

शब्रासा.

**अथ श्वोभूत ऐन्द्राग्नं द्वादशकपालं पुरोडाशं निर्वपति । तेन यथेष्ट्यैवं यजते । यत्र वा इन्द्रो वृत्रमहन् । तस्य भीतस्येन्द्रियं वीर्यमपचक्राम । स एतेन हविषेन्द्रियं वीर्यं पुनरात्मन्नधत्त । तथो एवैष एतेन हविषेन्द्रियं वीर्यमात्मन्धत्ते । तेजो वा अग्निरिन्द्रियं वीर्यम् । इन्द्र उभे वीर्ये परिगृह्य सूया इति । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । तस्यर्षभोऽनड्वान् दक्षिणा । स हि वहेनाग्नेयः, आण्डाभ्यामैन्द्रः । तस्मादृषभोऽनड्वान् दक्षिणा ॥**

तदनन्तरदिवसकर्तव्यमिष्ट्यन्तरं विधत्ते– अथ श्वोभूत इति । पुरा वृत्रहननात् भीत इन्द्रः अपक्रान्तं स्वकीयं वीर्यं एतेन हविषा पुनः आत्मन्यधारयत् । एवं एषः अपि अनुष्ठाता एतेन हविषा । यदिदं तेजः स एवाग्निः । यदिदं इन्द्रियं इन्द्रस्यासाधारणं सत्त्वं स एवेन्द्रः । धर्मधर्मिणोरभेदोपचारात् तादात्म्यम् । ते उभे तेजोबललक्षणे वीर्ये परिगृह्य सूयै इति अभिप्रायेण ऐन्द्राग्नहविःप्रचारः कर्तव्यः । दक्षिणां विधत्ते– तस्यर्षभ इति । ऐन्द्राग्नस्य हविषो दक्षिणात्वेन विहितस्य साण्डस्यानडुहो देवताद्वययोग्यतां दर्शयति– स हि वहेनेति । वहं नाम युगवहनदेशः ककुत्प्रदेशः । तस्य दग्धप्रदेशवत् कृष्णवर्णत्वादाग्नेयत्वम् । आण्डाभ्यामैन्द्रः, सेचनसमर्थत्वादिति ।

शब्रासा.

**अथाग्रयणेष्ट्या यजते । सर्वान्वा एष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीरपि दर्विहोमान् यो राजसूयेन यजते । देवसृष्टो वा एषेष्टिः यदाग्रयणेष्टिः । अनया मेऽपीष्टमसत् । अनयाऽपि सूया इति । तस्मादाग्रयणेष्ट्या यजते । ओषधीर्वा एष सूयमानोऽभिसूयते । तदोषधीरेवैतदनमीवा अकिल्बिषाः कुरुते । अनमीवा अकिल्बिषा ओषधीरभिसूया इति । तस्य गौर्दक्षिणा ॥**

तदनन्तरकर्तव्यमिष्ट्यन्तरं विधत्ते-- अथाग्रयणेष्ट्येति । सा चाग्रयणेष्टिः द्वितीयकाण्डे विहिता ( शब्रा. २।४।३ )। तस्या अत्र राजसूयाङ्गत्वेन प्रयोगः । सर्वान् वा इत्यादि । इष्टि–पशु–सोम–दर्वीहोमात्मकत्वाद्राजसूयस्य, तदनुष्ठानेन यज्ञक्रत्विष्ट्यादयः सर्वेऽनुष्ठिता भवन्ति । आग्रयणेष्टिरपि देवसृष्टत्वेन प्रशस्तत्वात् अत्रावरोद्धव्या । अतः अनया आग्रयणेष्ट्या अपि मे मम इष्टं असत् यागः कृतो भवतु । अनयाऽपि इष्ट्या सूयै अभिषिक्तो भूयासं इति अनेनाभिप्रायेण आग्रयणेष्टिः कार्येत्यर्थः ।

तस्या इष्टेः प्रयोजनमाह– ओषधीर्वा इति । एषः सूयमानः यजमानः ओषधीः परिपक्वा व्रीहियवाद्याः अभिलक्ष्य सूयते अभिषिच्यते । तत् तथा सति अनया आग्रयणेष्ट्या ता एव ओषधीः अनमीवाः रोगरहिताः आरोग्यकारिणीः अकिल्बिषाः पापरहिताश्च कुरुते । आग्रयणेष्टेर्नवान्नभोजनार्हत्वात् तदकरणे भोक्तॄणां रोगः पापं च स्यात् । इह तु तदनुष्ठाने तादृग्दोषरहिताः ओषधीरभिलक्ष्य राजसूयाख्यं कर्म करवाणीति यष्टुराशयः ।

दक्षिणां विधत्ते— तस्य गौरिति । 'गौराग्रयणे' (काश्रौ. १५।१।१६) । तस्य आग्रयणस्य । शब्रासा.

**अथ चातुर्मास्यैर्यजते । सर्वान्वा एष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीरपि दर्वीहोमान् यो राजसूयेन यजते । देवसृष्टो वा एष यज्ञक्रतुर्यच्चातुर्मास्यानि । एभिर्मेऽपीष्टमसत् । एभिरपि सूया इति । तस्माच्चातुर्मास्यैर्यजते ॥**

अथ चातुर्मास्यानि विधत्ते— अथ चातुर्मास्यैरिति । तेषां कालः सूत्रितः उक्तहविःपञ्चकादनन्तरम्— 'चातुर्मास्यप्रयोगः फाल्गुन्याम्' (काश्रौ. १५।१।१७) इति । सर्वान्वा इत्यादि । सर्वक्रत्विष्टिदर्वीहोमावरोधरूपराजसूयमध्ये चातुर्मास्याख्यो यज्ञक्रतुरप्यवरोद्धव्य इत्यनेनाभिप्रायेण तदनुष्ठानम् । अन्यत् पूर्ववत् योज्यम् । शब्रासा.

चातुर्मास्यानि, पञ्चवातीयहोमः, आरोग्यकामहोमः, इन्द्रतुरीयम्, अपामार्गहोमः

**[1]वैश्वदेवेन यजते । वैश्वदेवेन वै प्रजापतिर्भूमानं प्रजाः ससृजे । भूमानं प्रजाः सृष्ट्वा सूया इति । तथो एवैष एतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते । भूमानं प्रजाः सृष्ट्वा सूया इति ॥**

एवं चातुर्मास्यानि सामान्येन विधाय वैश्वदेवाख्यं प्रथमं पर्व विधत्ते— वैश्वदेवेनेति । वैश्वदेवमिति आग्नेयादिहविरष्टकरूपप्रथमपर्वणो नामधेयम् । अत्र वैश्वदेवादीनां चतुर्णां पर्वणामपेक्षितान्यङ्गानि मासाग्निहोत्रन्यायेन नामातिदेशादतिदेष्टव्यानि । तदुपदेशस्तु द्वितीयकाण्डे पञ्चमेऽध्याये समाम्नातः— 'वैश्वदेवेन वै प्रजापतिः' (शब्रा. २।५।२।१) इति । अत्र वैश्वदेवशब्देन शाखान्तरीया प्रसिद्धिर्द्योत्यते । तथा च तैत्तिरीयके— 'वैश्वदेवेन वै प्रजापतिः प्रजा असृजत' (तैब्रा. १।६।२।१) इति । भूमानं प्रजा इति । भूयसीः प्रजा इत्यर्थः । तथो एवैष इति । यथा पुरा प्रजापतिः वैश्वदेवयागेन भूयसीः प्रजाः सृष्टवान् एवमयं यजमानोऽपि तेन यागेन तथाविधाः प्रजाः सृजते सृजति । ताः सृष्टाः प्रजाः अभिलक्ष्य सूयै सवं यज्ञं करवाणीति । शब्रासा.

**अथ वरुणप्रघासैर्यजते । वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात्प्रामुञ्चत् । ता अस्यानमीवा अकिल्बिषाः प्रजाः प्राजायन्त । अनमीवा अकिल्बिषाः प्रजा अभि सूया इति । तथो एवैष एतद्वरुणप्रघासैरेव प्रजा वरुणपाशात् प्रमुञ्चति । ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते । अनमीवा अकिल्बिषाः प्रजा अभि सूया इति ॥**

द्वितीयं पर्व विधत्ते— अथ वरुणेति । अथ वैश्वदेवानन्तरं चतुर्षु मासेषु व्यतीतेषु वरुणप्रघासैः यजेत । तान् वरुणपाशमोचनसाधनत्वेन प्रशंसति— वरुणप्रघासैर्वा इति । ता अस्येति । वरुणप्रघासयागेन पाशविमोचनस्य कृतत्वात् अस्य प्रजापतेः ताः वैश्वदेवेन सृष्टाः प्रजाः रोगपापरहिताः सत्यः पुत्रपौत्रादिरूपेण प्रजायन्ते । गतमन्यत् । दार्ष्टान्तिके योजयति— तथो एवैष इति । ता अस्येति । अस्य यजमानस्येत्यर्थः । शब्रासा.

**अथ साकमेधैर्यजते । साकमेधैर्वै देवा वृत्रमघ्नन् । तैर्वेव व्यजयन्त येयमेषां विजितिस्ताम् । तथो एवैष एतैः पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति । तथो एव विजयते । विजितेऽभयेऽनाष्ट्रे सूया इति ॥**

तृतीयं पर्व विधत्ते— अथ साकमेधैरिति । अथ वरुणप्रघासानुष्ठानानन्तरं चतुर्षु मासेषु साकमेधाख्या यागाः कार्याः । तान् पापरूपशत्रुजयसाधनत्वेन सदृष्टान्तं प्रशंसति— साकमेधैर्वा इति । वृत्रं वृत्रासुरं अघ्नन् हतवन्तः । एषां देवानां येयं विजितिः इदानीं दृश्यते तां तैरेव साकमेधैः व्यजयन्त प्राप्नुवन् । तथो एवेत्यादि सिद्धम् । शब्रासा.

**अथ शुनासीर्येण यजते । उभौ रसौ परिगृह्य सूया इति । अथ पञ्चवातीयम् । स पञ्चधाऽऽहवनीयं व्युह्य स्रुवेणोपघातं जुहोति ॥**

अथ चतुर्थं पर्व विधत्ते— अथ शुनासीर्येणेति । शुनः वायुः । सीरः आदित्यः । तद्देवत्यं हविः शुनासीरीयम् ।

(१) शब्रा. ५।२।४।१—२०.

तद्योगात् चतुर्थं पर्व शुनासीर्यमित्युच्यते । उभौ रसाविति । शुनासीरयोः रसरूपत्वं हि द्वितीये काण्डे स्पष्टमुक्तम्– ‘ अथ यस्माच्छुनासीर्येण यजेत । या वै देवानां श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां तच्छुनम् । अथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत्सीरम् । सा या चैव देवानां श्रीरासीत्साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत्तमेवैतदुभयं परिगृह्यात्मन् कुरुते । ’ ( शब्रा. २।६।३।२ ) इति । शुनासीरीयप्रयोगकालः सूत्रितः– ‘ पवित्रदीक्षास्थाने शुनासीरीयम् ’ ( काश्रौ. १५।१।१९ ) इति । पवित्राख्यस्य सोमयागस्य संवत्सरे यस्यां तिथौ दीक्षा कृता तस्यां फाल्गुनशुक्लप्रतिपदि चतुर्थं पर्व कार्यम् । अर्थात् पवित्रशुनासीर्ययोर्मध्ये वैश्वदेवादीनि त्रीणि पर्वाणि क्रमेण चतुर्षु मासेषु कार्याणीत्युक्तं भवति ।

पञ्चवातीयहोमं विधत्ते– अथ पञ्चेति । पञ्चवातीयमिति कर्मनामधेयम् । आहवनीयं अग्निं पञ्चधा व्युह्य, प्रतिदिशं मध्ये च पृथक् कृत्वेत्यर्थः । आज्यस्थाल्याः स्रुवेण उपघातं उपहत्योपहत्य गृहीत्वा जुहोति ।

शब्रासा.

**स पूर्वार्ध्ये जुहोति– ‘ अग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा ’ इति । अथ दक्षिणार्ध्ये जुहोति– ‘ यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा ’ इति । अथ पश्चार्ध्ये जुहोति– ‘ विश्वेदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा ’ इति । अथोत्तरार्ध्ये जुहोति– ‘ मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहा ’ इति । अथ मध्ये जुहोति– ‘ सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा ’ इति ॥**

तत्र पूर्वादिक्रमेण पञ्चस्वग्निषु समन्त्रकं हवनं विधत्ते– स पूर्वार्ध्य इत्यादिना । पूर्वार्धे भवः पूर्वार्ध्यः अग्निः । अग्निनेत्रेभ्य इत्यादि । अग्निः नेत्रं नयनस्य इष्टप्राप्तेः साधनं येषां तेभ्यः । पुरस्सद्भ्यः । पूर्वस्यां दिशि सीदन्तीति तथोक्ताः तेभ्यः, देवेभ्यः स्वाहा सुहुतमस्तु । एवमुत्तरत्रापि योज्यम् । दुवस्वद्भ्यः । दुव इत्यन्ननाम ( ? ) हविर्लक्षणान्नयुक्तेभ्यः ।

शब्रासा.

**अथ सार्धꣳ समुह्य जुहोति– ‘ ये देवा अग्निनेत्राः पुरस्सदस्तेभ्यः स्वाहा, ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा, ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा, ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा, ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा ’ इति । तद्यदेवं जुहोति ॥**

इत्थं पञ्चभिर्मन्त्रैः कृतेष्वग्निषु हुत्वा पुनस्तानग्नीनेकीकृत्य तैरेव मन्त्रैर्हवनं विधत्ते– अथ सार्धमिति । पञ्चाप्यग्नीन् सार्धं समुह्य समस्य जुहुयात् । तानेव मन्त्रान् पुनः पठति– ये देवा इति । अर्थस्तु पूर्ववत् ।

शब्रासा.

**यत्र वै देवाः साकमेधैर्व्यजयन्त येयमेषां विजितिस्ताम् । तद्धोचुः– उत्पिबन्ते वा इमानि दिक्षु नाष्ट्रा रक्षाꣳसि, हन्तैभ्यो वज्रं प्रहरामेति । वज्रो वा आज्यम् । त एतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षाꣳस्यवाघ्नन् । ते व्यजयन्त येयमेषां विजितिस्ताम् । तथो एवैष एतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षाꣳस्यवहन्ति । तथो एव विजयते– विजितेऽभयेऽनाष्ट्रे सूया इति ॥**

पञ्चवातीयहोमस्य द्रव्यं विधातुमाह– यत्र वै देवा इति । तद्धोचुरिति । तत् तत्र विजितप्रदेशे देवाः ऊचुः उक्तवन्तः । किम् ? इमानि नाष्ट्रा नाशकारीणि रक्षांसि दिक्षु उत्पिबन्ते उत्कटं पिबन्ति प्राणिनो भक्षयन्ति । हन्त इति हर्षे । एभ्यः रक्षोभ्यः वज्रं प्रहराम इति विचार्य आज्यरूपेण वज्रेण तान् राक्षसानेव अघ्नन् । श्रूयते हि आज्यस्य वज्रत्वम्– ‘ घृतं वै देवा वज्रं कृत्वा ’ ( तैसं. ६।२।२।४ ) इति । ‘ तथो एवैष ’ इत्यादिना इदानीमनुष्ठातुरपि तथाविधफलप्राप्तिदर्शनम् ।

शब्रासा.

**अथ यदेता अपराः पञ्चाहुतीर्जुहोति । क्षण्वन्ति वा एतदग्नेर्विवृहन्ति यत् पञ्चधाऽऽहवनीयं व्यूहन्ति । तदेवास्यैतेन संदधाति । तस्मादेता अपराः पञ्चाहुतीर्जुहोति ॥**

अग्नीनां समासेन कृतमाहुतिपञ्चकं प्रशंसति– अथ यदेता इति। पूर्वमाहवनीयस्य पञ्चधा व्यूहनेन तमग्निं क्षण्वन्ति हिंसन्ति। क्षणु हिंसायाम् इति धातुः। तथा तस्य अग्नेः अवयवान् विवृहन्ति विश्लेषयन्ति। वृहू उद्यमने इति धातुः। तमनेन पुनः समस्य पञ्चाहुतिकरणेन संहितवान् भवतीति। शब्रासा.

**तस्य प्रष्टिवाहनोऽश्वरथो दक्षिणा। त्रयोऽश्वाः। द्वौ सव्यष्टृसारथी। ते पञ्च प्राणाः। यो वै प्राणः स वातः। तद्यदेतस्य कर्मण एषा दक्षिणा। तस्मात् पञ्चवातीयं नाम॥**

तस्य होमस्य त्रियुक्तमश्वरथं दक्षिणात्वेन विधत्ते– तस्य प्रष्टिवाहन इति। सव्य इति। रथस्य सव्यभागे तिष्ठन्नेकः सारथिश्चैक इति द्वौ। अश्वगतां त्रित्वसंख्यां सारथिगतां द्वित्वसंख्यां च मिलित्वा पञ्चप्राणात्मना प्रशंसति– ते पञ्चेति। प्राणवातयोरेकत्वात् पञ्चवातीयहोमस्य संख्याद्वारा प्राणात्मकस्य रथो दक्षिणात्वेन युज्यते। तस्मात् कर्मणोऽपि पञ्च वाताः प्राणा अस्मिन् सन्तीति पञ्चवातीयं नाम संपन्नम्। शब्रासा.

**स हैतेनापि भिषज्येत्। अयं वै प्राणो योऽयं पवते। यो वै प्राणः स आयुः। सोऽयमेक इवैव पवते। सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा विहितः। दश वा एता आहुतीर्जुहोति। तदस्मिन् दश प्राणान् कृत्स्नमेव सर्वमायुर्दधाति। स यदिहापि गतासुरिव भवति आ हैवैनेन हरति॥**

आरोग्यकामस्यापीमं होमं विधत्ते– स हैतेनापीति। एतेन होमेन भिषज्येत् चिकित्सेत्। भिषज् चिकित्सायाम् इति धातुः। अत एव सूत्रितम्– 'व्याधितस्याप्येवम्' (काश्रौ. १५।१।२३) इति। प्राणस्याऽऽयुष्ट्वं, शरीरधारकत्वात्। सः प्राणरूपेण एकः अपि पुरुषशरीरे अनुप्रविष्टः सन् वृत्तिभेदात् दशसु चक्षुःश्रोत्रादिद्वारेषु संचरन् दशधा विहितः भवति। अतः उक्तदशाहुतिकरणात् दश प्राणान् व्याधिते पुरुषे कृत्स्नं सर्वमायुः विदधाति। यस्तु गतासुः इव भवति तमपि अनेन होमेन आहरति एव, पुनर्जीवयत्येवेत्यर्थः। शब्रासा.

**अथेन्द्रतुरीयम्। आग्नेयोऽष्टाकपालः पुरोडाशो भवति, वारुणो यवमयश्चरुः, रौद्रो गावेधुकश्चरुः, अनडुह्यै वहलाया ऐन्द्रं दधि। तेनेन्द्रतुरीयेण यजते। इन्द्राग्नी ह हैवैतत् समूदाते– उत्पिबन्ते वा इमानि दिक्षु नाष्ट्रा रक्षांसि। हन्तैभ्यो वज्रं प्रहरावेति॥**

यागान्तरं विधत्ते– अथेन्द्रेति। अथ पञ्चवातीयहोमानन्तरं इन्द्रः तुरीयः चतुर्थहविर्देवता यस्मिन् कर्मणि तत् इन्द्रतुरीयम्, कर्म वक्ष्यते इत्यर्थः। तस्य हविश्चतुष्टयं विधत्ते– आग्नेय इत्यादि। गवेधुकाः आरण्यगोधूमाः। वहलायै। वहं नाम ककुत्प्रदेशः, तद्वत्यै। अनडुह्यै। षष्ठ्यर्थे चतुर्थी, तस्याः। दधि ऐन्द्रं इन्द्रदेवत्यं कुर्यात्। अथ विधत्ते– तेनेन्द्रतुरीयेणेति। यागस्येन्द्रतुरीयत्वमाख्यायिकया दर्शयति– इन्द्राग्नी ह हैवैतदिति। समूदाते संवादं कृतवन्तौ। शब्रासा.

**स हाग्निरुवाच– त्रयो मम भागाः सन्तु। एकस्तवेति। तथेति। तावेतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यावाहताम्। तौ व्यजयेतां यैनयोरियं विजितिस्ताम्। तथो एवैष एतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यवहन्ति। तथो एव विजयते। विजितेऽभयेऽनाष्ट्रे सूया इति॥**

स हाग्निरित्यादिना अग्नेस्त्रयो भागाः इन्द्रस्य तुरीय एको भाग इति यागस्यार्थात् इन्द्रतुरीयमिति नाम निरुक्तम्। स्पष्टमन्यत्। शब्रासा.

**स य एष आग्नेयोऽष्टाकपालः पुरोडाशो भवति। सोऽग्नेरेको भागः। अथ यद्वारुणो यवमयश्चरुर्भवति। यो वै वरुणः सोऽग्निः। सोऽग्नेर्द्वितीयो भागः। अथ यद्रौद्रो गावेधुकश्चरुर्भवति। यो वै रुद्रः सोऽग्निः। सोऽग्नेस्तृतीयो भागः। अथ यद्गावेधुको भवति। वास्तव्यो वा एष देवः। वास्तव्या गवेधुकाः। तस्माद्गावेधुको भवति। अथ यदनडुह्यै वहलाया ऐन्द्रं दधि**

**भवति । स इन्द्रस्य चतुर्थो भागः । यद्वै चतुर्थं तत्तुरीयम् । तस्मादिन्द्रतुरीयं नाम । तस्यैषैवानडुही वहला दक्षिणा । सा हि वहेनाग्नेयी । अग्निदग्धमिव ह्यस्यै वहं भवति । अथ यत् स्त्री सती वहत्यधर्मेण । तदस्यै वारुणꣳ रूपम् । अथ यद्गौः । तेन रौद्री । अथ यदस्या ऐन्द्रं दधि । तेनैन्द्री । एषा हि वा एतत्सर्वं व्यश्नुते । तस्मादेषैवानडुही वहला दक्षिणा ॥**

अग्नेर्भागत्रयं क्रमेण प्रतिपादयति– स य एष आग्नेय इति । यो वै वरुण इत्यादि । वरुणो रुद्रश्चोभावपि अग्निरेव । तथा च तैत्तिरीयके– 'ते देवा अग्निमब्रुवन्' इति प्रस्तुत्य 'स त्रेधाऽऽत्मानं व्यकुरुत । अग्निं तृतीयम् । रुद्रं तृतीयम् । वरुणं तृतीयम् ।' (तैब्रा. १।७।१।२) इति । वास्तव्य इति । रुद्रः खलु वास्तुभवः । ग्रामात् बाह्यो यज्ञभूमिश्मशानादिः वास्तुः । गवेधुका अपि वास्तुभवाः । अतो गावेधुकहविषो रुद्रदैवत्यत्वं युक्तमिति । अथ यदनडुह्या इत्यादि । उक्तार्थम् । तस्य दक्षिणां विधत्ते– तस्यैषैवेति । दक्षिणारूपाया अनडुह्या अग्निवरुणरुद्रेन्द्रदेवतानामौचित्यं दर्शयति– सा हि वहेनेति । युगवहनप्रदेशे कृष्णवर्णत्वात् अग्नेः संनिधनी । स्त्रीत्वे सत्यपि अधर्मेण स्त्रिया अयोग्येनानोवहनेन वारुणी । वरुणो हि स्वपाशैः सर्वान् बध्नाति । गवां रुद्रदेवत्यत्वात् तेन रौद्री । एतदीयस्य दध्न ऐन्द्रत्वात् तेन ऐन्द्री इन्द्रदेवताका । एतादृशी अनडुही एतस्येन्द्रतुरीयकर्मणो दक्षिणात्वेन संयुज्यत इत्यर्थः । शब्रासा.

**अथापामार्गहोमं जुहोति । अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षाꣳस्यपामृजत । ते व्यजयन्त येयमेषां विजितिस्ताम् । तथो एवैष एतदपामार्गैरेव दिक्षु नाष्ट्रा रक्षाꣳस्यपमृष्टे । तथो एव विजयते । विजितेऽभयेऽनाष्ट्रे सूया इति ॥**

विधत्ते– अथापामार्गेति । तं राज्ञो विजितिसाधनत्वेन प्रशंसति– अपामार्गैर्वै देवा इति । अपामृजत अपमार्जनं कृतवन्तः । अपमृष्ट इति । इदानीं मनुष्योऽप्यपमार्जनं करोति । शब्रासा.

**स पालाशे वा स्रुवे वैकङ्कते वाऽपामार्गतण्डुलानादत्ते । अन्वाहार्यपचनादुल्मुकमाददते । तेन प्राञ्चो वोदञ्चो वा यन्ति । तदग्निꣳ समाधाय जुहोति ॥**

तस्यानुष्ठानं सविशेषमाह– स पालाशे वेति । पलाशवैकङ्कतयोरन्यतरवृक्षनिर्मिते स्रुवे अपामार्गतण्डुलानादाय अन्वाहार्यपचनाग्नेः उल्मुकं चादाय प्राङ्मुखाः उदङ्मुखा वा यन्ति । तत्र अग्निं प्रतिष्ठाप्य होमः कर्तव्यः । शब्रासा.

**स उल्मुकमादत्ते– 'अग्ने सहस्व पृतनाः' इति । युधो वै पृतनाः । युधः सहस्वेत्येवैतदाह । 'अभिमातीरपास्य' इति । सपत्नो वा अभिमातिः । सपत्नमपजहीत्येवैतदाह । 'दुष्टरस्तरन्नरातीः' इति । दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिः । 'तरन्नरातीः' इति । सर्वꣳ ह्येष पाप्मानं तरति । तस्मादाह तरन्नरातीरिति । 'वर्चो धा यज्ञवाहसि' इति । साधु यजमाने दधदित्येवैतदाह ॥**

उल्मुकदानमनूद्य मन्त्रं विधत्ते– स उल्मुकमिति । हे अग्ने, पृतनाः संग्रामान् सहस्व, अभिमातीः अभिमन्यमानान् सपत्नान् अपास्य अपक्षिप । असु क्षेपणे । एवमनिष्टनिवृत्तिमुक्त्वा इष्टप्राप्तिं प्रार्थयते– (दुष्टर इति ।) दुष्टरः अन्यैस्तरितुमशक्यः स्वयं अरातीः शत्रून् तरन् यज्ञवाहसि यजमाने वर्चः अन्नं धाः धारयसि इति । मन्त्रं प्रतिपादमनूद्य व्याचष्टे– अग्ने सहस्वेति । वर्चःपदस्य श्रेयःपरत्वमाह– साधु यजमान इति । दधत् धारयन्नित्यर्थः । शब्रासा.

**तदग्निꣳ समाधाय जुहोति– 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपाꣳशोर्वीर्येण जुहोमि' इति । यज्ञमुखं वा उपाꣳशुः । यज्ञमुखेनैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति । 'हतꣳ रक्षः स्वाहा' इति । तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥**

हवनमनूद्य मन्त्रं विधत्ते– तदग्निमिति । देवस्य त्वेति । व्याख्यातम् । उपांशोरिति । उपांशुः नाम यज्ञ-

मुखं प्रथमो ग्रहः, तस्य वीर्येण जुहोमि । तेन हवनेन रक्षः हतं निहतं नष्टं भवतु । स्वाहा इदं हविः सुहुतमस्तु इति । शब्रासा.

**स यदि पालाशः स्रुवो भवति । ब्रह्म वै पलाशः । ब्रह्मणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति । यद्यु वैकङ्कतः । वज्रो वै विकङ्कतः । वज्रेणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति । 'रक्षसां त्वा वधाय' इति । तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥**

पालाशवैकङ्कतयोरेकतरस्य हवनोपयुक्तस्य स्रुवस्य क्षेपणं सार्थवादं विधत्ते— स यदि पालाश इति । क्षेपणमन्त्रं पठति— रक्षसामिति । हे स्रुव, रक्षसां वधाय त्वा त्वां, अस्यामीति शेषः । शब्रासा.

**स यदि प्राङ्ङित्वा जुहोति प्राञ्चꣳ स्रुवमस्यति । यद्युदङ्ङित्वा जुहोति उदञ्चꣳ स्रुवमस्यति । 'अवधिष्म रक्षः' इति । तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥**

क्षेपणे दिग्विशेषमाह— स यदीति । यदि अध्वर्युः प्राङ् प्राङ्मुखः पूर्वस्यां दिशि गत्वा जुहुयात् तर्हि स्रुवं प्राञ्चं प्राग्दिक्संबन्धं अस्यति क्षिपति । उदङ्ङित्वादावप्येवं योज्यम् । हवनप्रदेशात् तन्निवर्तनं विधित्सुः आदौ तन्मन्त्रं पठित्वा व्याचष्टे— अवधिष्मेति । अनेन अपामार्गहोमेन रक्षः अवधिष्म वयं हतवन्तः । भूते लुङ् । शब्रासा.

**अथाप्रतीक्षं पुनरायन्ति । स हैतेनापि प्रतिसरं कुर्वीत । स यस्यां ततो दिशि भवति तत्प्रतीत्य जुहोति । प्रतीचीनफलो वा अपामार्गः । स यो हास्मै तत्र किञ्चित्करोति तमेवैतत्प्रत्यग्धूर्वति । तस्य नामादिशेत्— 'अवधिष्मामुमसौ हतः' इति । तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥**

एतन्मन्त्रकरणकं पुनरागमनं विधत्ते— अथाप्रतीक्षमिति । अथ अप्रतीक्षं तं प्रदेशं प्रतिनिवृत्य, अनवेक्ष्येत्यर्थः । अभिवर्धमानस्यापि स्वोपद्रवपरिहाराय इमं होमं विधत्ते— स हैतेनापीति । एतेन अपामार्गहोमेन अपि, न केवलं पञ्चवातीयहोमेन । एतेनापि प्रतिसरं स्वरक्षां अभिचार्यमाणः कुर्यात् । हवने कंचित् विशेषं विधत्ते— स यस्यामिति । अभिचारको यस्यां दिशि भवेत् तां दिशं प्रतीत्य गत्वा जुहुयात् । प्रतीचीनफल इति । अपामार्गमञ्जर्यो यतः प्रतीचीनफलाः स्वात्मानं प्रतिगतैः अवाङ्मुखैः फलैर्युक्ताः । अतो योऽभिचारकः अस्मै यजमानाय किंचित् पीडादिकं कुर्यात् तमेव एतेनापामार्गहोमेन प्रतिमुखं धूर्वति हिनस्ति, तत्कृतोऽभिचारः तमेव प्रतिनिवृत्य हिनस्तीत्यर्थः । निवर्तनमन्त्रेण शत्रुनामादेशनं विधत्ते— तस्य नामेति । अवधिष्मामुमिति । 'अमुं, असौ' इति पदयोः स्थाने अभिचारकनामधेयं द्वितीयान्तत्वेन प्रथमान्तत्वेन चाऽऽदिशेदित्यर्थः । अत्र सूत्रम्— 'देवस्य त्वेति जुहोति, रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोत्यवधिष्म रक्ष इत्यायन्त्यनपेक्षम्' ( काश्रौ. १५।२।६–७ ) इति । 'अभिचर्यमाणोऽपि तां दिशं गत्वाऽभिचरतो नामादिशेत्' इति कर्कोक्तिः । शब्रासा.

त्रिषंयुक्तेष्टित्रयम्, द्विहविष्कयागः

**[1]'आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति, ऐन्द्रावैष्णवं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं, चरुं वा । तेन त्रिषंयुक्तेन यजते । पुरुषानेतद्देवा उपायन् । तथो एवैष एतत् पुरुषानेवोपैति ॥**

अथ त्रिषंयुक्तेष्टित्रयं विधित्सुः प्रथमं त्रिषंयुक्तमनुक्रामति— आग्नावैष्णवमिति । तत् विधत्ते— तेन त्रिषंयुक्तेनेति । त्रिभिः हविर्भिः संयुक्तं कर्म त्रिषंयुक्तम् । तेन यजेत । पुरुषप्राप्तिहेतुतामाह— पुरुषानेवैतदिति । यतो देवा एतेन त्रिषंयुक्तेन सहायभूतान् कर्मकरान् पुरुषान् प्राप्तवन्तः, तथा यजमानोऽपि तथाविधान् पुरुषान् अनेन यागेन प्राप्नोतीत्यर्थः । शब्रासा.

**स यदाग्नावैष्णव एकादशकपालः पुरोडाशो भवति । अग्निर्वै दाता वैष्णवाः पुरुषाः । तदस्मा अग्निर्दाता पुरुषान् ददाति ॥**

त्रीणि हवींषि विभज्य स्तौति— स यदाग्नावैष्णव इति । वैष्णवाः पुरुषा इति । विष्णोरवतारस्वीकारेण मनुष्यसंबन्धात् मनुष्याः सर्वे वैष्णवाः, विष्ण्वधिष्ठिता इत्यर्थः ।

---

(१) शब्रा. ५।२।५।१–१७.

तत् तथा सति अस्मै यजमानाय आग्नावैष्णवयागेन दाता अग्निः विष्ण्वात्मकान् पुरुषान् ददाति इत्यर्थः । शब्रासा.

**अथ यदैन्द्रावैष्णवश्चरुर्भवति । इन्द्रो वै यजमानः । वैष्णवाः पुरुषाः । स यानेवास्मा अग्निर्दाता पुरुषान् ददाति । तैरेवैतत्सꣳस्पृशते । तानात्मन् कुरुते ॥**

प्रयोजनमाह– अथ यदैन्द्रावैष्णव इति । शब्रासा.

**अथ यद्वैष्णवस्त्रिकपालो वा पुरोडाशो भवति, चरुर्वा । यानेवास्मा अग्निर्दाता पुरुषान् ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति । यद्वै पुरुषवान्कर्म चिकीर्षति शक्नोति वै तत् कर्तुम् । तत् पुरुषानेवैतदुपैति । पुरुषवान् सूया इति । तस्य वामनो गौर्दक्षिणा । स हि वैष्णवो यद्वामनः ॥**

अथ यद्वैष्णव इति । तेष्वेवैतदन्तत इति । अन्ततः अवसाने केवलवैष्णवयागेन तेषु अग्निदत्तेषु स्वसंबद्धेषु विष्ण्वात्मकेष्वेव पुरुषेषु प्रतिष्ठितो भवति । अथ पुरुषप्राप्तेः फलमाह– यद्वै पुरुषवानिति । यतः पुरुषसहायवानेव कर्म कर्तुमिच्छति तत् कर्तुं शक्नोति च । अतः तत् तेन प्रथमेन त्रिषंयुक्तेन पुरुषवानेव प्राप्नोति । तस्य दक्षिणां विधाय स्तौति– तस्य वामन इति । वामनः ह्रस्वाङ्गः । यतो वामनो विष्णुसंबन्धी, अतो वैष्णवयागे दक्षिणात्वेन भवितुं युज्यते इत्यर्थः । शब्रासा.

**अथापरेण त्रिषंयुक्तेन यजते । स आग्नापौष्णमेकादशकपालं पुरोडाशं निर्वपति, ऐन्द्रापौष्णं चरुं, पौष्णं चरुम् । तेन त्रिषंयुक्तेन यजते । पशूनेव तद्देवा उपायन् । तथो एवैष एतत् पशूनेवोपैति ॥**

द्वितीयं त्रिहविष्कं विधत्ते– अथापरेणेति । अस्य त्रिषंयुक्तस्य पशुप्राप्तिहेतुतामाह– पशूनेवेति । पूर्ववत् योज्यम् । अत्र विष्णुस्थाने पूषैव विशेषः । शब्रासा.

**स यदाग्नापौष्ण एकादशकपालः पुरोडाशो भवति । अग्निर्वै दाता । पौष्णाः पशवः । तदस्मा अग्निरेव दाता पशून् ददाति ॥**

स यदाग्नापौष्ण इति । पौष्णाः पशव इति । पूषा हि पशूनामुत्पादकः, अतस्ते पौष्णाः । श्रूयते हि– 'पूषा पशूनां प्रजनयिता' (तैब्रा. १।७।२।४) इति । शब्रासा.

**अथ यदैन्द्रापौष्णश्चरुर्भवति । इन्द्रो वै यजमानः । पौष्णाः पशवः । स यानेवास्मा अग्निर्दाता पशून् ददाति । तैरेवैतत् सꣳस्पृशते । तानात्मन् कुरुते ॥**

**अथ यत् पौष्णश्चरुर्भवति । यानेवास्मा अग्निर्दाता पशून् ददाति । तेष्वेवैतदन्ततः प्रतितिष्ठति । यद्वै पशुमान् कर्म चिकीर्षति शक्नोति वै तत् कर्तुम् । तत् पशूनेवैतदुपैति । पशुमान्त्सूया इति । तस्य श्यामो गौर्दक्षिणा । स हि पौष्णो यच्छ्यामः । द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च । द्वन्द्वं वै मिथुनं प्रजननम् । प्रजननं वै पूषा । पशवो हि पूषा । पशवो हि प्रजननम् । मिथुनमेवैतत्प्रजननं क्रियते । तस्माच्छ्यामो गौर्दक्षिणा ॥**

अथ यत् पौष्ण इति । अथैतस्य दक्षिणां विधत्ते– तस्य श्याम इति । श्यामो गौरिति । यत् स हि पौष्णः पूषदेवताकः । तदेवोपपादयति– द्वे वा इति । श्यामवर्णस्य शुक्लकृष्णात्मकद्विरूपयोगात् द्वित्वसंख्याद्वारा पूषरूपतामाह– द्वन्द्वं वा इति । लोके हि स्त्रीपुरुषात्मकं द्वन्द्वं मिथुनं परस्परं संसृष्टं तत् प्रजननं प्रजोत्पत्तिकारणम् । पूष्णोऽपि तदेव स्वरूपमिति तत्स्रष्टाः पशवोऽपि पूषैव । यतः पूषात्मकाः पशवः, तेऽपि प्रजननं प्रजोत्पत्तिनिमित्तम् । अतः शुक्लकृष्णात्मकस्य श्यामस्य गोर्दानेन पशूत्पत्तिनिमित्तं मिथुनमेव संपादितं भवतीत्यर्थः । अतः पशुफलके यागे दक्षिणात्वेन युज्यते इत्यर्थः । शब्रासा.

**अथापरेण त्रिषंयुक्तेन यजते । सोऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति, ऐन्द्रासौम्यं चरुं, सौम्यं चरुम् । तेन त्रिषंयुक्तेन यजते । वर्च एव तद्देवा उपायन् । तथो एवैष एतद्वर्च एवोपैति ॥**

तृतीयं त्रिषंयुक्तं विधत्ते- अथापरेणेति । तस्य वर्चःसाधनतामाह– वर्च एवैतदिति । वर्चः ब्राह्मं तेजः । अत्र विष्णुस्थाने सोमो विशेषः । शब्रासा.

**स यदग्नीषोमीय एकादशकपालः पुरोडाशो भवति । अग्निर्वै दाता । वर्चः सोमः । तदस्मा अग्निरेव दाता वर्चो ददाति ॥**

**अथ यदैन्द्रासौम्यश्चरुर्भवति । इन्द्रो वै यजमानः । वर्चः सोमः । स यदेवास्मा अग्निर्दाता वर्चो ददाति । तेनैवैतत् सꣳस्पृशते । तदात्मन् कुरुते ॥**

स यदग्नीषोमीय इति । वर्चः सोम इति । सोमस्य यागद्वारा ब्रह्मवर्चसनिमित्तत्वात् तादात्म्यव्यपदेशः । अन्यत् पूर्ववत् योज्यम् । शब्रासा.

**अथ यत् सौम्यश्चरुर्भवति । यदेवास्मा अग्निर्दाता वर्चो ददाति । तस्मिन्नेवैतदन्ततः प्रतितिष्ठति । यद्वै वर्चस्वी कर्म चिकीर्षति शक्नोति वै तत् कर्तुम् । तद्वर्च एवैतदुपैति । वर्चस्वी सूया इति । नो ह्यवर्चसो व्याप्त्या चनार्थोऽस्ति । तस्य बभ्रुगौर्दक्षिणा । स हि सौम्यो यद्बभ्रुः ॥**

अथ यत् सौम्य इति । नो ह्यवर्चस इति । अवर्चसः अतेजस्कस्य यद्यपि व्याप्तिः सर्वपदार्थव्यापनशक्तिः अस्ति । चनशब्दोऽप्यर्थे, तथाऽपि तया व्याप्त्या अपि न खलु अर्थः प्रयोजनं विद्यते इति । तस्य दक्षिणां विधत्ते– बभ्रुगौरिति । स हि सौम्यः इति । बभ्रुः भवत्येव, 'एतद्वै सोमस्य रूपम्' (तैसं. २।१।३।४) इति श्रवणात् । शब्रासा.

**अथ श्वोभूते वैश्वानरं द्वादशकपालं पुरोडाशं निर्वपति, वारुणं यवमयं चरुम् । ताभ्यामनूचीनाहं वेष्टिभ्यां यजते समानबर्हिर्भ्यां वा ॥**

अथानन्तरदिवसकर्तव्यं द्विहविष्कं यागं विधत्ते– अथ श्वोभूत इति । अनूचीनाहमिति । अनूचीने पूर्वापरीभूते अहनी अनूचीनाहम् । क्रियाविशेषणमेतत् । वैश्वानरेष्ट्या पूर्वस्मिन् दिने यजेत, वारुण्या अपरस्मिन् दिने । एवं भिन्नतन्त्रेणैतौ यागौ कार्यौ । एकस्मिन्नेवाहनि वा समानतन्त्राभ्यां यष्टव्यमित्याह– समानबर्हिर्भ्यामिति । बर्हिरुपलक्षितं कृत्स्नं तन्त्रं समानं साधारणं ययोः ते समानबर्हिषी । अत्र सूत्रम्– 'श्वो वैश्वानरो द्वादशकपालो वारुणश्चैकतन्त्रे । श्वो वैकः' (काश्रौ. १५।२।१५–१६) इति । शब्रासा.

**स यद्वैश्वानरो भवति । संवत्सरो वै वैश्वानरः । संवत्सरः प्रजापतिः । प्रजापतिरेव तद्भूमानं प्रजाः ससृजे । भूमानं प्रजाः सृष्ट्वा सूया इति । तथो एवैष एतद्भूमानं प्रजाः सृजते । भूमानं प्रजाः सृष्ट्वा सूया इति ॥**

प्रथमस्य हविषो वैश्वानरदेवताकत्वं प्रशंसति– स यद्वैश्वानर इति । अग्नेः संवत्सरात्मकत्वम्, उख्याग्नेः संवत्सरभरणादिति षष्ठे काण्डे ( शब्रा. ६।७।१।१८ ) समाम्नास्यते । भूमानं प्रजा इति । भूयसीः प्रजा इत्यर्थः । शब्रासा.

**अथ यद्द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य । संवत्सरो वैश्वानरः । तस्माद्द्वादशकपालो भवति ॥**

कपालसंख्यां प्रशंसति– अथ यद्द्वादशकपाल इति । वैश्वानराग्नेः संवत्सरात्मकत्वात् तस्य मासद्वादशकरूपत्वात् तदीयस्य हविषः कपालेषु द्वादशसंख्या युज्यते इत्यर्थः । शब्रासा.

**अथ यद्वारुणो यवमयश्चरुर्भवति । तत् सर्वस्मादेवैतद्वरुणपाशात्, सर्वस्माद्वरुण्यात् प्रजाः प्रमुञ्चति । ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते । अनमीवा अकिल्बिषाः प्रजा अभि सूया इति ॥**

द्वितीयं हविः प्रशंसति– अथ यद्वारुण इति । तत् सर्वस्मादिति । तत् तत्र एतत् एतेन वारुणयागेन सर्वस्मादेव वरुणपाशात् तथा वरुण्यात् वरुणपाशकृतात् सर्वस्मात् दुःखात् प्रजाः प्रमुञ्चति । शब्रासा.

**ऋषभो वैश्वानरस्य दक्षिणा । संवत्सरो वै वैश्वानरः । संवत्सरः प्रजापतिः । ऋषभो वै पशूनां प्रजापतिः । तस्मादृषभो वैश्वानरस्य दक्षिणा ।**

**कृष्णं वासो वारुणस्य । तद्धि वारुणं यत् कृष्णम् । यदि कृष्णं न विन्देदपि यदेव किञ्च वासः स्यात् । ग्रन्थिभिर्हि वासो वारुणम् । वरुण्यो हि ग्रन्थिः ॥**

अनयोर्हविषोः क्रमेण दक्षिणामभिधाय प्रशंसति– ऋषभो वैश्वानरस्य दक्षिणेति । ऋषभो वै पशूनामिति । यतो वैश्वानरः परंपरया प्रजापतिः । वृषभोऽपि पशूनां पतित्वात्प्रजापतिः, अतो वैश्वानरदेवताकयागस्य दक्षिणात्वेन युज्यत इत्यर्थः । तद्धि वारुणमिति । रात्र्यभिमानिदेवता वरुणः । रात्रिश्च कृष्णवर्णा । अतो लोकेऽपि यत् कृष्णं तत् वारुणमित्युच्यते । कृष्णवस्त्रालाभे वर्णान्तरयुतं वासः देयमित्युक्तम् । तस्योपाध्यन्तरेण वरुणसंबन्धित्वमुपपादयति– ग्रन्थिभिर्हीति । ग्रन्थिर्नाम पाशः । पाशो हि वरुणस्येति तद्योग्यत्वम् । अयं दक्षिणाभेदः इष्ट्योर्भिन्नतन्त्रत्वेन वेदितव्यः । समानतन्त्रत्वे हि एकेनैव द्रव्येण परिक्रीता ऋत्विजः कृत्स्नं प्रयोगजातं कुर्वन्तीति इतरवैयर्थ्यम् । तदुक्तं कर्कोपाध्यायेन– 'तन्त्रभेदे चैतद्भवति, ऐकतन्त्र्ये तु चोदकपरिप्राप्तोऽन्वाहार्य इति' (काश्रौ. १५।२।१७)। शब्रासा.

एकादशरत्नयागाः

[1]**अरण्योरग्नी समारोह्य सेनान्यो गृहान्परेत्याग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपति । अग्निर्वै देवतानामनीकम् । सेनाया वै सेनानीरनीकम् । तस्मादग्नयेऽनीकवते । एतद्वा अस्यैकꣳ रत्नं यत्सेनानीः । तस्मा एवैतेन सूयते । तꣳ स्वमनपक्रमिणं कुरुते । तस्य हिरण्यं दक्षिणा । आग्नेयो वा एष भवति । अग्ने रेतो हिरण्यम् । तस्माद्धिरण्यं दक्षिणा ॥**

तृतीयाध्याये प्रथमब्राह्मणे द्वादशरत्नहवींषि अनुदिनं क्रमेण कर्तव्यान्युच्यन्ते । अत्र कात्यायनो नैर्ऋतरत्नहविर्भ्यां द्वादशहवींषीति सूत्रितवान्– 'द्वादशोत्तराणि रत्नहवींषि । प्रतिगृहमेकैकं श्वः श्वः । समारूढेऽग्नौ निर्मथितेऽग्नयेऽनीकवते॰' (काश्रौ. १५।३।१–३) इत्यादि । तत्र प्रथमं हविर्विधत्ते– अरण्योरग्नी इति । अग्नी गार्हपत्याहवनीयौ अरण्योः पृथक् पृथक् समारोह्य समारोप्य प्रतिदिवसं तत्तद्गृहं गत्वा तत्र तत्र निर्मथ्य यष्टव्यमिति सर्वेष्टिसाधारणमिदम् । सेनान्यः सेनापतेः गृहान् परेत्य प्रथमं गत्वा अनीकवते अनीकवद्गुणकाय अग्नये अष्टाकपालेन पुरोडाशेन प्रचरेत् । सेनानीगृहे अनीकवद्गुणकाग्निदेवत्यहविरनुष्ठाने कारणमाह– अग्निर्वा इति । देवानां अनीकं मुखं अग्निः । सेनायाः अनीकं मुखं सेनानीः । अस्य रत्नहविष्ट्वमुपपादयितुमाह–एतद्वा इति । सेनानीः इति यदस्ति एतत् वै खलु अस्य राज्ञो यजमानस्य एकं रत्नं रत्नवत् प्रशस्तं गवेषणीयं वस्तु । एतेन तस्य गृहे अनुष्ठितेनाऽऽग्नेययागेन तस्मै सेनान्ये सूयते, तेनानुज्ञायते इत्यर्थः । तद्गृहगमनेन तं सेनान्यं स्वं आत्मीयं अनपक्रमिणं अनतिलङ्घिनं कृतवान् भवतीति । एवमुत्तरत्रापि व्याख्येयम् । दक्षिणां विधत्ते– तस्य हिरण्यमिति । तस्य अग्निदेवताकस्य यागस्य अग्निरेतोरूपं हिरण्यं दक्षिणात्वेन युक्तमित्यर्थः । हिरण्यस्याग्निरेतस्त्वमाम्नायते– 'आपो वरुणस्य पत्नय आसन् । ता अग्निरभ्यध्यायत् । ताः समभवत् । तस्य रेतः परापतत् । तद्धिरण्यमभवत् ।' (तैब्रा. १।१।३।८) इति ।

शब्रासा.

**अथ श्वोभूते पुरोहितस्य गृहान् परेत्य बार्हस्पत्यं चरुं निर्वपति । बृहस्पतिर्वै देवानां पुरोहितः । एष वा एतस्य पुरोहितो भवति । तस्माद्बार्हस्पत्यो भवति । एतद्वा अस्यैकꣳ रत्नम् । यत् पुरोहितः । तस्मा एवैतेन सूयते । तꣳ स्वमनपक्रमिणं कुरुते । तस्य शितिपृष्ठो गौर्दक्षिणा । एषा वा ऊर्ध्वा बृहस्पतेर्दिक् । तदेष उपरिष्टादर्यम्णः पन्थाः । तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा ॥**

द्वितीयदिवसेऽनुष्ठेयं रत्नहविर्विधत्ते– अथ श्वोभूत इति । पुरोहितस्य गृहे बार्हस्पत्यचरुप्रचारे उपपत्तिमाह– बृहस्पतिर्वै देवानामिति । बृहस्पतेः देवपुरोहितत्वात् तद्देवत्यो यागः पुरोहितगृहे कर्तुमुचित इत्यर्थः । एतद्वा इत्यादि गतम् । दक्षिणां विधत्ते– तस्य शितिपृष्ठ इति ।

(१) शब्रा. ५।३।१।१–१३.

श्वेतपृष्ठः । तत् प्रशंसति— ऊर्ध्वेति । ऊर्ध्वा दिक् बृहस्पतिदेवताका । तस्या उपरिभागे अर्यम्णः सूर्यस्य एषः परिदृश्यमानः पन्थाः मार्गः । स च किरणसंबन्धात् श्वेतः । अतो बृहस्पतियागदक्षिणाभूतस्य गोः श्वेतपृष्ठत्वं युक्तम् । शब्रासा.

**अथ श्वोभूते सूयमानस्य गृह ऐन्द्रमेकादशकपालं पुरोडाशं निर्वपति । क्षत्रं वा इन्द्रः । क्षत्रँ सूयमानः । तस्मादैन्द्रो भवति । तस्यर्षभो दक्षिणा । स ह्यैन्द्रो यदृषभः ॥**

तृतीयदिवसे कर्तव्यं यागं विधत्ते—अथ श्वोभूत इति । सूयमानस्येति । सुन्वतो यजमानस्यैव गृहे । अत एवास्मिन् पर्याये 'एतद्वा अस्यैकं रत्नम्' इत्यादि वाक्यानुपन्यासः । सूयमानपदं यजमानवाचकमित्यभिप्रेत्य सूत्रकृता यजमानपदमेवोक्तम्— 'ऐन्द्रो यजमानस्य' (काश्रौ. १५।३।५) इति । क्षत्रं वा इत्यादि । इन्द्रयजमानयोरेकजात्यभिसंबन्धात् यजमानस्य गृहे ऐन्द्रस्य हविषो निर्वापो युक्तः । दक्षिणां विधत्ते— तस्यर्षभ इति । स ह्यैन्द्र इति । 'आण्डाभ्यामैन्द्रः' (शब्रा. ५।२।३।८) इति प्रागाम्नातत्वात् तद्वत् ऋषभस्यैन्द्रत्वं प्रसिद्धमिति हिशब्दस्यार्थः । शब्रासा.

**अथ श्वोभूते महिष्यै गृहान् परेत्याऽऽदित्यं चरुं निर्वपति । इयं वै पृथिव्यदितिः । सेयं देवानां पत्नी । एषा वा एतस्य पत्नी भवति । तस्मादादित्यो भवति । एतद्वा अस्यैकँ रत्नं यन्महिषी । तस्या एवैतेन सूयते । ताँ स्वामनपक्रमिणीं कुरुते । तस्यै धेनुर्दक्षिणा । धेनुरिव वा इयं मनुष्येभ्यः सर्वान् कामान् दुहे । माता धेनुः । मातेव वा इयं मनुष्यान् बिभर्ति । तस्माद्धेनुर्दक्षिणा ॥**

चतुर्थदिवसकर्तव्यामिष्टिं विधत्ते— अथ श्वोभूत इति । महिष्या इति । कृताभिषेकस्य राज्ञो मुख्या स्त्री महिषी, तस्या गृहे । षष्ठ्यर्थे चतुर्थी । इयं वै पृथिवीति । देवानां हविस्संपादनद्वारा भोग्यत्वात् पृथिव्यात्मिकाया अदितेर्देवपत्नीत्वम् । तस्मादिति । यस्माददितेर्देवपत्नीत्वं तस्मात् तद्देवत्यहविषः पत्नीगृहे निर्वापो युक्त इत्यर्थः । दक्षिणां विधत्ते— तस्यै धेनुरिति । तस्यै अदित्यै, तद्देवत्यस्य यागस्येत्यर्थः । धेनुरिव वा इति । यथा धेनुः क्षीरादिरूपान् सर्वान् कामान् दोग्धि, एवमियं पृथिव्यात्मिका अदितिः मनुष्येभ्यः सर्वान् कामान् दुहे दुग्धे । दुहेः 'लोपस्त आत्मनेपदेषु' (पा. ७।१।४१) इति तलोपः । धेनुः हि माता, प्रत्यग्रप्रसूतत्वात् । तथा इयं भूमिरपि मातेव मनुष्यान् बिभर्ति पोषयति । तस्मात् उदीरितरीत्या अदितेर्धेनोस्तत्सं( ? धेनोश्च सं )बन्धाददित्यचरोः धेनुः दक्षिणात्वेन युज्यते । शब्रासा.

**अथ श्वोभूते सूतस्य गृहान् परेत्य वारुणं यवमयं चरुं निर्वपति । सवो वै सूतः । सवो वै देवानां वरुणः । तस्माद्वारुणो भवति । एतद्वा अस्यैकँ रत्नं यत्सूतः । तस्मा एवैतेन सूयते । तँ स्वमनपक्रमिणं कुरुते । तस्याश्वो दक्षिणा । स हि वारुणो यदश्वः ॥**

पञ्चमदिवसे कर्तव्यामिष्टिं विधत्ते— अथ श्वोभूत इति । शब्रासा.

**अथ श्वोभूते ग्रामण्यो गृहान् परेत्य मारुतँ सप्तकपालं पुरोडाशं निर्वपति । विशो वै मरुतः । वैश्यो वै ग्रामणीः । तस्मान्मारुतो भवति । एतद्वा अस्यैकँ रत्नं यद्ग्रामणीः । तस्मा एवैतेन सूयते । तँ स्वमनपक्रमिणं कुरुते । तस्य पृषन् गौर्दक्षिणा । भूमा वा एतद्रूपाणां यत्पृषतो गोः । विशो वै मरुतः । भूमो वै विट् । तस्मात् पृषन् गौर्दक्षिणा ॥**

षष्ठदिवसे कर्तव्यामिष्टिं विधत्ते— अथ श्वोभूत इति । ग्रामण्यः । ग्रामं नयतीति ग्रामणीः वैश्यानां महत्तरः, तस्य गृहान् । मरुतां सप्तगणात्मकत्वात् तद्देवत्यहविषः सप्तसु कपालेषु श्रपणं युक्तमित्याह— सप्तकपालमिति । ग्रामणीगृहे मारुतकरणं उभयोर्वैश्यत्वनिबन्धनकृतमित्याह— विशो वा इति । विशः प्रजाः, देवानामिति शेषः । मारुतस्य दक्षिणां विधत्ते— तस्य पृषन्निति । पृषन् बिन्दुमान्, श्वेतरक्तकृष्णबिन्दुयुत इत्यर्थः । पृषत्त्वं प्रशंसति— भूमा वा इति । पृषतः इति षष्ठ्यन्तं गोविशेषणम् ।

पृश्नतो गोर्यदस्ति एतत् रूपाणां भूमा इति पदयोजना। तादृशे गवि नानाविधवर्णानां सद्भावात् रूपबाहुल्यमित्यर्थः। भूमानमेवावलम्ब्य विचित्रवर्णस्य गोः मारुतहविर्योग्यतामाह– विशो वा इति। भूमो वा इति। भूमा उ इति। भूमरूपैव खलु वैश्यजातिः। शब्रासा.

**अथ श्वोभूते क्षत्तुर्गृहान् परेत्य सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं निर्वपति। सविता वै देवानां प्रसविता। प्रसविता वै क्षत्ता। तस्मात् सावित्रो भवति। एतद्वा अस्यैकꣳ रत्नं यत् क्षत्ता। तस्मा एवैतेन सूयते। तꣳ स्वमनपक्रमिणं कुरुते। तस्य श्येतोऽनड्वान् दक्षिणा। एष वै सविता य एष तपति। एति वा एषः। एत्यनड्वान् युक्तः। तद्यच्छ्येतो भवति। श्येत इव ह्येष उद्यंश्चास्तं च यन् भवति। तस्माच्छ्येतोऽनड्वान् दक्षिणा॥**

सप्तमदिवसकर्तव्यामिष्टिं विधत्ते– अथ श्वोभूत इति। क्षत्तुर्गृहानिति। क्षत्ता नाम यष्टिहस्तः अन्तःपुराध्यक्षः सर्वेषां नियन्ता प्रतिहारापरपर्यायः। सावित्रं सवितृदेवत्यम्। क्षत्तुः सवितुश्च प्रसवितृत्वं साधारणो धर्म इत्याह– सविता वै देवानामिति। दक्षिणां विधत्ते– तस्य श्येत इति। श्येतः शुक्लवर्णः अनड्वान्। श्वेतस्यानडुहः सवितृसंबन्धमाह– एष वा इति। यः एषः सूर्यः तपति एषः वै खलु सविता। स च सूर्यः एति प्रकर्षप्रकाशादिना जगन्निर्वाहं कुर्वन् सर्वदा संचरति। अनड्वानपि शकटरथवहनादौ युक्तः सन् सर्वत्र गच्छति। अतो गन्तृत्वमुभयोः संबन्धहेतुः साधारणो धर्मः। श्येतत्वमनूद्य स्तौति– तद्यच्छ्येत इति। एषः सूर्यात्मकः सविता उद्यन् उदयन् अस्तं यन् च उदयास्तकालेषु श्येतः शुक्लवर्णः इव हि भवति। शब्रासा.

**अथ श्वोभूते संग्रहीतुर्गृहान्परेत्याऽऽश्विनं द्विकपालं पुरोडाशं निर्वपति। सयोनी वा अश्विनौ। सयोनी सव्यष्टृसारथी। समानꣳ हि रथमधितिष्ठतः। तस्मादाश्विनो भवति। एतद्वा अस्यैकꣳ रत्नं यत् संग्रहीता। तस्मा एवैतेन सूयते। तꣳ स्वमनपक्रमिणं कुरुते। तस्य यमौ गावौ दक्षिणा। तौ हि सयोनी यद्यमौ। यदि यमौ न विन्देदप्यनूचीनगर्भावेव गावौ दक्षिणा स्याताम्। ता उ ह्यपि समानयोनी॥**

अष्टमदिवसकर्तव्यामिष्टिं विधत्ते– अथ श्वोभूत इति। संग्रहीतुर्गृहानिति। संग्रहीता नाम रथयोजयिता। आश्विनं अश्विदेवत्यम्। संग्रहीतृगृहे आश्विनहविषो निर्वापे कारणमाह– सयोनी इति। हि यस्मात् सव्यष्टृसारथी। सव्यष्टृपदेन संग्रहीतोच्यते। स च सारथिश्च सयोनी समानस्थानौ। एवं अश्विनावपि सयोनी सहोत्पन्नौ। तौ द्विविधौ समानं एकं रथं अधितिष्ठतः, 'युवं कवी ष्ठः पर्यश्विना रथं' (ऋसं. १०।४०।६) इति श्रवणात्। आश्विनस्य हविषो योग्यदक्षिणां विधत्ते– तस्य यमाविति। यमौ सहैव एकस्या मातुर्गर्भादुत्पन्नौ। यमयोरश्विसाम्यमाह– तौ हि सयोनी इति। यमयोरलाभे पक्षान्तरमाह– यदि यमाविति। अनूचीनगर्भौ अनुक्रमेण पौर्वापर्येण जातगर्भौ। तयोरपि समानयोनित्वं दर्शयति– ता उ हीति। यौ क्रमेणोत्पन्नौ तौ उ अपि हि समानयोनी, मध्ये गर्भान्तरेणाव्यवहितत्वात्। शब्रासा.

**अथ श्वोभूते भागदुघस्य गृहान् परेत्य पौष्णं चरुं निर्वपति। पूषा वै देवानां भागदुघः। एष वा एतस्य भागदुघो भवति। तस्मात् पौष्णो भवति। एतद्वा अस्यैकꣳ रत्नं यद्भागदुघः। तस्मा एवैतेन सूयते। तꣳ स्वमनपक्रमिणं कुरुते। तस्य श्यामो गौर्दक्षिणा। तस्यासावेव बन्धुः योऽसौ त्रिषंयुक्तेषु॥**

नवमदिवसकर्तव्यामिष्टिं विधत्ते– अथ श्वोभूत इति। भागदुघस्य गृहानिति। यो राज्ञः प्राप्यं षष्ठं भागं प्रजाभ्यो गृहीत्वा राज्ञे दोग्धि प्रयच्छति स भागदुघः। पूषा वा इति। पूषा नाम मार्गसंरक्षको देवः देवानां भागदुघः भागं दोग्धि। स हि यजमानदत्तानि हवींषि मार्गे रक्षोभ्यः संरक्ष्य तान् देवान् गमयतीत्यर्थः। पौष्णचरुयागे श्यामवर्णं गां दक्षिणां विधत्ते– तस्य श्याम इति। श्यामत्वस्तावकमतिदिशति– तस्यासाविति। बन्धुः

वाक्यशेषः। कः पुनरसाविति तमाह– योऽसौ त्रिषंयुक्तेष्विति। त्रिषंयुक्तानि उक्तानि। तत्र द्वितीये पौष्णचरोर्दक्षिणात्वेन विहितस्य गोः श्यामत्वस्तावकः 'स हि पौष्णो यच्छ्यामः। द्वे वै श्यामस्य रूपे' (शब्रा. ५।२।५।८) इत्यादिः यो वाक्यशेषः सोऽत्रापि समान इत्यर्थः। शब्रासा.

**अथ श्वोभूतेऽक्षावापस्य च गृहेभ्यो गोविकर्तस्य च गवेधुकाः संभृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्वपति। ते वा एते द्वे सती रत्ने एकं करोति संपदः कामाय। तद्यदेतेन यजते। यां वा इमाᳵ सभायां घ्नन्ति रुद्रो हैतामभिमन्यते। अग्निर्वै रुद्रः। अधिदेवनं वा अग्निः। तस्यैते अङ्गारा यदक्षाः। तमेवैतेन प्रीणाति। तस्य ह वा एषाऽनुमता गृहेषु हन्यते यो वा राजसूयेन यजते, यो वैतदेवं वेद। एतद्वा अस्यैकᳵ रत्नं यदक्षावापश्च गोविकर्तश्च। ताभ्यामेवैतेन सूयते। तौ स्वावनपक्रमिणौ कुरुते। तस्य द्विरूपो गौर्दक्षिणा– शितिबाहुर्वा शितिबालो वा, असिर्नखरः, बालदाम्नाऽक्षावपनं प्रबद्धम्। एतदु हि तयोर्भवति॥**

यजमानगृहे कर्तव्यं दशमं रत्नहविर्विधत्ते–अथ श्वोभूत इति। अक्षावापो नाम अक्षाणां क्षेप्ता अक्षगोप्ता वा द्यूतकारः। गोविकर्तः मृगयासहायभूतो गोहिंसको व्याधः। तयोरुभयोर्गृहेभ्यो गवेधुकाः आरण्यगोधूमान् संभृत्य तैः रुद्रदेवत्यं चरुं सूयमानस्य यजमानस्य गृहे निर्वपेत्। उभयोर्गृहेभ्यो गवेधुकानां युगपत् संभरणं प्रशंसति– ते वा एते इति। अक्षावापगोविकर्तरूपयोर्द्वयोः सतोरनयोरेकत्रकरणं संपद्धेतुरित्यर्थः। संपदः कामाय, समृद्ध्यभिलाषसिद्ध्यर्थमित्यर्थः। अक्षावापगोविकर्तसंभृतैरेवारण्यगोधूमैः रौद्रश्चरुः कर्तव्य इत्यत्रोपपत्तिमाह– यां वा इमामिति। सभायां सभास्थले द्यूतस्थाने यां इमां पणत्वेन कृतां गां घ्नन्ति कितवाः। अत एव चतुर्थाध्याये आम्नास्यते– 'एतेष्वक्षेष्वाह गां दीव्यध्वमिति' (शब्रा. ५।४।४।२३) इति। तत्र सूत्रम्– 'गामस्यानीय घ्नन्ति'* (काश्रौ. १५।२०३) इति। तत्र तां एतां रुद्रः अभिमन्यते, क्रूरकर्मत्वात्। स तस्य रुद्रः परंपरया अधिदेवनात्मक इत्याह– अग्निर्वा इति। अग्निरेव खलु रोदनात् रुद्रनामा संपन्नः। अत एव तैत्तिरीयके अग्निं प्रस्तुत्याऽऽम्नातम्– 'सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्' (तैसं. १।५।१।१) इति। स चाग्निः अधिदेवनं द्यूताधिकरणं स्थानम्। अधिदेवनात्मकस्य अग्नेः अक्षावापाङ्गाराः (१ अक्षा एवाङ्गाराः)। तमेव अधिदेवनात्मकं रुद्रं एतेन अक्षावापगृहसंभृतगवेधुकनिष्पन्नहविषा प्रीणाति तर्पयति। तस्य ह वा इत्यादि। यो राजसूयेन यजते यो वा एतत् एतं राजसूयप्रयोगं वेद तस्य गृहेषु अनुमता अध्वर्युप्रभृतिभिरनुज्ञाता सती गौः हन्यते गोविकर्तेन हिंस्यते, अतो गोविकर्तगृहादानीतगवेधुका हननाभिमानिनो रुद्रस्य हविष्ट्वे योग्या इत्यर्थः। तस्य रौद्रहविषो दक्षिणां विधत्ते– तस्य द्विरूप इति। शितिबाहुः श्वेतबाहुः वा भवेत् शितिबालः श्वेतबालो वा। बाहौ बाले वा श्वेतत्वम्, सर्वाङ्गे कृष्णवर्ण इति द्विरूपत्वम्। दक्षिणान्तरं विधत्ते– असिरिति। नखरः निःकोषः असिः कृपाणः। बालदाम्ना रोमस्रजा प्रबद्धं अक्षावपनं पात्रम्। अक्षा उप्यन्ते अस्मिन्निति अक्षावपनं अक्षस्थानावपनं पात्रम्। एवं गौः असिः अक्षावपनमिति त्रीण्यपि समुच्चित्य दक्षिणेत्यर्थः। तथैव कात्यायनः– '० त्रिदक्षिणो रौद्रः शितिबाहुशितिबाल्योरन्यतरः। असिर्नखरः। बालदामबद्धमक्षावपनम्'

---

* इदं सूत्रमस्मदादर्शपुस्तके नोपलभ्यते। परंतु 'सजाताय कालिङ्गाम्' (काश्रौ. ५।७।१९) इति सूत्रस्य भाष्यत्वेन 'अस्य सजातस्य संबन्धिनी या तां घ्नन्ति। हन्तिश्च आहननमात्रे, न मारणार्थः।' इति कर्कभाष्यं मुद्रितं विद्यते। तच्च तस्य भाष्यं भवितुं नार्हति, अर्हति चास्य सूत्रस्य व्याख्यानं भवितुम्। तस्मात्, विश्वबन्धुसंपादितवैदिकपदानुक्रमकोषे 'सजाताय......' इति सूत्राव्यवहितोत्तरसूत्रस्थत्वेन एतत्सूत्रान्तर्गतपदानिर्देशात्, सायणाचार्यैः अस्य सूत्रत्वेन निर्देशस्य कृतत्वाच्च 'सजाताय......' इति सूत्राव्यवहितोत्तरमिदं सूत्रं विद्यते इति प्रतीयते।

( काश्रौ. १५।३।१५-१७ ) इति । किमर्थं नखरास्यक्षपात्रद्वयं दक्षिणात्वेनोच्यते इति तत्राऽऽह- एतदु हीति । तयोः अक्षावापगोविकर्तयोः तद्द्वयं स्वं भवति एकैकस्य एकैकमस्ति, अतोऽत्र तदुभयसंबन्धात् तद्द्वयं दक्षिणात्वेन प्रयुज्यते इत्यर्थः । शब्रासा.

**अथ श्वोभूते पालागलस्य गृहान् परेत्य चतुर्गृहीतमाज्यं गृहीत्वाऽध्वन आज्यं जुहोति- ' जुषाणोऽध्वाऽऽज्यस्य वेतु स्वाहा ' इति । प्रहेयो वै पालागलः । अध्वानं वै प्रहित एति । तस्मादध्वन आज्यं जुहोति । एतद्वा अस्यैकꣳ रत्नं यत् पालागलः । तस्मा एवैतेन सूयते । तꣳ स्वमनपक्रमिणं कुरुते । तस्य दक्षिणा- अध्युक्ष्णवेष्टितं धनुः, चर्ममया बाणवन्तः, लोहित उष्णीषः । एतदु हि तस्य भवति ॥**

दूतगृहे कर्तव्यमाज्यहोमरूपमेकादशं रत्नहविर्विधत्ते- अथेति । पालागलो नाम दूतः । तथैव कात्यायनः पालागलस्थाने दूतशब्दं प्रयुक्तवान्- ' चतुर्गृहीतं जुषाणोऽध्वाऽऽज्यस्य वेत्विति दूतस्य ' ( काश्रौ. १५।३।१३) इति । आपस्तम्बेन तु दूतविशेषपरत्वेन व्याख्यातः- ' अध्वने स्वाहेति पालागलस्य गृहे जुहोत्यनृतं दूतं ब्रुवते ' ( आपश्रौ. १८।१०।२५ ) इति । पालागलं अनृतवादिनं दूतमिति ब्रुवते, आचार्या इत्यर्थः । अध्वदेवत्यः चतुर्गृहीताज्यहोम एव एकादशं हविरित्यर्थः । मन्त्रस्यार्थः- आज्यं जुषाणः आज्यभागं सेवमानः अध्वा देवता आज्यस्य वेतु आज्यं पिबतु । स्वाहा सुहुतमस्तु इति । दूतगृहे अध्वदेवस्य होमस्योपपत्तिमाह- प्रहेय इति । पालागलः दूतः प्रहेयः राज्ञा प्रेष्यः प्रस्थापनीयः । प्रेष्यत्वमेवाऽऽह- अध्वानमिति । प्रहितः प्रेषितः प्रस्थापितः सन् अध्वानं गच्छति, अतोऽध्वसंबन्धात् तद्गृहे होमः कार्य इत्यर्थः । तस्य होमस्य दक्षिणां विधत्ते- तस्य दक्षिणेति । उक्ष्णवेष्टितम् । उक्ष्णशब्देन स्नाय्वभिधीयते । उक्षविकारैः स्नायुभिः वेष्टितं स्यूतं धनुः, चर्ममयाः बाणवन्तः इषुधयः, लोहितः लोहितवर्णः उष्णीषः शिरोवेष्टनं एतत्सर्वं दक्षिणेत्याह- एतदु हीति । एतावदेव हि तस्य दूतस्य स्वं भवति । शब्रासा.

**तानि वा एतान्येकादश रत्नानि संपादयति । एकादशाक्षरा वै त्रिष्टुप् । वीर्यं त्रिष्टुप् । वीर्यमेवैतद्रत्नान्यभिसंपादयति । तद्यद्रत्निनाꣳ हविर्भिर्यजते । एतेषां वै राजा भवति । तेभ्य एवैतेन सूयते । तान् स्वाननपक्रमिणः कुरुते ॥**

एतेषां रत्नहविषामेकादशसंख्यां प्रशंसति- तानि वा एतानीति । संख्यासाम्यात् त्रिष्टुप्त्वम् । त्रिष्टुभो वीर्यत्वमिन्द्रेण सहोत्पत्तेरित्यवगन्तव्यम् । एतत् एतेन रत्नहविरनुष्ठानेन यजमाने वीर्यमेव संपादितवान् भवति । प्रकारान्तरेण तदेव प्रशंसति- तद्यदिति । यथोक्तसेनानीपुरोहितमहिष्यादयो रत्निनः । तदभिमानिदेवतानां प्रियाय एतानि हवींषि । अतः तद्गृहेष्वेव कर्ता गत्वा निर्वपेत् । एतैः रत्निनां हविर्भिर्यागेन सेनानीप्रभृतीनां रत्नानां स्वयं राजा भवेत् । तेभ्यः तत्संग्रहार्थं एतेन रत्नहविरनुष्ठानेन सूयते प्रेर्यते । शब्रासा.

**अथ श्वोभूते परिवृत्त्यै गृहान् परेत्य नैर्ऋतं चरुं निर्वपति । या वा अपुत्रा पत्नी सा परिवृत्ती । स कृष्णानां व्रीहीणां नखैर्निर्भिद्य तण्डुलान्नैर्ऋतं चरुꣳ श्रपयति । स जुहोति- ' एष ते निर्ऋते भागस्तं जुषस्व स्वाहा ' इति । या वा अपुत्रा पत्नी सा निर्ऋतिगृहीता । तद्यदेवास्या अत्र नैर्ऋतꣳ रूपं तदेवैतच्छमयति । तथो हैनꣳ सूयमानं निर्ऋतिर्न गृह्णाति । तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्यारिणी । सा ह्यपि निर्ऋतिगृहीता । तामाह- ' मा मेऽद्येशायां वात्सीत् ' इति । तत् पाप्मानमपादत्ते ॥**

परिवृत्तीगृहे कर्तव्यं नैर्ऋतहविर्विधत्ते- अथ श्वोभूत इति । परिवृत्तीशब्दस्यार्थमाह- या वा इति । अपुत्रा राजपत्नी केवलं भोगार्था परिवृत्ती । हविषो द्रव्यं विदधचोदकप्राप्तमवघातं निषेधति- स कृष्णानामिति । नखैर्निर्भिन्नानां कृष्णव्रीहीणां तण्डुलैः नैर्ऋतं चरुं श्रपयति निर्वपेत् । हवनं समन्त्रकं विधत्ते- स जुहोतीति ।

जुहोतिचोदितत्वात् स्वाहाकारप्रदानत्वाच्चायं होमो दर्वीहोमः । कात्यायनेन तु पक्षान्तरं सूत्रितम्-- ' दर्वीहोम एष ते निर्ऋत इति जुहोति वषट्कृते वा ' ( काश्रौ. १५।३।१४ ) इति । परिवृत्तीगृहे नैर्ऋतचर्वनुष्ठानस्योपपत्तिमाह— या वा इति । अपुत्रा स्त्री निर्ऋतिगृहीता पाप्मना गृहीता भवति । अतः अस्या नैर्ऋतं रूपं अत्र गृहेऽनुष्ठितेन नैर्ऋतचरुहोमेन शमितवान् भवति । तस्य दक्षिणां विधत्ते- तस्य दक्षिणा कृष्णा गौरिति । परिमूर्णी । ' मूर्च्छा मोहसमुच्छ्राययोः ' इत्यस्मात् क्तिनि ' राल्लोपः ' ( पा. ६।४।२१ ) इति च्छस्य लोपे निष्ठानत्वे च कृते रूपम्, परिमूढा अश्मा । पर्यारिणी परित आर्तिमती व्याधिगृहीता केनचिदङ्गेन अपहता वा कृष्णा गौः दक्षिणा । अत्र सूत्रम्- ' कृष्णा परिमूर्ण्यपहतोत्तमस्य ' ( काश्रौ. १५।३।२१ ) इति । तैत्तिरीयके तु परिवृत्तीगृहकर्तव्यनैर्ऋतचरोः कृष्णा भग्नशृङ्गा गौर्दक्षिणात्वेन श्रुता- ' नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणा ' ( तैसं. १।८।९।१ ) इति । कूटा भग्नशृङ्गा इति हि व्याख्यातम् । दक्षिणाभूताया गोर्नैर्ऋतचरुयोग्यतामाह-- सा ह्यपीति । जीर्णा निवृत्तप्रसवा गौः निर्ऋतिगृहीता भवति । इष्ट्यन्ते किंचित् कर्तव्यं विधत्ते- तामाहेति । तां परिवृत्तीं आह वदेत् । वाक्यस्यायमर्थः— अद्य इदानीं इतः परं मे मम ईशायां स्वाम्ये मा वात्सीत्, मद्भोग्या मा भूरित्यर्थः । वचनं स्तौति- तदिति । निर्ऋतिगृहीतां परिवृत्तीं प्रति एतेन वचनेन पाप्मानमेव अपादत्ते अपसारितवान् भवतीति । शब्रासा.

सौमारौद्रयागः, मैत्राबार्हस्पत्येष्टिः

**'उपरिष्टाद्रत्नानाᳪ सौमारौद्रेण यजते । स श्वेतायै श्वेतवत्सायै पयसि शृतो भवति । तद्यदुपरिष्टाद्रत्नानाᳪ सौमारौद्रेण यजते ॥**

अथ सौमारौद्रयागं विधत्ते-- उपरिष्टाद्रत्नानामिति । रत्नहविषामुपरि स्वगृहे सौमारौद्रयागः कर्तव्यः । स च कः ? श्वेतवत्सायै श्वेतायै । उभयत्र षष्ठ्यर्थे चतुर्थी । शुक्लवत्सायाः शुक्लाया गोः पयसि शृतः पक्वो भवति । शब्रासा.

**स्वर्भानुर्ह वा आसुरः सूर्यं तमसा विव्याध । स तमसा विद्धो न व्यरोचत । तस्य सोमारुद्रावेवैतत्तमोऽपाहताम् । स एषोऽपहतपाप्मा तपति । तथो एवैष एतत्तमः प्रविशति, एतं वा तमः प्रविशति, यदयज्ञियान् यज्ञेन प्रसजति । अयज्ञियान् वा एतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत् । तस्य सोमारुद्रावेवैतत्तमोऽपहतः । सोऽपहतपाप्मैव दीक्षते । तद्यच्छ्वेतायै श्वेतवत्सायै पयसि शृतो भवति । कृष्णं वै तमः । तत् तमोऽपहन्ति । तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥**

रत्नहविर्भ्योऽनन्तरं विहितं सौमारौद्रयागमनूद्याऽऽख्यायिकया प्रशंसति- स्वर्भानुर्हेति । आसुरः असुरपुत्रः स्वर्भानुः सूर्यं तमसा विव्याध आच्छादितवान् । सः सूर्यः तेन तमसा विद्धः आच्छादितः न व्यरोचत नातिप्रकाशवान् जातः । तस्य तत् तमः सोमारुद्रौ एव अपाहतां अपहतवन्तौ । तत आरभ्य सूर्यो निवृत्ततमस्कः सन् तपति नभसि दीप्यते । इदानीं तदनुष्ठातुरपि तमसाऽऽच्छादनमाह- तथो एवैष इति । अयज्ञियान् अयज्ञार्हान् सेनान्यादीन् यज्ञेन प्रसजति प्रसक्तान् तत्तद्यागानुष्ठानेन संबद्धान् करोतीति यत् एतत् एतेन एषः अनुष्ठाता राजन्यः तथा उ तथैव सूर्यवदेव तमः प्रविशति । तमः वा कर्तृ एतं सुन्वन्तं प्रविशति । सेनान्यादीनामयज्ञियत्वं प्रसिद्धमित्याह- अयज्ञियान् वा इति । तामेव प्रसिद्धिं दर्शयति- शूद्रानिति । त्वत् इति एकपर्यायः । एकदा शूद्रान् सेनान्यादीन् त्वत् एकदा यान् कांश्चन गोविकर्तादीन् हीनजातीनपि यज्ञेन प्रसजति । तेन अयज्ञियसंबन्धेन तमः प्रविशतीत्यतः तस्य यष्टुः तथाविधं तमः सोमारुद्रौ एव एतत् एतेन चरुणा प्रीणितौ अपहतः विनाशयतः । ततः पापलेशासंस्पृष्टः सन् दीक्षते दीक्षार्हो भवतीत्यर्थः । श्वेतापयसि श्रपणं प्रशंसति- तद्यदिति । तत् यत् यदि तमो नाम

(१) शब्रा. ५।३।२।१—८.

कृष्णम्, श्वेतवत्सायाः श्वेतायाः शुक्लवर्णे पयसि श्रपणेन कृष्णरूपं तमः अपसारितवान् भवतीत्यर्थः । यस्याः पयसि चरुः पक्वः तामेव दक्षिणात्वेन विधत्ते– तस्यैश्वै-वेति । शब्रासा.

**स हैतेनापि यजेत योऽलं यशसे सन्नयशो भवति । यो वा अनूचानः सोऽलं यशसे सन्नयशो भवति । यो न यशो भवति स तमसा वै स तत्प्रावृतो भवति । तस्य सोमारुद्रावेवैतत्तमोऽपहतः । सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥**

प्रसङ्गात् फलान्तरायास्य होमस्य बाह्यप्रयोगं दर्शयति– स हैतेनापीति । अपिः भिन्नक्रमः । सोऽपि एतेन सौमारौद्रेण चरुणा यजेत । स इत्युक्तं क इत्याह– यः यज्ञियः पुरुषः यशसे यशसां प्राप्तये अलं सन् समर्थो योग्यो भवन्नपि अयशः कीर्तिरहितः भवति । यच्छब्दार्थे विशिनष्टि– यो वा अनूचान इति । साङ्गवेदाध्यायी अनूचानः स यशसे अलं योग्यो भवन्नपि अयशः यशोरहितो भवति । यः तु यशोरहितः स तमसा प्रावृतः । तस्य एतत् एतेन हविषा सोमारुद्रौ एव कीर्त्यभावरूपं तमः अपहतः, तं कीर्तिमन्तं कुरुतः इत्यर्थः । स यजमानः अयशोरूपतमसा वियुक्तः सन् ज्योतिरात्मको भूत्वा श्रिया संपदा यशसा चोपलक्षितो भवति । शब्रासा.

**अथ मैत्राबार्हस्पत्यं चरुं निर्वपति । ह्वलति वा एष यो यज्ञपथादेति । एति वा एष यज्ञपथाद्यदयज्ञियान् यज्ञेन प्रसजति । अयज्ञियान् वा एतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत् । मित्राबृहस्पती वै यज्ञपथः । ब्रह्म हि मित्रः, ब्रह्म हि यज्ञः । ब्रह्म हि बृहस्पतिः, ब्रह्म हि यज्ञः । तत्पुनर्यज्ञपथमपिपद्यते । सोऽपिपद्यैव यज्ञपथं दीक्षते । तस्मान्मैत्राबार्हस्पत्यं चरुं निर्वपति ॥**

विधत्ते– अथ मैत्रेति । मैत्राबार्हस्पत्यं मित्राबृहस्पतिदेवत्यं चरुं निर्वपेत् । देवतासंबन्धं प्रशंसति– ह्वलति वा इति । अयज्ञियानां सेनान्यादीनां यज्ञे प्रसञ्जनमेव यज्ञपथादपगमनमित्यर्थः । मित्राबृहस्पत्योः यज्ञपथात्मकत्वं निर्वक्ति– ब्रह्म हि मित्र इति । ब्रह्म वेदः । तदेव हि यज्ञः तत्साध्यत्वात् । यज्ञ एव पन्थाः यज्ञपथं इति समासं विवक्षित्वा तयोः परंपरया यज्ञरूपत्वोक्तिः । तत्पुनर्यज्ञेति । तत् तस्मात् यज्ञात्मकमित्राबृहस्पतिदेवत्ययागानुष्ठानात् पुनर्यज्ञपथं प्राप्य दीक्षते, दीक्षां कर्तुमर्हतीत्यर्थः ।

शब्रासा.

**तस्याऽऽवृत् । या स्वयंप्रशीर्णाऽऽश्वत्थी शाखा प्राची वोदीची वा भवति । तस्यै मैत्रं पात्रं करोति । वरुण्या वा एषा या परशुवृक्णा । अथैषा मैत्री या स्वयंप्रशीर्णा । तस्मात् स्वयंप्रशीर्णायै शाखायै मैत्रं पात्रं करोति ॥**

तस्य चरोरनुष्ठानप्रकारं वक्तुं प्रतिजानीते– तस्याऽऽवृदिति । तस्य मैत्राबार्हस्पत्ययागस्य आवृत् क्रिया, अनुष्ठानप्रकारो वक्ष्यते इति शेषः । स्वयंप्रशीर्णा स्वयमेव भग्ना प्राची प्रागायता उदीची उदगायता वा या आश्वत्थी अश्वत्थस्य शाखा भवति तस्याः शाखायाः मैत्रं मित्रसंबन्धिचरुपाकार्थं पात्रं कुर्यात् । स्वयंभग्नाया मैत्रत्वं व्यतिरेकपूर्वकमुपपादयति– वरुण्या वा एषेति । या शाखा परशुवृक्णा छिन्ना व्रश्चनेन सा हिंसितत्वात् वरुण्या वरुणदेवत्या । स्वयंभग्नपत्रा तु मित्रार्हा, हिंसाविरहात् । सर्वसुहृत्त्वान्मित्रदेवस्य परशुच्छिन्नशाखानिर्मितं पात्रमयोग्यमित्यर्थः । शब्रासा.

**अथातच्य दधि विनाट आसिच्य रथं युक्त्वा आबध्य देदीयितवा आह । तद्यत्स्वयमुदितं नवनीतं तदाज्यं भवति । वरुण्यं वा एतद्यन्मथितम् । अथैतन्मैत्रं यत् स्वयमुदितम् । तस्मात् स्वयमुदितमाज्यं भवति ॥**

मैत्रचर्वर्थमाज्यकरणं विधत्ते– अथातच्येति । पयोविशेषः तैत्तिरीयके श्रुतः– ‘ श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते ’ ( तैसं. १।८।९।२ ) इति । तादृशं पयः आतच्य आतञ्चनद्रव्येण दधि कृत्वा विनाटे चर्ममये पात्रे दृतौ आसिच्य, रथं युक्त्वा अश्वैः संयोज्य आबध्य दधिपूर्णं विनाटं रथे संबध्य देदीयितवै रथधावनाय आह नियुञ्जीत । दीतेर्वा गतिकर्मणो यङ्लुङन्तात्

कृत्यार्थे तवै प्रत्ययः। तत्र रथधावनेन दध्नो यत् स्वयमुदितं मथनमन्तरेण निष्पन्नं नवनीतं तदेव स्वयमेव विलीनं सत् आज्यं भवति। आज्यकरणप्रकारस्तु आपस्तम्बेन विशद उक्तः— 'श्वेतां श्वेतवत्सामामस्त्ये दृतौ दुहन्ति। तत् स्वयंमूर्ते संयोगेन परिवहति। तत् स्वयंमथितमातपे विषजन्ति। तत् स्वयंविलीनमाज्यं भवति।' (आपश्रौ. १८।११।३-६) इति। स्वयमुदिताज्यस्य मित्रयोग्यत्वं व्यतिरेकमुखेन दर्शयति— वरुण्यमिति। यन्मन्थननिष्पन्नमाज्यं तत् वरुण्यं उपद्रवकारिणो वरुणस्य योग्यं, न तु सर्वसुहृदो मित्रस्य। यत्तु उदीरितरूपं स्वयमुदितं तत् मन्थनरूपस्य हिंसनस्य विरहात् मैत्रम्। शब्रासा.

**द्वेधा तण्डुलान् कुर्वन्ति। स येऽणीयाꣳसः परिभिन्नास्ते बार्हस्पत्याः। अथ ये स्थवीयाꣳसोऽपरिभिन्नास्ते मैत्राः। न वै मित्रः कंचन हिनस्ति। न मित्रं कश्चन हिनस्ति। नैनं कुशो न कण्टको विभिनत्ति। नास्य व्रणश्चनास्ति। सर्वस्य ह्येव मित्रो मित्रम्॥**

देवताद्वयस्य पृथक् चरोः श्रपणं विधित्सुः तण्डुलानां द्वेधाकरणं विधत्ते-- द्वेधेति। ये अणीयांसः अणुतराः परिभिन्नाः छिन्नाग्रास्तण्डुलास्ते बृहस्पतिदेवत्याः कर्तव्याः। ये स्थवीयांसः स्थूलतराः अपरिभिन्नाः अच्छिन्नाग्राः अचूर्णीकृताः ते मित्रदेवत्याः कर्तव्याः। मैत्राणामभिन्नत्वं प्रशंसति-- न वै मित्र इति। मित्रो देवः कंचन प्राणिनं न हिनस्ति। मित्रं अपि न कश्चन कोऽपि हिनस्ति। एनं मित्रं कुशः दर्भो वा कण्टकः वा न भिनत्ति न विध्यति। अत एव तस्य व्रणोऽपि नास्ति। सर्वस्य मित्रत्वादिति हेतुमाह-- सर्वस्य ह्येवेति। पुंलिङ्गो मित्रशब्दो देवतावाची। नपुंसकलिङ्गस्तु सुहृद्वचनः। शब्रासा.

**अथ बार्हस्पत्यं चरुमधिश्रयति। तं मैत्रेण पात्रेणापिदधाति। तदाज्यमानयति। तत्तण्डुलानावपति। स एष ऊष्मणैव श्रप्यते। वरुण्यो वा एष योऽग्निना शृतः। अथैष मैत्रो य ऊष्मणा शृतः। तस्मादूष्मणा शृतो भवति। तयोरुभयोरवद्यन्नाह— 'मित्राबृहस्पतिभ्यामनुब्रूहि' इति। आश्राव्याह— 'मित्राबृहस्पती यज' इति। वषट्कृते जुहोति॥**

श्रपणप्रकारं विधत्ते— अथ बार्हस्पत्यमिति। बार्हस्पत्यं चरुमधिश्रित्य अग्निमध्ये स्थाल्यामधिश्रितायां बृहस्पत्यर्थांस्तण्डुलानोप्य तं चरुमश्वत्थशाखानिर्मितेन मैत्रेण पात्रेण अपिदध्यात्। तत् तस्मिन् पात्रे स्वयमुत्पन्नं आज्यं आनयति आसिञ्चेत्। तत् तत्र स्थविष्ठान् अपरिभिन्नान् मैत्रान् तण्डुलान् आवपेत्। स एष मैत्रश्चरुः ऊष्मणैव श्रप्यते पच्यते। अग्निना शृतः पक्वो वरुण्यः दाहप्रयुक्तहिंसासंबन्धात् वरुण्यः वरुणार्हः, न मित्रार्हः। ऊष्मणा शृतस्तु मैत्रः मित्रदेवत्यो युक्तः, दोषविरहात्। एवं पृथक् श्रपणमभिधाय देवताप्रदाने साहित्यं विधत्ते —तयोरुभयोरिति। तयोरुभयोः चर्वोः दधिपयसोः दार्शिकयोरिव एकैकस्मात् द्विर्द्विरवद्यन् जुह्वां सहावदानं कुर्वन् 'मित्राबृहस्पतिभ्यामनुब्रूहि' इति एवं संयुज्य अनुवाक्याप्रैषं ब्रूयात्। एवं यजेति याज्याप्रैषेऽपि वषट्कृते सहैव प्रक्षेपः। शब्रासा.

### अभिषेचनीययागदीक्षा

**[1]स वै दीक्षते। स उपवसथेऽग्नीषोमीयं पशुमालभते। तस्य वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति। तदनु देवस्वाꣳ हवीꣳषि निरुप्यन्ते॥**

एवं पवित्राख्यात् प्रथमसोमयागादनन्तरभावीनि आनुमतादीनि इष्टिदर्वीहोमात्मकानि संवत्सरपर्यन्तमनुष्ठेयानि कर्माण्यनुक्रान्तानि। अथ द्वितीयस्याभिषेचनीयाख्यस्य सोमयागस्य प्रयोगोऽभिधास्यते। तत्राभिषेचनीयस्य चोदकप्राप्तां दीक्षामाह— स वै दीक्षत इति। तत्कालः सूत्रे दर्शितः— 'फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षते' (काश्रौ. १५।३।३५) इति। देवस्वां हवींषि विधित्सुः तेषामग्नीषोमीयपशुपुरोडाशानन्तरभावित्वं वक्तु-

(१) शब्रा. ५।३।३।१—१५.

माह– स उपवसथ इति । उपवसथः सुत्यादिवसात् पूर्वमहः । अग्नीषोमीयं पशुपुरोडाशं निरुप्य तदनु देवस्वां हवींषि निर्वपेत् । सुन्वन्ति अनुजानन्तीति सुवः । देवाश्च ते सुवश्चेति देवसुवः । तेषां देवस्वाम् । 'ओः सुपि' ( पा. ६।४।८३ ) इति यणादेशः । प्रसवितृत्वं चैषामाम्नायते-- 'देवसुवामेतानि हवींषि भवन्ति । एतावन्तो वै देवानां सवाः । त एवास्मै सवान् प्रयच्छन्ति । त एनं सुवन्ते । ' ( तैब्रा. १।७।४।१ ) इति । शब्रासा.

**सवित्रे सत्यप्रसवाय द्वादशकपालं वाऽष्टाकपालं पुरोडाशं निर्वपति प्लाशुकानां व्रीहीणाम् । सविता वै देवानां प्रसविता । सवितृप्रसूतः सूया इति । अथ यत् प्लाशुकानां व्रीहीणां क्षिप्रे मा प्रसुवानिति ॥**

तत्र प्रथमं सावित्रं हविर्विधत्ते– सवित्रे सत्यप्रसवायेति । सत्यप्रसवाय अमोघाभ्यनुज्ञाय सवित्रे प्लाशुकानां प्रकर्षेण आशु शीघ्रं पच्यमानानां पुनःप्ररूढानां व्रीहीणाम् । रेफस्य छान्दसो लत्वनिर्देशः । सवितृदेवतासंबन्धं प्रशंसति– सवितेति । सूयै सवं करवाणि । प्राशुकव्रीहिसाध्यत्वं प्रशंसति– अथ यदिति । क्षिप्रे क्षिप्रकाले मा मां प्रसुवान् सवितृदेवत्याः प्राशुका व्रीहयः प्रसुवन्तु प्रेरयन्तु इति प्राशुकत्वम् । प्रसुवानिति । प्रपूर्वात् सुवतेः लेटि अ- ( ? आ )डागमे से ( ? झे )रिकारलोपे कृते रूपम् । शब्रासा.

**अथाग्नये गृहपतयेऽष्टाकपालं पुरोडाशं निर्वपत्याशूनाम् । श्रीर्वै गार्हपतम् । यावतो यावत ईष्टे तदेनमग्निरेव गृहपतिर्गार्हपतमभिपरिणयति । अथ यदाशूनां क्षिप्रे मा परिणयानिति ॥**

द्वितीयं हविर्विधत्ते– अथाग्नय इति । गृहपतये गृहपतित्वगुणकाय अग्नये आशूनां व्रीहीणां पुरोडाशं निर्वपेत् । आशूनामिति । प्लाशुकाः पुनः प्ररूढा व्रीहय इत्युक्तम् । ततोऽप्यधिककाले पक्षत्रये पच्यमानाः षष्टिका व्रीहयः आशवः । तेषामाशुत्वं च त्रिचतुरमासनियतपरिपाकव्रीह्यपेक्षम् । गृहपतिपदं प्रशंसति– श्रीर्वा इति । श्रीः खलु गार्हपतं गृहपतित्वमेव । तस्मात् यजमानो यावतः धनस्य ईष्टे ईश्वरो भवति तत् गार्हपतं गृहपतिसंबन्धि सर्वं वस्तुजातं अभि एनं यजमानं गृहपतिगुणकोऽग्निः परिणयति प्रापयति । व्रीहीणामाशुत्वं प्रशंसति– अथ यदिति । क्षिप्रे क्षिप्रं मा मां परिणयान् परिणयेयुः, इति अतो हेतोः आशुभिरेव हविः कर्तव्यमित्यर्थः । शब्रासा.

**अथ सोमाय वनस्पतये श्यामाकं चरुं निर्वपति । तदेनꣳ सोम एव वनस्पतिरोषधिभ्यः सुवति । अथ यच्छ्यामाको भवति । एते वै सोमस्यौषधीनां प्रत्यक्षतमां यच्छ्यामाकाः । तस्माच्छ्यामाको भवति ॥**

तृतीयं हविर्विधत्ते– अथ सोमायेति । वनस्पतये । वनानां ओषधीनां पतिः वनस्पतिः । पारस्करादित्वात् सुट् । तस्मै, सोमाय श्यामाकप्रकृतिकं चरुं निर्वपेत् । देवतासंबन्धं प्रशंसति– तदेनमिति । श्यामाकानां सोमार्हत्वमुपपादयति– अथ यच्छ्यामाका इति । श्यामाका इति यत् एते खलु ओषधीनां मध्ये सोमस्य प्रत्यक्षतमां, अतिशयेन प्रत्यक्षं रूपमित्यर्थः । शब्रासा.

**अथ बृहस्पतये वाचे नैवारं चरुं निर्वपति । तदेनं बृहस्पतिरेव वाचे सुवति । अथ यन्नैवारो भवति । ब्रह्म वै बृहस्पतिः । एते वै ब्रह्मणा पच्यन्ते यन्नीवाराः । तस्मान्नैवारो भवति ॥**

चतुर्थं हविर्विधत्ते-- अथ बृहस्पतय इति । वाचे वाग्रूपाय । तत् तेन नैवारचरुणा प्रीतो बृहस्पतिरेव एनं यजमानं वाचे सुवति अनुजानाति । 'अथ यन्नैवारो भवति' इत्यादिकं वाजपेये व्याख्यातम् । ( अथ यन्नैवार इति । नीवारा इति यत् एते ब्रह्मणा एव पच्यन्ते, न तु कृष्टक्षेत्रोत्पशाल्यादिवत् । अतः कालवशात् पक्वा नीवारा ब्रह्मरूपस्य बृहस्पतेर्योग्या इत्यर्थः । ५।१। ४।१४ ) । शब्रासा.

**अथेन्द्राय ज्येष्ठाय हायनानां चरुं निर्वपति । तदेनमिन्द्र एव ज्येष्ठो ज्यैष्ठ्यमभिपरिणयति । अथ यद्धायनानां भवति । अतिष्ठा वा एता**

**ओषधयो यद्धायनाः । अतिष्ठो वा इन्द्रः । तस्माद्धायनानां भवति ॥**

पञ्चमं हविर्विधत्ते— अथेन्द्रायेति । ज्येष्ठत्वगुणकायेन्द्राय हायनानां संवत्सरपक्वानां रक्तशालीनां चरुं निर्वपेत् । संवत्सरपक्वानां ज्येष्ठगुणकेन्द्रयोग्यत्वमुपपादयति— अथ यद्धायनानामिति । हायनाः संवत्सरपक्वा व्रीहय इति यत् एताः अतिष्ठाः अतीत्य तिष्ठन्त्यः ओषधयः, चिरकालेन पाकात् । इन्द्रः अपि अतिष्ठः सर्वानतिक्रम्य स्थितः । शब्रासा.

**अथ रुद्राय पशुपतये रौद्रं गावेधुकं चरुं निर्वपति । तदेनꣳ रुद्र एव पशुपतिः पशुभ्यः सुवति । अथ यद्गावेधुको भवति । वास्तव्यो वा एष देवः । वास्तव्या गवेधुकाः । तस्माद्गावेधुको भवति ॥**

षष्ठं हविर्विधत्ते— अथ रुद्रायेति । पशुपतये पशुपतिगुणकाय रुद्राय । रौद्रमिति तद्धितेन विहित एव रुद्रसंबन्धः । पुनः 'पशुपतये' इति विशेषसंबन्धाय रुद्राय इति चतुर्थी उक्ता । पशुपतिपदं प्रशंसति— तदेनमिति । तत् तेन हविषा एनं सुन्वन्तं पशुपतिः रुद्र एव पशुभ्यः तदर्थं सुवति प्रेरयति, पशुमन्तं करोतीत्यर्थः । वास्तव्यः इत्यादि पूर्ववत् ( राका. पृ. २५४ ) व्याख्येयम् । शब्रासा.

**अथ मित्राय सत्याय नाम्बानां चरुं निर्वपति । तदेनं मित्र एव सत्यो ब्रह्मणे सुवति । अथ यन्नाम्बानां भवति । वरुण्या वा एता ओषधयो याः कृष्टे जायन्ते । अथैते मैत्रा यन्नाम्बाः । तस्मान्नाम्बानां भवति ॥**

सप्तमं हविर्विधत्ते— अथ मित्रायेति । सत्याय सत्यगुणकाय मित्राय । नाम्बानाम् । नाम्बा नाम अकृष्टपच्याः स्वयंजाता व्रीहयः । नाम्बानां मित्रयोग्यत्वमुपपादयति— अथ यन्नाम्बानामिति । कृष्टक्षेत्रोत्पन्नाः ओषधयः वरुण्याः कर्षणादिलक्षणहिंसासंबन्धात् वरुणार्हाः । अकृष्टपच्यास्तु तद्विरहात् मैत्राः । शब्रासा.

**अथ वरुणाय धर्मपतये वारुणं यवमयं चरुं निर्वपति । तदेनं वरुण एव धर्मपतिर्धर्मस्य पतिं करोति । परमता वै सा यो धर्मस्य पतिरसत् । यो हि परमतां गच्छति तꣳ हि धर्म उपयन्ति । तस्माद्वरुणाय धर्मपतये ॥**

अष्टमं हविर्विधत्ते— अथ वरुणायेति । धर्मपतये धर्मपतिगुणकाय वरुणाय यवमयं चरुं निर्वपेत् । रौद्रमितिवत् वारुणमिति व्याख्येयम् । तत् तेन एनं यजमानं तादृशो वरुणः धर्मस्य पतिं कुर्यात् । धर्मपतित्वं प्रशंसति— परमतेति । यः पुमान् धर्मस्य पतिः असत् भवेत् स वै परमता परमत्वम् । तदेव विवृणोति— यो हीति । तं परमं धर्मे उपयन्ति प्राप्नुवन्ति । शब्रासा.

**अथाग्नीषोमीयेन पुरोडाशेन प्रचरति । तस्यानिष्ट एव स्विष्टकृद्भवति । अथैतैर्हविर्भिः प्रचरति । यदेतैर्हविर्भिः प्रचरति ॥**

एतेषां निरुप्तानां हविषां प्रचरणकालं विधत्ते— अथाग्नीषोमीयेनेति । चोदकप्राप्तेन अग्नीषोमीयपशुपुरोडाशेन प्रचर्य तदीयस्विष्टकृतः प्राक् एतैर्हविर्भिः यजेतेत्यर्थः । शब्रासा.

**अथैनं दक्षिणे बाहावभिपद्य जपति— 'सविता त्वा सवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाम् । बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम् ॥'**

विधत्ते— अथैनमिति । अथ देवस्वां हविर्यागानन्तरं स्विष्टकृतः पूर्वं एनं यजमानं दक्षिणे बाहौ अभिपद्य गृहीत्वा जपति, अध्वर्युरिति शेषः । सूत्रम्— 'उत्तमेन चरित्वा सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा०' ( काश्रौ. १५।४।१४ ) इति । मन्त्रस्यार्थः— हे यजमान, त्वा त्वां सविता सवानां प्रसवानां स्वामित्वेन सुवतां अनुजानातु । तथा अग्निः अन्येषां गृहपतीनां ईश्वरमनुजानातु । त्वामित्यनुषङ्गः । एवमुत्तरत्रापि त्वां सुवतामिति योज्यम् । वाचे ज्यैष्ठ्याय इत्यादौ तादर्थ्ये चतुर्थी ।

'मित्रः सत्यः' इत्यत्र सत्यशब्दात् चतुर्थ्यर्थे सुः, सत्यायेत्यर्थः। शब्रासा.

**'इमं देवा असपत्नꣳ सुवध्वम्' इति। इमं देवा अभ्रातृव्यꣳ सुवध्वमित्येवैतदाह। 'महते क्षत्राय, महते ज्यैष्ठ्याय' इति। नात्र तिरोहितमिवास्ति। 'महते जानराज्याय' इति। महते जनानाꣳ राज्यायेत्येवैतदाह। 'इन्द्रस्येन्द्रियाय' इति। वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेति। 'इममुष्य पुत्रममुष्यै पुत्रम्' इति। तद्यदेवास्य जन्म तत एवैतदाह। 'अस्यै विशे' इति। यस्यै विशो राजा भवति। 'एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा' इति। तदस्मा इदꣳ सर्वमाद्यं करोति। ब्राह्मणमेवापोद्धरति। तस्माद्ब्राह्मणोऽनाद्यः। सोमराजा हि भवति॥**

परोक्षवदुक्त्वा अथ प्रत्यक्षवदाह– इमं देवा इति। हे देवाः सवित्रादयः, इमं यजमानं असपत्नं शत्रुरहितं सुवध्वं अनुजानीत। तथा, महते क्षत्राय अतिप्रभूताय क्षत्रियकुलाय, महते ज्यैष्ठ्याय ज्येष्ठत्वाय, अप्रतिहतनियमसामर्थ्यायेत्यर्थः। महते जानराज्याय जनसंबन्धि यत् राज्यं तत्र (? तत्) सागरपर्यन्तभूमिविषयत्वात् महत्, सार्वभौमत्वाय। इन्द्रस्य संबन्धिने इन्द्रियाय वीर्याय। इमं एतन्नामानं यजमानं अमुष्य पितुः पुत्रं अमुष्यै अमुष्या मातुः पुत्रम्, सुवध्वमित्यनुषङ्गः। अस्यै अस्याः विशः प्रजायाः राजा, एष यजमान इत्यर्थः। प्रजा अपि संबोध्याः– एष इति। अमी इति संबोधनप्रथमाबहुवचनान्तम्। अदःशब्दस्थाने जनपदनाम संबोधनप्रथमाबहुवचनान्तं गृह्णीयादित्यर्थः। तत एव 'अमी' इत्यस्य स्थाने भरतपदं प्रक्षिप्य पठितं बौधायनेन– 'अथैनं रत्निभ्य आवेदयति– एष वो भरता राजा' इति। आपस्तम्बेन तु राजविशेषेण जनपदनामग्रहणमुक्तम्– 'अथैनं रत्निभ्य आवेदयति– एष वो भरता राजेति, एष वः कुरवो राजेति कौरव्यम्, एष वः पञ्चाला राजेति पाञ्चालम्, एष वः कुरुपाञ्चाला राजेति वा कुरुपञ्चालम्, एष वो जनता राजेत्यन्यान् राज्ञः' (आपश्रौ. १८।१२।७) इति। कात्यायनेन तु इदं सर्वं संगृह्योक्तम्– 'यस्याश्च जाते राजा भवति। देशस्यानवस्थितत्वात्' (काश्रौ. १५।४।१६–१७) इति। हे प्रजाः, वः युष्माकं एष राजा, एनं स्वामिनं यथेरितं सेवध्वमित्यर्थः। ब्राह्मणानामस्माकं सोम एव राजा, न तु क्षत्रिय इत्यर्थः। मन्त्रं भागशोऽनूद्य व्याचष्टे– इमं देवा इति। भ्रातृव्यः शत्रुः। शेषं सुगमम्। यजमानस्य तन्मातापित्रोश्च नामग्रहणस्थानं दर्शयति– इममुष्येति। इममित्यस्यानन्तरं यजमानस्य नाम, अमुष्य अमुष्याः इत्येतयोः स्थाने तस्य मातापित्रोर्नामेत्यर्थः। अत एव सूत्रम्– '० नामास्य गृह्णाति मन्त्रे यथास्थानम्। मातापित्रोश्च' (काश्रौ. १५।४।१४–१५) इति। मन्त्रभागस्य तात्पर्यमाह– तदस्मा इति। तत् तेन 'एष वो राजा' इति स्वामित्वप्रतिपादनेन अस्मै राज्ञे इदं दृश्यमानं सर्वं जगत् ब्राह्मणव्यतिरिक्तं आद्यं भोग्यं करोति। 'सोमोऽस्माकम्' इति मन्त्रभागस्य तात्पर्यमाह– ब्राह्मणमेवेति। यतः 'सोमोऽस्माकं ब्राह्मणानां राजा' इति ब्राह्मणजातिः सोमस्वामित्वेन पृथक् कृता, तस्मात् ब्राह्मणः क्षत्रियेण नाद्यः। हि यस्मात् ब्राह्मणः सोमराजा। सोमो राजा यस्येति बहुव्रीहिः। अत एव 'राजाहस्सखिभ्यः०' (पा. ५।४।९१) इति टच् समासान्तो न कृतः। यस्मात् मन्त्रेणाध्वर्युः स्वकीयं राजानं विभज्य निर्दिष्टवान्, तस्मात् लोकेऽपि ब्राह्मणा अग्निष्टोमादियागेषु सोममेव राजशब्दोदितं 'सोम राजन्नेह्यवरोह मा भेः' (तैसं. १।३।१३।१) इत्यादिभिः मन्त्रैरुपचरन्ति। शब्रासा.

**एता ह वै देवताः सवस्येशते। तस्माद्देवस्वो नाम। तदेनमेता एव देवताः सुवते। ताभिः सूतः श्वः सूयते॥**

उक्तहविष्कस्य देवतानां संभूय नाम निर्वक्ति– एता ह वा इति। तदेनमिति। यस्मात् एता देवताः सवस्य ईशयित्र्यः (? ईशित्र्यः), तत् तस्मात् एताः

देवताः देवसूनामिकाः सवितृप्रसूतं एनं सुन्वन्तं हविः, सुवते अनुजानन्ति । ताभिः देवताभिः सूतः अनुज्ञातः सन् श्वः सुत्यादिवसे सूयते अनुज्ञायते । देवसूहविः-प्रचारस्य अग्नीषोमीयदिवसकर्तव्यत्वात् श्वः इत्यनेन सुत्यादिनं विवक्ष्यते इत्यभिप्रायः । शब्रासा.

**ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्यम् । वीर्यवत्यः सुवान्ता इति । तस्मात् द्विनाम्न्यो भवन्ति ॥**

उक्तानां देवतानामेकैकस्य 'सवित्रे सत्यप्रसवाय' इत्यादिविशेषणविशेष्यात्मकं नामद्वयं तद्द्वन्द्वात्मना प्रशंसति– ता वै द्विनाम्न्य इति । सुवान्तै इति पञ्चमलकारान्तं पदम् । 'लेटोऽडाटौ' (पा. ३।४।९४) इत्याडागमः, 'एत ऐ' (पा. ३।४।९३) इत्यैकारादेशश्च । शब्रासा.

**अथाह– 'अग्नये स्विष्टकृतेऽनुब्रूहि' इति । तद्यदन्तरेणाऽऽहुती एतत्कर्म क्रियते । एष वै प्रजापतिर्य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनुप्रजायन्ते । तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति । मध्यतः सुवति । तस्मादन्तरेणाऽऽहुती एतत्कर्म क्रियते । आश्राव्याह– अग्नये स्विष्टकृते प्रेष्येति । वषट्कृते जुहोति ॥**

अग्नीषोमीयपशुपुरोडाशप्रधानाहुतेः अनन्तरं कर्तव्यं विधाय प्रकृतं स्विष्टकृद्यागमनुवदति– अथाहेति । प्रधानस्विष्टकृदाहुत्योर्मध्ये देवसूहविःप्रचारेण यज्ञरूपप्रजापतिमध्ये एव यजमानं निहितवान् भवतीत्यर्थः । शब्रासा.

सप्तदशापां संभरणं यजमानस्याभिषेकार्थम्

**[1]स वा अपः संभरति । तद्यदपः संभरति । वीर्यं वा आपः । वीर्यमेवैतद्रसमपाꣳ संभरति ॥**

चतुर्थब्राह्मणे यजमानाभिषेकार्थं सप्तदशसंख्याकानामपां संभरणमुच्यते । कात्यायनः अत्र कंचित् विशेषं सूत्रयामास– 'इडान्तेऽपो गृह्णाति । यूपमुत्तरेण नैमित्तिकीरसंभवात् । गत्वेतराः पृथक्पात्रेष्वौदुम्बरेषु' (काश्रौ. १५।४।२१-२३) इति । आतपवर्ष्याद्यान्युदकानि यूपस्योत्तरप्रदेशे निधाय गृह्णीयात् । इतराः संभविनीरपस्तु तत्र तत्र गत्वा गृह्णीयात् । तदिदमप्संभरणं विधत्ते– स वा अप इति । उदकसंभरणं वीर्यात्मना प्रशंसति– तद्यदिति । अपां वीर्यरूपं रसमेव संभृतवान् भवतीत्यर्थः । शब्रासा.

**औदुम्बरे पात्रे । अन्नं वा ऊर्गुदुम्बरः । ऊर्जोऽन्नाद्यस्यावरुध्यै । तस्मादौदुम्बरे पात्रे ॥**

संभरणस्य पात्रविशेषं विधत्ते– औदुम्बर इति । पात्रे इति जात्येकवचनम् । सर्वाणि सप्तदश पात्राणि औदुम्बराणि भवेयुः । तथा च सूत्रमुदाहृतम् । औदुम्बरत्वमन्नावरोधकत्वेन प्रशंसति– अन्नं वा इति । शब्रासा.

**स सारस्वतीरेव प्रथमा गृह्णाति– 'अपो देवा मधुमतीरगृभ्णन्' इति । अपो देवा रसवतीरगृह्णन्नित्येवैतदाह । 'ऊर्जस्वती राजस्वश्चितानाः' इति । रसवतीरित्येवैतदाह यदाहोर्जस्वतीरिति । राजस्वश्चितानाः इति । याः प्रज्ञाता राजस्व इत्येवैतदाह । 'याभिर्मित्रावरुणावभ्यषिञ्चन्' इति । एताभिर्हि मित्रावरुणावभ्यषिञ्चन् । 'याभिरिन्द्रमनयन्नत्यरातीः' इति । एताभिर्हीन्द्रं नाष्ट्रा रक्षाꣳस्यत्यनयन् । ताभिरभिषिञ्चति । वाग्वै सरस्वती । वाचैवैनमेतदभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

जलसंभरणे क्रमं विधत्ते– स सारस्वतीरेवेति । सरस्वत्यां नद्यां भवा अपः प्रथमं गृह्णीयात् । एवशब्दः अन्ययोगव्यवच्छेदार्थः । तत्र मन्त्रं विधत्ते– अपो देवा इति । मधुमतीः मधुररसवतीः, ऊर्जस्वतीः विशिष्टान्नरसवतीः, राजस्वः । राजानं सुवते जनयन्ति अनुजानन्तीति राजस्वः ताः, चितानाः देवतात्वेन चेतयमानाः अपः उदकानि देवाः अगृभ्णन् । भकारश्छान्दसः । ता अपो विशिनष्टि– याभिः अद्भिः मित्रावरुणौ अभ्यषिञ्चन् देवाः । याभिः च इन्द्रं अरातीः अदान-

(१) शब्रा. ५।३।४।१-२८.

शीलाः शत्रुसेनाः अत्यनयन् अतिक्रम्य नीतवन्त इति । मन्त्रं प्रतिपादमनूद्य व्याचष्टे– अपो देवा इति । 'चिताना:' इत्यस्य व्याख्यानं 'प्रज्ञाताः' इति । शेषं निगदसिद्धम् । एतासामभिषेकार्थत्वं प्रशंसति– तभिरभिषिञ्चतीति । यस्याः अपो गृह्यन्ते तां सरस्वतीं नदीं वागात्मना प्रशंसति-- वाग्वै सरस्वतीति । सारस्वतीभिरद्भिः अभिषेककरणेन वाचैवाभिषेकं कृतवान् भवतीत्यर्थः । एता वा एका इति । सारस्वत्यः आपः एकाः एकमुदकम् । एवं सारस्वतीरपो गृहीत्वा षोडशापो गृह्णीयात् । तत्र विशेषं दर्शयामास कात्यायनः– 'सारस्वतीर्गृह्णात्यपो देवा इति । जुहोत्युत्तरासु चतुर्गृहीतानि वृष्ण ऊर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति ।' (काश्रौ. १५।४।३४–३५) इति । उत्तरासु षोडशसु चतुर्गृहीतेनाज्येन पूर्वं स्वाहान्तैर्मन्त्रैर्हुत्वा हुत्वा उत्तरैरुत्तरैस्तास्ता अपो गृह्णीयादित्यर्थः । शब्रासा.

**अथाध्वर्युश्चतुर्गृहीतमाज्यं गृहीत्वाऽपोऽभ्यवैति । तद्या ऊर्मी व्यर्दतः पशौ वा पुरुषे वाऽभ्यवेते, तौ गृह्णाति ॥**

तदिदानीं क्रमेण विधास्यते । तत्र प्रथममूर्मिद्वयग्रहणं विधत्ते– अथाध्वर्युरिति । चतुर्गृहीताज्येन सह आपः वक्ष्यमाणाः षोडश अभिलक्ष्य अवैति गच्छतीति सर्वशेषः । तत् तत्र नद्यां पशुपुरुषयोरन्यतरस्मिन् अभ्यवेते अवगाढे सति यौ ऊर्मी व्यर्दतः विविधं पूर्वापरीभावेन गच्छतः तौ गृह्णीयात् । शब्रासा.

**स यः प्राङुदर्दति तं गृह्णाति– 'वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा, वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि' इति ॥**

तत्र ऊर्मिद्वयस्यानियमेन समस्य वा ग्रहणे प्राप्ते क्रमं विधत्ते– स यः प्राङिति । यः ऊर्मिः प्राङ् प्राङ्मुखः उदर्दति उद्गच्छेत् तं गृह्णीयात् । तत्र हवनमन्त्रं ग्रहणमन्त्रं च विधत्ते– वृष्ण ऊर्मिरिति । स्वाहान्तो हवनमन्त्रः, द्वितीयो ग्रहणमन्त्र इति विभागः । अर्थस्तु– हे ऊर्मे, वृष्णः वर्षितुः सेक्तुर्वा संबन्धी ऊर्मिः भवसि । राष्ट्रदाः त्वं तु स्वभावत एव, राष्ट्रं जनपदं ददातीति राष्ट्रदाः । अतो राष्ट्रं मे मह्यं देहि । स्वाहा इति होमार्थः । द्वितीयोऽप्येवं व्याख्येयः । तत्र अमुष्मै इति विशेषः । एतन्नामकाय यजमानाय मह्यं देहीति तस्यार्थः । एवमुपरितना अपि मन्त्रा व्याख्येयाः । शब्रासा.

**अथ यः प्रत्यङ्ङुदर्दति तं गृह्णाति– 'वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा, वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि' इति । ताभिरभिषिञ्चति । वीर्यं वा एतदपामुदर्दति पशौ वा पुरुषे वाऽभ्यवेते । वीर्येणैवैनमेतदभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

द्वितीयस्योर्मेर्ग्रहणं विधत्ते– अथ यः प्रत्यङिति । वृषसेन इति । वृषसेनः । वृषु सेचने । सेनो नाम संहतिः । वर्षणशीलजलसंघो भवसि । शिष्टं पूर्ववत् । ऊर्मिद्वयं जलवीर्यात्मना प्रशंसति– वीर्यं वा इति । उभयोरप्यूर्म्योरेकत्वेन परिगणनमाह– एता वा एका आप इति । शब्रासा.

**अथ स्यन्दमाना गृह्णाति– 'अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, अर्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति । ताभिरभिषिञ्चति । वीर्येण वा एताः स्यन्दन्ते । तस्मादेनाः स्यन्दमाना न किंचन प्रतिधारयते । वीर्येणैवैनमेतदभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

प्रवहन्तीनामपां ग्रहणं विधत्ते– अथ स्यन्दमाना इति । स्यन्दमानाः प्रवहन्तीरपो गृह्णीयात् । तन्मन्त्रस्याप्ययमर्थः– हे आपः, अर्थेतः अर्थः प्रयोजनं गच्छन्तीति तादृश्यः, स्थ भवथ । अत्र दत्त इति विशेषः । प्रवहन्तीनामपां वीर्यात्मकत्वमाह– वीर्येणेति । यत आपो वीर्येणैव स्यन्दन्ते, तस्मात् स्यन्दमानाः एनाः अपः किंचन वस्त्वपि प्रति मुखं (?) न धारयते न धृतं भवति । यद्वा, प्रवहन्तीरपो न कश्चिदपि धारयितुं शक्नोतीत्यर्थः । शब्रासा.

**अथ याः स्यन्दमानानां प्रतीपं स्यन्दन्ते ता गृह्णाति– 'ओजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त**

स्वाहा, ओजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति । ताभिरभिषिञ्चति । वीर्येण वा एताः स्यन्दमानानां प्रतीपꣳ स्यन्दन्ते । वीर्येणैवैनमेतदभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥

प्रतिलोमं प्रवहन्तीनामपां ग्रहणं विधत्ते- अथ याः स्यन्दमानानामिति । स्यन्दमानानां अपां मध्ये प्रतीपं प्रतिकूलं स्यन्दन्ते ताः गृह्णीयात् । ओजस्वतीः बलवत्यः स्थ । वीर्येणेत्यादि पूर्ववत् व्याख्येयम् ।

शब्रासा.

अथापयतीर्गृह्णाति- 'आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति । ताभिरभिषिञ्चति । एतस्यै वा एषाऽपच्छिद्यैषैव पुनर्भवति । अपि ह वा अस्यान्यराष्ट्रीयो राष्ट्रे भवति । अप्यन्यराष्ट्रीयमवहरते । तथाऽस्मिन् भूमानं दधाति । भूम्नैवैनमेतदभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥

नद्याः सकाशात् अपच्छिद्य गच्छन्तीनामपां ग्रहणं विधत्ते- अथापयतीरिति । अपयतीः नदीप्रवाहं परित्यज्य पृथक् प्रवाहरूपेण याः स्यन्दन्ते अपयत्यः, ता गृह्णीयात् । हे आपः, आप्नुवन्ति सर्वमित्यापः, परिवाहिणीः परितः सर्वतः वाहो यासां ताः । यद्वा, परिवाहिणीः परित्यज्य पृथक् वहन्त्यः स्थ । तत्र स्वाहान्तो हवनमन्त्रः, उत्तरो ग्रहणमन्त्र इति प्रागुक्तम् । एवमुत्तरत्राप्यवगन्तव्यम् । परिवाहिणीभिरभिषेकं प्रशंसति- एतस्यै वा इति । एषा परिवाहिणी नदी एतस्याः महानद्याः सकाशात् अपच्छिद्य पृथक्कृत्य परिवहति । ततः एषैव पुनर्भवति, संसृष्टा परिणदी पुनरेषैव महानदी भवतीत्यर्थः । यस्मादपच्छिन्ना नदी पुनः तां महानदीं प्राप्नोति, तस्मात् अस्य एताभिरभिषिक्तस्य अन्यराष्ट्रीयः पुरुषः राष्ट्रे स्वराष्ट्रे भवति अन्यराष्ट्रीयमवहरते वशयति । यथा महानदी परिणदीसंसर्गेण भूयसी जाता तथा तस्मिन् राजनि अन्यराष्ट्रीयसमवधानेन भूमानं भूयस्त्वं दधाति ।

शब्रासा.

अथ नदीपतिं गृह्णाति- 'अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा, अपां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देहि' इति । ताभिरभिषिञ्चति । अपां वा एष पतिः यन्नदीपतिः । विशामेवैनमेतत्पतिं करोति । एता वा एका आपः । ता एवैतत्संभरति ॥

अथ समुद्रोदकग्रहणं विधत्ते- अथ नदीपतिं गृह्णातीति । नदीपतिसमुद्रस्थितानामपामविशेषेण ग्रहणे प्राप्ते सूद्यानामुच्छलन्तीनामपां ग्रहणं कर्तव्यमिति विशेषः, 'नदीपतेः सूद्याः' इति श्रुत्यन्तरात् । सुष्ठु उद्यन्ति ऊर्ध्वं यान्तीति सूद्याः, ता गृह्णीयादित्यर्थः । अपां उदकानां पतिः पालकः ।

शब्रासा.

अथ निवेष्यं गृह्णाति- 'अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा, अपां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि' इति । ताभिरभिषिञ्चति । गर्भं वा एतदाप उपनिवेष्टन्ते । विशामेवैनमेतद्गर्भं करोति । एता वा एका आपः । ता एवैतत्संभरति ॥

अथाऽऽवर्तोदकग्रहणं विधत्ते- अथ निवेष्यमिति । निवेष्यते आवर्त्यते अस्मिन् तृणादिकमिति निवेष्यः आवर्तः । तत्रत्यमुदकं गृह्णीयात् । अपां उदकानां गर्भः अपत्यं भवति । 'गर्भं वा एतत्' इत्यादिष्वयमर्थः ।

शब्रासा.

अथ यः स्यन्दमानानाꣳ स्थावरो ह्रदो भवति प्रत्यातापे ता गृह्णाति- 'सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति । ताभिरभिषिञ्चति । वर्चसैवैनमेतदभिषिञ्चति । सूर्यत्वचसमेवैनमेतत्करोति । वरुण्या वा एता आपो भवन्ति याः स्यन्दमानानां न स्यन्दन्ते । वरुणसवो वा एष यद्राजसूयम् । तस्मादेताभिरभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥

अथ यः स्यन्दमानानामिति । हे आपः, सूर्यत्वचसः । सूर्यस्य त्वक् दीप्तिः यासां ताः । यद्वा, सूर्यस्य

त्वक् शरीरं प्रतिबिम्बरूपेण यासु तिष्ठति ताः तथाविधाः स्थः । वर्चसैवेति । वर्चसा दीप्त्या अभिषिक्तवान् भवति । सूर्यत्वचसं सूर्यसमानतेजस्कं कृतवान् भवति । वरुण्या इति । स्थावरा आपः वरुणदेवत्या इत्यर्थः । वरुणसव इति । राजसूयं इति यत् एषः वरुणसवः वरुणाभिषेकः, वरुणः अभिषिच्यते यस्मिन्निति सः । अतो वरुणदेवत्याभिः ह्रद्याभिरद्भिरभिषेकः कर्तव्यः ।

शब्रासा.

**अथ या आतपति वर्षन्ति ता गृह्णाति– 'सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति । ताभिरभिषिञ्चति । वर्चसैवैनमेतदभिषिञ्चति । सूर्यवर्चसमेवैनमेतत्करोति । मेध्या वा एता आपो भवन्ति या आतपति वर्षन्ति । अप्राप्ता हीमां भवन्ति । अथैना गृह्णाति । मेध्यमेवैनमेतत्करोति । एता वा एका आपः । ता एवैतत्संभरति ॥**

अथाऽऽतपवर्ष्याग्रहणं विधत्ते– अथ या आतपतीति । सूर्ये आतपति सति या वर्षन्ति स्यन्दन्ते ता गृह्णीयात् । 'सूर्यवर्चस इत्यातपति वर्ष्याणाम्' ( आपश्रौ. १८।१३। १० ) इति हि आपस्तम्बः । सूर्यवर्चसः सूर्यदीप्तियुक्ताः । शिष्टं पूर्ववत् । मेध्या वा इति । सूर्यतेजसा युक्तत्वात् आतपवर्ष्याः शुद्धा इत्यर्थः । तासां ग्रहणे कंचिद्विशेषं विधत्ते– अप्राप्ता हीति । इमां भूमिं अप्राप्ताः भवन्ति भूमौ न पतिता भवन्ति । अथ तदानीमेव एनाः अपः गृह्णीयात् ।

शब्रासा.

**अथ वैशन्तीर्गृह्णाति– 'मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति । ताभिरभिषिञ्चति । विशमेवास्मा एतत्स्थावरामनपक्रमिणीं करोति । एता वा एका आपः । ता एवैतत्संभरति ॥**

अथ सरस्यानामपां ग्रहणं विधत्ते– अथ वैशन्तीरिति । वेशन्तः अल्पसरः, तत्र भवा अपो गृह्णीयात् । हे आपः, मान्दाः स्थ प्रवाहाभावात् मन्दस्वभावाः स्थ । यद्वा, मन्दते स्तुत्यम् । भूतानि यत्र मन्दन्ते इति मान्दाः । विशमेवेति । मान्दाभिः अद्भिरभिषेकेण अस्मै विशं प्रजां स्थावरां स्थिरां अनपक्रमिणीं स्वाधीनां कृतवान् भवतीत्यर्थः ।

शब्रासा.

**अथ कूप्या गृह्णाति– 'व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति । ताभिरभिषिञ्चति । तद्या इमां परेणापस्ता एवैतत्संभरति । अपामु चैव सर्वत्वाय । तस्मादेताभिरभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

कूप्यानामपां ग्रहणं विधत्ते– अथ कूप्या इति । कूपे भवाः कूप्याः । व्रजक्षितः स्थेति । व्रज इति मेघनामसु पठितः ( निघण्टुः १।१०।११ ) । इह तु उदकधारणसामान्यात् कूपोऽभिधीयते । व्रजे कूपे क्षितः निवसन्त्यः । क्षि निवासगत्योः । क्विप् । कूपस्थाः स्थ । तद्या इमामिति । इमां भूमिं परेण भूमेरधस्तात् विप्रकृष्टे देशे कूपे स्थिताः अपः गृह्णीयात् । किमर्थं भूमिस्थितानामपां ग्रहणम् ? तत्राऽऽह– अपामु चेति । अपां सर्वत्वाय सर्वेषामुदकानां समष्ट्या इत्यर्थः ।

शब्रासा.

**अथ प्रुष्वा गृह्णाति– 'वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त' इति । ताभिरभिषिञ्चति । अन्नाद्येनैवैनमेतदभिषिञ्चति । अन्नाद्यमेवास्मिन्नेतद्दधाति । इदं वा असावादित्य उद्यन्नेव यथाऽयमग्निर्निर्दहेदेवमोषधीरन्नाद्यं निर्दहति । तदेता आपोऽभ्यवयत्यः शमयन्ति । न ह वा इहान्नाद्यं परिशिष्येत । यदेता आपो नाभ्यवेयुः । अन्नाद्येनैवैनमेतदभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

अथ नीहारोदकानां ग्रहणं विधत्ते– अथ प्रुष्वा इति । प्रुष्वाः नीहाराः । हे आपः, वाशाः स्थ । वश कान्तौ । सर्वैः काम्यमाना भवथ । यद्वा, वश्याः स्थ । नीहारो हि नदीप्रवाहवन्मनुष्यादिगतिं न प्रतिबध्नाति । अतो वश्यत्वम् । प्रुष्वाणामन्नाद्यात्मकत्वमुपपादयति– इदं वा असाविति । उद्यन् असौ अन्तरिक्षे दृश्यमानः

आदित्यः इदं ओषधिरूपं अन्नाद्यं निर्दहति । अन्नं च तत् आद्यं अदनीयं चेत्यन्नाद्यम् । तत्र दृष्टान्तः- यथाऽयमग्निर्निर्दहेदेवमित्यादि । तत् तदा सस्यानामातपजातम्लानिसमये नीहारगताः आपः अभ्यवयत्यः । सव्यतिरेकं दर्शयति— न ह वा इत्यादिना । तस्मात् ओषधिवर्धनहेतुभूताभिः प्रुष्वाभिरद्भिः अभिषेकेण यजमाने अन्नाद्यमेव निहितवान् भवतीत्यर्थः । शब्रासा.

**अथ मधु गृह्णाति— ' शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ' इति । ताभिरभिषिञ्चति । अपां चैवैनमेतदोषधीनां च रसेनाभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

अथ मधुनो ग्रहणं विधत्ते— अथ मध्विति । हे मधु, द्रवरूपा आपः शविष्ठाः बलवत्तमाः स्थ । अपां चैवेति । एतत् एताभिः मधुद्रवरूपाभिरद्भिः अभिषेकेण अपां च ओषधीनां च रसेन अभिषिक्तवान् भवति, मधुनो द्वयात्मकत्वादित्यर्थः । शब्रासा.

**अथ गोर्विजायमानाया उल्ब्या गृह्णाति— ' शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ' इति । ताभिरभिषिञ्चति । पशुभिरेवैनमेतदभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

अथ गोरुल्ब्यानां ग्रहणं विधत्ते— अथ गोरिति । विजायमानायाः प्रसूयमानायाः गोः उल्ब्याः उल्बे गर्भवेष्टने भवाः अपः गृह्णीयात् । हे आपः, शक्वरीः गर्भरक्षणे शक्ताः समर्था भवथ । पशुभिरिति । पशुसंबन्धिनीभिरेताभिरद्भिः अभिषेकेण पशुभिः एव एनं सुन्वन्तमभिषिक्तवान् भवतीत्यर्थः । शब्रासा.

**अथ पयो गृह्णाति— ' जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ' इति । ताभिरभिषिञ्चति । पशुभिरेवैनमेतदभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

अथ पयसां ग्रहणं विधत्ते— अथ पय इति । हे क्षीरात्मिका आपः, जनभृतः स्थ । जनान् बिभ्रतीति जनभृतः । क्षीरेण हि प्राणिजातं पुष्यते । शब्रासा.

**अथ घृतं गृह्णाति— ' विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ' इति । ताभिरभिषिञ्चति । पशूनामेवैनमेतद्रसेनाभिषिञ्चति । एता वा एका आपः । ता एवैतत्संभरति ॥**

अथ घृतस्य ग्रहणं विधत्ते— अथ घृतमिति । विश्वभृतः स्थ हे घृतद्रवरूपाः आपः, विश्वपोषिका भवथ । पशूनामिति । घृतस्य पशुरसत्वं क्षीरादिद्वारा प्रसिद्धम् । शब्रासा.

**अथ मरीचीरञ्जलिना संगृह्यापिसृजति— ' आपः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ' इति । एता वा आपः स्वराजो यन्मरीचयः । ता यत्स्यन्दन्त इवान्योऽन्यस्या एवैतच्छ्रिया अतिष्ठमाना उत्तराधरा इव भवन्त्यो यन्ति । स्वाराज्यमेवास्मिन्नेतद्दधाति । एता वा एका आपः । ता एवैतत्संभरति ॥**

एतदेव सारस्वतवर्जं चतुर्गृहीताज्येन पूर्वं हुत्वा हुत्वा पञ्चदशानामपां ग्रहणं विहितम् । अथ अन्तिमस्य जलस्य ग्रहणं सविशेषं विधत्ते— अथ मरीचीरिति । मरीचीः अञ्जलिना पात्रेण संगृह्य गृहीत्वा अपिसृजति, सर्वासु गृहीतासु अप्सु संसृजेदित्यर्थः । अत्र सूत्रम्— ' आपः स्वराज इति मरीचीर्गृहीत्वाऽञ्जलिना सर्वासु संसृजति ' ( काश्रौ. १५।४।३६ ) इति । हे मरीचिरूपा आपः, स्वराजः स्थ स्वयमेव राजमाना भवथ । अत्र होमाभावात् स्वाहान्तः पूर्वो मन्त्रो न पठितः । कथं मरीचीनामप्त्वेन परिगणनमिति तदुपपादयति— एता वा आप इति । मरीचयः इति यदेताः स्वराजः स्वयमेव दीप्यमानाः आपः । ता यत्स्यन्दन्त इति । यत् यस्मात् ताः मरीचयः स्यन्दन्त इव प्रवहन्तीव । इवशब्दः उपमार्थे, साक्षात् प्रवहणाभावात् । यथा जलसंघाः उपर्युपरिभावेन वर्तन्ते तद्वदेता मरीचयः अन्योन्यस्याः मरीचेः

श्रियै शोभायै अतिष्ठमानाः स्थातुमसहिष्णवः उत्तराधरा इव भवन्त्यः यन्ति गच्छन्ति । अतो जलसाम्यात् अप्त्वेन परिगणनमित्यर्थः । मरीचीनां ग्रहणं स्वाराज्यहेतुत्वेन प्रशंसति– स्वाराज्यमिति । यतो मरीचयः स्वराज आपः ।

शब्रासा.

**ता वा एताः सप्तदशापः संभरति । सप्तदशो वै प्रजापतिः । प्रजापतिर्यज्ञः । तस्मात्सप्तदशापः संभरति ॥**

संभृतानामपां सप्तदशसंख्यां प्रजापत्यात्मना स्तौति– ता वा एताः सप्तदशेति । प्रजापतेः सप्तदशत्वं प्रागुक्तम् । ( प्रजापतेः सप्तदशत्वं 'आश्रावय' ( तैसं १।६।११।२ ) इत्यादिसप्तदशाक्षरमन्त्रात्मकत्वादित्यवगन्तव्यम् । स एव यज्ञः, आश्रावयेत्यादिमन्त्राभावे यज्ञस्यासिद्धेः । शब्रा. ५।१।२।११ ) ।

शब्रासा.

**षोडश ता आपो या अभिजुहोति । षोडशाहुतीर्जुहोति । ता द्वात्रिꣳशत् । द्वयीषु न जुहोति सारस्वतीषु च मरीचिषु च । ताश्चतुस्त्रिꣳशत् । त्रयस्त्रिꣳशद्वै देवाः । प्रजापतिश्चतुस्त्रिꣳशः । तदेनं प्रजापतिं करोति ॥**

अथ उक्तानां सारस्वतीप्रभृतिमरीच्यन्तानामपामाहुतीनां च संख्यां समस्य प्रजापत्यात्मना प्रशंसति– षोडश ता आप इति । याः आपः अभिलक्ष्य जुहोति ताः षोडश ऊर्मिद्वयस्य विवेके षोडशसंख्याकाः भवन्ति । आहुतयोऽपि षोडश । आहुतिभिः रहिताः सारस्वत्यः मरीचयः इति द्वय्यः, ताः संभूय चतुस्त्रिंशत् संपद्यन्ते । अत्र चतुस्त्रिंशत्संपत्त्या चतुस्त्रिंशद्देवतात्मकं प्रजापतिमेव कृतवान् भवतीति तत्करणं प्रशस्तमित्यर्थः ।

शब्रासा.

**अथ यद्धुत्वा हुत्वा गृह्णाति । वज्रो वा आज्यम् । वज्रेणैवैतदाज्येन स्पृत्वा स्पृत्वा स्वीकृत्य गृह्णाति ॥**

होमपूर्वकं ग्रहणं प्रशंसति– अथ यद्धुत्वा हुत्वेति । आज्यस्य वज्रात्मकत्वश्रुतिः प्रागुदाहृता ( शब्रा. १।५। ३।४ ) । वज्ररूपेणाज्येन स्पृत्वा स्पृत्वा हिंसित्वा हिंसित्वा ततः स्वीकृत्य स्वाधीनं कृत्वा गृह्णानो भवेत् । यथा लोके राजादिः प्रबलं शत्रुप्रभृतिं जनं प्रथमं बाधित्वा पश्चात् स्वाधीनं करोति तद्वदित्यर्थः ।

शब्रासा.

**अथ यत्सारस्वतीषु न जुहोति । वाग्वै सरस्वती । वज्र आज्यम् । नेद्वज्रेणाज्येन वाचꣳ हिनसानीति । तस्मात् सारस्वतीषु न जुहोति ॥**

सारस्वतीषु मरीचिषु च होमाभावे कारणमाह– अथ यदिति । सरस्वत्या वाक्त्वात् वाचो वज्रेण हिंसा मा भूदिति न होतव्यम् ।

शब्रासा.

**अथ यन्मरीचिषु न जुहोति । नेदनद्धेवैताम् आहुतिं जुहवानीति । तस्मान्मरीचिषु न जुहोति ॥**

अथ यन्मरीचिष्विति । मरीचिष्वपि अनद्धा अस्थाने, तासां होमाधिकरणत्वासंभवान्न होतव्यमित्यर्थः । नेत् इति निपातः परिभये, 'जुहवानि' इत्यनेन संबध्यते ।

शब्रासा.

**ताः सार्धमौदुम्बरे पात्रे समवनयति– 'मधुमतीर्मधुमतीभिः पृच्यन्ताम्' इति । रसवती रसवतीभिः पृच्यन्तामित्येवैतदाह । 'महि क्षत्रं क्षत्रियाय वन्वानाः' इति । तत् परोऽक्षं क्षत्रं यजमानायाशिषमाशास्ते यदाह– महि क्षत्रं क्षत्रियाय वन्वाना इति ॥**

विधत्ते– ताः सार्धमिति । ताः विहिताः पृथक् पृथक् पात्रे गृहीताः आपः सार्धं संभूय एकस्मिन् पात्रे समवनयति आसिञ्चेदित्यर्थः । मधुमतीः मधुररसवत्यः आपः मधुमतीभिः अद्भिः पृच्यन्ताम् । पृची संपर्के । संपृच्यन्ताम् । ता विशिनष्टि– महि महत् क्षत्रं बलं क्षत्रियकुलं वा क्षत्रियाय यजमानाय वन्वानाः दातुं याचमानाः कामयमाना इति । मन्त्रमनूद्य व्याचष्टे– मधुमतीरित्यादि । महि क्षत्रं क्षत्रियाय वन्वानाः इति यदाह तत् तेन यजमानाय परोक्षं क्षत्रं आशासनमाशासितवान् भवतीति योजना । क्षत्रियाय इति तात्स्थ्याभिधानात् वन्वानाः इति याचनाभिधानाद्वा आशिषः परोक्षत्वमित्यर्थः ।

शब्रासा.

**ता अग्रेण मैत्रावरुणस्य धिष्ण्यꣳ सादयति– 'अनाधृष्टाः सीदत सहौजसः' इति । अना-**

**धृष्टाः सीदत रक्षोभिरित्येवैतदाह । सहौजस इति । सवीर्याः इत्येवैतदाह । ‘ महि क्षत्रं क्षत्रियाय दधतीः ’ इति । तत् प्रत्यक्षं क्षत्रं यजमानायाशिषमाशास्ते यदाह— महि क्षत्रं क्षत्रियाय दधतीरिति ॥**

संसृष्टानामपां मैत्रावरुणधिष्ण्यस्य पुरोदेशे सादनं समन्त्रकं विधत्ते— ता अग्रेणेति । हे आपः, अनाधृष्टाः रक्षोभिरबाधिताः सहौजसः ओजसा बलेन सहिताः सवीर्याः सीदत उपविशत । महि महत् क्षत्रं बलं क्षत्रियत्वं वा क्षत्रियाय दधतीः दधत्यः धारयन्त्यः प्रयच्छन्त्य इति । मन्त्रं व्याचष्टे— अनाधृष्टा इति । दधतीः इति प्रदानस्य साक्षादुक्तेः प्रत्यक्षत्वमाशिषः सीदत इति मध्यमपुरुषप्रयोगाद्वेति वेदितव्यम् । शब्रासा.

राज्ञोऽभिषेकविधिः, पार्थहोमः, अभिषेकपात्राणि, वासःपरिधापनम्, धनुरिष्वादिधारणम्, आविद्वाचनम्

**[1]तं वै माध्यन्दिने सवनेऽभिषिञ्चति । एष वै प्रजापतिः । य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु प्रजायन्ते । तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति । मध्यतः सुवति ॥**

पञ्चमे ब्राह्मणे यजमानाभिषेकः तत्रत्या धर्माश्च विधीयन्ते । तत्र यजमानाभिषेकं सकालं विधत्ते— तं वै माध्यन्दिन इति । माध्यन्दिनसवने क्रियमाणमभिषेकं प्रशंसति— एष वै प्रजापतिरिति । माध्यन्दिनसवने क्रियमाणेनाभिषेकेण एनं यजमानं मध्यतः एव यज्ञरूपप्रजापतिमध्ये एव निहितवान् भवति । मध्यतः मध्ये सुवति प्रेरयति, अध्वर्युरित्यर्थः । शब्रासा.

**अगृहीते माहेन्द्रे । एष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रः । अप्यस्यैतन्निष्केवल्यमेव स्तोत्रम्, निष्केवल्यꣳ शस्त्रम् । इन्द्रो वै यजमानः । तदेनꣳस्व एवायतनेऽभिषिञ्चति । तस्मादगृहीते माहेन्द्रे ॥**

कालविशेषं विधत्ते— अगृहीत इति । माहेन्द्रे ग्रहे अगृहीते सोमरसेनापूर्णे, मरुत्वतीयान्ते इत्यर्थः । माहेन्द्रग्रहणात्पूर्वं यजमानाभिषेकं स्वायतननिधानरूपेण प्रशंसति— एष वा इन्द्रस्येति । इदं प्रथमाध्याये व्याख्यातम् । [ माहेन्द्र इति यत् एष वै इन्द्रस्यासाधारणो ग्रहः, ग्रहणमन्त्रे केवलेन्द्रस्यैव देवतात्वेन प्रतिपादनात् । निःशेषेण केवलमिन्द्रस्यायमिति निष्केवल्यो ग्रहः । माध्यन्दिने सवने हि माहेन्द्रग्रहग्रहणम् । तच्च सवनमिन्द्रस्येति नियतम् । श्रूयते हि— ‘ प्रातः सुतमपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते । ’ ( ऋसं. ४।३५।७ ) । न केवलं माहेन्द्रग्रह एव निष्केवल्यः, अपि तु तद्ग्रहणानन्तरं प्रयोज्ये स्तुतशस्त्रे अपि केवलेन्द्रदेवताकत्वात् इन्द्रस्य असाधारणमित्यत ( ? असाधारणे इत्यत ) आह— अप्यस्यैतन्निष्केवल्यमेवेति । अस्तु ग्रहादीनां केवलेन्द्रदेवताकत्वम् । तेन प्रकृते किमायातमित्यत आह— इन्द्रो वै यजमान इति । ... यागलक्षणेन परमैश्वर्येण योगात् यजमानः इन्द्ररूपः । वैशब्दः शाखान्तरीयां प्रसिद्धिं द्योतयति, ‘ एष खलु वा एतर्हीन्द्रो यो यजते ’ ( तैसं. ६।१।११।१ ) इति तैत्तिरीयके श्रवणात् । शब्रा. ५।१।३।४.) ] शब्रासा.

**अग्रेण मैत्रावरुणस्य धिष्ण्यꣳ शार्दूलचर्मोपस्तृणाति— ‘ सोमस्य त्विषिरसि ’ इति । यत्र वै सोम इन्द्रमत्यपवत । स यत्ततः शार्दूलः समभवत् । तेन सोमस्य त्विषिः । तस्मादाह— सोमस्य त्विषिरसीति । ‘ तवेव मे त्विषिर्भूयात् ’ इति । शार्दूलत्विषिमेवास्मिन्नेतद्दधाति । तस्मादाह— तवेव मे त्विषिर्भूयादिति ॥**

अत्र यदुक्तं कात्यायनेन— ‘ मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति अनाधृष्टाः सीदतेति पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधवटाश्वत्थान्यभिषेकाय । ’ ( काश्रौ. १५।४।३८ ) इति, ‘ मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्माऽऽस्तृणाति सोमस्य त्विषिरिति । अपरेऽन्ते सीसं निदधाति । पार्थानामग्नये स्वाहेति षड् जुहोति प्रतिमन्त्रम् । ’ ( काश्रौ. १५।५।१–३ ) इति च, तदिदं क्रमेण विधित्सुः व्याघ्रचर्मास्तरणं समन्त्रकं विधत्ते—

---

( १ ) शब्रा. ५।३।५।१–३७.

अग्रेणेति। मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्माऽऽस्तृणीयात्। हे चर्मन्, सोमस्य त्विषिः दीप्तिः असि। तवेव यथा तव दीप्तिरस्ति तथा मे मम त्विषिः दीप्तिः भूयात् अस्त्विति। शार्दूलस्य सोमत्विषित्वमाख्यायिकामुखेनोपपादयति– यत्र वै सोम इति। पूर्वमिन्द्रेण पीयमानः सोमः तं अत्यपवत शरीरादधो निरगच्छत्। स सोमो यदा अत्यपवत ततः सोऽतिपवितः सोमः शार्दूलः संभूतवान्। तस्मात् शार्दूलस्य सोमकार्यत्वात् तदीयत्वचः सोमत्विषित्वम्। 'तवेव मे' इति मन्त्रभागस्य तात्पर्यमाह– तवेव म इति। एतत् एतेन मन्त्रभागकृतेन अस्मिन् यजमाने शार्दूलदीप्तिमेव निहितवान् भवति।

शब्रासा.

**अथ पार्थानि जुहोति। पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे। सोऽकामयत– सर्वमन्नाद्यमवरुन्धीयेति। तस्मा एतान्यजुहवुः। स इदꣳ सर्वमन्नाद्यमवरुरुधे। अपि ह स्मास्मा आरण्यान् पशूनभिह्वयन्ति– असावेहि, राजा त्वा पक्ष्यत इति। तथेदꣳ सर्वमन्नाद्यमवरुरुधे। सर्वꣳ ह वा अन्नाद्यमवरुन्द्धे यस्यैवं विदुष एतानि हूयन्ते॥**

अथाभिषेकस्य पुरस्तात् पश्चाच्च क्रियमाणान् पार्थहोमान् विधत्ते– अथ पार्थानीति। पार्थानि पृथिना अनुष्ठितानि। एतेषां पृथिसंबन्धं दर्शयति– पृथी हेति। वैन्यः वेनो नाम राजा, तस्य पुत्रः पृथी नाम मनुष्याणां मध्ये प्रथमः अभिषिक्तः। सर्वे अन्नाद्यं अवरुन्धीय स्वाधीनं कुर्यां इति कामयमानाय तस्मै पृथये एतानि पार्थानि अजुहवुः अध्वर्यवः। ततः स राजा इदं सर्वमन्नाद्यं अवरुरुधे स्वाधीनं कृतवान्। सर्वान्नावरोधकत्वं दर्शयति– अपि ह स्मेति। अपि खलु अस्मै यजमानाय तदर्थं आरण्यान् अरण्ये भवान् पशून् अभिह्वयन्ति। किमिति? असाविति। तत्तन्मृगनाम्नः संबुद्ध्यन्तस्य सामान्यनिर्देशः। हे पशो, एहि आगच्छ। अयं राजा त्वा त्वां पक्ष्यते भोक्तुं पक्वं करिष्यति इति। सोऽपि पशुः तद्वचः श्रुत्वा तत्समीपं स्वयमेवागच्छति। तथा सति ग्राम्यारण्यभक्षणस्य सर्वस्यावश्यावरोधः। विदुषोऽद्यतनस्यापि अनुष्ठातुः तत्फलमाह– सर्वं ह वा इति।

शब्रासा.

**तानि वै द्वादश भवन्ति। द्वादश वै मासाः संवत्सरस्य। तस्माद्द्वादश भवन्ति॥**

एतेषां संख्यां विधत्ते– तानि वै द्वादशेति। उक्तां संख्यां संवत्सरात्मना प्रशंसति– द्वादशेति। शब्रासा.

**षट् पुरस्तादभिषेकस्य जुहोति। षडुपरिष्टात्। तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति। मध्यतः सुवति॥**

**स यानि पुरस्तादभिषेकस्य जुहोति बृहस्पतिस्तेषामुत्तमो भवति। अथ यान्युपरिष्टादभिषेकस्य जुहोति, इन्द्रस्तेषां प्रथमो भवति। ब्रह्म वै बृहस्पतिः। इन्द्रियं वीर्यम्। इन्द्र एताभ्यामेवैनमेतद्वीर्याभ्यामुभयतः परिबृꣳहति॥**

एतेषां हवनकालं विधत्ते– षडिति। द्वादशानां पदार्थानां मध्ये पूर्वषट्कस्यान्ते 'बृहस्पतये स्वाहा' इति पठ्यते, उत्तरषट्कस्यादौ 'इन्द्राय स्वाहा' इति। तयोरुभयोर्मध्ये अभिषेकेण यजमानं ब्रह्मक्षत्रवीर्याभ्यामुभयतः संवर्धितवान् भवतीत्यर्थः। शब्रासा.

**स जुहोति यानि, पुरस्तादभिषेकस्य जुहोति– 'अग्नये स्वाहा' इति। तेजो वा अग्निः। तेजसैवैनमेतदभिषिञ्चति। 'सोमाय स्वाहा' इति। क्षत्रं वै सोमः। क्षत्रेणैवैनमेतदभिषिञ्चति। 'सवित्रे स्वाहा' इति। सविता वै देवानां प्रसविता। सवितृप्रसूत एवैनमेतदभिषिञ्चति। 'सरस्वत्यै स्वाहा' इति। वाग्वै सरस्वती। वाचैवैनमेतदभिषिञ्चति। 'पूष्णे स्वाहा' इति। पशवो वै पूषा। पशुभिरेवैनमेतदभिषिञ्चति। 'बृहस्पतये स्वाहा' इति। ब्रह्म वै बृहस्पतिः। ब्रह्मणैवैनमेतदभिषिञ्चति। एतानि पुरस्तादभिषेकस्य जुहोति। तान्येतान्यग्निनामानीत्याचक्षते॥**

अभिषेकस्य पुरस्तात् कर्तव्यं होममनूद्य मन्त्रान् विधत्ते– स जुहोतीति। 'अग्नये स्वाहा' इत्यादयो मन्त्राः।

तत्रैकैकमनूद्य स्तौति— तेजो वा अग्निरित्यादिना । अर्थवादवाक्येषु स्पष्टोऽर्थः । सोमादिपदानां देवतान्तरवाचकत्वं व्युदस्यति— तान्येतान्यग्निनामानीति । तानि पूर्वाणि पार्थानि अग्निनामान्याचक्षते, ब्रह्मवादिन इति शेषः, अग्नेः सर्वदेवतात्मकत्वादिति भावः । शब्रासा.

**अथ जुहोति यान्युपरिष्टादभिषेकस्य जुहोति— 'इन्द्राय स्वाहा' इति । वीर्यं वा इन्द्रः । वीर्येणैवैनमेतदभिषिञ्चति । 'श्लोकाय स्वाहा' इति । वीर्यं वै श्लोकः । वीर्येणैवैनमेतदभिषिञ्चति । 'अंशाय स्वाहा' इति । वीर्यं वा अंशः । वीर्येणैवैनमेतदभिषिञ्चति । 'भगाय स्वाहा' इति । वीर्यं वै भगः । वीर्येणैवैनमेतदभिषिञ्चति । 'अर्यम्णे स्वाहा' इति । तदेनमस्य सर्वस्यार्यमणं करोति । एतान्युपरिष्टादभिषेकस्य जुहोति । तान्येतान्यादित्यनामानीत्याचक्षते ॥**

अभिषेकस्योपरिकर्तव्यं होममन्त्रमनूद्य मन्त्रान् सार्थवादं विधत्ते— अथ जुहोतीति । 'इन्द्राय स्वाहा' इत्यादयो मन्त्राः । अत्र इन्द्रादयः पञ्च देवता अपि वीर्यात्मना स्तुताः । तदेनमस्य सर्वस्येति । अर्यमदेवत्यहोमेन एनं यजमानं सर्वस्य अर्यमणं नियन्तारमधिपतिं कृतवान् भवतीत्यर्थः । इन्द्रादिषड्देवतावाचकानां पदानां देवतानानात्ववाचकत्वं व्युदस्यति— आदित्यनामानीति । इन्द्रादयः शब्दाः आदित्यस्यैव मूर्तिभेदेनावस्थितस्य नामानि । पूर्वमग्निवाचकैर्नामभिः होमेन भूलोके यजमानं निहितवान् भवति, अन्तत आदित्यवाचकैः नामभिः होमेन स्वर्गलोके अवस्थापितवान् भवतीत्युभयार्थवादवाक्यतात्पर्यार्थः । शब्रासा.

**अग्रेण मैत्रावरुणस्य धिष्ण्यमभिषेचनीयानि पात्राणि भवन्ति यत्रैता आपोऽभिषेचनीया भवन्ति ॥**

अभिषेचनीयानां पात्राणां आसादनप्रदेशं विधत्ते— अग्रेणेति । सूत्रं तु पूर्वमुदाहृतम् । अभिषेचनीयशब्दं निर्वक्ति— यत्रेति । यत् तेषु एताः विहिताः सप्तदश आपः अभिषेचनीयाः अभिषेक्तव्याः आसिच्यमानाः भवन्ति तानि अभिषेचनीयानीति । शब्रासा.

**पालाशं भवति । तेन ब्राह्मणोऽभिषिञ्चति । ब्रह्म वै पलाशः । ब्रह्मणैवैनमेतदभिषिञ्चति ॥**

तानि पात्राणि अभिषेक्तृविशेषसहितानि क्रमेण विधत्ते— पालाशमिति । पालाशं पलाशशाखानिर्मितमेकं पात्रम् । तेन पात्रेण ब्राह्मणः यजमानमभिषिञ्चेत् । पालाशेनैव ब्राह्मणकर्तृकयजमानाभिषेककरणे कारणमाह— ब्रह्म वा इति । पलाशः ब्रह्म वै वृक्षेषु ब्राह्मणजातिः । शब्रासा.

**औदुम्बरं भवति । तेन स्वोऽभिषिञ्चति । अन्नं वा ऊर्गुदुम्बरः । ऊर्ग्वै स्वम् । यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति । तेनोर्क् स्वम् । तस्मादौदुम्बरेण स्वोऽभिषिञ्चति ॥**

औदुम्बरमिति । औदुम्बरं उदुम्बरनिर्मितं पात्रं द्वितीयम् । तेन पात्रेण स्वः ज्ञातिः भ्राता अभिषेकं कुर्यात् । तत्रोपपत्तिं दर्शयति— अन्नं वा इतिं । उदुम्बरस्यान्नसाधनत्वात् तदुक्तम् । अन्नमेव पुरुषस्य स्वं धनं यतः, अतोऽस्य पुरुषस्य यावत् स्वं भवति तावत् न एव अशनायति क्षुधितो न भवतीत्यर्थः, धनस्य विद्यमानत्वात् । अतोऽन्नस्य स्वत्वात् अन्नसाधनेनौदुम्बरपात्रेण स्वः ज्ञातिः भ्राता एवाभिषिञ्चेत् । शब्रासा.

**नैयग्रोधपादं भवति । तेन मित्र्यो राजन्योऽभिषिञ्चति । पद्भिर्वै न्यग्रोधः प्रतिष्ठितः । मित्रेण वै राजन्यः प्रतिष्ठितः । तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योऽभिषिञ्चति ॥**

नैयग्रोधपादमिति । तृतीयं नैयग्रोधपादम् । न्यग्रोधो नाम वटः । तस्य पादः शाखावरोहः । तेन निर्मितं नैयग्रोधपादम् । तेन मित्र्यः सखिकर्मणि साधुः सखा राजन्यः अभिषिञ्चेत् । तत्र हेतुमाह— पद्भिरिति । न्यग्रोधस्य पादैरेव प्रतिष्ठा दृश्यते । राजाऽपि हितोपदेशकैराप्तैः सखिभिः प्रतिष्ठितो भवति, नान्यथा । अतः

तेन पात्रेण मित्रकर्तृकमभिषेककरणं युक्तमित्यर्थः ।

शब्रासा.

**आश्वत्थं भवति । तेन वैश्योऽभिषिञ्चति । स यद्देवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत । तस्मादाश्वत्थेन वैश्योऽभिषिञ्चति । एतान्यभिषेचनीयानि पात्राणि भवन्ति ॥**

आश्वत्थमिति । चतुर्थं आश्वत्थं अश्वत्थनिर्मितम् । तेन वैश्यः अभिषिञ्चेत् । अश्वत्थस्य वैश्यसंबन्धं दर्शयति– स यदेवेति । व्याख्यातम् । [ अदः अमुष्मिन् विप्रकृष्टे काले अश्वत्थेऽवस्थितान् मरुतः इन्द्रः आह्वयत । ( शब्रासा. ५।२।१।१७ ) ] विड्रूपाणां मरुतामश्वत्थेऽवस्थानात् वैश्यस्य तत्संबन्धः । शब्रासा.

**अथ पवित्रे करोति । 'पवित्रे स्थो वैष्णव्यौ' इति । सोऽसावेव बन्धुः । तयोर्हिरण्यं प्रवयति । ताभ्यामेता अभिषेचनीया अप उत्पुनाति । तद्यद्धिरण्यं प्रवयति । अमृतमायुर्हिरण्यम् । तदास्वमृतमायुर्दधाति । तस्माद्धिरण्यं प्रवयति ॥**

अथ पवित्रकरणं विधत्ते– अथ पवित्रे इति । हे पवित्रे, वैष्णव्यौ विष्णुः यज्ञः तत्संबन्धिन्यौ दर्भनाड्यौ स्थः भवथः इति मन्त्रस्यार्थः । दर्भनाड्योः विष्णुसंबन्धप्रतिपादकमर्थवादवाक्यमतिदिशति– सोऽसावेव बन्धुरिति । बन्धुः वाक्यशेषः । असौ विप्रकृष्टः, प्रथमकाण्डे पवित्रकरणसमये समाम्नातः । तत्र ह्येवमाम्नातम्– 'पवित्रे स्थो वैष्णव्याविति । यज्ञो वै विष्णुः । यज्ञिये स्थ इत्येवैतदाह' ( शब्रा. १।१।३।१ ) इत्यादिना । तयोर्दर्भयोर्हिरण्यग्रथनं विधत्ते– तयोरिति । दर्भयोः, तयोरिति सप्तमी । तत्र हिरण्यं प्रवयति । वेञ् तन्तुसन्ताने । संग्रथ्नीयादित्यर्थः । विधत्ते– ताभ्यामिति । तच्छब्देन हिरण्यप्रोते पवित्रे लक्ष्येते । ताभ्यां एताः उक्ताः अपः उत्पुनीयात् । हिरण्यग्रथनमनूद्य प्रशंसति– तद्यद्धिरण्यमिति । अमृतमिति । आसु अप्सु इत्यर्थः ।

शब्रासा.

**स उत्पुनाति– 'सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः' इति । सोऽसावेव बन्धुः । 'अनिभृष्टमसि वाचो बन्धुस्तपोजाः' इति । अनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाह– अनिभृष्टमसीति । वाचो बन्धुरिति । यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा वदति । तस्मादाह– वाचो बन्धुरिति ॥**

उत्पवनमनूद्य मन्त्रं विधत्ते– स उत्पुनातीति । 'सवितुर्वः' इति मन्त्रस्य पूर्वभागो व्याख्यातः । हे उदक, अनिभृष्टम् । भ्रस्ज पाके । यवादिवत् वह्निसंयोगेऽपि न नितरां भृष्टं, न विनश्यतीति यावत् । रक्षोभिर्वा न बाधितं भवतीत्यर्थः । वाचो बन्धुः वाग्व्यवहारस्य कारणम् । तपोजाः । तप संतापे । तपःशब्देनाग्निरुच्यते, तस्माज्जातः । मन्त्रं भागशोऽनूद्य व्याख्यास्यन् 'सवितुर्वः' इति मन्त्रभागस्य प्रथमकाण्डे उत्पवनसमये समाम्नातमर्थवादब्राह्मणमतिदिशति– सोऽसाविति । तत्र ह्येवमाम्नातम्– 'सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः' इति । सविता वै देवानां प्रसविता । तत्सवितृप्रसूत एवैतदुत्पुनाति– अच्छिद्रेण पवित्रेणेति । यो वा अयं पवत एषोऽच्छिद्रं पवित्रम् । एतेनैतदाह– सूर्यस्य रश्मिभिरिति । एते वा उत्पवितारो यत्सूर्यस्य रश्मयः । तस्मादाह– सूर्यस्य रश्मिभिरिति । ' ( शब्रा. १।१।३।६ ) इति । अनिभृष्टमसीति सामान्यविवक्षया एकवचनान्तत्वेन प्रयुक्तम् । अपां बहुत्वेन बहुवचनान्ततया व्याचष्टे– अनाधृष्टा स्थेति । अपां वाग्बन्धुत्वमुपपादयति– यावद्वै प्राणेष्विति । प्राणेषु मुखनासिकादिषु यावदपां सद्भावः तावत् पुरुषो वाचं वदति, तद्विरहे शुष्का जिह्वा शब्दानुच्चारयितुं न शक्नोतीत्यर्थः । शब्रासा.

**तपोजा इति । अग्नेर्वै धूमो जायते । धूमादभ्रम् । अभ्राद्वृष्टिः । अग्नेर्वा एता जायन्ते । तस्मादाह– तपोजा इति ॥**

तपोजा इति । अपां परंपरया अग्निजनकत्वं दर्शयति– अग्नेर्वा इति ।

शब्रासा.

**'सोमस्य दात्रमसि' इति । यदा वा एनमेताभिरभिषुण्वन्त्यथाहुतिर्भवति । तस्मादाह– सोमस्य**

**दात्रमसीति । 'स्वाहा राजस्वः' इति । तदेनाः स्वाहाकारेणैवोत्पुनाति ॥**

सोमस्येति । हे उदक, सोमस्य दात्रं दानसाधनं भवसि । उदकसंबन्धादेव सोमरसनिष्पत्तिः । तादृशो रस एव हूयते । अतः सोमस्य दानसाधनभूता भवत । स्वाहाकारेण पूताः स्थ । अत्र स्वाहाशब्दो न होमार्थः, मन्त्रान्ते पाठाभावात् । राजस्वः । राजानं सुवते जनयन्तीति राजस्त्रः, राजोत्पादका इत्यर्थः । सोमदानसाधनत्वमुदकस्य निरूपयति– यदा वा एनमिति । यदा यस्मिन् काले एनं सोमं एताभिः अद्भिः अभिषुण्वन्ति अभिषवं कुर्वन्त्यध्वर्यवः । अथ अभिषवानन्तरं आहुतिर्भवति । शब्रासा.

**ता एतेषु पात्रेषु व्यानयति– 'सधमादो द्युम्निनीराप एताः' इति । अनतिमानिन्य इत्येवैतदाह यदाह– सधमाद इति । द्युम्निनीराप एता इति । वीर्यवत्य इत्येवैतदाह । 'अनाधृष्टा अपस्यो वसानाः' इति । अनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाह– अनाधृष्टा अपस्यो वसाना इति । 'पस्त्यासु चक्रे वरुणः सधस्थम्' इति । विशो वै पस्त्या । विक्षु चक्रे वरुणः प्रतिष्ठामित्येवैतदाह । 'अपाꣳ शिशुर्मातृतमास्वन्तः' इति । अपां वा एष शिशुर्भवति यो राजसूयेन यजते । तस्मादाह– अपाꣳ शिशुर्मातृतमास्वन्तरिति ॥**

विधत्ते– ता एतेष्विति । एतेषु अभिषेचनीयेषु पात्रेषु एताः उक्ताः अपः व्यानयति आसिञ्चेदित्यर्थः । सधमादः । सह माद्यन्तीति सधमादः, परस्परमनतिमानिन्य इत्यर्थः । 'सधमादस्थयोश्छन्दसि' (पा. ६।३।९६) इति सहस्य सधादेशः । द्युम्निनीः वीर्यवत्यः एता आपः रक्षोभिः अनाधृष्टाः अनभिभूताः अपस्यः । अप इति कर्मनाम । (निघण्टुः २।१।१) । राजसूयाख्यं कर्म इच्छन्त्यः । वसानाः । वस आच्छादने । आच्छादयन्त्यो या आपः, सन्तीति शेषः । तासु अतिशयेन मातृभूतासु पस्त्यासु । पस्त्या इति गृहनाम । (निघण्टुः ३।४।६) । गृहावस्थितास्वप्सु अन्तः मध्ये सधस्थं सहस्थानं प्रतिष्ठां अपां शिशुः वरुणः । राजसूयेऽद्भिरभिषिक्तत्वात् तज्जन्यत्वमुच्यते । तथाविधो वरुणः चक्रे कृतवानिति । यद्वा, पस्त्यासु गृहावस्थितासु विक्षु प्रजासु इति व्याख्येयम् । मन्त्रं प्रतिपादमनूद्य तात्पर्यपुरस्सरं व्याचष्टे– अनतिमानिन्य इति । शब्रासा.

**अथैनं वासाꣳसि परिधापयति । तत्तार्प्यमिति वासो भवति । तस्मिन् सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति । तदेनं परिधापयति– 'क्षत्रस्योल्बमसि' इति । तद्यदेव क्षत्रस्योल्बं तत एवैनमेतज्जनयति ॥**

विधत्ते– अथैनं वासांसीति । एनं यजमानं वासांसि तार्प्यपाण्ड्वाधिवासोष्णीषाणि परिधापयेदिति सामान्यविधिः । तत्तात्पर्यार्थकथनपुरस्सरं विधत्ते– तत्तार्प्यमिति । तत् तत्र तेषु प्रथमं तार्प्यमिति वासः, न त्वन्यत्कम्बलादिकमित्यर्थः । अत एव कात्यायनः– तार्प्यं परिधापयति । क्षौमम् । त्रिपाणं वा । घृतोन्नमेके' (काश्रौ. १५।५।६–९) इति । तृपा नाम ओषधिविशेषः । तत्तन्तुनिर्मितं क्षौमं वस्त्रं तार्प्यम् । त्रिः कृत्वः पायितं त्रिपाणम् । घृतोन्नम् । उन्दी क्लेदने । घृतसिक्तमिति एके आचार्या वदन्ति । तत्र कंचित् विशेषं विधत्ते– तस्मिन् सर्वाणीति । यज्ञरूपाणि स्रुक्चमसादीनि सर्वाणि तस्मिन् स्यूतानि भवेयुः । तार्प्यस्य परिधापने मन्त्रं विधत्ते– क्षत्रस्येति । हे तार्प्य, क्षत्रस्य राज्ञो यजमानस्य गर्भत्वेनोपचर्यमाणस्य उल्बं आवरणमसि । 'उल्बावृतो गर्भः' (छाउ. ५।९।१) इति छन्दोगा आमनन्ति । उल्बत्वं साधयति– तद्यदेवेति । यदुल्बं तस्मादेव एनं यजमानं एतत् एतेन तार्प्यपरिधापनेन उत्पादितवान् भवति । शब्रासा.

**अथैनं पाण्ड्वं परिधापयति– 'क्षत्रस्य जराय्वसि' इति । तद्यदेव क्षत्रस्य जरायु तत एवैनमेतज्जनयति ॥**

विधत्ते– अथैनमिति । पाण्ड्वं पाण्डुरं श्वेतं कम्बलं परिधापयेत्, तार्प्यस्योपरि प्रावृणुयादित्यर्थः । पाण्ड्व- (पाण्डुर ?) शब्दार्थः उक्तः– तदिदं पाण्डुरं द्वितीयं

इयेतं पाण्डुरमित्याचक्षते । * हे पाण्डुरकम्बल, क्षत्रस्य पूर्वोक्तविशेषणस्य जरायु जरायुस्थानीयमसि इति एतेन पाण्डुरपरिधापनेन । ततः जरायोः ।

शब्रासा.

**अथाधीवासं प्रतिमुञ्चति— 'क्षत्रस्य योनिरसि' इति । तद्यैव क्षत्रस्य योनिस्तस्या एवैनमेतज्जनयति ॥**

विधत्ते— अथाधीवासमिति । अधि उपरि वसनीयं आच्छादनीयं वस्त्रं अधीवासम्, तत् प्रतिमुञ्चेत् । ताप्र्यमुपसंव्याय पाण्डुरमुत्तरीयवदाच्छाद्य अधीवासं कञ्चुकादिकं, उपरि प्रतिमुञ्चेदित्यर्थः । हे वस्त्र, क्षत्रस्य योनिः योनिस्थानीयमसि इति । गर्भरूपयजमानस्य एतानि त्रीणि वस्त्राणि उल्ब–जरायु–योनिरूपत्वेन प्रशस्तानीति समुदितोऽर्थः ।

शब्रासा.

**अथोष्णीषꣳ सꣳहृत्य पुरस्तादवगूहति— 'क्षत्रस्य नाभिरसि' इति । तद्यैव क्षत्रस्य नाभिस्तामेवास्मिन्नेतद्दधाति ॥**

उष्णीषवेष्टनं विधत्ते- अथोष्णीषमिति । उष्णीषं संहृत्य निवीतरूपेण कण्ठेऽवसज्य पुरस्तात् पूर्वभागे नाभिदेशे अवगूहति, उष्णीषान्तं नीवीस्थाने ग्रथयेदित्यर्थः । तन्मन्त्रस्यायमर्थः— क्षत्रस्य नाभिः नाभिस्थानीयमसि इति ।

शब्रासा.

**तद्धैके समन्तं परिवेष्टयन्ति । नाभिर्वा अस्यैषा । समन्तं वा इयं नाभिः पर्येतीति वदन्तः । तदु तथा न कुर्यात् । पुरस्तादेवावगूहेत् । पुरस्ताद्धीयं नाभिः । तद्यदेनं वासाꣳसि परिधापयति जनयत्येवैनमेतज्जातमभिषिञ्चानीति । तस्मादेनं वासाꣳसि परिधापयति ॥**

उक्तमुष्णीषाग्रस्य पूर्वदेशेऽवगूहनं द्रढयितुं पूर्वपक्षं सोपपत्तिकमनुवदति— तद्धैक इति । एके शाखान्तरानुसारिणः तदुष्णीषं समन्तं सर्वतो नाभिदेशे परिवेष्टयन्ति । तदुपपादयति— नाभिर्वा इति । अस्य क्षत्रियस्य एषा उष्णीषरूपा नाभिः अपि समन्तं पर्येति परिवेष्टिता भवति । अतः 'क्षत्रस्य नाभिरसि' इति मन्त्रे उष्णीषस्य नाभित्ववचनात् तत्साम्याय समन्ताद्वेष्टनमुक्तमित्येकेषां मतम् । तद्दूषयति— तदु तथेति । उक्तं स्वमतं निगमयति— पुरस्तादेवेति । तत्र हेतुमाह— पुरस्ताद्धीयमिति । ताप्र्यादिवासःपरिधापनं संभूय प्रशंसति— तद्यदेनं वासांसीति । एतत् एतेन वासःपरिधापनेन एनं यजमानं न यजति उत्पादितवान् भवति, तेषां वाससामुल्बजरायुयोनिरूपत्वोक्तेः । किमर्थं जननमिति तत्राह— जातमभीति । जातं यजमानं अभिषिञ्चानि अभिषिक्तं करवाणि इति बुद्ध्या वासांसि परिधापयति, परिधापयेदित्यर्थः ।

शब्रासा.

**तद्धैके निदधत्येतानि वासाꣳसि । अथैनं पुनर्दीक्षितवसनं परिधापयन्ति । तदु तथा न कुर्यात् । अङ्गानि वा अस्य जनूर्वासाꣳसि । अङ्गैर्हैनꣳ सजन्वा तन्वा व्यर्धयन्ति । वरुण्यं दीक्षितवसनम् । स एतेषामेवैकं वाससां परिदधीत । तदेनमङ्गैर्जन्वा तन्वा समर्धयति । वरुण्यं दीक्षितवसनम् । तदेनं वरुण्याद्दीक्षितवसनात्प्रमुञ्चति ॥**

पूर्वं निहितस्य दीक्षितवसनस्य परित्यागं विधित्सुरेकेषां मतमुपन्यस्यति । यद्वा, अयमपरः संबन्धः । विहितानां ताप्र्यादीनां परिधापनादिकमेव द्रढयितुं पूर्वपक्षयति— तद्धैक इति । एके शाखिनः एकवारं परिधापितानि एतानि वासांसि निदधति विसृज्य निदध्युः । अथ तदानीमेव ताप्र्यादिवसनकाले निहितं दीक्षितवसनं एतं यजमानं पुनः परिधापयन्ति । पुनःपरिधापनकालस्तु सूत्रकृता दर्शितः— 'दीक्षितवसननिवृत्तिर्विरोधान्माहेन्द्रादौ वा पुनः परिधानं निधायैतानि ।' (काश्रौ. १५।५।१४) इति । तद्दूषयति— तदु तथेति । अङ्गानि वा इति । वासांसि इति यत् तानि अस्य यजमानस्य जनूः अङ्गानि सहोत्पन्नानि । ताप्र्यादीनां वाससामुल्बजरायुप्रभृत्यात्मकत्वादङ्गत्वम् । उल्बादीनां तु गर्भावस्थायां सह निवासादङ्गत्वमुपचरितम् । यद्वा, अयमर्थः—

* इदं वचनं 'तृतीयं श्वेतपाण्डुरमित्याचक्षते' (सश्रौ. १३।५।२३) इति सत्याषाढश्रौतसूत्रस्थवचनेन साम्यमावहति ।

वासांसि जनूरङ्गानि सहोत्पन्नानि त्वग्रूपाण्यङ्गानि । वैशब्दः प्रसिद्धिद्योतकः । तृतीयकाण्डे दीक्षाप्रकरणे 'अथ वासः परिधत्ते' इत्युपक्रम्याऽऽम्नातम्— 'तस्मिन्नेतां त्वचमदधुर्वास एव तस्मान्नान्यः पुरुषाद्वासो बिभर्ति' ( शब्रा. ३।१।२।१३–१६ ) इति । अतो वासोभिः परिधापनेन जन्वा तन्वा सहोत्पन्नैः शरीररूपैः अङ्गैः समर्धितवान् भवति । अङ्गसमुदाय एव हि तनूः । शरीरेण तदङ्गैश्च संवर्धितवान् भवति । दीक्षितवसनस्य परित्यागं दर्शयितुं तस्य दुष्टत्वमाह— वरुण्यमिति । वरुणगृहीतं, दुष्टमित्यर्थः । स एतेषामित्यादिकस्यायमर्थः— उक्तानां वाससामेकेन तार्प्येण, प्रथमातिक्रमे कारणाभावात् । यद्वा, एकं प्रथममित्यर्थः । प्रथमं तु तार्प्यम् । तेन परिधापनं कर्तव्यम्, न तु दीक्षितवसनस्य पुनःपरिधापनमित्यर्थः । शब्रासा.

**स यत्रावभृथमभ्यवैति । तदेतदप्यभ्यवहरन्ति । तत्सलोम क्रियते । स एतेषामेवैकं वाससां परिधायोदैति । तानि वशायै वा वपायाᳪं हुतायां दद्यादुदवसानीयायां वेष्टौ ॥**

विहितस्य दीक्षितवसनस्य अवभृथे प्रासनं विधत्ते— स यत्रेति । अवभृथं अभ्यवहरन्ति आहरेयुः, अप्सु प्रक्षिपेयुरित्यर्थः । तत् तथा सति सलोम क्रियते, प्रकृतिगतमनुसृतं भवतीत्यर्थः । प्रकृतौ तु दीक्षितवसनस्य अवभृथे परित्याग उक्तः । स एतेषामित्यादि । माहेन्द्रादौ दीक्षितवसनस्य पुनः परिधानं कृतम् । तदा तार्प्यादीनामेकैकेनैव परिहितेन वाससा अवभृथावतरणमुत्तरणं च कर्तव्यमित्यर्थः । उदैति उत्तरेत् । तेषां वाससां दानकालं विधत्ते— तानि वशाया इति । अनुबन्ध्या( ? न्ध्य )-वशाया वपायागकाले वाऽध्वर्यवे दद्यात् । अवसाने कर्तव्या उदवसानीयेष्टिः, तस्यां वा दद्यात् । अत एव कात्यायनः 'अवभृथमेकेन तार्प्यादीनि चेत् । उदैत्येकेन । दीक्षितवसनं च प्रास्यति । अनूबन्ध्यावपाहोमान्ते दद्यादेनानि । उदवसानीयायां वा ।' ( काश्रौ. १५।७।२३–२७ ) इति । शब्रासा.

**अथ धनुरधितनोति— 'इन्द्रस्य वार्त्रघ्नमसि' इति । वार्त्रघ्नं वै धनुः । इन्द्रो वै यजमानः । द्वयेन वा एष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानः । तस्मादाह— इन्द्रस्य वार्त्रघ्नमसीति ॥**

अथ धनुरधीति । अधितनोति आतनोतीत्यर्थः । मन्त्रस्यायमर्थः— हे धनुः, त्वं इन्द्रस्य वार्त्रघ्नं वृत्रहननसाधनमायुधं असि भवसि । इन्द्रशब्दार्थमाह— इन्द्रो वा इति । कथं यजमानस्येन्द्रत्वमिति तदुपपादयति— द्वयेनेति । क्षत्रिय इति यत्, यजमान इति च यत्, तेन द्वयेनेत्यर्थः । क्षत्रं नाम बलम् । तत्संबन्धात्, यष्टृत्वाच्चेत्यर्थः । इन्द्रस्य यजमानत्वं प्रागुक्तम् ( राका. पृ. २७५ ) । शब्रासा.

**अथ बाहू विमार्ष्टि— 'मित्रस्यासि वरुणस्यासि' इति । बाह्वोर्वै धनुः । बाहुभ्यां वै राजन्यो मैत्रावरुणः । तस्मादाह— मित्रस्यासि वरुणस्यासीति । तदस्मै प्रयच्छति— 'त्वयाऽयं वृत्रं वधेत्' इति । त्वयाऽयं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह ॥**

विधत्ते— अथ बाहू इति । हे बाहो, मित्रस्य असि भवसि । तथाऽपरं बाहुं प्रत्याह— वरुणस्यासीति । बाहुद्वयं विमृज्यात् । कर्कोपाध्यायेन तु बाहुशब्दस्य धनुष्कोटिपरत्वं व्याख्यातम् । तमिमं प्रशंसति— बाह्वोरिति । बाहुभ्यां खलु मित्रवरुणसंबन्धी राजन्यो भवति । बाहुवीर्यसद्भावो राज्ञो लक्षणमित्यर्थः । धनुःप्रदानं समन्त्रकं विधत्ते— तदस्मा इति । हे धनुः, त्वया साधनेन अयं यजमानो वृत्रं शत्रुं वधेत् हिंस्यादिति । मन्त्रं व्याचष्टे— त्वयाऽयं द्विषन्तमिति । शब्रासा.

**अथास्मै तिस्र इषूः प्रयच्छति । स यया प्रथमया समर्पणेन पराभिनत्ति सैका । सेयं पृथिवी सैषा दृबा नाम । अथ यया विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया । तदिदमन्तरिक्षम् । सैषा रुजा नाम । अथ यया-ऽपैव राध्नोति सा तृतीया । साऽसौ द्यौः । सैषा क्षुमा नाम । एता हि वै तिस्र इषवः । तस्मादस्मै तिस्र इषूः प्रयच्छति ॥**

अथेषुत्रयदानं विधत्ते– अथास्मा इति । तिस्र इति । लोकत्रयात्मकत्वेन शस्तानामिषूणां लक्षणं संज्ञां च दर्शयति– स ययेति । समर्पणेन परित्यागमात्रेण यया परान् भिनत्ति ( ? पराभिनत्ति) शत्रून् विदारयति तस्या एकस्याः दृब्बानामधेयायाः पृथिव्यात्मकत्वेन प्राशस्त्यमित्यर्थः । यया विद्धस्य ताडितस्य जीवने संदेहः, तस्या रुजानाम्न्या अन्तरिक्षात्मकत्वम् । यया राजा शत्रुं अपराध्नोति हिनस्त्येव तस्याः क्षमानामधेयायाः तृतीयलोकात्मकत्वेन प्राशस्त्यमित्यर्थः । अत्र कंचिद्विशेषं कात्यायनः सूत्रयामास– 'दृबाऽसीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति०' ( काश्रौ. १५।५।१८ ) इति । तेषां मन्त्राणामयमर्थः– दृबा । दृ विदारणे । दृणातीति दृब्रा विदारिका असि इति । दृप्यतेर्वा रूपम् । इति प्रथमेषुग्रहणम् । रुजा । रुजो भङ्गे । भङ्गहेतुरिषुरसि । अनेन द्वितीयशरग्रहणम् । क्षुमा । क्षुप विधूनने । ( सौत्रो धातुः ) क्षुपतीति क्षुपा । पकारस्य स्थाने मकारः । शत्रुक्षुपणकारिणी इषुरसि । अनेन तृतीयशरग्रहणम् । एवमादाय दद्यात् । शब्रासा.

**ताः प्रयच्छति– 'पातैनं प्राञ्चम्, पातैनं प्रत्यञ्चम्, पातैनं तिर्यञ्चम्, दिग्भ्यः पात' इति । तदस्मै सर्वा एव दिशोऽशरव्याः करोति । तद्यदस्मै धनुः प्रयच्छति । वीर्यं वा एतद्राजन्यस्य यद्धनुः । वीर्यवन्तमभिषिञ्चानीति । तस्माद्वा अस्मा आयुधं प्रयच्छति ॥**

इषुदानमन्त्रमनूद्य मन्त्रं विधत्ते– ताः प्रयच्छतीति । एनं यजमानं प्राञ्चं प्रागञ्चनं प्राक् गन्तारं हे इषवः, पात पालयत । प्रत्यञ्चं प्रत्यग्गन्तारं, तिर्यञ्चं तिर्यग्गन्तारं, किंबहुना दिग्भ्यः सर्वाभ्यः पात इति । तदस्मा इति । अशरव्याः अहिंसकाः । शरव्यं शरलक्ष्यम्, तद्रहिताः करोति । अनेन सर्वास्वपि दिक्षु परकीयशरलक्ष्यत्वं निवर्त्यते । इमं मन्त्रमिष्वभिमर्शनेऽपि कात्यायनो विनियुक्तवान्– 'पातैनमित्यभिमृशति*' ( काश्रौ. १५।५। १८ ) इति । आपस्तम्बोऽपि– 'पात मा प्रत्यञ्चमिति प्रदीयमानामनुमन्त्रयते' (आपश्रौ. १८।१४।१३) इति । शब्रासा.

**अथैनमाविदो वाचयति– 'आविर्मर्याः' इत्यनिरुक्तम् । प्रजापतिर्वा अनिरुक्तः । तदेनं प्रजापतय आवेदयति । सोऽस्मै सवमनुमन्यते । तेनानुमतः सूयते ॥**

विधत्ते– अथैनमाविद इति । आवित्तपदयुक्ताः सप्त मन्त्राः आविदः, तान् वाचयतीत्यर्थः । आवेदयन्ति ज्ञापयन्ति देवताभ्य एनं यजमानमित्याविदः मन्त्राः । तत्र मन्त्रान् विधत्ते– आविर्मर्या इति । 'आविर्मर्याः' इत्यनिरुक्तं साक्षात् देवतावाचकपदरहितं मन्त्रं वाचयेदित्यर्थः । हे मर्याः मरणयोग्या मनुष्याः, आविः प्रकाशोऽभूत् । अनेन कस्यै देवतायै यजमानमावेदितवान् भवतीत्याशङ्क्य तां देवतां दर्शयति– प्रजापतिरिति । प्रजापतिः खलु अनिरुक्तः ईदृश इति वक्तुमनर्हः । तस्मात् अनेन यजुषा अनिरुक्तेन अनिरुक्तात्मने प्रजापतये एनं यजमानमावेदितवान् भवतीत्यर्थः । आवेदनस्य फलमाह– सोऽस्मा इति । सः आवेदितः ज्ञापितः प्रजापतिः अस्मै सुन्वते सवं अभिषेकं अनुमन्यते । तेन प्रजापतिना अनुमतः अनुज्ञातः सूयते अभिषिच्यते । एवमुत्तरत्रापि व्याख्येयम् । शब्रासा.

**'आवित्तो अग्निर्गृहपतिः' इति । ब्रह्म वा अग्निः । तदेनं ब्रह्मण आवेदयति । तदस्मै सवमनुमन्यते । तेनानुमतः सूयते ॥**

आवित्तो अग्निर्गृहपतिरिति । गृहपतिगुणकः अग्निः आवित्तः आवेदितः ज्ञापितः । 'वित्तो भोगप्रत्यययोः' (पा. ८।२।५८ ) इति निपातितः । अग्नये यजमानं ज्ञापितवानित्यर्थः । शब्रासा.

**'आवित्त इन्द्रो वृद्धश्रवाः' इति । क्षत्रं वा इन्द्रः । तदेनं क्षत्रायाऽऽवेदयति । तदस्मै सवमनुमन्यते । तेनानुमतः सूयते ॥**

* अस्मदादर्शपुस्तके तु अस्मिन् सूत्रे 'अभिमृशति' इत्यत्र 'प्रतिमन्त्रम्' इति पाठो विद्यते ।

आवित्त इन्द्र इति । वृद्धश्रवाः । ' श्रव इत्यन्ननाम, श्रूयते इति श्रवः ' ( नि. १०।३ ) इति हि यास्कः । वृद्धं प्रभूतं अन्नं यस्य । शब्रासा.

**' आवित्तौ मित्रावरुणौ धृतव्रतौ ' इति । प्राणोदानौ वै मित्रावरुणौ । तदेनं प्राणोदानाभ्यामावेदयति । तावस्मै सवमनुमन्येते । ताभ्यामनुमतः सूयते ॥**

आवित्तौ मित्रावरुणाविति । धृतव्रतौ । व्रतमिति कर्मनाम ( निघण्टुः २।१।७ ) । अवधीरितकर्माणौ । शब्रासा.

**' आवित्तः पूषा विश्ववेदाः ' इति । पशवो वै पूषा । तदेनं पशुभ्य आवेदयति । तेऽस्मै सवमनुमन्यन्ते । तैरनुमतः सूयते ॥**

आवित्तः पूषा इति । विश्ववेदाः सर्वधनः । शब्रासा.

**' आवित्ते द्यावापृथिवी विश्वशम्भुवौ ' इति । तदेनमाभ्यां द्यावापृथिवीभ्यामावेदयति । ते अस्मै सवमनुमन्येते । ताभ्यामनुमतः सूयते ॥**

आवित्ते द्यावापृथिवी इति । विश्वशम्भुवौ सर्वस्य जगतः सुखस्य भावयित्र्यौ । शब्रासा.

**' आवित्ताऽदितिरुरुशर्मा ' इति । इयं वै पृथिव्यदितिः । तदेनमस्यै पृथिव्या आवेदयति । साऽस्मै सवमनुमन्यते । तयाऽनुमतः सूयते । तद्याभ्य एवैनमेतद्देवताभ्य आवेदयति ता अस्मै सवमनुमन्यन्ते । ताभिरनुमतः सूयते ॥**

आवित्ताऽदितिरिति । उरुशर्मा प्रभूतं सुखं यस्याः । अदितिः अखण्डनीया देवमाता । भूमिरेव कांचित् मूर्तिं धृत्वा देवमाता अदितिरित्युच्यते । एता देवताः संभूय प्रशंसति– तद्याभ्य एवैनमिति । शब्रासा.

दिगारोहणम्, शार्दूलचर्मारोहणम्, ऊर्ध्वाभिषेकः

**'केशवस्य पुरुषस्य लोहायसमास्य आविध्यति– ' अवेष्टा दन्दशूकाः ' इति । सर्वान् वा एष मृत्यूनतिमुच्यते सर्वान् वधान् यो राजसूयेन यजते । तस्य जरैव मृत्युर्भवति । तद्यो मृत्युर्यो वधः । तमेवैतदतिनयति यद्दन्दशूकान् ॥**

कात्यायनः– ' अवेष्टा इति लोहायसमाविध्यति केशवास्ये सदोऽन्त उपविष्टाय । ' (काश्रौ. १५।५।२०) इति । सदसो मध्ये उपविष्टस्य केशवस्य क्लीबस्य वदने ' अवेष्टा ' इति मन्त्रेण ताम्रमर्पयेत् । तदिदं विधत्ते– केशवस्येति । लोहायसं ताम्रं आविध्यति अर्पयेत् । दन्दशूकाः दंशनशीलाः, मृत्यव इहाभिप्रेताः । अवेष्टाः । अवपूर्वो यजिः नाशार्थे वर्तते, विनाशिता इति । व्याचष्टे – सर्वान् वा इति । यो राजसूयेन यजते स सर्वान् मृत्यून् सर्वान् परकृतान् वधानपि अतिमुच्यते अतिक्रामेत् । सुन्वतो मृत्युः नाम जरा, देहविदारकत्वात् । तस्मात् दन्दशूकपदेन मृत्यवो वधाश्च विवक्षिताः । तान् केशववदने ताम्रनिधानेन नाशितवान् भवतीति तात्पर्यार्थः । शब्रासा.

**अथ यत्केशवस्य पुरुषस्य । न वा एष स्त्री, न पुमान्, यत्केशवः पुरुषः । यदह पुमान्, तेन न स्त्री । यदु केशवः, तेनो न पुमान् । नैतदयः, न हिरण्यं, यल्लोहायसम् । नैते क्रिमयः, नाक्रिमयः, यद्दन्दशूकाः । अथ यल्लोहायसं भवति । लोहिता इव हि दन्दशूकाः । तस्मात्केशवस्य पुरुषस्य ॥**

केशवलोहायसदन्दशूकानामन्तरालवर्तित्वं सम्यगुपपादयति– अथ यत्केशवस्येति । एतद्वाक्यं परिस्रुत्क्रयणे व्याख्यातम् । [यत् यतः पुमान् पुँल्लक्षणवान् श्मश्रुयुक्त इत्यर्थः । तेन कारणेन स्त्री न भवति । यस्मात् केशवः केशयुक्तः, तेन केशबाहुल्यवत्त्वेन पुमान् च न भवति । केशबाहुल्यं तु स्त्रीलक्षणम् । अतः केशवत्क्लीबः पुरुषः स्त्रिया अधिकः । पुरुषात् न्यूनः । शब्रा. ५।१।२।१४ ] दन्दशूकानामप्यन्तरालवर्तित्वं दर्शयति– नैते क्रिमय इति । दन्दशूकानामपि लोहितत्वात् लोहितायसेन भाव्यमित्यर्थः । शब्रासा.

( १ ) शब्रा. ५।४।१।१–१७.

**अथैनं दिशः समारोहयति– ' प्राचीमारोह गायत्री त्वाऽवतु रथन्तरꣳ साम त्रिवृत्स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् ॥ '**

सूत्रम्– ' सुन्वन्तमाक्रमयन् दिशः प्राचीमारोहेति वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् । आक्रम्य० ' ( काश्रौ. १५।५।२१–२२ ) इति । अध्वर्युः प्राच्यादिकाः पञ्च दिशो यजमानमाक्रमयन् ' प्राचीमारोह ' इत्यादिकान् तत्तद्दिक्प्रतिपादकान् मन्त्रान् वाचयेदित्यर्थः । तत्र दिगाक्रमणं( ? णमन्त्रं ) विधत्ते– अथैनं दिश इति । समारोहयति आक्रमेत् । प्राचीदिगाक्रमणमन्त्रं विधत्ते– प्राचीमारोहेति । हे यजमान, प्राचीं आरोह । तथा स्थितं त्वा त्वां छन्दसां मध्ये गायत्री अवतु, साम्नां मध्ये रथन्तरं साम रक्षतु, स्तोमानां मध्ये त्रिवृत् ऋङ्नवकात्मकः स्तोमः, ऋतूनां मध्ये वसन्ताख्य ऋतुः, ब्रह्म त्वदीयं द्रविणं धनं रक्षतु, ब्रह्मरूपं धनं वा अवत्विति । एवमुत्तरत्रापि । ' अभि त्वा शूर नोनुमः ' [ सासं. १।३।१ ( २३३ ) ] इत्यस्यां ऋच्युत्पन्नं साम रथन्तरमित्युच्यते । ' उपास्मै गायता नरः ' [ सासं. २।१।१ ( ६५१ ) ] इति सूक्तत्रये आद्याभिस्तिसृभिः मध्यमाभिरुत्तमाभिश्चोद्गातृगानेन त्रिरावृत्तः त्रिवृत्स्तोमो भवति । शब्रासा.

**' दक्षिणामारोह त्रिष्टुप्त्वाऽवतु बृहत्साम पञ्चदश स्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् ' ॥**

दक्षिणदिगाक्रमणं ( ? णमन्त्रं ) विधत्ते– दक्षिणामारोहेति । पूर्ववत् योजनीयम् । ' त्वामिद्धि हवामहे ' [ सासं. १।३।१ ( २३४ ) ] इत्यस्यामृच्युत्पन्नं साम बृहत् । पञ्चदशस्तोमकरणमेवम्– पूर्वोक्तत्रिवृत्स्तोमः खलु सूक्तत्रयनिष्पाद्यः । अन्ये तु स्तोमा एकैकेन त्र्यृचात्मकेन सूक्तेन निष्पाद्यन्ते । तत्र चायं क्रमः– प्रथमं पर्यायं पञ्चभिः ऋग्भिः गीयते । तद्यथा– प्रथमामृचं त्रिर्गायेत्, इतरे द्वे सकृत्सकृत् । तृतीये तु उत्तमां त्रिर्गायेत्, आद्ये द्वे सकृत्सकृदिति । क्षत्रं क्षत्रियः । शब्रासा.

**प्रतीचीमारोह जगती त्वाऽवतु वैरूपꣳ साम सप्तदश स्तोमो वर्षा ऋतुर्विड् द्रविणम् ॥**

प्रतीच्या मन्त्रं विधत्ते– प्रतीचीमारोहेति । ' यद् द्याव इन्द्र ते शतम् ' [ सासं. १।३।५(२७८) ] इत्यस्यामृच्युत्पन्नं साम वैरूपम् । सप्तदशस्तोमसंपादनमेवम्– प्रथमपर्याये प्रथमामृचं त्रिर्गायेत् । द्वितीयपर्याये मध्यमां त्रिः । तृतीयपर्याये मध्यमामुत्तमां च त्रिः, अन्याः सकृत् सकृदिति । ( विट् ) वैश्यो जातिरित्यर्थः । शब्रासा.

**' उदीचीमारोहानुष्टुप्त्वाऽवतु वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं द्रविणम् ' ॥**

उदीच्या मन्त्रं विधत्ते– उदीचीमारोहेति । ' पिबा सोममिन्द्र मन्दतु त्वा ' [ सासं. १।४।५(३९८) ] इत्यस्यामृच्युत्पन्नं साम वैराजम् । एकविंशतिस्तोमनिष्पत्तिप्रकारस्त्वेवम्– प्रथमे पर्याये उत्तमां सकृत् गायेत् । द्वितीये पर्याये मध्यमां सकृत् गायेत् । तृतीये पर्याये सर्वत्रेतरास्त्रिस्त्रिरित्येवं कृते एकविंशः स्तोमो भवति । शब्रासा.

**' ऊर्ध्वामारोह पङ्क्तिस्त्वाऽवतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणम् ' इति ॥**

ऊर्ध्वाया मन्त्रं विधत्ते– ऊर्ध्वामारोहेति । ' प्रोष्वस्मै पुरोरथम् ' [ सासं. २।२०।४ ( १८०१ ) ] इत्यस्यामृच्युत्पन्नं साम शाक्वरम् । ' रेवतीर्नः सधमादः ' [ सासं. १।२।४ ( १५३ ) ] इत्यस्यामृच्युत्पन्नं साम रैवतम् । त्रिणवस्तोमनिष्पत्तिप्रकारस्त्वेवम्– प्रथमे पर्याये प्रथमां त्रिर्गायेत् । मध्यमां पञ्चकृत्वो गायेत् । उत्तमां सकृत् । द्वितीये पर्याये प्रथमां सकृत् । मध्यमां त्रिः । उत्तमां पञ्चकृत्वः । तृतीये पर्याये प्रथमां पञ्चकृत्वः । मध्यमां सकृत् । उत्तमां त्रिर्गायेदिति । सोऽयं त्रिरावृत्तनवसंख्योपेतत्वात् त्रिणवनामकः स्तोमो भवति । त्रयस्त्रिंशस्तोमनिष्पत्तिप्रकार उच्यते– प्रथमपर्याये प्रथमां त्रिः । मध्यमां सप्तकृत्वः । उत्तमां सकृत् । द्वितीये प्रथमां सकृत् । मध्यमां त्रिः । उत्तमां सप्तकृत्वः । तृतीये पर्याये प्रथमां सप्तकृत्वः । मध्यमां सकृत् । उत्तमां त्रिः । सोऽयं त्रयस्त्रिंशस्तोमो नाम । त्रिषु मन्त्रेषु ब्राह्मण-

क्षत्रियवैश्या धनरक्षकत्वेन धनरूपत्वेन वा कथिताः । चतुर्थे उदुम्बरादिफलस्य तद्रूपत्वम् । पञ्चमे वर्चसः प्रख्यातशूरताकृतस्य तेजसो रक्षकत्वं तद्रूपत्वं चोक्तम् । शब्रासा.

**तद्यदेनं दिशः समारोहयति । ऋतूनामेवै-तद्रूपम् । ऋतूनेवैनमेतत्संवत्सरꣳ समारोहयति । स ऋतून् संवत्सरꣳ समारुह्य सर्वमेवेदमुपर्युपरि भवति । अर्वागेवास्मादिदꣳ सर्वं भवति ॥**

दिशां समारोहणं समस्य संवत्सरारोहात्मना प्रशंसति – तद्यदेनमिति । पञ्चानां दिशां (समारोहणं ?) ऋतुरूपत्वम्, ऋतूनामपि हेमन्तशिशिरयोः समासेन पञ्चसंख्यात्मकत्वात् । संवत्सरारोहणेन यजमानः सर्वमेवेदं जगत् उपर्युपरि भवति सर्वस्योपरि वर्तमानो भवति, कालस्य सर्वेषामुपरि भावात् । अस्मात् सुन्वतः सकाशात् इदं सर्वं अर्वाक् अर्वाचीनं अधस्तनं भवति इति । शब्रासा.

**शार्दूलचर्मणो जघनार्धे सीसं निहितं भवति । तत्पदा प्रत्यस्यति– 'प्रत्यस्तं नमुचेः शिरः' इति । नमुचिर्ह वै नामासुर आस । तमिन्द्रो निविव्याध । तस्य पदा शिरोऽभितष्ठौ । स यदभिष्ठित उदबाधत स उच्छ्वङ्कः । तस्य पदा शिरः प्रचिच्छेद । ततो रक्षः समभवत् । तद्ध स्मैनमनुभाषते– क्व गमिष्यसि क्व मे मोक्ष्यस इति ॥**

पूर्वं मैत्रावरुणधिष्ण्यस्य पुरस्तादभिहितानामभिषेचनीयपात्राणामग्रे आस्तृतस्य शार्दूलचर्मणः अपरेऽन्ते निहितस्य सीसस्य प्रासनमिदानीं विधत्ते– शार्दूलेति । शार्दूलचर्मणः जघनार्धे अपरभागे सीसं निहितं भवति । निहितमिति निष्ठाप्रयोगेण पूर्वं चर्मास्तरणसमये एव सीसनिधानं संपन्नमिति मन्तव्यम् । तथैव कात्यायनः– 'मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति । अपरेऽन्ते सीसं निदधाति ।' (काश्रौ. १५।५।१–२) इति । अत्र तु 'आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तं' (काश्रौ. १५।५।२२) इत्येतावदेवासूत्रयत् । तत् सीसं पदा पादेन 'प्रत्यस्तं' इति मन्त्रेण निरस्येत् । नमुचेः असुरस्य शिरः प्रत्यस्तं निरस्तमिति तस्यार्थः । नमुचिशिरसः सीसेन निरासमाख्यायिकयोपपादयति– नमुचिर्ह वा इति । पूर्वमिन्द्रो नमुचिनाम्नोऽसुरस्य शिरः स्वेन पादेन अभितष्ठौ आचक्रमे । सः आक्रान्तः उदबाधत । उच्छ्वङ्कः । उद्गतः श्वङ्कः । श्वङ्को नाम प्राणिविशेषः । 'श्वङ्कानीतशीर्ष्णि' (?) इति ह्यन्यत्राम्नातम् । तस्य शिरः पदा स्वीयेन पादेन प्रचिच्छेद छिन्नवान् । ततः छिन्नशिराः रक्षः राक्षसः समभवत् । तत् रक्षः एनं घातकमिन्द्रं अनुभाषते वदति– हे इन्द्र, क्व गमिष्यसि, मे मत्तः सकाशात् क्व मोक्ष्यसे मुक्तो भविष्यसि इति वदति । शब्रासा.

**तत्सीसेनापजघान । तस्मात्सीसं मृदु । सृतजवꣳ हि । सर्वेण हि वीर्येणापजघान । तस्माद्धिरण्यरूपꣳ सन्न कियच्चनार्हति । सृतजवꣳ हि । सर्वेण हि वीर्येणापजघान । तद्वै स तन्नाष्ट्रा रक्षाꣳस्यपजघान । तथो एवैष एतन्नाष्ट्रा रक्षाꣳस्यतोऽपहन्ति ॥**

तत्सीसेनेति । तत् रक्षः एतद्वदन्तं राक्षसं सीसेन अपजघान । तस्मात् सीसं मृदु जातम् । हि यस्मात् सृतजवं गतवेगम् । तत्त्वमुपपादयति– सर्वेण हीति । तस्मात् गतसारमेतत् सीसं हिरण्यरूपं रजतरूपं सत् अपि कियच्चन कियदपि मूल्यं नार्हति न लभते । रजतस्यापि हिरण्यशब्दव्यवहारोऽस्ति, 'यदश्रु अशीयत तद्रजतं हिरण्यमभवत्' (तैसं. १।५।१।१–२) इति तैत्तिरीयश्रुतेः । अतः पूर्वं रक्षसः सीसेन हतत्वात् इदानीमपि सीसप्रासनेन रक्षांसि हतानि भवन्तीत्यर्थः । शब्रासा.

**अथैनꣳ शार्दूलचर्मारोहयति– 'सोमस्य त्विषिरसि' इति । यत्र वै सोम इन्द्रमत्यपवत । स यत्ततः शार्दूलः समभवत् । तेन सोमस्य त्विषिः । तस्मादाह– सोमस्य त्विषिरसीति । 'तवेव मे त्विषिर्भूयात्' इति । शार्दूलत्विषिमेवास्मिन्नेतद्दधाति । तस्मादाह– तवेव मे त्विषिर्भूयादिति ॥**

विधत्ते– अथैनमिति । आरोहयति आक्रामयति । सोमस्य त्विषिरित्यादि पूर्वं ( राका. पृ. २७५ ) व्याख्यातम् । शब्रासा.

**अथ रुक्ममधस्तादुपास्यति– ' मृत्योः पाहि ' इति । अमृतमायुर्हिरण्यम् । तदमृत आयुषि प्रतितिष्ठति ॥**

विधत्ते– अथ रुक्ममिति । रुक्मं हिरण्यं अधस्तात् अधःप्रदेशे उपास्यति निदध्यात् । अत्र सूत्रम्– ' रुक्ममधः पदं कुरुते मृत्योरिति । ' ( काश्रौ. १५।५।२४ ) । हे रुक्म, मृत्योः सकाशात् पाहि पालय । एनमित्यर्थसिद्धम् । रुक्मस्य मृत्युपरिहारकत्वमुपपादयति– अमृतमिति । हिरण्यममृतमायुः । हिरण्यदानेन अपमृत्योः परिहर्तुं शक्यत्वात् आयुर्दत्वम् । तस्मात् असौ यजमानः पादस्याधःप्रदेशे रुक्मनिधानेन आयुषि एव प्रतिष्ठितवान् भवतीत्यर्थः । शब्रासा.

**अथ रुक्मः शतवितृण्णो वा भवति नववितृण्णो वा । स यदि शतवितृण्णः । शतायुर्वा अयं पुरुषः शततेजाः शतवीर्यः । तस्माच्छतवितृण्णः । यद्यु नववितृण्णः । नवेमे पुरुषे प्राणाः । तस्मान्नववितृण्णः ॥**

शिरसि निधीयमानस्य रुक्मस्य कंचित् गुणं विधत्ते– अथ रुक्म इति । शतवितृण्णः शतच्छिद्रः नववितृण्णः नवच्छिद्रः वा भवेत् । तदुभयं क्रमेण आयुःप्राणात्मना प्रशंसति– स यदि शतेति । आयुरनुसारेण तेजोवीर्ययोरपि शतसंख्याकत्वं द्रष्टव्यम् । शब्रासा.

**तमुपरिष्टाच्छीर्ष्णो निदधाति– ' ओजोऽसि सहोऽस्यमृतमसि ' इति । अमृतमायुर्हिरण्यम् । तदस्मिन्नमृतमायुर्दधाति । तद्यद्रुक्मा उभयतो भवतः– अमृतमायुर्हिरण्यम् । तदमृतेनैवैनमेतदायुषोभयतः परिबृꣳहति । तस्माद्रुक्मा उभयतो भवतः ॥**

तस्य शिरसि निधानं विधत्ते– तमुपरिष्टादिति । शीर्ष्णः इति षष्ठी । ओजः इति मनोबलम् । सहः इति बाह्येन्द्रियबलम् । अमृतं इति प्राणबलम्, ' प्राणो वा अमृतम् ' इति श्रुतेः । हे रुक्म, तत् त्रितयरूपोऽसीति मन्त्रार्थः । अधस्तादुपरिष्टाच्च रुक्मनिधानमायुःप्रवृद्धिरूपेण प्रशंसति– तद्यद्रुक्मा उभयत इति । उभयतो रुक्मनिधानेन एनं यजमानं अमृतरूपेण आयुषा उभयतः परिबृंहति संवर्धितवान् भवति । शब्रासा.

**अथ बाहू उद्गृह्णाति– ' हिरण्यरूपा उषसो विरोक उभाविन्द्रा उदिथः सूर्यश्च । आरोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च ॥ ' इति । बाहू वै मित्रावरुणौ । पुरुषो गर्तः । तस्मादाह– आरोहतं वरुण मित्र गर्तमिति । ' ततश्चक्षाथामदितिं दितिं च ' इति । ततः पश्यतꣳ स्वं चारणं चेत्येवैतदाह ॥**

विधत्ते– अथ बाहू इति । उद्गृह्णाति यजमानः उत् ऊर्ध्वौ प्रसारितौ कुर्यात् । अत्र ' मित्रोऽसि वरुणोऽसि ' इत्ययमेव मन्त्रो बाहूद्ग्रहणे विधास्यते । तत्र पूर्वपक्षत्वेन मन्त्रं पठति– हिरण्यरूपाविति । अत एव कात्यायनो विकल्पेन सूत्रयामास– ' बाहू उद्गृह्णाति हिरण्यरूपा इति । मित्रोऽसि वरुणोऽसीति वा । ' ( काश्रौ. १५।५। २६–२७) इति । हिरण्येतिमन्त्रस्यायमाध्यात्मिकोऽर्थः– हे वरुण, हे मित्र, बाहुद्वयस्य पृथक् संबुद्धिः । हिरण्यरूपौ हितरमणीयरूपौ हिरण्यस्वरूपौ वा, सालंकारत्वात् । इन्द्रौ परमैश्वर्यसंपन्नौ उभौ युवां उषसः विरोके विरोचने उदिथः, सूर्यश्च उद्गतः । एतेर्लटि मध्यमद्विवचने रूपम् । हे मित्रावरुणौ बाहुरूपौ, गर्तं पुरुषं आरोहतं पुरुषस्योपरि भवतमित्यर्थः । ततः अनन्तरं अदितिं अखण्डनीयां पृथिवीरूपां स्वीयां प्रजां चक्षाथां पश्येताम् । दितिं खण्डनीयां परामेतां च । तस्य तद्बाहुद्वयमेव स्वबलं रक्षति, परबलं हन्ति, अत एवमुच्यते इत्यध्यात्मविषयोऽर्थः । आधिदैविके त्वयं विशेषः– गर्तः रथः । हे मित्रावरुणौ, हे देवते, रथमारोहतम् । ततः रथारोहणानन्तरं अदितिं अदीनं समर्थं विहितस्य कर्मणः कर्तारं पुरुषं प्रपश्यतम्, दितिं दीनं विवेकरहितमनुष्ठातारं च पश्यतमिति । तमिमं मन्त्रं बाहुद्वयपरत्वेन व्याचष्टे– बाहू वै मित्रेति । अन्तिमपादस्यार्थमाह– ततः पश्यतमिति । स्वं स्वीयं अरणं अरमणीयं परं च पश्यत-

मिति । अदितिशब्दस्य स्वोऽर्थः, दितिशब्दस्य परोऽर्थः इति विभागः । शब्रासा.

**नैतेनोद्गृह्णीयात् । 'मित्रोऽसि वरुणोऽसि' इत्येवोद्गृह्णीयात् । बाहू वै मित्रावरुणौ । बाहुभ्यां वै राजन्यो मैत्रावरुणः । तस्मान्मित्रोऽसि वरुणोऽसीत्येवोद्गृह्णीयात् ॥**

एतेन मन्त्रेणोद्ग्रहणं दूषयति– नैतेनेति । स्वमतमाह– मित्रोऽसीति । एवकारः अन्यमन्त्रनिवृत्त्यर्थः । मन्त्रस्तु पूर्वं व्याख्यातः । तमिमं मन्त्रं प्रशंसति– बाहू वै मित्रेति । शब्रासा.

**तद्यदेनमूर्ध्वबाहुमभिषिञ्चति । वीर्यं वा एतद्राजन्यस्य यद्बाहू । वीर्यं वा एतदपाꣳ रसः संभृतो भवति येनैनमेतदभिषिञ्चति । नेन्म इदं वीर्यम् । वीर्यमपाꣳ रसः संभृतो बाहू व्लिनादिति । तस्मादेनमूर्ध्वबाहुमभिषिञ्चति ॥**

एवमूर्ध्वबाहुत्वेनैव स्थितस्य यजमानस्याभिषेको विधास्यते । तमिमं पुनः प्रशंसति– तद्यदेनमिति । एवकारो भिन्नक्रमः । ऊर्ध्वबाहुमेवेति योजना । राजन्यस्य बाहू एव वीर्यं । अभिषेचनीयपात्रेषु व्यासिक्तानामपां रसोऽपि वीर्यम्, वीर्यापादकत्वात् । अतः तेन रसेनाभिषेके ऊर्ध्वबाहुत्वमेव युक्तमित्यर्थः । तस्य कारणमाह– नेन्म इति । मे मम इदं वीर्यं वीर्यरूपौ बाहू कर्म वीर्यरूपः अपां रसः नेत् व्लिनात् न वर्जयेत् इति अतो हेतोः ऊर्ध्वबाहुमेवाभिषिञ्चेदित्यर्थः । शब्रासा.

यजमानाभिषेकः

**[१]तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति । पुरस्ताद्ब्राह्मणोऽभिषिञ्चति, अध्वर्युर्वा, यो वाऽस्य पुरोहितो भवति । पश्चादितरे ॥**

अथ द्वितीयब्राह्मणेऽभिषेक उच्यते । अत्र कात्यायनः– 'स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात् पालाशेन प्रथमं पश्चादितरे द्वितीयेन स्वस्तृतीयेन मित्र्यो राजन्यो वैश्यश्चतुर्थेन सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम् । अभिषिञ्चामीति सर्वत्र, साकाङ्क्षत्वात् । क्षत्राणां क्षत्रपतिरेधीति च । इमममुष्य०' (काश्रौ. १५।५।२८–३१) । ऊर्ध्वबाहुत्वेन स्थितं प्राङ्मुखं यजमानं पुरोहिताध्वर्य्वोरन्यतरो ब्राह्मणः सुन्वतः पुरोदेशे स्थित्वा पालाशेन पात्रेणाभिषिञ्चेत् । इतरे स्वादयस्त्रयः अभिषिच्यमानस्य पश्चाद्भागे स्थित्वा स्वस्वपात्रेणाभिषिञ्चेयुः । तत्र 'सोमस्य' इत्यादयश्चत्वारो मन्त्राश्चतुर्णाम् । तत्र 'अभिषिञ्चामि' इति प्रथममन्त्रगतस्य पदस्योत्तरेषु त्रिष्वनुषङ्गः, साकाङ्क्षत्वान्मन्त्राणाम् । 'क्षत्राणां क्षत्रपतिरेधि' इति च सर्वत्रानुषज्यते, 'इमं देवा असपत्नं' इत्येष मन्त्रश्च । तत्र 'इमं, अमुष्य' इति स्थाने यष्टुः तत्पितुश्च नाम गृह्णीयादिति सूत्रार्थः । तमिमं क्रमेण विधत्ते– तं वै प्राञ्चमिति । तच्छब्दः प्रकृतवाची, ऊर्ध्वबाहुमित्यर्थः । प्राञ्चं प्राङ्मुखं तिष्ठन्तमभिषिञ्चेत् । पुरस्तात् अभिषिच्यमानस्य पुरोदेशे ब्राह्मणः अभिषिञ्चेत् । इतरे त्रयः पश्चात् सुन्वतः पश्चिमभागे स्थित्वा अभिषिञ्चेयुः । शब्रासा.

**'सोमस्य त्वा द्युम्नेनाभिषिञ्चामि' इति । वीर्येणैतदाह । 'अग्नेर्भ्राजसा' इति । वीर्येणैवैतदाह । 'सूर्यस्य वर्चसा' इति । वीर्येणैवैतदाह । 'इन्द्रस्येन्द्रियेण' इति । वीर्येणैवैतदाह । 'क्षत्राणां क्षत्रपतिरेधि' इति । राज्ञामधिराज एधीत्येवैतदाह । 'अति दिद्यून् पाहि' इति । इषवो वै दिद्यवः । इषुवधमेवैनमेतदतिनयति । तस्मादाह– अति दिद्यून् पाहीति ॥**

तत्र मन्त्रान् सार्थवादं विधत्ते– सोमस्येति । हे यजमान, त्वा त्वां सोमस्य द्युम्नेन द्योतनशीलया दीप्त्या अभिषिञ्चामीत्येको मन्त्रः । 'अग्नेर्भ्राजसा' इत्यपरः । अभिषिञ्चामीत्यनुषज्यते, वाक्यस्य साकाङ्क्षत्वात् । 'सूर्यस्य वर्चसा' इति तृतीयः । वर्चसा रोचिषा । 'इन्द्रस्येन्द्रियेण' इति चतुर्थः । इन्द्रियेण वीर्येण । सर्वशेषं मन्त्रभागद्वयमर्थपुरस्सरमाह– क्षत्राणामिति । क्षत्राणां बहूनां क्षत्रियाणां राज्ञां वा क्षत्रपतिः क्षत्रियस्य पतिः एधि भव । आवृत्तिवृत्तिभ्यां स्वामित्वं बहुत्वं च विवक्ष्यते ।

(१) शब्रा. ५।४।२।१–१०.

दिद्यून् बाधकानिषून् अतिक्रम्य पाहि रक्ष, इषुभिर्न बाधो भवेदित्यर्थः । शब्रासा.

**'इमं देवा असपत्नᳬ सुवध्वम्' इति । इमं देवा अभ्रातृव्यᳬ सुवध्वमित्येवैतदाह । 'महते क्षत्राय महते ज्यैष्ठ्याय' इति । नात्र तिरोहितमिवास्ति । 'महते जानराज्याय' इति । महते जनानाᳬ राज्यायेत्येवैतदाह । 'इन्द्रस्येन्द्रियाय' इति । वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेति । 'इममुष्य पुत्रममुष्यै पुत्रम्' इति । तद्यदेवास्य जन्म तत एवैतदाह । 'अस्यै विशः' इति । यस्यै विशो राजा भवति । 'एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳬ राजा' इति । तदस्मा इदᳬ सर्वमाद्यं करोति । ब्राह्मणमेवापोद्धरति । तस्माद्ब्राह्मणोऽनाद्यः । सोमराजा हि भवति ॥**

सर्वत्रानुषज्यमानं मन्त्रान्तं सार्थवादं विधत्ते– इमं देवा इति । अयं मन्त्रः पूर्वमेवार्थवादवाक्येन च सह विस्पष्टं व्याख्यातः ( राका. पृ. २६८ ) ।

शब्रासा.

**अथैतमभिषेकं कृष्णविषाणयाऽनुविमृष्टे । वीर्यं वा एतदपाᳬ रसः संभृतो भवति येनैनमेतदभिषिञ्चति । इदं मे वीर्यᳬ सर्वमात्मानमुपस्पृशादिति । तस्माद्वा अनुविमृष्टे ॥**

विधत्ते– अथैतमभिषेकमिति । एवं क्रियमाणमभिषेकं, स्वदेहपतितमभिषेकजलमित्यर्थः । कृष्णविषाणया कण्डूयन्या अनुविमृष्टे प्रलिम्पति यजमानः । तमिमं वीर्यसंपादनरूपेण प्रशंसति– वीर्यं वा इति । इदमभिषेकजलरूपं वीर्यं मे मम सर्वमात्मानं उपस्पृशात् उपस्पृशतु इति बुद्ध्या विमार्जनं कुर्यादित्यर्थः । शब्रासा.

**सोऽनुविमृष्टे– 'प्र पर्वतस्य वृषभस्य पृष्ठात्' इति । यथाऽयं पर्वतोऽतिष्ठावा, यथर्षभः पशूनतिष्ठावा । एवं वा एष इदᳬ सर्वमतितिष्ठति । अर्वागेवास्मादिदᳬ सर्वं भवति यो राजसूयेन यजते । तस्मादाह– 'प्र पर्वतस्य वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः । ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनुरीयमाणाः ॥' इति ॥**

तत्र मन्त्रं विधत्ते– सोऽनुविमृष्टे प्र पर्वतस्येति । या आपो वृषभस्य वर्षणक्षमस्य पर्वतस्य । पर्वत इति मेघनाम ( निघण्टुः १।१०।९ ) । मेघस्य पृष्ठात् नावः नाव्या इत्यर्थः, प्रचरन्ति । कीदृश्यः ? स्वसिचः । स्वं आत्मीयं यजमानशरीरं सिञ्चन्तीति स्वसिचः । इयानाः गच्छन्त्यः बाहुल्येन सर्वत्र प्रवहन्त्यः ता आपः उदक्ताः उत्क्षिप्ताः । उत्पूर्वस्याञ्चतेः निष्ठायां रूपम् । इदानीं अधराग् अधोभागे अहिं आरभ्येति । अहिः उत्तमाङ्गम् । बुध्न्यम् । बुध्नस्य पादस्याग्रभागो बुध्न्यः । तं शिरःप्रभृति पादपर्यन्तं अनु अनुक्रमेण रीयमाणाः लेपरूपेण स्रवन्त्यः आववृत्रन् यजमानशरीरं सम्यगावृत्य स्थिताः तिष्ठन्तीति । इत्याध्यात्मिकोऽर्थः । आधिदैविकस्तु– पर्वतः आदित्यः, वृषभस्य पृष्ठात् इयानाः निर्गच्छन्त्यः नावः नाव्या आपः चरन्ति । तथा च श्रुतिः–– 'नाव्या उ एव यजुष्मत्य इष्टकाः' इत्युपक्रम्य 'षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्ति' ( शब्रा. १०।५।४।१४ ) इति । ताः प्रावृट्काले आववृत्रन् आवर्तन्ते । अधराक् आदित्यमण्डलात् भूमिं प्रति अधोगमनशीलाः, उदक् ताः पूर्वं भूमेः सकाशात् आदित्यमण्डलं प्रति उदक् ऊर्ध्वगमनशीलाः अहिं मेघं बुध्नं अन्तरिक्षम्, तत्र भवं बुध्न्यं मध्यमस्थानं अनुरीयमाणाः अनुप्रविश्य तस्मान्निर्गच्छन्त्यः, भूमिं प्राप्नुवन्तीति शेषः । मन्त्रस्य प्रथमपादस्य तात्पर्यमाह– यथाऽयं पर्वत इति । यथा पर्वतः अतिष्ठावा सर्वमतिक्रम्य स्थाता । तिष्ठतेः 'आतो मनिन्०' ( पा. ३।२।७४ ) इत्यादिना वनिप् । यथा ऋषभः पशूनतिक्रम्य तिष्ठति एवमेष राजा तिष्ठति सर्वस्योपरि भवति । अस्मात् यजमानात् इदं सर्वं अर्वाक् भवति । तस्मात् प्रपर्वतस्येति पाठः प्रशस्त इत्यर्थः । शब्रासा.

**अथैनमन्तरेव शार्दूलचर्मणि विष्णुक्रमान् क्रमयति– 'विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि' इति । इमे वै लोका विष्णो-**

**र्विक्रमणं, विष्णोर्विक्रान्तं, विष्णोः क्रान्तम् । तदिमानेव लोकान्त्समारुह्य सर्वमेवेदमुपर्युपरि भवति । अर्वागेवास्मादिदꣳ सर्वं भवति ॥**

विधत्ते– अथैनमिति । शार्दूलचर्ममध्ये एव यजमानं त्रीन् विष्णुक्रमान् क्रमयेदध्वर्युः । तत्र मन्त्रत्रयं विधत्ते– विष्णोरिति । एकैकस्य क्रमणस्यैकैको मन्त्र इत्यर्थः । विष्णोः यज्ञस्य यच्च विक्रमणं यच्च विक्रान्तं यच्च क्रान्तं तत् सर्वं त्वमसीति योजनीयाः । क्रमणत्रयं लोकत्रयात्मना प्रशंसति– इमे वै लोका इति । शब्रासा.

**अथ ब्राह्मणस्य पात्रे सꣳस्रवान्त्समवनयति । तद्ब्राह्मणꣳ राजानमनु यशः करोति । तस्माद्ब्राह्मणो राजानमनु यशः ॥**

अथ स्वमित्रवैश्यपात्रत्रयशेषाणां पालाशपात्रे व्यासेचनं विधत्ते– अथ ब्राह्मणस्येति । तद्ब्राह्मणमिति । तत् तेन व्यवनयनेन राजानं अनु पश्चात् ब्राह्मणं यशः यशस्विनं कृतवान् भवति । लोके हि राजा कीर्तिमान् , ब्राह्मणोऽपि तदनन्तरं कीर्तिमानित्युच्यते । शब्रासा.

**तद्योऽस्य पुत्रः प्रियतमो भवति । तस्मा एतत्पात्रं प्रयच्छति– 'इदं मेऽयं वीर्यं पुत्रोऽनुसंतनवत्' इति ॥**

विधत्ते– तद्योऽस्येति । एतत् संस्रवैः प्रासिक्तं ब्राह्मणस्य पालाशपात्रं राज्ञः प्रियतमाय पुत्राय प्रयच्छेत् । प्रदाने ब्राह्मणोक्तं मन्त्रमाह– इदं म इति । अत एव कात्यायनो मन्त्रं पपाठ– '०पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनुसंतनोतु०' (काश्रौ. १५।६।१० )। अयं मे पुत्रः मे मम वीर्यरूपं कर्म अनुसंतनोतु विस्तारयत्विति । शब्रासा.

**अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति– 'प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पिता ॥' इति । तद्यः पुत्रस्तं पितरं करोति । यः पिता तं पुत्रम् । तदेनयोर्वीर्ये व्यतिषजति । 'असावस्य पिता' इति । तद्यः पिता तं पितरं करोति । यः पुत्रस्तं पुत्रम् । तदेनयोर्वीर्ये व्यतिषज्य पुनरेव यथायथं करोति । 'वयꣳ स्याम पतयो रयीणाꣳ स्वाहा' इति । आशीरेवैषैतस्य कर्मणः । आशिषमेवैतदाशास्ते ॥**

विधत्ते– अथ प्रतीति । गार्हपत्यं प्रतिपरेत्य प्रत्यङ्मुखो गत्वा अन्वारब्धे प्रकृतत्वात् पुत्र इति गम्यते । अत्र सूत्रम्– 'शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे प्रजापत इति०' (काश्रौ. १५।६।११ ) इति । मन्त्रस्यार्थः – हे प्रजापते, त्वदन्यः कोऽपि पुरुषः उत्पन्नानि तानि एतानि विश्वा विश्वानि ( रूपाणि ) न परि बभूव परिभवितुं व्याप्तुं समर्थोऽभूत् । परिपूर्वो भवतिर्व्याप्त्यर्थे वर्तते । अतस्तेन वयं यत्कामा जुहुमः तत् फलमस्माकमस्तु । वयं धनानां पतयः स्यामेति । अत्र तृतीयपादान्ते 'अयं अमुष्य पिता, असौ अस्य पिता' इति मन्त्रभाग आम्नातः । अयं पुत्रः अभिमन्युः अमुष्य अर्जुनस्य पिता इति पूर्वं पितृशब्दं पुत्रे कृत्वा ब्रूयात् । पश्चात् असौ पिता अर्जुनः अस्य पुत्रस्याभिमन्योः पिता इति यथायथं ब्रूयादित्यर्थः । अत एव कात्यायनः– '०प्रजापत इति पुत्रयजमानयोर्नाम गृह्णाति, पितृशब्दं पुत्रे कृत्वा, यथायथं पश्चात् ।' ( काश्रौ. १५।६।११ ) इति । तमिमं पादत्रयपुरस्सरं पठति– प्रजापत इति । तत्र अयममुष्य पितेत्यस्यार्थमाह– तद्यः पुत्र इति । पुत्रं पितरं, पितरं पुत्रं कृत्वा पठेदित्यर्थः । तदेतेन पुत्रस्य पितृकरणेन पितुश्च पुत्रकरणेन एनयोः पितापुत्रयोः वीर्ये व्यतिषजति परस्परं संसृष्टे कृतवान् भवति । असावस्य पितेत्यस्यार्थमाह– तद्यः पितेति । अत्र पितुरेव पितृत्वम्, पुत्रस्यैव पुत्रत्वम् । अनेनैतयोर्वीर्ये पूर्वं व्यतिषज्य पश्चात् यथा ( ? यथायथं ) पुत्रस्य वीर्यं पुत्र एव पितुर्वीर्यं पितर्येव कृतवान् भवतीत्यर्थः । अन्तिमपादस्याऽऽशीःपरत्वं दर्शयति– आशीरेवैषेति । शब्रासा.

**अथ य एष सꣳस्रवोऽतिरिक्तो भवति तमाग्नीध्रीये जुहोति । अतिरिक्तो वा एष सꣳस्रवो भवति । अतिरिक्त आग्नीध्रीयः । गार्हपत्ये हवीꣳषि श्रपयन्ति । आहवनीये जुह्वति । अथैषो-**

**ऽतिरिक्तः । तदतिरिक्त एवैतदतिरिक्तं दधाति । उत्तरार्धे जुहोति । एषा ह्येतस्य देवस्य दिक् । तस्मादुत्तरार्धे जुहोति । स जुहोति– 'रुद्र यत्ते क्रिवि परं नाम तस्मिन् हुतमस्यमेष्टमसि स्वाहा' इति ॥**

पालाशपात्रशेषस्य आग्नीध्रीये ऋचा हवनं विधत्ते– अथ य एष संस्रव इति । अतिरिक्तस्य शेषस्य आग्नीध्रीये हवनस्योपपत्तिं दर्शयति– अतिरिक्त इति । तदेवोपपादयति– गार्हपत्ये हवींषीति । गार्हपत्ये सर्वेषां हविषां श्रपणम्, आवहनीये तेषां होमः । अतः श्रपण-हवनयोरनुपयुक्तत्वात् आग्नीध्रीयः अतिरिक्त इत्यर्थः । प्रदेशविशेषं विधत्ते– उत्तरार्ध इति । अस्य रुद्रसंबन्धं दर्शयति– एषा हीति । एतस्य देवस्य, रुद्रस्येत्यर्थः । होममनूद्य मन्त्रं विधत्ते– स जुहोतीति । हे रुद्र, रुत् सांसारिकं दुःखं द्रावयतीति । तस्य संबुद्धिः । ते तव परं उत्कृष्टं यत् नाम 'नमः शिवाय, पशुपतये' इत्यादि श्रुतिप्रसिद्धम् । क्रिवि । कृवि हिंसाकरणयोः । विरोधिनो हिंसकमसि (? मस्ति) । तस्मिन् नाम्नि हुतमसि अभिषेकशेषभूतमुख्यपात्रस्थजल, त्वं हुतं भवेति जलं संबु(? बो)ध्यार्थ उन्नेयः । अमेष्टमसीति । अमा-शब्दोऽत्र गृहवचनः । मदीये गृहे त्वं इष्टं भव । स्वाहा सुहुतमस्त्विति । शब्रासा.

रथारोहणमवरोहणं च

**[1]तद्योऽस्य स्वो भवति तस्य शतं वा परःशता वा गा उत्तरेणाहवनीयꣳ सꣳस्थापयति । तद्य-देवं करोति ॥**

कात्यायनः– 'गवां शतमधिकं वा स्वस्याहवनीय-स्योत्तरतः स्थापयति ।' (काश्रौ. १५।६।१३) इति । स्वस्य ज्ञातेः भ्रातुः, तदर्थमाहवनीयस्योत्तरप्रदेशे शत-संख्या अधिका वा गाः स्थापयेदिति । तदिदं सार्थवादं विधत्ते– तद्योऽस्य स्वो भवतीति । परःशताः शता-धिका इत्यर्थः । एवं पशुसंस्थापनरूपं कर्म करोति इति यत् एतत् तथो तथैव वरुणेन कृतत्वात् इत्युत्तरत्र संबन्धः । शब्रासा.

**वरुणाद्ध वा अभिषिषिचानादिन्द्रियं वीर्यमपचक्राम । शश्वद्य एषोऽपाꣳ रसः संभृतो भवति येनैनमेतदभिषिञ्चति सोऽस्येन्द्रियं वीर्यं निर्जघान । तत्पशुष्वन्वविन्दत् । तस्मात्पशवो यशः । यदेष्वन्वविन्दत् । तत्पशुष्वनुविद्येन्द्रियं वीर्यं पुनरात्मन्नधत्त । तथो एवैष एतत् । नाहैवास्मान्विन्द्रियं वीर्यमपक्रामति । वरुणसवो वा एष यद्राजसूयमिति । वरुणोऽकरोदिति त्वेवैष एतत्करोति ॥**

वरुणादिति । पूर्वं राजसूयेऽभिषिच्यमानात् वरुणात् इन्द्रियं वीर्यं अपचक्राम अपसृतम् । वीर्यापसरणे कारण-माह– शश्वद्य एष इति । शश्वत् निश्चितं संभृतः अपां रसः येन संभृतेन रसेन इदानीमध्वर्युः अभिषिञ्चति स रसः अस्य वरुणस्य वीर्यं निर्जघान हतवान् । (तत्) वरुणः पशुषु अन्वविन्दत् अलभत । तस्मात् पशूनां यशोरूपत्वम्, पशुत एव यशःसंभवात् । तल्लब्धं वीर्यं वरुणः पुनः आत्मनि स्थापितवान् । तथो तेनैव प्रकारेण एषः यजमानोऽपि एतत् पशुसंस्थापनेन इन्द्रियं वीर्यं आत्मनि धत्ते । तदेव व्यतिरेकमुखेनाऽऽह– नाहैवास्मादिति । अहशब्दः प्रसिद्धिवाची । तस्मात् एवं पशु-निधानरूपं कर्म कुर्वतः सुन्वतः सकाशात् वीर्यं न अप-क्रामति नापसरति । राजसूयमिति यत् तत् वरुणसवः । राजसूये वरुण एवमकरोदिति बुद्ध्या एषः यजमानोऽपि एतत् करोति यत् (? एव) इति संग्रहार्थः ।

शब्रासा.

**अथ रथमुपावहरति । यद्वै राजन्यात्पराग्भवति रथेन वै तदनुयुङ्क्ते । तस्माद्रथमुपावहरति ॥**

अथ रथोपावहरणं विधत्ते– अथ रथमिति । रथोपाव-हरणं प्रशंसति– यद्वै राजन्यादिति । यत् वस्तु राजन्यात् पराक् पराचीनं अवशमस्ति तत् एतत् अनेन रथेन अनुयुङ्क्ते अनुकूलं स्वाधीनं कुर्यात् । तस्मात् रथ उपावहर्तव्य इत्यर्थः । शब्रासा.

(१) शब्रा. ५।४।३।१–२७.

**स उपावहरति– ‘ इन्द्रस्य वज्रोऽसि ’ इति । वज्रो वै रथः । इन्द्रो वै यजमानः । द्वयेन वा एष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानः । तस्मादाह– इन्द्रस्य वज्रोऽसीति ॥**

मन्त्रं विधत्ते– स उपावहरतीति । इन्द्रस्येति । वाजपेये व्याख्यातः । [ हे रथ, त्वमिन्द्रस्य वज्रोऽसि । वज्र एव हि स्फ्यरथयूपभेदेन त्रिधा विभक्तः, ‘ इन्द्रो वृत्राय वज्रं प्राहरत्, स त्रेधा व्यभवत्, स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयम् ’ ( तैसं ५।२।६।१-२ ) इति श्रुतेः । ( शब्रा. ५।१।४।३ ) ] रथयजमानयोर्वज्रेन्द्रात्मकत्वमुपपादयति– वज्रो वा इति । शब्रासा.

**तमन्तर्वेद्यभ्यववर्त्य युनक्ति– ‘ मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि ’ इति । बाहू वै मित्रावरुणौ । बाहुभ्यां वै राजन्यो मैत्रावरुणः । तस्मादाह– मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति ॥**

रथस्य वज्रात्मकत्वमुक्तम् । तस्य प्रदेशविधानपुरस्सरमश्वयोर्योजनं समन्त्रकं विधत्ते– तमन्तर्वेदीति । अन्तर्वेदि वेदिमध्ये अभ्यावर्त्य अभिमुखमानीय, दक्षिणस्यां वेदिश्रोणौ युञ्ज्यादित्यर्थः । हे रथ, त्वां प्रशास्त्रोः अनुशासकयोः आज्ञापयित्रोः मित्रावरुणयोः प्रशिषा प्रशासनेन यज्ञसंबन्धनिमित्तं युनज्मि अश्वैः संयोजयामि इति । मित्रावरुणशब्दार्थमाह–बाहू वा इति । शब्रासा.

**तं चतुर्युजं युनक्ति । स जघनेन सदोऽग्रेण शालां येनैव दक्षिणा यन्ति तेन प्रतिपद्यते । तं जघनेन चात्वालमग्रेणाग्नीध्रमुद्यच्छति ॥**

रथस्याश्वचतुष्टयोपेतत्वं विधत्ते- तं चतुर्युजमिति । दक्षिणापथेन गमनं विधत्ते– स जघनेनेति । सोऽध्वर्युः सदो जघनेन सदोमण्डपस्य पश्चिमभागे शालामग्रेण प्राग्वंशस्याग्रभागे येनैव येन मार्गेण दक्षिणाः दक्षिणार्थं दीयमाना गावः यन्ति गच्छन्ति तेन प्रतिपद्यते रथेन सहितं प्रविशेदित्यर्थः । ‘ दक्षिणेन वेदिं दक्षिणा उपतिष्ठन्ते ’ इति चतुर्थकाण्डे ( शब्रा. ४।३।४।१४ ) दक्षिणागमनमुक्तम् । रथसंस्थापनस्य प्रदेशविशेषं विधत्ते– तं जघनेनेति । आग्नीध्रचात्वालयोर्मध्यदेशे रथमुद्यच्छति ऊर्ध्वमुखं स्थापयेत् । शब्रासा.

**तमातिष्ठति– ‘ अव्यथायै त्वा स्वधायै त्वा ’ इति । अनार्त्यै त्वेत्येवैतदाह यदाह– अव्यथायै त्वेति । स्वधायै त्वेति । रसाय त्वेत्येवैतदाह । ‘ अरिष्टोऽर्जुनः ’ इति । अर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम । द्वयेन वा एष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानः । तस्मादाह– अरिष्टो अर्जुन इति ॥**

अथ यजमानस्य रथारोहणं समन्त्रकं विधत्ते– तमातिष्ठतीति । आतिष्ठति आरोहेदित्यर्थः । अव्यथायै । व्यथ भयसंचलनयोः । अभयाय त्वा त्वां, आतिष्ठामीति शेषः । स्वधायै अन्नाय त्वामातिष्ठामि इति । अर्जुन इति इन्द्रस्य प्रियं नाम । इन्द्रात्मकोऽहमातिष्ठामीति संबन्धः । मन्त्रं पदशोऽनूद्य व्याचष्टे– अनार्त्यै त्वेति । अर्जुनपदस्येन्द्रवाचकत्वं दर्शयति– अर्जुनो ह वा इति । इन्द्रस्य गुह्यं गूढं नामधेयम् । तस्मात् अर्जुनः इन्द्रः । अस्त्विन्द्रस्य अर्जुननामधेयम्, प्रकृते किमायातमित्याशङ्क्य यष्टुरिन्द्रात्मकत्वमाह– द्वयेन वा इति । क्षत्रसंबन्धात् यष्टृत्वाच्च सुन्वत इन्द्रत्वम्, तस्मात् मन्त्रे अर्जुनपदेन यजमानाभिधानं युज्यत इत्यर्थः । शब्रासा.

**अथ दक्षिणायुग्यमुपार्षति– ‘ मरुतां प्रसवेन जय ’ इति । विशो वै मरुतः । विशा वै तत् क्षत्रियो जयति यज्जिगीषति । तस्मादाह– मरुतां प्रसवेन जयेति ॥**

अथ दक्षिणभागे युक्तस्याश्वस्य प्राजनं समन्त्रकं विधत्ते– अथ दक्षिणेति । उपार्षति । ऋषी गतौ । प्राजतीत्यर्थः । हे अश्व, मरुतां विद्युद्रूपाणां प्रसवेन प्रेरणया जय सर्वं स्वाधीनं कुर्विति । मन्त्रं व्याचष्टे– विशो वा इति । यत् राज्ञा जेतव्यमस्ति तत् विशा प्रजया जयति । तस्मात् विड्रूपमरुत्प्रतिपादनमन्त्रो युक्तः । शब्रासा.

**अथ मध्ये गवामुद्यच्छति– ‘ आपाम मनसा ’ इति । मनसा वा इदꣳ सर्वमाप्तम् । तन्मनसैवैतत्सर्वमाप्नोति । तस्मादाह– आपाम मनसेति ॥**

विधत्ते– अथ मध्य इति। गवां पूर्वं स्थापितानां मध्ये उद्यच्छति स्थापयति। मनसा आपाम आप्तवन्तो भवाम। आप्नोतेर्लुङि लृदित्वात् च्लेरङि कृते रूपम्। मन्त्रस्य तात्पर्यमाह– मनसा वा इति। शब्रासा.

**अथ धनुरार्त्न्या गामुपस्पृशति– 'समिन्द्रियेण' इति। इन्द्रियं वै वीर्यं गावः। इन्द्रियमेवैतद्वीर्यमात्मन्धत्ते। अथाह– 'जीनामीमाः कुर्वे इमाः' इति॥**

अथ धनुष्कोट्या स्वानां स्थापितानां गवां मध्ये एकस्याः स्पर्शनं समन्त्रकं विधत्ते– अथ धनुरिति। इन्द्रियेण बलेन संगता भवामः। इन्द्रियं वा इति। 'समिन्द्रियेण' इति मन्त्रेण गोरुपस्पर्शने इन्द्रियस्यैव वीर्यस्य धारणं कृतं भवतीत्यर्थः। शिष्टानां गवां स्वाधीनकरणार्थं 'जिनामि' इति ब्रूयात्। इदं ब्राह्मणोक्तं वाक्यं, न तु मन्त्रः। तस्यायमर्थः– इमा गाः जिनामि। अपि च, इमाः कुर्वे स्वाधीनाः करवा इति। अत्र सूत्रम्– 'धनुरार्त्न्योपस्पृशति गां यजमानः समिन्द्रियेणेति। जिनामीमाः कुर्व इमा इति चाह।' (काश्रौ. १५।६।२०–२१) इति। शब्रासा.

**तद्यत्स्वस्य गोषूद्यच्छति। यद्वै पुरुषात्पराग्भवति यशो वा किञ्चिद्वा स्वᳪ हैवास्य तत्। प्रतमामिवाभ्यपक्रामति। तत्स्वादेवैतदिन्द्रियं वीर्यं पुनरात्मन्धत्ते। तस्मात्स्वस्य गोषूद्यच्छति॥**

स्वानां स्थापितासु गोषु रथस्य स्थापनं प्रशंसति– तद्यदिति। यत् वस्तु पुरुषात् पराक् पराधीनं बहिर्मुखं नष्टं भवति। किं तत्? तदाह– यशो वा किञ्चिदिति। तत् यशआदिकं किंचित् अन्यत् स्वं स्वीयं वस्तु अभिलक्ष्य प्रतमां प्रकर्षेण गच्छति। तत् अनेन अस्य ज्ञातेर्गोषु स्थापनेन पराङ्मुखं वीर्यं स्यात् ज्ञातेः सकाशात् पुनः स्वाधीनं कृतवान् भवतीत्यर्थः। शब्रासा.

**तस्मै तावन्मात्रीर्वा भूयसीर्वा प्रतिददाति। न वा एष क्रूरकर्मणे भवति यद्यजमानः। क्रूरमिव वा एतत्करोति यदाह– जिनामीमाः कुर्व इमा इति। तथो हास्यैतदक्रूरं कृतं भवति। तस्मात्तावन्मात्रीर्वा भूयसीर्वा प्रतिददाति॥**

अथ स्थापितानां गवां स्वामिने स्वाय, अन्यासां तावतीनां गवां प्रतिदानं दर्शयति– तस्मै तावन्मात्रीरिति। यावत्संख्याकाः पूर्वमाहवनीयस्योत्तरतो गा अवस्थापिताः, तावन्मात्रीः तावत् परिमाणं यासां ताः तावन्मात्र्यः। प्रमाणे मात्रच्प्रत्ययः। 'टिड्ढाणञ्०' (पा.४।१।१५) इति सूत्रेण ङीप्। भूयसीः ततोऽप्यधिकाः। प्रतिदानं प्रशंसति– न वा एष क्रूरेति। यजमान इति। यत् एष क्रूरकर्मणे न भवति इत्यन्वयः। यजमानेन अन्यस्य प्रीतिजनकं कर्म कर्तव्यम्। किं तत् क्रूरकर्मेति तद्दर्शयति– यदाह जिनामीति। तस्मात् गोस्वामिने स्वाय अन्यास्तावतीः भूयसीर्वा गाः (च?) दत्त्वा वेदिमध्ये स्थितानां गवां स्वाधीनकरणेन क्रूरं कर्म न कृतं भवतीत्यर्थः। शब्रासा.

**अथ दक्षिणानायच्छति। सोऽग्रेण यूपं दक्षिणेन वेदिं येनैव दक्षिणा यन्ति तेन प्रतिपद्यते। तं जघनेन सदोऽग्रेण शालामुद्यच्छति॥**

आहवनीयस्योत्तरतः स्थापितानां गवां मध्ये दक्षिणतोऽश्वानां स्थापनं विधत्ते– अथ दक्षिणानिति। यूपस्य पूर्वतो वेदेर्दक्षिणतः दक्षिणान् दक्षिणदिङ्मुखानश्वान् आयच्छेत्। अथान्तःपात्यदेशे रथस्य स्थापनं विधातुमुद्गगमनमार्गमाह– सोऽग्रेणेति। अनेन मार्गेण रथं प्रदक्षिणमावर्त्य। येनैव दक्षिणा इति। दक्षिणागमनमार्गस्तु पूर्वमेवोक्तः। सदसः पश्चिमे शालायाः पूर्वदेशे रथं उद्यच्छति स्थापयेत्। सूत्रितं हि– '०पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मा त इति।' (काश्रौ. १५।६।२२)। शब्रासा.

**'मा त इन्द्र ते वयं तुराषाडयुक्तासो अब्रह्मता विदसाम। तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वान्॥' इति। उद्यच्छत्येवैतया। अभीशवो वै रश्मयः। तस्मादाह– आ रश्मीन्देव यमसे स्वश्वानिति। अथ रथविमोचनीयानि**

**जुहोति । प्रीतो रथो विमुच्याता इति । तस्माद्रथविमोचनीयानि जुहोति ॥**

'मा त' इति मन्त्रस्यायमर्थः— हे वज्रहस्त, यं रथं अधितिष्ठ अधितिष्ठसि, हे देव, यस्मिंश्च त्वमवस्थितः स्वश्वान् शोभनाश्वान् रश्मीन् आयमसे नियच्छसि । हे तुराषाट् । तूर्णं सहते इति तुराषाट्, तस्य संबुद्धिः । हे इन्द्र, ते तव स्वभूते रथे अयुक्तासः संयोगरहिता वयं अब्रह्मता अब्रह्मत्वं विदसाम विदेम । तव रथे अयुक्ताः वयं ब्रह्मवर्चसं न लभामहे, किंतु युक्ताः सन्तो ब्रह्मवर्चसमेव लभेमहीत्यर्थः । रश्मिपदस्यार्थमाह- अभीशव इति । रथविमोचनीयहोमं विधत्ते- अथ रथेति । रथः होमेन प्रीतः सन् विमुच्यातै विमुक्तो भवत्विति । शब्रासा.

**स जुहोति- 'अग्नये गृहपतये स्वाहा' इति । स यदेवाग्नेयꣳ रथस्य तदेवैतेन प्रीणाति । वहा वा आग्नेया रथस्य । वहानेवैतेन प्रीणाति । श्रीर्वै गार्हपतम् । यावतोयावत ईष्टे तच्छ्रियमेवास्यैतद्गार्हपतꣳ राज्यमभिविमुच्यते ॥**

होममनूद्य चतुरो मन्त्रान् सार्थवादं पृथक् विधत्ते— स जुहोत्यग्नय इति । चतुर्णां मन्त्राणामयमर्थः— गृहपतये अग्नये स्वाहा सुहुतमस्तु । वनस्पतये वनस्पतिगुणकाय सोमाय स्वाहा । मरुतां संबन्धिने ओजसे बलाय स्वाहा । इन्द्रस्य स्वभूताय इन्द्रियाय वीर्याय स्वाहा इति । तत्र प्रथममन्त्रं प्रशंसति- यदेवाग्नेयमिति । मन्त्रैकदेशेनाग्निपदेन रथस्य आग्नेयमङ्गं प्रीणितवान् भवति । रथस्याग्नेयमङ्गं दर्शयति- वहा वा इति । अश्वैरुह्यमानस्य युगस्य प्रान्तप्रदेशा वहाः । ते आग्नेयाः, 'अग्निदग्धमिवैषां वहं भवति ।' (शब्रा. १।१।२।९) इति श्रुतेः । अग्निदग्धत्वसाम्यात् रथेऽपि वहा आग्नेयाः । प्रथमहोममन्त्रे 'अग्नये' इत्येकदेशपाठेन रथाङ्गप्रीणनम् । 'गृहपतये' इति भागं प्रशंसति- श्रीर्वा इति । गार्हपतं गृहपतित्वं नाम श्रीः । यतः पुरुषो यावतः धनस्य पुरुषस्य वा ईष्टे तत् एतेन 'गृहपतये' इति मन्त्रभागपठनेन यजमानस्य गार्हपतलक्षणं राज्यमभिलक्ष्य रथो विमुक्तो भवतीत्यर्थः । एवमुक्तेषु मन्त्रेषु एकदेशेन रथाङ्गप्रीणनम्, अपरेण यजमानफलार्थं रथविमोक उच्यत इति । शब्रासा.

**'सोमाय वनस्पतये स्वाहा' इति । द्वयानि वै वानस्पत्यानि चक्राणि रथ्यानि चाऽऽनसानि च । तेभ्यो न्वेवैतदुभयेभ्योऽरिष्टिं कुरुते । सोमो वै वनस्पतिः । स यदेव वानस्पत्यꣳ रथस्य तदेवैतेन प्रीणाति । दारूणि वै वानस्पत्यानि रथस्य । दारूण्येवैतेन प्रीणाति । क्षत्रं वै सोमः । क्षत्रमेवास्यैतद्राज्यमभिविमुच्यते ॥**

सोमायेति । द्वयानीति । वनस्पतिनिर्मितानि चक्राणि द्वयानि द्विप्रकाराणि, रथ्यानि रथसंबन्धीनि आनसानि अनस्संबन्धीनि चेति । तदेतेन 'सोमाय वनस्पतये' इति मन्त्रपाठेन उभयविधेभ्यो रथ्यानसचक्रेभ्यः तदर्थं अरिष्टिं अहिंसां कृतवान् भवति । सोमस्य वनस्पतित्वात् ओषधिपोषकत्वात् वनस्पतिपदेन रथस्य दारुविनिर्मितान्यङ्गानि प्रीणयति । सोमस्य क्षत्ररूपत्वं, राजत्वात् बलसंपादकत्वाद्वा । तस्मात् सोमपदेन क्षत्रियसंबन्धि स्वाराज्यमभिलक्ष्य रथो विमुक्तो भवतीत्यर्थः । शब्रासा.

**'मरुतामोजसे स्वाहा' इति । स यदेव मारुतꣳ रथस्य तदेवैतेन प्रीणाति । चत्वारोऽश्वाः, रथः पञ्चमः, द्वौ सव्यष्टृसारथी, ते सप्त । सप्त सप्त वै मारुतो गणः । सर्वमेवैतेन रथं प्रीणाति । विशो वै मरुतः । विशमेवास्यैतद्राज्यमभिविमुच्यते ॥**

मरुतामिति । तृतीयेऽत्र मन्त्रे मरुतामिति पदेन रथस्यैव प्रीणनम् । रथस्य मारुतत्वं संपादयति- चत्वारोऽश्वा इति । रथस्थाश्वचतुष्टयं, रथः स्वयं पञ्चमः, द्वौ सव्यष्टृसारथी सव्यदक्षिणभागयोरवस्थितौ द्वौ सारथी इति सप्तसंख्या अस्ति । मरुतामपि सप्तगणात्मकत्वात् सप्तसंख्याकत्वम् । अतः सप्तसंख्यासाम्यात् मरुतामिति पदेन रथस्यैव प्रीणनं कृतं भवतीत्यर्थः । मरुत्पदमेव यजमानस्य फलार्थमपि प्रशंसति- विशो वा इति । शब्रासा.

**'इन्द्रस्येन्द्रियाय स्वाहा' इति । स यदेवैन्द्रꣳ रथस्य तदेवैतेन प्रीणाति । सव्यष्ठा वा ऐन्द्रो**

**रथस्य । सव्यष्ठारमेवैतेन प्रीणाति । इन्द्रियं वै वीर्यम् । इन्द्र इन्द्रियमेवास्यैतद्वीर्यꣳ राज्यमभिविमुच्यते ॥**

इन्द्रस्येति । अत्र चतुर्थमन्त्रे इन्द्रपदेन रथस्य सारथिप्रीणनम् । सव्यभागे तिष्ठतीति सव्यष्ठा ।

शब्रासा.

**अथ वाराह्या उपानहा उपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयांचक्रुः । ततो वराहः संबभूव । तस्माद्वराहो मेदुरः । घृताद्धि संभूतः । तस्माद्वराहे गावः संजानते । स्वमेवैतद्रसमभिसंजानते । तत्पशूनामेवैतद्रसे प्रतितिष्ठति । तस्माद्वाराह्या उपानहा उपमुञ्चते ॥**

विधत्ते– अथ वाराह्या इति । वाराह्यौ वराहचर्मनिर्मिते उपानहौ उपमुञ्चते । कात्यायनेन 'पशूनां रसोऽसि' इति मन्त्रेण वाराह्योरुपानहोरुपमोको विहितः । तत्र मन्त्रे वराहस्य पशुरसत्वमभिधीयते । तदुपपादयति– अग्नौ ह वै देवा इति । पूर्वं देवा घृतकुम्भमग्नौ प्रासुः । तस्मात् वराह उत्पन्नः । अतो घृतोत्पन्नत्वात् वराहस्य मेदुरत्वं मांसलत्वम् । तस्मिन् वराहे गावः संजानते संवदन्ते, स्वीयरसभूतघृतोत्पन्नत्वात् । तस्मात् वाराह्योरुपानहोरुपमोकेन पशुरस एव स्वयं प्रतिष्ठितो भवतीत्यर्थः ।

शब्रासा.

**अथेमां प्रत्यवेक्षमाणो जपति– 'पृथिवि मातर्मा मा हिꣳसीर्मो अहं त्वाम्' इति । वरुणाद्ध वा अभिषिषिचानात्पृथिवी बिभयांचकार महद्वा अयमभूद्योऽभ्यषेचि, यद्वै माऽयं नावदृणीयादिति । वरुण उ ह पृथिव्यै बिभयांचकार– यद्वै मेयं नावधून्वीतेति । तदनयैवैतन्मित्रधेयमकुरुत । न हि माता पुत्रꣳ हिनस्ति । न पुत्रो मातरम् ॥**

**वरुणसवो वा एष यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति– महद्वा अयमभूद्योऽभ्यषेचि, यद्वै माऽयं नावदृणीयादिति । एष उ हास्यै बिभेति– यद्वै मेयं नावधून्वीतेति । तदनयैवैतन्मित्रधेयं कुरुते । न हि माता पुत्रꣳ हिनस्ति । न पुत्रो मातरम् । तस्मादेवं जपति ॥**

अथेमामिति । पृथिवि मातः सर्वेषां निर्मात्रि, पृथिव्या मातृत्वं 'द्यौः पिता । पृथिवी माता' ( तैब्रा. ३।७।५।४–५ ) इति श्रुत्यन्तरेषु श्रूयते । मा मां मा हिंसीः मा वधिष्ठाः । अहमपि त्वां नैव हिंसिषमिति मन्त्रार्थः । 'वरुणाद्ध वा अभिषिषिचानात्' इत्यादिकः 'न हि माता पुत्रं हिनस्ति । न पुत्रो मातरम् ।' इत्यन्तो वाक्यसंदर्भो वाजपेये भूम्यवेक्षणप्रसङ्गे व्याख्यातः । [ मन्त्रगतमातृशब्दस्य जननीवाचकत्वं विवक्षितमिति वदन् भूम्यवेक्षणं बृहस्पतिदृष्टान्तमुखेन प्रशंसति– बृहस्पतेरिति । पूर्वं वाजपेययज्ञे बृहस्पतेरभिषिक्तात् भूमिर्बिभेति स्म । भयकारणमाह– योऽभ्यषेचीति । यत् अयमभिषिक्तः पुरुषः 'महदभूत्' इत्यन्वयः । यत् यस्मात् अभिषेकेण महत्त्वगुणवानयं बृहस्पतिः मा मां भूमिं न अवदृणीयात् नावदारयेत् इति अतो हेतोः, 'मित्रधेयमकुरुत' इत्युत्तरवाक्यशेषसंबन्धः । तथा बृहस्पतिरपि भूम्याः सकाशात् बिभेति स्म । यत् यस्मात् इयं भूमिः मा मामभिषिक्तं नावधून्वीत न विचालयेदिति । तत् तस्मात् कारणात् अनया पृथिव्या सहैव एतत् निरीक्षणरूपं मित्रधेयं मैत्रीमकुरुत । भूमिरपि सख्यमकरोदित्यर्थः उपक्रमोपसंहाराभ्यामवगम्यते । उपक्रमे तावदुभयोरपि भीतिरुक्ता, अवदारणपरिहाराय मित्रधेयकरणमिति चोक्तम् । उपसंहारेऽपि 'न पुत्रो मातरम्' इति मातुः पुत्रकर्तृकोपद्रवस्य निषेधात् ( ? निषेध उक्तः ) । इदानीमनुष्ठानेऽपि भूम्यवेक्षणं मित्रत्वप्रयोजनमित्याह– बृहस्पतिसवो वा इति । वाजपेयमिति यत् एष बृहस्पतिसवः बृहस्पतेरभिषेको यस्मिन्निति स तथोक्तः । शिष्टं पूर्ववत् व्याख्येयम् । ( शब्रासा. ५।२।१।१८–१९ ) ] ।

शब्रासा.

**सोऽवतिष्ठति– 'हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥' इति । एतामतिच्छन्दसं जपन् । एषा**

**वै सर्वाणि छन्दा॑ᳬसि यदतिच्छन्दाः । तथैनं पाप्मा नान्ववतिष्ठति ॥**

रथादवरोहणं विधत्ते– सोऽवतिष्ठतीति । अवरुह्य तिष्ठतीति अवशब्दस्य रुहिकर्मणा समन्वये 'समवप्रविभ्यः स्थः' (पा. १।३।२२) इति आत्मनेपदं न भवति, तिष्ठतिक्रियायोगाभावेन प्रेत्युपसर्गसंज्ञाया अभावात् । अन्यथा आत्मनेपदं दुर्निवारं स्यात् । अथवा व्यत्ययेन परस्मैपदम् । हंस इति । मन्त्रस्यायमर्थः– हन्ति पृथिवीमिति हंसः रथः । शुचौ देवयजने रथवाहने च सीदतीति शुचिषत् । तस्योपरि यजमानं वासयतीति वसुः । तरुगुल्माद्यनवरुद्धेऽन्तरिक्षे सीदतीति अन्तरिक्षसत् । होता होतृसमानः । तदेव कथमित्युच्यते– वेद्यां सीदतीति वेदिषत् । अतिथिः अतिथिसदृशः । तदपि कथमित्युच्यते– दुरोणेषु गृहेषु सीदतीति दुरोणसत्, यो यस्तमारोढुं नयति तस्य गृहे सीदति । नृषु मनुष्येषु उपकारं कर्तुं सीदतीति नृषत् । वरे श्रेष्ठे राजादिगृहे सीदतीति वरसत् । ऋते यज्ञे वाजपेयादौ सीदतीति ऋतसत् । सूर्यं वोढुं व्योमनि आकाशे सीदतीति व्योमसत् । 'अप्सुयोनिर्वा अश्वः' (शब्रा. १३।२।२।१९) इति श्रुतेः अद्भ्यो जातैरश्वैरुपेतत्वात् अब्जाः । गोशब्दवाच्यात् वज्राज्जायते इति गोजाः । एतच्च 'स्फ्यस्तृतीय॑ᳬ रथस्तृतीयम्' (तैसं. ५।२।६।२) इत्याम्नातम् । ऋतार्थं यज्ञार्थं जातत्वात् ऋतजाः । अद्रिभ्यः दृढकाष्ठेभ्यः जातत्वात् अद्रिजाः । ईदृशो रथः बृहत् प्रौढं राजसूयाख्यं ऋतं यज्ञं संपादयत्विति रथपक्षेऽर्थः । सूर्यपक्षे त्वयमर्थः– हन्ति गच्छतीति हंसः आदित्यः । शुचौ निर्मले मण्डले सीदतीति शुचिषत् । वसुः निवासहेतुः । प्राणात्मकवायुरूपेण अन्तरिक्षे सीदतीति अन्तरिक्षसत् । अग्निरूपेण वेद्यां सीदतीति वेदिषत् । अप्सु सूक्ष्मभूतेषु जायते इति अब्जाः । गोषु पृथिवीप्रधानेषु स्थूलभूतेषु जायते इति गोजाः । ऋते सत्यभूते मण्डले जायते इति ऋतजाः । अद्रौ पाषाणे वा मेघे (? मेघे वा) उदकरूपेण जायते इति अद्रिजाः । ऋतम् । ऋ गतौ । सर्वत्र व्याप्तं ज्ञानात्मकम् । बृहत् । बृहि वृद्धौ । प्रवृद्धम्, परमानन्दलक्षणमिति । मन्त्रगतं छन्दोविशेषं प्रशंसति– एतामतिच्छन्दसमिति । हंसमन्त्रस्यातिजगतीच्छन्दः । सा च गायत्र्यादीनि च्छन्दांसि अतिक्रम्य वर्तते इति तस्या अतिच्छन्दस्त्वम् । सर्वासामेव छन्दसां तत्र अन्तर्भावात् सर्वच्छन्दोरूपत्वम् । तस्मात् सर्वच्छन्दोऽतिक्रमणात् एतां जपित्वा अवरोहन्तं एनं यजमानमनु पाप्मा नावतिष्ठति नावरोहति, पाप्मानमतिक्रामेदित्यर्थः । शब्रासा.

**तं न संग्रहीताऽन्ववतिष्ठेत् । नेत्तं लोकमन्ववतिष्ठाद्य॑ᳬ सुषुवाणोऽन्ववास्थादिति । त॑ᳬ सरथमेव रथवाहन आदधाति । ततोऽवाङपप्रवते । तथा तं लोकं नान्ववतिष्ठति य॑ᳬ सुषुवाणोऽन्ववास्थात् ॥**

सयन्तृकस्य रथस्य रथवाहनेऽनसि स्थापनं विधातुं यन्तुरवस्थानं निषेधति– तं नेति । सम्यक् प्रग्रहं गृह्णातीति संग्रहीता सारथिः । सः तं यजमानमनु नावतिष्ठेत् नावरोहेत् । तत्र कारणमाह– नेदिति । सुन्वन् यं लोकं प्राप्नोति तं लोकं सारथिरपि न प्राप्नुयादिति । तं सरथमिति । रथवाहने रथस्थापनसाधने अनसि तं सयन्तृकं रथं आदधाति निदध्यात् । तथा च तैत्तिरीयकम्– 'यदुभौ सहावतिष्ठेताम् । समानं लोकमियाताम् । सह संग्रहीत्रा रथवाहने रथमादधाति । सुवर्गादेवैनं लोकादन्तर्दधाति ।' (तैब्रा. १।७।९।६) । तत इति । ततः पश्चात् यन्ता अवाङ् अवाङ्मुखः सन् अपप्रवते । प्रुङ् गतौ इति धातुः, अवरोहतीत्यर्थः । तथा च सूत्रितम्– 'शालाया दक्षिणतः । अपप्रवते यन्ता ।' (काश्रौ. १५।६।२६–२७) इति । शब्रासा.

**उत्तरेणाहवनीयं पूर्वाग्निरुद्वृत्तो भवति । स रथवाहनस्य दक्षिणमन्वनुष्यन्द॑ᳬ शतमानौ प्रवृत्ताावबध्नाति ॥**

पूर्वं स्वस्य भ्रातुरर्थाय गोः स्थापनकाले पूर्वाग्निवहनस्याहवनीयस्योत्तरतः स्थापनं सूत्रकृतोक्तम्– 'गवां शतमधिकं वा स्वस्याहवनीयस्योत्तरतः स्थापयति । पूर्वाग्निवहनं च साग्नि ।' (काश्रौ. १५।६।१३–१४) इति । तदिदानीं विधत्ते– उत्तरेणाहवनीयमिति । पूर्वाग्निरिति ।

शान्तिकपौष्टिकार्थीयोऽग्निः पूर्वाग्निः । स अनसा उद्धृतः ऊद्वृत्तः (वृत्तः ?) स्थापितो भवति । अथ रथवाहनस्य दक्षिणेंऽशे शतमानयोरासञ्जनं वर्त्मनि औदुम्बर्याः शाखाया उपगूहनं च विधत्ते– स रथेति । दक्षिणमनुष्यन्दं प्रान्तमनु प्रवृत्तौ वर्तुलौ शतमानौ शतमानपरिमितौ द्वौ रुक्मौ आबध्नाति आसजेत् । शब्रासा.

**औदुम्बरीᳲ शाखामुपगूहति । तयोरन्यतरमुपस्पृशति– 'इयदस्यायुरस्यायुर्मयि धेहि, युङ्ङसि वर्चोऽसि वर्चो मयि धेहि' इति । तदायुर्वर्च आत्मन्धत्ते ॥**

औदुम्बरीमिति । शतमानयोरन्यतरस्य उपस्पर्शनं समन्त्रकं विधत्ते– तयोरिति । कात्यायनस्तु मन्त्रद्वयं कृत्वा उभयोरपि स्पर्शने विनियोगमुक्तवान्– 'उपस्पृशति शतमानावियदसीत्येकं युङ्ङसीत्यपरम्' * इति । इयदसि एतावत्परिमाणोऽसि । अत्र तत्परिमाणं हस्तेनाभिधीयते, स्वल्पपरिमितत्वात् । आयुरसि आयुःस्वरूपोऽसि, 'आयुर्हिरण्यम्' (शब्रा. ३।८।३।२६) इति श्रुतेः । तस्मात् आयुर्मयि धेहि । यो हि यदात्मको भवति स एव तत् दातुमुत्सहते । युङ्ङसि । युजिर् योगे । यज्ञं युनक्तीति युङ्, तथाविधोऽसि । वर्चः तेजोऽसि । तस्मात् वर्चो मयि धेहि । मन्त्रस्यार्थं संकलय्याऽऽह– तदायुर्वर्च इति । शब्रासा.

**अथौदुम्बरीᳲ शाखामुपस्पृशति– 'ऊर्गस्यूर्जं मयि धेहि' इति । तदूर्जमात्मन्धत्ते । तस्यैतस्य कर्मण एतावेव शतमानौ प्रवृत्तौ दक्षिणा । तौ ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति । तस्मात्तौ ब्रह्मणे ददाति ॥**

शाखाया उपस्पर्शनं समन्त्रं विधत्ते– औदुम्बरीमिति । ऊर्क् अन्नमसि । तस्मात् मयि ऊर्जं अन्नं धेहि इति । एतयोर्दानं विधत्ते– तस्यैतस्येति । ब्रह्मणे दानं प्रशंसति– ब्रह्मा हि यज्ञमिति । शब्रासा.

**अग्रेण मैत्रावरुणस्य धिष्ण्यं मैत्रावरुणी पयस्या निहिता भवति । तामस्य बाहू अभ्युपावहरति– 'इन्द्रस्य वां वीर्यकृतो बाहू अभ्युपावहरामि' इति । पशूनां वा एष रसो यत्पयस्या । तत्पशूनामेवास्यैतद्रसं बाहू अभ्युपावहरति । तद्यन्मैत्रावरुणी भवति । मित्रावरुणा उ हि बाहू । तस्मान्मैत्रावरुणी भवति ॥**

विधत्ते– अग्रेण मैत्रेति । मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मदेशे मित्रावरुणदेवत्या पयस्या आमिक्षा निहिता भवति । तस्यां यजमानबाह्वोरवहरणं विधत्ते– तामस्य बाहू इति । अस्य सुन्वतो बाहू तामभिलक्ष्य उपावहरति प्रसारयति । हे बाहू, वीर्यकृतः वीर्यकारिणः इन्द्रस्य यजमानस्य संबन्धिनौ वां युवां बाहू अभ्युपावहरामि अभिलक्ष्य स्थापयामि । बाहुप्रक्षेपं प्रशंसति– पशूनां वा इति । पयस्यायाः पशुरसात्मकत्वात् पशुरसमभिलक्ष्य बाहू स्थापितवान् भवतीति । पयस्याया मैत्रावरुणत्वं प्रशंसति– तद्यन्मैत्रावरुणीति । शब्रासा.

आसन्द्यारोहणम्, अक्षदेवनम्, राज्ञो दण्डवधातिनयनम्

**[१]मैत्रावरुण्या पयस्यया प्रचरति । तस्या अनिष्ट एव स्विष्टकृद्भवति । अथास्मा आसन्दीमाहरन्ति । उपरिसद्यं वा एष जयति । यो जयत्यन्तरिक्षसद्यम् । तदेनमुपर्यासीनमधस्तादिमाः प्रजा उपासते । तस्मादस्मा आसन्दीमाहरन्ति । सैषा खादिरी वितृण्णा भवति येयं वध्रेव्यूता भरतानाम् ॥**

* अस्मदादर्शपुस्तके तु 'उपस्पृशति शतमानावियदसीति' (काश्रौ. १५।६।२९) इति सूत्रपाठः, 'इदयसीत्येकं युङ्ङसीति चापरम्' इति च कर्कभाष्यम् । शतपथब्राह्मणटिप्पण्यां तु पितृभूतिदेवयाज्ञिकयोः सूत्रव्याख्याने एवं समुद्धृते– 'इयदसीत्यनेन मन्त्रेणान्यतरं शतमानमुपस्पृशेत्, तयोरन्यतरमुपस्पृशतीति माध्यन्दिनानाम् । उभयोरुपस्पर्शनं शाखान्तरात्' इति पितृभूतिः । 'ततो यजमान एव इदयसीति मन्त्रेण तौ शतमानावुपस्पृशति आलभते । श्रुतौ तु अन्यतरस्योपस्पर्शनं विहितम्, तयोरन्यतरमुपस्पृशतीयदसीति श्रुतेः' इति देवयाज्ञिकः, इति ।

(१) शब्रा. ५।४।४।१–२५.

अथ पयस्यायाः प्रचारं विधत्ते– मैत्रावरुण्येति । तस्या अनिष्ट इति । तस्याः पयस्यायाः स्विष्टकृत् अनिष्टः अहुतो भवति, प्राक् स्विष्टकृत इत्यर्थः । विधत्ते– अथास्मा आसन्दीमिति । आसन्दीलक्षणं पूर्वमुक्तम् । आसन्द्या-हरणं प्रशंसति– उपरिसद्यमिति । एतत् वाक्यं वाजपेये व्याख्यातम् [ उपरिसद्यमित्यस्यायमर्थः– वाजपेयेन यागेन उपरिसद्यं उपरिसदनं जयति भद्रपीठादेरुपर्यवस्थानं प्राप्नोति । एतदुपपादनायाऽऽह– यो जयतीति । यो यूपारोहणेन अन्तरिक्षसद्यं आकाशे उपवेशनं जयति एष इति पूर्वेण संबन्धः । ( शब्रासा. ५।२।१।२२ ) ] । तस्याः वृक्षविशेषगुणान्तरं वाक्यभेदमङ्गीकृत्य विधत्ते– सैषा खादिरीति । वितृण्णा सच्छिद्रा भवेत् । तस्या आसन्द्या रज्जुव्यूतत्वमस्ति । तत्र यजमानविशेषेण रज्जुविशेषं दर्शयति– येयामिति । वर्ध्रव्यूता वर्ध्राः चर्मरज्जवः, ताभिर्व्यूता संनद्धा भवति भरतानाम् । अन्येषां तु रज्जु-मात्रम् । कात्यायनो निर्विशेषं सूत्रयामास– ‘ खादिरी-मासन्दीं रज्जूताम् । ’ ( काश्रौ. १५।७।१ ) इति । शब्रासा.

**तामग्रेण मैत्रावरुणस्य धिष्ण्यं निदधाति– ‘ स्योनाऽसि सुषदाऽसि ’ इति । शिवामेवैतच्छग्मां करोति ॥**

तस्या निधानप्रदेशं विधत्ते– तामग्रेणेति । मन्त्रं विधत्ते- स्योनेति । हे आसन्दि, स्योना सुखरूपा असि । सुषदा सुषदनयोग्या असि । मन्त्रं विवृणोति– शिवामिति । शग्मां सुखकरीम् । शब्रासा.

**अथाधीवासमास्तृणाति– ‘ क्षत्रस्य योनिरसि ’ इति । तदैव क्षत्रस्य योनिस्तामेवैतत्करोति ॥**

विध`– अथाधीवासमिति । अधीवासः आस्तरणं चित्रकम्बलादिकम् । क्षत्रस्येति । एष मन्त्रो व्याख्यातः ( राका. पृ. २८० ) । शब्रासा.

**अथैनमासादयति– ‘ स्योनामासीद सुषदा-मासीद ’ इति । शिवाᳫं शग्मामासीदेत्येवैतदाह । ‘ क्षत्रस्य योनिमासीद ’ इति । तदैव क्षत्रस्य योनिस्तस्यामेवैनमेतद्दधाति ॥**



अस्यां सुन्वत उपवेशनं समन्त्रकं विधत्ते– अथैन-मिति । आसादयति उपवेशयतीत्यर्थः । हे यजमान, स्योनां सुखरूपामासन्दीमारोह, सुखसाधनयोग्यामधितिष्ठे-त्यर्थः । ‘ क्षत्रस्य योनिमासीद ’ इत्युपवेशनमन्त्रस्योत्तर-भागः । अधीवासस्तरणे क्षत्रस्य योनिः अधीवासः, तमारोहेत्यर्थः । शब्रासा.

**अथान्तराᳫंसेऽभिमृश्य जपति– ‘ निषसाद धृतव्रतः ’ इति । धृतव्रतो वै राजा । न वा एष सर्वस्मा इव वदनाय न सर्वस्मा इव कर्मणे । यदेव साधु वदेद्यत्साधु कुर्यात्तस्मै वा एष च श्रोत्रियश्च । एतौ ह वै द्वौ मनुष्येषु धृतव्रतौ । तस्मादाह– निषसाद धृतव्रत इति । ‘ वरुणः पस्त्यास्वा ’ इति । विशो वै पस्त्या । विक्ष्वेत्येवैत-दाह– ‘ साम्राज्याय सुक्रतुः ’ इति । राज्यायेत्येवै-तदाह यदाह– साम्राज्याय सुक्रतुरिति ॥**

हृदयदेशादिस्पर्शनपूर्वकं जपं विधत्ते– अथान्तरांस इति । अन्तरांसे अंसमध्ये अभिमृश्य जपेत् । मन्त्रस्याय-मर्थः– अयं यष्टा धृतव्रतः स्वीकृतयज्ञः नियमितवचनादि-व्यापारः वरुणः अनिष्टनिवारको भूत्वा निषसाद अस्या-मासन्द्यामुपरिदेशे । पस्त्यासु बहुषु वैरिगृहेषु विक्षु प्रजासु चाऽऽगत्य साम्राज्यं कर्तुं सुक्रतुः शोभनसंकल्पो भवतु । मन्त्रं प्रतिपादमनूद्य व्याचष्टे– धृतव्रतो वै राजेति । धृतव्रतत्वं दर्शयति– न वा एष इति । एषः सुन्वन् सर्वस्मै वदनाय वाक्याय, असंबद्धप्रलापायेत्यर्थः । तथा अनुपयुक्तकर्मणे वा योग्यो न भवति । कस्मै योग्य इति तदाह– यदेवेति । तस्मै साधुवदनाय साधुकर्मणे च एषः सुन्वन् राजा श्रोत्रियश्च ब्राह्मणः उभावर्हौ भवतः । एतयोर्नियतव्रतत्वमाह– एतौ ह वा इति । मनुष्येषु मध्ये एतावेव धृतव्रतौ । श्रोत्रियोऽपि न बहुभाषः नासाधु-कर्मकारी । पस्त्याशब्दार्थमाह– विशो वा इति । शब्रासा.

**अथास्मै पञ्चाक्षान् पाणावावपति– ‘ अभिभू-रस्येतास्ते पञ्च दिशः कल्पन्ताम् ’ इति । एष वा अयानभिभूर्यत्कलिः । एष हि सर्वानयानभि-**

**भवति । तस्मादाह– अभिभूरसीति । एतास्ते पञ्च दिशः कल्पन्तामिति । पञ्च वै दिशः । तदस्मै सर्वा एव दिशः कल्पयति ॥**

यजमानहस्ते पञ्चाक्षावापं च विधत्ते– अथास्मा इति । अक्षा नाम कपर्दकाः सुवर्णनिर्मिताः, विभीतकफलानि सौवर्णानि वेत्येके । ते चाक्षा द्यूतस्थाने निवपनीयाः । तेषां चतुर्णामक्षाणां कृतसंज्ञा । पञ्चानां कलिसंज्ञा । तथा च शाखान्तरे स्तोमसंख्यायां कृतादिव्यवहारः कृतः– ‘ये वै चत्वारः स्तोमाः । कृतं तत् । अथ ये पञ्च । कलिः सः’ (तैब्रा. १।५।११।१) इति । यदा पञ्चाप्यक्षा उत्ताना भवन्ति तदा देवितुर्जयो भवति । पञ्चसु त्वेकरूपासु जय एव भविष्यतीत्यन्यत्रोक्तम् । अतः कलेः सर्वाक्षाभिभावुकत्वात् सुन्वतोऽपि जयापेक्षत्वात् पञ्चाक्षनिवाप इत्यर्थः । तथा च मन्त्रे कलिर्वा तत्संबन्धात् यजमानो वा उच्यते । हे यजमान, अभिभूः इतरेषामक्षाणामभिभविता भवसि । तदर्थमेताः पञ्च दिशः कल्पन्तां स्वाधीना भवन्त्विति । मन्त्रं व्याचष्टे– एष वा अयानिति । अयशब्दः अक्षवाची । कलिर्हि सर्वानयानभिभवति, अधिकसंख्यत्वात् । एषोऽपि यजमानः तत्संबन्धादभिभावुको भवतीत्यर्थः । पञ्चदिग्विजयसंकल्पसिद्धिमेव दर्शयति– पञ्च वै दिश इति । शब्रासा.

**अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति । तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति । तस्माद्राजाऽदण्ड्यो यदेनं दण्डवधमतिनयन्ति ॥**

विधत्ते– अथैनमिति । दण्डैः यज्ञियवृक्षकाष्ठैः एनं सुन्वन्तं पृष्ठतः पश्चाद्भागे तूष्णीं अमन्त्रकं घ्नन्ति हन्युः । अत्र सूत्रकृत्समन्त्रकमवहननं शाखान्तरीयमन्त्रं च विकल्पेन दर्शयामास– ‘० पश्चादेनं यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्ति । पाप्मानं तेऽपहन्मोऽति त्वा वधं नयामीति वा ।’ (काश्रौ. १५।७।५–६) इति । तं दण्डैरिति । सुन्वतो दण्डवधेन अन्यकर्तृकस्य दण्डवधस्य प्रापणमेव कृतवन्तो भवन्ति । तस्माद्राज्ञो दण्डाभावः । यथा राजा स्वा अपराद्धाः प्रजा दण्डयति, एवं स्वयं न दण्ड्य इत्यर्थः । शब्रासा.

**अथ वरं वृणीते । यं᳘ ह वै कं च सुषुवाणो वरं वृणीते सोऽस्मै सर्वः समृध्यते । तस्माद्वरं वृणीते ॥**

विधत्ते– अथ वरमिति । वरं वृणीते याचते यजमानः कर्ता । वरवरणं प्रशंसति– यं ह वै कं चेति ।

शब्रासा.

**स ‘ब्रह्मन्’ इत्येव प्रथममामन्त्रयते– ब्रह्म प्रथममभिव्याहराणि, ब्रह्मप्रसूतां वाचं वदानीति । तस्माद्ब्रह्मन्नित्येव प्रथममामन्त्रयते । ‘त्वं ब्रह्मासि’ इतीतरः प्रत्याह । ‘सविताऽसि सत्यप्रसवः’ इति । वीर्यमेवास्मिन्नेतद्दधाति । सवितारमेव सत्यप्रसवं करोति ॥**

कात्यायनः– ‘वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः । प्रत्याह व्यत्यासं सविता वरुण इन्द्रो रुद्र इति, त्वं ब्रह्मासीत्यादिभिः ।’ (काश्रौ. १५।७।७–८) इति । अस्यार्थः– यजमानो वरं वृत्वा ब्रह्मन्निति पदं पञ्चकृत्वो वदेत् । तं सुन्वन्तं सवितृवरुणेन्द्ररुद्रवाचकैः ‘त्वं ब्रह्मासि’ इत्यादिभिश्चतुर्भिर्मन्त्रैरितरः प्रतिवदेत्, पञ्चमामन्त्रणे केवलं ‘त्वं ब्रह्मासि’ इति प्रतिवदेदिति । तदिदं क्रमेण विधत्ते– स ब्रह्मन्निति । प्रथमं पूर्वम् । (ब्रह्म) प्रथममिति । स्पष्टोऽर्थः । प्रथमप्रतिवचनमन्त्रस्यायमर्थः– हे यजमान, त्वं ब्रह्मा असि, सत्यप्रसवः यथार्थाभ्यनुज्ञः सविता असि, इति प्रथमामन्त्रयितारं सुन्वन्तं ब्रह्मा प्रतिब्रूयात् । सवित्रादिवाचकैः मन्त्रैः प्रतिवचनेन यजमानं तत्तद्देवतात्मकत्वेन कृतवान् भवतीत्यर्थः ।

शब्रासा.

**‘ब्रह्मन्’ इत्येव द्वितीयमामन्त्रयते । ‘त्वं ब्रह्मासि’ इतीतरः प्रत्याह । ‘वरुणोऽसि सत्यौजाः’ इति । वीर्यमेवास्मिन्नेतद्दधाति । वरुणमेव सत्यौजसं करोति ॥**

**‘ब्रह्मन्’ इत्येव तृतीयमामन्त्रयते । ‘त्वं ब्रह्मासि’ इतीतरः प्रत्याह । ‘इन्द्रोऽसि विशौजाः’ इति । वीर्यमेवास्मिन्नेतद्दधाति । इन्द्रमेव विशौजसं करोति ॥**

**'ब्रह्मन्' इत्येव चतुर्थमामन्त्रयते। 'त्वं ब्रह्मासि' इतीतरः प्रत्याह। 'रुद्रोऽसि सुशेवः' इति। तद्वीर्याण्येवास्मिन्नेतत्पूर्वाणि दधाति। अथैनमेतच्छमयत्येव। तस्मादेष सर्वस्येशानो मृडयति यदेनꣳ शमयति॥**

द्वितीयादिषु मन्त्रेषु 'त्वं ब्रह्मासि' इति पूर्ववत्। सत्यौजाः सत्यवीर्यः वरुणः असि। विक्षु प्रजासु ओजः बलं यस्य। यद्वा, विश एवौजो यस्येति विशौजाः, तादृश इन्द्रोऽसि। देवतापक्षे मरुतो विशः तदात्मकाः, राजपक्षे प्रजाः। सुशेवः सुमुखः रुद्रोऽसि। रुद्रस्य सुशेवत्वं प्रशंसति-- तद्वीर्याणीति। ईशानस्य सर्वसुखकरत्वात् पूर्वमन्त्रप्रतिवचनेन यजमाने स्थापितानि वीर्याणि शमयति वीर्यवन्तं एनं, 'रुद्रोऽसि सुशेवः' इति सुखत्वप्रतिपादनात्। शब्रासा.

**'ब्रह्मन्' इत्येव पञ्चममामन्त्रयते। 'त्वं ब्रह्मासि' इतीतरोऽनिरुक्तं प्रत्याह। परिमितं वै निरुक्तम्। तत्परिमितमेवास्मिन्नेतत्पूर्वं वीर्यं दधाति। अथात्रानिरुक्तं प्रत्याह। अपरिमितं वा अनिरुक्तम्। तदपरिमितमेवास्मिन्नेतत्सर्वं वीर्यं दधाति। तस्मादत्रानिरुक्तं प्रत्याह॥**

यजमानकर्तृकपञ्चमामन्त्रणस्य प्रतिवचने विशेषं दर्शयति- ब्रह्मन्नित्येवेति। त्वं ब्रह्मासीति। 'ब्रह्मन्' इत्यामन्त्रणे। त्वं ब्रह्मासि इति एतावदेव अनिरुक्तं कस्यचिदपि देवताविशेषस्य प्रतिपादकं वाक्यं प्रतिवदेत्। तत्प्रशंसति-- अपरिमितमिति। निरुक्तं निःशेषेण वक्तुं योग्यं निरुक्तं परिमितं तत्पूर्वमन्त्रेषु 'सविताऽसि' इत्यादिषु कृतम्। अत्र अनिरुक्तप्रतिवचनेन यजमाने अपरिमितं वीर्यं निहितवान् भवतीति। शब्रासा.

**अथ सुमङ्गलनामानꣳ ह्वयति- 'बहुकार श्रेयस्कर भूयस्कर' इति। य एवंनामा भवति कल्याणमेवैतन्मानुष्यै वाचो वदति॥**

विधत्ते- अथ सुमङ्गलेति। सुमङ्गलनामानमाहूय बहुकारेति मन्त्रेण यजमानं कीर्तयेत्। पदत्रयं संबुद्ध्यन्तम्। बहु करोतीति बहुकारः। श्रेयः करोतीति श्रेयस्करः। 'कृञो हेतुताच्छील्यानुलोम्येषु' (पा. ३।२।२०) इति टच्। भूयो भूयो महत्तरं करोतीति भूयस्करः। य एवमिति। यः पुरुषो लोके प्रियंकरनामा भवति स मानुष्यै मानुष्याः वाचः कल्याणं सर्वेषां प्रियमेव वदति। शब्रासा.

**अथास्मै ब्राह्मणः स्फ्यं प्रयच्छति अध्वर्युर्वा, यो वाऽस्य पुरोहितो भवति- 'इन्द्रस्य वज्रोऽसि तेन मे रध्य' इति। वज्रो वै स्फ्यः। स एतेन वज्रेण ब्राह्मणो राजानमात्मनोऽबलीयाꣳसं कुरुते। यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति। तदमित्रेभ्य एवैनमेतद्बलीयाꣳसं करोति॥**

**तꣳ राजा राजभ्रात्रे प्रयच्छति- 'इन्द्रस्य वज्रोऽसि तेन मे रध्य' इति। तेन राजा राजभ्रातरमात्मनोऽबलीयाꣳसं कुरुते॥**

**तꣳ राजभ्राता सूताय वा स्थपतये वा प्रयच्छति- 'इन्द्रस्य वज्रोऽसि तेन मे रध्य' इति। तेन राजभ्राता सूतं वा स्थपतिं वाऽऽत्मनोऽबलीयाꣳसं कुरुते॥**

**तꣳ सूतो वा स्थपतिर्वा ग्रामण्ये प्रयच्छति- 'इन्द्रस्य वज्रोऽसि तेन मे रध्य' इति। तेन सूतो वा स्थपतिर्वा ग्रामण्यमात्मनोऽबलीयाꣳसं कुरुते॥**

**तं ग्रामणीः सजाताय प्रयच्छति- 'इन्द्रस्य वज्रोऽसि तेन मे रध्य' इति। तेन ग्रामणीः सजातमात्मनोऽबलीयाꣳसं कुरुते। तद्यदेवꣳ संप्रयच्छन्ते नेत्पापवस्यसमसद्यथापूर्वमसदिति। तस्मादेवꣳ संप्रयच्छन्ते॥**

अत्र कात्यायनः उत्तरं तन्त्रं संगृह्य दर्शितवान्- 'स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इति। राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजातश्चैवं पूर्वः पूर्व उत्तरस्मै।' (काश्रौ. १५।७।११-१२) इति। तदिदं क्रमेण विधत्ते- अथास्मा इत्यादिना। अस्मै सुन्वते स्फ्यं ब्राह्मणः दद्यात्। हे स्फ्य, इन्द्रस्य वज्रोऽसि,

'स्फ्यस्तृतीयꣳ रथस्तृतीयम्' (तैसं. ५।२।६।२) इति श्रुतेः। तेन कारणेन मे मम रध्य। रध्यतिर्वशगमने (नि. ६।३२)। मदीयाय यजमानाय सर्वे वशीकुरु। यद्वा, रध्य द्यूतस्थानपरिलेखनरूपं कार्यं साधयेति। मन्त्रस्य तात्पर्यमाह– वज्रो वा इति। अयमर्थः– ब्राह्मणो राज्ञे वज्ररूपस्फ्यप्रदानेन स्वस्मादबलीयांसमपि राजानं बलवत्तरं कृतवान् भवति। तदेवाह– यो वा इति। यः खलु राजन्यो ब्राह्मणात् हीनबलः सः अमित्रेभ्यः शत्रुभ्यो बलवत्तरो भवति। तस्मात् ब्राह्मणः स्फ्यप्रदानेन शत्रुभ्योऽधिकबलं कृतवान् भवतीत्यर्थः। एवमुत्तरत्रापि योज्यम्। सूतग्रामणीसजाता व्याख्याताः (शब्रा. ५।३।१।५–६)। राजादिषु सजातान्तेषु स्फ्यप्रदानं संभूय प्रशंसति– तद्यदेवमिति। पापवस्यसं पापिष्ठं कर्म नेदसत् न भवेत्, किन्तु यथापूर्वं भवेदिति बुद्ध्या प्रदानमित्यर्थः। शब्रासा.

**अथ सजातश्च प्रतिप्रस्थाता चैतेन स्फ्येन पूर्वाग्नौ शुक्रस्य पुरोरुचाऽधिदेवनं कुरुतः। अत्ता वै शुक्रः। अत्तारमेवैतत्कुरुतः॥**

अथ द्यूतस्थानकरणं च सविशेषं समन्त्रकं च विधत्ते– अथ सजातश्चेति। आहवनीयस्योत्तरप्रदेशे स्थापितः स पूर्वाग्निः तस्मिन् तत्संसृष्टम्। अधिदीव्यन्ति अत्रेति अधिदेवनं द्यूतभूमिः। तां शुक्रग्रहस्य पुरोरुचा 'तं प्रत्नथा पूर्वथा विश्वथेमथा' (शुसं. ७।१२) इत्यनया कुरुतः। अत एव सूत्रम्– 'प्रत्नेन सजातः प्रतिप्रस्थाता च पूर्वाग्निसहितां शुक्रपुरोरुचा द्यूतभूमिं कुरुतः।' (काश्रौ. १५।७।१३)। चतुर्थकाण्डे द्वितीयेऽध्याये (शब्रा. ४।२।१।१–१०) शुक्रामन्थिग्रहयोरत्त्राद्यभावेन स्तुतयोः पुरोरुग्द्वयं विहितम्। तदर्थस्तु तत्रैव व्याख्यात इति नेह पुनर्व्याख्यायते। शुक्रस्यात्तृत्वात् तन्मन्त्रेण द्यूतभूमिकरणात् यजमानमत्तारं कृतवन्तौ भवतः। शब्रासा.

**अथ मन्थिनः पुरोरुचा विमितं विमिनुतः। आद्यो वै मन्थी। तदत्तारमेवैतत्कृत्वाऽथास्मा एतदाद्यं जनयतः। तस्मान्मन्थिनः पुरोरुचा विमितं विमिनुतः॥**

अथ मन्थिन इति। मन्थिग्रहपुरोरुचा 'अयं वेनश्चोदयत्पृश्निगर्भा' (शुसं. ७।१६) इत्यनया विमितम्। विमिन्वन्ति अत्रेति विमितं चतुर्द्वारं चतुरस्रं मण्डपम्। तत् विमिनुतः कुरुतः। आद्यो वा इत्यादेरयमर्थः– मन्थिन आद्यत्वात् तन्मन्त्रेण विमितकरणात् अत्तृभूताय यजमानाय आद्यं संपादितवन्तौ भवत इत्यर्थः। शब्रासा.

**अथाध्वर्युश्चतुर्गृहीतमाज्यं गृहीत्वाऽधिदेवने हिरण्यं निधाय जुहोति– 'अग्निः पृथुर्धर्मणस्पतिर्जुषाणोऽग्निः पृथुर्धर्मणस्पतिराज्यस्य वेतु स्वाहा' इति॥**

अथाधिदेवने हिरण्यनिधानपूर्वकं होमं समन्त्रकं विधत्ते– अथाध्वर्युरिति। यज्ञे देवानां प्रथनात् पृथुः। स धर्मणस्पतिः धर्मणः धारणस्य पतिः। अतो देवतोद्देशेन हूयमानं हविः जुषाणः सेवमानः अग्निः। 'पृथुर्धर्मणस्पतिः' इति पुनर्वचनमादरार्थम्, विध्यनुवादाभिप्रायं वा। आज्यस्य घृतस्य। कर्मणि षष्ठी। आज्यं वेतु पिबतु। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु। स्वाहा इति होमार्थः। शब्रासा.

**अथाक्षान्निवपति– 'स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वꣳ सजातानां मध्यमेष्ठ्याय' इति। एष वा अग्निः पृथुः। यदधिदेवनम्। तस्यैतेऽङ्गारा यदक्षाः। तमेवैतेन प्रीणाति। तस्य ह वा एषाऽनुमता गृहेषु हन्यते। यो वा राजसूयेन यजते। यो वैतदेवं वेद। एतेष्वक्षेष्वाह– गां दीव्यध्वमिति। पूर्वाग्निवाहौ दक्षिणा॥**

तत्र विमिते अक्षनिवापं समन्त्रकं विधत्ते– अथाक्षानिति। स्वाहाकृताः स्वाहाकारपूर्विकया आहुत्या तर्पिताः हे अक्षाः, सजातानां समानजन्मनां भ्रातॄणां मध्यमेष्ठ्याय मध्यमप्रदेशे यजमानावस्थानाय सूर्यस्य रश्मिभिर्यतध्वं संगता भवतेति। मन्त्रवत्कर्मकरणं प्रायेण कस्यैचित् देवतायै भवति, अतो द्यूतभूमौ अक्षनिवापस्य देवता-

संतर्पकत्वं दर्शयति– एष वा अग्निरिति । अधिदेवनं द्यूतस्थानम् । तदेवोपपादयति– तस्यैत इति । तस्य अग्नेः अङ्गाराः एव देवनसाधनभूताः अक्षाः । तस्मात् तेनाक्षनिधानेन अग्निमेव प्रीणितवान् भवतीति । अत्र यदुक्तं सूत्रे– 'अक्षान् निवपति स्वाहाकृता इति । गां दीव्यध्वमित्याह ।' (काश्रौ. १५।७।१६–१७) इति, 'सजाताय कलिङ्गाम् ।' (काश्रौ. १५।७।१९) इति च । देवनकाले गामेव पणत्वेन कृत्वा 'गां दीव्यध्वम्' इति द्यूतकरणप्रैषं ब्रूयात् । ततोऽस्य पणत्वेनाङ्गीकृतां गामानीय घ्नन्ति । हन्तिश्च आहननमात्रार्थो न मारणार्थः । तदिदं विधत्ते– तस्य ह वा इति । यो राजसूयेन यजते, यो वा एतत् कर्म वेत्ति तस्य गृहेष्वेषा गौः अनुमता अङ्गीकृता हन्यते । अत्र गोप्रसक्तिं दर्शयति– एतेष्वक्षेष्विति । द्यूतकर्मणो दक्षिणां विधत्ते– पूर्वाग्नीति । पूर्वाग्निं आहवनीयं वहत इति पूर्वाग्निवाहौ, तावनड्वाहौ दक्षिणा । आपस्तम्बोऽप्याह– 'पष्ठौहीं विदीव्यन्त ओदनमुद्ब्रुवते, तदेतस्य कर्मणः पूर्वाग्निवाहौ दक्षिणा, तौ ब्रह्मणे देयौ ।' (आपश्रौ. १८।१९।२–३) इति । तदिदं देवनं संनिधिबलात् अभिषेचनीयाख्यसोमयागमध्यगतमपि महाप्रकरणबलात् इष्टिपशुसोमयागात्मकराजसूयशेष इति गम्यते । प्रकरणेन संनिधेर्बाध इति हि सिद्धान्तितम् । शब्रासा.

**अथाह– 'अग्नये स्विष्टकृतेऽनुब्रूहि' इति । तद्यदन्तरेणाहुती एतत्कर्म क्रियते । एष वै प्रजापतिर्य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु प्रजायन्ते । तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति । मध्यतः सुवति । तस्मादन्तरेणाहुती एतत्कर्म क्रियते । आश्राव्याह– 'अग्निं स्विष्टकृतं यज' इति । वषट्कृते जुहोति ॥**

अथ पयस्यास्विष्टकृदिडादिकं दर्शयति– अथाहाग्नय इति । प्रधानसौविष्टकृतहविषोर्मध्ये यत् देवनादिकं कृतं तत् प्रजापतिमध्यनिधानरूपेण प्रशंसति– तद्यदन्तरेणेति । आश्राव्याहेत्यादि । स्पष्टम् । शब्रासा.

**अथेडामादधाति । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति । माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति । तं स्तोत्राय प्रमीवति । स उपावरोहति । सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥**

अथेडामादधातीति कण्डिका वाजपेये व्याख्याता । [अथ स्विष्टकृदनन्तरभावीनि कर्माण्याह– अथेडामिति । माहेन्द्रग्रहणानन्तरं तदीयं पृष्ठं स्तोत्रमुपाकरोति, आरम्भयेदित्यर्थः । तं आसन्द्यामधिष्ठितमभिषिक्तं यजमानं स्तोत्राय प्रमीवति ज्ञापयेत्, आह्वयेदित्यर्थः । अत्र सूत्रम्– 'अवरुह्य गच्छति स्तोत्राय प्रहितः ।' (काश्रौ. १४।४।४५) इति । सः सुन्वन् उपावरोहति आसन्द्याः सकाशात् । स एवं स्तोत्रशस्त्रयोः अन्ते समीपे स्थितो भवेत् (शब्रासा. ५।२।२।१९) ।] शब्रासा.

संसृपां होमः, दशपेयः

**[1]वरुणाद्ध वा अभिषिषिचानाद्भर्गोऽपचक्राम । वीर्यं वै भर्गः । एष विष्णुर्यज्ञः सोऽस्मादपचक्राम । शश्वद्ध एषोऽपाः रसः संभृतो भवति येनैनमेतदभिषिञ्चति । सोऽस्य भर्गं निर्जघान ॥**

अथ पञ्चमे ब्राह्मणे संसृपां हवींषि दशसंख्याकानि, दशपेयाख्यस्य सोमयागस्य दीक्षाः, उपसद्यागः, ऋत्विग्विशेषेण दक्षिणाश्च विधीयन्ते । तत्र हवींषि विधातुं प्रस्तौति– वरुणाद्ध वा इति । पूर्वमभिषिच्यमानात् वरुणात् सकाशात् भर्गः यज्ञरूपं वीर्यमपचक्राम अपसृतम् । तदेव प्रतिपादयति– शश्वद्ध एष इति । शब्रासा.

**तमेताभिर्देवताभिरनुसमसर्पत् । 'सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा विष्णुनैव दशम्या देवतया' अन्वविन्दत् ॥**

तमेताभिरित्यादि । तं अपसृतं भर्गमेताभिर्वक्ष्यमाणाभिः सावित्रादिभिः अनुसमसर्पत् वरुणोऽनुक्रमेण प्राप्तवान् । तादृशदेवताः क्रमेण दर्शयति– सवित्रेति ।

(१) शब्रा. ५।४।५।१–२३.

प्रसवित्रा प्रसवकारिणा सवित्रा देवतयाऽन्वविन्दत् इति सर्वत्रानुषङ्गः। वाचा वाग्रूपया सरस्वत्या, रूपैरुपलक्षितेन त्वष्ट्रा, पशुभिरुपलक्षितेन पूष्णा, अस्मे अस्मै अपसृताय वीर्याय तदधीनकरणार्थं इन्द्रेण। यद्वा, विभक्तिव्यत्ययः। अनेन वीर्येण वीर्यवता इन्द्रेण, ब्रह्मणा ब्राह्मणजात्यभिमानिना बृहस्पतिना, ओजसा वरुणेन स्वीयदेवतारूपेण अतीतकल्पगतवरुणेन वा, तेजसा अग्निना तेजोरूपेणाग्निना, राज्ञा सोमेन, दशम्या दशसंख्यापूरयित्र्या विष्णुना एव देवतया अन्वविन्दत् अपक्रान्तं वीर्यमिति। शब्रासा.

**तद्यदेनमेताभिर्देवताभिरनुसमसर्पत्। तस्मात्संसृपो नाम। अथ यद्दशमेऽहन्प्रसुतो भवति। तस्माद्दशपेयः। अथो यद्दशदशैकैकं चमसमनुप्रसृप्ता भवन्ति। तस्माद्वेव दशपेयः॥**

हविषां नाम निर्ब्रूते– तद्यदेनमेताभिरित्यादिना। तत् तत्र यस्मात् एताभिः अनुसमसर्पत् अन्वविन्दत्। सम्यक् सृप्यते प्राप्यते वीर्यमाभिरग्न्यादिभिर्देवताभिरिति संसृपः देवताः। तासां हवींष्यपि तन्नामानि। अथ दशपेयं विधातुं तच्छब्दं निर्वक्ति– अथ यद्दशमेऽहन्निति। पूर्वमुक्तानि दशसंसृपां हवींषि प्रत्येकमेकैकदिने कर्तव्यानि। तथा च सूत्रम्– 'दशोत्तराणि संसृपां हवींषि निर्वपति। देवयजनान्तरमेकैकेनोत्सर्पति। शालायामन्त्यम्।' (काश्रौ. १५।८।१–३) इति। तैत्तिरीये तु स्पष्टमुक्तम्– 'अग्निना देवेन प्रथमेऽहन्ननुप्रायुङ्क्त। सरस्वत्या वाचा द्वितीये। सवित्रा प्रसवेन तृतीये।' (तैब्रा. १।८।१।१) इत्यादिना। संसृप्शब्दवाच्याभ्यो दशभ्य इष्टिभ्य ऊर्ध्वं दशपेयार्थसोमाभिषवः। तथा च दशमे दिने दशपेयार्थसोमाभिषवप्रवृत्तेर्दशपेयत्वम्। अयमत्र क्रमः– दशानां संसृपां हविषां मध्ये सप्त हवींषि प्रतिदिनं क्रमेणैकैकं कृत्वा सप्तमे दिने सप्तम्यामिष्टौ अतीतायामष्टमं हविर्निर्वपेत्। अपराह्णे दशपेयस्य द्वादशपुण्डरीकस्रक्प्रतिमोकलक्षणां दीक्षां कृत्वा तदानीमेव प्रथमामुपसदं कृत्वा तदन्ते संसृपामष्टमं हविर्निर्वपेत्। अष्टमे दिने उपसदन्ते संसृपां नवमं हविर्निरुप्य नवमे दिवसे तृतीयोपसदन्ते संसृपां दशमं हविर्निरुप्य तस्मिन्नेवाहनि अग्नीषोमीयपशुप्रचारं कुर्यात्। ततो दशमेऽहनि सोमोऽभिषूयते, हुतशेषश्च पीयत इति दशपेयत्वमिति। निर्वचनान्तरं दर्शयति– अथ यद्दश–दशेति। एकैकस्मिन् पात्रे दशभिर्ब्राह्मणैः पातव्यः सोमरसो यस्मिन् काले स दशपेयो भक्षणकालः। 'दशदशैकैकं चमसमनुभक्षयन्ति' (काश्रौ. १५।८।१७) इति हि सूत्रम्। शब्रासा.

**तदाहुः– दश पितामहान्त्सोमपान् संख्याय प्रसर्पेत्। तथो हास्य सोमपीथमश्नुते। दशपेयो हीति। तद्वै ज्या द्वौ त्रीनित्येव पितामहान्त्सोमपान्विन्दन्ति। तस्मादेता एव देवताः संख्याय प्रसर्पेत्॥**

अत्र यदुक्तं सूत्रकृता दशपेयं प्रस्तुत्य– 'पितामहदशगणं सोमपानां संख्याय सर्पणम्। सवित्रेति वाऽनुवाकमुक्त्वा।' (काश्रौ. १५।८।१५–१६) इति। अस्यार्थः– भक्षणार्थं सदःप्रसर्पणकाले सोम्यानां शतसंख्याकब्राह्मणानां मध्ये एकैकस्य पात्रस्य भक्षयितारो दशदश पुरुषाः यजमानस्य दश सोमपान् पितामहान् यजमानस्य पितामहः, तत्पितामहस्तत्पितामह इत्येवं पितामहदशगणं संख्याय गणयित्वा प्रसर्पेयुः। यद्वा, 'सवित्रा प्रसवित्रा सरस्वत्या वाचा' (शुसं. १०।३०) इति संहितोक्तमन्त्रेण प्रसर्पणं कुर्यादिति। अत्र पितामहगणनेन प्रसर्पणं पूर्वपक्षयति– तदाहुरिति। तद्दूषयति– तद्वै ज्येति। ज्या ज्यानिः, निकृष्ट इत्यर्थः। अत्रोपपत्तिमाह– द्वौ त्रीनिति। यदि पितामहान् जानीयुः तर्हि द्वौ त्रीन् एव जानीयुः, न सर्वान्। तस्मात् सवित्रादिदशदेवताः संख्याय प्रसर्पणं कुर्यादित्यर्थः। शब्रासा.

**एताभिर्वै देवताभिर्वरुण एतस्य सोमपीथमाश्नुत। तथो एवैष एताभिरेव देवताभिरेतस्य सोमपीथमश्नुते। तस्मादेता एव देवताः संख्याय प्रसर्पेत्। अथ यदैवैषोदवसानीयेष्टिः संतिष्ठत एतस्याभिषेचनीयस्य॥**

तदिदं वरुणवृत्तान्तेन प्रशंसति– एताभिर्वा इति । संसृप्शब्दवाच्यहविर्निर्वापकालं दर्शयति– अथ यदैवै-षेति । अभिषेचनीयस्य एतदाख्यस्य सोमयागस्य उदवसानीयेष्टिः यदा संतिष्ठते समाप्यते । शब्रासा.

**अथैतानि हवीꣳषि निर्वपति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशम् । सविता वै देवानां प्रसविता । सवितृप्रसूत एव तद्वरुणोऽनुसमसर्पत् । तथो एवैष एतत्सवितृप्रसूत एवानुसꣳसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥**

**अथ सारस्वतं चरुं निर्वपति । वाग्वै सरस्वती । वाचैव तद्वरुणोऽनुसमसर्पत् । तथो एवैष एतद्वाचैवानुसꣳसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥**

**अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्वपति । त्वष्टा वै रूपाणामीष्टे । त्वष्ट्रैव तद्रूपैर्वरुणोऽनुसमसर्पत् । तथो एवैष एतत्त्वष्ट्रैव रूपैरनुसꣳसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥**

**अथ पौष्णं चरुं निर्वपति । पशवो वै पूषा । पशुभिरेव तद्वरुणोऽनुसमसर्पत् । तथो एवैष एतत्पशुभिरेवानुसꣳसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥**

**अथैन्द्रमेकादशकपालं पुरोडाशं निर्वपति । इन्द्रियं वै वीर्यमिन्द्रः । इन्द्रियेणैव तद्वीर्येण वरुणोऽनुसमसर्पत् । तथो एवैष एतदिन्द्रियेणैव वीर्येणानुसꣳसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥**

**अथ बार्हस्पत्यं चरुं निर्वपति । ब्रह्म वै बृहस्पतिः । ब्रह्मणैवैतद्वरुणोऽनुसमसर्पत् । तथो एवैष एतद्ब्रह्मणैवानुसꣳसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥**

**अथ वारुणं यवमयं चरुं निर्वपति । स येनैवौजसेमाः प्रजा वरुणोऽगृह्णात्तेनैव तदोजसा वरुणोऽनुसमसर्पत् । तेनो एवैष तदोजसाऽनुसꣳसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥**

**उपसदो दशम्यो देवताः । तत्र पञ्च पुण्डरीकाण्युपप्रयच्छति । तां द्वादशपुण्डरीकाꣳ स्रजं प्रतिमुञ्चते सा दीक्षा । तया दीक्षया दीक्षते ॥**

अथैतानीति । अथ तदनन्तरं एतानि हवींषि, निर्वपेदित्यर्थः । तत्प्रकारः कात्यायनेन स्पष्टीकृतः– ' सावित्रसारस्वतत्वाष्ट्रपौष्ण– ऐन्द्रबार्हस्पत्यवारुणाग्नेयसौम्यवैष्णवानि यथोक्तम् । प्रतीष्टि पुण्डरीकाणि प्रयच्छति । हिरण्मयानि वा । उत्तमासु तिसृषु पञ्च । तेषां स्रजं प्रतिमुञ्चते । तद्दीक्षो भवति । ' ( काश्रौ. १५।८।४–९ ) इति, ' सप्तम्यां ब्रह्मागारात्सोममाहृत्याऽऽसन्द्यभिमर्शनादि करोत्युपसद्देवताहवींषि निर्वपत्युपसदन्त इच्छन्० ' ( काश्रौ. १५।८।१४) इति (च)। उक्तानां दशसंख्याकानां हविषां मध्ये सप्त हवींषि पूर्वमिष्टितन्त्रेण कृत्वा सप्त हिरण्मयपुण्डरीकाणि दत्त्वा उत्तरासु तिसृषु पञ्च दत्त्वा द्वादशपुण्डरीकस्रक्प्रतिमोकलक्षणां दशपेयदीक्षां कृत्वा सप्तम्यां संसृप्यागसंबन्धिन्यां सप्तमदिने क्रियमाणायां वारुण्यामिष्टावतीतायां पूर्वमेवाभिषेचनीयदशपेययोरपि द्विधा सोमं क्रीत्वा दशपेयार्थं ब्रह्मागारे स्थापितं सोममाहृत्य आसन्द्यभिमर्शनाद्यातिथ्यान्तं कृत्वा संसृपां हविषां मध्ये अन्त्यानि आग्नेयसौम्यवैष्णवानि त्रीणि हवींषि उपसत्प्रतिनिधित्वेन कर्तव्यानि । उपसदामप्यग्निसोमविष्णुदेवता अन्तिमत्वात् , तथाप्यग्नीषोमयोरेकस्याप्यभावे दशसंख्यापूरणाभावात् तयोरपि दशमत्वमुच्यते । तत्र तिसृषु देवतासु तद्देवत्यहविःषु पञ्च पुण्डरीकाणि देयानि भवन्तीत्येतत् । अथ द्वादशपेयस्य दीक्षां विधत्ते– तां द्वादशेति । दत्तानि सप्त, अन्तिमहविस्त्रये दास्यमानानि पञ्चेति द्वादश पुण्डरीकाणि भवन्ति । प्रकृतौ ' अप्सु स्नाति, अपोऽश्नाति ' ( तैसं. ६।१।१।२,३ ) इत्यादिना यत् दीक्षामात्रं विहितं तदत्रापवदितुं तत्तद्दास्यमानपुण्डरीकस्रक्प्रतिमोको विहितः । सूत्रं तु पूर्वमुदाहृतम् । आपस्तम्बेन तु विशेष उक्तः– ' अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते । ' ( आपश्रौ. १९।२०।१४ ) इति । प्रतिमोचयेदित्यर्थः । शब्रासा.

**अथ यद्द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य । सर्वं वै संवत्सरः । सर्वेणैवैनमेत-**

**दीक्षयति । यानि पुण्डरीकाणि तानि दिवो रूपम्, तानि नक्षत्राणाᳬ रूपम् । ये बधकास्तेऽन्तरिक्षस्य रूपम् । यानि बिसानि तान्यस्यै । तदेनमेषु लोकेष्वधि दीक्षयति ॥**

पुण्डरीकगतां संख्यां संभूय मासात्मकसंवत्सरात्मना प्रशंसति– अथ यद्द्वादशेति । अतः तावत्संख्याविशिष्टपद्मैर्दीक्षाकरणेन सर्वात्मसंवत्सरेण यजमानं दीक्षायुक्तं कृतवान् भवति । प्रकारान्तरेण प्रशंसति– यानीति । पद्मगतपत्रनालबिसानां स्वर्गान्तरिक्षभूम्याख्यलोकत्रयात्मकत्वात् तत्प्रतिमोकलक्षणदीक्षाकरणेन एनं यजमानं एषु त्रिषु लोकेषु दीक्षितवान् भवतीत्यर्थः । शब्रासा.

**अथ राजानं क्रीत्वा द्वेधोपनह्य परिवहन्ति । ततोऽर्धमासन्यामासाद्य प्रचरति । अथ य एषोऽर्धो ब्रह्मणो गृहे निहितो भवति तमासन्यामासाद्याऽऽतिथ्येन प्रचरति । यदातिथ्येन प्रचरत्यथोपसद्भिः प्रचरति । यदोपसद्भिः प्रचरति ॥**

'अथ राजानं क्रीत्वा' इत्योदेरयमर्थः:– पूर्वमभिषेचनीयदीक्षान्ते राजानं क्रीत्वा द्वेधोपनह्य तत्रैकं दशपेयार्थं पर्युह्य ब्रह्मागारे स्थापयित्वा एकेनाभिषेचनीये प्रचारः कृतः । अथ दशपेये ब्रह्मगृहे स्थापितं तं सोममाहृत्य आसन्यामासाद्य आतिथ्यया प्रचरेयुः । तदनन्तरमुपसद्यागः । तत्र अग्निसोमविष्णुदेवताकोपसत्प्रतिनिधित्वेन संसृब्यागसंबन्धिनामुत्तमानां त्रयाणां आग्नेयसौम्यवैष्णवानामेव निर्वापं पूर्वपक्षयति– यदोपसद्भिः प्रचरतीति । शब्रासा.

**अथैतानि हवीᳬषि निर्वपत्याग्नेयमष्टाकपालं पुरोडाशं, सौम्यं चरुं, वैष्णवं त्रिकपालं वा पुरोडाशं, चरुं वा । तेन यथेष्ट्यैवं यजते ॥**

अथैतानि हवींषि निर्वपत्याग्नेयमिति । तेन यथेष्ट्येति । एकैकोपसत्स्थाने तेन एकेन हविषा यथेष्ट्या इष्टितन्त्रेण कुर्यात् । उपसत्त्रयार्थमेतद्धविस्त्रयं कर्तव्यमिति शाखान्तरीयः पक्षः । शब्रासा.

**तदु तथा न कुर्यात् । ह्वलति वा एष यो यज्ञपथादेति । एति वा एष यज्ञपथाद्य उपसत्पथादेति । तस्मादुपसत्पथादेव नेयात् ॥**

तमिमं निराकरोति– तदु तथेति । तत् तथा न कुर्यात् । एषः ह्वलति वै प्रच्युतो भवेत् । एतच्छब्दार्थमाह– यो यज्ञपथादेतीति । एति अपगच्छति । तदेव पुनर्दर्शयति– एति वा एष इति । तस्मात् उपसत्पथात् उपसन्मार्गात् नेयात् न प्रच्युतो भवेत्, ततं उपसदो न पृथक् कुर्यात् । तदन्ते एतानि संसृपामन्तिमानि हवींषि त्रीणि चेष्टितन्त्रेण पृथक् कुर्यात् । अत एव सूत्रकारः उपसद्यागान्ते एतेषां निर्वापं विकल्पेन दर्शयामास– '० उपसदन्त इच्छन् ०' ( काश्रौ. १५।८।१४ ) इति । शब्रासा.

**स यदग्निं यजत्यग्निनैवैतत्तेजसाऽनुसᳬ सर्पति । अथ यत्सोमं यजति सोमेनैवैतद्राज्ञाऽनुसᳬ सर्पति । अथ यद्विष्णुं यजति । यज्ञो वै विष्णुः । तद्यज्ञं प्रत्यक्षमाप्नोति । तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥**

तदुपसद्देवताहविषामाग्नेयसौम्यवैष्णवानां संसृपां हविषामनिर्वापे तद्धेतुकसर्पणस्यासिद्धिमाशङ्क्य निरस्यति– स यदग्निमिति । उपसद्यागैरेव अग्निसोमविष्णव इष्टाः, तदानीमेव तैः संसर्पणं जातमिति । शब्रासा.

**स एष सप्तदशोऽग्निष्टोमो भवति । सप्तदशो वै प्रजापतिः । प्रजापतिर्यज्ञः । तद्यज्ञं प्रत्यक्षमाप्नोति । तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥**

दशपेयस्य सोमसंस्थारूपं विधत्ते– स एष सप्तदश इति । स एषः दशपेयः क्रतुः सप्तदशस्तोमसाध्योऽग्निष्टोमसंस्थो भवतीत्यर्थः । 'सप्तदशᳬ स्तोत्रं भवति' ( तैसं. १।८।१८।१ ) इति हि तैत्तिरीयकम् ।

शब्रासा.

**तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा । द्वादश वै मासाः संवत्सरस्य । संवत्सरः प्रजापतिः । प्रजापतिर्यज्ञः । तद्यज्ञं प्रत्यक्षमाप्नोति । तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥**

गर्भिणीनां गवां दानं विधत्ते– तस्य द्वादशेति । ता द्वादशसंख्याका गाः ब्रह्मणे दद्यादित्युत्तरेण ( शब्रा. ५।४।५।२२ ) संबन्धः । संख्यां संभूय संवत्सरात्मना

स्तौति– द्वादश वै मासा इति। शब्रासा.

**तासां द्वादश गर्भाः। ताश्चतुर्विंशतिः। चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः। संवत्सरः प्रजापतिः। प्रजापतिर्यज्ञः। तद्यज्ञं प्रत्यक्षमाप्नोति। तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥**

प्रकारान्तरेणापि प्रशंसति– तासां द्वादश गर्भा इति। ता गावो द्वादश। तासां गर्भा अपि द्वादश। मिलित्वा चतुर्विंशतिः। संवत्सरस्यापि चतुर्विंशतिः अर्धमासाः। तस्मात् संवत्सरात्मत्वेन ता बालगर्भा गावः प्रशस्ताः इत्यर्थः। शब्रासा.

**ता ब्रह्मणे ददाति। ब्रह्मा हि यज्ञं दक्षिणतो गोपायति। तस्मात्ता ब्रह्मणे ददाति। हिरण्मयीं स्रजमुद्गात्रे। रुक्मं होत्रे। हिरण्मयौ प्राकाशावध्वर्युभ्याम्। अश्वं प्रस्तोत्रे। वशां मैत्रावरुणाय। ऋषभं ब्राह्मणाच्छंसिने। वाससी नेष्टापोतृभ्याम्। अन्यतरतो युक्तं यवाचितमच्छावाकाय। गामग्नीधे ॥**

ता ब्रह्मणे ददातीति। हिरण्यस्रजो दानं विधत्ते– हिरण्मयीमिति। ददातीत्यनुवर्तते। वर्तुलस्य स्वर्णाभरणस्य दानं विधत्ते– रुक्मं होत्र इति। द्वाभ्यां प्रत्येकं प्राकाशदानं विधत्ते– हिरण्मयाविति। प्राकाशौ दीपस्तम्भावित्येके। सुवर्णदर्पणावित्यपरे। अश्वदानं विधत्ते– अश्वं प्रस्तोत्र इति। वन्ध्याया गोर्दानं विधत्ते– वशामिति। रेतस्सेचनसमर्थस्य गोर्दानं विधत्ते– ऋषभमिति। द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते– वाससी इति। एकेनानडुहा युक्तस्य यवपूर्णस्य शकटस्य दानं विधत्ते– अन्यतरत इति। अनडुहो दानं विधत्ते– गामग्नीध इति। 'अनड्वाहमग्नीधे' (काश्रौ. १५।८।२२) इति हि सूत्रितम्। 'अनड्वाहमग्नीधे। वह्निर्वा अनड्वान्।' (तैब्रा. १।८।२।५) इति हि तैत्तिरीयकम्। शब्रासा.

**ता वा एता द्वादश वा त्रयोदश वा दक्षिणा भवन्ति। द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः। संवत्सरः प्रजापतिः। प्रजापतिर्यज्ञः। तद्यज्ञं प्रत्यक्षमाप्नोति। तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥**

ता एता दक्षिणाः संभूय संवत्सरात्मना प्रशंसति– ता वा एता द्वादशेति। पष्ठौह्यादयोऽनडुदन्ता द्वादश दक्षिणाः। बालगर्भिणीनां गवां दक्षिणात्वात् बालगर्भिणीना( ? बालगर्भाणा )मपि दक्षिणात्वेन परिगणने त्रयोदश भवन्ति। संवत्सरस्यापि द्वादश चैत्रादयोऽधिकमासेन सह त्रयोदश मासा भवन्ति। तस्मादेताभिर्दक्षिणाभिर्यज्ञरूपं संवत्सरमेवाप्तवान् भवतीत्यर्थः। शब्रासा.

हविःपञ्चकेष्टिः

**[1]आग्नेयोऽष्टाकपालः पुरोडाशो भवति। तं पूर्वार्ध आसादयति। ऐन्द्र एकादशकपालः पुरोडाशो भवति। सौम्यो वा चरुः। तं दक्षिणार्ध आसादयति। वैश्वदेवश्चरुर्भवति। तं पश्चार्ध आसादयति। मैत्रावरुणी पयस्या भवति। तामुत्तरार्ध आसादयति। बार्हस्पत्यश्चरुर्भवति। तं मध्य आसादयति। एष चरुः पञ्चबिलः। तद्यत्पञ्च हवींषि भवन्ति। तेषां पञ्च बिलानि। तस्माच्चरुः पञ्चबिलो नाम ॥**

अथ पञ्चमाध्याये पञ्चबिलसंज्ञकश्चरुः, द्वादश प्रयुजां हवींषि, पशुद्वयम्, केशवपनीयातिरात्रः, सौत्रामणीप्रयोगः, राजसूयसमाप्त्युदवसानीयेष्टिश्च विधीयते। अत्र कात्यायनः – 'उत्तरे शुक्ले पञ्चबिलः। आग्नेय ऐन्द्रः सौम्यो वा वैश्वदेवश्चरुः पयस्या मैत्रावरुणी बार्हस्पत्यश्चरुः। प्रतिदिशमासादनमाग्नेयं पुरस्तात् प्रदक्षिणमितराणि मध्येऽन्त्यम्।' (काश्रौ. १५।९।१–३) इति। आग्नेयादीनि पञ्च हवींषि पूर्वादिक्रमेण मध्ये च स्थापयेत्। सोऽयं पञ्चबिलसंज्ञकश्चरुरित्यर्थः। तदिदं विधत्ते– आग्नेय इति। वेदिमध्ये पूर्वार्धे पूर्वभागे आसादयेत्। एवमुत्तरत्र दक्षिणार्धे इति योज्यम्। पयस्या आमिक्षा। हविःपञ्चकस्य पञ्चबिलसंज्ञां निर्वक्ति– तद्यदिति। तेषां हविषामासादनार्थानि एकस्यां पात्र्यां प्रागादिक्रमेण यतः पञ्च बिलानि, तस्मादेषा यागपञ्चकस्य पञ्चबिलश्चरुरिति संज्ञा। शब्रासा.

(१) शब्रा. ५।५।१।१–१२.

**तद्यदेतेन राजसूययाजी यजते । यदेवैनं दिशः समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दाꣳसि । तस्मादेवैनमेतेन निष्क्रीणाति । स यद्धैतेन राजसूययाजी न यजेत । उद्वा ह माद्येत्, प्र वा पतेत् । तस्माद्वा एतेन राजसूययाजी यजते ॥**

एतेषां हविषां करणे प्रयोजनमाह– तद्यदेतेनेति । एतेन हविःपञ्चकेन राजसूययाजिना यष्टव्यम् । कुतः ? यतः पूर्वं एनं यजमानं 'प्राचीमारोह' इत्यादिभिर्मन्त्रैः प्राच्याद्याः पञ्च दिशः, वसन्ताद्यृतून्, त्रिवृदादीन् स्तोमान्, गायत्र्यादीनि छन्दांसि चाध्वर्युरारोहितवान् । तस्मात् एतेन हविःपञ्चकेन एनं यजमानं दिगादिभ्यः सकाशात् पुनः निष्क्रीणाति स्वाधीनं कृतवान् भवति । अकरणे प्रत्यवायमाह– स यद्धेति । यदि न यजेत तर्हि यजमानः उन्माद्येत् उन्मत्तो भवेत् । प्रपतेत् प्रच्युतो भवेत् । वाशब्दद्वयमन्योन्यविकल्पार्थम् । शब्रासा.

**स यदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति । यदेवैनं प्राचीं दिशꣳ समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दाꣳसि । तस्मादेवैनमेतेन निष्क्रीणाति । सꣳस्रवं बार्हस्पत्ये चराववनयति ॥**

**अथ यदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रचरति, सौम्येन वा चरुणा । यदेवैनं दक्षिणां दिशꣳ समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दाꣳसि । तस्मादेवैनमेतेन निष्क्रीणाति । सꣳस्रवं बार्हस्पत्ये चराववनयति ॥**

**अथ यद्वैश्वदेवेन चरुणा प्रचरति । यदेवैनं प्रतीचीं दिशꣳ समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दाꣳसि । तस्मादेवैनमेतेन निष्क्रीणाति । सꣳस्रवं बार्हस्पत्ये चराववनयति ॥**

हविषां क्रमेण निष्क्रयणसाधनत्वं विवृणोति– स यदाग्नेयेनेत्यादि । प्रत्येकहविःप्रचारादनन्तरं बार्हस्पत्ये चरौ संस्रवावनयनं विधत्ते– संस्रवमिति । सूत्रं च भवति– 'पूर्वैः पूर्वैश्चरित्वा चरित्वा मध्यमे संस्रवासेचनम्' (काश्रौ. १५।९।४) इति । मध्ये मध्यमप्रदेशे स्थापिते बार्हस्पत्ये चरावित्यर्थः । शब्रासा.

**अथ यन्मैत्रावरुण्या पयस्यया प्रचरति । यदेवैनमुदीचीं दिशꣳ समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दाꣳसि । तस्मादेवैनमेतेन निष्क्रीणाति । स्रꣳस्रवं बार्हस्पत्ये चरावनयति । तद्यत्सꣳस्रवान् बार्हस्पत्ये चरावनयति सर्वत एवास्मिन्नेतदन्नाद्यं दधाति । तस्मादु दिशो दिश एव राज्ञेऽन्नाद्यमभिह्रियते ॥**

अथ यन्मैत्रावरुण्येति । चतुर्णां हविषां संस्रवस्य बार्हस्पत्ये चरावनयनं संभूयान्नाद्यसंपादनरूपेण प्रशंसति –तद्यत्संस्रवानिति । यतो बार्हस्पत्ये चरौ सर्वेषां हविषां हुतशिष्टस्यावनयनं तस्मात् राज्ञे दिशो दिशः सर्वस्या अपि दिशः सकाशात् अन्नाद्यमभिह्रियते आनीयते इत्यर्थः । शब्रासा.

**अथ यद्बार्हस्पत्येन चरुणा प्रचरति । यदेवैनमूर्ध्वां दिशꣳ समारोहयति, यदृतून् यत्स्तोमान्, यच्छन्दाꣳसि । तस्मादेवैनमेतेन निष्क्रीणाति ॥**

अथ यद्बार्हस्पत्येनेत्यादि पूर्ववत् । अत्र संस्रवावनयनाभावो विशेषः । शब्रासा.

**स य एष आग्नेयोऽष्टाकपालः पुरोडाशो भवति तस्य हिरण्यं दक्षिणा । आग्नेयो वा एष यज्ञो भवति । अग्ने रेतो हिरण्यम् । तस्माद्धिरण्यं दक्षिणा । तदग्नीधे ददाति । अग्निर्वा एष निदानेन यदाग्नीध्रः । तस्मात्तदग्नीधे ददाति ॥**

आग्नेयादिहविषामृत्विग्विशेषेभ्यो हिरण्यादिदक्षिणादानं विधत्ते– स य एष इति । आग्नेयहविषः, तद्दक्षिणात्वेन विहितस्य हिरण्यस्य च अग्निसंबन्धित्वं समानो धर्मः । हिरण्यस्याग्निरेतस्त्वं श्रूयते– 'तस्य रेतः परापतत् । तद्धिरण्यम्' (तैब्रा. १।१।३।८) इति । अग्नेरेवाऽऽग्नीध्रत्वं प्रथमकाण्डे स्तम्बयजुर्हरणब्राह्मणे (शब्रा. १।२।४।१३) स्पष्टमाम्नातम् । निदानेन कारणेन, निरूपणे सतीत्यर्थः । हविष आग्नेयत्वात्, हिरण्यस्याग्निरेतस्त्वात्, अग्नेरेवाऽऽग्नीध्रत्वात्, आग्नीध्रसंप्रदानकत्वं हिरण्यस्य युक्तमित्यर्थः । एवमुत्तरत्रापि यथायोग्यं साम्यं द्रष्टव्यम् । शब्रासा.

अथ य एष ऐन्द्र एकादशकपालः पुरोडाशो भवति तस्यर्षभो दक्षिणा । स हैन्द्रो यदृषभः । यद्यु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा । स हि सौम्यो यद्बभ्रुः । तं ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति । तस्मात्तं ब्रह्मणे ददाति ॥

अथ य एष ऐन्द्र इति । तस्यर्षभ इत्यादि । ऋषभस्यैन्द्रत्वं, सेक्तृत्वसाम्यात् । बभ्रोः सोमसंबन्धित्वं 'सौम्यं बभ्रुमालभेत' ( तैसं. २।१।३।३ ) इति श्रुतेरवगतम् । शब्रासा.

अथ य एष वैश्वदेवश्चरुर्भवति तस्य पृषन्गौर्दक्षिणा । भूमा वा एतद्रूपाणां यत्पृषतो गोः । विशो वै विश्वे देवाः । भूमो वै विट् । तस्मात्पृषन्गौर्दक्षिणा । तं होत्रे ददाति । होता हि भूमा । तस्मात्तं होत्रे ददाति ॥

अथ य एष वैश्वदेव इति । पृषन् बिन्दुयुक्तः चित्रवर्ण इत्यर्थः । तस्य वैश्वदेवत्वमुपपादयति— भूमा वा इति । भूमरूपत्वं नानाच्छन्दस्के बहुविधमन्त्रे शंसनादवगम्यते । शब्रासा.

अथ यैषा मैत्रावरुणी पयस्या भवति तस्यै वशा दक्षिणा । सा हि मैत्रावरुणी यद्वशा । यदि वशां न विन्देदपि यैव का चाप्रवीता स्यात् । सर्वा ह्येव वशाऽप्रवीता । तामध्वर्युभ्यां ददाति । प्राणोदानौ वा अध्वर्यू । प्राणोदानौ मित्रावरुणौ । तस्मात्तामध्वर्युभ्यां ददाति ॥

अथ यैषा मैत्रावरुणीति । वशा वन्ध्या । तदभावे अप्रवीता । वेतेः प्रजनार्थान्निष्ठा । अप्रजाता अगृहीतगर्भेत्यर्थः । शब्रासा.

अथ य एष बार्हस्पत्यश्चरुर्भवति तस्य शितिपृष्ठो गौर्दक्षिणा । एषा वा ऊर्ध्वा बृहस्पतेर्दिक् । तदेष उपरिष्टादर्यम्णः पन्थाः । तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा । तं ब्रह्मणे ददाति । बृहस्पतिर्वै देवानां ब्रह्मा । एष वा एतस्य ब्रह्मा भवति । तस्मात्तं ब्रह्मणे ददाति । स हैतेनापि विष्ठाव्राज्यन्नाद्यकामो यजेत । तदस्मिन्त्सर्वतोऽन्नाद्यं दधाति । स ह्यन्नाद एव भवति ॥

अथ य एष बार्हस्पत्य इति । शितिपृष्ठः श्वेतपृष्ठः । बार्हस्पत्यचरोः श्वेतपृष्ठस्य गोर्दक्षिणात्वमुपपादयति— एषा वा ऊर्ध्वेति । 'ऊर्ध्वा दिक् बृहस्पतिर्देवता' ( तैब्रा. ३।११।५।३ ) इति श्रुतेः ऊर्ध्वा दिक् बार्हस्पत्या । उपरिष्टात् उपरिभागे अर्यम्णः सूर्यस्य पन्थाः मार्गः । तस्मात् उपरिभागे श्वेतत्वसाम्यात् तादृशो गौर्दक्षिणात्वेन युज्यत इत्यर्थः । अथैतस्य हविःपञ्चकस्य फलान्तराय राजसूयाद्बहिः प्रयोगं दर्शयति— स हैतेनापीति । विष्ठाव्राजी एकत्र संनिविष्टः इतस्ततः पर्यटनमकुर्वन् अन्नाद्यकामः एकत्र स्थित्वैव सर्वतो मेऽन्नं स्यादिति कामयमान इत्यर्थः । पुरुषोऽपि एतेन हविःपञ्चकेन यजनं कुर्यात् । तत् प्रशंसति— तदस्मिन्निति । शब्रासा.

प्रयुजां द्वादशहविषामिष्टिः । द्वौ पशुबन्धौ ।

[१]स वै प्रयुजां हविर्भिर्यजते । तद्यत्प्रयुजां हविर्भिर्यजत ऋतून्वा एतत्सुषुवाणो युङ्क्त, त एनमृतवो युक्ता वहन्ति, ऋतून्वा प्रयुक्ताननुचरति । तस्मात्प्रयुजां हविर्भिर्यजते ॥

द्वितीये ब्राह्मणे प्रयुजां हवींषि विधीयन्ते । कात्यायनः— 'द्वादशोत्तराणि प्रयुग्घवींषि । मासान्तराणि । आहवनीयाद्वा पुरस्ताच्छम्याप्रासे शम्याप्रास आग्नेयसौम्यसावित्रबार्हस्पत्यत्वाष्ट्रवैश्वानरा यथोक्तम् । एवमावृत्तस्य चरवः सारस्वतपौष्णमैत्रक्षैत्रपत्यवारुणादित्याः । षट् षड्वैकतन्त्रे । पूर्वाग्निवाहौ द्वौ द्वौ षण्णां षण्णां दक्षिणा ।' ( काश्रौ. १५।९।७–१२ ) इति । अयमर्थः— द्वादशाग्नेयादीनि प्रयुजां हवींषि आहवनीयात् पूर्वदेशे एकैकशम्याव्याधप्रदेशे एकैकस्मिन् मासि एकैकं हविरिति क्रमेण षट् यष्टव्यानि । तथा प्रत्यावृत्य तेष्वेव स्थानेषु क्रमेण षट् यष्टव्यानि । यद्वा, षट्कं षट्कमेकीकृत्य एकतन्त्रेण कुर्यात् । तेषां पूर्वाग्निवाहकौ द्वौ द्वौ अनड्वाहौ दक्षिणेति । तदिदं विधत्ते— स वै प्रयुजामिति । विविधं प्रशंसति— ऋतून्वा इति । एष सुषुवाणः

(१) शब्रा. ५।५।२।१–१०.

यष्टा ऋतून् मासानेव प्रयुङ्क्ते कर्मणे योजयति । ऋतवः अपि एनं युक्ताः सन्तो वहन्ति प्रापयन्तीष्टं फलम् । इदानीमनुष्ठाताऽपि प्रयुक्तान् ऋतूननुलक्ष्य चरति अनुसरति तत्तदनुसरणजनितफलं प्राप्तुकामः । तस्मात् प्रयुजां हविर्यागः कर्तव्यः । तथा च तैत्तिरीयके— 'मासि मास्येतानि हवीꣳषि निरुप्याणीत्याहुः । तेनैवर्तून् प्रयुङ्क्ते' ( तैब्रा. १।८।४।३ ) इति ।

शब्रासा.

**तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य । तस्माद्द्वादश भवन्ति । मासि मासि यजेतेत्याहुः । को वेद मनुष्यस्य । तस्मान्न मासि मासि यजेत । शम्यापराव्याधे शम्यापराव्याध एव षड्भिर्यजते प्राङ् यान् । अथ पुनरावृत्तः शम्यापराव्याधे शम्यापराव्याध एव षड्भिर्यजते ॥**

तेषां संख्यां विधत्ते— तानि वै द्वादशेति । तेषां प्रतिमासं यजनं पूर्वपक्षत्वेनोपन्यस्यति— मासि मासीति । तं पक्षं निराकरोति— को वेदेति । मनुष्यस्याऽऽयुःपरिमाणस्यावगन्तुमशक्यत्वान्मासि मासि यजनं न कर्तव्यमित्यर्थः । हविःषट्कस्यैकीकृत्य यागकरणेऽपि कंचिद्विशेषं पूर्वपक्षत्वेनोपन्यस्यति— शम्यापराव्याध इति । शम्यापरास्ता विध्यति निपतति यत्रेति स शम्यापराव्याधो देशः । तत्र देशे पूर्वैः षड्भिः प्राङ् प्राङ्मुखो यान् गच्छन् यजेत । आहवनीयात् पूर्वदेशे एकैकशम्याप्रासे षट् कर्तव्यानीत्यर्थः । अथ पुनरिति । पुनरावृत्तेन एकैकशम्याप्रासप्रदेशे अपराणि षट् कर्तव्यानीति । शब्रासा.

**तदु तथा न कुर्यात् । षडेवैतानि पूर्वाणि हवीꣳषि निर्वपति समानबर्हीꣳषि । तासां देवतानाꣳ रूपं यथा शिशिरे युक्त्वा प्राञ्च आप्रावृषं यायुः । तत् षडृतून्युङ्क्ते । त एनꣳ षडृतवो युक्ताः प्राञ्च आप्रावृषं वहन्ति । षड्वर्तून्प्रयुक्तानाप्रावृषमनुचरति । पूर्वाग्निवाहां द्वौ दक्षिणा ॥**

तं पक्षं निराकृत्य पक्षान्तरं विधत्ते— तदु तथेति । पूर्वाणि षट् हवींषि समानबर्हींषि, बर्हिःशब्दस्तन्त्रोपलक्षकः, एकतन्त्राणि कर्तव्यानीत्यर्थः । पूर्वहविःषट्कदेवताः प्रशंसति— तासां देवतानामिति । तासां पूर्वहविःषट्कस्य देवतानामग्नीषोमादीनां षण्णां रूपमेतत् । यथा शिशिरे ऋतौ युक्त्वा युक्ताश्वाः राजानः प्राञ्चः सन्तः आप्रावृषं प्रावृट्कालपर्यन्तं यायुः गच्छेयुः । तदिदं प्राङ्मुखं यानं पूर्वपूर्वशम्याप्रासेषु यष्टव्यानामग्न्यादिदेवतानां सबन्धि रूपमित्यर्थः । प्रयुजां पूर्वाणि षड्हवींषि प्रस्तुत्य तैत्तिरीयके शिशिरादिषु षट्सु मासेषु राजभेदेन प्राङ्मुखा यात्रा, प्रतिमासं व्यापारभेदश्च स्पष्टमाम्नातः— 'आग्नेयमष्टाकपालं निर्वपति । तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति । सौम्यं चरुम् । तस्माद्वसन्तं व्यवसायादयन्ति । सावित्रं द्वादशकपालम् । तस्मात्पुरस्ताद्यवानाꣳ सवित्रा विरुन्धते । बार्हस्पत्यं चरुम् । सवित्रैव विरुध्य । ब्रह्मणा यवानादधते । त्वाष्ट्रमष्टाकपालम् । रूपाण्येव तेन कुर्वते । वैश्वानरं द्वादशकपालम् । तस्माज्जघन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति ।' ( तैब्रा. १।८।४।१-२ ) इति । तदनेन पूर्वहविःषट्केन षडृतुमासानेव युङ्क्ते । ऋतुशब्दो मासपरः, 'वासन्तिकावृतू' ( शुसं. १३।२५ ) इति व्यवहारात् । यद्वा, 'पक्षा वै मासाः' इति पक्षाणां मासत्वव्यवहारात् पक्षद्वयात्मक ऋतुरित्यर्थः । पूर्वषट्कस्य दक्षिणां विधत्ते— पूर्वाग्नीति । पूर्वाग्निं आहवनीयं वहन्तीति पूर्वाग्निवाहोऽनड्वाहः । तेषां मध्ये द्वौ दक्षिणात्वेन देयावित्यर्थः । शब्रासा.

**षडेवोत्तराणि हवीꣳषि निर्वपति समानबर्हीꣳषि । तासां देवतानाꣳ रूपं यथा पुनरावर्तेरन् वार्षिकमभि । तत् षडृतून्युङ्क्ते । त एनꣳ षडृतवो युक्ता वार्षिकमभिवहन्ति । षड्वर्तून्प्रयुक्तान्वार्षिकमनुचरति । पूर्वाग्निवाहां द्वौ दक्षिणा । तद्यत्पूर्वाग्निवाहो दक्षिणर्तून्वा एतत्सुषुवाणो युङ्क्ते वहन्ति वा अनड्वाहः । तस्मात्पूर्वाग्निवाहो दक्षिणा ॥**

उत्तरहविःषट्कस्यापि समानतन्त्रत्वं दर्शयति— षडेवोत्तराणीति । तानि प्रशंसति— तासां देवतानामिति । वार्षिकमभि वर्षर्तुसंबन्धिनं प्रथमं मासमभिलक्ष्य पुनरावर्तेरन् । शिशिरे दिग्विजयाय प्राञ्चः प्रयाताः कुरुपञ्चालादयो निदाघर्तुद्वितीयमासे परकीयं राष्ट्रं सर्वात्मना विनाश्य

स्वदेशं प्रति प्रत्यङ्मुखा निवर्तन्ते। तदेतत् सरस्वत्यादिदेवतानां प्रतिनिवृत्त्या यष्टव्यानां रूपमित्यर्थः। तत् षडृतूनिति। तत् तेन उत्तरहविःषट्कयागेन प्रावृडादीन् षण्मासान् योजितवान् भवति। तेषामनडुद्द्वयं दक्षिणां विधत्ते— पूर्वाग्नीति। पूर्वाग्निवाहां दक्षिणात्वं संभूय प्रशंसति— तद्यत्पूर्वाग्नीति। शब्रासा.

**तद्ध स्मैतत्पुरा कुरुपञ्चाला आहुः— ऋतवो वा अस्मान्युक्ता वहन्ति ऋतूंन्वा प्रयुक्ताननुचराम इति। यदेषाँ राजानो राजसूययाजिन आसुस्तद्ध स्म तदभ्याहुः॥**

उक्तं द्वादशप्रयुग्घविःकरणेन ऋतुप्रयोगं कुरुपञ्चालवृत्तान्तमुखेन द्रढयति— तद्ध स्मैतदिति। पूर्वे कुरुपञ्चालाः आहुः वदन्ति विचारयन्ति— 'अस्मान् ऋतवो युक्ताः सन्तो वहन्ति, प्रयुक्तान् ऋतूननुलक्ष्य चरामः अनुसराम इति। आशंसमानानां एषां राज्ञां मध्ये ये राजानः राजसूययाजिनः आसुः ते प्रयुग्घविःकरणमृतुप्रयोगरूपमिति प्रत्यूचुरिति तस्यार्थः। शब्रासा.

**आग्नेयोऽष्टाकपालः पुरोडाशो भवति, सौम्यश्चरुः, सावित्रो द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशः, बार्हस्पत्यश्चरुः, त्वाष्ट्रो दशकपालः पुरोडाशः, वैश्वानरो द्वादशकपालः। एतानि षट् पूर्वाणि हवीँषि भवन्ति॥**

**षडेवोत्तरे चरवः। सारस्वतश्चरुः। पौष्णश्चरुः। मैत्रश्चरुः। क्षैत्रपत्यश्चरुः। वारुणश्चरुः। आदित्यश्चरुः। एत उ षडुत्तरे चरवः॥**

तानि द्वादश हवींषि उद्दिशति— आग्नेयोऽष्टाकपाल इति। तत्र पूर्वाणि षड्हवींषि चरुपुरोडाशात्मकानि, उत्तराणि तु चर्वात्मकान्येवेत्यर्थः। शब्रासा.

**अथ श्येनीं विचित्रगर्भामदित्या आलभते। तस्या एषैवावृद्याऽष्टापद्यै वशायै। इयं वा अदितिः। अस्या एवैनमेतद्गर्भं करोति। तस्या एतादृश्येव श्येनी विचित्रगर्भा दक्षिणा॥**

अथ पशुद्वयं विधीयते। तत्र कात्यायनः— 'अष्टापदीवत्पशुबन्धौ गर्भिणीभ्यां स्वगुणदक्षिणौ। श्येन्यादित्येभ्योऽदित्यै वा। वैश्वदेवी पृषती मारुती वा।' (काश्रौ. १५।९।१३-१५) इति। श्वेतां गर्भिणीमादित्येभ्योऽदित्यै वा आलभेत, पृषतीं गर्भिणीं विश्वेभ्यो देवेभ्यो मरुद्भ्यो वेति तदर्थः।

तत्र स्वमतानुसारेणादितिदेवत्यं पशुबन्धं विधत्ते—अथ श्येनीमिति। श्येनीं श्वेतवर्णां विचित्रगर्भां प्रज्ञातगर्भां अदित्यै आलभेत। प्रयोगमतिदिशति— तस्या एषेति। आवृत् क्रिया या अष्टापद्यै वशायै, गर्भिण्या वशाया अनुबन्ध्यायाः प्रयोगक्रमः स एवास्या इत्यर्थः। तत्प्रयोगस्तु चतुर्थकाण्डे पञ्चमेऽध्याये द्वितीये ब्राह्मणे— 'उत्खिद्य वपामनुमर्शे गर्भमेष्टवै ब्रूयात्' (शब्रा. ४।५।२।१) इत्यादिना स्पष्टमीरितः। एतद्देवतां प्रशंसति— इयं वा इति। अदितिः नाम इयं पृथिवी तस्माददितिदेवत्यगर्भिणीयागेन एनं यजमानं भूमेरेव गर्भत्वेन कृतवान् भवति। एतस्य कर्मणो दक्षिणां विधत्ते— तस्या एतादृश्येवेति। एतादृशी एतद्वर्णा प्रज्ञातगर्भा दक्षिणा। शब्रासा.

**अथ पृषतीं विचित्रगर्भां मरुद्भ्य आलभते। तस्या एषैवाऽऽवृत्। विशो वै मरुतः। विशामेवैनमेतद्गर्भं करोति। तस्या एतादृश्येव पृषती विचित्रगर्भा दक्षिणा॥**

पशुबन्धान्तरं विधत्ते—अथ पृषतीमिति। पृषतीं बिन्दुयुक्तां विचित्रगर्भां विचित्रवर्णां गर्भिणीं मरुद्भ्यः देवेभ्यः आलभेत। तस्यापि प्रयोगप्रकारं पूर्ववदतिदिशति— तस्या एषेति। मरुतां विट्त्वान्मरुद्देवत्यपशुयागेन एनं सुन्वन्तं विशां प्रजानां गर्भं तदुपजीव्यं कृतवान् भवति। तस्यापि दक्षिणां विधत्ते— तस्या एतादृशीति। एवकारेणान्यवर्णदक्षिणानिवृत्तिः। दक्षिणाभेदेनानयोः कर्मभेदः। शब्रासा.

**एतौ पशुबन्धौ। तदेतावेव सन्तावन्यथेवाऽऽलभन्ते। यामदित्या आलभन्त आदित्येभ्यस्तामालभन्ते। सर्वे वा आदित्याः। सर्वस्यैवैनमेतद्गर्भं करोति। यां मरुद्भ्य आलभन्ते विश्वेभ्यस्तां देवेभ्य आलभन्ते। सर्वे वै विश्वेदेवाः। सर्वस्यैवैनमेतद्गर्भं करोति॥**

एतौ पशुबन्धाविति । उक्तस्य पशुबन्धद्वयस्य शाखा-भेदेन देवतान्तरसंबन्धं दर्शयति– तदेतावेवेति । एव-कारेणादितिमरुत्संबन्धो विवक्षितः । अन्यथैव इति यदुक्तं तदेव स्पष्टयति– यामदित्या इत्यादिना ।

शब्रासा.

केशवपनीयातिरात्रः

**'अभिषेचनीयेनेष्ट्वा केशान्न वपते । तद्य-त्केशान्न वपते । वीर्यं वा एतदपां रसः संभृतो भवति । येनैनमेतदभिषिञ्चति । तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति । स यत्केशान् वपेतै-तां श्रियं जिह्मां विनाशयेद् , व्युदुह्यात् । तस्मा-त्केशान्न वपते ॥**

तृतीये केशवपनीयातिरात्रस्य वैशेषिका धर्मा उच्यन्ते । सूत्रम्– 'अभिषेचनीयाद्वा संवत्सरात् केश-वपनीयोऽतिरात्रः सोमापवर्गः । ' ( काश्रौ. १५।९।२२ ) इति । पशुबन्धद्वयानन्तरं केशवपनीयातिरात्रयागः कर्तव्यः । अभिषेचनीयसोमयागं कृत्वा संवत्सरपर्यन्तं केशवपना-करणलक्षणं व्रतमाचर्यम् । ततस्तद्व्रतविसर्जनार्थमेकः सोमयागः पौर्णमासीसुत्यः कार्यः । स एव केशवप-नीयातिरात्र उच्यते । रात्रिमतीत्य वर्तते इत्यतिरात्रः , अतिरात्रसंस्थया कार्य इत्यर्थः । तमिमं विधत्ते– अभिषेचनीयेनेष्ट्वेति । अभिषेचनीययागादनन्तरं केश-वपनीय( ? केशवपना )करणे कारणमाह– वीर्यं वा एतदपामिति । पूर्वमभिषेककाले वीर्यरूपोऽपां रसः प्रथमं केशानेव प्राप्तवान् । तेषां केशानां वपने अभिषेके-णाऽऽगच्छन्तीं श्रियमेव जिह्मां कुटिलां विनाशित-वान् भवति । किंच, व्युदुह्यात् गतसारोऽपि भवेत् । तस्मात् केशवापो न कर्तव्य इत्यर्थः । शब्रासा.

**संवत्सरं न वपते । संवत्सरसंमिता वै व्रत-चर्या । तस्मात्संवत्सरं न वपते । स एष व्रत-विसर्जनीयोपयोगो नाम स्तोमो भवति केशव-पनीयः ॥**

तस्यावधिकालं दर्शयति– संवत्सरं न वपत इति । केशवपनीयशब्दं निर्वक्ति– स एष व्रतेति । संवत्सरसंमित-व्रतविसर्जनद्वारा केशवपनार्थमुपयुज्यमानः क्रियमाणः स्तोमः एकविंशादिस्तोमवान् यागः केशवपनीय इत्यर्थः ।

शब्रासा.

**तस्यैकविंशं प्रातःसवनं, सप्तदशं माध्यंदिनं सवनं, पञ्चदशं तृतीयसवनं सहोक्थैः सह षोडशिना सह रात्र्या ॥**

तत्र सामगैर्गीयमानेषु स्तोत्रेषु चोदकेन प्रातःसवनादिषु त्रिवृदादिस्तोमप्राप्तौ तानपवदितुं विशेषं दर्शयति– तस्यैक-विंशमिति । प्रातःसवनं एकविंशस्तोमयुक्तं कर्तव्यम् । माध्यंदिनं सप्तदशस्तोमकं, अस्य सोमयागस्य अतिरात्र-संस्थात्वात् । तृतीयसवने अग्निष्टोमवत् द्वादश स्तोत्राणि, तत उत्तरं त्रीण्युक्थस्तोत्राणि, एकं षोडशिस्तोत्रं, रात्रिपर्यायस्तोत्राणि द्वादश, तानि सर्वाण्यपि पञ्चदश-स्तोमकानि कर्तव्यानीत्यर्थः । स्तोमक्लृप्तिप्रकारस्तु 'प्राची-मारोह' ( शब्रा. ५।४।१।३ ) इत्यत्र दिक्समारोहणमन्त्र-व्याख्यावसरे दर्शितः । शब्रासा.

**त्रिवृद्राथंतरः संधिर्भवति । एष एवैकविंशो य एष तपति । स एतस्मादेकविंशादपयुङ्क्ते । स सप्तदशमभि प्रत्यवैति, सप्तदशात्पञ्चदशं, पञ्च-दशादस्यामेव त्रिवृति प्रतिष्ठायां प्रतितिष्ठति ॥**

किञ्च, त्रिवृद्राथंतर इति । पूर्वदिवसरात्रिशेषे उत्तर-दिवसस्योषःकाले यज्ञसंस्थापकमेकं चरमं स्तोत्रं ( तृतीय स्तोत्रं ? ) तृतीयपर्यायस्यान्ते रथंतरसाम्ना गातव्यम् । तत् संधिस्तोत्रमित्युच्यते । तत् स्तोत्रं त्रिवृत्स्तोमयुक्तं कार्यम् । एकविंशादवरोहणक्रमेण त्रिवृत्पर्यन्तं यत् स्तोम-करणमुक्तं, तत् सूर्यलोकादिक्रमात् भूम्यवस्थानात्मना प्रशंसति– एष एवैकविंश इति । य एष तपति स एकविंशः सूर्य इत्यर्थः । तस्मादपयुङ्क्ते अवरोहती-त्यर्थः । सोऽवरुह्यावरुह्य त्रिवृद्रूपायामस्यां भूमिलक्षणायां प्रतिष्ठायां प्रतिष्ठितवान् भवति । शब्रासा.

**तस्य रथंतरं पृष्ठं भवति । इयं वै रथंतरम् । अस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति । अतिरात्रो**

---

( १ ) शब्रा. ५।५।३।१-७.

**भवति । प्रतिष्ठा वा अतिरात्रः । तस्मादतिरात्रो भवति ॥**

माध्यंदिने सवने रथंतरं बृहत्साम वा पृष्ठस्तोत्रं प्रकृतौ विकल्पितं, अत्र त्वेकं नियमयति– तस्य रथंतरमिति । अस्य सोमयागस्य अतिरात्रसंस्थात्वं प्रतिष्ठात्मना प्रशंसति– अतिरात्र इति । अतिरात्रसंस्थात्मना कृत एष क्रतुः प्रतिष्ठारूपः । शब्रासा.

**स वै न्येव वर्तयते, केशान्न वपते । वीर्यं वा एतदपाᳬं रसः संभृतो भवति येनैनमेतदभिषिञ्चति । तस्याभिषिक्तस्य केशान्प्रथमान्प्राप्नोति । स यत्केशान्वपेतैताᳬं श्रियं जिह्मां विनाशयेत्, व्युदुह्यात् । अथ यन्निवर्तयति तदात्मन्येवैताᳬं श्रियं नियुनक्ति । तस्मान्न्येव वर्तयते, केशान्न वपते । तस्यैषैव व्रतचर्या भवति, यावज्जीवं नास्यां प्रतितिष्ठति ॥**

अस्य क्रतोः केशवापव्रतविसर्जनार्थं क्रियमाणत्वात् तदन्ते केशवापः कार्यः । तत्र कंचित् विशेषं विधत्ते– स वै न्येव वर्तयत इति । स यजमानो निवर्तयते केशान् निकृन्तेदेव, न वपेत् । वपनं नाम मुण्डनं तन्न कुर्यात् । निवर्तनं कर्तनं तत् कुर्यादित्यर्थः । वीर्यं वा इत्यादेरर्थः पूर्वं व्याख्यातः । निवर्तनपक्षे केशाङ्कुराणां विद्यमानत्वादात्मन्येवैतां श्रियं नियोजितवान् भवतीत्यर्थः । सुन्वतः कांश्चिन्नियमान् दर्शयति– तस्यैषैवेति । एषा केशकर्तनलक्षणा व्रतचर्या यावज्जीवं कर्तव्या, न केशमुण्डनं कार्यम् । कदाचिदप्यस्यां भूमौ न प्रतितिष्ठति अवस्थानं न कुर्यात् । शब्रासा.

**आसन्द्या उपानहा उपमुञ्चते । उपानद्भ्यामधि यदस्य यानं भवति रथो वा किंचिद्वा, सर्वं वा एष इदमुपर्युपरि भवति । अर्वागेवास्मादिदᳬं सर्वं भवति यो राजसूयेन यजते । तस्मादस्यैषैव व्रतचर्या भवति । यावज्जीवं नास्यां प्रतितिष्ठति ॥**

कुत्रावतिष्ठेतेति तद्दर्शयति– आसन्द्या इति । आसन्द्याः अवरोहणसमयेऽपि उपानहौ पादुके उपमुञ्चेत । इतस्ततः संचरणसमये रथं वा यानं वाऽऽरोहेत् । एतादृशं व्रतं राजसूययाजिनो यावज्जीवं कर्तव्यमित्यर्थः । शब्रासा.

चरकसौत्रामणी

**[1]श्येत आश्विनो भवति । श्येताविव ह्यश्विनौ । अविर्मल्हा सारस्वती भवति । ऋषभमिन्द्राय सुत्राम्ण आलभते । दुर्वेदा एवᳬं समृद्धाः पशवः । यद्येवᳬं समृद्धान्न विन्देदप्यजानेवालभेरन् । ते हि सुश्रपतरा भवन्ति । स यद्यजानालभेरन् लोहित आश्विनो भवति । तद्यदेतया यजते ॥**

सोमप्रधाने राजसूये सप्त सोमयागाः । तत्र, पवित्राख्यसोमयागे विशेषाभावात् स नोक्तः, अभिषेचनीयदशपेयकेशवपनीयातिरात्रेषु केचिद् वैशेषिका धर्मा उक्ताः । व्युष्टिद्विरात्रोऽग्निष्टोमातिरात्रः क्षत्रधृतिरिति सोमयागत्रयं केशवपनीयादनन्तरं कर्तव्यम् । तेषां सोमयागविकृतित्वादग्निष्टोमवत् सर्वमङ्गजातं कर्तव्यम् । तत्र विशेषाभावादत्र नोक्ताः । तदनन्तरकर्तव्या सौत्रामण्यभिधीयते (इति ?) । तत्र पशुत्रयं देवतासंबन्धविशिष्टं विधत्ते– श्येत आश्विन इति । अश्विदेवत्यः श्येतः पशुरालभ्यः । मल्हा गलस्तनयुतेत्यर्थः । तां अविं मेषीं सरस्वत्यै आलभेत । सुत्राम्णे सुष्ठुत्रात्रे एतद्गुणकाय इन्द्राय ऋषभं सेचनसमर्थं आलभेत । उक्तपशुषु श्येतगलस्तनयुक्तत्वरूपं गुणमसंभाविनं मत्वा श्रुतिः स्वयमेव पक्षान्तरमाह– दुर्वेदा इति । एवं उक्तरीत्या समृद्धाः गुणवत्त्वेन संपूर्णाः पशवो दुर्वेदाः दुर्लभाः । तेषामलाभे तत्तद्देवत्यान् त्रीनजानेव आलभेत । सुश्रपतराः सुखेन श्रपयितुमर्हाः । अजत्रयपक्षे आश्विनपशोः कंचिद्गुणं विधत्ते– लोहित आश्विन इति । अत एव कात्यायनः– 'आश्विनोऽजः श्येतः । मल्हाऽविः सारस्वती । ऋषभमिन्द्राय सुत्राम्णे तद्गुणाभावेऽजाः । प्रथमो लोहितः ।' (काश्रौ. १५।१०।३–६) इति । एतेषां पशूनां सौत्रामणीसंबन्धं दर्शयति– तद्यदेतयेति । पशुत्रयवत्या एतया सौत्रामण्या यष्टव्यमित्यर्थः । शब्रासा.

**त्वष्टुर्ह वै पुत्रस्त्रिशीर्षा षडक्ष आस । तस्य त्रीण्येव मुखान्यासुः । तद्यदेवᳬं रूप आस– तस्माद्विश्वरूपो नाम ॥**

---

(१) शब्रा. ५।५।४।१–३५.

**तस्य सोमपानमेवैकं मुखमास, सुरापाणमेकं, अन्यस्मा अशनायैकम् । तमिन्द्रो दिद्वेष । तस्य तानि शीर्षाणि प्रचिच्छेद ॥**

**स यत्सोमपानमास ततः कपिञ्जलः समभवत् । तस्मात् स बभ्रुक इव । बभ्रुरिव हि सोमो राजा ॥**

**अथ यत्सुरापाणमास ततः कलविङ्कः समभवत् । तस्मात्सोऽभिमाद्यत्क इव वदति । अभिमाद्यन्निव हि सुरां पीत्वा वदति ॥**

**अथ यदन्यस्मा अशनायाऽऽस ततस्तित्तिरिः समभवत् । तस्मात्स विश्वरूपतम इव । सन्त्येव घृतस्तोका इव त्वत्, मधुस्तोका इव त्वत्, पर्णेष्वाश्चुतिताः । एवꣳरूपमिव हि सः । तेनाशनमावयत् ॥**

अथ सौत्रामण्या सुत्रामेन्द्रसंबन्धं, अश्विसरस्वतीसंबन्धं, तत्रोपयुक्तद्रव्यादिकं च आख्यायिकामुखेन दर्शयति– त्वष्टुर्ह वै पुत्र इति । पूर्वं त्वष्टुः पुत्रस्य विश्वरूपस्य त्रिशीर्ष्णः त्रीणि मुख्यान्यासुः । तत्र एकं मुखं सोमपानं, द्वितीयं सुरापाणं, तृतीयं अन्यस्मै अशनाय बभूव । एवंभूतस्य विश्वरूपस्य त्रीणि शिरांसि इन्द्रः दिद्वेष चिच्छेद । ततश्छिन्नेभ्यो मुखेभ्यः कपिञ्जलकलविङ्कतित्तिरयस्त्रयः पक्षिणः समभवन् । कपिञ्जलस्य सोमपानमुखजातत्वात् तत्समानो बभ्रुवर्णो जातः । कलविङ्कस्य सुरापाणमुखजातत्वात् सुरापायिवदभिमादवचनम् । तित्तिरस्य अशनभोजकमुखजत्वान्नानारूपत्वम् । अशने हि घृतमधुबिन्दुसद्भावादस्मिन्नपि पक्षिणि तदाकारपक्षसद्भावः । अवयत् इति वेतेः खादनार्थाच्छान्दसः शप् । शब्रासा.

**स त्वष्टा चुक्रोध– कुविन्मे पुत्रमवधीदिति । सोऽपेन्द्रमेव सोममाजह्रे । स यथाऽयꣳ सोमः प्रसुत एवमपेन्द्र एवास ॥**

स त्वष्टेति । ततस्तस्य च्छिन्नशीर्ष्णो विश्वरूपस्य पिता त्वष्टा कुवित् व्यर्थं मे मम पुत्रं अवधीत् इति क्रुद्धः सन् अपेन्द्रं इन्द्रवर्जितमेव सोमं सोमयागं आजह्रे अनुष्ठितवान्, यथा सोमः इन्द्रवर्जितः प्रसुतः अभिषुतः स्यात् तथेत्यर्थः । शब्रासा.

**इन्द्रो ह वा ईक्षांचक्रे– इदं वै मा सोमादन्तर्यन्तीति । स यथा बलीयानबलीयस एवमनुपहूत एव यो द्रोणकलशे शुक्र आस तं भक्षयांचकार । स हैनं जिहिꣳस । सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव । मुखाद्धैवास्य न दुद्राव । तस्मात्प्रायश्चित्तिरास । स यद्धापि मुखादद्रोष्यन्न हैव प्रायश्चित्तिरभविष्यत् ॥**

अथ इन्द्रः त्वष्ट्रादयः मां सोमाद्व्यवहितं कुर्वन्तीति निश्चित्य अनुपहूतः सन् द्रोणकलशस्थितं सोममपहृत्य भक्षयांचकार । यथा बलवान् पुरुषो बलरहितस्यान्नादिकमपहरति तद्वत् । स पीतः सोमः एनं जिहिंस बाधितवान् । अस्य प्राणेभ्यः नासिकादिस्थानेभ्य एव विष्वङ् सर्वतः दुद्राव स्रुतः, न मुखात् दुद्राव । तस्मात् स इन्द्रः प्रायश्चित्तिः प्रायश्चित्तयोग्यः आस । प्रायः विनाशः तस्य चित्तिः संधानं यस्येति तथाविधो बभूव । यदि मुखात्स्रुतः स्यात्, तर्हि प्रायश्चित्तियोग्य एव न स्यात् । उत्तरत्र सोमरसव्यृद्धस्येन्द्रस्याश्विभ्यां समर्धनं वक्ष्यते । शब्रासा.

**चत्वारो वै वर्णा ब्राह्मणो राजन्यो वैश्यः शूद्रः । न हैतेषामेकश्चन भवति यः सोमं वमति । स यद्धैतेषामेकश्चित्स्यात् स्याद्धैव प्रायश्चित्तिः ॥**

मुखवमनपक्षे प्रायश्चित्तिर्नास्तीति दर्शयति– चत्वारो वा इति । लोके हि वर्णचतुष्टयस्यैव प्रायश्चित्तविधानं, नान्यस्य । अतः सोमवामी एषां चतुर्णां मध्ये एकोऽपि न भवति । यथा पुल्कसादेः केवलपापशरीराणि स्युः, प्रायश्चित्तिविधिर्नास्ति, एवं सोमवामिनोऽपीति । यद्यपि तस्य 'यः सोमवामी स्यात्तस्मा एतꣳ सोमेन्द्रꣳ श्यामाकं चरुं निर्वपेत् ।' (तैसं. २।३।२।६–७) इत्यादिना तैत्तिरीये प्रायश्चित्तिरुक्ता, तथापि अत्यन्तसंनिकर्षं वक्तुं वर्णचतुष्टयानर्थक्यमुक्तम् । तस्मादिन्द्रस्य मुखवमनाभावात् प्रायश्चित्तियोग्यत्वं जातमित्यर्थः । शब्रासा.

**स यन्नस्तोऽद्रवत्ततः सिꣳहः समभवत् । अथ यत्कर्णाभ्यामद्रवत्ततो वृकः समभवत् ।**

**अथ यद्वाचः प्राणादद्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः समभवन् । अथ यदुत्तरात्प्राणादद्रवत्सा परिस्रुत् । अथ त्रिर्निरष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत् । स सर्वेणैव व्यार्ध्यत । सर्वꣳ हि सोमः ॥**

इन्द्रियेभ्यः सोमद्रवणकाले नासिकादिस्रुतस्य सिंहाद्यात्मनोत्पत्तिं दर्शयति— स यन्नस्त इति । नस्तः नासिकायाः स्रुतः सोमः सिंहः अभवत् । अवाचः अधोमुखादपानद्वारात् निर्गतः सोमः शार्दूलमुख्याः श्वापदाः क्रूरकर्माणः पशवः समभवन् । उत्तरात् प्राणात् गुह्यच्छिद्रात् स्रुतः परिस्रुत् सुरा अभूत् । 'याऽवाची सा सुरा' (तैब्रा. १।८।५।२) इति हि तैत्तिरीयकम् । स चेन्द्रो वक्त्रेण त्रिवारं निष्ठीवनं कृतवान् । तेन द्रव्यत्रयमभूत् कुवलकर्कन्धुबदराणि सूक्ष्मतरस्थूलमध्यपरिमाणानि बदरजातिफलानि । एवं सर्वेन्द्रियेभ्यः सोमस्रवणात् इन्द्रो व्यार्ध्यत ऋद्धिविहीनो बभूव ।

शब्रासा.

**स सोमातिपूतो मङ्कुरिव चचार । तमेतयाऽश्विनावभिषज्यताम् । तꣳ सर्वेणैव समार्धयताम् । सर्वꣳ हि सोमः । स वसीयानेवेष्ट्वाऽभवत् ॥**

स सोमातिपूत इति । सोमातिपूतः अपानद्वारादिभ्यः स्रुतसोमः स इन्द्रः मङ्कुः, मकि प्रतिबन्धे, विकलगतिः पङ्गुः इव चचार । तं तथाविधमिन्द्रं एतया सौत्रामण्या अश्विनौ अभिषज्यतां समाहितमकुरुताम् । 'भिषज् चिकित्सायाम्' इति धातुः । तदेवाह— सर्वेणेति । सर्वेण सोमेन एनं समृद्धं कृतवन्तौ । तत इन्द्रः एतया इष्ट्वा वसीयान् वसुमत्तरः अभवत् । शब्रासा.

**ते देवा अब्रुवन्— सुत्रातं बतैनमत्रासातामिति । तस्मात् सौत्रामणी नाम ॥**

सौत्रामणीशब्दं निर्वक्ति— ते देवा इति । एवमश्विभ्यां सोमरसेन समर्धितमिन्द्रं प्रति देवा अब्रुवन्— एनं सोमातिपूतं सुत्रातं सुष्ठु रक्षितवन्तावश्विनाविति । बत इति हर्षे । अतः सुत्राणसंबन्धात् सौत्रामणी नामेष्टिः ।

शब्रासा.

**स हैतयाऽपि सोमातिपूतं भिषज्येत् । सर्वेण वा एष व्यृध्यते यꣳ सोमोऽतिपवते । सर्वꣳ हि सोमः । तꣳ सर्वेणैव समर्धयति । सर्वꣳ हि सोमः । स वसीयानेवेष्ट्वा भवति । तस्माद् हैतयाऽपि सोमातिपूतं भिषज्येत् ॥**

प्रसङ्गादन्यस्य सोमातिपूतस्यापीमामेवेष्टिं दर्शयति— स हैतयाऽपीति । इयं राजसूयाद्बहिरपि प्रयोक्तव्येत्यर्थः ।

शब्रासा.

**तद्यदेतया राजसूययाजी यजते । सर्वान् वा एष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीः, अपि दर्विहोमान् यो राजसूयेन यजते । देवसृष्टो वा एषेष्टिर्यत्सौत्रामणी । अनया मेऽपीष्टमसत् । अनयाऽपि सूया इति । तस्माद्वा एतया राजसूययाजी यजते ॥**

तद्यदेतया राजसूयेत्यादेरयमर्थः— राजसूययाजिना सर्वेऽपि इष्टिपशुसोमदर्विहोमा इष्टाः । अत एषाऽपि इष्टित्वात् तेन कार्येति पूर्वमुक्तम् । शब्रासा.

**अथ यदाश्विनो भवति । अश्विनौ वा एनमभिषज्यताम् । तथो एवैनमेष एतदश्विभ्यामेव भिषज्यति । तस्मादाश्विनो भवति ॥**

आश्विनसारस्वतैन्द्रपशुविधिं पृथक् पृथगनूद्य प्रशंसति —अथ यदाश्विनो भवतीति । शब्रासा.

**अथ यत्सारस्वतो भवति । वाग्वै सरस्वती । वाचा वा एनमश्विनावभिषज्यताम् । तथो एवैनमेष एतद्वाचैव भिषज्यति । तस्मात्सारस्वतो भवति ॥**

वाचेति । वाचा वाग्रूपया याज्यापुरोनुवाक्यया जुहावमन्त्रवत्या सरस्वत्येत्यर्थः । शब्रासा.

**अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता । सा यैव यज्ञस्य देवता । तयैवैनमेतद्भिषज्यति । तस्मादैन्द्रो भवति ॥**

इन्द्रो वा इति । यज्ञस्य सर्वस्य देवता । शब्रासा.

**एतेषु पशुषु सिꣳहलोमानि वृकलोमानि शार्दूललोमानीत्यावपति । एतद्वै ततः समभव-**

**च्यदेनꣳ सोमोऽत्यपवत । तेनैवैनमेतत्समर्धयति, कृत्स्नं करोति । तस्मादेतान्यावपति ॥**

अथ परिस्रुत्संधानं वक्ष्यते । तत्र सिंहवृकव्याघ्रलोम-संसर्जनं सिद्धान्तयितुं विधित्सुः शाखान्तरीयं पक्षं सोपपत्तिकमनुवदति– एतेषु पशुष्विति । अत एव सूत्रकारो द्वेधा सूत्रयामास परिस्रुतं प्रस्तुत्य– '० संसृजति । सिंहव्याघ्रलोमानि चाऽऽवपति । पशुषु वा ।' (काश्रौ. १५।९।२५–२७) इति । एतेषु उक्तेषु त्रिषु पशुषु सिंहादीनां त्रीणि लोमानि इत्यावपति । इतिशब्द एतच्छब्दार्थः । इति एतानि संसृजेत् । तस्मात् इन्द्रस्येन्द्रियद्वारेभ्योऽपसृतात् सोमादेते त्रयः सिंहाद्या उत्पन्नाः । तस्मात् तल्लोमावापेन इन्द्रमेव कृत्स्नं समृद्धं कृतवान् भवतीति । शब्रासा.

**तदु तथा न कुर्यात् । उल्कया ह स नखिन्या पशूननुषुवति य एतानि पशुष्वावपति । तस्मादु परिस्रुत्येवाऽऽवपेत् । तथा ह्योल्कया नखिन्या पशून्नानुषुवति । तथो एवैनꣳ समर्धयति, कृत्स्नं करोति । तस्मादु परिस्रुत्येवाऽऽवपेत् ॥**

तं पक्षं निराकृत्य स्वमतं विधत्ते– तदु तथेति । यदि पशुषु लोमावापं कुर्यात् तर्हि नखिन्या कण्टकवत्या उल्कया एव पशून् प्रेरितवान् भवति । तस्मात् तथा न कुर्यात्, किंतु परिस्रुत्येव संसृजेत् । तत्रावापेन पशूनामुल्कया प्रेरणं कृतं न भवति । इन्द्रस्य तु कृत्स्नकरणमत्रापि कृतं भवेत् । शब्रासा.

**अथ पूर्वेद्युः परिस्रुतꣳ संदधाति– 'अश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व' इति । सा यदा परिस्रुद्भवत्यथैनया प्रचरति ॥**

अथ परिस्रुत्संधानं समन्त्रकं विधत्ते- अथ पूर्वेद्युरिति । संदधाति संपादयेदित्यर्थः । तत्प्रकारः कात्यायनेन स्पष्टमीरितः– 'व्रीहीन् विरूढाविरूढान् क्षौम उपनह्य क्रीणाति क्लीबात् सीसेन । पक्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति संसृजति ।' (काश्रौ. १५।९।२४–२५) इति । हे परिस्रुत्, अश्विभ्यां पच्यस्व पक्वा भव । एवमुत्तरत्रापि । शब्रासा.

**द्वावग्नी उद्धरन्ति । उत्तरवेदावेवोत्तरम् । उद्धते दक्षिणम् । नेत्सोमाहुतीश्च सुराहुतीश्च सह जुहवामेति । तस्माद्द्वावग्नी उद्धरन्ति । उत्तरवेदावेवोत्तरम् । उद्धते दक्षिणम् । अथ यदा वपाभिः प्रचरन्ति । अथैतया परिस्रुता प्रचरति ॥**

परिस्रुत्प्रचरणे कंचिद्विशेषमाह– द्वावग्नी इति । उत्तरवेद्यामेकमग्निं, तद्दक्षिणभागे उद्धते प्रदेशे एकमग्निमुद्धरेत् । अग्निद्वयोद्धारे कारणमाह– नेदिति । एकस्मिन्नेवाग्नौ सोमसुराहुतयः सह होतुमयोग्याः, अतस्तत्संसर्गहोमनिवृत्त्यर्थमग्निद्वयं कार्यमित्यर्थः । तस्याः प्रचरणकालमाह– यदा वपाभिरिति । पशुवपाभिर्यदा प्रचरेयुः तदैतयेत्यर्थः । शब्रासा.

**तां दर्भैः पावयति– पूताऽसदिति । 'वायुः पूतः पवित्रेण प्रत्यङ्सोमो अतिस्रुतः । इन्द्रस्य युज्यः सखा ॥' इति । तत् कुवलसक्तून्, कर्कन्धुसक्तून्, बदरसक्तूनित्यावपति । एतद्वै ततः समभवत् । यत्त्रिर्निरष्ठीवत् । तेनैवैनमेतत्समर्धयति । कृत्स्नं करोति । तस्मादेतानावपति ॥**

विधत्ते– तां दर्भैरिति । सा परिस्रुत् पूता असत् भवेत् इति तां दर्भैः पावयेत् । मन्त्रस्यायमर्थः– पवित्रेण पूतः सोमः सोमात्मना निष्पादितः । तथा च तैत्तिरीयकम्– 'स्वाद्वीं त्वा स्वादुनेत्याह । सोममेवैनां करोति ।' (तैब्रा. १।८।५।४) इति । वायुः पात्राणि गच्छन्, वायुवच्छीघ्रगामी वा भूत्वा प्रत्यङ् अधोवर्तिपात्राभिमुखः सन् अतिस्रुतः अतिक्रम्योद्गतः इन्द्रस्य युज्यः योग्यः सखा समानख्यानः इति । विधत्ते– तत्कुवलेति । तस्यां परिस्रुति कुवलकर्कन्धुबदरसक्तुत्रयं निवपेदित्यर्थः । अत्र सूत्रम्– 'वपामार्जनान्ते कुशैः परिस्रुतं पुनाति वायुः पूत इति । कुवलकर्कन्धुबदरचूर्णानि चाऽऽवपति ।' (काश्रौ. १५।१०।१०–११) इति । शब्रासा.

**अथ ग्रहान् गृह्णात्येकं वा, त्रीन् वा । एकस्त्वेव ग्रहीतव्यः । एका हि पुरोरुग्भवति, एकाऽनुवाक्या, एका याज्या । तस्मादेक एव ग्रहीतव्यः ॥**

ग्रहग्रहणं विधत्ते– अथ ग्रहानिति । एको वा ग्रहः त्रयो वा ग्रहीतव्याः । तत्रैकं सिद्धान्तयति– एकस्त्वेवेति । एकस्यैव ग्रहणमुपपादयति– एका हीति । पुरोरुक्पुरोनुवाक्यायाज्यानामेकत्वादेक एव ग्रहीतव्यः ।

शब्रासा.

**स गृह्णाति– 'कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति । उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे ॥' इति । यद्यु त्रीन् गृह्णीयादेतयैव गृह्णीयात् । उपयामैस्तु तर्हि नाना गृह्णीयात् । अथाह– अश्विभ्याꣳसरस्वत्या इन्द्राय सुत्राम्णेऽनुब्रूहीति ॥**

ग्रहणमनूद्य मन्त्रं विधत्ते– स गृह्णाति कुविदङ्गेति । अङ्गशब्दः संबोधनवाची । हे सोम, कुविच्छब्दो बह्वर्थवाची । चिच्छब्दः समुच्चये । यथा लोके यवमन्तः यवादिधान्योपेताः कृषिकाः कुवित् यवबहुलं यवमन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि अनुपूर्वं तत्परिपाकानुक्रमेण इदं पक्वमिदमपक्वमिति वियूय विशेषेण पृथक्कृत्य दान्ति, 'दाप् लवने' लुनन्ति । तथा एषां यज्वनां भोजनानि अन्नानि इह च कृणुहि कुरुत ये यजमानाः बर्हिषः यागस्य नमउक्तिं, 'नमः' (निघण्टुः २।७।२२) इत्यन्ननाम नमस्कारो वा । तस्योक्तिं यजन्ति कुर्वन्तीत्यर्थः । 'उपयामगृहीतः' इत्यादिर्मन्त्रशेषः स्पष्टः । ग्रहत्रयग्रहणपक्षेऽपीममेव मन्त्रं 'उपयाम' इत्यत्र विशेषं च दर्शयति– यद्यु त्रीनिति । नाना पृथक् पृथक् उपयामेन तिसृभ्यो देवताभ्यो गृह्णीयात् । अनुवचनप्रैषे विशेषं दर्शयति– अथाहेति ।

शब्रासा.

**सोऽन्वाह– 'युवꣳसुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् ॥' इति । आश्राव्याह– अश्विनौ सरस्वतीमिन्द्रꣳसुत्रामाणं यजेति ॥**

होतारमनूच्य अश्विसरस्वतीन्द्रप्रतिपादकं मन्त्रमाह– सोऽन्वाह युवमिति । हे अश्विनौ, युवं युवां सुरामं सुरमणीयं आसुरे नमुचौ स्थितं सोमं सचा सहभूतौ एकीभूय विपिपाना विविधं पिबन्तौ हे शुभस्पती शुभस्य पालकौ स्वामिनौ, कर्मसु निमित्तभूतेषु कर्मकरणार्थं इन्द्रं आवतं रक्षतमिति । यजेति प्रैषे देवताशंसनं विधत्ते– आश्राव्याहेति । देवतात्रयप्रतिपादिकां वा याज्यां पठतीति ।

शब्रासा.

**स यजति– 'पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णक् ॥' इति । द्विर्होता वषट्करोति । द्विरध्वर्युर्जुहोति । आहरति भक्षम् । यद्यु त्रीन् गृह्णीयादेतस्यैवानुहोममितरौ हूयेते ॥**

**अथ कुम्भः शतवितृण्णो वा भवति, नववितृण्णो वा । स यदि शतवितृण्णः । शतायुर्वा अयं पुरुषः शततेजाः शतवीर्यः । तस्माच्छतवितृण्णः । यद्यु नववितृण्णः । नवेमे पुरुषे प्राणाः । तस्मान्नववितृण्णः ॥**

स यजति पुत्रमिवेति । पितरौ पुत्रमिव यथा पालयतः तथा उभौ अश्विनौ हे इन्द्र, त्वा त्वां आवथुः । अव रक्षणे । पुरुषव्यत्ययः, रक्षितवन्तौ । काव्यैः कविकर्मभिः स्तोत्रैः दंसनाभिः । 'दंसः' (निघण्टुः २।१।३) इति कर्मनाम, कर्मभिश्च इन्द्रं पालितवन्तौ । कथमवगम्यते ? यत् यस्मात् सुरामं सुरमणीयं सोमं व्यपिबः विशेषेण पीतवानसि । शचीभिः कर्मभिः हे मघवन् इन्द्र, त्वां सोमातिपूतं सरस्वती अभिष्णक् भेषजसंधानं कृतवती । 'भिषज्' इति कण्ड्वादिषु पठ्यते ।

विधेयं विधत्ते– द्विर्होतेति । होत्रा द्विवारं वषट्कारः कर्तव्यः । द्विरध्वर्युः अध्वर्युणाऽपि द्विवारं हवनं कार्यम् । आहरति भक्षं हवनानन्तरं भक्षार्थमाहरेयुः । ग्रहत्रयपक्षे हवने कंचिद्विशेषमाह– यद्यु त्रीनिति । एतस्य होममनु इतरौ द्वौ परिस्रुद्धोमौ होतव्यौ । एष परिस्रुद्धोमो दक्षिणेऽग्नाविति प्रागुक्तः ( ? प्रागुक्त्वा ) । कात्यायनः– '० परिस्रुच्छेषमासिच्य रुक्मवच्छिद्रं कुम्भं शिक्ये कृत्वोपरि दक्षिणस्य धारयन् स्रवन्तमुपतिष्ठते तृचैः सोमवृतां बर्हिषदामग्निष्वात्तानाम् । ' (काश्रौ. १५।१०।१६)

इति । हुतायाः सुरायाः शेषं रुक्मवति शतच्छिद्रे नवच्छिद्रे वा कुम्भे आसिच्य तं कुम्भं दक्षिणस्याऽऽहवनीयस्योपरि शिक्ये कृत्वा स्रवन्तं सोमवदादिपितॄणां त्रिभिस्तृचैरुपतिष्ठेतेति तदर्थः । तदिदं विधत्ते— अथ कुम्भ इति । रुक्मब्राह्मणे ( राका. पृ. २८६ ) व्याख्यातम् ।

शब्रासा.

**तꣳ शिक्योदुतमुपर्युपर्याहवनीयं धारयन्ति । सा या परिशिष्टा परिस्रुद्भवति तामासिञ्चति । तां विक्षरन्तीमुपतिष्ठते— पितॄणाꣳ सोमवतां तिसृभिर्ऋग्भिः, पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः, पितॄणामग्निष्वात्तानां तिसृभिर्ऋग्भिः । तद्यदेवमुपतिष्ठते । यत्र वै सोम इन्द्रमत्यपवत । स यत्पितॄनगच्छत् । त्रया वै पितरस्तेनैवैनमेतत्समर्धयति । कृत्स्नं करोति । तस्मादेवमुपतिष्ठते ॥**

तं शिक्योदुतमिति । आहवनीयस्योपरि उद्धते प्रदेशे परिस्रुत्प्रचारार्थं दक्षिणतः स्थापितस्याग्नेरुपरीत्यर्थः । तथा सूत्रमुदाहृतम् ( काश्रौ. १५।१०।१६ ) । विक्षरन्तीं कुम्भात् स्रवन्तीं परिस्रुतमुपतिष्ठते । उपस्थाने मन्त्रान् दर्शयति— पितॄणामिति । सोमवतां सोमदेवतायुतानां पितॄणां याज्यापुरोनुवाक्यारूपाः ' उदीरतामवर उत्परासः ' इत्याद्यास्तिस्र ऋचः ( शुसं. १९।४९–५१ ), बर्हिषदां बर्हिषि सीदतां एतद्गुणकानां पितॄणां ' बर्हिषदः पितर ऊत्यर्वाग् ' इत्याद्यास्तिस्र ऋचः ( शुसं. १९।५५–५७), अग्निष्वात्तानां पितॄणां ' आ यन्तु नः पितरः सोम्यासः ' इत्याद्यास्तिस्र ऋचः ( शुसं. १९।५८–६० ) इति नवर्चः संहितायां क्रमेणाऽऽम्नाताः । ताभिरुपस्थानं कर्तव्यमित्यर्थः । पित्र्यमन्त्रैरुपस्थानं प्रशंसति— यत्र वै सोम इति । पूर्वमिन्द्रेण पीतः सोमः अतिपूतः सन् पितॄनेव प्राप्नोत् । अतस्तन्मन्त्रोपस्थानेनेन्द्रमेव संपूर्णं कृतवान् भवतीति ।

शब्रासा.

**अथैतानि हवीꣳषि निर्वपति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं, वारुणं यवमयं चरुं, ऐन्द्रमेकादशकपालं पुरोडाशम् ॥**

अथ पशुपुरोडाशार्थं सावित्रवारुणैन्द्राख्यं हविस्त्रयं विधत्ते— अथैतानि हवींषीति ।

शब्रासा.

**स यत्सावित्रो भवति । सविता वै देवानां प्रसविता । सवितृप्रसूत एवैतद्भिषज्यति । तस्मात्सावित्रो भवति ॥**

**अथ यद्वारुणो भवति । वरुणो वा आर्पयिता । तद्य एवाऽऽर्पयिता तेनैवैतद्भिषज्यति । तस्माद्वारुणो भवति ॥**

**अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता । सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति । तस्मादैन्द्रो भवति ॥**

पुरोडाशदेवताः प्रशंसति— अथ ( १ स ) यत्सावित्र इति ।

शब्रासा.

**स यदि हैतयाऽपि सोमातिपूतं भिषज्येत् । इष्टा अनुयाजा भवन्ति । अव्यूढे स्रुचौ । अथैतैर्हविर्भिः प्रचरति । पश्चाद्वै सोमोऽतिपवते । पश्चादेवैनमेतेन मेधेनापि दधाति । आश्विनमु तर्हि द्विकपालं पुरोडाशं निर्वपेत् । अथ यदा वपाभिः प्रचरति । अथैतेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति ॥**

कात्यायनः— ' सोमातिपूतस्याप्येषा । अनुयाजान्ते पशुपुरोडाशार्थैश्चरत्याश्विनेन प्रागवदानेभ्यः । हविर्भिर्वा । आश्विनाभावस्तु । ' ( काश्रौ. १५।१०।१९–२२ ) इति । अयमर्थः— एषा सौत्रामणी सोमातिपूतस्यापि भैषज्यार्थं कर्तव्येति । राजसूयाद्बहिः प्रयोगः । तत्र पशुपुरोडाशार्थं विहितान्येवैतानि सावित्रादिहवींषि अनुयाजान्ते यष्टव्यानि । तदा छिद्रापिधानार्थं पशुवपाप्रचरणानन्तरमवदानात् पुरा आश्विनेन पुरोडाशेन यागः कर्तव्य इत्येकः शाखान्तरीयः पक्षः । पशुवपाप्रचरणानन्तरमेवैतैः सावित्रादिभिर्हविर्भिः यागः करणीयः । तदा यज्ञपतिच्छिद्रपिधानार्थमेतेषामिष्टत्वादाश्विनहविर्निर्वापो न कर्तव्य इत्यपरः पक्षः ।

तत्र पूर्वपक्षमाह— स यदि हैतयाऽपि सोमातिपूतमिति । यदि एतया सौत्रामण्या सोमातिपूतं भिषज्येत् समादध्यात् तर्हि अनुयाजयागान्ते स्रुग्व्यूहनात् पुरस्तात् एतैः सावित्रादिभिः हविर्भिः प्रचरणं कर्तव्यम् । पश्चाद्वा इति । सोमः पश्चाद्भागे अतिपूतः । अत एतस्मिन् काले

यज्ञस्य पश्चाद्भागे एतद्धविःप्रचरणेन तं सोमातिपूतं पुरुषमपिहितवान् भवतीति । तत्पक्षे हविरन्तरं विधत्ते— आश्विनमु तर्हीति । तस्य प्रचारकालमाह— अथ यदेति । शब्रासा.

**तदु तथा न कुर्यात् । ह्वलति वा एष यो यज्ञपथादेति । एति वा एष यज्ञपथाद्य एवं करोति । तस्माद्यत्रैवैतेषां पशूनां वपाभिः प्रचरन्ति तदेवैतैर्हविर्भिः प्रचरेयुः । नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्वपेत् ॥**

तं पक्षं निराकृत्य स्वमतं दर्शयति— तदु तथेति । स्पष्टोऽर्थः । शब्रासा.

**तस्य नपुंसको गौर्दक्षिणा । न वा एष स्त्री, न पुमान् यन्नपुंसको गौः । यदह पुमान्, तेन न स्त्री । यदु स्त्री, तेनो न पुमान् । तस्मान्नपुंसको गौर्दक्षिणा । अश्वा वा रथवाही । सा हि न स्त्री, न पुमान् यदश्वा रथवाही । यदह रथं वहति, तेन न स्त्री । यदु स्त्री, तेनो न पुमान् । तस्मादश्वा रथवाही दक्षिणा ॥**

तस्य दक्षिणां विधत्ते— तस्य नपुंसक इति । नपुंसकस्य स्त्रीपुंसेतरत्वप्रतिपादकं वाक्यं स्यात् । विकल्पेन दक्षिणान्तरं विधत्ते— अश्वा वेति । रथं वहतीति रथवाही । सा वडवा वा दक्षिणेत्यर्थः । तस्या अपि नपुंसकत्वमुपपादयति— यदह रथं वहतीति । रथवहनात् स्त्रीत्वाभावः । स्त्रीव्यञ्जनसद्भावात् पुंस्त्वाभावः । सौत्रामण्यपि न इष्टिः, न पशुबन्ध इत्यभिप्रायः । तस्मात् अश्वा रथवाही दक्षिणेति निगमनवाक्यम् । शब्रासा.

त्रैधातव्युदवसानीयेष्टिः

**[1]ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्वपति । तद्यदेतया यजते । वृत्रे ह वा इदमग्रे सर्वमास यदृचो यद्यजूंषि यत्सामानि । तस्मा इन्द्रो वज्रं प्राजिहीर्षत् ॥**

**स ह विष्णुमुवाच— वृत्राय वै वज्रं प्रहरिष्यामि, अनु मा तिष्ठस्वेति । तथेति ह विष्णुरुवाच— अनु त्वा स्थास्ये, प्रहरेति । तस्मा इन्द्रो वज्रमुद्ययाम । स उद्यताद्वज्राद्वृत्रो बिभयांचकार ॥**

राजसूयान्ते कर्तव्यायास्त्रैधातव्युदवसानीयायाः देवतासंबद्धं हविर्विधत्ते— ऐन्द्रावैष्णवमिति । द्वादशसु कपालेषु संस्कृतं इन्द्राविष्णुदेवताकं पुरोडाशं निर्वपेत् । एतदिष्टिविधायककारणानुवादपूर्वकं देवतासंबन्धस्तावकमितिहासमवतारयति— तद्यदेतयेत्यादिना । यत्कारणादेतयेष्ट्या यजते तत्कारणमुच्यत इति वाक्यशेषः । वृत्रे ह वा इति । पुरा किल वृत्रासुरे इदं सर्वमभूत् । तदेव विशदयति— यदृच इति । ऋग्यजुःसामवेदाधिष्ठात्र्यो देवताः वृत्रे विग्रहवत्य एव बभूवुरित्यर्थः । तस्मै वृत्राय इन्द्रः वज्रं प्रहर्तुमैच्छत् । प्रजिहीर्षुः सः इन्द्रः विष्णुं प्रत्यवोचत् । किमुवाचेत्याह — वृत्राय वा इति । वृत्राय, वृत्रहननार्थमित्यर्थः । वज्रप्रहारं करिष्याम्यहम् । तत्र मा मां त्वं अनुतिष्ठस्व मत्समीपे आत्मानं प्रदर्शयेत्यर्थः । 'अनुर्लक्षणे' (पा० १।४।८४) कर्मप्रवचनीयः । तद्युक्ते द्वितीया । तिष्ठतेः 'प्रकाशनस्थेयाख्ययोश्च' (पा० १।३।२३) इत्यात्मनेपदम् । तथेत्यङ्गीकृत्याब्रवीत् विष्णुः । किमित्यत आह— अनु त्वेति । त्वा त्वां अहं अनुस्थास्ये, त्वत्समीपे आत्मानं प्रदर्शयिष्यामीत्यर्थः । त्वं प्रहर निर्भयः प्रहारं कुर्वित्यभिप्रायः । तथा सति इन्द्रस्य वीर्यं वर्धते वृत्रस्यापचीयते इति । तस्मै वृत्राय वज्रं उद्ययाम उत्क्षिप्तवान् इन्द्रः । तस्मादुद्यतात् वज्रात् वृत्रः असुरः बिभयांचकार । शब्रासा.

**स होवाच— अस्ति वा इदं वीर्यं, तन्नु ते प्रयच्छानि, मा नु मे प्रहार्षीरिति । तस्मै यजूंषि प्रायच्छत् । तस्मै द्वितीयमुद्ययाम ॥**

स होवाचेति । सः उद्यतवज्राद्भीतो वृत्रोऽवोचत् । किमित्यत आह— अस्ति वा इति । इदं वीर्यं ऋगादिलक्षणं अस्ति खलु । वीरयति नानाप्रकारकार्यारम्भाय ईरयति तद् वीर्यम् । विव्रियतेऽनेनेति वा वीर्यम् । तत् नु तदेव वीर्यं ते इन्द्राय प्रयच्छानि, अहं वृत्रो ददानीत्यर्थः । तेन च मे वृत्राय त्वं मा प्रहार्षीः प्रहारं मा कार्षीः इति संवदन् वृत्रः तस्मै इन्द्राय यजूंषि यजुर्वेदं

(१) शब्रा. ५।५।५।१-१९.

प्रादात् । इत्थमेकेन वज्रोद्यमनेन यजुर्विद्यामादाय ऋक्सामविद्ये अपि आदित्सोरिन्द्रस्यापरं द्विर्वज्रोद्यमनमाह– तस्मै द्वितीयमिति । तमेव वज्रं पुनरप्युद्यतवानित्यर्थः । शब्रासा.

**स होवाच– अस्ति वा इदं वीर्यं, तन्नु ते प्रयच्छानि, मा नु मे प्रहार्षीरिति । तस्मा ऋचः प्रायच्छत् । तस्मै तृतीयमुद्ययाम ॥**

स होवाचेत्यादि व्याख्यातचरम् । ऋचः ऋग्वेदमित्यर्थः । तस्मै तृतीयमित्यादि स्पष्टम् । शब्रासा.

**स होवाच– अस्ति वा इदं वीर्यं, तन्नु ते प्रयच्छानि, मा नु मे प्रहार्षीरिति । तस्मै सामानि प्रायच्छत् । तस्मादप्येतर्ह्येवमेवैतैर्वेदैर्यज्ञं तन्वते । यजुर्भिरेवाग्रे, अथर्ग्भिः, अथ सामभिः । एवꣳ ह्यस्मा एतत्प्रायच्छत् ॥**

स होवाचेति । एवं वेदप्रदानानुकरणेन यागविधानं सिद्धमिति दर्शयति– तस्मादिति । एवं कथमित्यत आह– यजुर्भिरेवाग्र इति । शब्रासा.

**तस्य यो योनिराशय आस तमनुपरामृश्य संलुप्याच्छिनत् । सैषेष्टिरभवत् । तद्यदेतस्मिन्नाशये त्रिधातुरिवैषा विद्याऽऽशेत, तस्मात्त्रैधातवी नाम ॥**

इष्टेर्नामनिर्वचनं प्रतिपादयति– तस्य य इति । तस्य यजुर्वेदादेर्वीर्यस्य यः योनिः स्थानं आशयः हृदयप्रदेशरूपं बभूव । आशेतेऽस्मिन्नित्याशयः । तं योनिमाशयं अनुपरामृश्य हृदयप्रदेशे किं धारकमङ्गमिति विचार्य संलुप्य हस्तेनाऽऽवेष्ट्य अच्छिनत् छिन्नवान् , इन्द्र इति शेषः । सैषेष्टिः त्रैधातवी जाता । तस्याधिदैविकस्य भावस्य इदमाधियज्ञिकं रूपं प्रवृत्तमित्यर्थः । तद्यदेतस्मिन्निति । यस्मादेतस्मिन्नाशये हृदयप्रदेशे त्रिधातुः त्र्यवयव इवैषा त्रयी विद्या आशेत अवस्थिता, तस्मात् स आशयस्त्रिधातुः । त्रिधातोरियमिति विद्यात्रयात्मिका इष्टिः त्रैधातवी नाम । शब्रासा.

**अथ यदैन्द्रावैष्णवꣳ हविर्भवति । इन्द्रो हि वज्रमुदयच्छत् , विष्णुरन्वतिष्ठत ॥**

अथ यदिति । उभयोरिन्द्राविष्णवोर्व्यापृतत्वात् उभयदेवत्या सा भवेदित्यभिप्रायः । शब्रासा.

**अथ यद्द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य । संवत्सरसंमितैषेष्टिः । तस्माद्द्वादशकपालो भवति ॥**

अथ यद्द्वादशकपाल इति । एषा त्रैधातवीष्टिः संवत्सरव्यापिनी । शब्रासा.

**तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषाꣳ रूपम् । अथ यवमयं तदृचाꣳ रूपम् । अथ व्रीहिमयं तत्साम्नाꣳ रूपम् । तदेतत्त्रय्यै विद्यायै रूपं क्रियते । सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥**

त्रयीविद्यारूपतां संपादयितुं हविषो व्रीहियवमयत्वं विधत्ते– तमुभयेषामिति । तं व्रीह्यादिपिण्डं उभयेषामिति ब्रुवन् अन्यत्र विकल्पं दर्शयति, अत एव कात्यायनः– 'व्रीहीन् यवान्वा हविषि' ( काश्रौ. १।९।१ ) इति । व्रीहिमयमेवाग्रे इति व्यवस्थावचनात् ग्रहणवदेवासंकीर्णानामवहननं पेषणं चेति द्रष्टव्यम् । अत एव सूत्रम् 'तृतीयं यवानां मध्ये' ( काश्रौ. १५।७।२९ ) इति । मध्ये तृतीयं भागं यवानां गृह्णीयात् । भागद्वयं तु व्रीहीणामेव । न केवलं यवानां तृतीयभागस्य मध्ये ग्रहणं किंतु अधिश्रयणमपि तथैवेत्याह– व्रीहिमयमेवाग्र इति ।

इत्थं त्रैधातव्यास्त्रयीरूपत्वं प्रतिपाद्य राजसूययज्वनो विधेयतामाह– सैषा राजसूययाजिन इति । उत्तरेषु विनियोगेषु राजसूयेनोदवसानीयाया अग्रहणमाशङ्क्य राजसूयान्तर्भावमापादयति आग्रयणादिवत् । ततश्च सैषा राजसूययाजिन उदवसानीयेष्टिर्भवतीत्येतावदेवात्र विधीयते । उदवसानीयेति । एतत्तु क्रमादेव प्राप्तमनूद्यते । उत्तमं कर्मावस्यति विमुञ्चत्यनयेति उदवसानीया । यौगिकोऽयं शब्दः । शब्रासा.

**सर्वान्वा एष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीः, अपि दर्विहोमान् यो राजसूयेन यजते । तस्य यातयामेव यज्ञो भवति । सोऽस्मात्पराङिव भवति । एतावान्वै सर्वो यज्ञो यावानेष त्रयो**

चेदः। तस्यैतद्रूपं क्रियते। एष योनिराशयः। तदेतेन त्रयेण वेदेन पुनर्यज्ञमारभते। तथाऽस्यायातयामा यज्ञो भवति। तथो अस्मान्न पराङ् भवति॥

यज्ञस्यायातयामत्वसंपादनाय त्रैधातवीष्टिः कर्तव्येत्याह – सर्वान् वा इत्यादिना। इष्टिपशुसोमदर्विहोमात्मकत्वात् राजसूयस्य तदनुष्ठानेन यज्ञक्रत्वित्यादयः सर्वेऽनुष्ठिता भवन्तीति। तस्य यजमानस्य अपेक्षितकर्मणः कृतत्वादवशिष्टः यज्ञो यातयामा गतसार इव भवति। स यज्ञः अस्मात् यजमानात् कृतावशिष्टत्वेन पराङ् पराचीन इव भवति। यातयामत्वपरिहारमुपपादयति– एतावानिति। एष त्रयः ऋग्यजुःसामात्मकत्र्यवयवो वेदः यत्परिमाणः सर्वो यज्ञः एतत्परिमाणः खलु। तस्य त्र्यवयवस्य वेदस्य एतत् स्वरूपं क्रियते य एष आशयो योनिः तत् तेन एतेन त्र्यवयवेन वेदेन पुनः यज्ञं आरब्धवान् भवति। तथा सति अस्य यज्ञः अगतसारः स्यात्, यजमानाच्च न पराचीनः स्यात्। शब्रासा.

सर्वान्वा एष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीः, अपि दर्विहोमान् यो राजसूयेन यजते। देवसृष्टो वा एषेष्टिर्यत्त्रैधातवी। अनया मेऽपीष्टमसत्, अनयाऽपि सूया इति। तस्माद्वा एषा राजसूययाजिन उद्वसानीयेष्टिर्भवति॥

सर्वान् वा इत्यादि। व्याख्यातचरम्। त्रैधातवी इष्टिरपि देवसृष्टत्वेन प्रशस्तत्वादत्रावरोद्धव्या। अतः अनया त्रैधातव्याऽपि मम इष्टमसत् यागः कृतो भवतु। अनयाऽपि इष्ट्या सूयै अभिषिक्तो भूयासं इत्यभिप्रायेण त्रैधातवी कार्येत्यर्थः। तस्माद्वा एषेति निगमनम्। शब्रासा.

अथो यः सहस्रं वा भूयो वा दद्यात्तस्य हाप्युदवसानीया स्यात्। रिरिचान इव वा एष भवति यः सहस्रं वा भूयो वा ददाति। एतद्वै सहस्रं वाचः प्रजातं यदेष त्रयो वेदः। तत्सहस्रेण रिरिचानं पुनराप्याययति। तस्मादु ह तस्याप्युदवसानीया स्यात्॥

एतस्या विनियोगान्तरमप्याह– अथो य इति। सहस्रं बहुतरं वा दक्षिणां दद्यात् तस्यापि तस्मिन्नपि कर्मणि एषाऽङ्गभूता भवेत्। सा च भवन्ती आगन्तुकत्वादन्ते एव भवतीत्युदवसानीयेति व्यपदिश्यते। रिरिचानः अतिरिक्तः। एतत् खलु सहस्रं बहु वाचः वागायतनान्मुखादुत्पन्नम्। योऽयं त्र्यवयवो वेदः तत् तेन व्रीह्यादिपिण्डात्मकेनाधियाज्ञिकेन त्रयेण वेदेन पुनराप्याययति आपूरयति। तस्मादिति निगमनम्। शब्रासा.

अथो ये दीर्घसत्रमासीरन् संवत्सरं वा भूयो वा तेषां हाप्युदवसानीया स्यात्। सर्वं वै तेषामाप्तं भवति, सर्वं जितं ये दीर्घसत्रमासते संवत्सरं वा भूयो वा। सर्वमेषा। तस्मादु ह तेषामप्युदवसानीया स्यात्॥

अथो ये दीर्घसत्रमित्यादि। प्रसन्नम्। संवत्सरं वा भूयो वेति दीर्घसत्रेण संबध्यते। सर्वमेषेति। वेदत्रयस्य पौरोडाशिकधातुत्रयीत्वेनेह कल्पनादित्यभिप्रायः। शब्रासा.

अथो हैनयाऽप्यभिचरेत्। एतया वै भद्रसेनमाजातशत्रवमारुणिरभिचचार। क्षिप्रं किलास्तृणुतेति ह स्माह याज्ञवल्क्यः। अपि ह वा एनयेन्द्रो वृत्रस्याऽऽस्थानमच्छिनत्। अपि ह वा एनयाऽऽस्थानं छिनत्ति य एनयाऽभिचरति। तस्मादु हैनयाऽप्यभिचरेत्॥

अथो हैनयेति। अजातशत्रोरपत्यं आजातशत्रवः तं भद्रसेननामानं राजन्यं अरुणस्यापत्यं आरुणिः ऋषिरुद्दालकः अभिचचार अभिचरितवान्। क्षिप्रं किलेति। क्षिप्रं किल शीघ्रमेव अस्तृणुत अभिचारेण तं हिंसितवानेवेत्यर्थः। एतस्मिन्नर्थे श्रुतिर्याज्ञवल्क्यं प्रमाणयति– इति ह स्माहेति। इन्द्रोऽप्येनयेष्ट्या वृत्रस्यास्थानं त्रयीविद्याशयमच्छिनत्। तस्मात् परस्य स्थाननाशार्थमेनया अभिचारः कर्तव्य इत्यर्थः। शब्रासा.

अथो हैनयाऽपि भिषज्येत्। यं न्वेवैकयर्चा भिषज्येदेकेन यजुषैकेन साम्ना तं न्वेवागदं

**कुर्यात्, किमु यं त्रयेण वेदेन। तस्माद्ध हैनयाऽपि भिषज्येत् ॥**

अथो हैनयाऽपि भिषज्येदिति। अनयेष्ट्या कथं परकृताभिचारपरिहार इत्याशङ्क्य तं कैमुतिकन्यायेन समर्थयते– यं न्वेवैकयर्चेति। एकैकेन यजुरादिमन्त्रेण नाम यदि भैषज्यं क्रियते तेन परकृतबाधा परिह्रियते, किमु किमुत वेदत्रयरूपयाऽनया त्रैधातव्याऽभिचारपरिहार इति। शब्रासा.

**तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा। तानि ब्रह्मणे ददाति। न वै ब्रह्मा प्रचरति, न स्तुते, न शꣳसति। अथ स यशः। न वै हिरण्येन किंचन कुर्वन्ति। अथ तद्यशः। तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति ॥**

कात्यायनेन राजसूयान्तःपातिनीमिष्टिं प्रस्तुत्य यत् दक्षिणादानमुक्तम्– 'तिस्रस्तिस्रो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनूर्होत्रे वासांस्यध्वर्यवे गामग्नीधे।' (काश्रौ. १५।७।३१) इति। तदिदमिदानीं विधत्ते– तस्यै त्रीणीति। शतमानलक्षणमुक्तं पुरस्तात् (राका. पृ. २९५)। न वै ब्रह्मेति। अस्यायमर्थः– ब्रह्मा हि न प्रचरति हवनादिकमध्वर्युवर्गवन्न करोति। न स्तुते उद्गाता इव न स्तोत्रं प्रयुङ्क्ते। न शंसति होतृवच्छस्त्रं न पठति। तस्मात् सः ब्रह्मा यशोरूपः। हिरण्येनापि किंचन न कुर्वन्ति हिरण्यं साधनं कृत्वा यदन्नादिकमुपभुञ्जते न तु हिरण्यमेव भुञ्जन्ति। अतो व्यवहारादिषु सुवर्णे दत्तेऽपि तस्य स्वरूपहानिर्नास्ति। अतस्तदपि यशोरूपम्। तस्मात् हिरण्यस्य तत्संप्रदानकत्वं युक्तमित्यर्थः। शब्रासा.

**तिस्रो धेनूर्होत्रे। भूमा वै तिस्रो धेनवः। भूमा होता। तस्मात्तिस्रो धेनूर्होत्रे ॥**

तिस्रो धेनूरिति। पयस्विनीः सवत्सा गाः होत्रे दद्यात्। उभयोः परस्परं योग्यतामाह– भूमा वै तिस्र इति। तिसृणां सवत्सानां भूयस्त्वं, होतुरपि नानामन्त्रपठनात्, अतस्तासां होतृसंप्रदानकत्वं युक्तम्। शब्रासा.

**त्रीणि वासाꣳस्यध्वर्यवे। तनुते वा अध्वर्युर्यज्ञम्। तन्वते वासाꣳसि। तस्मात्त्रीणि वासाꣳस्यध्वर्यवे। गामग्नीधे ॥**

त्रीणि वासांस्यध्वर्यव इति। दद्यादिति शेषः। वस्त्राणां सर्वशरीराच्छादकत्वात् वासस्त्वम्। अध्वर्योरपि यज्ञशरीरस्य विस्तारकत्वमस्ति, 'यज्ञस्य मात्रां वि मिमीत उ त्वः' (ऋसं. १०।७१।११) इति मन्त्रवर्णात्। तत्र 'त्व एकोऽध्वर्युः' (नि. १।८) इति यास्कवचनम्। यज्ञस्य मात्रां, शरीरमित्यर्थः। गोदानं विधत्ते– गामग्नीध इति। शब्रासा.

**ता वा एता द्वादश वा त्रयोदश वा दक्षिणा भवन्ति। द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः। संवत्सरसंमितैषेष्टिः। तस्माद्द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥**

एता दक्षिणाः संभूय संवत्सरात्मना प्रशंसति– ता वा एता द्वादशेति। त्रीणि शतमानानि, तिस्रो धेनवः, त्रीणि वासांसि इति नव श्रुत्युक्तानि। वत्ससहितानां पयस्विनीनां दानस्य सिद्धत्वात् तासां वत्सा अपि त्रय इति द्वादश। आग्नीध्रस्य ब्रह्मणा सह परिगणनाभावात् तद्दक्षिणां विहाय द्वादश दक्षिणा इत्युक्तम्। गामग्नीधे इति पृथक् दक्षिणाविधानात् तेन सह परिगणनपक्षे त्रयोदश भवन्ति। संवत्सरस्यापि यथोक्ताः चैत्रादिमासाः द्वादश। यदा मलिम्लुचो भवति तदा त्रयोदश। अतोऽस्या इष्टेर्द्वादशकपालसंस्कृतहविर्युक्तत्वात् संवत्सरसंमितत्वं, अतः संवत्सररूपाया इष्टेः द्वादश त्रयोदश वा दक्षिणा युक्ता इत्यर्थः। शब्रासा.

राजसूये सामविधिः

**[1]अग्निष्टोमं प्रथममाहरति। यज्ञमुखं वा अग्निष्टोमः। यज्ञमुखमेवाऽऽरभ्य सवमाक्रमते ॥**

अथ राजसूयोऽभिधीयते। तत्स्वरूपं बौधायनापस्तम्बाभ्यां आध्वर्यवसूत्रद्वयाभ्यामुदीरितम्। तत्र बौधायनः– 'राजसूयेन यक्ष्यमाणो भवति। पुरस्तात् फाल्गुन्यै पूर्णमास्यै चैत्र्यै वा पूर्णमास्या आमावस्येन

(१) ताब्रा. १८।८।१–१८.

हविषेष्ट्वा दीक्षते । तस्य तिस्रो दीक्षास्तिस्र उपसदः सप्तम्यां प्रसुतः । संतिष्ठत एष प्रायणीयोऽग्निष्टोमश्चतुष्टोमः सहस्रदक्षिण उदवसानीयान्तः ।' (बौश्रौ. १२।१) इति । आपस्तम्बोऽपि— 'राजा स्वर्गकामो राजसूयेन यजेत, शतसहस्रं दक्षिणा, अग्निष्टोमः पञ्चापवर्गः प्रथममहः, पञ्च सहस्राणि पवित्रे ददाति, त्रिंशतमभिषेचनीये, त्रिंशतं दशपेये, दश केशवपनीये, विंशतिं व्युष्टिद्विरात्रे, पञ्च क्षत्रस्य धृतौ ।' (आपश्रौ. १८।८।१–४) इति । आश्वलायनोऽपि होतृसूत्रं सूत्रयन् इत्थमाह— 'अथ राजसूयाः । पुरस्तात् फाल्गुन्याः पौर्णमास्याः पवित्रेणाग्निष्टोमेनाभ्यारोहणीयेन यजेत । पौर्णमास्यां चातुर्मास्यानि प्रयुङ्क्ते ।' (आश्रौ. २।३।३) इति । ब्राह्मणभाष्यकृद्भिरपि पूर्वाचार्यैरित्थं संगृहीतम्— 'वक्ष्यते राजयज्ञोऽयं राजसूयाह्वयोऽस्य च । प्रयोगसंग्रहः पूर्वे फाल्गुन्याः सोममाहरेत् ॥ अग्निष्टोमः पवित्राख्यः सोऽभ्यारोहणसाधनः । फाल्गुन्यां पूर्णमास्यां तु चातुर्मास्यान्युपक्रमेत् ॥ तानि संवत्सरे कृत्वा द्वौ सोमौ तत आहरेत् । आद्योऽभिषेचनीयः स्याद्दशपेयस्ततः परम् ॥ पश्विष्टयस्तु बहवः कर्तव्यास्तु तदा तदा । स्यात्केशवपनीयोक्थः सोऽतिरात्रस्ततः परम् ॥ व्युष्टिद्विरात्रः कर्तव्यस्तत्राग्निष्टोम आदिमः । अहः स्यादतिरात्रोऽन्त्यं क्षत्रस्य धृतिरन्तिमः ॥ अग्निष्टोमो भवेदित्थं राजसूयाह्वयः क्रतुः । सोमेष्टिपशुबन्धानां समाहारो भवत्ययम् ॥ तत्रेष्टिपशुबन्धेषु सतः साम्नामनन्वयात् । सोमा एवात्र कीर्त्यन्त इत्येवमवगम्यताम् ॥' इति । तत्रादौ पवित्राख्यमग्निष्टोमं विधत्ते— अग्निष्टोममिति । द्वादशस्तोत्रयुक्तो योऽग्निष्टोमः तमेतं राजसूयोपक्रमे संपादयेत् । सोमयागानां मध्ये ज्योतिष्टोम आद्यः, 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इति श्रुतेः । तस्य ज्योतिष्टोमस्य संबन्धिन्यो याः सप्त संस्थाः सन्ति तासां मध्ये अग्निष्टोमसंस्थायाः प्रकृतित्वेन यज्ञमुखत्वम् । तस्मादादावग्निष्टोमेऽनुष्ठिते सति यज्ञस्य राजसूयाख्यस्य महाक्रतोर्मुखमेवाऽऽरभ्य सवमाक्रमते महाक्रतुमनुतिष्ठति । सूयते अभिषिच्यते यजमानो यस्मिन् महाक्रतौ सोऽयमभिषेकयुक्तो महाक्रतुः सव इत्युच्यते । यथोक्तविधिं तैत्तिरीया अप्येवमामनन्ति— 'अग्निष्टोममग्र आहरति । यज्ञमुखं वा अग्निष्टोमः । यज्ञमुखमेवाऽऽरभ्य सवमाक्रमते ।' (तैब्रा. १।८।७।१) इति । तासा.

**अथैषोऽभिषेचनीयः ॥**

राजसूयगतेषु सप्तसु सोमयागेषु प्रथमो विहितः । द्वितीयं विधत्ते— अथेति । अथशब्दो नानन्तर्यार्थः, चातुर्मास्यादिभिर्व्यवहितत्वेन अग्निष्टोमाभिषेचनीययोरानन्तर्यस्य दुःसंपादनीयत्वात् । अधिकारार्थस्तु भवेत् । एषः वक्तुमिष्टोऽभिषेचनीयः अधिकृतः प्रारब्धः इत्यर्थः । तासा.

**तस्य द्वात्रिंशाः पवमानाः । द्वात्रिंशदक्षराऽनुष्टुप् । वागनुष्टुप् । यावती वाक् तयैव सूयते ॥**

बहिष्पवमान–माध्यंदिनपवमान– आर्भवपवमानाख्येषु त्रिषु स्तोत्रेषु स्तोमविशेषं विधत्ते— तस्येति । प्रसिद्धैव अनुष्टुभोऽक्षरसंख्या । सा चानुष्टुप् वाग्रूपा, वाग्देवतायाः प्रियत्वात् । तच्चाविसंवादेन सर्ववेदेषु तथा व्यवहारादवगम्यते । ततो द्वात्रिंशस्तोमे पवमानेषु प्रयुक्ते सति संख्याद्वारा अयं यजमानः कृत्स्नमन्त्ररूपया वाचाऽभिषिक्तो भवति । यद्यपि विष्टुत्यध्याययोरयं स्तोमो नाम्नातः, तथापि शाखान्तरानुसारिसूत्रकाराद्युपदेशात् अवगन्तव्यः । तैत्तिरीयास्तु स्तोमान्तरमामनन्ति— 'अथैषोऽभिषेचनीयश्चतुस्त्रिꣳशः पवमानो भवति । त्रयस्त्रिꣳशद्वै देवताः । ता एवाऽऽप्नोति । प्रजापतिश्चतुस्त्रिꣳशः । तमेवाऽऽप्नोति ।' (तैब्रा. १।८।७।१) । तासा.

**तदाहुः– सꣳशर इव वा एष छन्दसां यद्विषमा स्तोमा अयथापूर्वमिति ॥**

अथ ब्रह्मवादिभिर्यो दोष उद्भाव्यते तं दर्शयति— तदाहुरिति । अभिषेचनीयस्योक्थ्यसंस्थारूपत्वात्तत्र पञ्चदश स्तोत्राणि । तेषु प्रथमषष्ठैकादशानि सवनत्रयगतानि पवमानस्तोत्राणि । तेष्वधिकसंख्योपेतो द्वात्रिंशस्तोमः प्रयुज्यते । तेभ्यः उपरितनेषु सवनत्रयगतेषु स्तोत्रेषु क्रमेण पञ्चदशसप्तदशैकविंशस्तोमा न्यूनसंख्योपेताः प्रयुज्यन्ते, तदेतदयथापूर्वं भवेत्, अल्पेनोपक्रम्य अधिकेन समाप्तौ तु

यथापूर्वं भवति । तच्चात्र नास्ति । तदेतद्वैषम्यम् । तच्च प्रयुज्यमानमन्त्रगतच्छन्दसामवकाशरूपत्वात् संशर इव सम्यग्वध इव भवति । तासा.

**यत्समाः पवमानास्तेनासꣳशरस्तेन यथापूर्वम् ॥**

तमेतं दोषं ब्रह्मवादी कश्चिदभिज्ञः समाधत्ते– यदिति । यदा पवमानस्तोत्राण्यन्यस्तोत्राणि चैकीकृत्य परीक्ष्यन्ते तदानीं अर्वाचीनसंख्याया उपरितनत्वे सत्ययथापूर्वत्वरूपेण स्तोमवैषम्येण छन्दोवधः शङ्क्यते । पृथक् परीक्षायां तु नासौ शङ्काऽस्ति । न तावत् परस्तोत्रेषु अयथापूर्वत्वमस्ति, पञ्चदशसप्तदशैकविंशानामनुक्रमेणैवानुष्ठितत्वात् । नापि पवमानेष्वसौ शङ्का । यद्यस्मात् कारणात् पवमानत्रयेऽपि द्वात्रिंशस्तोमवत्त्वात् समातेन कारणेन वैषम्यप्रयुक्तः संशरो नास्ति । तेनोभयविधेषु स्तोत्रेषु यथापूर्वत्वमेव, न तु वैपरीत्यम् । अत्रोक्तदोषोद्भावनं तत्परिहारं च तैत्तिरीया अप्येवमामनन्ति– 'सꣳशर एष स्तोमानामयथापूर्वम् । यद्विषमाः स्तोमाः । एतावान्वै यज्ञः । यावान् पवमानाः । अन्तःश्लेषणं वा अन्यत् । यत्समाः पवमानाः । तेनाऽसꣳशरः । तेन यथापूर्वम् ।' ( तैब्रा. १।८।७।१-२ ) इति । त्रयः पवमाना इति यावानस्ति एतावानेव मुख्यो यज्ञभागः । अन्यत्तु सर्वमन्तःश्लेषणं वै यज्ञमवधेः संबन्धमित्येतावदेव यस्मात् पवमानसाम्येन सर्वो दोषः परिहृत इत्यर्थः । तासा.

**आत्मना वा अग्निष्टोमेनर्ध्नोति । आत्मना पुण्यो भवति । अथ यदुक्थानि । पशवो वा उक्थानि । विडुक्थानि । यदुक्थानि भवन्त्यनुसंतत्या एव ॥**

अभिषेचनीयस्योक्थ्यसंस्थारूपत्वं विधत्ते– आत्मनेति । अभिषेचनीयस्य यः पूर्वो भागोऽग्निष्टोमाख्यो द्वादशस्तोत्रयुक्तः सोऽयं सर्वेषां सोमयागानां प्रकृतित्वादात्मा देहस्थानीयः । तेनैवेह लोके यजमानः समृद्धो भवति, परलोके पुण्यफलोपेतो भवति । अथ द्वादशस्तोत्रानन्तरं यदुक्थानि यानि त्रीण्युक्थाख्यस्तोत्राणि सन्ति तान्युक्थानि यज्ञशरीरस्थानीयादग्निष्टोमात् बाह्यत्वेन गवाश्वादिपशुस्थानीयानि, तथा विट्प्रजापुत्रभृत्यादिप्रजास्थानीयानि च । अतस्तानि स्तोत्राणि पशूनां प्रजाया अवच्छेदायैव । तस्मादभिषेचनीयः उक्थसंस्थः कार्य इत्यभिप्रायः । शाखान्तरे चायमर्थो विस्पष्टमाम्नायते– 'आत्मनैवाऽग्निष्टोमेनर्ध्नोति । आत्मना पुण्यो भवति । प्रजा वा उक्थानि । पशव उक्थानि । यदुक्थ्यो भवत्यनुसंतत्यै ।' ( तैब्रा. १।८।७।२-३ ) इति । तासा.

**'वायो शुक्रो अयामि ते' इति वायव्या प्रतिपद्भवति । वाग्वै वायुः । वाचमेवास्य यज्ञमुखे युनक्ति । तयाऽभिषिच्यते । सर्वस्या एव वाचः सूयते । सर्वा एनं वाचो राजेति वदन्ति ॥**

बहिष्पवमानस्तोत्रस्य आदावतिदेशप्राप्तप्राकृतमन्त्रबाधनाय मन्त्रान्तरं विधत्ते– वायो इति । 'वायो शुक्रः' इत्यादिपादस्तृचस्य प्रतीकभूतः । सोऽयं तृचो बहिष्पवमानस्य प्रतिपत् प्रारम्भसाधनं, प्रतिपद्यते प्रारभ्यते अनया तृचरूपया ( च ? ) इति व्युत्पत्तेः । वायुर्देवता यस्याः प्रतिपदः सा वायव्या । कौष्ठ्येन वायुना वागुच्चार्यते इति वायोर्वाग्रूपत्वोपचारः । तथा सति वायव्यमन्त्रेण प्रारभमाण उद्गाता यजमानस्य यज्ञारम्भे वाग्देवतामेव संयोजयति । तत्संयोजने तया वाग्देवतया अस्मिन्नभिषेचनीयक्रतौ अभिषिक्तो भवति । तद्देवतानुग्रहात् सर्वप्राण्युच्चारितायाः सर्वस्या मन्त्ररूपाया वाचः संबन्धी सन्नेवायं सूयते अभिषिच्यते । अयमर्थः प्रत्यक्ष एव । यतः सर्वप्राणिमुखोद्गताः सर्वा वाचः एनं राजेत्येव व्यवहरन्ति । शाखान्तरे त्वन्य एव तृचो वायुदेवताक एवमाम्नायते– 'उप त्वा जामयो गिर इति प्रतिपद्भवति । वाग्वै वायुः । वाच एवैषोऽभिषेकः । सर्वासामेव प्रजानाꣳ सूयते । सर्वा एनं प्रजा राजेति वदन्ति ।' ( तैब्रा. १।८।८।१ ) इति । तासा.

**संभार्या भवन्ति । पृष्ठान्येव ताभिर्युनक्ति । यन्नानादेवत्याः, तेन युनक्ति । वीर्यं वै पृष्ठानि । वीर्य एवाध्यभिषिच्यते ॥**

'वायो शुक्रः' इत्येतस्मात् तृचादूर्ध्वं संभार्याख्या एकैकश आम्नाता ऋचो विधत्ते– संभार्या इति । संभ्रियन्ते स्वयमेकैकाः सत्यः तृचस्थाने सम्यक् प्रयुज्यन्ते ताः

संभार्याः ' उप त्वा जामयो गिरः ' इत्याद्याः ' अग्न आयूंषि ' इत्यन्ताः षट्संख्याका ऋचः । ताभिः षड्भिर्ऋग्भिरनुष्ठिताभिरयमुद्गाता पृष्ठस्तोत्रसामान्येव योजितवान् भवति । षट्संख्यासामान्यात् रथंतरबृहद्वैरूपवैराजशाक्वररैवताख्यानि षट् पृष्ठसामानि । यत् येन कारणेन संभार्याः नानादेवताकाः पृष्ठानि च तथाविधानि, तेन कारणेन पृष्ठत्वयोजनं संभवति । पृष्ठानां च सामर्थ्यहेतुत्वात् वीर्यत्वम् । अतः संभार्यापाठेन यजमानो वीर्ये अधिश्रित्य अभिषिच्यते । तासा.

**यन्ति वा एते यज्ञमुखादित्याहुर्ये संभार्याः कुर्वत इति ॥**

ब्रह्मवादिनां दोषोद्भावनं दर्शयति– यन्तीति । ये उद्गातारः संभार्याः स्तोत्रमध्ये कुर्वते एते यज्ञमुखरूपात् बहिष्पवमानात् यन्ति विभ्रष्टा भवन्ति । एकैकामृचमाश्रित्य तृचपरित्याग एव भ्रंशः । इतिशब्दो दोषसमाप्त्यर्थः । तासा.

**यत् ' पवस्व वाचो अग्रियः ' इति, तेन यज्ञमुखान्न यन्ति ॥**

तं दोषं परिहरति– यदिति । यत् येन कारणेन संभार्याभ्य ऊर्ध्वं ' पवस्व ' इत्येतं तृचं पठन्ति, तेन कारणेन यज्ञमुखाद्भ्रंशो नास्ति । तस्मादयं तृचः पठ्यते इत्यर्थः । एतौ दोषपरिहारौ शाखान्तरेऽप्युक्तौ– ' यन्ति वा एते यज्ञमुखात् । ये संभार्या अब्रुवन् ( ? अक्रन् ) । यदाह । पवस्व वाचो अग्रिय इति । तेनैव यज्ञमुखान्न यन्ति ' ( तैब्रा. १।८।८।१–२ ) इति । तासा.

**' दविद्युतत्या रुचा ' इति छन्दसाꣳ रूपम् । छन्दाꣳस्येवास्य यज्ञमुखे युनक्ति । तैरभिषिच्यते ॥**

अन्यं तृचं विधत्ते– दविद्युतत्येति । ' दवि ' इत्यस्य मन्त्रस्य छन्दोरूपत्वं षष्ठाध्यायस्य नवमखण्डे एव पठितम्– ' दविद्युतत्या रुचेति वै गायत्र्या रूपम् । परिष्टोभन्त्येति त्रिष्टुभः । कृपेत्यनुष्टुभः । सोमाः शुक्रा गवाशिर इति जगत्याः । सर्वेषां वा एषा छन्दसां रूपम् ' इति । स्पष्टमन्यत् । तासा.

**' एतमु त्यं दश क्षिपः ' इत्यादित्याः । आदित्या वा इमाः प्रजाः । तासामेव मध्यतः सूयते ॥**

तृचान्तरं विधत्ते– एतमु त्यमिति । तासु ऋक्षु ' स नो भगाय वायवे पूष्णे पवस्व ' इत्येवमादित्यनाम्नः श्रवणात् आदित्याः आदित्यदेवताका एताः । तथा प्रजा अप्यदितेरुत्पन्नत्वादादित्याः । तत आदित्यदेवताकस्य तृचस्य पाठादादित्यरूपाणां प्रजानां मध्य एवाभिषिच्यते । एतदपि शाखान्तरेऽभिहितम्– ' एतमु त्यं दश क्षिप इत्याह । आदित्या वै प्रजाः । प्रजानामेवैतेन सूयते । ' ( तैब्रा. १।८।८।१ ) इति । तासा.

**' पवस्वेन्दो वृषा सुतः ' इति वृषण्वत्यो भवन्ति त्रिष्टुभो रूपम् । वीर्यं वै त्रिष्टुप् । वीर्य एवाध्यभिषिच्यते ॥**

तृचान्तरं विधत्ते– पवस्वेति । ' वृषन् 'शब्दस्य विद्यमानत्वादेता ऋचो वृषण्वत्यः । यद्यप्येता गायत्र्यः, तथापि वीर्यसंपादकत्वात् फलतस्त्रिष्टुभो रूपं भवन्ति । त्रिष्टुभश्च इन्द्रियवीर्यहेतुत्वं सर्ववेदप्रसिद्धम् ।

तासा.

**' उत्ते शुष्मास ईरते ' इत्युद्वत्यो भवन्ति । उद्वद्वा अनुष्टुभो रूपम् । आनुष्टुभो राजन्यः । तस्मादुद्वत्यो भवन्ति ॥**

पञ्चर्चं सूक्तं विधत्ते– उत्त इति । आदावुच्छब्दश्रवणात् ता उद्वत्यः । अनुष्टुभ्यप्यन्यत्र क्वचिदुच्छब्दः श्रुतः ' उद्यन्नद्य मित्रमहः ' ( ऋसं. १।५०।११ ) इति । तत्सामान्यादेतासामनुष्टुब्रूपत्वम् । ' अनुष्टुप् छन्दसां प्रतिष्ठा ' (तैसं. २।५।१०।३) इति श्रुतेर्यथा छन्दसां मध्ये अनुष्टुभ उत्तमत्वं तथा राज्ञः सर्वपालकत्वेनोत्तमत्वादानुष्टुभत्वम् । तस्मादनुष्टुप्द्वारकात् संबन्धाद्राजयज्ञे उद्वत्यः कार्याः । शाखान्तरेऽप्येतदाम्नातम्– ' उद्वतीर्भवन्ति । उद्वद्वा अनुष्टुभो रूपम् । आनुष्टुभो राजन्यः । तस्मादुद्वतीर्भवन्ति । ' ( तैब्रा. १।८।८।२–३ ) इति । तासा.

**‘ पवमानस्य ते कवे ’ इति प्राणानां क्लृप्त्यै ॥**

तृचान्तरं विधत्ते– पवमानस्येति । मन्त्रे पवमानस्येति शुद्धिहेतुत्वं प्रतीयते । प्राणाश्च शरीरे शुद्धिहेतवः, तदभावे शरीरस्याशुचित्वात् । अनेन साम्येनायं तृचः शरीरे प्राणानां संपादनाय भवति । तासा.

**‘ अध क्षपा परिष्कृतः ’ इति । अनुष्टुप् प्रथमा । अनुष्टुबुत्तमा । वाग्वा अनुष्टुप् । वाचैव प्रयन्ति । वाचमभ्युद्यन्ति ॥**

तृचान्तरं विधत्ते– अधेति । ‘ अध क्षपा ’ इत्यस्मिन् तृचे क्रियमाणे बहिष्पवमानस्यादावन्ते चानुष्टुप् संपद्यते । ‘ वायो शुक्रः ’ इत्यादिः ‘ अध क्षपा ’ इत्यन्तः । तयोरुभयोरप्यनुष्टुबेव छन्दः । वाचोऽनुष्टुप्त्वं पूर्वमेव प्रतिपादितम् । तस्मादाद्यन्तयोरीदृशौ तृचौ कुर्वाणा उद्गातारो वाचैव प्रयन्ति प्रारभन्ते, वाचमभिलक्ष्य उद्यन्ति, समापयन्तीत्यर्थः । अयमर्थः शाखान्तरेऽप्याम्नातः–‘ वाग्वा अनुष्टुप् ( ? अनुष्टुक् ) । वाचैव प्रयन्ति । वाचोद्यन्ति । ’ ( तैब्रा. १।८।८।२ ) इति । तासा.

**छिन्नमिव वा एतद्यदेकर्चाः । यदेतावानुष्टुभौ तृचावभितो भवतो बहवः पुर एतारो भवन्ति बहवः पश्चापिनः ॥**

तावेतौ तृचौ प्रकारान्तरेण प्रशंसति– छिन्नमिति । बहिष्पवमानस्य मध्ये संभार्या एकर्चा इति यदस्ति तदेतेन स्तोत्रं विच्छिन्नमिव भवत्येव, पूर्वोत्तरभाविनां तृचानां मध्ये व्यवधानात् । तद्विच्छेदपरिहारार्थं स्तोत्रस्याभित आद्यन्तयोरेतावनुष्टुभौ तृचौ यदि भवतः तदा विच्छेद-दोषस्य परिहृतत्वाद्यजमानस्य पुरः एतारः पुरतो गन्तारः सेवकाः भृत्याः बहवः संपद्यन्ते । पश्चापिनः पृष्ठत आप्नु-वन्तो भृत्या अपि बहवो भवन्ति । तासा.

**सौर्यानुष्टुबुत्तमा भवति । स्वर्गस्य लोकस्य समष्ट्यै ॥**

अन्तिमं तृचं प्रकारान्तरेण प्रशंसति– सौरीति । उत्तमा ‘ अध क्षपा ’ इत्येषा सौरी सूर्यदेवताका, ‘ विवस्वतो धियः ’ इति तत्र श्रुतत्वात् । सूर्यश्च स्वर्गे तिष्ठति । तस्मादयं तृचः स्वर्गप्राप्त्यै संपद्यते । शाखा-न्तरेऽप्येतदुक्तम्– ‘ सौर्यनुष्टुबु( ? गु)त्तमा भवति । सुवर्गस्य लोकस्य संतत्यै ’ । ( तैब्रा. १।८।८।३ ) इति । तासा.

**‘ वरुणस्य वै सुषुवाणस्य भर्गोऽपाक्रामत् । स त्रेधाऽपतत् । भृगुस्तृतीयमभवत् । श्रायन्तीयं तृतीयम् । अपस्तृतीयं प्राविशत् ॥**

अभिषेचनीये वक्तव्या विशेषा उक्ताः । अथ दशपेये वक्तव्यान् विशेषान् विधातुं तद्विधिस्तावकमर्थवादमाह– वरुणस्येति । सुषुवाणस्य अभिषेचनीयक्रतावभिषिक्तस्य वरुणस्य भर्गः इन्द्रियसामर्थ्यं तस्माद्वरुणादपगतं त्रेधा पतितमभूत् । तस्य पतितस्य भर्गस्य यत्तृतीयमंशरूपं तत् भृगुनामकः ऋषिरभवत् । अत एव भृगोर्वरुणपुत्रत्वमन्यत्र श्रूयते– ‘ भृगुर्वै वारुणिः । वरुणं पितरमुपससार । ’ ( तैउ. ३।१ ) इति । अन्यत्तृतीयमंशस्वरूपं श्रायन्तीय-नामकं सामाभवत् । ‘ श्रायन्त इव सूर्यम् ’ [ सासं. १।३।४ (२६७) ] इत्यस्यामृच्युत्पन्नं साम श्रायन्तीयम् । अतः परं तृतीयमंशरूपमपः प्राविशत् । तासा.

**यद्भार्गवो होता भवति, तेनैव तदिन्द्रियं वीर्य-माप्त्वाऽवरुन्धे । यच्छ्रायन्तीयं ब्रह्मसाम भवति, तेनैव तदिन्द्रियं वीर्यमाप्त्वाऽवरुन्धे । यत् पुष्कर-स्रजं प्रतिमुञ्चते, तेनैव तदिन्द्रियं वीर्यमाप्त्वा-ऽवरुन्धे ॥**

अथ विवक्षितान् विशेषान् विधत्त– यद्भार्गव इति । भृगुगोत्रे समुत्पन्नः पुरुषो दशपेयक्रतौ होता भवेदिति यदस्ति तेनैव भृगुगोत्रसंबन्धेनैव तत् पतितं वरुणस्येन्द्रियं तत्सामर्थ्यं च प्राप्य अवरुन्धे स्वाधीनं कुरुते । ब्रह्माण-मभिलक्ष्य गातव्यं साम ब्रह्मसाम । तच्चात्र श्रायन्तीयं भवेत् । पुष्करस्रजं तामरसपुष्पाणां मालां यजमानः प्रति-मुञ्चते । एतेन त्रितयेन कृत्स्नमपीन्द्रियसामर्थ्यमवरुद्धं भवति । अत्राध्वर्युब्राह्मणमेवमाम्नायते– ‘ जामि वा एत-त्कुर्वन्ति । यत्सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति । पुण्डरिस्रजां प्रयच्छन्त्य ( ? त्य )जामित्वाय । अङ्गिरसः

---

( १ ) ताब्रा. १८।९।१-२१.

सुवर्गं लोकं यन्तः । अप्सु दीक्षातपसी प्रावेशयन् । तत् पुण्डरीकमभवत् । यत्पुण्डरिस्रजां प्रयच्छति । साक्षादेव दीक्षातपसी अवरुन्धे । ' (तैब्रा. १।८।२।१) इति । अध्वर्युसूत्रमप्येवं पठ्यते– ' दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते । ' (आपश्रौ. १८।२०।१४ ) इति । तासा.

**दशमी भवति ॥**

तस्याः स्रजः कालविशेषं विधत्ते– दशमीति । अभिषेचनीयादुत्तरमारभ्य दशसु दिनेषु क्रमेण दशसंख्याकानि संसृप( ? प् )संज्ञकानि हवींषि दशसु दिनेष्वनुष्ठेयानि । तस्मिन् दशमेऽहन्यपराह्णे पुष्करस्रजः प्रतिमोकः । ततः स्रगेषा दिनगताया दशसंख्यायाः पूरकत्वात् दशमीत्युच्यते । उक्तं हि सूत्रकृता– ' तद्दीक्षित एव दशाहे ततो दशपेयेन यजेत । ' ( लाश्रौ. ९।२।१ ) इति । तासा.

**दश चमसा दश चमसाध्वर्यवो दश दश चमसमभियन्ति । आदशमात्पुरुषादन्वाख्याय प्रसर्पन्ति । दशसमृद्धो ह्येष यज्ञः । एनं वाव ते तद्यज्ञमन्वैच्छन् । य एतेन यजत एतदेवेन्द्रियं वीर्यमाप्त्वाऽस्मिन् दधाति ॥**

अपरं विशेषं विधत्ते– दशेति । यजमानचमसव्यतिरिक्ताः दशसंख्याका अत्र सोमचमसाः स्युः । तेषां च सोमचमसानां हर्तारो दशसंख्याकाश्चमसाध्वर्यवो भवन्ति । एकैकं चमसं दश दश ब्राह्मणाः पानार्थमभियन्ति । तत्रैकैकः पुरुषः स्वकीयान् पित्रादीन् दशपुरुषपर्यन्तानन्वाख्याय पानार्थं प्रसर्पेत् । तदुक्तं सूत्रकृता– ' ते दशमातॄर्दशपितॄनित्यन्वाख्याय प्रसर्पेयुः० ' ( लाश्रौ. ९।२।५ ) इति । अध्वर्युसूत्रमपि– ' श्वोभूते पात्रसादनकाले दश चमसानधिकान् प्रयुनक्ति । तानुन्नयनकाले उन्नयति । भक्षणकाले दश दशैकैकस्मिंश्चमसे ब्राह्मणाः सोमपाः सोमं भक्षयन्त्या दशमात्पुरुषादविच्छिन्नसोमपीथाः । ' (आपश्रौ. १८।२१।१–३) इति । तैत्तिरीयब्राह्मणमपि– ' दशपेयो भवति शतं ब्राह्मणाः पिबन्ति ' ( तैसं. १।८।१८।१ ) इति । तदीयमनुब्राह्मणमप्येवमाम्नातम्– ' दशपेयो भवति । अन्नाद्यस्यावरुद्ध्यै । शतं ब्राह्मणाः पिबन्ति । शतायुः पुरुषः शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । ' ( तैब्रा. १।८।२।२ ) इति । हि यस्मादेष दशपेयाख्यो यज्ञो दशसमृद्धः दशभिश्चमसैर्युक्तत्वात् समृद्धो भवति, तत् तस्मात् कारणात् ते समृद्धिकामा एतमेव यज्ञमन्वैच्छन् अन्विष्य अनुष्ठितवन्त इत्यर्थः । यः पुमानेतेन दशपेयेन यजते अस्मिन् यजमाने स उद्गाता एतदेव लोकप्रसिद्धं चक्षुरादीन्द्रियं तद्गतवीर्यं च प्राप्य स्थापयति । तासा.

**सर्वः सप्तदशो भवति । द्वादश मासाः पञ्चर्तवः । स वै संवत्सरः । संवत्सरादेवेन्द्रियं वीर्यमाप्त्वाऽवरुन्धे ॥**

विशेषान्तरं विधत्ते– सर्व इति । अस्मिन् दशपेयक्रतौ यानि स्तोत्राणि सन्ति, तेषु सर्वेषु स्तोत्रेषु सर्वोऽपि स्तोमः सप्तदशसंख्यो भवेत् । लोके चैत्राद्याः द्वादश मासाः, वसन्ताद्याः पञ्चर्तवः । ' हेमन्तशिशिरयोः समासेन ' इति श्रुत्यन्तरादृतुषु पञ्चसंख्या । स वै स एव द्वादशमासात्मकः पञ्चर्तुरूपः सप्तदशसंख्योपेतः संवत्सरो भवति । अतः संख्यासाम्येनास्मात् संवत्सररूपात् सप्तदशस्तोमादेव इन्द्रियं तद्गतवीर्यं च प्राप्य स्वाधीनं करोति । तासा.

**इन्द्रो वृत्रमहन् । तस्येयं चित्राण्युपैद् रूपाण्यसौ नक्षत्राणाम् । अवकाशेन पुण्डरीकं जायते । यत्पुष्करस्रजं प्रतिमुञ्चते वृत्रस्यैव तद् रूपं क्षत्रं प्रतिमुञ्चते ॥**

पूर्वोक्तां यजमानेन स्वकण्ठे प्रतिमुक्तां पुष्करस्रजमर्थवादेन स्तौति– इन्द्र इति । त्वष्टृनामकेन केनचिद्विशिष्टब्राह्मणेनोत्पादितः इन्द्रस्य शत्रुः कश्चित् वृत्रनामकः । तं कदाचिदिन्द्रो हतवान् । तस्य मृतस्य वृत्रस्य शरीरगतानि यानि नीलपीतस्थूलसूक्ष्माद्यवयवरूपाणि सन्ति, इयं पृथिवी तानि सर्वाणि रूपाणि उपैत् प्राप्नोत् । असौ द्यौर्नक्षत्राणां संबन्धीनि दृश्यमानानि वृत्रस्य चित्ररूपा-

ण्याप्नोत् । अवकाशेन द्यावापृथिव्योर्मध्यस्थेन अन्तरिक्षेण वृत्ररूपात्मकमेव पुण्डरीकं जायते । एवं सति यद्यदा यजमानः पुष्करस्रजं प्रतिमुञ्चते तदानीं वृत्रस्येव संबन्धि तत्सर्वं रूपं क्षत्रियजातिर्यजमानः प्रतिमुञ्चते । तासा.

**द्वादश पुष्करा भवन्ति । द्वादश मासाः संवत्सरः । संवत्सरेऽन्तर्भूतं च भव्यं च । भूतेन चैवैनं भव्येन च समर्धयति ॥**

तस्यां स्रजि पुष्कराणां संख्यां विधत्ते— द्वादशेति । द्वादशभिः पुष्करैः स्रगियं निष्पाद्या । तथा सति संवत्सरगतया माससंख्यया साम्यं भवति । संवत्सरमध्ये वर्तमानादस्मादिवसात् अतीतकालसंबन्धि भविष्यत्कालसंबन्धि च वस्तुजातं ( च ? ) भूतेन तेन चोभयेन वस्तुजातेन यजमानं समृद्धं करोति । तासा.

**स्रगुद्गातुः । सौर्य उद्गाता । न वै तस्मै व्यौच्छत् । अथो व्येवास्मै वासयति ॥**

अथ सर्वेषामृत्विजां संबन्धीनि द्रव्याणि विधित्सुः आदौ सुवर्णमयीं स्रजं विधत्ते— स्रगिति । सौवर्णी स्रक् उद्गातुर्देया । यथा सूर्यः सर्वं जगत् युनक्ति तथा सामवेदार्थं सर्वं उद्गाता व्यनक्ति । तस्मात् सौर्य उद्गाता । सौवर्णस्रजो धारणात्पूर्वं तस्मादुद्गात्रे न वै व्यौच्छत् प्रकाशाभावात् उषःकालो नाभूत् । अथ सौवर्णस्रग्धारणानन्तरं अस्मै उद्गात्रे विवासयत्येव प्रकाशसङ्गादुषःकालं सूर्यो विशेषेण अस्मै उद्गात्रे संपादयत्येव । तासा.

**रुक्मो होतुः । आग्नेयो होता । अथो अमुमेवास्मा आदित्यमुन्नयति ॥**

सुवर्णफलकरूपं रुक्मनामकमाभरणं विधत्ते— रुक्म इति । होतुरुपरिधारणयोग्यो रुक्मो भवेत् । 'अग्निर्वै देवानाꣳ होता' (तैसं. २।५।९।५) इति श्रुत्यन्तरादाग्नेयो होता भवति । अतः प्रकाशरूपो रुक्मस्तस्य योग्यः । अथो अपि च, अस्मै होत्रर्थं अमुमेव रुक्मरूपमादित्यं उन्नयति ऊर्ध्वदेशं प्रापयति । तासा.

*** प्राकाशावध्वर्य्वोः । यमाविव ह्यध्वर्यू । अथो चक्षुषी एवास्मिन् दधाति ॥**

अथ द्रव्यान्तरं विधत्ते— प्राकाशाविति । प्राकाशौ आभरणविशेषौ इति केचित् । सौवर्णदर्पणावित्यन्ये । अध्वर्युप्रतिप्रस्थात्रोस्तावुभौ भवताम् । एकस्मिन्नुदरे युगपदुत्पन्नौ भ्रातरौ यमौ, तद्वदेतावुभौ अध्वर्युविशेषौ । तस्मात्तयोः साम्येन प्राकाशदानं युक्तम् । प्राकाशयोर्दानेन अस्मिन् यजमाने प्रतिग्रहीतरि वा दृष्टिपाटवं भवति । तासा.

**अश्वः प्रस्तोतुः । प्राजापत्योऽश्वः । प्राजापत्यः प्रस्तोता । अथो प्रेव ह्यश्वः प्रोथति । प्रेव प्रस्तोता स्तौति ॥**

अश्वदानं विधत्ते— अश्व इति । प्रजापतिसंबन्धिचक्षुर्जन्यत्वादश्वः प्राजापत्यः । तथा च श्रुत्यन्तरम्— 'प्रजापतेरक्ष्यश्वयत्तत्परापतत्तदश्वोऽभवत्' (तैसं. ५।३।१२।१) इति । प्रस्तोता प्रथमतो गायति । प्रजापतिश्च प्रथमतः सृजति । ततः प्रस्तोता प्राजापत्यः । अथो अपि च भूमौ विलुठन्नश्वः सहसा अभ्युत्थाय प्रेव प्रकर्षेणैव प्रोथति गात्रचालनं करोति । प्रस्तोताऽपि प्रकर्षेणैव स्तुतिं करोति । तत्तस्याश्वो योग्यः । तासा.

**धेनुः प्रतिहर्तुः । पय एवास्मिन् दधाति ॥**

धेनुदानं विधत्ते— धेनुरिति । धेनोर्हि क्षीरसंपादनं प्रसिद्धम् । तासा.

---

* अस्मदादर्शपुस्तके, 'एशियाटिक् सोसायटी ऑफ् बेंगाल' मुद्रितपुस्तके, विश्वबन्धुसंपादितवैदिकपदानुक्रमकोशे च 'अध्वर्य्वोः' इत्यस्य स्थाने 'अध्वर्योः' इति पाठो विद्यते । परंतु 'अध्वर्युप्रतिप्रस्थात्रोः' इति सायणभाष्यात्, 'यमाविव ह्यध्वर्यू' इत्याग्रिमग्रन्थस्थद्विवचनात्, एतद्वेदीयलाट्यायनश्रौतसूत्रे राजसूयप्रकरणे 'प्राकाशावध्वर्य्वोरिति, सौवर्णोऽध्वर्योर्दक्षिणतः स्यात्, राजतः प्रतिप्रस्थातुः सव्यतः ।' (लाश्रौ. ९।२।१३) इति एतद्ब्राह्मणोल्लेखपूर्वकं व्यवस्थोक्तेश्च 'अध्वर्य्वोः' इति मूलपाठं निश्चित्य स निवेशितोऽस्माभिः ।

**वशा मैत्रावरुणस्य, वशं मा नयादिति ॥**

वन्ध्याया गोर्दानं विधत्ते– वशेति । मां यजमानं प्रति समस्तं वस्तुजातं वशं स्वाधीनं नयात् नयतु इत्यनेनाभिप्रायेण वन्ध्या देया । देयवस्तुफलयोर्वशशब्द-साम्यं द्रष्टव्यम् । तासा.

**ऋषभो ब्राह्मणाच्छ ंसिनः । वीर्यं वा ऋषभः । वीर्यमेवास्मिन् दधाति ॥**

ऋषभदानं विधत्ते– ऋषभ इति । सेचनसमर्थः पुङ्गवः ऋषभः । तस्य शक्त्याधिक्येन वीर्यरूपत्वम् । तासा.

**वासः पोतुः पवित्रत्वाय ॥**

वस्त्रदानं विधत्ते– वास इति । वस्त्रेण हि जलादीनि पूयन्त इति तस्य पवित्रत्वम् । तासा.

**वरासी नेष्टुः । अनुलम्बेव ह्येषा होत्रा ॥**

स्थूलशाटीदानं विधत्ते– वरासीति । कार्पासापेक्षया हीना वृक्षत्वचा निर्मिता या सेयं वरासी । प्रस्थितयाज्या-प्रभृतिषु प्रयोगविशेषेषु नेष्टुरनुलम्बेव पश्चाल्लम्बते इव भासते । हि यस्मात् एषा वरासी होत्रा होतुर्नेष्टुः संबन्धिनी । अत्र सूत्रकारः– 'वासः पोतुरिति कार्पासं स्यात् । वरासी नेष्टुरिति क्षौमी स्यात् ।' ( लाश्रौ. ९।२।१४–१५ ) इति । तासा.

**स्थूरि यवाचितमच्छावाकस्य । स्थूरिरिव ह्येषा होत्रा । अथो निर्वरुणत्वायैव यवाः । न वै तर्हि यदस्यां दक्षिणा अभ्यभवन् । अथो अस्य त एव तेनाभीष्टाः प्रीता भवन्ति ॥**

स्थूलस्य यवपूर्णस्य शकटस्य दानं विधत्ते– स्थूरीति । होत्रा होमहेतोरच्छावाकस्य संबन्धिनी एषा शकटप्रति-ग्रहक्रिया स्थूरिरिव हि पूर्वोक्तवस्त्रप्रतिग्रहाद्यपेक्षया स्थूलेव दृश्यते हि, शकटस्य प्रौढत्वात् । अथो अपि च शकटस्थिता यवाः निर्वरुणत्वाय वरुणकृतबाधपरि-हाराय संपद्यन्ते । कथमिति चेत्तदुच्यते– तर्हि तस्मिन् काले दशपेयक्रतुप्रवृत्तेः पुरा तत् ( ? यत् ) ते यवाः अस्यां अच्छावाकस्य प्रतिग्रहक्रियायां दक्षिणा अभि-लक्ष्य न वै अभवन्, क्रत्वन्तरेषु यवानां दक्षिणायोग्यत्वं नास्तीत्यर्थः । अथो अनन्तरं एतत्क्रत्वनुष्ठानवेलायां अस्य यजमानस्य त एव यवाः तेन दानेन अभीष्टाः अभि-गताः । इषु गतौ इति धातुः । प्रीताः वरुणस्य प्रीति-हेतवो भवन्ति । यवानां वरुणप्रियत्वं मन्त्रब्राह्मणयोरव-गम्यते– 'यवोऽसि धान्यराजस्त्वं वारुणो मधुसंयुतः ।' ( बौध. ३।६।४ ) इति मन्त्रः । 'वारुणं यवमयं चरुम्' ( तैब्रा. १।७।२।६ ) इति ब्राह्मणम् । तस्माद्यवदानेन वरुणकृतोपद्रवपरिहारो युक्तः ।

तासा.

**अनड्वानग्नीधो युक्त्यै ॥**

बलीवर्ददानं विधत्ते– अनड्वानिति । बलीवर्दो हि अनः शकटं वहतीत्यनड्वान् । अग्नीत् इत्येवंनामक ऋत्विगपि यज्ञं वहति । अतः सादृश्याद्यज्ञस्य युक्त्यै योगाय अनडुहो दानम् । तासा.

**अजः सुब्रह्मण्यायै ॥**

अजदानं विधत्ते– अज इति । सुब्रह्मण्यायै सुब्रह्मण्यस्य छागो योग्यः । तासा.

**वत्सतर्युन्नेतुः साण्डस्त्रिवत्सो ग्रावस्तुतो मिथुन-त्वाय ॥**

स्त्रीपुरुष(योग ?)योर्गवोर्दानं विधत्ते– वत्सतरीति । अत्यन्ततरुणी गौर्वत्सतरी । साण्डः लम्बमानाण्डयुक्तः । त्रिवत्सः संवत्सरत्रयवयोयुक्तः । तासा.

**द्वादश पष्ठौह्यो गर्भिण्यो ब्रह्मणः । द्वादश मासाः संवत्सरः । संवत्सर एव प्रतितिष्ठति । अथ यद्गर्भिण्यः । वाग्वै धेनुः । मन्त्रो गर्भः । वाच्ये-वास्य मन्त्रं दधाति । आमन्त्रणीयो भवति । अथ यद्धेनुभव्या द्वादश पयांसि तान्येवास्मिन् दधाति । तस्मादाहुः– पयस्वी राजा पुण्य इति ॥**

गर्भिणीनां गवां दानं विधत्ते– द्वादशेति । पष्ठौह्यः प्रथमगर्भोपेताः । तस्यैवार्थस्य वैशद्याय गर्भिण्य इत्यनु-वादः । द्वादशसंख्यया कृत्स्नेऽपि संवत्सरे यजमानः प्रतितिष्ठति । अथ अनन्तरं यदपि गर्भिणीत्वमस्ति तद्दानेन यजमानस्य प्रतिग्रहीतुर्वा वाचि मन्त्रं स्थापयति । धेनोर्वा-ग्रूपत्वात् गर्भस्य मन्त्ररूपत्वाच्च आमन्त्रणीयः पूजार्थ

सर्वैरन्वेषणीयो भवति । अथ अनन्तरं यद्धेनुभव्या या एता धेनुश्रेष्ठाः द्वादशसंख्याकाः सन्ति, ताभिर्द्वादशविधानि तान्येव पयांसि तत्तन्मांसमेदादीषदन्नरसानि क्षीराण्येव यजमानेन संपादितानि भवन्ति । तस्मादेवंविधफलोपेतत्वाद्यजमानं प्रति लौकिका एवमाहुः– राजसूययाजी राजा पयस्वी प्रशस्तपयाः पुण्यः पावन इति । तदेतद्दानजातं शाखान्तरेऽप्याम्नातम्– 'प्राकाशावध्वर्यवे ददाति । स्रजमुद्गात्रे । रुक्मꣳ होत्रे । अश्वं प्रस्तोतृप्रतिहर्तृभ्याम् । द्वादश पष्ठौहीर्ब्रह्मणे । वशां मैत्रावरुणाय । ऋषभं ब्राह्मणाच्छꣳसिने । वाससी नेष्टापोतृभ्याम् । स्थूरि यवाचितमच्छावाकाय । अनड्वाहमग्नीधे ।' ( तैसं. १।८।१८।१, तैब्रा. १।८।२।३–५ ) इति । तासा.

**'यो वै सवादेति नैनꣳ सव उपनमति । अथ यः सामभ्य एति पापीयान् सुषुवाणो भवति ॥**

उक्तावभिषेचनीयदशपेयौ । तत ऊर्ध्वं केशवपनीयः कर्तव्यः । तथा चोक्तं सूत्रकारैः– '० यस्मिन् कालेऽभिषेचनीयेन यजेत । तस्य पौर्णमास्यामतिरात्रेण । दशपेयेनेष्ट्वा य उत्तरः पूर्वपक्षस्तस्मिन्नेव केशवपनीयेन यजेत० ' ( लाश्रौ. ९।३।१–३ ) इति । अभिषेचनीयदशपेयकेशवपनीयानां केचिद्धर्मा अस्मिन् खण्डे स्तूयन्ते । तत्र अभिषेचनीयगतानां संभार्याणां साम्नां च स्तुतिं वक्तुमादौ तावद्दोषमुपन्यस्यति– य इति । सवशब्दः अभिषेकं तद्युक्तं च क्रतुमाचष्टे, सवनं अभिषेचनं सवः, सूयते अभिषिच्यते यत्र स सवः इति द्वेधा व्युत्पन्नत्वात् । यो वै यस्तु पुमान् सवादेति अभिषेकादपगच्छति एनमभिषेकरहितं पुमांसं सवः अभिषेकयुक्तः क्रतुः नोपनमति न प्राप्नोति । अथ पूर्ववैपरीत्येन सत्यभिषेके यद्यपि सामभ्यः अपगच्छति तदा सुषुवाणः अभिषेकं कुर्वन्नपि सामराहित्येन शास्त्रीयानुष्ठानाभावात् असौ पापीयान् भवति । तासा.

(१) ताब्रा. १८।१०।१–१०.

**संभार्या भवन्ति । पृष्ठान्येव ताभिर्युनक्ति ॥**

उपन्यस्तदोषं परिहर्तुं पूर्वोक्तं संभार्याणां विधिमनुवदति– संभार्या इति । पूर्ववत् ( ताब्रा. १८।८।८ ) व्याख्येयम् । तासा.

**एतानि वाव सामानि यत् पृष्ठानि ॥**

संभार्याणां पृष्ठरूपत्वे संपादिते सति पृष्ठस्तोत्रेषु सामसद्भावात् सामान्यपि संपादितानि स्युरित्येतदाह– एतानीति । स्पष्टोऽर्थः । तासा.

**यत् संभार्या भवन्ति तदेव सामभ्यो नैति ॥**

दोषपरिहारं दर्शयति– यदिति । संभार्याणामनुष्ठानं यदस्ति तदेव तेनैवायं सामभ्यो नापगच्छति, साम्नां संपादितत्वात् । ततः शास्त्रीय एवाभिषेक इत्यर्थः । तासा.

**यानि देवराज्ञाꣳ सामानि तैरमुष्मिन् लोक ऋध्नोति । यानि मनुष्यराज्ञां तैरस्मिन् । उभयोरनयोर्लोकयोर्ऋध्नोति देवलोके च मनुष्यलोके च ॥**

सामविशेषं प्रशंसति– यानीति । देवेषु मध्ये ये राजसूयेनेष्टवन्तस्ते देवराजानः । तैर्यानि दृष्टानि तानि देवराज्ञां सामानि– सैन्धुक्षितं, दैर्घश्रवसं, पार्थं, काक्षीवतमित्यादीनि । तैः स्वर्गसमृद्धिर्भवति । मनुष्येषु मध्ये ये राजसूयेनेष्टवन्तः क्षत्रियर्षयस्ते मनुष्यराजानः । तैर्दृष्टानि मनुष्यराज्ञां सामानि दैवोदासं, वाभ्र्यश्वं, वैतहव्यमित्यादीनि । तैर्मनुष्यलोके समृद्धिः । उभयोरित्यादिरुक्तस्यैवोपसंहारः । 'यो वै सवादेति' इत्यादिकं शाखान्तरेऽपि ( तैब्रा. १।८।८।३ ) एवमेवाम्नातम् । तासा.

**सामत्रिष्टुभ्यध्यभिषिच्यते । वीर्यं वै सामत्रिष्टुप् । वीर्य एवाध्यभिषिच्यते ॥**

साम्नां संख्यां वक्तुं तदुपयुक्तमुपोद्घातमाह– सामेति । सामरूपा त्रिष्टुप् सामत्रिष्टुप् । तत्राधिश्रितो राजा अभिषिच्यते, सामत्रिष्टुभः प्रयोगे सत्यभिषिञ्चेदित्यर्थः । त्रिष्टुभो वीर्यत्वं सर्ववेदप्रसिद्धम् । अतो वीर्य एवाभिषिक्तो भवति । तासा.

**एकादश राजसामानि भवन्ति। एकादशाक्षरा त्रिष्टुप्। ओजो वीर्यं त्रिष्टुप्। ओजस्येव वीर्येऽध्यभिषिच्यते ॥**

संख्यासामान्येन साम्नां त्रिष्टुप्त्वोपचारं दर्शयति— एकादशेति। वीर्यशब्दस्यैव ओज इति व्याख्यानम्। स्पष्टमन्यत्। ताम्रा.

**यत् त्रिवृतमभिषेचनीये कुर्युर्ब्रह्म क्षत्रायापिदध्युः। यत्त्रिवृतमुद्धरन्ति ब्रह्म तत् क्षत्रादुद्धरन्ति। तस्माद्धरतां प्रतिदण्डा ब्राह्मणाः। न हि ते त्रिवृतमभिषेचनीये कुर्वन्ति ॥**

अभिषेचनीये त्रिवृत्स्तोमराहित्यं प्रशंसति— यदिति। यत् यदि त्रिवृतं त्रिवृत्स्तोममुद्गातारः अभिषेचनीये क्रतौ कुर्युः तदानीं क्षत्राय राज्ञोत्कर्षार्थं ब्रह्म ब्राह्मणजातिं अपिदध्युः आच्छादयेयुः। त्रिवृत्स्तोमः ब्राह्मणजातिस्वरूपः, तयोरुभयोः प्रजापतिमुखजत्वसाम्यात्। तथा सति राजक्रतौ प्रधानभूते त्रिवृत्स्तोमस्याङ्गत्वेन ब्राह्मणजातेरवज्ञा स्यात्। यत् यदि त्रिवृत्स्तोममभिषेचनीयादुद्धरन्ति तत्र न प्रयुञ्जते तत् तेन प्रयोगाभावेन ब्रह्म ब्राह्मणजातिं क्षत्रादुद्धरन्ति क्षत्रियजातौ अनन्तर्भाव्य तदवज्ञां परिहरन्ति। यस्मात् ब्राह्मणजातेर्नीचत्वं परिहृतम्, तस्मात् लोके भरतां भरणं कुर्वतां क्षत्रियाणां मध्ये ब्राह्मणाः प्रतिदण्डा भवन्ति धनापहारादिना राजभिर्दण्ड्यमाना निन्दाशापादिना राजसु प्रतिकूलदण्डयुक्ता भवन्ति। न खलु ते राजभ्यो बिभ्यति। हि यस्मात्कारणात् ते ब्राह्मणा अभिषेचनीये त्रिवृत्स्तोमं न कुर्वन्ति। तस्माद्भयराहित्यमुपपन्नम्। ताम्रा.

**एकविंशोऽभिषेचनीयस्योत्तमः। सप्तदशो दशपेयः। एकविंशः केशवपनीयस्य प्रथमः। क्षत्रं वा एकविंशः। विट् सप्तदशः। क्षत्रेणैवास्मै विशमुभयतः परिगृह्णाति। अनपक्रामुकाऽस्माद्विड् भवति ॥**

त्रिषु क्रतुषु स्तोमव्यवस्थां दर्शयति— एकविंश इति। अभिषेचनीयस्य द्वात्रिंशाः पवमानाः, पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि, एकविंशोऽग्निष्टोमः सोक्थः। एवं सति एकविंशस्तोम उत्तमो भवति। दशपेये तु स्तोमाः सर्वेऽपि सप्तदशा एव। केशवपनीये त्वेकविंशं प्रातःसवनम्, सप्तदशं माध्यंदिनं सवनम्, पञ्चदशं तृतीयसवनम्, सोक्थं सरात्रिकं त्रिवृत्संधिकम्। एवं सत्येकविंशः प्रथमो भवति। सोऽयमेकविंशस्तोमः क्षत्रं वै वीर्याधिक्येन क्षत्रियजातिस्वरूप एव। सप्तदशस्तोमस्तु विट्स्वरूपः क्षत्रियेण रक्षणीयायाः प्रजायाः स्वरूपम्। तत्र पूर्वोत्तरभाविनोरभिषेचनीयकेशवपनीययोः क्रमेण अवसाने उपक्रमे च एकविंशस्तोमो योऽस्ति, यश्च मध्यभाविनि दशपेये सप्तदशस्तोमोऽस्ति, तेषामेकविंशद्वयसप्तदशस्तोमानुष्ठानेन अस्मै यजमानार्थं मध्यवर्तिनीं सप्तदशस्तोमरूपां विशं प्रजां उभयतः पूर्वोत्तरक्रत्वोरवस्थितेनैकविंशस्तोमरूपेण क्षत्रेणैव परिगृह्णाति परिपालयतीत्यर्थः। तथा सति विट् प्रजा अस्माद्यजमानात् अनपक्रामुका कदाचिदपि अपक्रमणशीला न भवति। ताम्रा.

**यद्वै राजसूयेनाभिषिच्यते तत् स्वर्गं लोकमारोहति। स यदिमं लोकं नोपावरोहेदति जनं वा गच्छेत्, उद्वा माद्येत्। यदेषोऽर्वाचीनस्तोमः केशवपनीयो भवत्यस्य लोकस्यानुद्धानाय। यथा शाखायाः शाखामालम्भमुपावरोहेदेवमेतेनेमं लोकमुपावरोहति प्रतिष्ठायै ॥**

इदानीं केशवपनीयं विधत्ते— यदिति। यद्वै यस्मिन्नेव काले यजमानो राजसूयगतेनाभिषेचनीयक्रतोरभिषेकेण युक्तो भवति तत् तस्मिन्नेव काले स्वर्गं लोकमारोहति प्राप्त इव भवति। स यजमानः यत् यदि इमं भूलोकं प्रति स्वर्गादवरोहणं न कुर्यात् तदानीं जनं वा अतिगच्छेत् स्वकीयं बन्धुवर्गं परित्यज्य यत्र क्वापि पलायितो वा भवेत्, उन्माद्येद्वा बन्धुवर्गे स्थित एव सन् भ्रान्तिं वा प्राप्नुयात्। तस्मात् स दोषः परिहर्तव्यः। कथं परिहार इति चेत् तदुच्यते— यत् यदि एषः अनन्तरं करिष्यमाणः केशवपनीयः क्रतुः अर्वाचीनस्तोमो भवति। एकविंशमारभ्य त्रिवृति समाप्यमानत्वादर्वाचीनस्तोमत्वम्।

एतदीयानुष्ठानं स्वर्गात् प्रत्यवरोहणमिव वर्तेत इति भूलोकस्य अनुद्धानाय, अत्यन्तं परित्याग उद्धानं, तद्राहित्यार्थं भवति । यथा लोके वृक्षमारुह्योपरितनवर्तिन्याः शाखायाः कांचिदधोवर्तिनीं शाखां आलम्भं आधारं कृत्वा, अथवा णमुलन्तोऽयं शब्दः । आलम्भं आलम्भ्य भूमौ उपावरोहेत् । एवमेतेन केशवपनीयेन प्रतिकूलस्तोमयुक्तेन भूलोकमुपारूढो भवति । अतोऽयं केशवपनीयः प्रतिष्ठार्थं संपद्यते । तासा.

**[1]इन्द्रो वृत्रमहन् । स विष्वङ् वीर्येण व्यभ्रꣳशत । स एतच्छ्रायन्तीयमपश्यत् । तेनात्मानꣳ समश्रीणात् । इन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिच्यते । वृत्रꣳ हि हन्ति । यच्छ्रायन्तीयं ब्रह्मसाम भवति पुनरेवात्मानꣳ सꣳश्रीणाति ॥**

अथ पूर्वोक्तक्रतुगतसामविशेषस्तुतिर्व्युष्टिद्विरात्रविधिश्चोच्यते । तत्रादौ श्रायन्तीयं साम स्तौति– इन्द्र इति । इन्द्रः त्वाष्ट्रं वृत्रं हत्वा भ्रष्टवीर्यमात्मानं श्रायन्तीयेन साम्ना समश्रीणात् समकरोत् सर्वतो भ्रष्टं वीर्यं समाहितवान् । तद्वदन्योऽपि राजसूययाजी पुमान् इन्द्रियगतसामर्थ्येन वियुज्यते । हि यस्मात् कारणात् वृत्रस्वरूपभूतं पापं हन्ति । तस्मात् वीर्यवियोगः संभावितः । यदि ब्रह्माणमुद्दिश्य श्रायन्तीयनामकं साम भवेत् तदानीं पुनरेवाऽऽत्मानं स राजसूययाजी संश्रीणाति समादधाति इन्द्रियवीर्यसमृद्धिं लभते इत्यर्थः । तासा.

**यज्ञायज्ञीयमनुष्टुभि भवति । वाचा वा एष व्यृध्यते यो राजसूयेनाभिषिच्यते । वृत्रꣳ हि हन्ति । वागनुष्टुप् । वाचो रसो यज्ञायज्ञीयम् । वाच्येवास्य रसं दधाति ॥**

यज्ञायज्ञीयं साम स्तौति– यज्ञायज्ञीयमिति । अनुष्टुभि 'पुरोजिती वः' [ सासं. १।५।८(५४५) ] इत्यस्यामृचि यज्ञायज्ञीयाख्यं साम गातव्यम् । कुत इति चेत्तदुच्यते– राजसूयेन अभिषिक्तः पुमान् मन्त्ररूपया वाचा वियुज्यते । वृत्रवधस्य सद्भावात्तस्य पापस्यायं परिहारः । अनुष्टुभो वाग्विशेषत्वात् वाग्रूपत्वम् । तस्या वाचो यज्ञायज्ञीयाख्यं साम रसः सारं, तेनाधिकफलजननात् । तस्मादेतत्सामगानेनास्य यजमानस्य वाचि सारं स्थापयत्येव । तासा.

**वारवन्तीयमग्निष्टोमसाम भवति । इन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिच्यते । वृत्रꣳ हि हन्ति । यद्वारवन्तीयमग्निष्टोमसाम भवतीन्द्रियस्य वीर्यस्य परिगृहीत्यै ॥**

वारवन्तीयं साम प्रशंसति– वारवन्तीयमिति । 'अश्वं न त्वा वारवन्तम्' [ सासं. १।१।२ (१७) ] इत्यस्यामृच्युत्पन्नं साम वारवन्तीयम् । तत्सामगानेन वियुक्तस्येन्द्रियसामर्थ्यस्य परिग्रहो भवति । तासा.

**अश्रयन्वाव श्रायन्तीयेन । अवारयन्त वारवन्तीयेन । इन्द्रियस्य वा एषा वीर्यस्य परिगृहीतिः ॥**

सामस्तुतिमुपसंहरति– अश्रयन्निति । श्रायन्तीयेन साम्ना नष्टं वीर्यं पुनरश्रयन् प्राप्नुवन् । वीर्यवियोगं वारवन्तीयसाम्ना निवारितवन्तः । तस्मादेषा सामद्वयस्यानुष्ठितिरेव इन्द्रियसामर्थ्यस्य परिगृहीतिर्भवति । एतदेवाभिप्रेत्य शाखान्तरे शब्दद्वयनिर्वचनं कृतम्– 'यदश्रयन् । तच्छ्रायन्तीयस्य श्रायन्तीयत्वम् । यदवारयन् । तद्वारवन्तीयस्य वारवन्तीयत्वम् ।' ( तैब्रा. १।५।१२।१ ) इति । तासा.

**अप्रतिष्ठितो वा एष यो राजसूयेनाभिषिच्यते । यदा वा एतेन द्विरात्रेण यजतेऽथैव प्रतिष्ठा ॥**

अथ व्युष्टिद्विरात्रं विधत्ते– अप्रतिष्ठित इति । अभिषेकेण केवलं पाप्मानं हन्ति, न पुनः प्रतिष्ठां लभते । कदाऽस्य प्रतिष्ठेति चेत् उच्यते– यदा वै यस्मिन्नेव काले एतेन पुरतो वक्ष्यमाणेन द्विरात्राख्येन क्रतुना यजते, अथैव तदानीमेव प्रतिष्ठा भवति । यथा पादद्वयेन पुरुषस्य प्रतिष्ठा तथा द्विरात्रेणेत्यर्थः । तासा.

**यावन्ति संवत्सरस्याहोरात्राणि तावत्य एताः स्तोत्रीयाः । संवत्सर एव प्रतितिष्ठति ॥**

तामेतां प्रतिष्ठामुपपादयति– यावन्तीति । एकस्य संवत्सरस्य षष्ट्यधिकशतत्रयमहानि, रात्र्यश्च तावत्यः । तदुभयं

(१) ताब्रा. १८।११।१–११.

मिलित्वा विंशत्यधिकसप्तशतानि भवन्ति । द्विरात्रक्रतौ स्तोत्रीया ऋचोऽपि संख्यया तावत्य एव संपद्यन्ते । अतः संवत्सरसाम्यात् द्विरात्रानुष्ठानेन संवत्सररूपे काले प्रतितिष्ठत्येव । स्तोत्रीयाणामृचां संख्या कथमिति चेत् सेयं द्विरात्रकल्पे पर्यालोच्या । प्रथमेऽहनि अग्निष्टोमरूपे यानि द्वादश स्तोत्राणि, द्वितीयेऽहनि अतिरात्ररूपे यान्येकोनत्रिंशत्स्तोत्राणि तेषु सर्वेषु विहितान् स्तोमविशेषानालोच्य द्रष्टव्या । शाखान्तरेऽप्ययमर्थः सर्वोऽप्येवमेवाऽऽम्नातः— 'अप्रतिष्ठितो वा एष इत्याहुः । यो राजसूयेन यजत इति । यदा वा एष एतेन द्विरात्रेण यजते । अथ प्रतिष्ठा । अथ संवत्सरमाप्नोति । यावन्ति संवत्सरस्याहोरात्राणि । तावतीरेताः (? तावतीरेतस्य) स्तोत्रीयाः । अहोरात्रेष्वेव प्रतितिष्ठति ।' (तैब्रा. १।८। १०।१) इति । तासा.

**अग्निष्टोमः पूर्वमहः । अतिरात्र उत्तरम् । नानैवाहोरात्रयोः प्रतितिष्ठति ॥**

द्विरात्रावयववाहर्विशेषौ विधत्ते— अग्निष्टोम इति । एकेनाह्ना निष्पाद्यः सोमयागोऽहःशब्देनोपलक्ष्यते । तत्र प्रथममहः अग्निष्टोमरूपम् । उत्तरं त्वहः अतिरात्ररूपम् । एतयोर्द्विविधयोरह्नोरनुष्ठितत्वादहनि रात्रौ च तत्तदुचितभागेन विविधप्रतिष्ठोपपद्यते । तासा.

**अमावास्यायां पूर्वमहः । उद्दृष्ट उत्तरम् । नानैवार्धमासयोः प्रतितिष्ठति । पौर्णमास्यां पूर्वमहः । व्यष्टकायामुत्तरम् । नानैव मासोः प्रतितिष्ठति । तदाहुः— ये एव समानपक्षे पुण्याहनी स्यातां तयोरेव कार्यं समृद्ध्यै ॥**

अस्य द्विरात्रस्य विकल्पेन त्रीन् कालान् विधत्ते— अमावास्यायामिति । उद्दृष्टशब्देन शुक्लप्रतिपदुच्यते, उत्तरोत्तरोत्कर्षेण चन्द्रदर्शनस्य तत्रोपक्रमात् । अमावास्यायामग्निष्टोमः । अनन्तरभाविन्यां शुक्लप्रतिपद्यतिरात्रः । सोऽयमेककालः । अत्र पौर्णमास्यन्तो मास इत्यमुं पक्षमाश्रित्याभिधीयमानत्वात् अमावास्याशुक्लप्रतिपदोर्भि( ? दौ भि)न्नयोरर्धमासयोर्वर्तमानौ द्वौ दिवसौ । तयोरनुष्ठाय अर्धमासद्वये प्रतितिष्ठति । व्यष्टका कृष्णप्रतिपत् । तदाह सूत्रकारः— 'व्यष्टकायामुत्तरमिति तामिस्रप्रथमास्तिस्रो व्यष्टकाः०' (लाश्रौ. ९।३।८) इति । पौर्णमासीकृष्णप्रतिपदौ भिन्नमासगतौ दिवसौ । तयोरनुष्ठाय मासद्वये प्रतितिष्ठति । सोऽयं द्वितीयः कालः । तत्र व्युष्टिद्विरात्रविषये केचित् ब्रह्मवादिन आहुः— एकस्मिन्नेव शुक्लपक्षे ये द्वे निरन्तरे ज्योतिःशास्त्रप्रसिद्धे पुण्यदिने स्यातां तयोरेव द्विरात्राख्यं कर्म कार्यम् । एकस्य कर्मण एकस्मिन्नेव मासे एकस्मिन्नेव पक्षेऽनुष्ठानमुचितम् । अतस्तत्समृद्ध्यै संपद्यते । सोऽयं तृतीयः कालः । तासा.

**अपशव्यो द्विरात्र इत्याहुः । द्वे ह्येते छन्दसी गायत्रं च त्रैष्टुभं च । जगतीमन्तर्यन्तीति । न तेन जगती कृता यत्तृतीयसवने क्रियते ॥**

अथास्मिन् कर्मणि शङ्कितदोषपरिहाराय सामद्वयं विधातुमादौ दोषशङ्कामुद्भावयति— अपशव्य इति । अहर्गणेषु प्रथममहर्गायत्रं, द्वितीयं त्रैष्टुभं, तृतीयं जागतमिति स्थितिः । तथा च तैत्तिरीयाः सप्तमकाण्डे 'गायत्रो वा ऐन्द्रवायवः' इत्यस्मिन्ननुवाके समामनन्ति— 'गायत्रं प्रायणीयमहः, त्रैष्टुभं द्वितीयमहः, जागतं तृतीयमहः' (तैसं. ७।२।८।१) इति । एवं च सति द्विरात्रक्रतौ तृतीयस्याह्नोऽसंभवाद्दिनद्वये गायत्रं च त्रैष्टुभं चेत्येते द्वे एव छन्दसी संपन्ने । जगतीमन्तर्यन्ति अन्तरितां परित्यक्तां कुर्वन्ति । सा च जगती पशुसाधनभूता । अत एव शाखान्तरे सोमहरणविषये उपाख्याने जगत्याः पशव्यत्वमामनन्ति— 'सा पशुभिश्च दीक्षया चागच्छत्तस्माज्जगती छन्दसां पशव्यतमा' (तैसं. ६।१।६।२) इति । ईदृश्याः जगत्या राहित्येन द्विरात्रोऽयमपशव्य इत्येवं दोषं ब्रह्मवादिन आहुः । ननु तृतीयसवने जगती विद्यते, आर्भवान्त्यस्य जागतत्वात् इति चेत्, मैवम् । यद्यप्यह्न एकदेशे तृतीयसवने जगती क्रियते तथापि तेन तावन्मात्रेण कृत्स्नेऽप्यहनि जगती कृता न भवेत् । तच्चाहर्द्विरात्रे तृतीयस्याह्न एव कार्त्स्न्येन जागतत्वम् । तच्चाहर्द्विरात्रे नास्ति । तस्माज्जगत्या अन्तरायस्तदवस्थ एव । तासा.

यदा वा एषाऽहीनस्याहर्भजते साह्नस्य वा सवनमथैव जगती कृता । त्रैशोकमुत्तरस्याह्नो ब्रह्मसाम भवति । वैखानसमच्छावाकसाम । यच्छुक्रिये सवने क्रियेते तेनैव जगती कृता । तेन पशव्यः ॥

अस्य दोषस्य परिहारं दर्शयति– यदेति । यदा वै यस्मिन्नेव काले एषा जगती अहीनसंज्ञकस्य द्विरात्रादेः संबन्धि कृत्स्नमहर्भजते तदानीमहीने जगती कृतेति वक्तुं शक्यते, नान्यथा । एकेनाह्ना सह वर्तते इति साह्न एकाहः । तस्य वा प्रातःसवनमाध्यंदिनसवनयोरन्यतरत्सवनं जगती भजते, तदापि जगती कृतेति वक्तुं शक्यते । साह्नत्वं तु द्विरात्रस्य नास्ति । तस्मात् केनचित्प्रतिनिधिना जगतीकरणं संपादनीयम् । कोऽसौ प्रतिनिधिरिति चेत्, उच्यते– द्विरात्रगतस्योत्तरस्याह्नो ब्रह्मसाम त्रैशोकं भवति । ब्रह्माणमुद्दिश्य गीयमानं ब्रह्मसाम । 'विश्वाः पृतनाः' [ सासं. १।४।३ ( ३७० ) ] इत्यस्यां जगत्यामुत्पन्नं साम त्रैशोकम् । तथैवाच्छावाकमुद्दिश्य गीयमानमच्छावाकसाम वैखानसनामकं भवति । 'नकिष्टं कर्मणा नशत्' [ सासं. १।३।२ ( २४३ ) ] इत्यस्यां बृहत्यामुत्पन्नं साम वैखानसम् । सा च बृहती प्रथमपादव्यतिरिक्तेषु पादेषु चतुर्णामक्षराणामभ्यासाज्जगती संपद्यते । एते उभे सामनी यदि शुक्रिये सवने ऋजीषव्यतिरिक्तैः सोमांशुभिरभिनिष्पन्ने शुक्रशब्दवाच्यसोमरसोपेते माध्यन्दिने सवने क्रियेते, तेनैव सामद्वयकरणेन द्विरात्रे जगती कृता स्यात् । तेन जगतीकरणेन द्विरात्रः पशव्यो भवति । सोऽयं दोषपरिहारः । तासा.

व्युष्टिर्वा एष द्विरात्रो व्येवास्मै वासयति ॥

अथास्य द्विरात्रस्य संज्ञानुगुणं फलं दर्शयति– व्युष्टिरिति । अस्य द्विरात्रस्य व्युष्टिरित्येव संज्ञा । ततोऽस्मै यजमानायायं द्विरात्रः स्वकीयसंज्ञानुसारेण विवासयति तमसः पाप्मनोऽपनयनेन प्रकाशं करोति । व्युष्टिद्विरात्रादूर्ध्वं क्षत्रस्य धृतिरग्निष्टोमः कार्यः । तत्र सूत्रम्– 'तस्मिन्नेव पूर्वपक्षे क्षत्रस्य धृतिना यजेत०' ( लाश्रौ. ९।३।११ ) इति । तासा.

राजसूयः राज्यकामस्य

[१]अथैष राजसूयः । वरुणो वा अकामयत– सर्वेषां देवानां राज्याय सूयेयेति । स एतं यज्ञमपश्यत् । तमाहरत् । तेनायजत । ततो वै सर्वेषां देवानां राज्यायासूयत । सूयते स्वानां श्रेष्ठतायै य एवं वेद । तस्य चतुस्त्रिंशाः पवमाना भवन्ति । स्वराड् वै देवलोकः । स्वाराज्यमु चतुस्त्रिंशी । तदेनं तत्सुष्वाणमेव पवमानमुखे स्वाराज्येन लोकेन समृद्धयन्ति । अनुष्टुप् प्रतिपद्भवति । वाग्वा अनुष्टुप् । क्षत्रमु वै वाक् । क्षत्रेणाभिषिच्यमानोऽभिषिच्याता इति । अथैताः पञ्च संभार्या नानादेवत्या भवन्ति । पञ्चानां ह वै पुरुषाणां राज्यायामिषिच्यमानोऽभिषिच्यते । राज्ञे राजन्याय सूताय ग्रामण्ये शूद्राय दासाय । उदतस्त्रिवृतं स्तोमं हरन्त्युदाग्नेयीं संभार्याभ्यः । तस्माद् ब्राह्मण्यो राजन्यस्याज्येयोऽमार्योऽदण्ड्योऽघात्यः । यदत्र त्रिवृतं स्तोमं कुर्युरुदाग्नेयीं संभार्यास्वब्रह्मज्य एव राजन्यो ब्राह्मणान् जिनीयाद्भ्रूणहत्यै मारयात् ॥

तदाहुर्नैतद्राजभ्यो वेदयेत । यथा वै श्रेष्ठी कामयते तथा करोति । यः स ब्रूयात्– त्रिवृतमेव स्तोमं कुरुताऽऽग्नेयीं संभार्यास्वित्यब्रह्मज्य एव राजन्यो ब्राह्मणाञ्जिनीयाद्भ्रूणहत्यै मारयात् । तदु वा आहुः– य एवैतद्राजभ्यो वेदयेत तमेवाब्रह्मज्यो जिनीयात् । तमभ्रूणहत्यै मारयादिति । तदाहुः– यन्ति वा एते प्राणेभ्यो ये त्रिवृत स्तोमाद्यन्तीति । त्रिवृताग्निष्टोमेन पुरस्ताद्यजेत । प्राणो वै त्रिवृतः । तेनैव प्राणेभ्यो न यन्ति । ब्रह्म पुरस्तादु क्षत्रं सूयते । अथो आहुः– अपचितिरिति यज्ञक्रतुः । तेनैव यजेतेति । तस्य यद्द्वे त्रिवृती स्तोत्रे भवतस्तेनैव प्राणेभ्यो न यन्ति । अपचितिमु सुष्वाणोऽश्नुते । तदु वा आहुः– यदेवैषा वायव्या प्रतिपद्भवति । प्राणो वै वायुः । प्राणैरेव तत्समृध्यन्ते । 'वायो शुक्रो अयामि ते' इति शुक्रवती भवति ।

---

( १ ) जैब्रा. २।१९६–२०४.

ज्योतिरिव ह् वा एषोऽन्येषु मनुष्येष्वतिभाति यः सूयते यं सुष्वाणो ज्योतिरिवासदिति । 'मध्वो अग्रं दिविष्टिषु' इति तदेतन्मधव्यमेवाग्र्यं कुर्वन्ति । 'आ याहि सोमपीतये' इति सौमी । तेन पावमानी क्रियते । 'स्पार्हो देव नियुत्वता' इति । क्षत्रं वै स्पार्हः । विशो नियुत्वतीः । क्षत्रायैव तद्विशमनु वर्त्मानं कुर्वन्ति । तस्मात् क्षत्रस्य विडनु वर्त्मा ॥

अथैते सरस्वतश्च सरस्वत्याश्च । एतद्वै दैव्यं मिथुनं प्रजननं यत् सरस्वांश्च सरस्वती च । दैव्येन मिथुनेन प्रजाया इति । तदाहुः– पुंसः पूर्वा कार्याः, स्त्रिय उत्तराः । तथा सुष्वाणस्यानपगद्भ्यो राजपुत्र आजायत इति । तदु वा आहुः– वायुर्वै रेतोधाः, प्रजननं सरस्वती । तौ सरस्वन्तं मिथुनात् प्रजनयतः । अथो वाशिता वै पूर्वा धावत्यन्वमृषभः । सरस्वत्या एव पूर्वा कार्येति । एतदु हैतत् सरस्वतस्त्वेव पूर्वा कार्या । अथ ब्राह्मणस्पत्या, ब्रह्मण्य क्षत्रं सूयाता इति । अथ सावित्री, सवितृप्रसूतः सूयाता इति । अथैते उभे प्रतिपदौ भवतः । उभे ह्यत्र सामनी क्रियेते । अभिवन्नवर्चं भवत्यभिषिक्त्यै रूपम् । अथो तेनैव त्रिवृत स्तोमान्न यन्ति । सवत् षड्ऋचं भवति । सामानं वदन्तीभिः सूयाता इति । वृषण्वद्भवति । अयं वृषाऽभिषिच्यमानोऽभिषिच्याता इति । चतुर्ऋचं भवति चतुष्पदां पशूनामवरुद्ध्यै । परोक्षं द्विपदा भवन्ति द्विपदां पशूनामवरुद्ध्यै । पर्यासो भवति– यः पर्यासे कामः स मा उपाप्तोऽसदिति ॥

'अध क्षपा परिष्कृतः' इत्यनुष्टुबन्त्या भवति । स ह वा उद्गाता राजानं राजसूयेन याजयेद्य एनं बहिष्पवमान एव देवानां देवासन्दीमारोहयेत् । अनुष्टुप् प्रतिपद्भवति, अनुष्टुबन्त्या । तयोश्चतुःषष्टिरक्षराणि । ततो यानि षष्टिरासन्दी सा । अथ यानि चत्वार्यासन्दीपादास्ते । एतद्वै राजानमुद्गाता बहिष्पवमान एव देवानां देवासन्दीमारोहयति । उभयान्याज्यानि भवन्ति । उभे ह्यत्र सामनी क्रियेते । तदाहुः– अन्यतराण्येव कार्याणि यान्येव बार्हतानि । विड्भाजनानि वा आजान्यपि वाजिन्या विशः क्षत्रं सूयाता इति । तदु वा आहुः– उभयान्येव कार्याणि । सर्वेषां वै राज्यायाभिषिच्यमानोऽभिषिच्यते । तस्मादुभयान्येव कार्याणीति । तानि पञ्चदशानि भवन्ति । क्षत्रं वै पञ्चदशः । क्षत्रेणाभिषिच्यमानोऽभिषिच्याता इति ॥

अवभृथादुदेयुषे द्वादशपुष्करां स्रजं प्रतिमुञ्चति । आपो वै देवानां पत्नय आसन् । ता मिथुनमैच्छन्त । ता देवा उपायन् । ता गर्भमदधत । ततः पुष्कराण्यजायन्त । सत्यं वा आपः । सत्यं दीक्षा । सत्यस्यैव तत्सत्यं यत्पुष्कराणि । सत्यस्यैवास्मै तत्सत्येन तपो दीक्षां प्रतिमुञ्चति । सा द्वादशपुष्करा भवति । द्वादश मासाः संवत्सरः । संवत्सरो यज्ञः । यज्ञमेवास्मिंस्तत् प्रतिमुञ्चति । अथो आहुः– सप्तपुष्करैव स्यादिति । सप्त वै छन्दांसि । छन्दोभिर्यज्ञस्तायते । यज्ञमेवास्मिंस्तत् प्रतिमुञ्चति । अथो आहुः– षट्पुष्करैव स्यादिति । षड्वा ऋतवः संवत्सरः । संवत्सरो यज्ञः । यज्ञमेवास्मिंस्तत्प्रतिमुञ्चति । अथो आहुः– पञ्चपुष्करैव स्यादिति । पाङ्क्तो यज्ञः । पाङ्क्ताः पशवः । पशवो यज्ञः । यज्ञमेवास्मिंस्तत् प्रतिमुञ्चति । अथो आहुः– चतुष्पुष्करैव स्यादिति । चतस्रो दिशः । चतुष्पदाः पशवः । पशवो यज्ञः । यज्ञमेवास्मिंस्तत्प्रतिमुञ्चति । अथो आहुः– त्रिपुष्करैव स्यादिति । त्रिषवणो यज्ञः । यज्ञमेवास्मिंस्तत् प्रतिमुञ्चति । तदु वा आहुः– द्वादशपुष्करैव स्यादिति । द्वादशसु वावैतानि सर्वाणि । तस्माद्द्वादशपुष्करैव स्यादिति ॥

अथैताः संसृप इष्टयो भवन्ति । वरुणस्य ह वै सुष्वाणस्य षोडशतयैरापो भर्गं निरघ्नन् । तदिमां

दशमपतत् । तच्चतुर्धाऽभवत्- भृगुस्तुरीयं सरस्वती तुरीयं दशपेयस्तुरीयं श्रायन्तीयं तुरीयम् । तस्मादेतस्य यज्ञस्य भार्गवो होता भवति, सरस्वतीरापोऽभिषेचनीयाः, दशपेयो यज्ञः, श्रायन्तीयं ब्रह्मसाम । ते देवा अब्रुवन्- एतेदं भर्गमनुविन्दामेति । त एताः संसृप इष्टीरपश्यन् । ताभिरेनदनु समसर्पन् । यदनु समसर्पंस्तत्संसृपां संसृप्त्वम् । तद्विष्णुनैव देवतया दशम्यामन्वविन्दन् । तस्मादेतस्य यज्ञस्य वैष्णवं दशमं हविर्निरूप्यते । दशम्यां ह्यन्वविन्दन् । दशमीं प्रसृतो भवति । दशम्यां ह्यन्वविन्दन् । दश चमसा भवन्ति । दशम्यां ह्यन्वविन्दन् । दश दश चमसमनु प्रसृप्ता भवन्ति । दशम्यां ह्यन्वविन्दन् । यो दशपुरुषं सोमपीथादव्यवच्छिन्नः स भक्षस्य कर्ता । दशम्यां ह्यन्वविन्दन् । तदनुविद्याग्निना पर्यैन्धत । मरुतो यं श्रायन्तीयेनैनदश्रीणंस्तच्छ्रायन्तीयस्य श्री( ? श्रा )यन्तीयत्वम् । तस्य यज्ञायज्ञीयस्यर्क्षु बहिष्पवमानं भवति । अग्निर्वै यज्ञायज्ञीयस्यर्चः । अग्निनैवैनत्तत्परीन्धते ॥

श्रायन्तीयं ब्रह्मसाम । समेवैनत्तच्छ्रीणन्ति । यज्ञायज्ञीयमनुष्टुप्सु प्रोहन्ति । वाग्वै यज्ञायज्ञीयम् । वागनुष्टुप् । वाचैवैनत्तत्समृद्धयन्ति । वारवन्तीयमग्निष्टोमसाम । इन्द्रियं वै वीर्यं वारवन्तीयम् । इन्द्रियेणैवैनत्तद्वीर्येण समृद्धयन्ति । सप्तदशस्तोमो भवति- प्रजापतिर्वै सप्तदशः । प्रजापतिर्नष्टस्यानुवेत्ता । स यो नष्टस्यानुवेत्ता तेनेदं भर्गमनुविन्दामेति । अग्निष्टोमो यज्ञः । संवत्सरो वा एष यदग्निष्टोमः । संवत्सरेणैवैनांस्तत्परिगृह्याऽऽत्मस्वदधत । तस्मिन्नेता यथारूपं दक्षिणा नीयन्ते- स्रगुद्गातुः, रुक्मो होतुः, प्राकाशावध्वर्योः, द्वादश पष्ठौहीर्ब्रह्मणे, धेनुर्मैत्रावरुणाय, ऋषभो ब्राह्मणाच्छंसिने, वाससी नेष्टापोत्रोः, स्थूर्यवाचितमच्छावाकाय, अनड्वानग्नीधः । तद्यत्स्रगुद्गातुर्भवति । सौर्या वै स्रक् । सौर्य उद्गाता । तत् तत्सलक्ष्म क्रियते ॥

सा पटरणी भवति । पटरीव ह्यसावादित्यः । अथ यद्रुक्मो होतुर्भवति, त्रीणि वा एतानि सम्यञ्चि संधीयन्ते । रुक्म आहवनीयोऽसावादित्यः । तद्यदेतानि सम्यञ्चि संधीयन्ते समृद्ध्या एव । समस्मा ऋध्यते य एवं वेद । अथ यत्प्राकाशावध्वर्योर्भवतो रूपेणेन्ततामाह्वयन्तीति वा आहुः । अथो यदेव तौ प्रकाशैव चरतस्तत्तत्सलक्ष्म क्रियते । अथ यद्द्वादश पष्ठौहीर्ब्रह्मणे भवन्ति । प्रजननं वै पष्ठौहीः । प्रजननं ब्रह्मा । तत् तत्सलक्ष्म क्रियते । अथ यद्धेनुर्मैत्रावरुणाय भवति । पयस्या वै धेनुः । पयस्याभाजसौ मित्रावरुणौ । तत् तत्सलक्ष्म क्रियते । अथ यदृषभो ब्राह्मणाच्छंसिने भवति । ऐन्द्रो वै ब्राह्मणाच्छंसी । ऐन्द्र ऋषभः । तत् तत्सलक्ष्म क्रियते । अथ यद्वाससी नेष्टापोत्रोर्भवतः । मारुते वै वाससी । मारुतौ नेष्टापोतारौ । तत् तत्सलक्ष्म क्रियते । अथो भूमा वै मरुतो भूमा तन्तुभिर्वासः । अथ यत् स्थूर्यवाचितमच्छावाकाय भवति, धीतेव ह वा एषा होत्रायातयाम्नी यदच्छावाकीया । तामेतैरेव यवैराप्याययन्ति । तत् स्थूरि भवति क्षेमस्य रूपम् । होत्रा अनुविमुच्यान्ता इति । अथ यदनड्वानग्नीधे भवति । वहति वा अनड्वान् । वहत्यग्निर्देवेभ्यो हविः । तत् तत्सलक्ष्म क्रियते । तद्यदेता यथारूपं दक्षिणा नीयन्ते समृद्ध्या एव । समस्मा ऋध्यते य एवं वेद ॥

अवभृथादुदेत्य श्मश्रूण्येव वपते, न केशान् । श्रीर्वै शिरः । शिर उ ह वै सुष्वाणस्य श्रीर्गच्छति । स यत्पुरा संवत्सरात्केशान्वपेत श्रियमेव वपेत, न केशान् । अथ यदुपरिष्टात् संवत्सरस्य केशान् वपते, संवत्सरेणैव तदात्मञ्छ्रियं परिगृह्य केशानेव वपते, न श्रियम् । तस्मादुपरिष्टादेव वपेत । सोऽतिरात्रो भवति । एतद्वै केशानां रूपं यदतिरात्रः । ये शुक्ला अहस्ते रूपं, ये कृष्णा रात्र्यै ते । तस्मादतिरात्रो भवति । तस्यैते प्रतिलोमा भवन्ति ।

तदा श्रेयांसं वा एषोऽभ्यारोहति यः सूयत इति । तस्यैकविंशं प्रातःसवनं भवति । द्वादश मासाः, पञ्चर्तवः, त्रय इमे लोकाः, असावादित्य एकविंशः । एष वै वरुणः । वरुणसव एष एतर्ह्य- भ्यारोहति यो वै श्रेयांसमभ्यारुह्याथास्मै न निह्नुते । यया वै स तमार्त्यां कामयते तयैनं निह्नोति । तद्यदेते प्रतिलोमा स्तोमा भवन्ति निह्नवाना एवैतदपविजानानाः पुनरर्वाञ्च स्तोमा आयन्ति । यो वै श्रेयांसमभ्यारुह्याथास्मै निह्नुते व्येहि मापक्रमीरिति वै स तमाह । तद्यदाश्विनाः क्रतवः पुनरूर्ध्वा उद्यन्ति यथा निह्नवानं ब्रूयाद्व्येहि मापक्रमीरिति तादृक्तत् । तस्य रथंतरं माध्यंदिने भवति । इयं वै रथंतरम् । अस्यामेवैतत् प्रति- तिष्ठति ॥

जयकामस्य राष्ट्रकामस्य च जयाभ्यातानराष्ट्रभृद्धोमः

[1]देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत । ते देवा एतानभ्यातानानपश्यन् । तानभ्यातन्वत । यद्देवानां कर्माऽऽसीदार्ध्यत तद्यदसुराणां न तदा- र्ध्यत ॥

होमं विधातुं प्रस्तौति– देवा इति । अभ्याताना- ख्यान् मन्त्रान् कर्मसमृद्धिहेतून् दृष्ट्वा तानाभिमुख्येना- ऽऽनीय देवा अजुहवुः । तेन देवानां कर्म समृद्धमासीत् । तद्धोमाभावादसुराणां कर्म न समृद्धम् । तैसा.

येन कर्मणेर्त्सेत्तत्र होतव्याः । ऋध्नोत्येव तेन कर्मणा ॥

अथ विधत्ते– येनेति । ईर्त्सेत् ऋद्धिमिच्छेत् । ऋध्नोत्येव समृद्धिं प्राप्नोत्येव । तैसा.

यद्विश्वे देवाः समभरन्तस्मादभ्याताना वैश्व- देवाः । यत्प्रजापतिर्जयान् प्रायच्छत्तस्माज्जयाः प्राजापत्याः । यद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्र- भृतां राष्ट्रभृत्त्वम् । ते देवा अभ्यातानैरसुरानभ्या- तन्वत । जयैरजयन् । राष्ट्रभृद्भी राष्ट्रमाऽददत । यद्देवा अभ्यातानैरसुरानभ्यातन्वत तदभ्याता- नानामभ्यातानत्वम् । यज्जयैरजयन् तज्जयानां जयत्वम् । यद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृतां राष्ट्रभृत्त्वम् । ततो देवा अभवन्पराऽसुराः ॥

अथ भ्रातृव्यवतः समुच्चितानामभ्यातानजयराष्ट्रभृतां होमं विधत्ते– यद्विश्वे देवा इति । यस्मात् सर्वेऽपि देवाः पूर्वोक्तप्रकारेण अभ्यातानमन्त्रान् समभरन् संपादितवन्तः, तस्मादेते वैश्वदेवा इत्युच्यन्ते । यस्मात् प्रजापतिर्जयान् इन्द्राय प्रायच्छत्, तस्माच्चे प्राजापत्या इत्युच्यन्ते । यस्मात् उपरितनानुवाकाम्नातैः राष्ट्रभृत्संज्ञकैर्मन्त्रैरसुरसं- बन्धिराष्ट्रं देवाः स्वीकृतवन्तः, तस्माच्चे राष्ट्रभृत उच्यन्ते । देवास्तु प्रथममभ्यातानैरसुरान् वशीकृत्य जयैर्विनष्टै- श्वर्यान् कृत्वा राष्ट्रभृद्भिस्तदीयं निवासस्थानमपहृतवन्तः । अभ्यातन्वत एभिरित्यभ्यातानत्वम् । जयन्त्येभिरिति जयत्वम् । राष्ट्रं ध्रियते स्वीक्रियते एभिरिति राष्ट्रभृत्त्वम् । समुच्चितैरेतैस्त्रिभिर्होमैर्देवा विजयिनोऽभवन् । असुरास्तु पराभूताः । तैसा.

यो भ्रातृव्यवान्त्स्यात्स एतान् जुहुयात् । अभ्यातानैरेव भ्रातृव्यानभ्यातनुते । जयैर्जयति । राष्ट्रभृद्भी राष्ट्रमा दत्ते । भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ॥

अथ विधत्ते– य इति । अभ्याततिः वशीकारः । जयः अन्यदीयैश्वर्यनाशनम् । राष्ट्रादानं तदीयभूमेरपहारः । तत्त्रिविधफलसिद्ध्यर्थं त्रिविधान् समुच्चित्य जुहुयात् । तैसा.

[1]राष्ट्रकामाय होतव्याः । राष्ट्रं वै राष्ट्रभृतः । राष्ट्रेणैवास्मै राष्ट्रमव रुन्धे । राष्ट्रमेव भवति ॥

अनुवाके सप्तमेऽस्मिन्नुक्ता राष्ट्रभृतोऽखिलाः । अथा- ष्टमे तेषां काम्याः प्रयोगा उच्यन्ते । तत्रैकं प्रयोगं विधत्ते– राष्ट्रकामायेति । ये एते पूर्वानुवाकोक्ता राष्ट्रभृत्संज्ञका मन्त्राः तेषां राष्ट्रप्राप्तिहेतुत्वाद्राष्ट्रमित्युपचर्यते । अतस्तन्म- न्त्रहोमलक्षणेन राष्ट्रेणैव यजमानार्थमध्वर्युः भूमिविशेषरूपं

(१) तैसं. ३।४।६।१–२.

(१) तैसं. ३।४।८।१–२.

राष्ट्रं संपादयति। स च यजमानो राष्ट्रं प्राप्नोत्येव। अतो राष्ट्रप्राप्तिकामयजमानार्थमेते मन्त्रा होतव्याः। तैसा.

**आत्मने होतव्याः। राष्ट्रं वै राष्ट्रभृतः। राष्ट्रं प्रजा। राष्ट्रं पशवः। राष्ट्रं यच्छ्रेष्ठो भवति। राष्ट्रेणैव राष्ट्रमव रुन्धे। वसिष्ठः समानानां भवति॥**

अथ प्रजापश्वादिना आत्मोत्कर्षार्थं तैरेव मन्त्रैर्होमं विधत्ते– आत्मन इति। मन्त्राणां पूर्ववत्साधनत्वाद्राष्ट्रत्वम्। सत्यपि भूमिविशेषरूपे राष्ट्रे प्रजापशुश्रैष्ठ्यानामभावे सति भोगासंभवात् भूमिवद्भोगहेतुत्वेन प्रजादीनामपि राष्ट्रत्वम्। अतो राष्ट्ररूपमन्त्रेण राष्ट्रेण प्रजादिरूपात्मोत्कर्षरूपं राष्ट्रमवरुन्धे। तथा सति समानानामन्येषां स्वयमेवातिशयेन निवासहेतुर्भवति। तैसा.

**ग्रामकामाय होतव्याः। राष्ट्रं वै राष्ट्रभृतः। राष्ट्रꣳ सजाताः। राष्ट्रेणैवास्मै राष्ट्रꣳ सजातानव रुन्धे। ग्राम्येव भवति॥**

अथ ग्रामप्राप्तये होमं विधत्ते– ग्रामकामायेति। स्वेन सहोत्पन्ना ज्ञातय एकग्रामनिवासिनश्च सजाताः। तेषु सर्वेषु सत्सु राष्ट्रं संपूर्णं भवतीति तेषां राष्ट्रत्वम्। अतो मन्त्ररूपेण राष्ट्रेण सजातरूपं राष्ट्रमवरुन्धे ग्रामस्वामी भवत्येव। तैसा.

**अधिदेवने जुहोति। अधिदेवन एवास्मै सजातानव रुन्धे। त एनमवरुद्धा उप तिष्ठन्ते॥**

तस्य होमस्य देशविशेषं विधत्ते– अधिदेवन इति। अधिदीव्यन्ति द्यूतेन क्रीडन्ति अस्मिन् स्थाने इत्यधिदेवनम्। तत्र होमे सति तस्मिन्नेव स्थाने ये सजाताः समागताः तान् सर्वानधीनान् करोति। ते चाधीनाः सन्त एव सेवन्ते। तैसा.

**रथमुख ओजस्कामस्य होतव्याः। ओजो वै राष्ट्रभृतः। ओजो रथः। ओजसैवास्मा ओजोऽव रुन्धे। ओजस्व्येव भवति॥**

अथ बललाभाय होमं विधत्ते– रथमुख इति। रथस्य यदीषाग्रं तदग्नेरुपरि धारयित्वा तत्र जुहुयात्। राष्ट्रभृन्मन्त्राणां रथस्य च क्रतुहेतुत्वादोजस्त्वम्। अतस्तदुभयरूपेणौजसैव यजमानस्य बलमधीनं करोति। ततो बलवान् भवत्येव। तैसा.

**यो राष्ट्रादपभूतः स्यात्तस्मै होतव्याः। यावन्तोऽस्य रथाः स्युस्तान् ब्रूयात्– युङ्ग्ध्वमिति। राष्ट्रमेवास्मै युनक्ति॥**

अथ राष्ट्राद्भ्रष्टस्य तत्प्राप्तये होमं विधत्ते– य इति। अस्य राष्ट्रभ्रष्टस्य सतोऽपि यावन्तो रथाः सन्ति तान् सर्वानश्वैर्योजयध्वमिति प्रैषं ब्रूयात्। अनेन प्रैषेण होमेन चास्मै भ्रष्टाय राष्ट्रं संपादयति। तैसा.

**आहुतयो वा एतस्याक्लृप्ता यस्य राष्ट्रं न कल्पते। स्वरथस्य दक्षिणं चक्रं प्रवृह्य नाडीमभि जुहुयात्। आहुतीरेवास्य कल्पयति। ता अस्य कल्पमाना राष्ट्रमनु कल्पते॥**

यदा लब्धमपि राष्ट्रमिष्टसाधनसमर्थं न भवति तदा प्रयोगविशेषं विधत्ते– आहुतय इति। न कल्पते भोगे क्षमं यस्य न भवति। एतस्य पूर्वा आहुतयः स्वकार्यक्षमा न भवन्ति तदानीमयं स्वकीयरथस्य यद्दक्षिणं चक्रं तदग्नेरुपरि धारयित्वा तस्य चक्रस्य रन्ध्राभिमुखत्वेन जुहुयात्। तदानीमस्याऽऽहुतीः कल्पयत्येव स्वकार्यक्षमा एव करोति। ताश्च क्षमाः सत्यो राष्ट्रं भोगे क्षमं कुर्वन्ति। अतस्ता आहुतीरनु राष्ट्रं क्षमं भवतीत्युच्यते। तैसा.

**संग्रामे संयत्ते होतव्याः। राष्ट्रं वै राष्ट्रभृतः। राष्ट्रे खलु वा एते व्यायच्छन्ते ये संग्रामꣳ संयन्ति। यस्य पूर्वस्य जुह्वति स एव भवति जयति तꣳ संग्रामम्॥**

अथ युद्धे प्रवृत्ते जयार्थिनो होमं विधत्ते– संग्राम इति। ये युद्धं प्राप्नुवन्ति एते राष्ट्रे निमित्तभूते सति कलहं कुर्वन्ति। तेषां च कलहं कुर्वतां मध्ये प्रथमं होमे प्रवृत्तस्य यस्यैता राष्ट्रभृतो जुह्वति स एव समर्थो भवति, न त्वन्यः। समर्थत्वाच्च तं संग्रामं जयति। तैसा.

अश्वमेधे राजरक्षणप्रार्थना

**[1]समिद्दिशामाशया नः सुवर्वि-**
**न्मधोरतो माधवः पात्वस्मान् ।**
**अग्निर्देवो दुष्टरीतुरदाभ्य**
**इदं क्षत्रꣳ रक्षतु पात्वस्मान् ॥**

अश्वमेधप्रकरणे कल्पः पठ्यते– 'अग्नये गायत्रायेति दशहविषं सर्वपृष्ठां निर्वपति समिद्दिशामिति यथालिङ्गं याज्यानुवाक्याः' इति । तत्र 'अग्नये गायत्राय त्रिवृते राथंतराय वासन्तायाष्टाकपालः' (तैसं. ७।५।१४।१) इत्यस्य पुरोनुवाक्यामाह– समिदिति । दिशां मध्ये या दिक् समित् समिन्धनहेतुः । तदेव कथमिति तदुच्यते– सुवर्वित् स्वर्गस्थमादित्यं विन्दते लभते इति सुवर्वित् । आदित्योदयस्थानत्वात् प्राच्या दिशः समिन्धनहेतुत्वम् । तादृशी दिक् नः अस्मान् आशया पातु, अस्माकं धनादिविषया या काचिदाशा विद्यते तस्याः पूरणेनास्मान्रक्षत्वित्यर्थः । मधुः चैत्रमासः । माधवः वैशाखः । तौ उभावपि पूर्वदिग्वत् समिन्धनहेतू, तयोर्मासयोरादित्यस्यातितीक्ष्णप्रकाशत्वात् । तत्रापि अतः अस्मात् मधोश्चैत्रमासादधिकप्रकाशो यो माधवः वैशाखमासः सोऽस्मान् संतापभयात् पातु । दुःखेन स्तरीता आच्छादयिता दुष्टरीता यो वैरी प्रावरणवस्त्रेणेव दुःखेन आच्छादयति तस्यापि दुःखकारिणो वैरिणः अदाभ्यः दम्भितुं हिंसितुमशक्यो योऽग्निः देवः सोऽयं इदं क्षत्रं अस्मदीयमिदं बलं अस्मांश्च रक्षतु ।

तैसा.

**[1]रथंतरꣳ सामभिः पात्वस्मान्**
**गायत्री छन्दसां विश्वरूपा ।**
**त्रिवृन्नो विष्ठया स्तोमो अह्नाꣳ**
**समुद्रो वात इदमोजः पिपर्तु ॥**

तत्रैव याज्यामाह– रथंतरमिति । यद्रथंतरं साम तदन्यैः सामभिः सह अस्मान् पातु । छन्दसां मध्ये गायत्री विश्वरूपा यवमध्यपिपीलिकामध्यादिभेदैर्बहुरूपा, सा नः अस्मान् रक्षतु । त्रिवृदाख्यो यः स्तोमः अह्नां एकाहादीनां संबन्धिन्या विष्ठया विविधया स्थित्या युक्तः, अहःसु विविधं प्रयुज्यते इत्यर्थः । तादृशोऽस्मान् पातु । समुद्राख्यो यो वातोऽस्ति 'समुद्राय त्वा वाताय स्वाहा' (तैआ. ४।९।१) 'समुद्रोऽसि नभस्वान्' (तैसं. ४।७।१२।३) इत्यादावाम्नातः तादृशो वायुः इदमोजः अस्मदीयं बलं पिपर्तु पालयतु पूरयतु वा ।

तैसा.

**[2]उग्रा दिशामभिभूतिर्वयोधाः**
**शुचिः शुक्रे अहन्योजसीना ।**
**इन्द्राधिपतिः पिपृतादतो नो**
**महि क्षत्रं विश्वतो धारयेदम् ॥**

अथ 'इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मायैकादशकपालः' (तैसं. ७।५।१४।१) इत्यस्य पुरोऽनुवाक्यामाह– उग्रेति । दिशां मध्ये येयमुग्रा दक्षिणा दिक् । उग्रत्वे हेतुः– अभिभूतिः । पापानामभिभवहेतुत्वादुग्रत्वम् । सा वयोधाः वयः आयुष्यं, तस्मिन्नतीते सति मृतान् पुरुषान् यमलोके दधाति स्थापयतीति वयोधाः । वयसोऽन्ते दधातीति मध्यमपदलोपो द्रष्टव्यः । शुचिः आषाढमासः । शुक्रः ज्येष्ठः, तयोः (? तस्य) संबन्धिनि दिवसे यदौष्ण्यमस्ति ततोऽपि शुचिः ओज-

---

(१) तैसं. ४।४।१२।१; कासं. २२।१४ (३६) सुवर्विन्मधो (स्वर्विन्मधु) दाभ्य (दब्ध) क्षत्रं रक्षतु (ब्रह्म जिन्वतु); मैसं. ३।१६।४ (५०) सुवर्विन्मधोरतो (स्वर्विन्मधु रेतो) दाभ्य (दब्ध); आश्रौ. १।४।१२ सुवर्विन्मधोरतो (स्वर्विन्मधुरेतो).

(१) तैसं. ४।४।१२।१; कासं. २२।१४ (३७) त्रिवृन्नो वि (त्रिवृद्वि); मैसं. ३।१६।४ (५१) अह्नाꣳ (अह्ना); आश्रौ. १।४।१२ विष्ठया (विष्टया).

(२) तैसं. ४।४।१२।१-२; कासं. २२।१४ (३८) शुक्रे (शुक्रो) जसीना (जस्ये) पतिः (पत्यैः); मैसं. ३।१६।४ (५२) न्योजसीना (न्योजसीने) पतिः (पत्यैः); आश्रौ. १।४।१२ जसीना (जसीनाम्).

सीना अतिशयेनौष्ण्यरूपौजोयुक्तः । हे इन्द्र परमैश्वर्ययुक्त, त्वमधिपतिः तस्या उग्राया दिशस्तयोरत्युष्णयोश्च स्वामी । तादृशस्त्वं, अतः उभयस्मात् नः अस्मान् पिपृतात् पालय । किंच, विश्वतो महि सर्वस्मान्महदिदं क्षत्रं बलं धारय संपादय । तैसा.

[1]बृहत्साम क्षत्रभृद्वृद्धवृष्णियं
त्रिष्टुभौजः शुभितमुग्रवीरम् ।
इन्द्र स्तोमेन पञ्चदशेन मध्य-
मिदं वातेन सगरेण रक्ष ॥

तत्रैव याज्यामाह– बृहदिति । बृहदाख्यं यत्साम तत्त्रिष्टुभा छन्दसा सह, पिपर्त्वित्यनुवर्तते । अस्मान् पालयत्वित्यर्थः । कीदृशं साम ? क्षत्रभृत् बलस्य धारयितृ, वृद्धवृष्णियं उत्थितपुंस्कं, ओजः बलप्रदं, शुभितं शोभमानं, उग्रवीरं तीव्रपुत्रदम् । हे इन्द्र, पञ्चदशाख्येन स्तोमेन सगराख्येन वातेन सहितः सन् इदं मध्यं रक्ष अतीतानागतयोर्मध्ये स्थितमिदमस्मदीयं शरीरं पालय । तैसा.

[2]प्राची दिशाꣳ सहयशा यशस्वती
विश्वे देवाः प्रावृषाऽह्नाꣳ सुवर्वती ।
इदं क्षत्रं दुष्टरमस्त्वोजो-
ऽनाधृष्टꣳ सहस्रियꣳ सहस्वत् ॥

अथ 'विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालः' (तैसं. ७।५।१४।१) इत्यस्य पुरोनुवाक्यामाह– प्राचीति । अत्र प्रशब्दः प्रतिशब्दार्थे वर्तते । तथा सति दिशां मध्ये या प्राची पश्चिमा दिगित्यर्थः । सा च सहयशाः अस्मासु संपाद्यमानेन यशसा सहिता स्वयमपि यशस्वती । सा च सुवर्वती स्वर्गनिवासिनी (? ना) सूर्येणास्तमयकालभाविना युक्ता । तथाविधा दिगस्मान् पात्विति शेषः । तथा विश्वे देवाः प्रावृषा वर्षर्तुना तदीयानामह्नां समूहेन सहिताऽस्मान् (? सहिताः अस्मान्) पालयत्विति (? पालयन्त्विति) शेषः । इदं क्षत्रं अस्मत्परिपालकं राजशरीरं केनाप्यन्येन वैरिणा तरितुं लङ्घयितुमशक्यमस्तु । ओजः मदीयं बलं अनाधृष्टं केनाप्यतिरस्कृतमस्तु । तथा सहस्रियं सहस्रसंख्यायोग्यं सहस्वत् प्रबलं धाम अस्तु । तैसा.

[1]वैरूपे सामन्निह तच्छकेम
जगत्यैनं विक्ष्वा वेशयामः ।
विश्वे देवाः सप्तदशेन वर्च
इदं क्षत्रꣳ सलिलवातमुग्रम् ॥

तत्रैव याज्यामाह– वैरूप इति । वैरूपाख्यं यत्सामास्ति तस्मिन्नाश्रिताः वयं इह कर्मणि यत्फलमपेक्षितं तच्छकेम संपादयितुं शक्ताः स्मः । तथा जगत्याख्यया छन्दोदेवतया अनुगृहीता वयं एनं यजमानं विक्षु प्रजासु आवेशयामः, प्रजानां स्वामिनं कुर्म इत्यर्थः । हे विश्वे देवाः, सप्तदशाख्येन स्तोमेन युष्माभिश्चानुगृहीतमिदं क्षत्रं अस्मत्पालकं राजशरीरं वर्चः तेजोयुक्तं सलिलाख्येन वायुविशेषेणानुगृहीतम् । स च वायुः 'सलिलाय त्वा वाताय स्वाहा' (तैआ. ४।९।१) इत्याम्नातः । उग्रं वैरितिरस्कारक्षममस्तु । तैसा.

---

(१) तैसं. ४।४।१२।२ ; कासं. २२।१४ (३९) वृष्णियं (वृष्ण्यं) दशेन मध्यमिदं (दशेनौज इदं) ; मैसं. ३।१६।४ (५३) वृष्णियं (वृष्णं) इन्द्र (इन्द्रः) रक्ष (रक्षतु); आश्रौ. १।४।१२ वृष्णियं (वृष्ण्यं).

(२) तैसं. ४।४।१२।२; कासं. २२।१४ (४०) पूर्वार्धे (प्राची दिशां सहाशया नो विश्वे देवाः प्रावृषाह्नां स्ववित् ।); मैसं. ३।१६।४ (५४) सुव (स्व) उत्तरार्धे (वैरूपे सामन्नधि तच् शकेयं जगत्यैनं विक्ष्वावेशयामि ॥); आश्रौ. १।४।१२ सुव (स्व) धृष्टꣳ सहस्रियं (धृष्यं सहस्यं).

(१) तैसं. ४।४।१२।२-३; कासं. २२।१४ (४१) (वैरूपेण साम्ना तच्छकेयं जगत्यैनं विक्ष्वावेशयामि । विश्वे देवाः सप्तदशेन मध्यमिदं क्षत्रं सलिलं वातमुग्रम् ॥) ; मैसं. ३।१६।४ (५५) पूर्वार्धे (इदं क्षत्रं दुष्टरमस्त्वोजोऽनाधृष्टं सहस्रयं सहस्वत् ।); आश्रौ. १।४।१२ च्छकेम जगत्यैनं (च्छकेयं जगत्येनं) यामः (यानि).

[1]धर्त्री दिशां क्षत्त्रमिदं दाधारो-
पस्थाऽऽशानां मित्रवदस्त्वोजः।
मित्रावरुणा शरदाऽह्नां चिकित्नू
अस्मै राष्ट्राय महि शर्म यच्छतम् ॥

अथ 'मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविंशाभ्यां वैराजाभ्यां शारदाभ्यां पयस्या' ( तैसं. ७।५।१४।१ ) इत्यस्य पुरोनुवाक्यामाह– धर्त्रीति। दिशां मध्ये धर्त्री अस्माकं धारयित्री इयमुदीची दिक् इदं क्षत्रं अस्मत्पालकं क्षत्रियशरीरं दाधार पोषयामास। कीदृशी ? आशाना-मुपस्था अस्माकं धनादिविषयाणामाशानां सिद्ध्यर्थं सेव्या। यस्याः ( ? तस्याः ) दिशः प्रसादादस्मदीयं ओजः बलं मित्रवदस्तु बहुभिर्मित्रैरुपेतमस्तु। हे मित्रा-वरुणा, शरदा शरन्नामकेनर्तुना तदीयानामह्नां चिकित्नू ज्ञातारौ युवां अस्मै इदानीं वर्तमानाय राष्ट्राय महि शर्म यच्छतं महत्सुखं संपादयतम्। तैसा.

[2]वैराजे सामन्नधि मे मनीषा-
ऽनुष्टुभा संभृतं वीर्यं सहः।
इदं क्षत्रं मित्रवदार्द्रदानु
मित्रावरुणा रक्षतमाधिपत्यैः ॥

तत्रैव याज्यामाह– वैराज इति। वैराजाख्यं यत्साम अस्ति तस्मिन् मे मदीया मनीषा बुद्धिः, आश्रिता अस्त्विति शेषः। तथा वीर्यं अस्मदीयं शरीरव्यवहार-सामर्थ्यं सहः वैरितिरस्कारकं बलं चानुष्टुभा छन्दोदेवतया संभृतं संपादितमस्तु। मित्रावरुणा हे मित्रावरुणौ, इदं क्षत्रं राजशरीरं मित्रवत् मित्रैर्बहुभिरुपेतं आर्द्रदानु आर्द्रस्य जलसंपूर्णस्य क्षेत्रादेर्दातृ यथा भवति तथा युवामाधिपत्यै रक्षतं आधिपत्याद्विदित्वा ( ? दि दत्त्वा ) पालयतम्। तैसा.

(1) तैसं. ४।४।१२।३; कासं. २२।१४ ( ४२ ) ( यन्त्री दिशां क्षत्रमिदं दाधारोपस्थाशा मित्रवतीदमोजः। मित्रावरुणा शरदाह्नां जिगत्नू अदब्धक्षत्रमिदमस्त्वोजः ॥ ); मैसं. ३।१६।४ ( ५६ ) ह्नां चिकित्नू अस्मै ( ह्ना चिकित्तमस्मै ) यच्छतम् ( यछ-तम् ); आश्रौ. ४।४।१२ चिकित्नू अस्मै (चिकित्वमस्मै ).

(2) तैसं. ४।४।१२।३; कासं. २२।१४ ( ४३ ) वीर्यं ( दुष्टरं ) दानु ( दान्वोजो ); मैसं. ३।१६।४ ( ५७ ) वीर्यं ( वीर्३यं ); आश्रौ. ४।४।१२ दानु ( दानुं ) धिपत्यैः ( धिपत्ये ).

राज्याद्भ्रष्टस्य भ्रश्यमानस्य वेष्टिः

[1]इन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्व-पेत्। अपरुद्धो वाऽपरुध्यमानो वेन्द्रमेव सुत्रा-माणं स्वेन भागधेयेनोप धावति। स एवैनं त्रायतेऽनपरुध्यो भवति ॥

सुत्राम्णे सुष्ठु त्रात्रे। अपरुद्धः चिरं राज्याद्भ्रष्टः। अपरुध्यमानः इदानीमेव भ्रश्यमानः। अनपरुध्यः भ्रंशा-विषयः। तैसा. ( १।७।१३।४ )

[2]आदित्येभ्यो धारयद्भ्यश्चरुं निर्वपेदपरुद्धो वाऽपरुध्यमानो वा। आदित्या वा अपरोद्धारः। आदित्या अवगमयितारः। आदित्यानेव धार-यद्भ्यः स्वेन भागधेयेनोप धावति। त एवैनं विशि दाध्रति। अनपरुध्यो भवति ॥

धारयच्छब्दो यदीययोर्याज्यानुवाक्ययोर्वर्तते त इमे धारयद्वन्तः। स्थानभ्रष्टं स्वस्थाने धारयितुं क्षमाः इति तस्य पदस्य पर्यवसितार्थः। यो राजा पूर्वं स्वराष्ट्राद्वैरिणा निःसारितः सोऽपरुद्धः, यस्त्विदानीं निःसार्यते सोऽप-रुध्यमानः, तयोरन्यतरस्येयमिष्टिः। अपरोद्धारः पूर्वं निःसारयितारः। अवगमयितारः इदानीं निःसारयितु-मुद्यताः, अथवा पुनः स्वराष्ट्रं प्रापयितारः। विशि स्वराष्ट्रगतप्रजायां दाध्रति धारयन्ति स्थापयन्तीत्यर्थः। ततोऽयं वैरिभिरपरोद्धुमशक्यो भवति।

तैसा. ( २।१।११।४–५ )

'अदितेऽनु मन्यस्व' इत्यपरुध्यमानोऽस्य पदमा ददीत। इयं वा अदितिरियमेवास्मै राज्यमनु मन्यते ॥

अत्र पूर्वमपरुद्धस्य नास्ति विशेषाङ्गोपदेशः। अप-रुध्यमानस्य तु प्रयोगे सोऽस्ति। तत्र कंचिन्मन्त्रमुत्पाद्य विनियुङ्क्ते– अदितेऽन्विति।

(1) तैसं. २।२।८।४–५.

(2) तैसं. २।३।१।१–६.

हे अदिति भूमे, त्वमनुमन्यस्व राष्ट्रप्रवेशार्थं मामनुमन्यस्व इत्येतं मन्त्रमुच्चारयन् अस्य शत्रोः पदाङ्कितभूरज आददीत । इयं पृथिव्येव अदितिशब्दवाच्या । सैवास्मै अपरुध्यमानार्थं राज्यमङ्गीकरोति ।

तैसा. ( २।१।११।५ )

**'सत्याऽऽशीः' इत्याह सत्यामेवाऽऽशिषं कुरुते ॥**

मन्त्रान्तरमुत्पाद्य व्याचष्टे– सत्याऽऽशीरिति । आशीः अस्मदपेक्षितं फलं सत्यमस्त्विति शेषः ।

तैसा. ( २।१।११।५ )

**'इह मनः' इत्याह प्रजा एवास्मै समनसः करोति ॥**

अन्यं मन्त्रमुत्पाद्य व्याचष्टे– इहेति । इह मदीये राष्ट्रप्रवेशे प्रजानां मनोऽनुकूलं भवत्विति शेषः ।

तैसा. ( २।१।११।५ )

**'उप प्रेत मरुतः सुदानव एना विश्पतिनाऽभ्यमुꣳ राजानम्' इत्याह । मारुती वै विट् । ज्येष्ठो विश्पतिः । विशैवैनꣳ राष्ट्रेण समर्धयति ॥**

पुनरपि मन्त्रान्तरमुत्पाद्य व्याचष्टे– उपेति । हे सुदानवः सुष्ठुराष्ट्रप्रवेशदातारो मरुतः, यूयं एना विश्पतिना एतेन विरोधिना राष्ट्रपतिना सह योद्धुं अमुं वीरसिंहवर्माणं संजिहीर्षमाणमपरुध्यमानं राजानमभिमुखीकृत्य उप प्रेत समीपे गच्छत । अस्मिन्मन्त्रे 'विश्पतिना' इति यदुक्तं तत्र या विट् प्रजा सा मरुतामधीनत्वात् मारुती, तस्याः विशः पतिः ज्येष्ठोऽपरोद्धा, तेन ज्येष्ठेन विश्पतिना सह योद्धुमित्येवं ब्राह्मणेनोक्तस्य व्याख्यानस्य शेषः पूरणीयः । एतस्य ब्राह्मणव्याख्यातमन्त्रस्य पाठे सति प्रजया देशेन चैनं यजमानं समृद्धं करोति । एतेषां मन्त्राणां विनियोगमापस्तम्बो दर्शयति– 'हविष्कृता वाचं विसृज्योप प्रेत मरुतः सुदानव इति यजमानमभ्येति, सत्याऽऽशीरिति यजमानस्योत्तरे वाससि पदैकदेशं निवपति, इह मन इत्युरसि शेषं निवपति' इति ।

तैसा. ( २।१।११।५ )

**यः परस्ताद्ग्राम्यवादी स्यात्तस्य गृहाद्व्रीहीनाहरेत् । शुक्लाꣳश्च कृष्णाꣳश्च वि चिनुयात् । ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेत् । आदित्या वै देवतया विट् । विशमेवाव गच्छति ॥**

अत्र कंचित्प्रयोगविशेषं क्रमेण विधत्ते– य इति । ग्रामेभ्यो हितं ग्राम्यं तद्राज्ञोऽग्रे वदतीति ग्राम्यवादी । स द्विविधः– अन्तरङ्गो बहिरङ्गश्च । तत्र बहिरङ्गः सभायामेव वदति । अन्तरङ्गस्तु सभायाः परस्तादन्तःपुरे गत्वा गूढं हितं वदति । तस्य गृहात् व्रीहीनाहरेत् । विट्शब्दवाच्यायाः प्रजायाः आदित्यदेवताकत्वादादित्यचरुणा विशमेव प्राप्नोति ।　　तैसा. ( २।१।११।५ )

**अवगताऽस्य विडनवगतꣳ राष्ट्रमित्याहुः । ये कृष्णाः स्युस्तं वारुणं चरुं निर्वपेत् । वारुणं वै राष्ट्रम् । उभे एव विशं च राष्ट्रं चाव गच्छति ॥**

विभक्तानां द्विविधतण्डुलानां मध्ये शुक्लैरादित्यचरुं विधाय कृष्णैर्वारुणचरुं विधत्ते– अवगतेति । अस्य यजमानस्य आदित्यचरुणा यद्यपि प्रजा प्राप्ता भवति तथापि राष्ट्रं भूमिविशेषः तावता न प्राप्यते इत्यभिज्ञा आहुः । अतस्तत्प्राप्तये वारुणं निर्वपेत् । यथा प्रजाया आदित्या देवता तद्वत् राष्ट्रस्य वरुणो देवता । अतस्तयोस्तुष्ट्या तदुभयं प्राप्यते ।

तैसा. ( २।१।११।५ )

**यदि नावगच्छेत् 'इममहमादित्येभ्यो भागं निर्वपाम्याऽमुष्मादमुष्यै विशोऽवगन्तोः' इति निर्वपेत् । आदित्या एवैनं भागधेयं प्रेप्सन्तो विशमव गमयन्ति ॥**

अपरुध्यमानस्य विशो राष्ट्रस्य च प्राप्तये द्विहविष्का काचिदिष्टिरुक्ता । केनचित्प्रतिबन्धविशेषेण यदि कृतायामपीष्टौ तत्प्राप्तिः प्रतिबध्येत तदानीं विशेषं विधत्ते– यदीति । 'इमम्' इत्यादिनिर्वापमन्त्रोऽत्रैवोत्पाद्यते । अहं यजमानः अमुष्मात् वैरिणः अमुष्यास्तदीयप्रजायाश्चानीय इमं व्रीहिरूपं हविर्भागं आदित्येभ्यो निर्वपामि । किमर्थम् ? अवगन्तोः अस्मदीयां प्रजां राष्ट्रं चावगन्तुम् । अनेन मन्त्रेण निर्वापे सति आदित्याः स्वयमेव तं

भागमपेक्षमाणाः एनं यजमानं स्वकीयां विशं प्रापयन्ति ।
तैसा. ( २।१।११।६ )

**यदि नावगच्छेदाश्वत्थान्मयूखान्त्सप्त मध्यमेषायामुप हन्यात् ‘ इदमहमादित्यान्बध्नाम्याऽमुष्मादमुष्यै विशोऽवगन्तोः ’ इति । आदित्या एवैनं बद्धवीरा विशमव गमयन्ति ॥**

प्रतिबन्धाधिक्ये सति तावताऽप्यप्राप्तौ पुनरन्यं विशेषं विधत्ते— यदीति । ‘ इदम् ’ इत्यादिर्बन्धनमन्त्रः । अमुष्मात् वैरिणः सकाशात् अमुष्या मदीयाया विशोऽवगन्तोः प्राप्तये यजमानोऽहमादित्यानिदं बध्नामि । इदमिति हस्तेन प्रदर्शनम् । अनेन मन्त्रेणाश्वत्थजन्यान् सप्त शङ्कून् हविर्धारिणः शकटस्य मध्यमायामीषायां कीलप्रक्षेपेण बध्नीयात् । तथा सति आदित्याः स्वयमेव बद्धवीराः सन्तः स्वकीयान् भृत्यान् मोचयितुमेनं यजमानं विशं प्रापयन्ति । तैसा. ( २।१।११।६ )

**यदि नावगच्छेदेतमेवाऽऽदित्यं चरुं निर्वपेत् । इध्मेऽपि मयूखान्त्सं नह्येत् । अनपरुध्यमेवाव गच्छति ॥**

ततोऽपि प्रबलतरप्रतिबन्धके सति पुनरप्यन्यं विशेषं विधत्ते— यदीति । पूर्वत्र मध्यमायामीषायां शङ्कवः कीलिताः । इदानीमिध्मेऽपि शङ्कुबन्धनं विशेषः ।
तैसा. ( २।१।११।६ )

**आश्वत्था भवन्ति । मरुतां वा एतदोजो यदश्वत्थः । ओजसैव विशमव गच्छति ॥**

तेषां शङ्कूनां पूर्ववद्वृक्षविशेषं विधत्ते— आश्वत्था इति । अश्वत्थस्य मरुदोजस्त्वमर्थवादान्तरे द्रष्टव्यम् ।
तैसा. ( २।१।११।६ )

**सप्त भवन्ति । सप्तगणा वै मरुतः । गणश एव विशमव गच्छति ॥**

शङ्कुसंख्यां विधत्ते— सप्तेति । तैसा. (२।१।११।६)

राज्ञः शक्तिसंभरणेष्टिः

**[1]देवा वै राजन्याज्जायमानादबिभयुः । तमन्तरेव सन्तं दाम्नाऽपौम्भन् । स वा एषोऽपोब्धो जायते यद्राजन्यः । यद्वा एषोऽनपोब्धो जायेत वृत्रान्घ्नंश्चरेत् ॥**

अथ त्रयोदशोऽनुवाके ऐन्द्राबार्हस्पत्यं चरुं विधातुं प्रस्तौति— देवा इति । राजन्यस्याप्रतिबद्धशक्तिकत्वेन इतरवैरिवत् देवानपि हनिष्यतीति मत्वा देवा भीताः सन्तो गर्भमध्य एव स्थितं सन्तं राजन्यं शक्तिप्रतिबन्धलक्षणेन दाम्ना अपगतशक्तिको यथा भवति तथा औम्भन् शक्तिप्रतिबन्धं पूरितवन्तः । अत एव सर्वत्र लोके राजन्यः प्रतिबद्धशक्तिक एव जायते । यद्यप्रतिबद्धशक्तिको जायेत गर्भनिर्गमनमारभ्य वैरिणो मारयन्नेव लोके चरेत् । तैसा.

**यं कामयेत राजन्यमनपोब्धो जायेत वृत्रान्घ्नंश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेत् । ऐन्द्रो वै राजन्यो ब्रह्म बृहस्पतिः । ब्रह्मणैवैनं दाम्नोऽपोम्भनान्मुञ्चति ॥**

इदानीं विधत्ते— यमिति । यं राजन्यं प्रति अध्वर्युरेवं कामयेत देवैरप्रतिबद्धशक्तिकोऽयं जायतां सर्वत्र निवारकान् वैरिणो मारयन्नेव चरत्विति, तस्येयमिष्टिः । देवेष्विन्द्रस्य क्षत्रियत्वं बृहदारण्यके समाम्नातम्— ‘ यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः ’ ( बृउ. १।४।११ ) इति । तस्मात् मनुष्येषु राजन्य ऐन्द्रः । ‘ ब्रह्म वै देवानां बृहस्पतिः ’ ( तैसं. १।५।४।३ ) इत्यस्य श्रवणात् बृहस्पतेर्ब्राह्मणजातित्वम् । अतः ऐन्द्राबार्हस्पत्यचरौ निरुते सत्येनमैन्द्रं राजन्यं ब्रह्मणा बृहस्पतिसामर्थ्येन दैविकाच्छक्तिप्रतिबन्धात् मोचयति । तैसा.

**हिरण्मयं दाम दक्षिणा । साक्षादेवैनं दाम्नोऽपोम्भनान्मुञ्चति ॥**

अत्रोचितां दक्षिणां विधत्ते— हिरण्मयमिति । दाम रज्जुः । बन्धके दामनि दत्ते सति प्रत्यक्षत एव बन्धमोक्षो भवति । तैसा.

---

( १ ) तैसं. २।४।१३।१–२.

चयने विशो राजानुकूलत्वप्रार्थना

**[1]यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मान एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥**

दैवीर्विशः देवसंबन्धिन्यः प्रजारूपाः । एते मरुतः इन्द्रमनुवर्त्मानः इन्द्रं स्वामिनमनुसृत्य तदनुसारेण यथा वर्तन्ते मरुतः, एवं दैव्यो मानुष्यश्च सर्वाः प्रजाः इमं यजमानमनुसृत्य वर्तमाना भवन्तु । तैसा.

राज्ञ आतिथ्यम्

**[2]यावद्भिर्वै राजाऽनुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते ॥**

**[3]यावन्तः खलु वै राजानमनुयन्ति तेभ्यः सर्वेभ्य आतिथ्यं क्रियते ॥**

राज्ञा सहागतेभ्यः सर्वेभ्यः सहातिथ्यं कर्तव्यम् । ऐब्रासा.

**अग्निं मन्थन्ति सोमे राजन्यागते । तद्यथैवादो मनुष्यराज आगतेऽन्यस्मिन्वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एतत्क्षदन्ते यदग्निं मन्थन्ति । अग्निर्हि देवानां पशुः ॥**

अग्निमन्थनं विधत्ते– अग्निमिति । लोके यथैव अदः अतिथिसत्करणं तथैव सोमस्यापि तत् सत्करणं द्रष्टव्यम् । तावेतौ दृष्टान्तदार्ष्टान्तिकौ मनुष्यराज इत्यादिना स्पष्टीक्रियेते । महति मनुष्यभूपतौ वा अन्यस्मिंश्चिद्विद्यावृत्तादिसंपन्नत्वेनार्हति पूज्ये महति ब्राह्मणेऽब्राह्मणे वा गृहं प्रत्यागते सति अतिथिसत्कारार्थं शास्त्रकुशलाः शिष्टाः कंचिदुक्षाणं वृषभं वा वेहतं गर्भघातिनीं वृद्धां गां वा क्षदन्ते हिंसन्ति । अयं सत्कारः स्मृतिषु प्रसिद्धो युगान्तरधर्मो द्रष्टव्यः । एवमेवात्रापि, अग्निं मन्थन्तीति यदस्ति, एतदस्मै सोमाय अतिथिसत्कारार्थं क्षदन्ते, अग्नेर्देवपशुत्वात् । यथा अनड्वान् हव्यं वहति तथा अग्निरपि हव्यं वहति । तस्मादग्नेः पशुसाम्यम् । ऐब्रासा.

(१) तैसं. ४।६।५।७; कासं. १८।६ (५५) न एवमिमं (नोऽभवन्नेवमिमं); मैसं. २।११।१ (१) कासंवत्; शुसं. १७।८६ कासंवत्.

(२) तैसं. ६।२।१।२.

(३) ऐब्रा. ३।४.

राज्ञो भूत्यादिकामस्येष्टयः

**[1]ऐन्द्रमेकादशकपालं निर्वपेन्मारुतꣳ सप्तकपालम् । राज३न्यं भूतिकामꣳ याजयेत् । ऐन्द्रो वै राजन्यो देवतया । मारुती विट् । इन्द्रियेणैवास्मै विशमुपयुनक्ति । अनुकामस्मै विशमविवादिनीं करोति । ऐन्द्रमेकादशकपालं निर्वपेन्मारुतꣳ सप्तकपालꣳ यः कामयेत विशे च क्षत्राय च समदं कुर्यामिति । ऐन्द्रस्यैन्द्रीमनूच्य मारुत्या यजेत् । मारुतस्य मारुतीमनूच्यैन्द्र्या यजेत् । स्व एवैभ्यो भागधेये समदं करोति । यदि कामयेतातुर्मुह्यꣳ स्यादिति पूर्वा३र्धेऽन्यां जनताया गां निदध्याज्जघना३र्धेऽन्यामपि । ते संगछेते । तावद्तुर्मुह्यं भवति । यदि कामयेत कल्पेतेत्येते एव हविषी निरुप्य यथायथꣳ यजेत् । कल्पतेऽह । ऐन्द्रमेकादशकपालं निर्वपेन्मारुतꣳ सप्तकपालमभिचरन् । उपरिष्टादैन्द्रस्यावद्येदधस्तान्मारुतस्य । उभयत एवैनानादीपयति ज्येष्ठतश्च कनिष्ठतश्च । ऐन्द्रमेकादशकपालं निर्वपेत् । मारुतीमामिक्षाम् । राज३न्यं ग्रामकामꣳ याजयेत् । मध्य आमिक्षायाः पुरोडाशं निधायोभयस्यावद्येत् । क्षत्रꣳ वा इन्द्रः । विण्मरुतः । विशꣳ वा एतन्मध्यतः प्रविशति । पर्यूहमवद्यति । विशैवैनं पर्यूहति । मारुतमेकविꣳशतिकपालं निर्वपेदभिचरन् । देवविशा वै मरुतः । न वै विशा प्रत्तं घ्नन्ति । देवविश एवैनं निर्याच्य स्तृणुते । तं बर्हिषदं कृत्वा समया स्फ्येन विहन्यात् । 'इदमहममुष्यामुष्यायणस्यैन्द्रवज्रेण शिरश्छिनद्मि' इति । इन्द्रवज्रेणैवास्य शिरश्छिनत्ति । अथ यत्स्फ्यः । वज्रो वै स्फ्यः । वज्रेणैवैनꣳ स्तृणुते 'एना व्याघ्रं परि-**

(१) मैसं. २।१।९ (९–१३).

ष्सवजानाः सिꣳहं मृजन्ति महते धनाय । महिषं नः सुभ्वं तस्थिवाꣳसं मर्मृज्यन्ते द्वीपिनम३प्स्वन्तः ॥' इति । वज्रो वा आपः । यदेतदप्सुमद्यजुर्भवति वज्रेणैवैनꣳ स्तृणुते ॥

राजत्वप्राप्तये इन्द्रप्रार्थना

[1]आयुष्मन्तं वर्चस्वन्तम् ।
अथो अधिपतिं विशाम् ।
अस्याः पृथिव्या अध्यक्षम् ।
इममिन्द्र वृषभं कृणु ॥

हे इन्द्र, इमं यजमानं वृषभं कृणु श्रेष्ठं कुरु । वृषभत्वमेव प्रपञ्चयते— आयुष्मन्तं दीर्घेणाऽऽयुषा युक्तं वर्चस्वन्तं अधिकेन बलेन युक्तं अपि च विशां प्रजानामधिपतिं अस्याः पृथिव्या अध्यक्षं स्वामिनम् । तैब्रासा.

[2]इममिन्द्र वर्धय क्षत्रियाणाम् ।
अयं विशां विश्पतिरस्तु राजा ।
अस्मा इन्द्र महिवर्चाꣳसि धेहि ।
अवर्चसं कृणुहि शत्रुमस्य ॥

हे इन्द्र, क्षत्रियाणां मध्ये इमं पुरोवर्तिनं राजानं वर्धय । अयं राजा विशां प्रजानां मध्ये विश्पतिः अतिशयेन प्रजापालकोऽस्तु, विशां मध्ये या उत्तमा विशस्तासामपि पालकोऽस्त्वित्यर्थः । हे इन्द्र, अस्मै राज्ञे महिवर्चांसि महान्ति बलानि धेहि संपादय । अस्य शत्रुमवर्चसं कृणुहि बलहीनं कुरु । तैब्रासा.

[3]इममाभज ग्रामे अश्वेषु गोषु ।
निरमुं भज योऽमित्रो अस्य ।
वर्ष्मन्क्षत्रस्य ककुभि श्रयस्व ।
ततो न उग्रो विभजा वसूनि ॥

हे इन्द्र, इमं राजानं सर्वस्मिन् ग्रामे अश्वेषु गोषु च आभज सर्वतोभागिनं कुरु । अस्य राज्ञः अमित्रः शत्रुर्योऽस्ति अमुं निर्भज भागरहितं कुरु । क्षत्रस्य क्षत्रियजातेः वर्ष्मन् शरीरे ककुभि उत्तमाङ्गे श्रयस्व इन्द्रस्य प्रसादाश्रितो भव, सर्वोऽपि क्षत्रियजातिस्त्वां नमस्करोत्वित्यर्थः । अथवैनं राजानं श्रयस्व स्थापय । तत ऊर्ध्वं नः अस्माकं उग्रस्त्वं वसूनि परकीयाणि धनानि विभज विशेषेण संपादय । परेषु कुपितस्तदीयं धनमस्मभ्यं प्रयच्छेत्यर्थः । तैब्रासा.

[1]अस्मे द्यावापृथिवी भूरि वामम् ।
संदुहाथां घर्मदुघेव धेनुः ।
अयꣳ राजा प्रिय इन्द्रस्य भूयात् ।
प्रियो गवामोषधीनामुतापाम् ॥

प्रवर्ग्यार्थं या पयो दुग्धे सा घर्मदुघा तादृशी धेनुरिव हे द्यावापृथिव्यौ, अस्मे अस्मदर्थं संदुहाथां अपेक्षितस्य कामस्य युवां दोहनं कुरुतम् । अयं च राजा युवयोः प्रसादात् इन्द्रस्य प्रियो भूयात् । तथा गवामोषधीनामपां च प्रियो भूयात् । ताः सर्वा अस्मिन् रमन्तामित्यर्थः । तैब्रासा.

[2]युनज्मि त उत्तरावन्तमिन्द्रम् ।
येन जयासि न पराजयासै ।
स त्वाऽकरेकवृषभꣳ स्वानाम् ।
अथो राजन्नुत्तमं मानवानाम् ॥

उत्तरः उत्कृष्टः ज्ञानैश्वर्यादिर्यस्य इन्द्रस्य सोऽयमुत्तरावान् तादृशमिन्द्रं हे राजन्, ते त्वदर्थं युनज्मि त्वया सह संयोजयामि । येन इन्द्रेण जयासि सर्वदा त्वं जेष्यसि न पराजयासै कदाचिदपि पराजयं न प्राप्स्यसि । स इन्द्रस्त्वां

---

(१) तैब्रा. २।४।७।१-२.

(२) तैब्रा. २।४।७।७.

(३) असं. ४।२२।२ (एमं भज ग्रामे अश्वेषु गोषु निष्टं भज यो अमित्रो अस्य । वर्ष्म क्षत्राणामयमस्तु राजेन्द्र शत्रुं रन्धय सर्वमस्मै ॥); तैब्रा. २।४।७।७.

(१) असं. ४।२२।४ पूर्वार्धे (अस्मै द्यावापृथिवी वामं दुहाथां घर्मदुघे इव धेनू ।) नामुतापाम् (नां पशूनाम्); तैब्रा. २।४।७।८.

(२) असं. ४।२२।५ जयासि (जयन्ति) जयासै (जयन्ते) उत्तरार्धे (यस्त्वा करदेकवृषं जनानामुत राज्ञामुत्तमं मानवानाम् ॥); तैब्रा. २।४।७।८.

स्वानां ज्ञातीनां मध्ये एकवृषभं एकमेव श्रेष्ठं अकः करोतु । अथो अपि च हे राजन्, मानवानां त्वामुत्तमं करोतु । तैब्रासा.

**[1]उत्तरस्त्वमधरे ते सपत्नाः ।**
**एकवृषा इन्द्रसखा जिगीवान् ।**
**विश्वा आशाः पृतनाः सं जयं जयन् ।**
**अभितिष्ठ शत्रूयतः सहस्व ॥**

हे राजन्, त्वं उत्तरः उत्कृष्टो भव । ते सपत्नाः शत्रवः अधरे निकृष्टाः सन्तु । त्वं एववृषा एक एव श्रेष्ठः इन्द्रसखा इन्द्रस्य सख्यं प्राप्तः जिगीवान् सर्वदा जयं प्राप्तः विश्वा आशाः सर्वा अपि दिशः संजयन् सम्यग्वशीकुर्वन् विश्वाः पृतनाश्च जयन् अभितिष्ठ अभिक्रम्य स्थिरो भव । शत्रूयतः शात्रवमिच्छतः मनुष्यान् सहस्व अभिभव । तैब्रासा.

अग्न्यादिदेवानां राज्यादिदानप्रार्थना

**[1]अग्निरन्नादोऽन्नपतिः । अन्नाद्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥**

योऽयमग्निः सोऽयं अन्नादः जाठराग्निरूपेण अन्नस्य भक्षकः । अन्नपतिः बाह्याग्निरूपेणान्नस्य पाचकत्वात् पालकः । सोऽयमग्निः अस्मिन् यज्ञे यजमानाय भक्षणयोग्यमन्नं ददातु । तस्मै अग्नये स्वाहा हुतमिदमस्तु । तैब्रासा.

**[2]सोमो राजा राजपतिः । राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥**

यः सोमः सोऽयं ब्राह्मणानां राजा, 'सोमोऽस्माकं ब्राह्मणानाꣳ राजा' (तैसं. १।८।१०।२) इति मन्त्रान्तरात् । स चान्येषां राज्ञां पालकत्वात् राजपतिः । शेषं पूर्ववत् । तैब्रासा.

**[1]वरुणः सम्राट् सम्राट्पतिः । साम्राज्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥**

योऽयं वरुणः सोऽयं समीचीनो राजा भूत्वा सर्वेषामन्येषां साम्राज्यानां पालकः । तैब्रासा.

**[2]मित्रः क्षत्रं क्षत्रपतिः । क्षत्रमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥**

मित्रो देवः स्वयं क्षत्रियजातिर्भूत्वा सर्वेषामन्येषां क्षत्रियाणां पालकः । स च क्षत्रं क्षत्रियधर्मं ददातु । तैब्रासा.

**[3]इन्द्रो बलं बलपतिः । बलमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥**

अयमिन्द्रः स्वयं बलं प्राप्य परकीयस्य बलस्य पालको भवति । तैब्रासा.

**[4]बृहस्पतिर्ब्रह्म ब्रह्मपतिः । ब्रह्मास्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥**

बृहस्पतिः स्वयं देवानां मध्ये ब्राह्मणजातियुक्तः, 'ब्रह्म वै देवानां बृहस्पतिः' (तैसं. १।५।४।३) इति श्रुत्यन्तरात् । सोऽयमितरब्राह्मणजातेः पालको ब्राह्मणधर्मं ददातु । तैब्रासा.

**[5]सविता राष्ट्रꣳ राष्ट्रपतिः । राष्ट्रमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥**

---

(१) असं. ४।२२।६ (उत्तरस्त्वमधरे ते सपत्ना ये के च राजन् प्रतिशत्रवस्ते । एकवृष इन्द्रसखा जिगीवां छत्रूयतामा भरा भोजनानि ॥); तैब्रा. २।४।७।८-९.

(२) तब्रा. २।५।७।३; शब्रा. ११।४।३।८ यजमानाय ददातु (मयि दधातु); काश्रौ. ५।१३।१ शब्रावत्.

(३) तैब्रा. २।५।७।३; शब्रा. ११।४।३।९ यजमानाय ददातु (मयि दधातु); काश्रौ. ५।१३।१ शब्रावत्.

(१) तैब्रा. २।५।७।३; शब्रा. ११।४।३।१० यजमानाय ददातु (मयि दधातु); काश्रौ. ५।१३।१ शब्रावत्.

(२) तब्रा. २।५।७।४; शब्रा. ११।४।३।११ यजमानाय ददातु (मयि दधातु); काश्रौ ५।१३।१ शब्रावत्.

(३) तैब्रा. २।५।७।४; शब्रा. ११।४।३।१२ यजमानाय ददातु (मयि दधातु); काश्रौ. ५।१३।१ शब्रावत्.

(४) तैब्रा. २।५।७।४; शब्रा. ११।४।३।१३ ब्रह्मास्मिन् यज्ञे यजमानाय ददातु (ब्रह्मवर्चसमस्मिन् यज्ञे मयि दधातु); काश्रौ. ५।१३।१ शब्रावत्.

(५) तैब्रा. २।५।७।४; शब्रा. ११।४।३।१४ यजमानाय ददातु (मयि दधातु); काश्रौ. ५।१३।१ शब्रावत्.

सविता स्वयं राष्ट्रं प्राप्य अन्यदीयस्य राष्ट्रस्य पालको भवति । तैब्रासा.

[1]पूषा विशां विट्पतिः । विशमस्मिन् यज्ञे यजमानाय ददातु स्वाहा ॥

पूषा स्वयं देवानां विशां स्वामी भूत्वा मनुष्याणामपि विशां पालको भवति । तैब्रासा.

स्वाराज्यहेतुः पञ्चशारदीयो यज्ञः

[2]स्वाराज्यं वा एष यज्ञः । एतेन वा एकयावा कान्दमः स्वाराज्यमगच्छत् ॥

पञ्चशारदीयं प्रशंसति– स्वाराज्यमिति । एष पञ्चशारदीयाख्यो यज्ञः स्वाराज्यस्वरूपः, तत्प्राप्तिहेतुत्वात् । एतेन पञ्चशारदीयेनैव पुरा कान्दमो नाम कश्चिदृषिः स्वाराज्यं प्राप्तवान् । स कीदृशः ? एकयावा, एकेन वाहनेन यातीत्येकयावा । रथेनैव गच्छति, न तु वाहनान्तरेणेत्यर्थः । तैब्रासा.

जनतासंग्रहणार्थं सांग्रहणेष्टिः

[3]सांग्रहण्येष्ट्या यजते । इमां जनताꣳ संगृह्णानीति ॥

सूत्रकारेण ‘ राजा सार्वभौमोऽश्वमेधेन यजेत ’ इत्युपक्रम्य ‘ चैत्र्यां पौर्णमास्यां सांग्रहण्येष्ट्या यजते ’ इति यदुक्तं तदिदं विधत्ते– सांग्रहण्येष्ट्येति । इमां जनतां स्वस्यापेक्षितं जनसमूहं संग्रहीष्यामीत्यभिप्रेत्य सांग्रहण्याख्ययेष्ट्या यजेत । सा चेष्टिः ‘ वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः ’ (तैसं. २।३।९।२) इत्यत्रोत्पन्ना । संगृह्यते अपेक्षितं सर्वं ययाऽसौ संग्रहणी । सैव सांग्रहणी । तैब्रासा.

(१) तैब्रा. २।५।७।४ ; शब्रा. ११।४।३।१५ (पूषा भगं भगपतिः । भगमस्मिन् यज्ञे मयि दधातु स्वाहा ॥) ; काश्रौ. ५।१३।१ शब्रावत्.

(२) तैब्रा. २।७।११।२.

(३) तैब्रा. ३।८।१।१.



अश्वमेधो राजकर्म

[1]शतेन राजपुत्रैः सहाध्वर्युः । पुरस्तात्प्रत्यङ् तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजा वृत्रं वध्यादिति । राज्यं वा अध्वर्युः । क्षत्रꣳ राजपुत्रः । राज्येनैवास्मिन्क्षत्रं दधाति ॥

चतुर्णां प्रोक्षणं संगृह्योक्तत्वात् विवरितुमादौ अध्वर्योः प्रोक्षणं विधत्ते– शतेनेति । राजपुत्राः अभिषिक्तक्षत्रियपुत्राः स्वयं राज्यार्हाः तैः शतसंख्याकैः सहितोऽयमध्वर्युः पूर्वस्यां दिशि प्रत्यङ्मुखः स्थित्वा तमश्वं प्रोक्षेत् । अनेनेत्यादिवध्यादित्यन्तः प्रोक्षणमन्त्रः । स्पष्टो मन्त्रार्थः । वृत्रं वारकं पापं शत्रुं वा । राज्यस्वरूपोऽयमध्वर्युः, यजमानेन राज्यार्थं अध्वर्योः परीदानात् । तथा च सूत्रकारेणोक्तम्– “ ब्राह्मणा राजानश्च ‘ अयं वोऽध्वर्यू राजा या ममापचितिः सा वा एतस्मिन्यद्द्वेष करोति तद्वः कृतमासत् ’ इति संप्रेष्य यावदाज्ञमध्वर्यू राजा भवति ” इति । योऽयं राजपुत्रः स क्षत्रं बलरूपः अतस्तत्प्रोक्षणे सत्यस्मिन्यजमाने राज्येनैव सह बलं संपादयति । तैब्रासा.

शतेनाराजभिरुग्रैः सह ब्रह्मा । दक्षिणत उदङ् तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजाऽप्रतिधृष्योऽस्त्विति । बलं वै ब्रह्मा । बलमराजोग्रः । बलेनैवास्मिन् बलं दधाति ॥

ब्रह्मणः प्रोक्षणं विधत्ते– शतेनेति । क्षत्रियाः सन्तोऽपि राज्यानर्हा अराजानः । उग्राः शूराः । अप्रतिधृष्यः केनाप्यतिरस्कार्यः । स्पष्टमन्यत् । तैब्रासा.

शतेन सूतग्रामणिभिः सह होता । पश्चात् प्राङ् तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजाऽस्यै विशः । बहुग्वै बह्वश्वायै बह्वजाविकायै । बहुव्रीहियवायै बहुमाषतिलायै । बहुहिरण्यायै बहुहस्तिकायै । बहुदासपूरुषायै रयिमत्यै पुष्टिमत्यै । बहुरायस्पोषायै राजाऽस्त्विति । भूमा

(१) तैब्रा. ३।८।५।१–४.

**वै होता । भूमा सूतग्रामण्यः । भूम्नैवास्मिन्भूमानं दधाति ॥**

होतुः प्रोक्षणं विधत्ते— शतेनेति । सूताः सारथयः । ग्रामण्यः ग्रामनेतारः ग्रामस्वामिनः । विट् प्रजा, सा विशेष्यते । बहवो गावो यस्यां विशः सा बहुगुः । तथा बह्वश्वादीनि विशेषणानि । रयिमती प्रभूतधनयुक्ता । पुष्टिमती शरीरपुष्टियुक्ता । बहुरायस्पोषा बहुविधमणिमुक्तादिधनपुष्टियुक्ता । यथोक्तविशेषणविशिष्टायाः प्रजाया अयं यजमानो राजाऽस्तु । प्रतिविशेषणं पृथक्कर्तुमादरार्थं वा राजेति द्विरुक्तिः । होतुर्भूमरूपत्वं पठनीयमन्त्रबाहुल्यादवगन्तव्यम् । सूतानां ग्रामण्यां भूमरूपत्वं, व्यापारबाहुल्यात् । तैब्रासा.

**शतेन क्षत्तसंग्रहीतृभिः सहोद्गाता । उत्तरतो दक्षिणा तिष्ठन् प्रोक्षति । अनेनाश्वेन मेध्येनेष्ट्वा । अयꣳ राजा सर्वमायुरेत्विति । आयुर्वा उद्गाता । आयुः क्षत्तसंग्रहीतारः । आयुषैवास्मिन्नायुर्दधाति ॥**

उद्गातुः प्रोक्षणं विधत्ते— शतेनेति । वैश्यशूद्राभ्यां मातापितृभ्यामुत्पादिताः क्षत्तारः, कोशवृद्धिकारिणः संग्रहीतारः । उद्गात्रादीनामायुष्ट्वं तद्धेतुत्वादुपचर्यते । तैब्रासा.

[१] '**देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपायत' इत्याह । शतं वै तल्प्या राजपुत्रा देवा आशापालाः । तेभ्य एवैनं परिददाति ॥**

यदुक्तं सूत्रकारेण— 'अश्वमुत्सृज्य देवा आशापाला इति त्रिभ्यः परिददाति शतं कवचिनो रक्षन्त्यपर्यावर्तयन्तोऽश्वमनुचरन्ति चतुःशता इत्येकेषाम्' इति, तं मन्त्रमनूद्य तात्पर्यं दर्शयति— देवा इति । हे आशापालाः दिक्पालका देवाः, देवेभ्योऽश्वं मेधाय देवसंबन्धियागार्थं प्रोक्षितं एतमश्वं गोपायत । अस्मिन्मन्त्रे आशापालदेवशब्देनाभिषिक्तस्य राज्ञः पुत्राः तल्प्याः राज्ञा सह एकस्मिंस्तल्पे शयनार्हाः शतसंख्याका विवक्षिताः । अतोऽनेन मन्त्रेण तेभ्य एव राजपुत्रेभ्यो रक्षार्थं एनमश्वं परिददाति । तैब्रासा.

राष्ट्रविट्संबन्धः

[२]'**आहतं गभे पस इत्याह । विड्वै गभः । राष्ट्रं पसः । राष्ट्रमेव विश्याहन्ति । तस्माद्राष्ट्रं विशं घातुकम् ॥**

अत्र गभशब्दो वर्णविपर्यासेन स्त्रीव्यञ्जनं भगमाचष्टे । पसशब्दोऽपि वर्णव्यत्यासेन सपं आवापयोग्यं पुरुषव्यञ्जनमाचष्टे । स्त्रीव्यञ्जने पुंव्यञ्जनमाहतमिति मन्त्रार्थः । अत्र स्त्रीव्यञ्जनवाचिना गभशब्देन प्रजोपलक्षिता । पुंव्यञ्जनवाचिना पसशब्देन राष्ट्रं सूचितम् । ततः प्रजायां राष्ट्रमाहन्ति संयोजयति । यस्मादेवं तस्माल्लोकेऽपि यद्राष्ट्रं तद्विशं घातुकं प्रजां प्रति गमनशीलम् । उभयमपि परस्परं संबध्य वर्तते इत्यर्थः । तैब्रासा.

ब्राह्मणे राष्ट्रं न रमते

'**तदाहुः । यदुभौ दिवा गायेताम् । अपास्माद्राष्ट्रं क्रामेत् । न वै ब्राह्मणे राष्ट्रꣳ रमत इति । यदा खलु वै राजा कामयते । अथ ब्राह्मणं जिनाति । दिवा ब्राह्मणो गायेत् । नक्तꣳ राजन्यः । ब्रह्मणो वै रूपमहः । क्षत्रस्य रात्रिः । तथा हास्य ब्रह्मणा च क्षत्रेण चोभयतो राष्ट्रं परिगृहीतं भवति ॥**

तत्र गानविषये केचिदभिज्ञा एवमाहुः— ब्राह्मणराजन्यौ उभावपि दिवैव यदि गायेतां तदानीं रात्रौ रक्षकाभावात् राष्ट्रं अस्माद्यजमानात् भ्रश्येत् । तत्रेयमुपपत्तिः— न हि ब्राह्मणे राष्ट्रं क्रीडते । कुत एतत् ? इति चेत् उच्यते— ब्राह्मणे राष्ट्रं पालयति सति यदा राजा राष्ट्रं मे भूयादिति कामयते तदानीमेव ब्राह्मणं जित्वा तत् स्वाधीनं करोति । अहः प्रथमभावित्वात्तत्र गानकर्तृत्वं ब्राह्मणस्य मुख्यम् । अतो ब्राह्मणस्य योग्य एव कालो गानस्य पर्याप्त इति द्वयोः कालयोर्द्वाभ्यां गातव्यम् । तत्र उज्ज्वलत्वादग्रिमभवत्वाच्च ब्राह्मणस्य

(१) तैब्रा. ३।८।९।३.

(१) तैब्रा. ३।९।७।३-४.

(२) तैब्रा. ३।९।१४।२-३.

रूपमहः । अन्धकारावृतत्वाच्चोरादिभययुक्तत्वाच्च रक्षायामधिकृतस्य क्षत्रस्य स्वरूपं रात्रिः । तथा कालद्वये गाने सति मन्त्रेण बलेन चोभयविधेन कालद्वये राष्ट्रं परिगृहीतं भवति । तैब्रासा.

राजब्राह्मणयोः पौर्वापर्यम्

**[1]यथेदं ब्राह्मणो राजानमनुचरति ॥**

यथा इदानीं ब्राह्मणः पुरोहितः देशाधिपतिं राजानं अनुसृत्य चरति । शब्रासा.

राजा विशां जेता, करग्रहीता, वैश्यधनहर्ता च,
क्षत्रियस्य वशे धनसंपन्नो वैश्यः

**[2]राजाऽपारां विशं प्रावसायाप्येकवेश्मनैव जिनाति ॥**

सार्वभौमो राजा अपारां निरवधिकां विशं राज्यं प्रावसाय प्राप्यापि एकवेश्मनैव एकगृहात्मनैव जिनाति जयति स्वाधीनं करोति । शब्रासा.

**[3]इमा विशः क्षत्रियाय बलिं हरन्ति ॥**
**क्षत्रियस्यैव वशे सति वैश्यं पशव उपतिष्ठन्ते ॥**

क्षत्रियस्य वशे रक्षार्थे क्षत्रियाधीनत्वे सत्येव वैश्यं पशवः गवाद्याः उपतिष्ठन्ते । शब्रासा.

**क्षत्रियः कामयतेऽथाह वैश्यमपि यत्ते परो निहितं तदाहरेति तं जिनाति ॥**

यदैव स क्षत्रियः कामयते अथ अनन्तरं एतं वैश्यं ब्रूते । कथमिति ? हे वैश्य, ते तव परः परस्तात् अन्यत्र गोप्यस्थाने निहितं यत् धनमस्ति तदाहरेति । एवमुक्त्वा तं वैश्यं जिनाति धनापहारेण हीनं करोति । शब्रासा.

क्षत्रियस्य प्रजाभिः उपासनमधस्तात्

**[4]स वा उपरि जुहूं सादयति । अध इतराः स्रुचः । क्षत्रं वै जुहूः । विश इतराः स्रुचः । क्षत्रमेवैतद्विश उत्तरं करोति । तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते ॥**

जुह्वादीनां सादने विशेषमाह– स वा इति । प्रस्तरस्योपरि जुहूमेव सादयेत् । तस्याधस्ताद्बर्हिषि इतराः उपभृदाद्याः स्रुचः सादयेदित्यर्थः । अत एवोक्तं सूत्रकृता– 'बर्हिष्युपभृतं ध्रुवां च' (काश्रौ. २।८।१३) इति । तदेतदुपर्यधःसादनमुपपादयति– क्षत्रं वा इति । स्वातन्त्र्येण होमसाधनत्वात् जुहूः क्षत्रियजातिः । उपभृदादीनां तु जुहूवद्धोमे स्वातन्त्र्याभावात्, प्रत्युत तत्स्थस्याज्यस्य जुह्वामानेयत्वात् ता वैश्यजातिस्थानीयाः । शब्रासा.

**[1]क्षत्रं वै वरुणः । विशो मरुतः । क्षत्रमेवैतद्विश उत्तरं करोति । तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते ॥**

'यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः' (शब्रा. १४।४।२।२३) इति अग्रे समाम्नास्यते । अतो वरुणो देवेषु मध्ये क्षत्रियः, मरुतो देवविशः । तत्रोत्तरस्यामादौ वरुण इज्यते, दक्षिणस्यां मरुतः । तत्रोत्तरस्यामेवोत्तरवेदेर्निवपनात् क्षत्रियजातिमेव वैश्यजातेरुत्तर उपस्थितां करोति । अत एवेदानीं लोके तथा दृश्यते इति प्रसिद्धिमुदाहरति– तस्मादिति । शब्रासा.

**[2]अथास्मा आसन्दीमाहरन्ति । उपरिसद्यं वा एष जयति यो जयत्यन्तरिक्षसद्यम् । तदेनमुपर्यासीनमधस्तादिमाः प्रजा उपासते । तस्मादस्मा आसन्दीमाहरन्ति ॥**

विधत्ते– अथास्मा इति । अस्मै यूपादवरोहाय । आसन्दीलक्षणमुक्तं कात्यायनेन– 'औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमूतामाहरन्ति' (काश्रौ. ७।९।२४) इति । उपरिसद्यमित्यस्यायमर्थः– वाजपेयेन यागेन उपरिसद्यं उपरिसदनं जयति भद्रपीठादेरुपर्यवस्थानं प्राप्नोति । एतदुपपादनायाह– यो जयतीति । यः यूपारोहणेन अन्तरिक्षसद्यं आकाशे उपवेशनं जयति एषः इति पूर्वेण संबन्धः । शब्रासा.

(१) शब्रा. १।२।३।२.
(२) शब्रा. १।३।२।१४.
(३) शब्रा. १।३।२।१५.
(४) शब्रा. १।३।४।१५.

(१) शब्रा. २।५।२।६.
(२) शब्रा. ५।२।१।२२.

राज्ञा सह गामिनो राजकृतः सूतग्रामण्यः

**[1]तस्य छन्दाꣳस्यभितः साचयानि । यथा राज्ञोऽराजानो राजकृतः सूतग्रामण्यः, एवमस्य छन्दाꣳस्यभितः साचयानि ॥**

अभितः साचयः पुरः पश्चाच्च सहागन्तारः प्रधानपुरुषा इत्यर्थः । 'यथा राज्ञोऽराजानः' इत्यत्र अराजान इति अकारप्रश्लेषः । ते के ? राजकृतः राजत्वसंपादकाः पट्टाभिषेकस्य कर्तारः सूतग्रामण्यः सूतश्रेष्ठाः । शब्रासा.

**[2]यत्र वा अर्हते पचन्ति तदभितः साचयोऽन्वाभक्ता भवन्त्यराजानो राजकृतः सूतग्रामण्यः ॥**

प्रधानस्य आमन्त्रणे सति अप्रधाना अप्यनाहूता एव तमनुगच्छन्ति । शब्रासा.

मनुष्याणां प्रथमो राजा पृथी

**[3]अथ पार्थानि जुहोति । पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे । सोऽकामयत– सर्वमन्नाद्यमवरुन्धीयेति । तस्मा एतान्यजुहवुः । स इदꣳ सर्वमन्नाद्यमवरुरुधे । अपि ह स्मास्मा आरण्यान्पशूनभिह्वयन्ति– असावेहि राजा त्वा पक्ष्यत इति । तथेदꣳ सर्वमन्नाद्यमवरुरुधे । सर्वं ह वा अन्नाद्यमवरुन्धे यस्यैवं विदुष एतानि हूयन्ते * ॥**

त्रयो वर्णा ब्राह्मणस्य राज्ञश्चानुगामिनः

**[4]अथैतान् पशूनावर्तयन्ति । तेषामजः प्रथम एति, अथ रासभः, अथाश्वः । अथेतो यतामश्वः प्रथम एति, अथ रासभः, अथाजः । क्षत्रं वा अन्वश्वः । वैश्यं च शूद्रं चानु रासभः । ब्राह्मणमजः ॥**

* अस्य व्याख्यानं राजसूये राका. पृ. २७६ इत्यत्र द्रष्टव्यम् ।

(१) शब्रा. ३।४।१।७.

(२) शब्रा. ३।४।१।८.

(३) शब्रा. ५।३।५।४.

(४) शब्रा. ६।४।४।१२–१३.

**तद्यदितो यतामश्वः प्रथम एति । तस्मात् क्षत्रियं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति । अथ यदमुत आयतामजः प्रथम एति । तस्माद्ब्राह्मणं प्रथमं यन्तमितरे त्रयो वर्णाः पश्चादनुयन्ति । अथ यन्नैवेतो यतां नामुतो रासभः प्रथम एति । तस्मान्न कदाचन ब्राह्मणश्च क्षत्रियश्च वैश्यं च शूद्रं च पश्चादन्वितः । तस्मादेवं यन्त्यपापवस्यसाय । अथो ब्रह्मणा चैवैतत् क्षत्रेण चैतौ वर्णावभितः परिगृह्णीते, अनपक्रमिणौ कुरुते ॥**

अथैतेषां पशूनामावर्तनं विधत्ते– अथैतान् पशूनिति । स्वस्थानावस्थितानामेवाऽऽवर्तनम् । तत्राऽऽगन्तॄणां पशूनां क्रमं विधत्ते– तेषामजः प्रथम इति । पूर्वं इतः मृदाहरणार्थं यतां गन्तॄणां पशूनां मध्ये अश्वः प्रथमो गतः, रासभः मध्ये, पश्चादजः । अधुना अजः प्रथमः, रासभः मध्ये, पश्चादश्वः । गमनागमनयोरुभयोरपि रासभस्य मध्येऽवस्थानम्, अश्वाजयोरेव पौर्वापर्यम् । क्षत्रं वा अन्वश्वः इत्यादेरयमर्थः– अश्वादिपशुत्रयस्य क्षत्रिय- ( ? क्षत्रियादि )जातिसंबन्धः । क्षत्रियस्य राज्ञ इतरेभ्यस्त्रिभ्यो वैश्यशूद्रब्राह्मणेभ्यः पुरस्तात् गमनं लोके दृष्टमिति तत्र यथा पूर्वं गमनसमयेऽश्वस्य प्राथम्यं, तथा ब्राह्मणस्यानूचानस्य स्वव्यतिरिक्तवर्णत्रयात् प्रथमगमनं च दृश्यत इति अधुना अजस्य प्राथम्यम् । वैश्यशूद्रयोः क्षत्रियात् ब्राह्मणाद्वा पुरस्तात् गमनं नास्तीति मृदाहरणसमये पुनरागमनसमये च रासभस्य न प्राथम्यम् । तस्मात् कारणादेवं यन्ति अश्वपूर्वाः प्रथमे, अधुनाऽजपूर्वाः आगच्छन्ति अपापवस्यसाय पापपरिहाराय । ब्राह्मणेन क्षत्रियेण च एतौ वैश्यशूद्रौ अभितः मध्ये परिगृह्णीते, अनपक्रमिणौ अनपक्रान्तौ कुरुते । शब्रासा.

राजभिरन्यैरनुमत एव राजा भवति

**[1]यस्मै वै राजानो राज्यमनुमन्यन्ते स राजा भवति । न स यस्मै न ॥**

(१) शब्रा. ९।३।४।५, ९।४।१।१, ९।४।१।१३, ९।४।४।८.

यतः राजानो यस्मै पुरुषाय राज्यमनुमन्यन्ते स राजा भवति । यस्मै पुनर्नानुमन्यन्ते स राजा न भवति । शब्रासा.

ब्रह्मणः क्षत्रियोत्पत्तिः

[1]"**ब्रह्मं क्षत्त्रं पवते' इति पयः पुनाति । ब्रह्मण एव तत्क्षत्त्रं जनयति । ब्रह्मणो हि क्षत्त्रं जायते ॥**"

राज्यभ्रष्टेन राज्ञा सौत्रामणी कर्तव्या

[2]**दुष्टरीतुर्ह पौꣳसायनो दशपुरुषꣳ राज्यादपरुद्ध आस । रेवोत्तरसमु ह पाटवं चाक्रꣳ स्थपतिꣳ सृञ्जया अपरुरुधुः ॥**

दर्शनानि अत्र सौत्रामण्यङ्गगतानि इतिहासेनोच्यन्ते, त्रिपशोर्दक्षिणोत्तरेण च ऐन्द्रवायोधसयोः (? धसौ) पशू । दुष्टरीतुः नाम, पुंसोऽपत्यं पौंसायनः । दशपुरुषं पूर्वपुरुषादेव । यस्मिन्नेव काले राज्यादपरुद्धः अपनीतस्वामित्वः आस बभूव (अथ ?) तस्मिन्नेव काले रेवोत्तरसं नाम ब्राह्मणं पटोरपत्यं चाक्रं सृञ्जया राजानः स्वराष्ट्रात् अपरुरुधुः अपरुद्धवन्तः । शब्रासा.

**स होवाच दुष्टरीतुं पौꣳसायनम्– सौत्रामण्या त्वा याजयानि, यदिदꣳ सृञ्जयेषु राष्ट्रं तत् त्वयि धास्यामीति । तथेति । तयैनमयाजयत् ॥**

स रेवोत्तराः । दुष्टरीतुं पौंसायनमित्यादि स्पष्टम् । शब्रासा.

राज्यकामस्य राट् यज्ञः

[3]**अथैष राट् ॥**

राडित्येतन्नामकं क्रतुमाह– अथेति । उच्यत इति शेषः । राज्यहेतुत्वात् राडित्येतत् तस्य नाम भवति । ताब्रासा.

**यो राज्य आशꣳसमानो राज्यं न प्राप्नुयात् स एतेन यजेत । राजैवैनꣳ राजानं करोति । तं तु वै राजेति वदेयुर्यꣳ राजा राजानं कुर्यात् । राजैवैनꣳ राजानं करोति ॥**

तस्य फलमाह– य इति । यः पुमान् राज्ये विषयभूते सति आशंसमानः अभिलाषं कुर्वन् केनचित् प्रतिबन्धेन राज्यं न प्राप्नुयात् स पुमान् राज्यप्राप्त्यर्थं एतेन राट्शब्दाभिधेन क्रतुना यजेत । तदानीं राजैव क्रत्वन्तराणां राजभूत एवायं क्रतुरेनं राजानं करोति । यद्वा, राजैव राडित्येतन्नामकेन क्रतुनैवैनं ऋत्विक्संघः राजानं करोति । यं क्रतुना राजानं कुर्यात् तमेवैनमविवादेन सर्वे जना राजेति वदेयुः । इतरेषु राज्यं कुर्वत्स्वपि राजत्वव्यवहारं न कुर्वन्ति, तेषामेतदीयभृत्यत्वात् । युक्तं चैतत् , क्रतुनैव राजत्वस्य प्राप्तत्वात् । ताब्रासा.

**छन्दोऽन्ये यज्ञाः संपद्यन्ते । स्तोममेषः । वीर्यं वै स्तोमः । वीर्य एवाध्यभिषिच्यते ॥**

इतरक्रतुभ्योऽस्मिन् राजि क्रतौ को विशेष इत्याशङ्क्याऽऽह– छन्द इति । अन्ये यज्ञाः सहस्रादयः छन्दोमात्रं बृहत्यादिकं प्राप्नुवन्ति । एष तु राट् स्तोमं छन्दसां संघं प्राप्नोति संघस्य चैकैकस्मादधिकं वीर्यं प्रसिद्धम् । ताब्रासा.

**अष्टावेकविꣳशाः । सꣳस्तुतो भवति । अष्टौ वै वीरा राष्ट्रꣳ समुद्यच्छन्ति राजभ्राता च राजपुत्रश्च पुरोहितश्च महिषी च सूतश्च ग्रामणी च क्षत्ता च संग्रहीता च । एते वै वीरा राष्ट्रꣳ समुद्यच्छन्ति । एतेष्वेवाध्यभिषिच्यते ॥**

अस्य राजक्रतोः स्तोमप्राप्तिं दर्शयति– अष्टाविति । एकविंशतिसंख्याकाभिः स्तोत्रीयाभिर्निष्पन्नाः स्तोमा एकविंशाः । ते चाष्टसंख्याका अस्मिन् राजि विद्यन्ते । तैरष्टभिरेष राट् सम्यक् स्तुतो भवति । तथाहि– त्रयः पवमानाः सप्तदशस्तोमोपेताः । तत्रैकपञ्चाशत् स्तोत्रीया भवन्ति । आज्यस्तोत्राणि चत्वारि त्रिवृत्स्तोमयुक्तानि । त्रिवृत्स्तोमस्य चैकस्य नव स्तोत्रीयाः । तस्मादाज्येषु षट्त्रिंशत्संख्याकाः स्तोत्रीयाः भवन्ति । चत्वारि पृष्ठस्तोत्राणि पञ्चदशस्तोमयुक्तानि । तस्य स्तोमस्य चैकस्य पञ्चदश स्तोत्रीयाः । तस्मात् पृष्ठेषु षष्टिसंख्याकाः स्तोत्रीया

(१) शब्रा. १२।७।३।१२.
(२) शब्रा. १२।९।३।१-२.
(३) ताब्रा. १९।१।१-५.

भवन्ति । ताः सर्वा मिलित्वा सप्तचत्वारिंशदधिकं शतं स्तोत्रीयाः संपद्यन्ते । ताश्चैकविंशतिसंख्यया विच्छेदिताः सप्तसंख्याका एकविंशस्तोमाः संपद्यन्ते । चरमस्तोमे स्वत एवैकविंशः स्तोमो विहितः । एवमस्मिन् राजि सर्वेऽप्यष्टसंख्याका एकविंशस्तोमा भवन्ति । यथा लोके वीराः पुरुषाः अष्टसंख्याका राष्ट्रं सम्यक् निर्वहन्ति, एवमेतेऽष्टसंख्याका एकविंशस्तोमा राडित्येतन्नामकं क्रतुं सम्यक् निर्वहन्ति । राजभ्रात्रादयस्ते अष्टौ वीरपुरुषाः अष्टसंख्याकाः । तत्र भ्रातृपुत्रपुरोहितमहिष्याख्याश्चत्वारः प्रसिद्धाः । सूतो रथपालः, ग्रामणी ग्रामेषु योगक्षेमविचारकः, क्षत्ता याष्टीकः द्वारपालकः, संग्रहीता भाण्डागारस्य पालकः । एतेषां राष्ट्रनिर्वाहकत्वं प्रसिद्धम् । अष्टसंख्याकैरेकविंशस्तोमैर्युक्तं राजक्रतुमनुतिष्ठन् तेष्वष्टसु वीरपुरुषेष्वभिषिक्तो भवति । ताब्रासा.

**क्षत्त्रं वा एकविꣳशः प्रतिष्ठा । क्षत्त्रस्यैवास्य प्रकाशो भवति । प्रतितिष्ठति य एवं वेद ॥**

एकविंशस्तोमप्रयुक्तं फलमाह– क्षत्त्रमिति । योऽयमेकविंशस्तोमः सोऽयं प्रतिष्ठा, प्रकृतस्य क्रतोः समाप्तिस्थानम् । अतोऽयमन्येषु स्तोमेषु क्षत्रं वै क्षत्रियजातिवत् स्तोमराज एव । तस्माद्यथा लोके क्षत्त्रस्य विप्रवैश्यजातिषु प्रकाशः शौर्यप्रसिद्धिरधिका एवमेवास्यैकविंशस्तोमस्यान्येषु त्रिवृदादिस्तोमेषु प्रकाशः प्रतिष्ठात्वप्रसिद्धिरस्ति । यः पुमानेवं वेद सोऽयं धनधान्यादिभिः प्रतिष्ठां लभते । ताब्रासा.

इन्द्रस्तोमः क्षत्रयज्ञः

[1]अथैष इन्द्रस्तोमः । इन्द्रो वा अकामयत– सर्वेषां देवानां श्रेष्ठतां गच्छेयमिति । स एतं यज्ञमपश्यत् । तमाहरत् । तेनायजत । ततो वै स सर्वेषां देवानां श्रेष्ठतामगच्छत् । गच्छति स्वानां श्रेष्ठतां य एवं वेद । इन्द्रे ह वा अग्रे यज्ञ आस । श्रीर्ह वा अस्मिंस्तदास । यज्ञमु ह वाव देवानां श्रीः । तमु ह वृत्रोऽभिववृधे । स देवानुपाधावत्– युष्माभिर्बलेनेमं वृत्रं हनानीति । तमब्रुवन्– स वै नो यस्तेऽयं निष्केवल्यो यज्ञस्तं प्रयच्छेति । तस्माद्राजनि विजिगीषमाणे विशः प्रदानमिच्छन्ते । तस्मादु राजा विजिगीषमाणो विश एव प्रदानं प्रयच्छति । स वसुभ्य एव प्रातःसवनं प्रायच्छत्, रुद्रेभ्यो माध्यंदिनं सवनं, आदित्येभ्यस्तृतीयसवनं विश्वेभ्यश्च देवेभ्यः । तैर्बलेनेन्द्रो वृत्रमहन् । अजयन् देवा असुरान् । स वृत्रं हत्वा विजित्य पृथगेवैषामिमा श्रियो दीप्यमाना अपश्यत् । तमभिशस्तिरविन्दत् । स ऐक्षत– कथं न्वहमेषामिमा श्रियः संवृञ्जीयेति । स एतेनैव यज्ञेनायजत । तेनैषां सर्वा श्रियः समवृङ्क्त । वृङ्क्ते द्विषतो भ्रातृव्यस्य श्रियं य एवं वेद ॥

स ऐन्द्रीष्वेव सर्वो भवति । ऐन्द्रीष्वेव प्रातःसवनं भवति, ऐन्द्रीषु माध्यंदिनं सवनं, ऐन्द्रीषु तृतीयसवनम् । तद्यद्गायत्रं सत्प्रातःसवनमैन्द्रीषु क्रियते वसूनामेव तेन यज्ञं समवृङ्क्त । अथ यत्त्रैष्टुभं सन्माध्यंदिनं सवनमैन्द्रीषु क्रियते रुद्राणामेव तेन यज्ञं समवृङ्क्त । अथ यज्जागतं सत्तृतीयसवनमैन्द्रीषु क्रियत आदित्यानामेव तेन यज्ञं समवृङ्क्त, विश्वेषां च देवानाम् । त एनमात्तयज्ञा उपासीदन् विशः, ते सामयज्ञेनोऽन्वाभजेति, यथा भर्तारं भार्या उपसीदन्ति तथा । स वसूनेव प्रातःसवनेऽन्वाभजत्, रुद्रान् माध्यंदिने सवने, आदित्यांस्तृतीयसवने, विश्वांश्च देवान् । यथा राजा विजित्य स्वे वित्ते भार्यानन्वाभजेदेवमेवैनांस्तदन्वाभजत् । तस्मादिन्द्राय वसुमते रुद्रवत आदित्यवते विश्वदेव्यावत इत्यन्वाहुः । स पञ्चदशो भवति । वज्रो वै पञ्चदशः । वज्र इन्द्रः । ऐन्द्र एष यज्ञः । तत् तत्सलक्ष्म क्रियते । स उक्थ्यो भवति । विड् वा उक्थानि । क्षत्रमेव तद्विश्यध्यूहन्ति । तस्मा(त्) क्षत्रियो विश्यध्यूढः । स य श्रीकाम स्यात्स एतेन यजेत । क्षत्रं श्रीः । क्षत्रयज्ञ एषः । अश्नुते श्रियम् ॥

(१) जैब्रा. २।१३९–१४०.

धर्मनिष्ठो राजा एव धर्मः

[1]तासु धर्म। धर्मणा वै देवा धर्ममादायासुराणां विधर्मणैनान् विधर्मणः कृत्वा पराभावयन्। धर्मणैव धर्ममादाय द्विषतो भ्रातृव्यस्य विधर्मणैनं विधर्माणं कृत्वा पराभावयति य एवं वेद। तच्छ्रीर्वै धर्मः, राज्यं वै धर्मः, धर्मेण वै राजा धर्मः, धर्म स्वानां भवति, ऐनं स्वा यन्ति, धर्मणो धारयति। तदाहुर्नवमेऽहनि कार्यम्। अदो वै क्षत्रं यद्वार्हतम्। अथेदं विड् राथंतरमिति। तदु वा आहुर्विधर्माणो वै राजानो न वै तेऽन्यैर्मनुष्यै स्वधर्माणः। इदमु वाव क्षत्रं यश्चतुश्चत्वारिंशं त्रैष्टुभम्। तस्मान्नवम एवाहन्विधर्म स्यादिहैतदिति। हिन्वन्ति सूरमुस्रय स्वसारो जामयस्पतिम्। महामिन्दुं महीयुवः॥ इति महद्वत्येतदहर्यच्चतुश्चत्वारिंशम्। तासु विशोविशीयमुक्तब्राह्मणम्। तदैळं भवति। पशवो वा इळा। पशवश्छन्दोमाः। पशूनामेवावरुद्ध्यै॥

राजा एव इन्द्रो वरुणः सोमश्च, राष्ट्रमेव देवविशः

[2]क्षत्रं च राष्ट्रं चर्तं च सत्यं च तान्यवस्तात्तपश्च तेजश्च स्वधा चामृतं च तान्यु परस्तात्। तद्यदत्र क्षत्रमिन्द्रो वा वरुणो वा सोमो वा राजा तत्तत्। अथ यद्राष्ट्रं यद्देवविशो मरुतस्तत्तत्। ऋतं रात्रिः। सत्यं तदहः। तपो विद्युत्। तेजो यो विद्युतोऽशनिः पतति तत्तत्। स्वधा वृष्टिः। अन्नं तदमृतम्। तस्यैष श्लोकः– 'क्षत्रं राष्ट्रमृतं सत्यं ब्रह्मणो निहितावराः। तपस्तेज स्वधामृतं त ऊर्ध्वास आसते, मध्ये ब्रह्म विराजति॥' इति। एतदु हैतन्मध्ये ब्रह्म विराजति। य उ एवंविदस्त ऊर्ध्वास आसते। स यथा क्षत्रियः प्रतिनिहित स्यादेवमेवैतद्ब्रह्म प्रतिनिहितमनत्ययनाय॥

(१) जैब्रा. ३।२३१.
(२) जैब्रा. ३।३७२.

राजाभिषेकः

[1]राजानमभिषेचयेत्तिष्येण श्रवणेन वा। व्रीहियवैस्तिलमाषैर्दधिमधुसुमनोजातरूपैर्यशस्विनीभ्यो नदीभ्यः समुद्राच्चोदकान्याहृत्यौदुम्बरे भद्रासने वैयाघ्रे चर्मण्युत्तरलोम्न्यासीनं जीवन्तीनां गवां शृङ्गकोशैरभिषिञ्चेत् 'अभ्रातृव्यः' इति रहस्येन। यमेवं कामयेतैकराजः स्यान्नास्य चक्रं प्रतिहन्येतेत्येकवृषेणाभिषिञ्चेत्। अभिषेके दद्याद्ग्रामवरं दासीशतं गोसहस्रं तदधीनश्च भवेत्॥

अस्यार्थं माधवाचार्य आह– पुरोहितो राजानमभिषेचयेत् अभिषिञ्चेद्वक्ष्यमाणैः साधनैः। यद्यपि राजशब्दः अभिषेकसंस्कृतस्य क्षत्रियस्य वाचकः, तथाऽपि भाविनीं संज्ञामाश्रित्य 'यूपं तक्षति' इत्यादिवत् अभिषेक्तव्यराजानमित्युपचारप्रयोगः। अवेष्ट्यधिकरणे तु भाविसंज्ञां प्रत्याख्याय 'यूपं तक्षति' इत्यनेन वैषम्यमुक्तम्। तिष्यः पुष्यः। व्रीह्यादिजातरूपान्तैर्द्रव्यैर्मिश्रितैः यशस्विनीभ्यः पावनत्वप्रयुक्तख्यातियुक्ताभ्यो गङ्गातुङ्गभद्रादिभ्यो नदीभ्यः समुद्राच्चोदकानि पृथक् पृथगाहृत्य तैः उदुम्बरसंबन्धिनि भद्रासने चतुष्पदोपेते पर्यास्तृते व्याघ्रचर्मण्युपरिस्थितलोम्न्यासीनं जीवोपेतानां गवां शृङ्गाणि छित्वा तदग्रच्छिद्रनिःसृतैर्जलैः 'अभ्रातृव्यः' इति रहस्येन साम्ना 'उदकानि, शृङ्गकोशैः' इत्युभयत्र बहुवचननिर्देशात् पृथक् गङ्गाद्युदकैरभिषिञ्चेत्। पृथगाहरणस्यापीदमेव प्रयोजनम्। कामनाभेदेन मन्त्रविशेषमाह– पुरोहितो यं राजानमेवं कामयेत कृत्स्नस्य भूमण्डलस्यैक एव राजा स्यात्, नास्य चक्रे भूमण्डलं केनचिदपि वैरिणा प्रतिहतं भवेदिति, तं रहस्यस्थाने एकवृषेण इति साम्नाऽभिषिञ्चेत्। अन्यत् प्रागुक्तमेव। राजा पुरोहितायोत्कृष्टं ग्रामं दासीशतं सहस्रं गाश्च दद्यात्। तदधीनश्च भवेत्। * राप्र. ५८–५९

* राकौ. राप्रवत्।

(१) राप्र. ५८ सामविधानब्राह्मणे ; राकौ. ३३८ राजानमभिषेचयेत् (सामविदथ ब्राह्मणो राजानमभिषिञ्चेत्) वैयाघ्रे च (वैयाघ्रच) स्यान्नास्य (स्यादिति नास्य).

राजाभिषेकः

**'अथ राज्ञोऽभिषेकविधिं व्याख्यास्यामः । बिल्वप्रभृतीन् संभारान् संभृत्य षोडश कलशान् षोडश बिल्वानि वल्मीकस्य च मृत्तिकां सर्वान्नं सर्वरसान् सर्वबीजानि । तत्र चत्वारः सौवर्णाश्चत्वारो राजताश्चत्वारस्ताम्राश्चत्वारो मृन्मयाः । तान् ह्रदे सरसि वोर्ध्वस्रुतो 'नामैनाम' इत्युदकेन पूरयित्वा वेदिपृष्ठे संस्थाप्य कुम्भेषु बिल्वमेकैकं दद्यात् । सर्वान्नं सर्वरसान् सर्वबीजानि च प्रक्षिप्याभयैरपराजितैरायुष्यैः स्वस्त्ययनैः सौवर्णेषु संपातान्, संस्राव्यैः संसिक्तीयैश्च राजतेषु, भैषज्यैरंहोमुचैस्ताम्रेषु, संवेशसंवर्गाभ्यां शान्तातीयैः प्राणसूक्तेन च मृन्मयेषु । ततस्तान् कलशान् गृहीत्वा स्तोत्रियैः पवित्रियैः राजानमभिषिञ्चत् । 'भूमिमिन्द्रियं च वर्धय क्षत्रियं मे' इति सिंहासनमारूढमभिमन्त्रयेत् । एवमभिषिक्तस्तु रसान् प्राश्नीयाद्विप्रेभ्यश्च दद्याद्गोसहस्रं सदस्येभ्यः, कर्त्रे ग्रामवरम् । विपुलं यशः प्राप्नोति, भुङ्क्ते धरां, जितशत्रुः सदा भवेत् ॥**

(१) अन्नं यदुप्तं न प्ररोहति । बीजं प्ररोहार्हं व्रीह्यादि । ऊर्ध्वस्रुतः ऊर्ध्वमुखान् । नामेत्यादयो मन्त्राः । तत्र कपिञ्जलाधिकरणन्यायेन बहुवचनेन त्रयाणां त्रयाणामुपादानम् । संवेशसंवर्गप्राणसूक्तेष्वेकैकस्य । भूम्यादिर्मन्त्रः । राप्र. ४३

(२) अत्र बहुवचने त्रयस्त्रयो ग्राह्याः, कपिञ्जलन्यायात् । संवर्त( १ गं )संवेशप्राणसूक्तेष्वेकैक एवेति तातचरणाः । * नीम. ५

(३) 'अभयैः, अपराजितैः' इत्यादिस्थले कपिञ्जलाधिकरणन्यायेन त्रयाणां त्रयाणामुपादानमिति केचित् । तन्न, शाखान्तरसंवादेन गणोपादानस्यैवौचित्यात्, संवेशसंवर्गादिषु मन्त्रगणात्मकसूक्तस्यैव विनियोगेन तत्प्रायपाठाच्च । * राकौ. ३३६

पुरा आत्मज्ञानसामर्थ्यात् क्षत्रियाणां सर्वप्रशासनमभूत्

**'श्वेतकेतुर्हाऽऽरुणेयः पञ्चालानाꣳ समितिमेयाय । तꣳ ह प्रवाहणो जैवलिरुवाच । कुमारानु त्वाऽशिषत्पितेति । अनु हि भगव इति ॥**

ब्रह्मादिस्तम्बपर्यन्ताः संसारगतयो वक्तव्या वैराग्यहेतोर्मुमुक्षूणामित्यत आख्यायिका आरभ्यते— श्वेतकेतुर्हाऽऽरुणेय इति । श्वेतकेतुर्नामतः, ह इत्यैतिह्यार्थः । अरुणस्यापत्यं आरुणिः, तस्यापत्यं आरुणेयः । पञ्चालानां जनपदानां समितिं सभां एयाय आजगाम । तमागतवन्तं प्रवाहणो नामतो जीवलस्य अपत्यं जैवलिः उवाच उक्तवान् । हे कुमारानु त्वा त्वां अशिषत् अन्वशिषत्पिता । किमनुशिष्टस्त्वं पित्रेत्यर्थः । इत्युक्तः स आह अनु हि अनुशिष्टोऽस्मि भगव इति सूचयन्नाह । शंकर.

**वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । न भगव इति । वेत्थ यथा पुनरावर्तन्त३ इति । न भगव इति । वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति । न भगव इति ॥**

तं होवाच यद्यनुशिष्टोऽसि, वेत्थ यदितोऽस्माल्लोकात् अधि ऊर्ध्वं यत्प्रजाः प्रयन्ति यद्गच्छन्ति तत्किं जानीषे इत्यर्थः । न भगव इत्याहेतरः न जानेऽहं तद्यत्पृच्छसि । एवं तर्हि वेत्थ जानीषे यथा येन प्रकारेण पुनरावर्तन्त इति । न भगव इति प्रत्याह । वेत्थ पथोर्मार्गयोः सह-

---

(१) राप्र. ४२-४३ भैषज्यै ( भैषज्यवै) वर्धय ( वर्धयित्वा) आथर्वणगोपथब्राह्मणे ; नीम. ४-५ कुम्भेषु ( कुम्भे ) संस्राव्यैः ( संश्राव्यैः ) भैषज्यै ( भैषज्यवै ) संवर्गाभ्यां ( संवर्ग्याभ्यां ) स्तोत्रियः पवित्रियैः रा ( स्तौस्त्रियैः पवित्रियैरभिष्टुयै रा ) गोपथब्राह्मणे ; राकौ. ३३५-३३६ मृन्मयाः + ( कुम्भाः ) बीजानि च ( वीजानि ) संसिक्तीयैश्च ( संसिच्य ) रंहोमुचै ( रंहोमुच्यै ) शान्ता ( शन्ता ) स्तोत्रियैः पवित्रियैः ( श्रोत्रियैः पवित्रतमैः ) वर्धय ( वर्धयित्वा ) आथर्वणगोपथब्राह्मणे.

* शेषं राप्रवत् ।

(१) छाउ. ५।३।१-७.

प्रयाणयोर्देवयानस्य पितृयाणस्य च व्यावर्तनमितरेतर-वियोगस्थानं सह गच्छतामित्यर्थः । न भगव इति । शंकर

**वेत्थ यथाऽसौ लोको न संपूर्यत३ इति । न भगव इति । वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति । नैव भगव इति ॥**

वेत्थ यथाऽसौ लोकः पितृसंबन्धी, यं प्राप्य पुनरावर्तन्ते, बहुभिः प्रयद्भिरपि येन कारणेन न संपूर्यत इति । न भगव इति प्रत्याह । वेत्थ यथा येन क्रमेण पञ्चम्यां पञ्चसंख्याकायामाहुतौ हुतायामाहुतिनिर्वृत्ता आहुतिसाधनाश्चाऽऽपः पुरुषवचसः पुरुष इत्येवं वचोऽभिधानं यासां हूयमानानां क्रमेण षष्ठाहुतिभूतानां ताः पुरुषवचसः पुरुषशब्दवाच्या भवन्ति पुरुषाख्यां लभन्त इत्यर्थः । इत्युक्तो नैव भगव इत्याह । नैवाहमत्र किंचन जानामीत्यर्थः । शंकर.

**अथानु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् । कथꣳ सोऽनुशिष्टो ब्रुवीतेति । स हाऽऽयस्तः पितुरर्धमेयाय । तꣳ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥**

अथैवमज्ञः सन् किमनु कस्मात् त्वमनुशिष्टोऽस्मीत्यवोचथाः उक्तवानसि । यो हीमानि मया पृष्टान्यर्थजातानि न विद्यात् न विजानीयात् कथं स विद्वत्स्वनुशिष्टोऽस्मीति ब्रुवीत । इत्येवं स श्वेतकेतू राज्ञाऽऽयस्तः आयासितः सन् पितुरर्धं स्थानमेयाय आगतवान् , तं च पितरमुवाच– अननुशिष्य अनुशासनमकृत्वैव मा मां किल भगवान् समावर्तनकालेऽब्रवीदुक्तवान् अनु त्वाऽशिषमन्वशिषं त्वामिति । शंकर.

**पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् । तेषां नैकंचनाशकं विवक्तुमिति । स होवाच । यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकंचन वेद । यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥**

**स ह गौतमो राज्ञोऽर्धमेयाय । तस्मै ह प्राप्तायार्हां चकार । स ह प्रातः सभाग उदेयाय । तꣳ होवाच । मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति । स होवाच । तवैव राजन् मानुषं वित्तम् । यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति । स ह कृच्छ्री बभूव ॥**

यतः पञ्च पञ्चसंख्याकान् प्रश्नान् राजन्यबन्धुः राजन्याः बन्धवोऽस्येति राजन्यबन्धुः, स्वयं दुर्वृत्त इत्यर्थः । अप्राक्षीत् पृष्टवान् तेषां प्रश्नानां नैकंचन एकमपि नाशकं न शक्तवानहं विवक्तुं विशेषेणार्थतो निर्णेतुमित्यर्थः । स होवाच पिता यथा मा मां वत्स, त्वं तदाऽऽगतमात्र एवैतान् प्रश्नानवदः उक्तवानसि, तेषां नैकंचनाशकं विवक्तुमिति तथा मां जानीहि, त्वदीयाज्ञानेन लिङ्गेन मम तद्विषयमज्ञानं जानीहीत्यर्थः । कथं, यथा अहमेषां प्रश्नानामेकंचन एकमपि न वेद न जाने इति । यथा त्वमेव अङ्ग, प्रश्नान्न जानीषे तथाऽहमप्येतान्न जाने इत्यर्थः । अतो मय्यन्यथाभावो न कर्तव्यः । कुतः, एतदेवं यतो न जाने । यद्यहमिमान् प्रश्नान् अवेदिष्यं विदितवानस्मि कथं ते तुभ्यं प्रियाय पुत्राय समावर्तनकाले पुरा नावक्ष्यं नोक्तवानस्मि ? इत्युक्त्वा स ह गौतमो गोत्रतः राज्ञो जैवलेरर्धं स्थानमेयाय गतवान् । तस्मै ह गौतमाय प्राप्ताय अर्हां अर्हणां चकार कृतवान् । स च गौतमः कृतातिथ्य उषित्वा परेद्युः प्रातःकाले सभागे सभां गते राज्ञि उदेयाय, भजनं भागः पूजा सेवा, सह भागेन वर्तमानो वा सभागः पूज्यमानोऽन्यैः स्वयं गौतमः उदेयाय राजानमुद्गतवान् । तं होवाच गौतमं राजा– मानुषस्य भगवन् गौतम, मनुष्यसंबन्धिनो वित्तस्य ग्रामादेः वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः । स होवाच गौतमः– तवैव तिष्ठतु राजन्, मानुषं वित्तम् । यामेव कुमारस्य मम पुत्रस्यान्ते समीपे वाचं पञ्चप्रश्नलक्षणामभाषथाः उक्तवानसि तामेव वाचं मे मह्यं ब्रूहि कथय । इत्युक्तो गौतमेन राजा स ह कृच्छ्री दुःखी बभूव । कथं त्विदमिति । शंकर.

**तꣳ ह चिरं वसेत्याज्ञापयांचकार । तꣳ होवाच । यथा मा त्वं गौतमावदः । यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति । तस्मादु**

**सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति । तस्मै होवाच ॥**

स ह कृच्छ्रीभूतः अप्रत्याख्येयं ब्राह्मणं मन्वानो न्यायेन विद्या वक्तव्येति मत्वा तं ह गौतमं चिरं दीर्घकालं वसेत्याज्ञापयांचकार आज्ञप्तवान् । यत्पूर्वं प्रत्याख्यातवान् राजा विद्यां, यच्च पश्चाच्चिरं वसेत्याज्ञप्तवान्, तन्निमित्तं ब्राह्मणं क्षमापयति हेतुवचनोक्त्या । तं होवाच राजा– सर्वविद्यो ब्राह्मणोऽपि सन् यथा येन प्रकारेण मा मां हे गौतमावदस्त्वं तामेव विद्यालक्षणां वाचं मे ब्रूहीत्यज्ञानात्तेन त्वं जानीहि । तत्रास्ति वक्तव्यं यथा येन प्रकारेणेयं विद्या प्राक् त्वत्तो ब्राह्मणान्न गच्छति न गतवती, न च ब्राह्मणा अनया विद्ययाऽनुशासितवन्तः, तथैतत्प्रसिद्धं लोके । यतः तस्मादु पुरा पूर्वं सर्वेषु लोकेषु क्षत्रस्यैव क्षत्रजातेरेवानया विद्यया प्रशासनं प्रशास्तृत्वं शिष्याणामभूद्बभूव । क्षत्रियपरंपरयैवेयं विद्यैतावन्तं कालमागता । तथाऽप्यहमेतां तुभ्यं वक्ष्यामि, त्वत्संप्रदानादूर्ध्वं ब्राह्मणान् गमिष्यति । अतो मया यदुक्तं तत्क्षन्तुमर्हसि । इत्युक्त्वा तस्मै होवाच विद्यां राजा । शंकर.

क्षत्रियो राजा सर्वश्रेष्ठः

**[1]ब्रह्म वा इदमग्र आसीदेकमेव । तदेकꣳ सन्न व्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रं, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात्क्षत्रात्परं नास्ति । तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये । क्षत्र एव तद्यशो दधाति । सैषा क्षत्रस्य योनिर्यद्ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम् । य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति । स पापीयान् भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥**

ब्रह्म वा इदमग्र आसीत्– यदग्निं सृष्ट्वा अग्निरूपापन्नं ब्रह्म ब्राह्मणजात्यभिमानात् ब्रह्मेत्यभिधीयते– वै, इदं क्षत्रादिजातं ब्रह्मैव, अभिन्नमासीत् एकमेव, न आसीत् क्षत्रादिभेदः । तद्ब्रह्म एकं क्षत्रादिपरिपालयित्रादिशून्यं सत् न व्यभवत् न विभूतवत्, कर्मणे नालमासीदित्यर्थः । ततस्तद्ब्रह्म ब्राह्मणोऽस्मि ममेत्थं कर्तव्यमिति ब्राह्मणजातिनिमित्तं कर्म चिकीर्षु आत्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपं अत्यसृजत अतिशयेनासृजत सृष्टवत् । किं पुनस्तद्यत् सृष्टम् ? क्षत्रं क्षत्रियजातिः । तत् व्यक्तिभेदेन प्रदर्शयति– यान्येतानि प्रसिद्धानि लोके, देवत्रा देवेषु, क्षत्राणीति । जात्याख्यायां पक्षे बहुवचनस्मरणात् व्यक्तिबहुत्वाद्वा भेदोपचारेण बहुवचनम् । कानि पुनस्तानीत्याह– तत्राभिषिक्ता एव विशेषतो निर्दिश्यन्ते । इन्द्रः देवानां राजा, वरुणः यादसां, सोमो ब्राह्मणानां, रुद्रः पशूनां, पर्जन्यो विद्युदादीनां, यमः पितॄणां, मृत्युः रोगादीनां, ईशानः भासामित्येवमादीनि देवेषु क्षत्राणि । तदनु इन्द्रादिक्षत्रदेवताधिष्ठितानि मनुष्यक्षत्राणि सोमसूर्यवंश्यानि पुरूरवःप्रभृतीनि सृष्टान्येव द्रष्टव्यानि । तदर्थं एव हि देवक्षत्रसर्गः प्रस्तुतः । यस्मात् ब्रह्मणा अतिशयेन सृष्टं क्षत्रं, तस्मात् क्षत्रात्परं नास्ति ब्राह्मणजातेरपि नियन्तृ । तस्मात् ब्राह्मणः कारणभूतोऽपि क्षत्रियस्य क्षत्रियं अधस्तात् व्यवस्थितः सन् उपरि स्थितमुपास्ते । क्व ? राजसूये । क्षत्र एव तत् आत्मीयं यशः ख्यातिरूपं ब्रह्मेति दधाति स्थापयति । राजसूयाभिषिक्तेन आसन्द्यां स्थितेन राज्ञा आमन्त्रितो ब्रह्मन्निति ऋत्विक् पुनस्तं प्रत्याह– त्वं राजन् ब्रह्मासीति । तदेतदभिधीयते– क्षत्र एव तद्यशो दधातीति । सैषा प्रकृता क्षत्रस्य योनिरेव, यद्ब्रह्म । तस्मात् यद्यपि राजा परमतां राजसूयाभिषेकगुणं गच्छति आप्नोति ब्रह्मैव ब्राह्मणजातिमेव, अन्ततः अन्ते कर्मपरिसमाप्तौ उपनिश्रयति आश्रयति स्वां योनिं, पुरोहितं पुरो निधत्त इत्यर्थः । यस्तु पुनर्बलाभिमानात् स्वां योनिं ब्राह्मणजातिं ब्राह्मणं य उ एनं हिनस्ति हिंसति न्यग्भावेन पश्यति, स्वां आत्मीयामेव स योनिमृच्छति स्वं प्रसवं विच्छिनत्ति विनाशयति । स एतत्कृत्वा पापीयान् पापतरो भवति । पूर्वमपि क्षत्रियः पाप एव, क्रूरत्वात् । आत्मप्रसवहिंसया सुतराम् । यथा लोके श्रेयांसं प्रशस्ततरं हिंसित्वा परिभूय पापतरो भवति तद्वत् ।

शंकर.

(१) बृउ. १।४।११.

प्रजा राज्ञ आतिथ्यं अभिसमायनं च कुर्वन्ति

[1]तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्ते– अयमायाति, अयमागच्छतीति । एवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रतिकल्पन्ते– इदं ब्रह्मायाति, इदमागच्छतीति ॥

तत्र अस्य इदं शरीरं परित्यज्य गच्छतः न अन्यस्य देहान्तरस्योपादाने सामर्थ्यमस्ति, देहेन्द्रियवियोगात् । न च अन्ये अस्य भृत्यस्थानीयाः, गृहमिव राज्ञे, शरीरान्तरं कृत्वा प्रतीक्षमाणा विद्यन्ते । अथैवं सति कथं अस्य शरीरान्तरोपादानमिति । उच्यते– सर्वं ह्यस्य जगत् स्वकर्मफलोपभोगसाधनत्वाय उपात्तम् । स्वकर्मफलोपभोगाय च अयं प्रवृत्तः देहाद्देहान्तरं प्रतिपित्सुः । तस्मात् सर्वमेव जगत् स्वकर्मणा प्रयुक्तं तत्कर्मफलोपभोगयोग्यं साधनं कृत्वा प्रतीक्षत एव, ‘ कृतं लोकं पुरुषोऽभिजायते ’ इति श्रुतेः– यथा स्वप्नात् जागरितं प्रतिपित्सोः । तत्कथमिति लोकप्रसिद्धो दृष्टान्त उच्यते– तत् तत्र यथा राजानं राज्याभिषिक्तं आयान्तं स्वराष्ट्रे, उग्राः जातिविशेषाः क्रूरकर्माणो वा, प्रत्येनसः प्रति प्रति एनसि पापकर्मणि नियुक्ताः प्रत्येनसः तस्करादिदण्डनादौ नियुक्ताः, सूताश्च ग्रामण्यश्च सूतग्रामण्यः– सूताः वर्णसंकरजातिविशेषाः, ग्रामण्यः ग्रामनेतारः, ते पूर्वमेव राज्ञ आगमनं बुद्ध्वा अन्नैः भोज्यभक्ष्यादिप्रकारैः, पानैः मदिरादिभिः, आवसथैश्च प्रासादादिभिः प्रतिकल्पन्ते निष्पन्नैरेव प्रतीक्षन्ते– अयं राजा आयाति अयमागच्छतीत्येवं वदन्तः । यथा अयं दृष्टान्तः, एवं ह एवंविदं कर्मफलस्य वेदितारं संसारिणमित्यर्थः । कर्मफलं हि प्रस्तुतं, तत् एवंशब्देन परामृश्यते । सर्वाणि भूतानि शरीरकर्तॄणि, करणानुग्रहीतॄणि च आदित्यादीनि, तत्कर्मप्रयुक्तानि कृतैरेव कर्मफलोपभोगसाधनैः प्रतीक्षन्ते– इदं ब्रह्म भोक्तृ कर्तृ च अस्माकं आयाति, तथा इदमागच्छतीति एवमेव च कृत्वा प्रतीक्षन्ते इत्यर्थः । शंकर.

(१) बृउ. ४।३।३७–३८.

तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्ति । एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति । यत्रैतदूर्ध्वोच्छ्वासी भवति ॥

तमेवं जिगमिषुं के सह गच्छन्ति । ये वा गच्छन्ति, ते किं तत्क्रियाप्रणुन्नाः, आहोस्वित् तत्कर्मवशात् स्वयमेव गच्छन्ति– परलोकशरीरकर्तॄणि च भूतानीति । अत्रोच्यते दृष्टान्तः– तद्यथा राजानं प्रयियासन्तं प्रकर्षेण यातुमिच्छन्तं, उग्राः प्रत्येनसः सूतग्रामण्यः तं यथा अभिसमायन्ति आभिमुख्येन समायन्ति एकीभावेन तमभिमुखा आयन्ति अनाज्ञप्ता एव राज्ञा केवलं तज्जिगमिषाभिज्ञाः, एवमेव इममात्मानं भोक्तारं अन्तकाले मरणकाले सर्वे प्राणाः वागादयः अभिसमायन्ति । यत्रैतदूर्ध्वोच्छ्वासी भवतीति व्याख्यातम् । शंकर.

आत्मजिज्ञासू राजा

[1]अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ । तमहं कुमारमब्रुवं नाहमिमं वेद । यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति । समूलो वा एष परिशुष्यति योऽनृतमभिवदति । तस्मान्नार्हाम्यनृतं वक्तुम् । स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुष इति ॥

राजाभिषेकः

[2]स मूर्ध्नो राजानमसृजत । स मूर्धन्यभिषिक्तो राजा भवेत् ॥

राजोत्पत्तिः

[3]सह वा इदमभवत् । देवाश्च मनुष्याश्च ते यदोपकारैर्न शेकुर्मनुष्यानात्मीकर्तुं, अथ देवास्तिरोबभूवुः । तान् प्रजापतिरब्रवीत्– कः प्रजाः पालयिता भुवि सर्वेऽन्तर्हिताः स्थ । असंरक्ष्य-

(१) प्रउ. ६।१.
(२) विश्व. १।३०४ आम्नायः.
(३) विश्व. १।३५० आम्नायः.

माणाः प्रजा अधर्मादिंतास्त्यक्ष्यन्तीतः प्रदानमुपजीवनमस्माकमिति । ते देवाः प्रजापतिमब्रुवन्– पुरुषमूर्तिं राजानं करवाम सोमाद्रूपमादायाऽऽदित्यात्तेजो विक्रममथेन्द्राद्विष्णोर्विजयं वैश्रवणात्त्यागं यमात्संयमनम्...... । सोऽब्रवीत्– धर्ममेव मे सख्याय कुरुध्वम् । ततोऽहं प्रजाः पालयामीति । ततस्तस्मै धर्मं द्वितीयमकुर्वन् । स एष धर्मो निदानेन यद्दण्डः, तस्मादेवंविद्राजा दण्डं पितर्यपि पातयेत् । धर्मेणैनं संस्करवाम्याधिपत्यायेन्द्रत्वाय ब्रह्मलोकायेति । ईश्वरोऽहं तथा कर्त्रोः ॥

# पुरोहितः

—०—

## वेदाः

पुरोहितवन्तो न पराभूयन्ते

**[1]बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणाम् । ब्रह्मण्वन्तो देवा आसन् ब्रह्मण्वन्तोऽसुराः । ते१ऽन्योऽन्यं नाशक्नुन्नभिभवितुम् ॥**

ब्रह्मण्वन्तः पुरोहितानुष्ठितमन्त्रसामर्थ्योपेताः ।

तैसा. ( १।४।९।१ )

पुरोहितसंपादनं राज्ञः कर्तव्यम्

**[2]अथातः पुरोधाया एव ॥**

' महाभिषेक ऐन्द्रो यः क्षत्रस्यासौ पुरोदितः । पौरोहित्यं ब्राह्मणस्य वक्तव्यमधुनोच्यते ॥ ' तदेतत्प्रतिजानीते– अथेति । अथ क्षत्रियस्य महाभिषेककथनानन्तरं यतो ब्राह्मणस्य पौरोहित्यं बहुषु श्रुतं भवत्यतः कारणात् पुरोधाया एव पौरोहित्यस्यैव विधिरुच्यते इति शेषः ।

ऐब्रासा.

**न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति । तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत देवा मेऽन्नमदन्निति ॥**

तद्विधिं दर्शयति– नेति । यस्मादपुरोहितस्य राज्ञोऽन्नं देवा नादन्ति न भक्षयन्ति तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरोहितं कुर्यात् । केनाभिप्रायेणेति सोऽभिधीयते– देवा मदीयमन्नं अदन् अदन्त्विति तस्याभिप्रायः । अयक्ष्यमाण इति वा पदच्छेदः । यागाभावेऽपि प्रजापरिपालनधर्मबोधनाय पुरोहितः संपादनीयः । ऐब्रासा.

**अग्नीन्वा एष स्वर्ग्यान्राजोद्धरते यत्पुरोहितम् ॥**

तदेवमेतत्प्रशंसति– अग्नीनिति । पुरोहितं संपादयतीति यदस्ति तेनैष राजा स्वर्गहेतून् अग्नीनेवोद्धरते ।

ऐब्रासा.

**तस्य पुरोहित एवाऽऽहवनीयो भवति, जाया गार्हपत्यः, पुत्रोऽन्वाहार्यपचनः । स यत्पुरोहिताय करोत्याहवनीय एव तज्जुहोति । अथ यज्जायायै करोति गार्हपत्य एव तज्जुहोति । अथ यत्पुत्राय करोत्यन्वाहार्यपचन एव तज्जुहोति । त एनं शान्ततनवोऽभिहुता अभिप्रीताः स्वर्गं लोकमभिवहन्ति क्षत्त्रं च बलं च राष्ट्रं च विशं च ॥**

तानग्नीन् दर्शयति– तस्येति । तस्य राज्ञः पुरोहितादय एव आहवनीयाद्यग्निस्थानीयाः । अन्वाहार्यपचनः दक्षिणाग्निः । स राजा पुरोहितादिभ्यो यदपेक्षितं करोति तेदतदाहवनीयादिषु होमसमानम् । अतः पुरोहितद्वारा तेऽग्नयः शान्ततनवः स्वकीयमुग्ररूपत्वं परित्यज्य अभीष्टहोमेन प्रीताः एनं क्षत्त्रियं स्वर्गादिकं प्रापयन्ति । क्षत्त्रं मानसोत्साहरूपं शौर्यम् । बलं शारीरम् । राष्ट्रं देशः । विट् प्रजा । पुरोहितादिप्रीत्या तदेतत्सर्वं प्राप्यते । ऐब्रासा.

**त एवैनमशान्ततनवोऽनभिहुता अनभिप्रीताः स्वर्गाल्लोकान्नुदन्ते क्षत्त्राच्च बलाच्च राष्ट्राच्च विशश्च ॥**

विपक्षे बाधकमाह– त इति । त एव पुरोहितादयः अभीष्टहोमाभावेन प्रीतिरहिता अशान्ततनवः स्वर्गादेरेनमपनुदन्ते । ऐब्रासा.

**अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितः । तस्य वाच्येवैका मेनिर्भवति, पादयोरेका, त्वच्येका, हृदय एकोपस्थ एका । ताभिर्ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजानम् । स यदाह ' क्व भगवोऽवात्सीः, तृणान्यस्मा आहरत ' इति । तेनास्य तां शमयति याऽस्य वाचि मेनिर्भवति । अथ यदस्मा उदकमानयन्ति पाद्यं तेनास्य तां शमयति याऽस्य पादयोर्मेनिर्भवति । अथ यदेनमलं कुर्वन्ति तेनास्य**

---

( १ ) तैसं. ६।४।१०।१.

( २ ) ऐब्रा. ४०।१–४ ; राप्र. ६१ ( न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति । तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत देवा मेऽन्नमदन्निति ॥ ) एतावदेव : ८५–९०.

**तां शमयति याऽस्य त्वचि मेनिर्भवति । अथ यदेनं तर्पयन्ति तेनास्य तां शमयति याऽस्य हृदये मेनिर्भवति । अथ यदस्यानारुद्धो वेश्मसु वसति तेनास्य तां शमयति याऽस्योपस्थे मेनिर्भवति ॥**

पुनरपि पुरोहितं प्रकारान्तरेण प्रशंसति— अग्निरिति । परोपद्रवकारिणी क्रोधरूपा शक्तिर्मेनिरित्युच्यते । यथा अग्नेर्ज्वाला तद्वत् । अतो यः पुरोहितोऽस्ति सोऽयं पञ्चविधमेन्युपेतो वैश्वानरनामकाग्निसमानः । वागादीनि पञ्च मेनिस्थानानि । अतः पुरोहितस्ताभिर्मेनिभिर्ज्वलन्तीभिर्ज्वालासदृशीभिर्दीप्यमानाभिः परेषु दीप्तिं संतापं कुर्वतीभिः सह राजानमुपोदेति समीपे प्राप्नोति । तदा स राजा हे भगवन्, एतावन्तं कालं कुत्रावात्सीः ? एतस्य पुरोहितस्योपवेशनार्थं हे परिचारकाः, तृणानि तृणनिर्मितकुशाद्यासनान्याहरतेत्यनेन राजसंबन्धिना प्रियवाक्येन ( ? ण ) वाच्येका या मेनिर्बाधिका शक्तिस्तां स राजा शमयति । पाद्यार्थोदकानयनेन पादगता मेनिः शाम्यति । वस्त्रगन्धाद्यलंकरणेन त्वग्गता मेनिः शाम्यति । धनादिना संतर्पणेन हृदयगता मेनिः शाम्यति । अस्य राज्ञो वेश्मसु अनारुद्धः निरोधरहितः शयनादिकं कुर्वन् विस्रम्भेण वसतीति यदस्ति तेनोपस्थस्था मेनिः शाम्यति । गृहे समागतस्य पुरोहितस्यैतावन्त उपचाराः कर्तव्या इत्यर्थः । ऐब्रासा.

**स एनं शान्ततनुरभिहुतोऽभिप्रीतः स्वर्गं लोकमभिवहति क्षत्त्रं च बलं च राष्ट्रं च विशं च । स एवैनमशान्ततनुरनभिहुतोऽनभिप्रीतः स्वर्गाल्लोकान्नुदते क्षत्त्राच्च बलाच्च राष्ट्राच्च विशश्च ॥**

अन्वयव्यतिरेकाभ्यामुक्तोपचारं प्रशंसति— स इति । उक्तोपचारहोमेन प्रीतौ सत्यां शान्ततनुः स्वर्गादिकं प्रापयतीत्यन्वयः । उक्तोपचारहोमाभावे स्वर्गादेरपनुदतीति व्यतिरेकः । ऐब्रासा.

**अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितः । ताभी राजानं परिगृह्य तिष्ठति समुद्र इव भूमिम् ॥**

उक्तोपचारेण प्रीतं पुरोहितं दृष्टान्तेन प्रशंसति— अग्निरिति । योऽयं पुरोहितोऽस्ति स एष पञ्चमेनिः पञ्चविधोऽशक्तियुक्तो वैश्वानरनामकोऽग्निरेव, निग्रहानुग्रहयोरग्निवच्छक्तिमत्त्वात् । पुरोहितस्ताभिः शान्ताभिः शक्तिभिस्तं राजानं परिगृह्य परितः स्वीकृत्य तिष्ठति । यथा समुद्रो भूमिं परितः स्वीकृत्य तिष्ठति तद्वत् । ऐब्रासा.

**अयुवमार्यस्य राष्ट्रं भवति, नैनं पुराऽऽयुषः प्राणो जहाति, आजरसं जीवति, सर्वमायुरेति, न पुनर्म्रियते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥**

पुरोहितवशादनिष्टं परिहारयति— अयुवमिति । यस्य राज्ञ एवं विद्वान् वेदशास्त्रोक्तप्रकारेण धर्माधर्मौ बोधयितुमभिज्ञो ब्राह्मणो राष्ट्रगोपः राज्यपरिपालनक्षमः पुरोहितो भवति ईदृशस्याऽऽर्यस्य राज्ञो राष्ट्रं अयुवं कदाचिदपि पृथग्भावरहितं भवति । 'यु मिश्रणामिश्रणयोः' इति धातुरमिश्रणे वर्तते । अयुवमिति पदेन स निषिध्यते । राष्ट्रं अस्थिरं न भवतीत्यर्थः । अथवाऽस्य राष्ट्रं अयुवमारि युवमरणरहितं भवतीत्यर्थः । एनं राजानमायुषः पुरा प्राणो न परित्यजति अपमृत्युर्न भवतीत्यर्थः । अत एव आजरसं जरापर्यन्तं सुखेन जीवति । सर्वमायुरेति प्राप्तायामपि जरायामवशिष्टं सर्वमायुः प्राप्नोति । ततः सकृन्मृत्वा न पुनर्म्रियते, पुरोहितमुखेन तत्त्वज्ञानं संपाद्य मुच्यते इत्यर्थः । ऐब्रासा.

**क्षत्त्रेण क्षत्त्रं जयति, बलेन बलमश्नुते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥**

अनिष्टपरिहारं दर्शयित्वा इष्टप्राप्तिं दर्शयति— क्षत्त्रेणेति । उक्तविधपुरोहितयुक्तो राजा स्वकीयेन क्षत्त्रेण कुमारादिना परकीयं क्षत्त्रं कुमारादिकं जयति । तथा स्वकीयेन बलेन सैन्येन परकीयं बलं सैन्यं अश्नुते व्याप्नोति, अभिभवतीत्यर्थः । ऐब्रासा.

**तस्मै विशः संजानते संमुखा एकमनसो यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥**

इष्टप्राप्त्यनिष्टपरिहारौ दर्शयित्वा प्रजानुरागं दर्शयति— तस्मा इति । उक्तविधपुरोहितयुक्ताय तस्मै तस्य राज्ञः विशः प्रजाः संजानते राज्ञा सहैकमत्यं प्राप्नुवन्ति ।

प्राप्य च परस्परमप्येकमनस्का राज्ञः संमुखा भवन्ति, न तु कस्मिन्नपि कार्ये विमुखाः । ऐब्रासा.

**तदप्येतदृषिणोक्तम् ॥**

पुरोहितमहिमानं दर्शयितुं मन्त्रमुदाहरति– तदिति । तदेतत् पुरोहितमाहात्म्यमपि ऋषिणा मन्त्रदर्शिना तिसृभिर्ऋग्भिरुक्तम् । ऐब्रासा.

**'स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येण' इति ॥**

तत्र प्रथमाया ऋचः पूर्वार्धं दर्शयति– स इति । स इत् स एव पुरोहितयुक्तो राजा प्रतिजन्यानि प्रतिपक्षबलानि विश्वा सर्वाणि शुष्मेण वीर्येण स्वकीयेनाधिकेन बलेन अभितस्थौ अभितिष्ठति अभिभवतीत्यर्थः । ऐब्रासा.

**सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानेव तच्छुष्मेण वीर्येणाधितिष्ठति ॥**

अस्यार्धस्य तात्पर्यं दर्शयति– सपत्ना इति । जन्यानीत्यनेन सपत्ना एवाभिधीयन्ते । सपत्नशब्दस्य व्याख्यानं 'द्विषन्तो भ्रातृव्याः' इति । तानेव भ्रातृव्यान् तत् तेन शुष्मेण अधिकेन वीर्येण सामर्थ्येन अधितिष्ठति अभिभवति । ऐब्रासा.

**'बृहस्पतिं यः सुभृतं बिभर्ति' इति । बृहस्पतिर्ह वै देवानां पुरोहितः । तमन्वन्ये मनुष्यराज्ञां पुरोहिताः । बृहस्पतिं यः सुभृतं बिभर्तीति यदाह पुरोहितं यः सुभृतं बिभर्तीत्येव तदाह ॥**

तृतीयं पादमनूद्य व्याचष्टे– बृहस्पतिमिति । यो बृहस्पतिं बृहस्पतितुल्यं पुरोहितं सुभृतं यथा स्यात्, सम्यगवस्थाप्येति यावत्, तथा बिभर्ति पोषयति स इद्राजेति पूर्वत्रान्वयः । यो देवानां बृहस्पतिः पुरोहितस्तं बृहस्पतिमनु पश्चात् मनुष्यराज्ञामन्ये पुरोहिता वर्तन्ते । अतः पुरोहितानां बृहस्पत्यनुसारित्वात् बृहस्पतिमित्यादिपदेन पुरोहितविषयमेव एतद्वाक्यं मन्त्र आह । ऐब्रासा.

**'वल्गूयति वन्दते पूर्वभाजम्' इत्यपचितिमेवास्मा एतदाह ॥**

चतुर्थं पादमनूद्य व्याचष्टे– वल्गूयतीति । स राजा पूर्वभाजं प्रथमतो भजनयुक्तं पुरोहितम् । स हि राजानं तदीयहितविचारेण प्रथमतो भजति । तादृशं वल्गूयति राजाऽर्चयति, वन्दते नमस्करोति । एतदनेन पादेन अस्मै अस्मिन् यजमानेऽपचितिमेव मन्त्र आह । ऐब्रासा.

**'स इत्क्षेति सुधित ओकसि स्वे' इति । गृहा वा ओकः । स्वेष्वेव तद्गृहेषु सुहितो वसति ॥**

द्वितीयस्या ऋचः प्रथमं पादमनूद्य पूजामेव व्याचष्टे– स इति । स इत् स एव राज्ञा पूजितः पुरोहितः सुधितः सुप्रीतः स्वे स्वकीये एवौकसि गृहे क्षेति निवसति । ओकःशब्देनात्र गृहा एवोच्यन्ते । ततः स्वेष्वेव गृहेषु सुप्रीतो वसतीत्युक्तं भवति । ऐब्रासा.

**'तस्मा इळा पिन्वते विश्वदानीम्' इति । अन्नं वा इळा । अन्नमेवास्मा एतदूर्जस्वच्छश्वद्भवति ॥**

द्वितीयं पादमनूद्य व्याचष्टे– तस्मा इति । तस्मै पुरोहितयुक्ताय राज्ञे इळा अन्नं विश्वदानीं सर्वस्मिन्नपि काले । 'इदानीं, तदानीम्' इत्यादिवदवगन्तव्यम् । पिन्वते वर्धते । अन्नसमृद्धिर्भवति । अस्मिन् पादे इळाशब्देनान्नमेवोच्यते । एतदन्नं अस्मै अस्मिन् राजनि ऊर्जस्वत् क्षीरादिरसोपेतं शश्वत् सर्वदा तिष्ठति । ऐब्रासा.

**'तस्मै विशः स्वयमेवाऽऽनमन्ते' इति । राष्ट्राणि वै विशः । राष्ट्राण्येवैनं तत्स्वयमुपनमन्ति ॥**

तृतीयं पादमनूद्य व्याचष्टे– तस्मा इति । तस्मै पुरोहितयुक्ताय राज्ञे विशः प्रजाः स्वयमेव तदीयप्रयत्ननिरपेक्षाः आनमन्ते आनतिं प्राप्ता भवन्ति । अस्मिन् पादे विट्शब्देन राष्ट्राण्येव प्रजोपेता देशा एव विवक्षिताः । तादृशानि राष्ट्राणि एनं पुरोहितयुक्तं क्षत्रियं स्वयमेव प्राप्नुवन्ति । ऐब्रासा.

**'यस्मिन्ब्रह्मा राजनि पूर्व एति' इति पुरोहितमेवैतदाह ॥**

चतुर्थं पादमनूद्य व्याचष्टे– यस्मिन्निति । यस्मिन् राजनि ब्रह्मा ब्राह्मणः हितमुपदिशन् पूर्वं एति प्रथमतो गच्छति स इत्क्षेतीति पूर्वत्रान्वयः । अनेन पादेन पूर्व एतीत्येव पुरोहितमेव मन्त्रो ब्रूते । ऐब्रासा.

**'अप्रतीतो जयति सं धनानि' इति। राष्ट्राणि वै धनानि। तान्यप्रतीतो जयति॥**

तृतीयस्या ऋचः प्रथमं पादमनूद्य व्याचष्टे– अप्रतीत इति। अयं पुरोहितयुक्तो राजा अप्रतीतः, प्रतिकूलैः शत्रुभिः इतः प्राप्तः प्रतीतः, तद्विपरीतः अप्रतीतः शत्रुप्राप्तिरहित एव भूत्वा धनोपेतानि राष्ट्राणि सम्यग्जयति। अस्मिन् पादे धनशब्देन राष्ट्राण्येव विवक्षितानि। तानि स्वयं प्रतिपक्षरहित एव जयति। ऐब्रासा.

**'प्रतिजन्यान्युत या सजन्या' इति। सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि। तानप्रतीतो जयति॥**

द्वितीयं पादमनूद्य व्याचष्टे– प्रतीति। जन्यानि शत्रून् अप्रतीतः स्वयमप्रतिपक्षः जयतीत्यनुवर्तते। किंच, या सेना सजन्या शत्रुसहिता तामपि जयति। अस्मिन् पादे जन्यशब्देन सपत्ना अभिधीयन्ते। तस्य व्याख्यानं 'द्विषन्तो वै भ्रातृव्याः' इति। तान् भ्रातृव्यान् प्रतिपक्षरहितो जयति। ऐब्रासा.

**'अवस्यवे यो वरिवः कृणोति' इति यदाहावसीयसे यो वसीयः करोतीत्येव तदाह॥**

तृतीयं पादमनूद्य व्याचष्टे– अवस्यव इति। अवस्यवे वसुरहिताय ब्राह्मणाय पुरोहिताय यो राजा वरिवः कृणोति परिचर्यां करोतीति मन्त्रो यदाह तत्रावसीयसे अत्यन्तदरिद्राय धनरहिताय यो राजा वसीयः अतिशयेन धनिकत्वं करोतीत्यनेनैव प्रकारेण मन्त्रो ब्रूते। ऐब्रासा.

**'ब्रह्मणे राजा तमवन्ति देवाः' इति पुरोहितमेवैतदभिवदति॥**

चतुर्थं पादमनूद्य व्याचष्टे– ब्रह्मण इति। ब्रह्मणे ब्राह्मणाय। पूर्वोक्तेन 'अवस्यवे' इति चतुर्थ्यन्तेनान्वेति। तथा राजा इति पदं 'यः' इत्यनेनान्वेति। तं तादृशं पुरोहितपूजकं राजानं देवा अवन्ति पालयन्ति। एतत् एतेन ब्रह्मणे इति पदेन पुरोहितमेव मन्त्रोऽभिवदति। ऐब्रासा.

**यो ह वै त्रीन्पुरोहितांस्त्रीन्पुरोधातॄन् वेद स ब्राह्मणः पुरोहितः। स वदेत पुरोधायै 'अग्निर्वाव पुरोहितः पृथिवी पुरोधाता वायुर्वाव पुरोहितोऽन्तरिक्षं पुरोधाताऽऽदित्यो वाव पुरोहितो द्यौः पुरोधाता'। एष ह वै पुरोहितो य एवं वेद। अथ स तिरोहितो य एवं न वेद॥**

अथ पौरोहित्यस्य योग्यायोग्यौ ब्राह्मणौ विविनक्ति– य इति। राज्ञा स्वहितोपदेशार्थे स्वस्य पुरोहितः अवस्थापितः। तस्य पुरोहितस्य योऽयमवस्थापयिता राजा स पुरोधाता। देवतासु मध्ये (ये) त्रयः पुरोहिताः सन्ति, ये च त्रयः पुरोधातारः तानुभयविधान् यो वेद तत्प्रतिपादकं मन्त्रं सर्वदाऽनुसंधत्ते इत्यर्थः। स तादृशो ब्राह्मणः पुरोहितो भवितुं योग्यः। स च ब्राह्मणः पुरोधायै पौरोहित्यार्थे 'अग्निः' इत्यादिमन्त्रं वदेत् (? त) जपेत्। अग्निवाय्वादित्याः पुरोहितरूपाः, पृथिव्यन्तरिक्षद्युलोकाः पुरोधातृरूपाः इति मन्त्रार्थः। यः पुमानेवं वेद मन्त्रार्थमनुसंधत्ते एष एव योग्यः पुरोहितः। अथ तद्वैलक्षण्येन यः पुमान् एवं न वेद स तिरोहितः पौरोहित्यादन्तर्हितः तदयोग्य इत्यर्थः। ऐब्रासा.

**तस्य राजा मित्रं भवति, द्विषन्तमपबाधते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः॥**

योग्यं पुरोहितं प्रशंसति– तस्येति। यस्य एवंविधत्वादिगुणयुक्तः पुरोहितो भवेत् तस्य राज्ञः देशान्तरवर्ती राजा मित्रं बन्धुः भवति। तथा द्विषन्तं अन्यं राजानं पुरोहितयुक्तो राजा अपबाधते विनाशयति। ऐब्रासा.

**क्षत्त्रेण क्षत्त्रं जयति, बलेन बलमश्नुते, यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः। तस्मै विशः संजानते संमुखा एकमनसो यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः॥**

पुनरपि द्वेधा प्रशंसति– क्षत्त्रेणेति। पूर्ववद्व्याख्येयम्। ऐब्रासा.

**'भूर्भुवः स्वरोममोऽहमस्मि स त्वं स त्वमस्यमोऽहं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेह संवहावहै। पुराण्यस्मान्महाभयात्। तनूरसि तन्वं मे पाहि'॥**

अथ राज्ञः पुरोहितवरणमन्त्रमाह– भूरिति । भूर्भुवः स्वरिति शब्दैर्लोकत्रयाभिमानिन्यो देवता उच्यन्ते, प्रणवेन परमात्मा । एते सर्वेऽनुगृह्णन्त्वित्यभिप्रायः । पुरोहितः अहं अमः द्युलोकरूपोऽस्मि । त्वं तु स भूर्लोकरूपोऽसि । पुनरपि स त्वमस्यमोऽहमित्यभिधानं दाढर्यार्थम् । तस्यैव व्याख्यानं द्यौरहं पृथिवी त्वमिति । तथा सामस्वरूपोऽहमृक्स्वरूपस्त्वमिति । तौ उभौ आवां इह राष्ट्रे आ समन्तात् पुराणि तदुपलक्षितग्रामांश्च संवहावहै सम्यग्वहनं पुरादिनिर्वाहं करवावहै । त्वं मम तनूः शरीरमसि । अतो मदीयां तन्वं शरीरं अस्मात् ऐहिकात् आमुष्मिकाच्च महाभयात् पाहि रक्ष ।

ऐब्राभा.

**[1]या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।**
**ता मह्यमस्मिन्नासनेऽच्छिद्रं शर्म यच्छत ॥**

अनेन मन्त्रेण राज्ञा कृतो यः पुरोहितस्तस्य राजदत्तविष्टराभिमन्त्रणमाह– या इति । सोमो राजा यासामोषधीनां ताः सोमराज्यः । बह्व्यः बहुजातीयाः । शतविचक्षणाः शतशाखाभिन्नाः तादृश्य ओषधयो याः सन्ति तास्तथाविधाः हे ओषधयः, अस्मिन्नासने तृणादिनिर्मितकटादिरूपे मह्यं पुरोहिताय च्छिद्ररहितं शर्म दुःखस्पर्शरहितं सुखं यच्छत दत्त । ऐब्राभा.

**[2]या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।**
**ता मह्यमस्मिन्नासनेऽच्छिद्रं शर्म यच्छत ॥**

अभिमन्त्रिते विष्टरे उपवेशनमाह– या इति । वंशदलादिनिर्मितविष्टरगता ओषधयः पृथिवीमनु विष्ठिताः विशेषेण स्थापिताः । ता मह्यमित्यादि पूर्ववत् ।

ऐब्राभा.

**[1]अस्मिन् राष्ट्रे श्रियमावेशयाम्यतो देवीः प्रतिपश्याम्यापः ॥**

पुरोहितस्य पाद्यार्थे समानीतानामपामभिमन्त्रणमन्त्रं दर्शयति– अस्मिन्निति । हे आपः, पुरोहितोऽहं अस्मिन् राष्ट्रे श्रियमावेशयामि धनादिसंपदं संपादयामि । अतः कारणात् देवीः द्योतनात्मिकाः युष्मान् प्रतिपश्यामि ।

ऐब्राभा.

**[2]दक्षिणं पादमवनेनिजेऽस्मिन्राष्ट्र इन्द्रियं दधामि ।**
**सव्यं पादमवनेनिजेऽस्मिन्राष्ट्र इन्द्रियं वर्धयामि ॥**

**[3]पूर्वमन्यमपरमन्यं पादाववनेनिजे ।**
**देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्ध्यै ॥**

ताभिरद्भिः पुरोहितस्य पादप्रक्षालनमन्त्रमाह– दक्षिणमिति । मदीयं दक्षिणं पादमवनेनिजे प्रक्षालये । तेन अस्मिन् राष्ट्रे प्राणिनां इन्द्रियपाटवहेतुं धनं संपादयामि । वामपादप्रक्षालनेन च तद्वर्धयामि । पूर्वं प्रथमं अन्यं दक्षिणं पादं शोधयित्वाऽपरं पश्चादन्यं वामं पादं शोधयामि । हे देवाः, एवंभूतौ पादौ प्रक्षालयामि (इति यत्) तच्च राष्ट्रस्य गुप्त्यै रक्षार्थं अभयस्य चोरादिभयराहित्यस्य अवरुद्ध्यै संपादनाय भवति ।

ऐब्राभा.

**[4]आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे ॥**

---

(१) ऋसं. १०।९७।१८ पू.; असं. ६।९६।१ ओषधीः (ओषधयः) पू.; शुसं. १२।९२ पू.; ऐब्रा. ४०।४; सामब्रा. २।८।३ च्छिद्रं (च्छिद्राः); राप्र. ९०.

(२) ऋसं. १०।९७।१९ पू.; तैसं. ४।२।६।४–५ ओषधीः (ओषधयः) ज्ञीर्विष्ठिताः (ज्ञीः प्रविष्टाः) पू.; शुसं. १२।९३ पू.; ऐब्रा. ४०।४; तैब्रा. ३।१२।६।३ प्रथमपादे (यावतीरोषधीः सर्वाः) पू.; सामब्रा. २।८।४ न्नासनेऽच्छिद्रं (न्पादयोरच्छिद्राः); राप्र. ९०.

(१) ऐब्रा. ४०।४; राप्र. ९०–९१.

(२) ऐब्रा. ४०।४; सामब्रा. २।८।६,७ इन्द्रियं दधामि (श्रियमा वेशयामि) इन्द्रियं वर्धयामि (श्रियं दधे) पूर्वोत्तरार्धे व्यत्यासेन पठिते; राप्र. ९१.

(३) ऐब्रा. ४०।४; सामब्रा. २।८।८ (पूर्वमन्यमपरमन्यमुभौ पादाव नेनिजे राष्ट्रस्यर्द्ध्या अभयस्यावरुद्ध्यै ॥); राप्र. ९१.

(४) ऐब्रा. ४०।४; कौसू. ९०।११; राप्र. ९१.

पादप्रक्षालनावशिष्टानां अपामभिमन्त्रणमाह– आप इति । पादावनेजनीः पादशुद्धिकरणभूता इमा आपो मे मदीयं द्विषन्तं शत्रुं निःशेषेण दहन्तु । ऐब्रासा.

**[1]अथातो ब्रह्मणः परिमरः । यो ह वै ब्रह्मणः परिमरं वेद पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते ॥**

अथोक्तपुरोहितसहितस्य शत्रुक्षयार्थं कंचित्प्रयोगमाह– अथेति । अथ पौरोहित्यविधानानन्तरं यतः पुरोहितेन संपाद्यः शत्रुक्षयः अपेक्षितः अतः कारणात् ब्रह्मणः परिमर एतन्नामकः कर्मविशेषोऽभिधीयत इति शेषः । ब्रह्मशब्देनात्र वायुर्विवक्षितः, 'अयं वै ब्रह्म योऽयं पवते' इति वक्ष्यमाणत्वात् । तस्य वायोः परितः विद्युदादीनां मरणप्रकारः परिमर इत्युच्यते । तद्भावनारूपस्य कर्मविशेषस्य तदेव नामधेयम् । यः पुमान् ब्रह्मणः परिमरं यदा मनसा भावयति एनं परित एतस्य परितोऽवस्थितासु सर्वासु दिक्षु द्वेषं कुर्वन्तः शत्रवो म्रियन्ते । इदानीमेनं द्विषन्तो जात्या शत्रवः सपत्नाः तेऽपि परितो म्रियन्ते । तस्मादेतद्वेदनं संपादनीयम् । ऐब्रासा.

**अयं वै ब्रह्म योऽयं पवते । तमेताः पञ्च देवताः परिम्रियन्ते विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निः ॥**

वेदनस्वरूपमाह– अयमिति । योऽयं वायुः पवते अन्तरिक्षे संचरति अयमेव ब्रह्मशब्देन विवक्षितः । एता विद्युदादयः पञ्च देवताः वायुं परिम्रियन्ते तस्य परितो विनाशं गच्छन्ति । तदेतदनुसंधेयस्वरूपम् । ऐब्रासा.

**विद्युद्वै विद्युत्य वृष्टिमनुप्रविशति । साऽन्तर्धीयते । तां न निर्जानन्ति ॥**

तत्राऽऽदौ विद्युतो मतिं प्रतिपादयति– विद्युदिति । येयं विद्युदस्ति सा विद्युत्य प्रकाशं कृत्वा पश्चाद्वृष्टिमनुप्रविशति । अत एव साऽन्तर्धीयते अस्माभिर्न दृश्यते । तां वृष्टौ प्रविष्टां विद्युतं क्व गता ? कुत्र स्थिता ? मृता ? इति मनुष्या निःशेषेण न जानन्ति । ऐब्रासा.

**यदा वै म्रियतेऽथान्तर्धीयते । अथैनं न निर्जानन्ति ॥**

तत्र दृष्टान्तमाह– यदेति । लोके कश्चित्पुरुषो यस्मिन् क्षणे म्रियते तस्मिन्नेव क्षणे अन्यैर्न दृश्यते । ततो जना विचार्यापि क्व गतः ? कुत्रावस्थितः ? इत्येनं पुरुषं मृतं न निर्जानन्ति । यद्यपि कुणपं पश्यन्ति तथापि जीवात्मानं न जानन्त्येव । तथैव विद्युद्विनाश इति द्रष्टव्यम् । ऐब्रासा.

**स ब्रूयाद्विद्युतो मरणे– 'द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुः ॥' इति ॥**

यथोक्तध्यानवतो जप्यमन्त्रमाह– स इति । विद्युतो मरणे सति उपासको 'द्विषत्' इत्यादिकं मन्त्रं ब्रूयात् । तस्यायमर्थः– इयं विद्युदिव मदीयः शत्रुर्म्रियतां, स पुनः केनापि न दृश्यताम्, अतो विचार्यापि क्व गतः ? काऽऽस्ते ? इति तं शत्रुं तदीया बन्धवो निःशेषेण मा जानन्त्विति । ऐब्रासा.

**क्षिप्रं हैवैनं न निर्जानन्ति ॥**

जपफलं दर्शयति– क्षिप्रमिति । शीघ्रमेव मृतमेनं शत्रुं तदीया बन्धवो नैव जानन्ति । ऐब्रासा.

**वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति । साऽन्तर्धीयते । तां न निर्जानन्ति । यदा वै म्रियतेऽथान्तर्धीयते । अथैनं न निर्जानन्ति । स ब्रूयाद्वृष्टेर्मरणे– 'द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुः' इति । क्षिप्रं हैवैनं न निर्जानन्ति ॥**

विद्युत इव वृष्टेर्विनाशं दर्शयति– वृष्टिरिति । येयं वृष्टिरस्ति सेयं वृष्ट्वा भूमौ जलं पातयित्वा स्वयमाप्यमण्डलरूपं चन्द्रमसमनुप्रविशति । अन्यत्पूर्ववद्योज्यम् । ऐब्रासा.

**चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति । सोऽन्तर्धीयते । तं न निर्जानन्ति । यदा वै म्रियतेऽथान्तर्धीयते । अथैनं न निर्जानन्ति । स ब्रूयाच्चन्द्रमसो मरणे– 'द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुः' इति । क्षिप्रं हैवैनं न निर्जानन्ति ॥**

(१) ऐब्रा. ४०।५.

चन्द्रमसो विनाशं दर्शयति– चन्द्रमा इति । अयं चन्द्रमाः अमावास्यायां तिथौ साकल्येनाऽऽदित्यमनुप्रविशति । अन्यत् पूर्ववत् । ऐब्रासा.

**आदित्यो वा अस्तं यन्नग्निमनुप्रविशति । सोऽन्तर्धीयते । तं न निर्जानन्ति । यदा वै म्रियतेऽथान्तर्धीयते । अथैनं न निर्जानन्ति । स ब्रूयादादित्यस्य मरणे– 'द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुः' इति । क्षिप्रं हैवैनं न निर्जानन्ति ॥**

आदित्यस्य विनाशं दर्शयति– आदित्य इति । आदित्यो यदा अस्तमेति तदाऽयमग्निमनुप्रविशति । तदेतत्तैत्तिरीयैः समाम्नातम्– 'अग्निं वावाऽऽदित्यः सायं प्रविशति । तस्मादग्निर्दूरान्नक्तं ददृशे । उभे हि तेजसी संपद्येते' इति । अन्यत् पूर्ववत् । ऐब्रासा.

**अग्निर्वा उद्वान्वायुमनुप्रविशति । सोऽन्तर्धीयते । तं न निर्जानन्ति । यदा वै म्रियतेऽथान्तर्धीयते । अथैनं न निर्जानन्ति । स ब्रूयादग्नेर्मरणे– 'द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुः' इति । क्षिप्रं हैवैनं न निर्जानन्ति ॥**

अग्नेर्विनाशं दर्शयति– अग्निरिति । उद्वान् अग्निः उद्वानं उपशमनं प्राप्नुवन् अग्निः वायुमनुप्रविशति, वायुबाहुल्ये दीपविनाशदर्शनात् । अन्यत् पूर्ववत् । ऐब्रासा.

**ता वा एता देवता अत एव पुनर्जायन्ते ॥**

वायोः परितो म्रियमाणानां देवतानां पुनर्वायोरेव जन्म दर्शयति– ता इति । वायोर्जगत्कारणभूतसूत्रात्मरूपत्वात् जगदेकदेशानां विद्युदादीनां जन्मविनाशौ वाय्वधीनौ । ऐब्रासा.

**वायोरग्निर्जायते । प्राणाद्धि बलान्मथ्यमानोऽधिजायते । तं दृष्ट्वा ब्रूयात्– 'अग्निर्जायतां मा मे द्विषञ्जन्यत एव पराङ् प्रजिघ्यतु' इति । अतो हैव पराङ् प्रजिघ्यति ॥**

पूर्वं विद्युदादीनामग्न्यन्तानां क्रमेण विनाशो दर्शितः । इदानीमग्न्यादीनां विद्युदन्तानां क्रमेणोत्पत्तिं विवक्षुरग्नेरुत्पत्तिं दर्शयति– वायोरिति । योऽयमग्निः सोऽयं वायोर्जायते । कथमेतदिति तदुच्यते– प्राणात् बलात् प्राणवायुसंबन्धिशक्तिवशात् मथ्यमानोऽयमग्निरधिकत्वेन जायते । तं जायमानमग्निं दृष्ट्वा सोऽयमग्न्यादिजन्मध्याता 'अग्निः' इत्यादिकं मन्त्रं जपेत् । अयमग्निर्वायोः सकाशात्सुखेन जायताम् । मे द्विषन् मदीयः शत्रुः मा जनि मोत्पद्यताम् । अत एव मत्तः पराङ् प्रजिघ्यतु विमुखो भूत्वा प्रकर्षेण गच्छतु । इत्येतस्मिन्मन्त्रे जपिते सति अतो जपितुः सकाशात् शत्रुर्विमुखो भूत्वा दूरे गच्छति । ऐब्रासा.

**अग्नेर्वा आदित्यो जायते । तं दृष्ट्वा ब्रूयात्– 'आदित्यो जायतां मा मे द्विषञ्जन्यत एव पराङ् प्रजिघ्यतु' इति । अतो हैव पराङ् प्रजिघ्यति ॥**

आदित्यस्योत्पत्तिं दर्शयति– अग्नेरिति । रात्रावग्निं प्रविष्ट आदित्यः परेद्युरग्नेर्जायते । अत एवाहन्यग्निस्तेजोरहितः, सूर्योऽधिकतेजा भासते । अन्यत् पूर्ववत् । ऐब्रासा.

**आदित्याद्वै चन्द्रमा जायते । तं दृष्ट्वा ब्रूयात्– 'चन्द्रमा जायतां मा मे द्विषञ्जन्यत एव पराङ् प्रजिघ्यतु' इति । अतो हैव पराङ् प्रजिघ्यति ॥**

चन्द्रमस उत्पत्तिं दर्शयति– आदित्यादिति । तिथावमावास्यायामादित्ये प्रविष्टश्चन्द्रमाः शुक्लपक्षप्रतिपद्यादित्याज्जायते । अन्यत् पूर्ववत् । ऐब्रासा.

**चन्द्रमसो वै वृष्टिर्जायते । तां दृष्ट्वा ब्रूयात्– 'वृष्टिर्जायतां मा मे द्विषञ्जन्यत एव पराङ् प्रजिघ्यतु' इति । अतो हैव पराङ् प्रजिघ्यति ॥**

वृष्टेरुत्पत्तिं दर्शयति– चन्द्रमस इति । जलमये चन्द्रमण्डले प्रविष्टा वृष्टिः कालान्तरे चन्द्राज्जायते । अन्यत् पूर्ववत् । ऐब्रासा.

**वृष्टेर्वै विद्युज्जायते । तां दृष्ट्वा ब्रूयात्– 'विद्युज्जायतां मा मे द्विषञ्जन्यत एव पराङ् प्रजिघ्यतु' इति । अतो हैव पराङ् प्रजिघ्यति ॥**

विद्युदुत्पत्तिं दर्शयति– वृष्टेरिति । वृष्टौ प्रविष्टा विद्युत् पुनरपि कदाचित्प्रसक्ताया वृष्टेर्जायते । अन्यत् पूर्ववत् । ऐब्रासा.

**स एष ब्रह्मणः परिमरः ॥**

उक्तमर्थमुपसंहरति– स इति । स एष ध्यानरूपो जपरूपश्च वायुसंबन्धी परिमरनामकः कर्मविशेष उक्त इत्यर्थः । ऐब्रासा.

**तमेतं ब्रह्मणः परिमरं मैत्रेयः कौषारवः सुत्वने कैरिशये भार्गायणाय राज्ञे प्रोवाच । तं ह पञ्च राजानः परिमम्रुः । ततः सुत्वा महज्जगाम ॥**

तमेतं कर्मविशेषमुदाहरणमुखेन प्रशंसति– तमिति । उक्तं कर्मविशेषं कुषारवपुत्रो मैत्रेयनामको महर्षिः सुत्वनाम्ने राज्ञे प्रोवाच । कीदृशाय सुत्वने ? किरिशस्यापत्यं कैरिशिः, तस्मै कैरिशये । भर्गस्य गोत्रापत्यं भार्गायणः, तस्मै । सुत्वनामकं राजानं परितः सर्वदिक्षु वर्तमानाः पञ्चसंख्याका द्वेषिणो राजानो मम्रुः मृताः । ततः सुत्वा राजा महत् प्रौष्ठं ( ? ढं ) निःसपत्नं पदं जगाम । ऐब्रासा.

**तस्य व्रतम्– न द्विषतः पूर्व उपविशेत् । यदि तिष्ठन्तं मन्येत तिष्ठेतैव । न द्विषतः पूर्वः संविशेत् । यद्यासीनं मन्येताऽऽसीतैव । न द्विषतः पूर्वः प्रस्वप्यात् । यदि जाग्रतं मन्येत जाग्रियादेव ॥**

उक्तं कर्मविशेषमनुष्ठातुर्व्रतविशेषं विधत्ते– तस्येति । तस्य अनुष्ठातुः एतद्व्रतमुच्यते– एतदीयो द्विषन् यदोपविशति ततः प्राक् स्वयं नोपविशेत्, किंतु चारमुखेन (१ण) तदीयं वृत्तान्तं विचारयेत् । यदि द्विषन्तं तिष्ठन्तं मन्येत तदानीं स्वयमपि तिष्ठेतैव । तथा यदा द्विषन् शयनं करोति ततः प्राक् स्वयं न संविशेत् शयनं न कुर्यात् । यदि द्विषन्तमुपविष्टं मन्येत तदानीं स्वयमप्युपविशेदेव । तथा द्विषन् यदा निद्रां करोति ततः प्राक् स्वयं न प्रस्वप्यात् । किंतु यदि द्विषन्तं जाग्रतं मन्येत तदानीं स्वयमपि जाग्रियादेवेति । ऐब्रासा.

**अपि ह यद्यस्याश्ममूर्धा द्विषन्भवति क्षिप्रं हैवैनं स्तृणुते स्तृणुते ॥**

एवं व्रतमाचरतः फलं दर्शयति– अपीति । अस्य राज्ञः अनुष्ठातुः द्विषन् शत्रुः यद्यश्ममूर्धा पाषाणसदृशशिरस्को भवति, अतिप्रबल इत्यर्थः । तथाप्ययं कर्मविशेषः शीघ्रमेवैनं शत्रुं स्तृणुते हिनस्ति । अभ्यासोऽध्यायसमाप्त्यर्थः । ऐब्रासा.

**[१]सो एव पुरोधा । तस्मान्न ब्राह्मणः सर्वस्येव क्षत्रियस्य पुरोधां कामयेत । सꣳ ह्येतौ सृजेते सुकृतं च दुष्कृतं च । नो एव क्षत्रियः सर्वमिव ब्राह्मणं पुरोदधीत । सꣳ ह्येवैतौ सृजेते सुकृतं च दुष्कृतं च । स यत्ततो वरुणः कर्म चक्रे प्रसूतं ब्रह्मणा मित्रेण सꣳ हैवास्मै तदानृधे ॥**

ततो वरुणेन संसृष्टत्वात् ब्राह्मणजात्यात्मको मित्रं च ( ? मित्रः ) क्षत्रियजात्यात्मकस्य वरुणस्य पुरोहितोऽभूत् । अत्र ब्रह्मक्षत्त्रयोर्विभागे क्षत्त्रस्य सामर्थ्याभावमुपन्यस्य पुनस्तदुपगमाय तयोः संसर्गोऽभिहितः । उत्साहश्च संकल्पाभावे न शक्नोति क्रियां निष्पादयितुम् । अतोऽनयोस्तत्साहस्यलाभात् तदात्मकमित्रावरुणयोराधिभौतिकरूपत्वमुपपद्यते इति भावः । यतोऽत्र मित्रोऽनुरूपः पुरोहितोऽभूत् वरुणश्चानुरूपो राजा । अतो लोकेऽपि पुरोहितेन राज्ञा चानुरूपाभ्यामेव भवितव्यमिति दर्शयति– तस्मान्न ब्राह्मण इत्यादिना । यस्मादनुरूपावेतौ ब्राह्मणक्षत्त्रियौ सुकृतं दुष्कृतं च संसृजेते संसर्जयतः । सृजिरन्तर्भावितण्यर्थः । तस्माद्ब्राह्मणः अविशेषेण सर्वस्य क्षत्रियस्य पुरोधां पुरोहितत्वं न कामयेत, किंतु स्वानुरूपं सुकृतिनमेव क्षत्त्रियं कामयेतेत्यर्थः । पुरोधामिति दधातेः संपदादिलक्षणो भावे क्विप् । क्षत्त्रियः अपि एवमनुरूपमेव ब्राह्मणं पुरोदधीत पुरोहितं कुर्यात् । प्रकृते अनुरूपपुरोहितस्य मित्रस्य संसर्गेण प्राप्तं फलमाह– स यदित्यादि । ततः संसर्गानन्तरं सः वरुणः यत् कर्म चक्रे तत् मित्रेण ब्रह्मणा उपदिष्टमिति अस्मै वरुणाय समृद्धमभूत् । शब्रासा.

**तत्तदवक्लृप्तमेव यद्ब्राह्मणो राजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तत् । एतद्ध त्वेवानव-**

(१) शब्रा. ४।१।४।५-६.

क्लृप्तं यत् क्षत्रियो ब्राह्मणो भवति । यद्ध किंच कर्म कुरुतेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समृध्यते । तस्मादु क्षत्रियेण कर्म करिष्यमाणेनोपसर्तव्य एव ब्राह्मणः । स९ हैवास्मै तद्ब्रह्मप्रसूतं कर्मर्ध्यते ॥

ब्राह्मणस्य स्वाभाविकज्ञानशक्तिसंभवात् क्षत्रियस्य तदभावात् क्षत्रियेण ब्राह्मणोऽनुसरणीय इत्याह– तत्तदवक्लृप्तमित्यादि । यस्मात् ब्राह्मणस्य स्वाभाविकज्ञानशक्तिमत्तया अन्यत उपदेशापेक्षा नास्ति तस्मात् ब्राह्मणो यदि राजन्यो भवेत्, अथवा पुरोहितो भूत्वा राजानं लभेतेति यत् तदवक्लृप्तं युक्तम्, तेन कृतं तत् कर्म समृद्धं भवेदिति । क्षत्रियो ब्राह्मणो भवति इत्येतदयुक्तम् । ब्राह्मणः सन् यत् किञ्च किञ्चित् कर्म कुरुते, तन्मित्रात्मकेन ब्रह्मणा नोपदिष्टं स्यात्, तथा च तदस्मै न समृद्धं भवति । क्षत्रियस्य पुरोहितकृत्यज्ञानसंभवेऽपि स्वाभाविकज्ञानाभावात् तत्कर्म समृद्धं न भवतीत्यभिप्रायः । ब्राह्मणस्य प्रजापतेर्मुखत उत्पन्नत्वादुपदेशकत्वं स्वाभाविकं, क्षत्रियस्य बाहुभ्यामुत्पन्नत्वात् कर्तृत्वं स्वाभाविकम् । तथा च श्रूयते– 'स मुखतस्त्रिवृतं निरमिमीत' इत्यारभ्य 'ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त' ( तैसं. ७।१।१।४ ) इति, तथा– 'उरसो बाहुभ्यां पञ्चदशं निरमिमीत' इत्यारभ्य 'राजन्यो मनुष्याणाम्' ( तैसं. ७।१।१।५ ) इति । अन्यत्राप्याम्नायते– 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः' ( शुसं. ३१।११ ) इति । तस्मात् पुरोहितकृत्यविदाऽपि क्षत्त्रियेण कर्म करिष्यमाणेन ब्राह्मण एवोपसरणीयः । तथा च सति तेनोपदिष्टत्वात् तत्कृतं कर्म समृध्यते इत्यर्थः ।

शब्रासा.

पौरोहित्यकामस्य बृहस्पतिसवः

[1]अथैष बृहस्पतिसवः । प्रजापतिः प्रजाः ससृजानः स व्यस्रंसत । सोऽन्नं भूतोऽशयत् । तस्य सर्वे देवा ममत्विन आसन् मम ममेति । तेऽब्रुवन्– वीदं भजामहा इति । तस्य विभागे न समपादयन् । तेऽब्रुवन्– आजिमस्यायामेति । त आजिमायन् । स बृहस्पतिराजिसरणं पन्थानमपश्यत् । स पूर्वः परीत्य रथेन वृत्वाऽतिष्ठत् । ते देवास्तं नाविन्दन् येनात्यसरिष्यन् । शश्वद्ध यावानेव रथयानाय तावानाजिरास । ततो वै स तमाजिमुदजयत् । यद्बृहस्पतिरुदजयत्तस्माद्बृहस्पतिसवः । तमाजिमुज्जिगिवांसमिन्द्रोऽब्रवीत्– पुरस्त्वा दधे, मामनेन यज्ञेन याजयेति । तथेति । तं पुरोऽधत्त । तेनैनमयाजयत् । ततो वा इन्द्रः सर्वेषां देवानां श्रैष्ठ्यमगच्छत् । गच्छति स्वानां श्रैष्ठ्यं य एवं वेद ।

स वा एष द्वयोरेव यज्ञो ब्राह्मणस्य चैव राजन्यस्य च । यद्बृहस्पतिरुदजयत्तेन ब्राह्मणस्य । यदिन्द्रोऽयजत तेनो राजन्यस्य । स उ हेन्द्रस्यैवैकस्य पुरोहित आस, नेतरेषां देवानाम् । सोऽकामयत– सर्वेषां देवानां पुरोधां गच्छेयमिति । स एतेनैव यज्ञे नायजत । ततो वै स सर्वेषां देवानां पुरोधामगच्छत् । बृहस्पतिर्वै देवानां पुरोहितः ॥

[2]अथर्ववेदिनं पुरोहितं वृणीत ॥

---

( १ ) जैब्रा. २।१२८.

( २ ) मच. ७।७८ श्रुतिः.

## जनानां प्रकाराः वृत्तं च

### वेदाः

वसूनां पञ्चानां जनानां च ईशानः इन्द्रः

[1]य एकश्चर्षणीनां वसूनामिरज्यति ।
इन्द्रः पञ्च क्षितीनाम् ॥

यः इन्द्रः स्वयं एक एव चर्षणीनां मनुष्याणां इरज्यति ईष्टे । तथा वसूनां धनानां इरज्यति । स इन्द्रः पञ्च निषादपञ्चमानां क्षितीनां निवासार्हाणां वर्णानामनुग्रहीतेति शेषः । ऋसा.

दैव्यो जनः

[2]मनुष्वदग्ने अङ्गिरस्वदङ्गिरो
ययातिवत्सदने पूर्ववच्छुचे ।
अच्छ याह्या वहा दैव्यं जन-
मा सादय बर्हिषि यक्षि च प्रियम् ॥

हे शुचे शुद्धियुक्त, अङ्गिरः अङ्गनशील हविरादानाय तत्र तत्र गमनशील अग्ने, अच्छ आभिमुख्येन सदने देवयजनदेशे याहि गच्छ । तत्र चत्वारो दृष्टान्ताः– मनुष्वत् यथा मनुः अनुष्ठानदेशे गच्छति, अङ्गिरस्वत् यथा च अङ्गिराः गच्छति, ययातिवत् यथा ययातिर्नाम राजा गच्छति, पूर्ववत् अन्ये च पूर्वपुरुषाः यथा गच्छन्ति, यथा मन्वादयो यज्ञे गच्छन्ति तद्वत् । अथवा, मन्वादीनां यज्ञे यथा त्वं गच्छसि तद्वत् । गत्वा च दैव्यं देवतासमूहरूपं जनं आ वह अस्मिन् कर्मणि आनय । आनीय च बर्हिषि आस्तीर्णे दर्भे आ सादय तान् देवान् उपवेशय । उपवेश्य च प्रियं अभीष्टं हविः यक्षि च देहि । ऋसा.

( १ ) ऋसं १।७।९ ; असं. २०।७०।१५.
( २ ) ऋसं. १।३१।१७.

[1]सुशंसो बोधि गृणते यविष्ठ्य
मधुजिह्वः स्वाहुतः ।
प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे
नमस्या दैव्यं जनम् ॥

हे यविष्ठ्य युवतमाग्ने, त्वं गृणते स्तुवते यजमानार्थं सुशंसः सुष्ठु शंसनीयः मधुजिह्वः मादयितृज्वालः स्वाहुतः सुष्ठु आभिमुख्येन हुतः सन् बोधि अस्मदभिप्रायं बुध्यस्व । किंच, प्रस्कण्वस्य एतन्नामकस्य कण्वपुत्रस्य महर्षेः । 'प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवः' ( नि. ३।१७ ) इति यास्कवचनात् । तस्य जीवसे जीवनार्थं आयुः प्रतिरन् प्रकर्षेण वर्धयन् दैव्यं देवसंबन्धिनं जनं नमस्य पूजय । ऋसा.

[2]प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥

हे सूर्य, त्वं देवानां विशः मरुन्नामकान् देवान्, 'मरुतो वै देवानां विशः' ( तैसं. २।२।५।७ ) इति श्रुत्यन्तरात् । तान् मरुत्संज्ञकान् देवान् प्रत्यङ् उदेषि तान्प्रतिगच्छन्नुदयं प्राप्नोषि, तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा, मानुषान् मनुष्यान् प्रत्यङ्ङुदेषि, तेऽपि यथा अस्मदभिमुख एव सूर्य उदेतीति मन्यन्ते । तथा, विश्वं व्याप्तं स्वः स्वर्लोकं दृशे द्रष्टुं प्रत्यङ् उदेषि, यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुख्येन पश्यन्ति तथोदेषीत्यर्थः । एतदुक्तं भवति– लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति । तथा चाम्नायते– 'तस्मात्सर्व एव मन्यते मां प्रत्युदगात्' ( तैसं. ६।५।४।२ ) इति । ऋसा.

( १ ) ऋसं. १।४४।६.
( २ ) ऋसं. १।५०।५ ; असं. १३।२।२०, २०।४७।१७ मानुषान् ( मानुषी ) ; नि. १२।२४.

धनकामिनां यात्रा रथैः नौभिश्च

[1]उवासोषा उच्छाच्च नु देवी जीरा रथानाम् ।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥

उषाः देवी उवास पुरा निवासमकरोत्, प्रभातं कृतवतीत्यर्थः । च नु अद्यापि उच्छात् व्युच्छति प्रभातं करोति । कीदृशी देवी ? रथानां जीरा प्रेरयित्री । उषःकाले हि रथाः प्रेर्यन्ते । अस्याः उषसः आचरणेषु आगमनेषु ये रथाः दध्रिरे धृताः सज्जीकृता भवन्ति तेषां रथानामिति पूर्वत्रान्वयः । रथप्रेरणे दृष्टान्तः— श्रवस्यवः धनकामाः समुद्रे न यथा समुद्रमध्ये नावः सज्जीकृत्य प्रेरयन्ति तद्वत् । श्रवस्यवः । श्रूयते इति श्रवः धनम् । असुन् । तदात्मन इच्छन्तीति श्रवस्यवः । ऋसा.

धर्मज्ञद्वारा जना जीवन्ति

[2]स्वाध्यो दिव आ सप्त यह्वी
रायो दुरो व्यृतज्ञा अजानन् ।
विदद्गव्यं सरमा दृळ्हमूर्वं
येना नु कं मानुषी भोजते विट् ॥

स्वाध्यः शोभनकर्मयुक्ताः यह्वीः यह्व्यः महत्यः सप्त गङ्गाद्याः सप्त नद्यः दिवः द्युलोकादागत्य भूम्यां प्रवहन्तीति शेषः । हे अग्ने, ईदृग्विधा नद्यस्त्वया स्थापिताः । अग्नौ होमे सति हि तेन तृप्तः सूर्यो वृष्टिं करोति । तस्मिन्नर्थे स्मृतिः पूर्वमुदाहृता । अतो वृष्टिद्वाराऽग्निरेव नदीः करोतीत्युच्यते । तथा, ऋतज्ञाः ऋतं यज्ञं जानन्तोऽङ्गिरसः रायः वलनाम्नाऽसुरेणापहृतस्य गोरूपस्य धनस्य दुरः द्वाराणि गमनमार्गान् (वि) अजानन् त्वया ज्ञातवन्तः । त्वत्साध्येन यागेन प्रीत इन्द्रो गवामन्वेषणाय सरमां नाम देवशुनीं प्रेषितवान् । सा च सरमा गवां स्थानमवगत्येन्द्रस्य न्यवेदयत् । इन्द्रश्च तानङ्गिरसो गाः प्रापयत् । अत एतत्सर्वं त्वमेव कृतवान् । अङ्गिरोभ्यः सकाशात् गव्यं गवि भवं दृळ्हं स्थूलम्, बहुलमित्यर्थः । एवंविधं पयोलक्षणं ऊर्वं अन्नं सरमा देवशुनी विदत् अलभत । कमित्येतत् पादपूरणम् । येन नु येन हि गव्येन मानुषी विट् मनोः संबन्धिनी प्रजा भोजते । इदानीं भुङ्क्ते, तत् गव्यमपि परंपरयाऽग्निरेव करोति । ऋसा.

(१) ऋसं. १।४८।३.
(२) ऋसं. १।७२।८.

ब्रह्म क्षत्रं च

[1]यदिन्द्राग्नी मदथः स्वे दुरोणे
यद्ब्रह्मणि राजनि वा यजत्रा ।
अतः परि वृषणावा हि यात-
मथा सोमस्य पिबतं सुतस्य ॥

यजत्रा यष्टव्यौ हे इन्द्राग्नी, स्वे दुरोणे स्वकीये गृहे निवासस्थाने यत् यदि मदथः हृष्यथः, यत् यदि वा ब्रह्मणि ब्राह्मणे अन्यस्मिन् यजमाने हविःस्वीकरणायाऽऽगत्य हृष्यथः । यदि वा राजनि क्षत्रिये युद्धे साहाय्यं कर्तुमागत्य हृष्यथः । अतः परि परितोऽस्मात् सर्वस्मात् स्थानात् हे वृषणौ कामानां वर्षिताराविन्द्राग्नी, आयातं हि आगच्छतमेव । औदासीन्यं मा कार्ष्टम् । अन्यत् पूर्ववत् । ( अथ आगमनानन्तरं सुतस्य सोमस्य अभिषुतं सोमं पिबतम् । ) । ऋसा.

उभयविधा जनाः— आर्याः दासाः ( दस्यवः ) च । आर्यदासभेदः अनुव्रतापव्रतभेदमूलकः, यज्वायज्वभेदमूलकः, देवभक्तादेवभक्तमूलकश्च अन्यथा वा

[2]* नि सर्वसेन इषुधीँरसक्त ।
समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं
मा पणिर्भूरस्मदधि प्रवृद्ध ॥

वधीर्हि दस्युं धनिनं घनेनँ
एकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधि विषुणक्ते व्यायन्न-
यज्वानः सनकाः प्रेतिमीयुः ॥

* एतदाद्यृक्चतुष्टयस्य व्याख्यानं 'देवा राजानः— इन्द्रः' इत्यस्मिन् प्रकरणे (पृ. १७) द्रष्टव्यम् ।

(१) ऋसं. १।१०८।७.
(२) ऋसं. १।३३।३-६.

परा चिच्छीर्षा ववृजुस्त इन्द्रा-
यज्वानो यज्वभिः स्पर्धमानाः।
प्र यद्दिवो हरिवः स्थातरुग्र
निरव्रताँ अधमो रोदस्योः ॥
अयुयुत्सन्ननवद्यस्य सेना-
मयातयन्त क्षितयो नवग्वाः।
वृषायुधो न वध्रयो निरष्टाः
प्रवद्भिरिन्द्राच्चितयन्त आयन् ॥

[१]यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा।
नू चित्स दभ्यते जनः ॥

प्रचेतसः प्रकृष्टज्ञानयुक्ताः वरुणादयो देवाः यं यजमानं रक्षन्ति सः जनः यजमानः नू चित् क्षिप्रमेव दभ्यते दभ्नोति शत्रून् हिनस्ति। प्रचेतसः प्रकृष्टं चेतो येषाम्।
ऋसा.

[२]यं बाहुतेव पिप्रति पान्ति मर्त्यं रिषः।
अरिष्टः सर्व एधते ॥

यं यजमानं पिप्रति वरुणादयो देवाः धनैः पूरयन्ति। तत्र दृष्टान्तः— बाहुतेव। स्वकीयो बाहुवर्गोऽपेक्षितं धनमानीय यथा पूरयति तद्वत्। तथा, यं मर्त्यं मनुष्यं यजमानं रिषः हिंसकात् पान्ति रक्षन्ति, सः सर्वः यजमानः अरिष्टः केनाप्यहिंसितः सन् एधते वर्धते। बाहुतेव। बाहुता बाहुत्वम्। भाववाचिनाऽनेन शब्देन बाहवस्तदाश्रया लक्ष्यन्ते। यद्वा, समूहार्थे तल्प्रत्ययो द्रष्टव्यः।
ऋसा.

वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम्।
नयन्ति दुरिता तिरः ॥

राजानः वरुणादयः एषां स्वकीययजमानानां पुरः पुरस्तात् दुर्गा गन्तुं दुःशकानि शत्रुनगराणि वि घ्नन्ति विशेषेण नाशयन्ति। तथा द्विषः शत्रूनपि वि घ्नन्ति। तथा दुरिता यजमानसंबन्धीनि दुरितानि तिरः नयन्ति विनाशं प्रापयन्ति। दुर्गा। दुःखेन गच्छन्त्यत्रेति दुर्गाणि।
ऋसा.

[१]त्वं गोत्रमङ्गिरोभ्योऽवृणोरपो-
तात्रये शतदुरेषु गातुवित्।
ससेन चिद्विमदायावहो वस्वा-
जावद्रिं वावसानस्य नर्तयन् ॥

हे इन्द्र, त्वं गोत्रं अव्यक्तशब्दवन्तं वृष्ट्युदकस्याऽऽवरकं मेघं अङ्गिरोभ्यः अङ्गिरसामृषीणामर्थाय अप अवृणोः अपवरणं कृतवानसि, वृष्टेरावरकं मेघं वज्रेणोद्घाट्य वर्षणं कृतवानसीत्यर्थः। यद्वा, गोत्रं गोसमूहं पणिभिरपहृतं गुहासु निहितं अङ्गिरोभ्यः ऋषिभ्यः अप अवृणोः गुहाद्वारोद्घाटनेन प्राकाशयः। उत अपि च, अत्रये महर्षये। कीदृशाय? शतदुरेषु शतद्वारेषु यन्त्रेषु असुरैः पीडार्थं प्रक्षिप्ताय गातुवित् मार्गस्य लम्भयिता अभूः। तथा, विमदाय चित् विमदनाम्ने महर्षयेऽपि ससेन अन्नेन युक्तं वसु धनं अवहः प्रापितवान्। तथा, आजौ संग्रामे जयार्थं ववसानस्य निवसतः वर्तमानस्यान्यस्यापि स्तोतुः अद्रिं वज्रं नर्तयन् रक्षणं कृतवानसीति शेषः। अतस्तव महिमा केन वर्णयितुं शक्यते इति भावः।
ऋसा.

त्वमपामपिधानावृणोरपा-
धारयः पर्वते दानुमद्वसु।
वृत्रं यदिन्द्र शवसावधीरहि-
मादित्सूर्यं दिव्यारोहयो दृशे ॥

हे इन्द्र, त्वं अपां उदकानां अपिधाना अपिधानानि आच्छादकान् मेघान् अप अवृणोः अपावरीष्ठाः। तथा, पर्वते पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने दानुमत् दानुमतो हिंसायुक्तस्य। यद्वा, दनुः असुरमाता सैव दानुः, तद्वतः। तादृशस्य वृत्रादेः वसु धनं अधारयः, शत्रून् जित्वा तदीयं धनमपहृत्य स्वगृहे न्यचिक्षिपः इत्यर्थः। यद्वा, दानुमत् इति वसुविशेषणम्। शोभनदानयुक्तमित्यर्थः। हे इन्द्र, त्वं यत् यदा शवसा

(१) ऋसं. १।४१।१ ; सासं. १।२।८ (१८५) नू चित् (न किः).

(२) ऋसं. १।४१।२–३.

(१) ऋसं. १।५१।३–९.

बलेन वृत्रं त्रयाणां लोकानामावरीतारम् । तथा च शाखान्तरे समाम्नातम्– 'यदिमान् लोकानवृणोत्तद्वृत्रस्य वृत्रत्वम्' (तैसं. २।४।१२।२) इति । अहिं आ समन्तात् हन्तारम् । तथा च वाजसनेयिनः समामनन्ति– 'सोऽग्नीषोमावभिसंबभूव सर्वां विद्यां सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत्समभवत्तस्मादहिः' इति । एवंभूतमसुरं अवधीः वधं प्रापयः । आदित् अनन्तरमेव दिवि द्युलोके दृशे द्रष्टुं सूर्यं आरोहयः, वृत्रेणाऽऽवृतं सूर्यं तस्मात् वृत्रात् अमूमुचः इत्यर्थः । अपिधाना । अपिधीयते आच्छाद्यते एभिरिति अपिधानानि । पर्वते । पर्ववान् पर्वतः । 'पर्व पुनः पृणातेः प्रीणातेर्वा' (नि. १।२०) इति यास्कः । ऋसा.

त्वं मायाभिरप मायिनोऽधमः
स्वधाभिर्ये अधि शुप्तावजुह्वत ।
त्वं पिप्रोर्नृमणः प्रारुजः पुरः
प्र ऋजिश्वानं दस्युहत्येष्वाविथ ॥

हे इन्द्र, त्वं मायाभिः जयोपायज्ञानैः । मायेति ज्ञाननाम, 'शची माया' (निघण्टुः ३।९।९) इति तन्नामसु पाठात् । यद्वा, मायाभिः लोकप्रसिद्धैः कपटैः । मायिनः उक्तलक्षणमायोपेतान् वृत्रादीनसुरान् अप अधमः अपाजीगमः । 'धमतिर्गतिकर्मा' (नि. ६।२) इति यास्कः । ये असुराः स्वधाभिः हविर्लक्षणैरन्नैः शुप्तौ अधि शोभमाने स्वकीये मुखे एव अजुह्वत अहौषुः नाग्नौ, तानसुरानिति पूर्वेण संबन्धः । तथा च कौषीतकिभिराम्नायते– 'असुरा वा आत्मन्नजुहवुरुद्धातेऽग्नौ ते पराभवन्' इति । वाजसनेयिभिरप्याम्नातम्– 'देवाश्च ह वा असुराश्चास्पर्धन्त, ततो हासुरा अभिमानेन कस्मै च न जुहुम इति स्वेष्वेवास्येषु जुह्वतश्चेरुस्ते पराबभूवुः' इति । तथा हे नृमणः नृषु यजमानेषु रक्षितव्येषु अनुग्रहबुद्धियुक्त, त्वं पिप्रोः पूरयितुरेतन्नाम्नोऽसुरस्य पुरः पुराणि निवासस्थानानि प्र अरुजः प्राभाङ्क्षीः । एवं कृत्वा तेनासुरेणोपद्रुतं ऋजिश्वानं ऋजुगमनमेतत्संज्ञकं स्तोतारं दस्युहत्येषु दस्यूनां उपक्षपयितॄणां हननेन युक्तेषु संग्रामेषु । यद्वा, दस्यूनां हनने निमित्तभूतेषु प्र आविथ प्रकर्षेण ररक्षिथ । नृमणः । नृषु मनो यस्य । 'छन्दस्यृदवग्रहात्' (पा० ८।४।२६) इति णत्वम् । ऋजिश्वानम् । ऋजु अश्नुते प्राप्नोतीति ऋजिश्वा । पृषोदरादिः । दस्युहत्येषु । दस्यूनां हत्या येषु संग्रामेषु । ऋसा.

त्वं कुत्सं शुष्णहत्येष्वाविथा-
रन्धयोऽतिथिग्वाय शम्बरम् ।
महान्तं चिदर्बुदं नि क्रमीः पदा
सनादेव दस्युहत्याय जज्ञिषे ॥

हे इन्द्र, त्वं कुत्सं कुत्ससंज्ञकमृषिं शुष्णहत्येषु । शुष्णः शोषयिता एतन्नाम्नोऽसुरस्य हननयुक्तेषु संग्रामेषु आविथ ररक्षिथ । तथा अतिथिग्वाय अतिथिभिर्गन्तव्याय दिवोदासाय शम्बरं एतन्नामानमसुरं अरन्धयः हिंसां प्रापयः । तथा महान्तं चित् अतिप्रवृद्धमपि अर्बुदं एतत्संज्ञकमसुरं पदा पादेन नि क्रमीः नितरामाक्रमिताऽभूः । यस्मादेवं तस्मात् सनादेव चिरकालादेवाऽऽरभ्य दस्युहत्याय उपक्षपयितॄणां हननाय जज्ञिषे, सर्वदा त्वं दस्युहननशीलो भवसीत्यर्थः । ऋसा.

त्वे विश्वा तविषी सध्र्यग्घिता
तव राधः सोमपीथाय हर्षते ।
तव वज्रश्चिकिते बाह्वोर्हितो
वृश्चा शत्रोरव विश्वानि वृष्ण्या ॥

हे इन्द्र, त्वे त्वयि विश्वा तविषी सर्वं बलं सध्र्यक् सध्रीचीनं अपराङ्मुखं यथा भवति तथा हिता निहितम् । तथा तव राधः मनः सोमपीथाय सोमपानाय हर्षते हृष्यति । किंच, तव बाह्वोः हस्तयोः हितः अवस्थितः वज्रः चिकिते अस्माभिर्ज्ञायते । अतः शत्रोः शातयितुः वैरिणः विश्वानि सर्वाणि वृष्ण्या वृष्ण्यानि वीर्याणि अव वृश्च छेदनं कुरु । सहाञ्चतीति सध्र्यक् । राधः । राध्नोति समृद्धो भवत्यनेन । राधोऽत्र मन उच्यते । ऋसा.

विजानीह्यार्यान्ये च दस्यवो
बर्हिष्मते रन्धया शासदव्रतान् ।
शाकी भव यजमानस्य चोदिता
विश्वेत्ता ते सधमादेषु चाकन ॥

हे इन्द्र, त्वं आर्यान् विदुषः अनुष्ठातॄन् वि जानीहि विशेषेण बुध्यस्व । ये च दस्यवः तेषामनुष्ठातॄणामुपक्षपयितारः शत्रवः तानपि वि जानीहीति शेषः । ज्ञात्वा च बर्हिष्मते बर्हिषा यज्ञेन युक्ताय यजमानाय अव्रतान् । व्रतमिति कर्मनाम । कर्मविरोधिनस्तान् दस्यून् रन्धय हिंसां प्रापय । यद्वा, यजमानस्य वशं गमय । 'रध्यतिर्वशगमने' (नि. ६।३२) इति यास्कः । किं कुर्वन् ? शासत् दुष्टानामनुशासनं निग्रहं कुर्वन् । अतः शाकी शक्तियुक्तस्त्वं यजमानस्य चोदिता प्रेरको भव । यज्ञविघातकानसुरांस्तिरस्कृत्य यज्ञान् यजमानैः सम्यगनुष्ठापयेति भावः । अहमपि स्तोता ते तव ता तानि पूर्वोक्तानि कर्माणि विश्वेत् सर्वाण्येव सधमादेषु सहमदनयुक्तेषु यज्ञेषु स्तोतुं चाकन कामये । सधमादेषु । सह माद्यन्ति एष्विति सधमादा यज्ञाः । ऋसा.

अनुव्रताय रन्धयन्नपव्रताना-
भूभिरिन्द्रः श्नथयन्ननाभुवः ।
वृद्धस्य चिद्वर्धतो द्यामिनक्षतः
स्तवानो वम्रो वि जघान संदिहः ॥

यः इन्द्रः अनुव्रताय अनुकूलकर्मणे यजमानाय अपव्रतान् अपगतकर्मणः अयजमानान् रन्धयन् हिंसयन् वशीकुर्वन् वा, तथा आभूभिः । आभिमुख्येन भवन्तीति आभुवः स्तोतारः तैः अनाभुवः तद्विपरीतान् श्नथयन् हिंसयन् वर्तते । वृद्धस्य चित् वर्धतः पूर्वं वृद्धस्यापि पुनर्वर्धमानस्य द्यामिनक्षतः स्वर्गं व्याप्नुवतः तस्येन्द्रस्य स्तवानः स्तुतिं कुर्वाणः वम्रः स्तुत्युद्गिरणशीलः एतत्संज्ञक ऋषिः संदिहः सम्यगुपचिता वल्मीकवपाः वि जघान, इन्द्रेण परिहृतान्तरायः सन् पृथिव्याः सारभूतं वल्मीकवपालक्षणं यज्ञसंभारमाहार्षीदित्यर्थः । तथा च शाखान्तरे समाम्नातम्- 'यद्वल्मीकवपासंभारो भवति । ऊर्जमेव रसं पृथिव्या अवरुन्धे ।' (तैब्रा. १।१।३।४) इति । अनुव्रताय । अनुकूलं व्रतं यस्य । ऋसा.

[1]प्र मन्दिने पितुमदर्चता वचो
यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं
मरुत्वन्तं सख्याय हवामहे ॥

हे ऋत्विजः, मन्दिने स्तुतिमते स्तोतव्यायेन्द्राय पितुमत् हविर्लक्षणेनान्नेनोपेतं वचः स्तुतिलक्षणं वचनं प्र अर्चत प्रकर्षेणोच्चारयत । यः इन्द्रः ऋजिश्वना एतत्संज्ञकेन राज्ञा सख्या सहितः सन् कृष्णगर्भाः । कृष्णो नाम कश्चिदसुरः । तेन निषिक्तगर्भास्तदीयाः भार्याः निरहन् अवधीत्, कृष्णमसुरं हत्वा पुत्राणामप्यनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्याः अप्यवधीदित्यर्थः । अवस्यवः रक्षणेच्छवो वयं वृषणं कामानां वर्षितारं वज्रदक्षिणं वज्रयुक्तेन दक्षिणहस्तेनोपेतं तं मरुत्वन्तं इन्द्रं सख्याय सख्युः कर्मणे हवामहे आह्वयामहे । मन्दिने । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । औणादिकः इनिप्रत्ययः । तदुक्तं यास्केन- 'मन्दी मन्दतेः स्तुतिकर्मणः' (नि. ४।२४) इति । कृष्णगर्भाः कृष्णेन निषिक्ताः गर्भाः यासु तास्तथोक्ताः । सख्याय । सख्युः कर्म सख्यम् । ऋसा.

[2]यो व्यंसं जाहृषाणेन मन्युना
यः शम्बरं यो अहन्पिप्रुमव्रतम् ।
इन्द्रो यः शुष्णमशुषं न्यावृण-
ङ्मरुत्वन्तं सख्याय हवामहे ॥

यः इन्द्रः जाहृषाणेन प्रवृद्धेन मन्युना क्रोधेन व्यंसं विगतभुजं वृत्रं अहन् अवधीत् । अपि च, यः इन्द्रः शम्बरं एतत्संज्ञमसुरं चावधीत् । तथा अव्रतं व्रतस्य यागादेः कर्मणो विरोधिनं पिप्रुं एतत्संज्ञमसुरं च यः इन्द्रोऽवधीत् । किंच, यः इन्द्रः अशुषं शोषकरहितं शुष्णं

(१) ऋसं. १।१०१।१ ; सासं. १।४।३ (३८०) हवामहे (हुवेमहि) ; ऐब्रा. २४।१ ; शाब्रा. २६।१६; नि. ४।२४.
(२) ऋसं. १।१०१।२.

सर्वस्य जगतः शोषकं एतत्संज्ञमसुरं नि अवृणक् न्यवर्जयत्, समूलं हतवानित्यर्थः। तं मरुत्वन्तं इन्द्रं सख्याय आह्वयामहे। व्यंसम्। विगतः अंसो यस्मात्। अशुषम्। शुषाः शोषका न सन्त्यस्येति अशुषः। ऋसा.

[1]यो अश्वानां यो गवां गोपतिर्वशी
य आरितः कर्मणिकर्मणि स्थिरः।
वीळोश्चिदिन्द्रो यो असुन्वतो वधो
मरुत्वन्तं सख्याय हवामहे ॥

यः इन्द्रः अश्वानां पतिरधिपतिः। तथा यः इन्द्रः गोपतिः। न केवलमेकस्या गोः किंतु सर्वासामित्याह— गवामिति। सर्वासां गवामधिपतिर्भवति। वशी अपराधीनः, स्वतन्त्र इत्यर्थः। अपि च, यः इन्द्रः कर्मणिकर्मणि सर्वेषु कर्मसु स्थिरः नैश्चल्येनावतिष्ठमानः आरितः स्तुतिभिः प्रत्यृतः प्राप्तो भवति। 'आरितः प्रत्यृतः स्तोमान्' (नि. ५।१५) इति निरुक्तम्। यः च इन्द्रः असुन्वतः सुन्वतां यागानुष्ठातॄणां विरोधिनः वीळोश्चित् दृढस्यापि शत्रोः वधः हन्ता तं मरुत्वन्तं इन्द्रं सख्याय आह्वयामहे। ऋसा.

[2]स जातूभर्मा श्रद्दधान ओजः
पुरो विभिन्दन्नचरद्वि दासीः।
विद्वान्वज्रिन्दस्यवे हेतिमस्यार्यं
सहो वर्धया द्युम्नमिन्द्र ॥

जातूभर्मा। जातू इत्यशनिमाचक्षते। भर्म आयुधम्। अशनिरूपमायुधं यस्य स तथोक्तः। यद्वा, जातानां प्रजानां भर्ता। ओजः ओजसा बलेन निष्पाद्यं कार्यं श्रद्दधानः आदरातिशयेन कामयमानः एवंभूतः सः इन्द्रः दासीः दस्युसंबन्धीनि पुरः पुराणि विभिन्दन् विनाशयन् वि अचरत् विविधमगच्छत्। हे वज्रिन् वज्रवन् इन्द्र, विद्वान् स्तुतीः विजानंस्त्वं अस्य स्तोतुः दस्यवे उपक्षयकारिणे शत्रवे हेतिं आयुधं विसृजेति शेषः। अपि च, हे इन्द्र, आर्यं सहः। आर्या विद्वांसः स्तोतारः। तदीयं बलं वर्धय अतिवृद्धं कुरु। तथा द्युम्नं तदीयं यशश्च प्रवर्धय। जातूभर्मा। जनी प्रादुर्भावे। जान् तूर्वतीति जातूः। तुर्वी हिंसार्थः। भ्रियते इति भर्मा। जातूः भर्म यस्य। पक्षान्तरे तु जनेर्निष्ठा। जातं सर्वं भर्म भर्तव्यं येन। ऋसा.

[1]ओ त्ये नर इन्द्रमूतये गुर्नू
चित्तान्त्सद्यो अध्वनो जगम्यात्।
देवासो मन्युं दासस्य श्चम्नन्
ते न आ वक्षन्त्सुविताय वर्णम् ॥

त्ये ते नरः यज्ञस्य नेतारो यजमानाः ऊतये रक्षणाय इन्द्रं ओ। आ उ इत्येतन्निपातद्वयसमुदायः आकारार्थः। आ गुः आगच्छन्ति। स चेन्द्र आगतान् तान् नू चित् क्षिप्रं सद्यः तदानीमेव अध्वनः अनुष्ठानमार्गान् जगम्यात् गमयतु प्रापयतु। देवासः सर्वे देवाः दासस्य उपक्षपयितुः असुरस्य मन्युं क्रोधं श्चम्नन् भक्षयन्तु, हिंसन्तु इत्यर्थः। अपि च, ते देवाः न अस्माकं सुविताय सुष्ठु प्राप्तव्याय यज्ञाय वर्णं अनिष्टनिवारकमिन्द्रं आ वक्षन् आवहन्तु आनयन्तु। श्चम्नन्। चमु अदने। लेटि व्यत्ययेन श्ना। शकारोपजनश्छान्दसः। यद्वा, श्नम्नातिः प्रकृत्यन्तरं हिंसार्थे द्रष्टव्यम्। ऋसा.

[2]ऋभुर्न इन्द्रः शवसा नवीया-
नृभुर्वाजेभिर्वसुभिर्वसुर्ददिः।
युष्माकं देवा अवसाहनि प्रियेऽ-
ऽभि तिष्ठेम पृत्सुतीरसुन्वताम् ॥

ऋभुः विभ्वा वाजः इति त्रयः सुधन्वनः पुत्राः। तत्र शवसा बलेन नवीयान् नवतरः प्रशस्ततरः ऋभुः नः अस्माकं इन्द्रः परमेश्वरः, अस्माकं रक्षक इत्यर्थः। यद्वा, इन्द्र एव प्रसङ्गात् उरु भातीति नैरुक्तव्युत्पत्त्या ऋभुरिति स्तूयते। अपि च, वाजेभिः वाजैः अस्मभ्यं दातव्यैरन्नैः वसुभिः निवासहेतुभिर्धनैश्च ऋभुः वसुः अस्माकं निवासयिता अत एव ददिः तेषामन्नानां धनानां च दाता भवतु। परोऽर्धर्चः प्रत्यक्षकृतः। हे देवाः दानादिगुणयुक्ता ऋभुप्रभृतयः, युष्माकं संबन्धिना अवसा रक्षणेन युक्ते

(१) ऋसं. १।१०१।४.
(२) ऋसं. १।१०३।३.

(१) ऋसं. १।१०४।२.
(२) ऋसं. १।११०।७.

प्रिये अस्माकमनुकूले अहनि दिवसे वर्तमाना वयं असुन्वतां सुन्वद्यजमानविरोधिनां शत्रूणां पृत्सुतीः सेनाः अभि तिष्ठेम । नवीयान् । नवशब्दात् आतिशायनिक ईयसुन् ।

ऋसा.

[1]त्वं सूरो हरितो रामयो नॄन्
भरच्चक्रमेतशो नायमिन्द्र ।
प्रास्य पारं नवतिं नाव्याना-
मपि कर्तमवर्तयोऽयज्यून् ॥

हे इन्द्र, सूरः सूर्यात्मना वर्तमानः त्वं हरितः हरिद्वर्णान् नॄन् नेतॄन् अश्वान् । यद्वा, रसहरणशीलान् रश्मीन् रमयः उपारमयः । एतशो न । एतश इति सूर्याश्वस्याऽऽख्या । तथा च श्रूयते– 'एतशेन त्वा सूर्यो देवतां गमयतु' ( तैसं. १।६।४।६ ) इति । नशब्दश्चार्थे । एतशश्च रथस्य चक्रं भरत् प्रावहत् । अपि च, त्वं नाव्यानां नावा तार्याणां नदीनां नवतिं नवतिसंख्यां अतीत्य वर्तमानं पारं तीरदेशम् । सप्तम्यर्थे द्वितीया । तीरदेशे अयज्यून् अयजमानान् यज्ञविहीनान् असुरादीन् प्रास्य प्रक्षिप्य तत्र कर्ते अवर्तयः कर्तव्यमपि कृत्वा तानयजमानानवर्तयः प्रापयः ।

ऋसा.

[2]इन्द्रः समत्सु यजमानमार्यं प्रावद्विश्वेषु
शतमूतिराजिषु स्वर्मीळ्हेष्वाजिषु ।
मनवे शासदव्रतान्त्वचं कृष्णामरन्धयत् ।
दक्षन्न विश्वं ततृषाणमोषति
न्यर्शसानमोषति ॥

अयं इन्द्रः समत्सु रणेषु प्रहारनिमित्तेषु यजमानं यष्टारं आर्यं अरणीयं सर्वैर्गन्तव्यं प्रावत् रक्षति । समत्सु इति संग्रामनाम, 'समत्सु समरणे' ( निघण्टुः २।१७।२२ ) इति तन्नामसु पाठात् । किंच, शतमूतिः स्वभक्तेष्वपरिमितरक्षणः इन्द्रः विश्वेषु । लिङ्गव्यत्ययः । आजिषु सर्वेषु स्पर्धानिमित्तेषु संग्रामेषु यजमानं प्रावत् । तथा स्वर्मीळ्हेषु स्वर्गदेशेषु सुखस्य सेचयत्सु वा आजिषु महासंग्रामेषु प्रावत् स्वर्गप्रदानेन रक्षति । रणे आभिमुख्येन हतानां वीराणां स्वर्गः पराशरेण स्मर्यते– 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे योऽभिमुखो हतः ॥' ( पस्मृ. ३।२५ ) इति । अत्रेतिहासमाचक्षते– अंशुमती नाम नदी । तस्यास्तीरे कृष्णनामा असुरः वर्णतश्च कृष्णः दशसहस्रैरनुचरैरुपेतः तद्देशवर्तिनः पीडयन्नास्ते । तत्रेन्द्रः बृहस्पतिना प्रेरितः सन् मरुद्भिः सहितः कृष्णां तदीयत्वचमुत्कृत्य सानुचरमवधीत् । अयमर्थः 'अव द्रप्सो अंशुमतीमतिष्ठत्' (ऋसं. ८।९६।१३) इत्यादिना उपरिष्टात् वक्ष्यते । तदत्रोच्यते । अयमिन्द्रः मनवे मनुष्याय । विभक्तिव्यत्ययः । मनुष्याणामर्थाय । अव्रतान् । व्रतमिति कर्मनाम । तद्रहितान् यागविद्वेषिणः शासत् शिक्षितवान् हिंसितवान् । तथा, कृष्णां त्वचं कृष्णनाम्नोऽसुरस्य कृष्णवर्णां त्वचमुत्कृत्य अरन्धयत् हिंसितवान् । केन प्रकारेणेति तदुच्यते– धक्षन्न भस्मीकरोतीव । तथा, विश्वं ततृषाणमोषति सर्वमपि हिंसकं तदनुचरसंघं दहति । यत्किञ्चिदवशिष्टमिति न इत्याह । अर्शसानं हिंसारुचिं हतावशिष्टं सर्वमपि नि ओषति निःशेषेण दहति ।

ऋसा.

[1]जघन्वाँ इन्द्र मित्रेरू-
ञ्चोदप्रवृद्धो हरिवो अदाशून् ।
प्र ये पश्यन्नर्यमणं सचायो-
स्त्वया शूर्ता वहमाना अपत्यम् ॥

हे इन्द्र हरिवः हरिभ्यां तद्वन्, त्वं चोदप्रवृद्धः चोदनैः स्तोत्रैः प्रवृद्धः सन् अदाशून् अदातॄन् मित्रेरून् मित्राणां यजमानानां ईरयितॄन् बाधकान् तद्वैरिणां मित्रत्वं गच्छतो वा, जघन्वान् हतवानसि । किंच, ये अर्यमणं दातारं त्वां प्र पश्यन् पश्यन्ति ते नराः आयोः मनुष्यस्य अध्वर्य्वादेः हविर्लक्षणान्नस्य वा, सचा सह शूर्ताः क्षिप्रा हविष्प्रदानेन त्वया अपत्यं कुलस्यापातयितारं पुत्रं वहमानाः ये सन्ति ते प्र पश्यन् । यद्वा, ये अर्यमणं त्वां पश्यन्ति ते एवं भवन्ति । यद्वा, ये नरा अर्यमणं यं कंचिद्दातारं पश्यन् पश्यन्तः त्वामयजन्त आयोः

( १ ) ऋसं. १।१२१।१३.
( २ ) ऋसं. १।१३०।८.
( १ ) ऋसं. १।१७४।६,८.

मनुष्यस्य सचा सहायभूतास्त्वया शूर्ताः क्षिप्ता वर्जिता अपत्यं पुत्रं वहमाना ये सन्ति तान् जघन्वान् भवेत्यर्थ । ऋसा.

**सना ता त इन्द्र नव्या आगुः**
**सहो नभोऽविरणाय पूर्वीः ।**
**भिनत्पुरो न भिदो अदेवी-**
**र्ननमो वधरदेवस्य पीयोः ॥**

हे इन्द्र, ते तव संबन्धीनि सना सदातनानि नित्यानि तानि शौर्याणि नव्याः नवतराः इदानींतना ऋषयः आगुः आगच्छन्ति, स्तुतिव्याजेन प्राप्नुवन्तीत्यर्थः । कानि तानीति उच्यते— पूर्वीः बह्वीः । नभः हिंसाः । नभे-र्हिंसार्थात् क्विप् । तदन्तस्येदं रूपम् । ताः हिंसाः अवि-रणाय अविगतरणाय संग्रामनाशनाय सहः अभ्यभवः । तदर्थं भिदः भेत्तृः घातिकाः अदेवीः आसुरीः पुरो न पुरीरपि भिनत् विदारितवानसि । पुरुषव्यत्ययः । न-शब्दश्चार्थे । तथा, अदेवस्य अस्तुत्यस्य पीयोः हिंसक-स्याऽऽसुरस्य वधः वज्रं ननमः अनमयः अनुकूल-मकरोः । यद्वा, हे इन्द्र, सना नित्यं तत्तत्काले ते तव संबन्धिन्यः ता तानि । लिङ्गव्यत्ययः । ताः पूर्वीः पुरातन्य आपो नव्या नूतनाः स्तुत्याः सत्यः आगुः आगच्छन्ति । किमर्थम् ? अविरणाय अविरमणाय प्राणि-नामविनाशाय । तदर्थं नभो हिंसकान् बन्धकान् वा मेघान् सहः मर्षणमकरोः । किंच, अदेवीः पुरः अवर्ष-णेनादेवनशीलानुदकपुटबन्धान् भिनत् भिन्नानकरोः । तथा अदेवस्य अदेवनशीलस्य पीयोः प्रतिकूलस्य वृत्रस्य वधः वज्रं ननमः अनमयः । ऋसा.

**[1]त्वं हि शूरः सनिता चोदयो मनुषो रथम् ।**
**सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥**

हे इन्द्र, त्वं खलु शूरः शौर्योपेतः सनिता दाताऽसि । अतः मनुषः मनुष्यस्य मे रथं रंहणं स्पन्दनं मनोरथं वा स्वर्गगमनसाधनं यज्ञाख्यं रथं वा, चोदयः प्रेरय । किंच, त्वं सहावान् सोमसहायवान् बलवान् वा भूत्वा दस्युं उपक्षपयितारं अव्रतं अकर्माणमननुष्ठायिनं ओषः दह । किमिव ? शोचिषा दीप्त्या ज्वालया अग्निः पात्रं न स्वाधारं पात्रविशेषमिव, यागाधिकारी सन् यो न यजते तं दहेत्यर्थः । ऋसा.

(१) ऋसं. १।१७५।३ ; सासं. २।१२।६ (१४३४).

**[1]शुभ्रं नु ते शुष्मं वर्धयन्तः**
**शुभ्रं वज्रं बाह्वोर्दधानाः ।**
**शुभ्रस्त्वमिन्द्र वावृधानो अस्मे**
**दासीर्विशः सूर्येण सह्याः ॥**

हे इन्द्र, ते तव शुभ्रं शोभनं शुष्मं बलं स्तोत्रैः वर्धयन्तः शुभ्रं दीप्तं वज्रं आयुधं नु क्षिप्रं तव बाह्वो-र्दधानाः निदधानाः । स्तूयमानो हि इन्द्रः असुरवधाय वज्रमादत्त इतीत्थंरूपेण आयुधं निदधाना भवामः । वावृधानः स्तोत्रैः वर्धमानः शुभ्रः तेजसा युक्तः त्वं अस्मे अस्माकं दासीः उपक्षपयित्रीः विशः आसुरीः प्रजाः सूर्येण सुष्ठु प्रेरकेण । आयुधं हि प्रेरयति त्वं युध्यस्वेति । एवंरूपेण बाह्वोर्निहितेन वज्रेण सह्याः अभिभव । ऋसा.

**धिष्वा शवः शूर येन वृत्र-**
**मवाभिनद्दानुमौर्णवाभम् ।**
**अपावृणोर्ज्योतिरार्याय**
**नि सव्यतः सादि दस्युरिन्द्र ॥**

शूर हे इन्द्र, शवः तादृशं बलं धिष्व धारय । येन बलेन दानुं दानोः पुत्रं वृत्रं और्णवाभम् । ऊर्णवाभिः कीटविशेषः और्णवाभ इत्युच्यते । तमिव अवाभिनत् विभेदिथ । यद्वा, और्णः ऊर्णनाभिः । तदाभम्, तत्स-दृशमित्यर्थः । ततस्तमोरूपस्य हननात् आर्याय कर्मणां अनुष्ठात्रे जनाय कुत्साय राजर्षये वा, ज्योतिः प्रकाश-कमादित्यं अपावृणोः उद्घाटितवानसि । दस्युः कर्मणामु-पक्षपयिता स वृत्रः सव्यतः तव सव्यपार्श्वे नि षादि त्वया नितरां सन्नो बाधितो वर्तते । ऋसा.

(१) ऋसं. २।११।४,१८-१९.

सनेम ये त ऊतिभिस्तरन्तो
विश्वाः स्पृध आर्येण दस्यून् ।
अस्मभ्यं तत्त्वाष्ट्रं विश्वरूप-
मरन्धयः साख्यस्य त्रिताय ॥

सनेम तान् पुरुषान् संभजेम, ये ते तव ऊतिभिः पालनैः विश्वाः स्पृधः स्पर्धमानाः सर्वा विशः तरन्तः हिंसन्तः तथा आर्येण आर्यभावेन दस्यून् उपक्षपयितॄन् हिंसन्तो भवन्ति । तत् अस्मभ्यं वशमानय । किं तत् ? तदाह– त्वाष्ट्रं त्वष्टुः सुतं विश्वरूपं एतन्नामकमसुरं अरन्धयः वशमानयः । यद्वा, तमसुरमवधीः । इन्द्रस्त्वाष्ट्रमवधीदित्ययमर्थस्तैत्तिरीयके 'विश्वरूपो वै त्वाष्ट्रः' (तैसं. २।५।१।१) इत्यत्र महता प्रबन्धेन प्रपञ्चितः । किंच, साख्यस्य सखिभावस्यानुपालनाय त्रिताय महर्षये वशमानयः । यद्वा, सनेम ते वयं प्रवृद्धा भवेम ये वयं तव रक्षाभिः स्पर्धमानाः प्रजा दस्यूंश्च तरन्तः अतिक्रामन्तो भवेम । ऋसा.

[१]यः शश्वतो मह्येनो दधाना-
नमन्यमानाञ्छर्वा जघान ।
यः शर्धते नानुददाति शृध्यां
यो दस्योर्हन्ता स जनास इन्द्रः ॥

जनासः जनाः हे असुराः, यः महि महत् एनः पापं दधानान् शश्वतः बहून् अमन्यमानान् आत्मानमजानत इन्द्रमपूजयतो वा जनान् शर्वा । शृणाति शत्रूननेनेति शरुर्वज्रः । तेनाऽऽयुधेन जघान । यः च शर्धते उत्साहं कुर्वते अनात्मज्ञाय जनाय शृध्यां उत्साहनीयं कर्म नानुददाति न प्रयच्छति । यः च दस्योः उपक्षपयितुः शत्रोः हन्ता घातकः स इन्द्रः इत्यादि पूर्ववत् । ऋसा.

[२]स वृत्रहेन्द्रः कृष्णयोनीः
पुरंदरो दासीरैरयद्वि ।
अजनयन्मनवे क्षामपश्च
सत्रा शंसं यजमानस्य तूतोत् ॥

वृत्रहा वृत्रस्य हन्ता पुरंदरः शम्बरपुरां दारयिता स इन्द्रः कृष्णयोनीः निकृष्टजातीः दासीः उपक्षपयित्रीरासुरीः सेनाः वि ऐरयत् व्यनुदत् । किंच, मनवे मनोरर्थे क्षां पृथिवीं अपः उदकानि च अजनयत् । यजमानस्य सत्रा महान्तं शंसं अभिलाषं तूतोत् कामप्रदानेन पूरयतु । 'तु वृद्धौ' इति सौत्रो धातुः । शपः श्लुः । यद्वा, सत्रा महत् शंसं शंसनीयं शस्त्रं कामप्रदानेन वर्धयतु । यद्वा, कृष्णयोनीः कृष्णाख्येनासुरेण निषिक्तरेतस्काः दासीर्भार्याः व्यैरयत् व्यनुदत् । तथा मन्त्रः– 'यः कृष्णगर्भा निरहन्नृजिश्वना' (ऋसं. १।१०१।१) इति । ऋसा.

तस्मै तवस्य[१]मनु दायि सत्रे-
न्द्राय देवेभिरर्णसातौ ।
प्रति यदस्य वज्रं बाह्वोर्धु-
र्हत्वी दस्यून्पुर आयसीर्नि तारीत् ॥

देवेभिः देवनशीलैः स्तोतृभिः अर्णसातौ उदकलाभे निमित्ते तस्मै इन्द्राय तवस्यं तवसे बलाय हितं बलवर्धनं हविः सत्रा संततं सर्वेष्वहःसु अनु अनुक्रमेण सवनत्रये दायि अदायि । यद्वा, तवस्यम् । यद्बलं प्रवृद्धाय दीयते तत्तवस्यम् । देवेभिः देवैरुदकभजनेऽनुक्रमेण तद्बलं तस्मै इन्द्रायादायि । तथा मन्त्रः– 'अनु ते दायि मह इन्द्रियाय' (ऋसं. ६।२५।८) इति । यत् यदा अस्य इन्द्रस्य बाह्वोः वज्रं प्रति धुः स्तोतारोऽसुरवधसूचकेन स्तोत्रेण प्रतिनिदधुः । स्तूयमानो हीन्द्रो दस्युवधार्थं वज्रमादत्ते । ततस्तेन वज्रेण दस्यून् असुरान् हत्वी हत्वा तदीया आयसीः अयोमयीः पुरः नि तारीत् नितरामनाशयत् । ऋसा.

[१]विभु प्रभु प्रथमं मेहनावतो
बृहस्पतेः सुविदत्राणि राध्या ।
इमा सातानि वेन्यस्य वाजिनो
येन जना उभये भुञ्जते विशः ॥

विभु विभूनि व्याप्तानि, प्रभु प्रभूणि प्रौढानि, प्रथमं प्रथमानि मुख्यानि, एवंभूतानि मेहनावतः वर्षणवतो वृष्टि-

(१) ऋसं. ४।१२।१० असं. २०।३४।१०.
(२) ऋसं. २।२०।७–८.

(१) ऋसं. २।२४।१०.

प्रदस्य बृहस्पतेः बृहतो मन्त्रस्य पालयितुः संबन्धीनि सुविदत्राणि सुष्ठु लब्धव्यानि । 'सुविदत्रं धनं भवति' (नि. ७।९) इति यास्कः । राध्या राध्यानि सम्यक् साधनीयानि, प्राप्तव्यानीति यावत् । इमा सातानि इमानि धनानि वेन्यस्य कमनीयस्य वाजिनः अन्नवतो ब्रह्मणस्पतेः । तृतीयार्थे षष्ठी । ब्रह्मणस्पतिना दत्तानि । येन धनेन उभये उभयविधाः जनाः स्तोतारो यजमानाश्च देवा मनुष्याश्च वा, विशः निविष्टाः सन्तः भुञ्जते भोगान् लभन्ते । तत्सर्वं ब्रह्मणस्पतिना दत्तमित्यर्थः । ऋसा.

[१]ऋजुरिच्छंसो वनवद्वनुष्यतो
देवयन्निददेवयन्तमभ्यसत् ।
सुप्रावीरिद्वनवत्पृत्सु दुष्टरं
यज्वेदयज्योर्वि भजाति भोजनम् ॥

ऋजुरित् आर्जवयुक्त एव । यद्वा, ऋज्जतिः प्रसाधनकर्मा । स्तोत्राणां प्रसाधक एव । शंसः ब्रह्मणस्पतेः स्तोता वनुष्यतः हिंसतः शत्रून् वनवत् वनुयात् हिंस्यात् । तथा, देवयन्नित् देवं दानादिगुणयुक्तं ब्रह्मणस्पतिमात्मन इच्छन्नेव, अदेवयन्तं तद्विपरीतं पुरुषं अभ्यसत् अभिभवेत् । तथा, सुप्रावीरित् सुष्ठु प्रकर्षेण ब्रह्मणस्पतेस्तर्पयितैव, पृत्सु पृतनासु संग्रामेषु दुस्तरं तरीतुमशक्यं वनवत् हिंस्यात् । तथा, यज्वेत् ब्रह्मणस्पतिं हविषा इष्टवानेव अयज्योः अयज्वनः भोजनं भोगसाधनं वि भजाति विशेषेण भजेत इत्यर्थः । ऋसा.

[२]स इज्जनेन स विशा स जन्मना
स पुत्रैर्वाजं भरते धना नृभिः ।
देवानां यः पितरमाविवासति
श्रद्धामना हविषा ब्रह्मणस्पतिम् ॥

यः यजमानः श्रद्धामनाः श्रद्धा मनसि यस्य तादृशः सन् देवानां पितरं पालयितारं ब्रह्मणस्पतिं हविषा चरुपुरोडाशादिना आविवासति परिचरति । विवासतिः परिचरणकर्मा । स इत् स एव यजमानः जनेन जातेन सर्वेण लोकेन वाजं अन्नं भरते बिभर्ति संभरति वा । स एव विशा प्रजया आत्मीयेन बन्धुजनेन वाजं भरते । * स एव पुत्रैः आत्मीयैरपत्यैः वाजं भरते । तथा नृभिः नेतृभिरन्यैः परिचारकैः धना धनानि भरते बिभर्ति संपादयति वा । ब्रह्मणस्पतिमिष्टवतो यजमानस्य सर्वतो जनाः अन्नधनयोः साधका भवन्तीति यावत् । ऋसा.

[१]ससानात्याँ उत सूर्यं ससाने-
न्द्रः ससान पुरुभोजसं गाम् ।
हिरण्ययमुत भोगं ससान
हत्वी दस्यून्प्रार्यं वर्णमावत् ॥

पूर्वमन्त्रे प्रतिपादितः स इन्द्रः अत्यान् अश्वान् ससान युद्धार्थं मरुद्भ्यो ददौ । उत अपि च, सूर्यं जगत्प्रकाशकमादित्यं ससान प्राणिनां व्यवहारनिर्वाहाय तेभ्यो ददौ । तथा, पुरुभोजसं पुरुभिः सर्वैर्जनैः क्षीरादिद्वारेणोपभुज्यत इति पुरुभोजाः । क्षीरादिरूपबहुविधान्नोपेतां गां अग्निहोत्रादिसिद्ध्यर्थं ससान तेभ्यः ददौ । उत अपि च, हिरण्ययं सुवर्णमयं भोगं धनम् । भुज्यतेऽस्मिन्निति भोगो गृहं वा । ससान अर्थिभ्यो ददौ । ततः दस्यून् बाधकानसुरान् हत्वी हत्वा आर्यं उत्तमं वर्णं त्रैवर्णिकं प्र आवत् यथा कर्मविघ्नो न भवेत्तथा अपालयत् । ऋसा.

[२]इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु ।
इन्द्र तानि त आ वृणे ॥

---

* अत्र 'स जन्मना' इत्यनयोः पदयोर्व्याख्यानं न दृश्यते । तैत्तिरीयब्राह्मणस्थैतन्मन्त्रव्याख्यानावसरे तु सायणाचार्यैः एवं व्याख्यातम्— 'स जन्मना स यजमानो जातेन सहोदरेण युक्तो वाजं भरते' (तैब्रा. २।८।५।३) इति । अत्रापि 'विशा प्रजया वाजं भरते । स एव जन्मना आत्मीयेन बन्धुजनेन वाजं भरते' इत्याकारकं भाष्यं कल्पयितुं शक्यम् ।

(१) ऋसं. २।२६।१.

(२) ऋसं. २।२६।३ ; तैसं. २।३।१४।३-४ ; मैसं. ४।१४।१० (१३८) ; तैब्रा. २।८।५।३.

(१) ऋसं. ३।३४।९ ; असं. २०।११।९.

(२) ऋसं. ३।३७।९ ; असं. २०।२०।२ , २०।५७।५ ; तैसं. १।६।१२।१ ; कासं. ८।१६ (३८) ; मैसं. ४।१२।२ (४५) तानि त (तानि ता) ; तैआ. १।१९।१.

शतक्रतो हे इन्द्र, ते तव संबन्धिषु पञ्चसु जनेषु गन्धर्वाः पितरो देवा असुरा रक्षांसि इत्येषु या यानि इन्द्रियाणि रूपग्रहणादिसामर्थ्यानि स्थितानि ते त्वदीयानि तानि इन्द्रियाण्यहं आ वृणे संभजे । यद्वा, पञ्चजनेषु निषादपञ्चमेषु चतुर्षु जनेषु यानीन्द्रियाणि सामर्थ्यानि तानि त्वदीयान्यहमावृणे । ऋसा.

परस्परविद्वेषिणो जनाः

[१]भवा नो अग्ने सुमना उपेतौ
सखेव सख्ये पितरेव साधुः ।
पुरुद्रुहो हि क्षितयो जनानां
प्रति प्रतीचीर्दहतादरातीः ॥

हे अग्ने, त्वं उपेतौ अस्माभिः क्रियमाणस्य प्रवर्ग्याख्यकर्मणः आभिमुख्येनागमने सुमनाः तत्कर्मसिद्ध्यर्थमनुकूलमनस्को भूत्वा नः साधुः भव अस्मत्संबन्धिकर्मसाधको भव । तत्र दृष्टान्तद्वयम्– सखेव सख्ये पितरेव इति । यथा सखा सुहृत् सख्ये मित्राय हितोपदेशेन साधुर्भवति, यथा च पितरा मातापितरौ पुत्राय सन्मार्गोपदेशेन साधकौ भवतः तद्वत् । किंच, जनानां मनुष्याणां क्षितयः मनुष्याः पुरुद्रुहो हि नानाविधद्रोहयुक्ताः । हिशब्दः कारणपरः । यस्माल्लोके परस्परमात्सर्यादिनाऽन्योन्यमसहमाना जनाः वर्तन्ते, तस्मात्त्वं प्रतीचीः प्रतीचः प्रतिकूलतयाऽस्मदाभिमुख्येन आगच्छतः अरातीः अरातीन् शत्रून् प्रति दहतात् त्वं प्रतिकूलः सन् भस्मसात् कुरु । ऋसा.

इन्द्रं अमन्यमानान् इन्द्रो हन्ति

[२]द्रुहं जिघांसन्ध्वरसमनिन्द्रां
तेतिक्ते तिग्मा तुजसे अनीका ।
ऋणा चिद्यत्र ऋणया न उग्रो
दूरे अज्ञाता उषसो बबाधे ॥

अयमिन्द्रः द्रुहं द्रोहं कुर्वतीं ध्वरसं हिंसिकां अनिन्द्रां इन्द्रमजानतीं राक्षसीं जिघांसन् हन्तुमिच्छन् तिग्मा तिग्मानि पूर्वमेव तीक्ष्णानि अनीका अनीकानि आयुधानि तुजसे तद्वधाय तेतिक्ते अत्यर्थं तीक्ष्णीकरोति । यत्र यासूषःसु तदुपलक्षितेष्वहःसु ऋणा चित् ऋणान्यपि नः अस्मान्, बाधन्त इति शेषः । ताः उषसः च उग्रः उद्गूर्णबलः ऋणयाः ऋणस्य हन्तेन्द्रः । यातिः वधकर्मा । दूरे अज्ञाता अननुभूताः सतीः बबाधे अपीडयत् । ऋसा.

[१]न रेवता पणिना सख्यमिन्द्रो-
ऽसुन्वता सुतपाः सं गृणीते ।
आस्य वेदः खिदति हन्ति नग्नं
वि सुष्वये पक्तये केवलो भूत् ॥

सुतपाः अभिषुतं सोमं पिबन् इन्द्रः रेवता धनवता पणिना वणिजा लुब्धेन असुन्वता सोमाभिषवमकुर्वता अयजमानेन सह सख्यं सखित्वं न सं गृणीते न संस्तौति, नानुमन्यते इत्यर्थः । किंच, अस्य अयजमानस्य नग्नं निरर्थकं वेदः धनं ज्ञानं वा, आ खिदति उद्धरति । हन्ति हिनस्ति च । अपि च, सुष्वये सोमं सुन्वते पक्तये हवींषि पचते यजमानाय केवलः असाधारणः सन् वि भूत् विभवति । ऋसा.

इन्द्रेण आर्याय भूमिर्दत्ता

[२]अहं भूमिमददामार्याया-
हं वृष्टिं दाशुषे मर्त्याय ।
अहमपो अनयं वावशाना
मम देवासो अनु केतमायन् ॥

अहं वामदेवः इन्द्रो वा, आर्याय मनवे भूमिं पृथ्वीं अददां दत्तवानस्मि । दाशुषे हविर्दत्तवते मर्त्याय मनुष्याय यजमानाय वृष्टिं सस्याद्यभिवृद्ध्यर्थं वृष्टिलक्षणमुदकं अहमेव अददाम् । किंच, अहं वावशानाः शब्दायमाना अपः उदकानि अनयं सर्वमपि प्रदेशं अगमयम् । देवासः वह्न्यादयो देवाः मम केतं मदीयं संकल्पं अनु आयन् अनुयन्ति । ऋसा.

(१) ऋसं. ३।१८।१ ; ऐब्रा. ४।२ ; शाब्रा. ८।४ ; आश्रौ. ४।६.
(२) ऋसं. ४।२३।७.

(१) ऋसं. ४।२५।७.
(२) ऋसं. ४।२६।२.

आर्यानपि श्रद्धाभक्तिहीनान् हन्ति इन्द्रः

[1]उत त्या सद्य आर्या सरयोरिन्द्र पारतः ।
अर्णाचित्ररथावधीः ॥

उत अपि च, सद्यः सपदि हे इन्द्र, त्वं त्या त्यौ तौ आर्या आर्यौ आर्यत्वाभिमानिनौ सन्तावपि, इन्द्रविषयभक्तिश्रद्धारहितावित्यर्थः । सरयोः सरय्वा नद्याः पारतः पारे तीरे वसन्तौ अर्णाचित्ररथा अर्णनामकं चित्ररथनामकं च राजानौ अवधीः अहिंसीः । ऋसा.

मृध्रवाचो दस्यवः

[2]प्रान्यच्चक्रमवृहः सूर्यस्य
कुत्सायान्यद्वरिवो यातवेऽकः ।
अनासो दस्यूँरमृणो वधेन
नि दुर्योण आवृणङ्मृध्रवाचः ॥

हे इन्द्र, पूर्वं द्विचक्रस्य सूर्यस्य अन्यत् एकं चक्रं प्र अवृहः पृथक् चकर्थ । अन्यत् एकं चक्रं कुत्साय कुत्सस्य वरिवः धनं यातवे प्राप्तुं अकः अकार्षीः । किंच, अनासः आस्यरहितान् । आस्यशब्देन शब्दो लक्ष्यते । अशब्दान् मूकान् दस्यून् असुरान् वधेन आयुधेन वज्रेण अमृणः अहिंसीः । दुर्योणे संग्रामे मृध्रवाचः हिंसितवागिन्द्रियानसुरान् नि अवृणक् नितरां छिन्नवानसि । अमृणो न्यवृणगिति द्विरुक्तिरादरार्था । ऋसा.

दासाः आर्याः कृता इन्द्रेण, अभक्तार्यविरोधिदासनाशप्रार्थना इन्द्राय, दासार्योभयनाशकः इन्द्रः

[3]आ जनाय द्रुह्वणे पार्थिवानि
दिव्यानि दीपयोऽन्तरिक्षा ।
तपा वृषन्विश्वतः शोचिषा तान्
ब्रह्मद्विषे शोचय क्षामपश्च ॥

हे इन्द्र, त्वं द्रुह्वणे साधुजनानां द्रोग्धुः जनाय जनस्य राक्षसादेः । षष्ठ्यर्थे चतुर्थी । पार्थिवानि पृथिव्यां भवानि दिव्यानि दिवि भवानि अन्तरिक्षा अन्तरिक्षे भवानि च स्थानानि आ दीपयः आ समन्तात् तापय । हे वृषन् कामानां वर्षितरिन्द्र, त्वं विश्वतः सर्वतो विद्यमानान् तान् राक्षसादीन् शोचिषा त्वदीयया दीप्त्या तप दह । किंच, ब्रह्मद्विषे ब्राह्मणद्वेष्ट्रे राक्षसादये, ब्रह्मद्विषं दग्धुमित्यर्थः । क्षां पृथिवीं अपश्च अन्तरिक्षं च शोचय दीपय । आप इत्यन्तरिक्षनामैतत् । ऋसा.

[1]आ संयतमिन्द्र णः स्वस्ति
शत्रुतूर्याय बृहतीममृध्राम् ।
यया दासान्यार्याणि वृत्रा
करो वज्रिन्त्सुतुका नाहुषाणि ॥

हे इन्द्र, शत्रुतूर्याय शत्रूणां तारणाय बृहतीं महतीं अमृध्रां अहिंसितां संयतं संयतीं संगच्छमानां स्वस्तिं क्षेमलक्षणां संपदं हे इन्द्र, नः अस्मभ्यं आ भर । वज्रिन् वज्रवन्निन्द्र, यया स्वस्त्या दासानि कर्महीनानि मनुष्यजातानि आर्याणि कर्मयुक्तानि करः अकरोः । नाहुषाणि मनुष्यसंबन्धीनि । नहुषा इति मनुष्यनामैतत् । वृत्रा वृत्राणि शत्रून् सुतुका सुतुकानि शोभनहिंसोपेतान्यकरोः । ऋसा.

[2]आभिः स्पृधो मिथतीररिषण्य-
न्नमित्रस्य व्यथया मन्युमिन्द्र ।
आभिर्विश्वा अभियुजो विषूची-
रार्याय विशोऽव तारीर्दासीः ॥

हे इन्द्र, आभिः अस्मदीयाभिः स्तुतिभिः मिथतीः शत्रुसैन्यानि हिंसतीः स्पृधः अस्मदीयाः सेनाः अरिषण्यन् अहिंसन्, पालयन्नित्यर्थः । अमित्रस्य शत्रोः मन्युं संग्रामादिषु विद्यमानं कोपं व्यथय नाशय । अपि च आभिः स्तुतिभिरेव अभियुजः अभियोक्त्रीः विषूचीः सर्वतो विद्यमानाः दासीः कर्मणामुपक्षपयित्रीः विश्वाः सर्वाः विशः प्रजाः आर्याय यज्ञादिकर्मकृते यजमानाय अव तारीः विनाशय । ऋसा.

(१) ऋसं. ४।३०।१८.
(२) ऋसं. ५।२९।१०.
(३) ऋसं. ६।२२।८ ; असं. २०।३६।८.

(१) ऋसं. ६।२२।१० ; असं. २०।३६।१०.
(२) ऋसं. ६।२५।२ ; मैसं. ४।१४।१२ (१६९) ; तैब्रा. २।८।३।३.

[1]त्वं ताँ इन्द्रोभयाँ अमित्रान्
दासा वृत्राण्यार्या च शूर ।
वधीर्वनेव सुधितेभिरत्कै-
रा पृत्सु दर्षि नृणां नृतम ॥

हे इन्द्र, त्वं तान् उभयान् वक्ष्यमाणान् उभयविधान् अमित्रान् शत्रून् वधीः अहिंसीः । के त उभयविधाः ? दासा उपक्षपयितॄन् कर्मविरोधिनो वलप्रभृतीनसुरान् । आर्या आर्याणि कर्मानुष्ठातृत्वेन श्रेष्ठानि वृत्राणि आवरकाणि विश्वरूपादीनि च तान् उभयविधान् हे शूर, त्वं हतवानित्यर्थः । नृणां नेतॄणां मध्ये नृतम अतिशयेन नेतः हे इन्द्र, पृत्सु संग्रामेषु सुधितेभिः सुष्ठु निहितैः अत्कैः आत्मीयैरायुधैः आ दर्षि अन्यानपि शत्रूनाद्दणासि विदारयसि । तत्र दृष्टान्तः— वनेव वनानीव, यथा वृक्षजातानि कुठारादिभिश्छिनत्ति तद्वत् । ऋसा.

पणीनां बृबुः दानेन महत्पदं प्राप्तः

[2]अधि बृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात् ।
उरुः कक्षो न गाङ्ग्यः ॥

बृबुर्नाम पणीनां तक्षा । तत्सकाशाल्लब्धधनो भरद्वाजस्तदीयं दानमनेन तृचेनास्तौत् । एतच्च मनुना स्मर्यते— 'भरद्वाजः क्षुधार्तस्तु सपुत्रो विजने वने । बह्वीर्गाः प्रतिजग्राह बृबोस्तक्ष्णो महायशाः ॥' ( मस्मृ. १०। १०७ ) इति । पणनात् पणयः वणिजः एतत्संज्ञा असुरा वा । तेषां तक्षा बृबुः वर्षिष्ठे मूर्धन् मूर्धनि मूर्धवदुच्छ्रिते स्थले अधि अस्थात् अधिष्ठितोऽभूत् गाङ्ग्यः गङ्गायाः कूले उन्नते भवः कक्षो न कक्ष इव उरुः विस्तीर्णः सन् । जातितो हीनोऽपि दातृत्वात् सर्वत्र श्रेष्ठो भवतीत्यर्थः । ऋसा.

यस्य वायोरिव द्रवद्भद्रा रातिः सहस्रिणी ।
सद्यो दानाय मंहते ॥

वायोरिव द्रवत् क्षिप्रगामिनः यस्य बृबोः भद्रा कल्याणी सहस्रिणी सहस्रसंख्यायुक्ता रातिः दानं सद्यः स्तुतिसमय एव दानाय दानकामाय याचमानाय मह्यं मंहते अपेक्षितं धनं ददाति, तं बृबुमित्युत्तरस्यामृचि संबन्धः । ऋसा.

तत्सु नो विश्वे अर्य आ सदा गृणन्ति कारवः ।
बृबुं सहस्रदातमं सूरिं सहस्रसातमम् ॥

तत् तं बृबुं नः अस्मदीयाः विश्वे सर्वे अर्यः स्तुतीनामीरयितारः कारवः स्तोतारः सदा सु सुष्ठु आ गृणन्ति अभिगृणन्ति अभिष्टुवन्ति । कीदृशम् ? सहस्रदातमं अतिशयेन सहस्रसंख्यस्य धनस्य दातारं सूरिं प्राज्ञं यद्वा प्रेरयितारम्, सहस्रसातमं अतिशयेन सहस्रसंख्यस्य स्तोत्रस्य धनस्य वा संभक्तारम् । ऋसा.

अग्निना पणयो दस्यवोऽश्रद्धा अयज्ञाश्च हिंसिताः

[1]त्वे असुर्यं वसवो न्यृण्वन्
क्रतुं हि ते मित्रमहो जुषन्त ।
त्वं दस्यूँरोकसो अग्न आज
उरु ज्योतिर्जनयन्नार्याय ॥

हे मित्रमहः मित्राणां पूजयितः अग्ने, त्वे त्वयि वसवः वासका देवाः असुर्यं बलं न्यृण्वन् न्यगमयन् । ते क्रतुं त्वत्प्रीतिकरं कर्म जुषन्त असेवन्त हि । किंच, त्वं आर्याय कर्मवते जनाय उरु ज्योतिः अधिकं तेजः जनयन् दस्यून् कर्महीनान् ओकसः स्थानात् आजः निरगमयः । ऋसा.

अग्निना प्रजाः करप्रदाः कृताः

[2]प्र सम्राजो असुरस्य प्रशस्तिं
पुंसः कृष्टीनामनुमाद्यस्य ।
इन्द्रस्येव प्र तवसस्कृतानि
वन्दे दारुं वन्दमानो विवक्मि ॥

दारुं पुरां भेत्तारं वन्दे । वन्दमानः सन् सम्राजः सर्वस्य भुवनस्येश्वरस्य असुरस्य बलवतः पुंसः वीरस्य ।

( १ ) ऋसं. ६।३३।३.
( २ ) ऋसं. ६।४५।३१-३३.

( १ ) ऋसं. ७।५।६.
( २ ) ऋसं. ७।६।१ ; सासं. १।१।८ ( ७८ ) प्रथमपादे ( प्र सम्राजमसुरस्य प्रशस्तं ) चतुर्थपादे ( वन्दद्वारा वन्दमाना विवष्टु ) ; शाब्रा. २२।९.

पौंस्यमिति वीर्यमुच्यते। तथा च यास्कः– 'पुमान् पुरुमना भवति पुंसतेर्वा' (नि. ९।१५) इति। कृष्टीनां जनानां अनुमाद्यस्य स्तुत्यस्य तवसः बलवतः इन्द्रस्येव तस्य वैश्वानरस्य प्रशस्तिं स्तुतिं कृतानि कर्माणि च प्र विवक्मि प्रब्रवीमि। ऋसा.

'कविं केतुं धासिं भानुमद्रे-
र्हिन्वन्ति शं राज्यं रोदस्योः।
पुरंदरस्य गीर्भिरा विवासे-
ऽग्नेर्व्रतानि पूर्व्या महानि॥

कविं प्राज्ञं केतुं विश्वस्य प्रज्ञापकं धासिं अद्रेः धर्तारमादर्तुः स्तोतुर्वा भानुं भासकं शं सुखकरं रोदस्योः द्यावापृथिव्योः राज्यं राजानं वैश्वानरमग्निं हिन्वन्ति। मदीयाः प्रीणयन्ति प्रेरयन्ति वा देवाः। अहं च पुरंदरस्य पुरां दारयितुः अग्नेः पूर्व्या पूर्व्याणि पुरातनानि महानि महान्ति व्रतानि कर्माणि गीर्भिः आ विवासे परिचरामि। ऋसा.

न्यक्रतून्ग्रथिनो मृध्रवाचः
पणीँरश्रद्धाँ अवृधाँ अयज्ञान्।
प्रप्र तान्दस्यूँरग्निर्विवाय
पूर्वश्चकारापराँ अयज्यून्॥

अक्रतून् अयज्ञान् ग्रथिनः जल्पकान् मृध्रवाचः हिंसितवचस्कान् पणीन् पणिनामकान् वार्धुषिकान् अश्रद्धान् यज्ञादिषु श्रद्धारहितान् अवृधान् स्तुतिभिरग्निमवर्धयतः अयज्ञान् यज्ञहीनान् तान् दस्यून् वृथा कालस्य नेतॄन् अग्निः प्रप्र अत्यन्तं नि विवाय नितरां गमयेत्। तदेवाह– अग्निः पूर्वः मुख्यः सन् अयज्यून् अयजमानान् अपरान् जघन्यान् चकार। ऋसा.

यो अपाचीने तमसि मदन्तीः
प्राचीश्चकार नृतमः शचीभिः।
तमीशानं वस्वो अग्निं गृणीषे-
ऽनानतं दमयन्तं पृतन्यून्॥

नृतमः नेतृतमः यः अग्निः अपाचीने अप्रकाशमाने तमसि निमग्नाः प्रजाः मदन्तीः स्तुवन्तीः शचीभिः ताभ्यो दत्ताभिः प्रज्ञाभिः प्राचीः ऋजुगामिनीः चकार। यद्वा, नेतृतमो योऽग्निः अपाचीने तमसि निशायां मदन्तीर्माद्यन्तीः उषसः शचीभिः प्रज्ञाभिः प्राचीश्चकारेत्यर्थः। तं वस्वः धनस्य ईशानं अनानतं अप्रह्वं पृतन्यून् युद्धकामांश्च दमयन्तं अग्निं गृणीषे स्तौमि। ऋसा.

'यो देह्यो३ अनमयद्वधस्नै-
र्यो अर्यपत्नीरुषसश्चकार।
स निरुध्या नहुषो यह्वो अग्नि-
र्विशश्चक्रे बलिहृतः सहोभिः॥

यः अग्निः देह्यः देहीः उपचिताः आसुरीर्विद्याः वधस्नैः वधैरायुधैर्वा अनमयत् हीना अकरोत्। यः च अर्यपत्नीः। अर्यः सूर्यः पतिर्यासां ताः अर्यपत्न्यः। ताः उषसश्चकार अकरोत्। सः यह्वः महान् अग्निः विशः प्रजाः सहोभिः बलैः निरुध्य नहुषः राज्ञः बलिहृतः करप्रदाः चक्रे। ऋसा.

'यस्य शर्मन्नुप विश्वे जनास
एवैस्तस्थुः सुमतिं भिक्षमाणाः।
वैश्वानरो वरमा रोदस्यो-
राग्निः ससाद पित्रोरुपस्थम् *॥

विश्वे सर्वे जनासः जनाः शर्मन् शर्मणि सुखनिमित्तं यस्य वैश्वानरस्य सुमतिं भिक्षमाणाः प्रार्थयमानाः एवैः कर्मभिः हविर्भिर्वा उप तस्थुः यमेवोपतिष्ठन्ते स वैश्वानरः विश्वनरहितः अग्निः सूर्यः सन् पित्रोः मातापित्रोः रोदस्योः द्यावापृथिव्योः वरं उत्कृष्टं उपस्थं मध्यं अन्तरिक्षं आ ससाद आगच्छत्। ऋसा.

---

(१) ऋसं. ७।६।२-४.

* अस्यामृचि 'आ' इति पदं द्विवारं समागतम्। भाष्यकृता तु तदेकवारमेव व्याख्यातमिति प्रतीयते।

(१) ऋसं. ७।६।५; तैब्रा. २।४।७।९.

(२) ऋसं. ७।६।६.

दासा आर्याश्च इन्द्रवरुणाभ्यां हताः सुदासार्थम्

[1]युवां नरा पश्यमानास आप्यं
प्राचा गव्यन्तः पृथुपर्शवो ययुः ।
दासा च वृत्रा हतमार्याणि च
सुदासमिन्द्रावरुणावसावतम् ॥

हे नरा नेताराविन्द्रावरुणौ, युवाम् । षष्ठ्यर्थे द्वितीया । युवयोः आप्यं बन्धुभावं पश्यमानासः पश्यन्तो युष्मद्बान्धवलाभार्थिनः गव्यन्तः गा आत्मन इच्छन्तो यजमानाः पृथुपर्शवः । पृथुर्विस्तीर्णः पर्शुः पार्श्वास्थि येषां ते तथोक्ताः । विस्तीर्णाश्वपर्शुहस्ताः सन्तः प्राचा प्राचीनं ययुः बर्हिराहरणार्थं गच्छन्ति । पर्श्वा हि बर्हिराच्छिद्यते । तथा च तैत्तिरीयकम्— 'अश्वपर्श्वा बर्हिरच्छैति' (तैब्रा. ३।२।२।१) इति । हे इन्द्रावरुणौ, युवां दासा दासानि उपक्षपयितॄणि च वृत्राणि आवरकाणि शत्रुजातानि आर्याणि च कर्मानुष्ठानपराणि च शत्रुजातानि हतं हिंस्तम् । अपि च, सुदासं अस्मद्याज्यमेतत्संज्ञं राजानं अवसा रक्षणेन सार्धं अवतं आगच्छतम् । ऋसा.

मिथ्यावादी क्षत्रियः बन्धनार्हः

[2]न वा उ सोमो वृजिनं हिनोति
न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद्वदन्त-
मुभाविन्द्रस्य प्रसितौ शयाते ॥

वृजिनं पापकरिणं राक्षसं सोमः देवः न वा उ न खलु हिनोति प्रेरयति गच्छ त्वमिति न मुञ्चति । तथा क्षत्रियम् । क्षत्रं बलम्, तद्वन्तं मिथुया मिथ्याभूतं वचनं धारयन्तं बिभ्रतं असत्यवादिनं पुरुषं न च हिनोति न विसृजति । अपि तु रक्षः राक्षसं हन्ति । असत् असत्यं वदन्तं च हन्ति हिनस्ति । उभौ राक्षसानृतवादिनौ तौ सोमेन हतौ इन्द्रस्य संबन्धिनि प्रसितौ बन्धने शयाते निवसतः । यद्वा, इन्द्रस्येति तृतीयार्थे षष्ठी । इन्द्रेण ईश्वरेण सोमेन प्रसितौ बद्धौ । ऋसा.

(१) ऋसं. ७।८३।१.
(२) ऋसं. ७।१०४।१३ ; असं. ८।४।१३.

* अश्विनौ दासार्पितहविर्भक्षयतः

[1]आ वहेथे पराकात्पूर्वीरश्नन्तावश्विना ।
इषो दासीरमर्त्या ॥

हे अमर्त्या अमरणौ, अश्विना अश्विनौ, दासीः । दासाः उपक्षपयितारोऽसुराः, तत्संबन्धिनीः पूर्वीः पुरीः अश्नन्तौ भक्षयन्तौ भञ्जन्तौ युवां इषः अन्नानि पराकात् परागतादूदूरदेशात् आ वहेथे अस्मान् प्रापयथः । यद्वा, अश्नन्तौ व्याप्नुवन्तौ पूर्वीः बह्वीः दासीः दासस्योपक्षपयितुः शत्रोः संबन्धिनीः इषः अन्नानि शत्रुभ्योऽपहृत्य अस्मान् प्रापयथः । ऋसा.

राज्ञश्चैद्यस्य सर्वाः प्रजाः शस्त्रधारिण्यः

[2]यो मे हिरण्यसंदृशो दश राज्ञो अमंहत ।
अधस्पदा इच्चैद्यस्य कृष्टयश्चर्मम्ना
अभितो जनाः ॥

यः कशुसंज्ञो राजा मे मह्यं हिरण्यसंदृशः हिरण्यसंदर्शनान् हिरण्यसमानतेजस्कान् दश राज्ञः अमंहत परिचरणार्थं दत्तवान् । दशसंख्याकान् राज्ञो युद्धे पराजितान् गृहीत्वा दासत्वेनास्मै दत्तवानित्यर्थः । नन्वीदृशानां बहुविधानां राज्ञां दाने एकः कथं शक्नुयादिति तत्राह— कृष्टयः सर्वाः प्रजास्तस्य चैद्यस्य चेदिपुत्रस्य कशोः अधस्पदा इत् पादयोरधस्तादेव वर्तन्ते । न कश्चिदपि तत्समानस्तदधिको वा विद्यते । अभितः सर्वतो वर्तमाना जनाः चर्मम्नाः चर्ममयस्य कवचादेर्धारणे कृताभ्यासाः । यद्वा, चर्माणि चरणसाधनान्यश्वादीनि वाहनानि । तेषु मनन्ति अभ्यस्यन्तीति चर्मम्नाः । सर्वे मनुष्यास्तस्य भटा इत्यर्थः । ऋसा.

इन्द्रस्य निधिरक्षकौ आर्यदासौ

[3]यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः ॥

* इदं न भाष्यानुसारि ।

(१) ऋसं. ८।५।३१,३८.
(२) ऋसं. ८।५।३९ ; सासं. २।१६।४ (१६०९) ; शुसं. ३३।८२.

विश्वः सर्वः अयं दृश्यमानः आर्यः असुरस्वामिको गणः यस्येन्द्रस्य अरिः शत्रुर्भवति । कीदृशः सः ? दासः धनादेरुपक्षयिता शेवधिपाः । शेवधिर्निधिः तं पाति रक्षतीति तथा, असुरादिधनस्यापहर्ता स्वधनस्य च रक्षितेत्यर्थः । तेनेन्द्रेण रुशमे अकल्याणे अर्ये अरिगणे तस्मिन् तिरश्चित् अन्तर्हितमेव पवीरवि । पवी रथनेमिः तद्वन्तोऽराः पवीराः । तदुपेतं चक्रं पवीरवि । अत्र 'पवी रथनेमिर्भवति' (नि. ५।५) इत्यादि निरुक्तं द्रष्टव्यम् । तादृशं चक्रमज्यते प्रक्षिप्यते । चतुर्थपादे प्रत्यक्षीकृत्य उच्यते । हे इन्द्र, तुभ्यमेव त्वदर्थमेव सः असुरगणे विद्यमानः रयिः निधिलक्षणो धनराशिः अज्यते प्रक्षिप्यतेऽरिगणेन । असुरगणे गुप्तं चक्रदानमपि इन्द्राय निधिप्रदमभवत् तदा सत्पात्रे गुप्तं धनदानं महाफलदं स्यादिति किमु वक्तव्यमित्याशयः * ।

जनानां भिन्नानि कर्माणि

[१]नानानं वा उ नो धियो वि व्रतानि जनानाम् ।
तक्षा रिष्टं रुतं भिषग्ब्रह्मा सुन्वन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥

ऋषिः एतदादिभिः त्रिभिः सूक्तैः अपरिस्रवतः सोमस्याजामित्वाय मनसो विनोदनं कुर्वन्नाह— हे सोम, नः अस्माकं धियः कर्माणि नानानं नानाजातीयकानि बहूनि भवन्ति । वैशब्दः प्रसिद्ध्यर्थद्योतनार्थः । उ इति पूरणः । तथाऽन्येषामपि जनानां व्रतानि कर्माणि (वि) विविधानि भवन्ति । तक्षा त्वष्टा रिष्टं दारुतक्षणं इच्छति । तथा, भिषक् वैद्यः चिकित्सकः रुतं रोगमिच्छति । ब्रह्मा ब्राह्मणः सुन्वन्तं सोमाभिषवं कुर्वन्तं यजमानमिच्छति । तथाऽहं त्वत्परिस्रवणमिच्छामि । तस्माद्धे इन्दो सोम, इन्द्राय इन्द्रार्थं परि स्रव परितः क्षर । ऋसा.

* नेदं सायणभाष्यम् । केनाचिदज्ञातनामधेयेन विदुषा विरचितमिदं भाष्यं वैदिकसंशोधनमण्डलमुद्रितसभाष्यऋग्वेदसंहितायाः समुद्धृतम् ।

(१) ऋसं. ९।११२।१-२.

जरतीभिरोषधीभिः पर्णेभिः शकुनानाम् ।
कार्मारो अश्मभिर्द्युभिर्हिरण्यवन्तमिच्छतीन्द्रायेन्दो परि स्रव ॥

जरतीभिः जीर्णाभिः ओषधीभिः इषवः क्रियन्ते । तथा, शकुनानां पर्णेभिः इषूणां पक्षभूतैः पर्णैश्च क्रियन्ते । तथा, द्युभिः दीप्ताभिः इषूणां तेजनार्थाभिः अश्मभिः शिलाभिश्च क्रियन्ते । एतैः कार्मारः अयस्कारः हिरण्यवन्तं आढ्यं पुरुषं इच्छति । तथा अहं त्वत्परिस्रवणमिच्छामि । तस्मात् इन्दो, इन्द्राय परि स्रव । ऋसा.

[१]कारुरहं ततो भिषगुपलप्रक्षिणी नना ।
नानाधियो वसूयवोऽनु गाइव तस्थिमेन्द्रायेन्दो परि स्रव ॥

ऋषिः प्रवृत्तसोमयागः सन् दशापवित्रात् सोमे क्षरति प्रतिबन्धकपापापनुत्तये पुरश्चरितानुकीर्तनपुरःसरमध्येषणां चकार । तावत् अहं कारुः स्तोमानां कर्ताऽस्मि । ततः इति संताननाम । तन्यतेऽस्मादिति ततः पिता । तन्यतेऽसाविति वा ततः पुत्रः । भिषक् भेषजकृत् । यज्ञस्य ब्रह्मेत्यर्थः, 'सर्वे त्रय्या विद्यया भिषज्यति' इति श्रुतेः । तथा उपलप्रक्षिणी । उपलेषु वालुकासु प्रक्षिणोति यवान् हिनस्ति भृज्जतीति । यद्वा, दृषदादिषूपलेषु भृष्टान् यवान् हिनस्ति चूर्णयतीति । अथवा, धानासक्तुकरम्भादीनां कारिका वा । असौ नना माता दुहिता वा, नमनक्रियायोग्यत्वात् । माता खल्वपत्यं प्रति स्तनपानादिना नमनशीला भवति । दुहिता वा शुश्रूषार्थम् । एवं सर्वेषां परिचरणेन नानाधियः नानाकर्माणः वसूयवः धनकामा वयं अनु तस्थिम लोकमन्वास्थिताः स्मः । तत्र दृष्टान्तः— गाइव । गावो यथा गोष्ठमनुतिष्ठन्ति स्वपयःप्रदानेन परिचरन्ति वा, एवं वयमपि परिचरामः । एतज्ज्ञात्वा हे इन्दो सोम, इन्द्राय परि स्रव दशापवित्रात् क्षर । एवमेषाऽध्येषणा सत्कारपूर्विका व्यापारणा । अत्र निरुक्तम्— 'उपलप्रक्षिणीत्युपलेषु प्रक्षिणात्युपलप्रक्षेपिणी वा । कारुरहमस्मि कर्ता स्तोमानां ततो भिषक् । तत इति संताननाम पितुर्वा पुत्रस्य वा । उपलप्रक्षिणी

(१) ऋसं. ९।११२।३ ; नि. ६।५.

सक्तुकारिका नना नमतेर्माता वा दुहिता वा। नानाधियो नानाकर्माणो वसूयवो वसुकामा अन्वास्थिताः स्मो गाव इव लोकम्' (नि. ६।५) इति। ऋसा.

[1]'अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः।
शेपो रोमण्वन्तौ भेदौ वारिन्मण्डूक इच्छतीन्द्रायेन्दो परि स्रव॥

वोळ्हा लक्ष्यं देशं प्रापयन् अश्वः सुखं कल्याणं रथं इच्छति। उपमन्त्रिणः उपमन्त्रवन्तो नर्मसचिवाः हसनां उपहसनां वाचमिच्छन्ति। तथा शेपः। 'शेपो वैतस इति पुंस्प्रजननस्य' (नि. ३।२१) इति यास्कः। यथा शेपः रोमण्वन्तौ भेदौ इच्छति। मण्डूकः वारित्। इदवधारणे। उदकमेवेच्छति तथाऽहं त्वत्परिस्रवणमिच्छामि। तस्मात् इन्द्रायेन्दो, परि स्रव इति। ऋसा.

ब्राह्मणाब्राह्मणभेदः

[2]'हृदा तष्टेषु मनसो जवेषु
यद्ब्राह्मणाः संयजन्ते सखायः।
अत्राह त्वं वि जहुर्वेद्याभि-
रोहब्रह्माणो वि चरन्त्यु त्वे॥

सखायः समानख्यानाः ब्राह्मणाः हृदा बुद्धिमतां हृदयेन तष्टेषु निश्चितेषु परिकल्पितेषु मनसो जवेषु गन्तव्येषु वेदार्थेषु गुणदोषनिरूपणाः यत् यदा संजयन्ते संगच्छन्ते। यजिरत्र संगतिकरणवाची। अत्र अस्मिन् ब्राह्मणसंघे त्वं अविज्ञातार्थमेकं पुरुषं वेद्याभिः वेदितव्याभिः विद्याभिः प्रवृत्तिभिर्वा वि जहुः विशेषेण परित्यजन्ति। अह इति विनिश्चये। ओहब्रह्माणः। ऊह्यमानं ब्रह्म विद्याश्रुतिमतिबुद्धिलक्षणं येषां ते तथोक्ताः। तादृशाः ते (? त्वे) एके विद्वांसः वि चरन्ति यथाकामं वेदार्थेषु विनिश्चयार्थे प्रवर्तन्ते। उः प्रसिद्धौ। 'हृदा तष्टेषु मनसां प्रजवेषु' (नि. १३।१३) इत्यादिकं निरुक्तं द्रष्टव्यम्। ऋसा.

[1]'इमे ये नार्वाङ्न परश्चरन्ति
न ब्राह्मणासो न सुतेकरासः।
त एते वाचमभिपद्य पापया
सिरीस्तन्त्रं तन्वते अप्रजज्ञयः॥

अनया वेदार्थानभिज्ञा निन्द्यन्ते— इमे ये अविद्वांसोऽर्वाक् अर्वाचीनं अधोभाविन्यस्मिँल्लोके ब्राह्मणैः सह न चरन्ति, ये परः परस्तात् देवैः सह न चरन्ति ते ब्राह्मणासः ब्राह्मणाः वेदार्थतत्पराः न भवन्ति। तथा, सुतेकरासः। सोमं सुतमभिषुतं कुर्वन्तीति सुतेकराः ऋत्विजः। तेऽपि न भवन्ति। अप्रजज्ञयः। जानातेः 'आदृगमहनः०' (पा० ३।२।१७१) इति किप्रत्ययः। अविद्वांसः त एते मनुष्याः वाचं लौकिकीं अभिपद्य प्राप्य तया पापया पापकारिण्या वाचा युक्तास्ते सिरीः सीरिणो भूत्वा तन्त्रं कृषिलक्षणं तन्वते विस्तारयन्ति, कुर्वन्तीत्यर्थः। सर्वथा वेदार्थो ज्ञेय इत्यभिप्रायः। ऋसा.

ज्येष्ठाः प्रज्ञातारः

[2]'अग्निर्न ये भ्राजसा रुक्मवक्षसो
वातासो न स्वयुजः सद्यऊतयः।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः
सुशर्माणो न सोमा ऋतं यते॥

हे मरुतः, अग्निर्न अग्निरिव स यथा भ्राजसा तेजसा शोभते तद्वद्भ्राजसा युक्ताः किंच, रुक्मवक्षसः रुक्मालंकृतवक्षस्काः वातासो न प्रत्यक्षवाता इव स्वयुजः स्वयं युज्यमानाः सद्यऊतयः सद्योगमनाः प्रज्ञातारो न प्रकर्षेण ज्ञातारः ज्ञानिन इव ज्येष्ठाः पूज्याः सुनीतयः सुनयनाः सुशर्माणो न सोमाः सुसुखाः सोमा इव ते यूयं ऋतं यते यज्ञं गच्छते यजमानाय गच्छतेति। ऋसा.

(१) ऋसं. ९।११२।४; नि. ९।२.
(२) ऋसं. १०।७१।८; नि. १३।१३.

(१) ऋसं. १०।७१।९.
(२) ऋसं. १०।७८।२; नि. ३।१५.

चातुर्वर्ण्योत्पत्तिः

[१]ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥

इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति– अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखमासीत्, मुखादुत्पन्न इत्यर्थः । योऽयं राजन्यः क्षत्रियत्वजातिमान् पुरुषः सः बाहू कृतः बाहुत्वेन निष्पादितः, बाहुभ्यामुत्पादित इत्यर्थः । तत् तदानीं अस्य प्रजापतेः यत् यौ ऊरू तद्रूपः वैश्यः संपन्नः, ऊरुभ्यामुत्पन्न इत्यर्थः । तथा अस्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् पुरुषः अजायत । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' (तैसं. ७।१।१।४) इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये । ऋसा.

जनानां विविधानि कर्माणि यज्ञरूपकेण निरूपितानि

[२]उद्बुध्यध्वं समनसः सखायः
समग्निमिन्ध्वं बहवः सनीळाः ।
दधिक्रामग्निमुषसं च देवी-
मिन्द्रावतोऽवसे नि ह्वये वः ॥

अग्निं चेष्यमाणा ऋत्विजो वदन्ति– हे सखायः सखिभूता ऋत्विजः समनसः समानमनस्काः परस्परमद्रोग्धारः, अन्योन्यं कर्मानुकूला इत्यर्थः । तादृशा यूयं उत् उत्कृष्टं बुध्यध्वं जानीध्वम् । उत्तरत्र युष्माकं(? तेषां) कर्तव्यमेवोपदिशति– तथा अग्निं सं इन्ध्वं सम्यग्दीपयध्वम् । बहवः अनेके सनीळा समाननिवासाः एकस्यामेव शालायां निवसन्तः । अहं च दधिक्रां एतन्नामिकां देवतां अग्निमुषसं च देवीं एतांस्त्रीन् देवान् इन्द्रावतः इन्द्रेण युक्तान् वः युष्मान् अवसे अस्माकं रक्षणाय नि नितरां ह्वये आह्वयामि । ऋसा.

मन्द्रा कृणुध्वं धिय आ तनुध्वं
नावमरित्रपरणीं कृणुध्वम् ।
इष्कृणुध्वमायुधारं कृणुध्वं
प्राञ्चं यज्ञं प्र णयता सखायः ॥

मन्द्रा मन्द्राणि मदकराणि स्तोत्राणि कृणुध्वं कुरुध्वं हे सखायः । तथा धियः कर्माणि चयनप्रदेशकर्षणादीनि आ तनुध्वं विस्तारयत । तथा अरित्रपरणीं कर्षणादिरूपेणारित्रेण पारयितव्यां नावं चयनाख्यां कृणुध्वं कुरुध्वम् । तथा आयुधा आयुधानि सीरयुगादीनि अरं अलं कृणुध्वम् । हे सखायः ऋत्विजः, प्राञ्चं प्रागञ्चनं यज्ञं यष्टव्यमग्निं प्र णयत प्रकर्षेण नयत, आदौ कर्षणं प्राञ्चं कुरुतेत्यर्थः । * ऋसा.

[१]युनक्त सीरा वि युगा तनुध्वं
कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो
नेदीय इत्सृण्यः पक्वमेयात् ॥

हे सखायः, यूयं सीरा सीराणि युनक्त युङ्ग्ध्वमनडुद्भिः सह । तदर्थं युगा युगानि वि तनुध्वं विस्तारयध्वम् । कृते च योनौ इह सीतायां बीजं ग्राम्यमारण्यं च वपत निधत्त । तिलमाषव्रीह्यादिकं ग्राम्यसप्तकं वेणुश्यामाकनीवारादिकमारण्यबीजसप्तकं च कृष्टाकृष्टयोर्निवपतेत्यर्थः । 'सप्त ग्राम्याः कृष्टे सप्तारण्या अकृष्टे' इत्यापस्तम्बः । तथा नः अस्माकं गिरा स्तुत्या प्रशस्त्या सह अस्माकं श्रुष्टिः अन्नं सभराः सभरं असत् भवति भवतु । तथा, नेदीय इत् अन्तिकमेव सृण्यः । सृणिः अङ्कुशः ।

---

(१) ऋसं. १०।९०।१२ ; असं. १९।६।६ राजन्यः कृतः । ऊरू (राजन्योऽभवत् । मध्यं) ; शुसं. ३१।११ ; तैआ. ३।१२।५–६.

(२) ऋसं. १०।१०१।१–२.

* अत्र 'इष्कृणुध्वम्' इति पदं न व्याख्यातं भाष्यकृता ।

(१) ऋसं. १०।१०१।३ ; असं. ३।१७।२ तनुध्वं (तनोत) गिरा च श्रुष्टिः (विराजः श्नुष्टिः) मेयात् (मा यवन्) ; तैसं. ४।२।५।५–६ तनुध्वं (तनोत) ण्यः पक्वमेयात् (ण्या पक्वमायत्) ; कासं. १६।१२ (१४५) तनुध्वं कृते योनौ व (तनोत कृतो योनिर्व) मेयात् (मायत्) ; मैसं. २।७।१२ (१५५) तनुध्वं (तनोत) नेदीय (नेदीया) मेयात् (मायत्) ; शुसं. १२।६८ ; शब्रा. ७।२।२।५.

अङ्कुशवद्वक्रो लवित्रः । पक्वं स्तम्बं एयात् आभिमुख्येन गच्छतु । ऋसा.

[1]सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् ।
धीरा देवेषु सुम्नया ॥

कवयः मेधाविनः ऋत्विजः सीरा सीराणि कर्षणसाधनानि युञ्जन्ति योजयन्ति । युगा युगान्यपि पृथक् परस्परं वि तन्वते भिन्नप्रदेशानि कुर्वन्ति । कीदृशाः कवयः ? देवेषु विषये धीरा धीमन्तः । किमर्थम् ? सुम्नया । सुम्नमिति सुखनाम । सुखेच्छया । अथवा, धीरा धीमन्तो देवेषु सुम्नया सुम्नेन । देवेषु सुखं भूयादिति । ऋसा.

[2]निराहावान् कृणोतन सं वरत्रा दधातन ।
सिञ्चामहा अवतमुद्रिणं वयं
सुषेकमनुपक्षितम् ॥

हे सखायः, आहावान् । आहूयन्ते पानार्थे गावोऽत्रेत्याहावा निपानानि । अत्रौचित्यात् अग्निचयनप्रदेशकर्षणार्थगोपानसाधनद्रुममयपानपात्राण्युच्यन्ते । तानाहावान् निः कृणोतन निष्कुरुत । किमर्थमाहावकरणं वरत्रस्थापनं चेति । अत्रोच्यते– वयं अवतं अवटं सिञ्चामहै । कीदृशमवटम् ? उद्रिणं उद्राववन्तं सुषेकं सुष्ठु सेक्तुं शक्यं अनुपक्षितं अनुपक्षीणं कदाचिदप्युदकोपक्षयरहितम् ।
* ऋसा.

[3]इष्कृताहावमवतं सुवरत्रं सुषेचनम् ।
उद्रिणं सिञ्चे अक्षितम् ॥

इष्कृताहावं संस्कृताहावं अवतं अवटं द्रोणं सिञ्चे सेचयामि । पुनः कीदृशमवतम् ? सुवरत्रं शोभनवरत्रोपेतं सुषेचनं शोभनोदकसेकोपेतं उद्रिणं उद्राववन्तं अक्षितं अक्षीणम् । ऋसा.

[1]प्रीणीताश्वान् हितं जयाथ
स्वस्तिवाहं रथमित्कृणुध्वम् ।
द्रोणाहावमवतमश्मचक्र-
मंसत्रकोशं सिञ्चता नृपाणम् ॥

हे ऋत्विजः, यूयं अश्वान् व्यापनशीलान् बलीवर्दान् प्रीणीत उचितघासोदकादिप्रदानेन प्रीणयत, यथा क्षेत्रकर्षणाय प्रभवन्ति तथा कुरुतेत्यर्थः । तथा कृत्वा हितं चयनायोचितं कर्षणं जयाथ जयथ संपादयथ । तथा, रथं चयनाख्यं हलाख्यं वा स्वस्तिवाहं इत् सुखस्य वाहकमेव कृणुध्वं कुरुध्वम् । तदर्थं द्रोणाहावम् । आहूयन्त्यत्र पानार्थं बलीवर्दानित्याहावो जलाधारः पात्रविशेषः । स च द्रोणमयः द्रुममय आहावो यस्य तादृशम्, अवतं अवटवन्निम्नभूतं अश्मचक्रं व्याप्तक्रमणमश्ममयचक्रं वा, अंसत्रकोशं अंसत्रं कवचं यथा कायं रक्षति तद्वदुदकस्य कोशं कोशस्थानीयं नृपाणं नृणां कर्मनेतॄणां पानयोग्यमीदृशमवतं सिञ्चत हे ऋत्विजः । एवमृत्विक्स्तुतिर्वेति पक्षे । सूक्तस्य वैश्वदेवपक्ष एवं योजना– प्रीणीत प्रीणयताश्वान्, स्नानपानयोग्यान्नैः संग्रामयोग्यान् कुरुतेत्यर्थः । हितं जयाथ । हितमिति क्रियाविशेषणम् । कथं जयथ ? बन्धुसुहृद्भ्यो यथा हितं भवति तथा जयथ संग्रामम् । स्वस्तिवाहम् । स्वस्तीत्यविनाशनाम । अविनाशवाहनं रथमिद्रथं च कृणुध्वम् । इदिति चार्थे । अश्वं रथं च दृढं कृत्वा संग्रामभूमिं गत्वा । द्रोणाहावमित्यादीनि द्वितीयान्तानि कूपाख्यसंग्रामविशेषणानि सिञ्चतेत्यनेन संबध्यन्ते । द्रोणः द्रुममयः स एव रथः आहावः आहावस्थानीयो यस्य संग्रामस्य तम् । अवतम् । कूपनामैतत् । कूपं संग्रामाख्यम् । अश्मचक्रं कूपप्रान्तनिबद्धाश्मसदृशप्रहरणायुधवन्तम् । असनानि वा क्षेपणानि वा चक्राख्यायुधविशेषा यस्मिन् तम् । व्याप्तचरणवन्तं

---

* अत्र द्वितीयपादव्याख्यानं गलितमिति प्रतीयते ।

( १ ) ऋसं. १०।१०१।४ ; असं. ३।१७।१ सुम्नया (सुम्नयौ); तैसं. ४।२।५।५ ; कासं. १६।१२ ( १४४ ) ; मैसं. २।७।१२ ( १५४ ) ; शुसं. १२।६७ ; शब्रा. ७।२।२।४.

( २ ) ऋसं. १०।१०१।५ ; तैसं. ४।२।५।५ ( सं वरत्रा दधातन निराहावान् कृणोतन । सिञ्चामहा अवटमुद्रिणं वयं विश्वाऽहाऽदस्तमक्षितम् ॥ ) ; कासं. ३८।१४ ( १५६ ) ( सं वरत्रान् दधातन निराहावं कृणोतन । सिञ्चामहा अवतं वयमुद्रिणं विश्वाहादस्तमक्षितम् ॥ ).

( ३ ) ऋसं. १०।१०१।६ ; तैसं. ४।२।५।५ इष्कृ ( निष्कृ ) वतं ( वटं ).

( १ ) ऋसं. १०।१०१।७ ; नि. ५।२६.

व्यासक्रमणवन्तं वा । 'चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वा' (नि. ४।२७) इति निरुक्तम् । अंसत्रकोशम् । अंसत्राणि धनूंषि कवचानि च कोशस्थानीयानि यस्मिन् तं सिञ्चत । नृपाणं यस्मिन् योद्धार उदकवत्पीयन्ते मार्यन्ते तम् । ईदृशं कूपसदृशं संग्रामं सिञ्चत हे अस्मदीया योद्धारः । सूक्तस्य वैश्वदेवत्वात् हे सैनिकाः, विश्वेषां देवानां प्रसादेन सर्वमेतत्कुरुतेत्यर्थः । एवं 'निराहावान्' इत्यादिषु कूपरूपकव्याजेन संग्रामवर्णनमवगन्तव्यम् । ऋसा.

[१]व्रजं कृणुध्वं स हि वो नृपाणो
वर्म सीव्यध्वं बहुला पृथूनि ।
पुरः कृणुध्वमायसीरधृष्टा
मा वः सुस्रोच्चमसो दृंहता तम् ॥

हे ऋत्विजः, व्रजं कृणुध्वं व्रजं गोष्ठं कुरुध्वम् । आशिरदोहार्थं गोस्थानं कुरुत । स हि स खलु वः नृपाणः नेतॄणां देवानां पातव्यः । देवपानसाधन इति । सांनाय्यरूपेण वाशिररूपेण वा गोः पयआदिकं देवाः पिबन्ति खलु । वर्म वर्माणि सीव्यध्वम् । वर्मवत् प्रधानस्योभयत आच्छादकत्वात् प्रयाजादीनि प्राच्यानि प्रतीच्यानि चाङ्गानि वर्माणि । तानि सीव्यध्वं दलयध्वम्, कुरुध्वमित्यर्थः । कीदृशानि वर्माणि ? बहुला बहुलानि अनेकानि । तानि च पृथूनि विस्तीर्णानि । तथा पुरः पुराणि धिष्ण्यादीनि यष्टव्यानां देवानां वा पुरः शरीराणि आयसीः अयोमयवत्सारभूताः अधृष्टाः अन्यैः अधृष्याः । पूरणीया ग्रहा वा पुर इत्युच्यन्ते । तानुक्तलक्षणान् कुरुत । वः युष्मदीयः चमसः यज्ञाख्यो भक्षणसाधनश्चमस एव वा । चमसपक्षे सामान्येन एकवचनम् । मा सुस्रोत् मा स्रवेत् । तं दृंहत दृढीकुरुत । यथा विकलो न भवति तथा कुरुत । ऋत्विक्स्तुतिपक्षे एवम् । वैश्वदेवपक्षे— अस्मदीया योद्धारो यूयम् । नरो योद्धारः पिबन्ति प्रत्यर्थिनां प्राणानिति नृपाणः । स तादृशो युष्मदीयः खलु । गोष्ठपक्षे नराणां पानसाधनः स खलु । वर्म वर्माणि कवचानि सीव्यध्वं बहुलानि पृथूनि च यथा भवन्ति तथा । पुरः पुरीः कृणुध्वमायसीरन्यैरधृष्टाश्च । वश्चमसोऽदनसाधनो मा सुस्रोत् मा स्रवेत् । तं दृंहतेति । इति देवतानुग्रहलब्धबलो वदति । ऋसा.

[१]आ वो धियं यज्ञियां वर्त ऊतये
देवा देवीं यजतां यज्ञियामिह ।
सा नो दुहीयद्यवसेव गत्वी
सहस्रधारा पयसा मही गौः ॥

हे देवाः स्तोतार ऋत्विजः, वः युष्माकं ऊतये यज्ञियां यज्ञार्हां धियं बुद्धिं आ वर्ते प्रवर्तये । यद्वा, हे देवा ऋत्विजः, वो यज्ञियां धियं युष्माकं कर्तव्यत्वेन संबन्धिनीमस्माकमूतये रक्षणाय आ वर्ते । अपि वा, देवा एव संबोध्याः । हे देवाः, वो युष्माकं धियं बुद्धिमा वर्ते आवर्तयामि । किमर्थम् ? ऊतये अस्माकं रक्षणाय । कीदृशीं धियम् ? यज्ञियां यज्ञार्हां देवीं द्योतमानां यजतां पूज्याम् । इह अस्मिन् यागे अस्यां भूमौ वा । एको यज्ञियामिति शब्दः पूरणः । सा धीः नः अस्माकं दुहीयत् दुह्यात् । तत्र दृष्टान्तः— यवसेव यवसानि भक्षयित्वेव गत्वी पुनर्गोष्ठं गत्वा । पीत्वीतिवत् । पयसा सहस्रधारा मही महती गौः यथा दुग्धे तद्वत् । ऋसा.

[२]आ तू षिञ्च हरिमीं द्रोरुपस्थे
वाशीभिस्तक्षताश्मन्मयीभिः ।
परि ष्वजध्वं दश कक्ष्याभि-
रुभे धुरौ प्रति वह्निं युनक्त ॥

हे अध्वर्यो, त्वं ईं एनं हरिं हरितवर्णं सोमं द्रोः द्रुमविकारस्य पात्रस्य उपस्थे उपरि आ सिञ्च आसेकं कुरु । तु इति पूरणः । तदर्थं हे पात्रसंपादिनः, अश्मन्मयीभिः अयःशिलासारभूताभिः वाशीभिः तक्षत पात्राणि । तानि पात्राणि सोमपूर्णानि दश दशसंख्याकानि कक्ष्याभिः प्रकारैः पर्यायेण परि ष्वजध्वं संस्कुरुध्वं आसादयत । यद्वा, वाशीभिरश्मन्मयीभिर्हविर्धान-

(१) ऋसं. १०।१०१।८ ; असं. १९।५८।४ वर्म (वर्मा); कासं. ३८।१३ (१४३).

(१) ऋसं. १०।१०१।९.
(२) ऋसं. १०।१०१।१० ; नि. ४।१९.

शकटे तक्षत। ते च दश कक्ष्याभिर्दशसंख्याकाभिः रज्जुभिः परि ष्वजध्वम्। उभे धुरौ युगसंबन्धिन्यौ प्रति (वह्निं) वह्नी वाहकावनड्वाहौ युनक्त। अथवाऽयं मन्त्रः चयनक्षेत्रकर्षणसाधनहलविषयतया व्याख्येयः। ऋडसा.

[1]उभे धुरौ वह्निरापिब्दमानो-
ऽन्तर्योनेव चरति द्विजानिः।
वनस्पतिं वन आस्थापयध्वं
नि षू दधिध्वमखनन्त उत्सम्॥

हविर्धानशकटस्य उभे धुरौ आपिब्दमानः आपिशब्दमानः वह्निः हविर्वाहकोऽनड्वान् (योना) योनौ अन्तः इव द्विजानिः द्विजायः तयोरन्तः चरति। तं वनस्पतिं वनस्पतिविकारं शकटं वने वनसंबन्धिनि वृक्षे, मेथीभूत इत्यर्थः। तत्र आस्थापयध्वम्। यद्वा, वने वननीये देशे आस्थापयध्वम्। तत्पश्चात् तत्रत्यं सोमं सु सुष्ठु नि दधिध्वं सुखं यथा भवति तथा स्थापयताऽऽसन्द्याम्। अभिषवप्रदेशे च पश्चात् उत्सं तद्रसं अखनन्तः संपादयतेत्यर्थः। अथवा अयमपि मन्त्रः कर्षणपरो व्याख्येयः। यस्य लाङ्गलस्योभे धुरावापिब्दमानोऽपिशब्दमानो वह्निरनड्वान् अन्तर्योनाविवेत्यादि समानम्। तादृशं वनस्पतिं वनस्पतिविकारं लाङ्गलं वने वननीये वपनार्थे कर्षणप्रदेश आस्थापयध्वम्। सु सुष्ठु सर्वत्र तं लाङ्गलं नि दधिध्वम्। उत्सं सेकसाधनं गर्तं सिक्तं वा प्रदेशमखनन्तः। ऋडसा.

[2]कपृन्नरः कपृथमुद्दधातन
चोदयत खुदत वाजसातये।
निष्टिग्र्यः पुत्रमा च्यावयोतय
इन्द्रं सबाध इह सोमपीतये॥

हे नरः नेतार ऋत्विजः, एष इन्द्रः कपृत् सुखस्य पूरको यष्टॄणां स्तोतॄणां च। कमिति सुखनाम। तं कपृथं सुखस्य पूरयितारमिन्द्रं चोदयत प्रेरयत खुदत खुर्दत क्रीडयत। संपिंष्ट संस्कुरुतेत्यर्थः। किमर्थम्? वाजसातये अन्नस्य लाभाय। तदेवाह— हे होतः, निष्टिग्र्यः पुत्रम्। निष्टिं दितिं स्वसपत्नीं गिरतीति निष्टिग्रीरदितिः। तस्याः पुत्रं इन्द्रं सबाधः। सह पापैः प्रयासरूपैः कर्मभिर्बाध्यन्त इति सबाधः ऋत्विजः। तथाविधा यूयं सोमपीतये तस्य सोमपानाय ऊतये अस्माकं रक्षणाय वा आ च्यवय। व्यत्ययेनैकवचनम्। आच्यावयतेत्यर्थः। * ऋडसा.

क्षत्रियेण राष्ट्रं रक्षितम्

[1]हस्तेनैव ग्राह्य आधिरस्या
ब्रह्मजायेयमिति चेदवोचन्।
न दूताय प्रह्ये तस्थ एषा
तथा राष्ट्रं गुपितं क्षत्रियस्य॥

देवा बृहस्पतिमूचुः— हे बृहस्पते, अस्या आधिः। आधीयन्ते आभरणान्यत्रेत्याधिः शरीरम्। अस्याः शरीरं हस्तेनैव ग्राह्यः ग्रहीतव्यमेव। पुनस्ते देवा इदानीं इयं ब्रह्मजाया इति एव अवोचन् अवादिषुः। चशब्दश्चेदर्थे। इत् अवधारणे। एषा ब्रह्मजाया पुरा प्रह्ये प्रहिताय त्वया भार्यान्वेषणार्थं प्रेषिताय दूताय तथा न तस्थे स्वात्मानं न प्रकाशयति। तत्र दृष्टान्तः— यथा क्षत्रियस्य राज्ञः गुपितं रक्षितं राष्ट्रं राज्यं शत्रवे (यथा?) न प्रकाशयति तद्वदसौ दौर्भाग्ययुक्ततया तस्मै स्वात्मानं न प्रकाशितवती। इदानीं तु तद्राहित्येन प्रकाशमानेयं ब्रह्मजायैवेत्यब्रुवन्। ऋडसा.

प्रजा राजानं राष्ट्राधिपत्यार्थं वृणुते

[2]¶ बह्वीः समा अकरमन्तरस्मि-
न्निन्द्रं वृणानः पितरं जहामि।
अग्निः सोमो वरुणस्ते च्यवन्ते
पर्यावर्द्राष्ट्रं तदवाम्यायन्॥

---

* अत्र 'उद्धातन' इति पदस्य व्याख्यानं नोपलभ्यते। तथा 'संपिंष्ट संस्कुरुतेत्यर्थः।' इत्ययं भाष्यग्रन्थः असंगतो विद्यते।

¶ ऋक्त्रयस्यास्य व्याख्यानं 'देवा राजानः— वरुणः' इत्यस्मिन् प्रकरणे (पृ. १०) द्रष्टव्यम्।

(१) ऋसं. १०।१०१।११.

(२) ऋसं. १०।१०१।१२; असं. २०।१३७।२; शाम्रा. ३०।७.

(१) ऋसं. १०।१०९।३; असं. ५।१७।३ जायेयमिति (जायेति) वोचन् (वोचत्) प्रह्ये (प्रहेया).

(२) ऋसं. १०।१२४।४-५,८.

निर्माया उ त्ये असुरा अभूवन्
त्वं च मा वरुण कामयासे ।
ऋतेन राजन्ननृतं विविञ्चन्
मम राष्ट्रस्याधिपत्यमेहि ॥
ता अस्य ज्येष्ठमिन्द्रियं सचन्ते
ता ईमा क्षेति स्वधया मदन्तीः ।
ता ईं विशो न राजानं वृणाना
बीभत्सुवो अप वृत्रादतिष्ठन् ॥

वाग्देवता ब्राह्मणं ऋषिं च जनयति

[1]अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तंतमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥

अहं स्वयं एव इदं वस्तु ब्रह्मात्मकं वदामि उपदिशामि । देवेभिः देवैरिन्द्रादिभिरपि जुष्टं सेवितम् । उत अपि च, मानुषेभिः मनुष्यैरपि जुष्टम् । ईदृग्वस्त्वात्मिकाऽहं यं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तंतं पुरुषं उग्रं कृणोमि सर्वेभ्योऽधिकं करोमि । तमेव ब्रह्माणं स्रष्टारं करोमि । तं एव ऋषिं अतीन्द्रियार्थदर्शिनं करोमि । तमेव सुमेधां शोभनप्रज्ञं च करोमि । ऋसा.

सुखेन सहवासार्थं संज्ञानम्

[2]सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥

हे स्तोतारः, यूयं सं गच्छध्वं संगताः संभूता भवत । तथा सं वदध्वं सह वदत । परस्परं विरोधं परित्यज्य एकविधमेव वाक्यं ब्रूतेति यावत् । वः युष्माकं मनांसि सं जानतां समानं एकरूपमेवार्थमवगच्छन्तु । यथा पूर्वे पुरातना देवाः संजानानाः ऐकमत्यं प्राप्ता हविर्भागं उपासते यथास्वं स्वीकुर्वन्ति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति शेषः । ऋसा.

[1]समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः
समानेन वो हविषा जुहोमि ॥

पूर्वोऽर्धर्चः परोक्षकृतः उत्तरः प्रत्यक्षकृतः । एषां एकस्मिन् कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्रः स्तुतिः शस्त्राद्यात्मका गुप्तभाषणं वा समानः एकविधोऽस्तु । तथा समितिः प्राप्तिरपि समानी एकरूपाऽस्तु । तथा मनः मननसाधनमन्तःकरणं चैषां समानं एकविधमप्यस्तु । चित्तं विचारजं ज्ञानं तथा सह सहितं परस्परस्यैकार्थेनैकीभूतमस्तु । अहं च वः युष्माकं समानं एकविधं मन्त्रं अभि मन्त्रये ऐकविध्याय संस्करोमि । तथा वः युष्माकं स्वभूतेन समानेन साधारणेन हविषा चरुपुरोडाशादिना अहं जुहोमि, वषट्कारेण हविः प्रक्षेपयामीत्यर्थः । ऋसा.

[2]समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥

हे ऋत्विग्यजमानाः, वः युष्माकं आकूतिः संकल्पः अध्यवसायः समानी एकविधोऽस्तु । तथा वः युष्माकं हृदयानि समाना समानानि एकविधानि सन्तु । तथा वः युष्माकं मनः अन्तःकरणम् । प्रत्येकापेक्षयैकवचनम् । तदपि समानमस्तु । यथा वः युष्माकं सुसह शोभनं साहित्यं असति भवति तथा समानमस्त्वित्यन्वयः । ऋसा.

---

(१) ऋसं. १०।१२५।५ ; असं. ४।३०।३ देवेभिरुत मानुषेभिः (देवानामुत मानुषाणाम्).

(२) ऋसं. १०।१९१।२ ; असं. ६।६४।१ प्रथमपादे (सं जानीध्वं सं पृच्यध्वं) ; मैसं. २।२।६ (२८) सं वदध्वं (सं जानीध्वं) ; तैब्रा. २।४।४।४–५ उपासते (उपासत).

(१) ऋसं. १०।१९१।३; असं. ६।६४।२ मनः (व्रतं) उत्तरार्धे (समानेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम् ॥) ; मैसं. २।२।६ (२७) मनः (व्रतं) तृतीयपादे (समानं क्रतुमभिमन्त्रयध्वं) ; तैब्रा. २।४।४।५ उत्तरार्धे (समानं केतो अभि संरभध्वम् । संज्ञानेन वो हविषा यजामः ॥).

(२) ऋसं. १०।१९१।४ ; असं. ६।६४।३ ; कासं. १०।१२ (३८) प्रथमपादे (समाना व आकूतानि) ; मैसं. २।२।६ (२६) प्रथमपादे (समाना वा आकूतानि) ; तैब्रा. २।४।४।५.

राष्ट्रं संवेशार्हम्, सजातानां मध्येऽवस्थितिः, जनानां सांमनस्यं इष्टम्

[1]आ यातु मित्र ऋतुभिः कल्पमानः
संवेशयन् पृथिवीमुस्रियाभिः।
अथास्मभ्यं वरुणो वायुरग्नि-
र्बृहद्राष्ट्रं संवेश्यं दधातु ॥

मित्रः, मीतेः मरणात् त्रायते इति मित्रः, एतन्नामको देवः। 'मित्रः प्रमीतेस्त्रायते' (नि. १०।२१) इति हि निरुक्तम्। यद्वा, सर्वेषां मित्रवत् उपकारकः। 'मित्रं देवाः' इति प्रक्रम्य आम्नातम्– 'सर्वस्य वा अहं मित्रं अस्मि' (तैसं. ६।४।८।१) इति। सः मित्रः आ यातु अस्मद्रक्षणार्थमागच्छतु। कीदृशः? ऋतुभिः वसन्ताद्यैः कल्पमानः। ऋतुसांतत्येन दीर्घमायुः कर्तुं समर्थो भवन्नित्यर्थः। किं कुर्वन्? उस्रियाभिः गोभिः, किरणैरित्यर्थः। पृथिवीं विस्तीर्णां भूमिं संवेशयन् व्याप्नुवन्। अथ मित्रागमनानन्तरं वरुणः वायुः अग्निश्च अस्मभ्यं बृहत् महत् राष्ट्रं राज्यं संवेश्यं संवेशार्हं अवस्थानयोग्यं दधातु विदधातु प्रकरोतु। प्रत्येकापेक्षया एकवचनम्। असा.

धाता रातिः सवितेदं जुषन्ता-
मिन्द्रस्त्वष्टा प्रति हर्यन्तु मे वचः।
हुवे देवीमदितिं शूरपुत्रां
सजातानां मध्यमेष्ठा यथासानि ॥

धाता सर्वस्य विधाता एतन्नामा देवः रातिः दानशीलोऽर्यमा, 'यः खलु वै ददाति सोऽर्यमा' (तैसं. २।३।४।१) इति श्रुतेः। सविता सर्वस्य प्रेरको देवश्च इदं मदीयं हविः जुषन्तां सेवन्ताम्। जुषी प्रीतिसेवनयोः। एते धात्रादयः इन्द्रः त्वष्टा च मे मदीयं वक्ष्यमाणं वचः वाक्यं स्तुतिलक्षणं वा प्रति हर्यन्तु आभिमुख्येन कामयन्ताम्, सादरं शृण्वन्तु इत्यर्थः। हर्य गतिकान्त्योः। शूरपुत्रां शूराः विक्रान्ताः शौर्योपेताः पुत्रा मित्रवरुणादयो यस्याः सा तथोक्ता, तां देवीं दानादिगुणयुक्तां अदितिं अदीनां देवमातरं हुवे आह्वयामि। किमर्थम्? सजातानां समानं जातानां बन्धूनां मध्यमेष्ठाः। मध्यमेव मध्यमम्। मध्ये वर्तमानो यथा असानि भवानि। समृद्धकामः सन् स्वसमानैः सेव्यो यथा भवानि तथा कुर्वन्तु इत्यर्थः। असा.

हुवे सोमं सवितारं नमोभि-
र्विश्वानादित्याँ अहमुत्तरत्वे।
अयमग्निर्दीदायद्दीर्घमेव
सजातैरिद्धोऽप्रतिब्रुवद्भिः ॥

सोमं सवितारं विश्वान् सर्वान् आदित्यान् अदितेः पुत्रान् अन्यांश्च नमोभिः नमस्कारोपलक्षितैः स्तावकैर्मन्त्रैः अहं प्रयोक्ता उत्तरत्वे यजमानस्य श्रैष्ठ्ये। निमित्तसप्तम्येषा। श्रैष्ठ्यार्थे हुवे आह्वयामि। तथा अयं आहुत्याधारभूतः अग्निर्दीदयत् दीप्यताम्। अप्रतिब्रुवद्भिः अप्रतिकूलवादिभिः अनुकूलं वदद्भिः सजातैः समानजन्मभिः पुरुषैः दीर्घमेव चिरकालमेव इद्धः समिद्धः तैरभिवर्धितः। यथाहं असानि इति वाक्यशेषः। तथा दीप्यतां इति संबन्धः। असा.

इहेदसाथ न परो गमाथे-
र्यो गोपाः पुष्टपतिर्व आजत्।
अस्मै कामायोप कामिनी-
र्विश्वे वो देवा उपसंयन्तु ।

हे कामिन्यः, यूयं इहेत्। इत् इत्यवधारणे। इहैव कन्यासमीपदेश एव असाथ भवत वर्तध्वम्। पुरः पुरस्तात् न गमाथ। अनेतृकाः सत्यो न गच्छत। ईर्यः मार्गप्रेरको गोपाः गोपायिता पालयिता पुष्टपतिः। पुष्टं पोषः। तस्य पतिः पोषयिता, पूषा देव इत्यर्थः। 'पूषाऽपोषयत्' (तैब्रा. १।६।२।२) इति हि श्रुतिः। ईदृशो देवो वः युष्मान् आजत् प्रेरयतु। तथा कामाय कामयमानाय अस्मै वराय। यद्वा, कामः कामना। अस्मै इति षष्ठ्यर्थे चतुर्थी। अस्य वरस्य कामाय उप तत्समीपे कामिनीः, कामः काम्यमानं फलं तत् आसु विद्यते इति कामिन्यः स्त्रियो गावः। मत्वर्थीय इनिः। यद्वा, कामय-

(१) असं. ३।८।१-४.

मानाः । ईदृशीः वः युष्मान् विश्वे देवा उपसंयन्तु उपगमयन्तु । असा.

**[1]सं वो मनांसि सं व्रता समाकूतीर्नमामसि ।**
**अमी ये विव्रता स्थन तान् वः सं नमयामसि ॥**

हे विमनस्का जनाः, वः युष्माकं मनांसि परस्पर-विरुद्धानि सं नमामसि । सम् इति एकीभावे, एक-विषयप्रह्वाणि अविसंवादीनि कुर्मः । तथा व्रता व्रतानि । कर्मनामैतत् । वचनादानादिकर्माणि सं नमयामः । एवं आकूतीः संकल्पान् सं नमयामः । ये अमी यूयं पूर्वे विव्रताः विरुद्धकर्माणः स्तन भवथ । तान् विमनस्कान् वः युष्मान् सं नमयामसि संनमयामः । असा.

**[2]अहं गृभ्णामि मनसा मनांसि**
**मम चित्तमनु चित्तेभिरेत ।**
**मम वशेषु हृदयानि वः कृणोमि**
**मम यातमनुवर्त्मान एत ॥**

हे विमनस्काः, युष्मदीयानि विप्रतिपन्नानि मनांसि मनसा मदीयेन अहं गृह्णामि स्वाधीनीकरोमि । तथा यूयमपि मम चित्तं अनुचित्तेभिः अनुसारिभिर्युष्मदीयैश्चित्तैः एत आगच्छत । मम वशेषु वशे इच्छामात्रे । यद्वा, वशेषु वशीकृतेषु स्वाधीनेष्वर्थेषु । वः युष्मदीयानि हृदयानि कृणोतु भवन्तः कुर्वन्तु । प्रत्येकविवक्षया एकवचनम् । एवं मम यातं गमनं यूयमपि अनुवर्त्मानः अनुसृतमार्गाः सन्तः एत आगच्छत । असा.

जनानां विविधानि कर्माणि— समृद्धनवशालाकर्म

**[3]इहैव ध्रुवां नि मिनोमि शालां**
**क्षेमे तिष्ठाति घृतमुक्षमाणा ।**
**तां त्वा शाले सर्ववीराः सुवीरा**
**अरिष्टवीरा उप सं चरेम ॥**

इहैव अस्मिन्नेव प्रदेशे गृहे शालां ध्रुवां स्थिरां नि मिनोमि प्रक्षिपामि, स्थूणानिखननादिना करोमीत्यर्थः । सा निमिता शाला घृतं एतदुपलक्षितं अभिमतफलं उक्षमाणा सिञ्चन्ती प्रयच्छन्ती क्षेमे क्षेमेण । तृतीयार्थे सप्तमी । अग्न्यादिबाधराहित्येन तिष्ठाति तिष्ठतु । हे शाले, तां तादृशीं त्वा त्वां सर्ववीराः अनेकपुत्राद्युपेताः सुवीराः शोभनगुणपुत्राद्युपेताः अरिष्टवीराः न रिष्टाः अरिष्टाः रोगादिरहिताः तादृशपुत्रादिसमेताः । अत्र बाहुल्यशोभनगुणत्वहिंसाराहित्यलक्षण—गुणविशेषसंबन्धाय वीरशब्दस्य त्रिरावृत्तिः । एवंभूताः सन्तो वयं उप सं चरेम व्यवहरेम । असा.

**इहैव ध्रुवा प्रति तिष्ठ शाले-**
**ऽश्वावती गोमती सूनृतावती ।**
**ऊर्जस्वती घृतवती पयस्व-**
**त्युच्छ्रयस्व महते सौभगाय ॥**

हे शाले, इहैव अस्मिन् देशे ध्रुवा स्थिरा सती प्रति तिष्ठ वर्तस्व । कथंभूता ? अश्वावती बहुभिरश्वैरुपेता । गोमती बहुभिर्गोभिर्युक्ता, सूनृतावती बहुभिः प्रियसत्य-वाग्भिः बालादीनां वाणीभिर्युक्ता, ऊर्जस्वती प्रभूतान्न-वती, घृतवती बहुघृतयुक्ता, पयस्वती बहुक्षीरा । एवं बहुगुणा त्वं अस्माकं महते प्रभूताय सौभगाय सुभगत्वाय उच्छ्रयस्व उद्गता भव, उत्कृष्टा भवेत्यर्थः । असा.

स्वाभिमतप्रदेशे नदीप्रवाहकरणकर्म

**[1]अपकामं स्यन्दमाना अवीवरत वो हि कम् ।**
**इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्नाम वो हितम् ॥**

वार् इति नाम प्रदर्शयति । अपकामं विनैव कामेन स्यन्दमानाः सदा स्यन्दनं कुर्वाणाः वः युष्मान् इन्द्रः वः युष्माकं शक्तिभिः हेतुभिः अवीवरत वृतवान् युष्मान् स्वात्मसात् कर्तुमैच्छत् । हिकं इति हिशब्दार्थे । 'हिकं नुकं इति नवोत्तराणि पदानि' (निघण्टुः ३।१२।१) इति यास्केन परिपठितत्वात् । हे देवीः देव्यो देवन-शीलाः, तस्मात् कारणात् वः युष्माकं वार् इति नाम हिकं प्रसिद्धम् । असा.

---

(१) असं. ३।८।५, ६।९४।१; कासं. १०।१२ (३९) समाकूतीर्नमामसि (समु चित्तान्याकरम्); मैसं. २।२।६ (२५) तीर्नमामसि (तीरनंसत) स्थन तान् (स्थ तान्).

(२) असं. ३।८।६, ६।९४।२.

(३) असं. ३।१२।१-२.

(१) असं. ३।१३।३; तैसं. ५।६।१।३; कासं. ३९।२ (११) वो हितम् (वः प्रियम्); मैसं. २।१३।१ (९).

[1]एको वो देवोऽप्यतिष्ठत्स्यन्दमाना यथावशम् ।
उदानिषुर्महीरिति तस्मादुदकमुच्यते ॥

उदकशब्दं निर्वक्ति । एकः असहायो देवः इन्द्रो यथावशं यथाकामं स्यन्दमानाः इतस्ततश्च स्यन्दनशीलाः वः युष्मान् अप्यतिष्ठत् अध्यतिष्ठत् । अपिशब्दः अध्यर्थे । तेन इन्द्रबहुमानेन आपो वयं महीः महत्यो जाता इति उदानिषुः उच्छ्वसितवत्यः । तस्मात् कारणात् उदकं इति अपां नाम उच्यते निरुच्यते उदननात् । असा.

[2]इदं व आपो हृदयमयं वत्स ऋतावरीः ।
इहेत्थमेत शक्वरीर्यत्रेदं वेशयामि वः ॥

हे आपः, वः युष्माकं इदं हिरण्यं खाते प्रक्षिप्यमाणं हृदयं हृदयस्थानीयम् । अपां रेतोरूपत्वात् हिरण्यस्य हृदयरूपता । श्रूयते हि– 'आपो वरुणस्य पत्नय आसन् । ता अग्निरभ्यध्यायत् । ताः समभवत् । तस्य रेतः परापतत् । तद्धिरण्यमभवत्' ( तैब्रा. १।१।३।८ ) इति । यद्वा, हृदयं अन्तःकरणम् । यथा लोके हृदयं विहाय क्षणमपि शरीरं नावतिष्ठते किंतु सहैव वर्तते तथा यूयमपि हृदयरूपं हिरण्यं प्रति एत आगच्छतेत्यर्थः । तथा हे ऋतावरीः ऋतवर्यः । ऋतं सत्यं यज्ञो वा यासां तास्तथोक्ताः । सत्योपेताः हे आपः, अयं खाते प्रक्षिप्यमाणो मण्डूकः वत्सः युष्माकं वत्सस्थानीयः । यथा लोके गावो वत्समनुधावन्ति एवं यूयमपि वत्सस्तुतमण्डूकमनुधावतेति भावः । हे शक्वरीः शक्वर्यः शक्ताः अभिमतफलप्रदानसमर्था आपः, इह अस्मिन् खातदेशे इत्थं अनेन प्रकारेण । यथा अत्र मण्डूकस्योपरि प्रक्षिप्यमाणा अवकाः रूढमूला भवन्ति तथा एत आगच्छत स्थिरप्रवाहा भवत । यत्र यस्मिन् खातदेशे इदं इदानीं वः युष्मान् वेशयामि प्रवेशयामि निनयामि । यद्वा, इदं इति उदकनाम । वः युष्माकं अंशभूतमिदमुदकं यत्र अवकाच्छन्ने मण्डूके वेशयामि । इहेति पूर्वत्र संबन्धः । असा.

गोष्ठकर्म

[1]शिवो वो गोष्ठो भवतु शारिशाकेव पुष्यत ।
इहैवोत प्र जायध्वं मया वः सं सृजामसि ॥

हे गावः, वः युष्माकं गोष्ठः वासस्थानं शिवः सुखकरो भवतु । यूयं शारिशाकेव । क्षणेन सहस्रशोऽभिवर्धमानाः प्राणिविशेषाः शारिशाकाः । तद्वत् पुष्यत समृद्धा भवत । उत अपि च इहैव गोष्ठे प्र जायध्वं पुत्रपौत्रादिरूपेण प्रजाता भवत । असा.

[2]मया गावो गोपतिना सचध्व-
मयं वो गोष्ठ इह पोषयिष्णुः ।
रायस्पोषेण बहुला भवन्ती-
र्जीवा जीवन्तीरुप वः सदेम ॥

हे गावः, यूयं गोपतिना गोस्वामिना मया सचध्वं समवेता भवत । गोपतिना । गवां पतिः गोपतिः । इह मदीये गृहे अयं गोष्ठः वः युष्मान् पोषयिष्णुः पोषकः । रायः धनस्य पोषेण धनसमृद्ध्या बहुलाः असंख्याता भवन्तीः जीवन्तीः चिरकालजीवनोपेता वः युष्मान् जीवाः चिरजीविनो वयं उप सदेम उपगच्छेम । असा.

वाणिज्यक्रिया– असंख्यातधनलाभकारिणी बुद्धिः, प्रपणः (स्वपण्यद्रव्यस्य परिमाणकल्पना), विक्रयः, प्रतिपणः ( परपण्यद्रव्यस्य परिमाणकल्पना ), क्रयः, फलं ( लाभः ) च, धनेन धनलाभः, वाणिज्यार्थं विघ्नरहितः प्रवासः

[1]इन्द्रमहं वणिजं चोदयामि
स न ऐतु पुरएता नो अस्तु ।
नुदन्नरातिं परिपन्थिनं मृगं
स ईशानो धनदा अस्तु मह्यम् ॥

अहं व्यवहर्ता इन्द्रं परमैश्वर्योपेतं देवं वणिजं वाणिज्यकर्तारं चोदयामि प्रेरयामि प्रवर्तयामि । सः वणिक्त्वेन प्रेरित इन्द्रो नः अस्मान् ऐतु आगच्छतु । आगत्य च नः अस्माकं पुरएता पुरतो गन्ता अस्तु भवतु । किं कुर्वन् ? अरातिं वाणिज्यविघातकं शत्रुं

---

( १ ) असं. ३।१३।४ ; तैसं. ५।६।१।३ एको वो देवोऽप्य (एको देवो अप्य) ; कासं. ३९।२ ( १२ ) यथावशम् ( उपेत्य ) शेषं तैसंवत्; मैसं. २।१३।१ ( १० ) देवोऽप्य ( देवो अप्य ).
( २ ) असं. ३।१३।७.

( १ ) असं. ३।१४।५–६.
( २ ) असं. ३।१५।१–२.

परिपन्थिनं पर्यवस्थातारं मार्गनिरोधकं चोरं मृगं व्याघ्रादिकं च नुदन् हिंसन् ईशानः ईश्वरो नियन्ता स इन्द्रः मह्यं वणिजे धनदाः वाणिज्यलाभरूपधनप्रदाता अस्तु भवतु । असा.

ये पन्थानो बहवो देवयाना
अन्तरा द्यावापृथिवी संचरन्ति ।
ते मा जुषन्तां पयसा घृतेन
यथा क्रीत्वा धनमाहराणि ॥

ते प्रसिद्धा देवयानाः देवा यान्ति येष्विति देवयानाः, देवानुकूल्ययुक्ता इत्यर्थः । यद्वा, दीव्यन्ति व्यवहरन्तीति देवा वणिजः । ते यत्र यान्ति ते देवयानाः, प्रहता इत्यर्थः । ईदृशा बहवः बहुदेशसंबन्धिनो ये पन्थानः मार्गाः द्यावापृथिवी अन्तरा द्यावापृथिव्योर्मध्ये संचरन्ति वर्तन्ते, ते मार्गाः पयसा घृतेन च मा मां जुषन्तां सेवन्ताम् , मार्गश्रमनिवर्तकक्षीरघृतोपलक्षितान्नपानोपेता भवन्तु इत्यर्थः । यथा येन प्रकारेण अहं क्रीत्वा पण्यं विक्रीय धनं लाभसहितं मूल्यधनं आहराणि स्वगृहं प्रापयाणि । तथा जुषन्तामिति संबन्धः । असा.

[1]इध्मेनाग्न इच्छमानो घृतेन
जुहोमि हव्यं तरसे बलाय ।
यावदीशे ब्रह्मणा वन्दमान
इमां धियं शतसेयाय देवीम् ॥

हे अग्ने, इच्छमानः वाणिज्यलाभं कामयमानः सोऽहं इध्मेन इन्धनसाधनेन समित्समूहेन घृतेन आज्येन च सह हव्यं हविः जुहोमि । किमर्थम्? तरसे वेगाय शीघ्रगमनाय बलाय शरीरसामर्थ्याय च । ब्रह्मणा मन्त्रेण स्तोत्ररूपेण वन्दमानः त्वां स्तुवन् देवीं द्योतमानां व्यवहारकुशलामिमां मदीयां धियं बुद्धिं शतसेयाय । शतमिति अपरिमितनाम । असंख्यातधनलाभाय यावदहमीशे शक्नोमि लब्धुम् । तावज्जुहोमीति संबन्धः । यद्वा, यावदहं ईशे ईश्वरो धनाढ्यो भवामि तावत् स्तोत्रेण स्तुवन् द्योतमानामिमां धियम् । धीरिति कर्मनाम । इदं

(१) ऋसं. ३।१८।३ ; असं. ३।१५।३.

वाणिज्यलाभनिमित्तं होमलक्षणं कर्म । करोमीति शेषः । असा.

[1]इमामग्ने शरणिं मीमृषो नो
यमध्वानमगाम दूरम् ।
शुनं नो अस्तु प्रपणो विक्रयश्च
प्रतिपणः फलिनं मा कृणोतु ।
इदं हव्यं संविदानौ जुषेथां
शुनं नो अस्तु चरितमुत्थितं च ॥

येन धनेन प्रपणं चरामि
धनेन देवा धनमिच्छमानः ।
तन्मे भूयो भवतु मा कनीयोऽग्ने
सातघ्नो देवान् हविषा नि षेध ॥

येन धनेन प्रपणं चरामि
धनेन देवा धनमिच्छमानः ।
तस्मिन् म इन्द्रो रुचिमा दधातु
प्रजापतिः सविता सोमो अग्निः ॥

हे अग्ने, नः अस्माकं इमां शरणिं प्रवासनिबन्धनां व्रतलोपलक्षणां हिंसां मीमृषः क्षमस्व । यं अध्वानं मार्गं दूरमगाम गतवन्तः स्मः । तदध्वगमनजनितामिमां शरणिमिति पूर्वत्रान्वयः । यद्वा, यमध्वानं दूरमगाम इमां शरणिम् । वर्णव्यत्ययः । इममध्वानं नः अस्मान् मीमृषः मर्षय तितिक्षय । तज्जनितदुःखनिवर्तने सह्यं कुरु इत्यर्थः । प्रपणः व्यवहर्तुं पण्यद्रव्यस्य परिमाणकल्पनम् । विक्रयः तस्यैव सलाभमूल्यस्वीकारेण परेषां प्रदानम् । तदुभयमपि नः अस्माकं शुनं सुखं यथा भवति तथा अस्तु भवतु । तथा प्रतिपणः । प्रत्यानेतुं परद्रव्यस्य परिमाणकल्पनं प्रतिपण इत्युच्यते । सोऽपि मा मां फलिनं प्रभूतलाभोपेतं कृणोतु करोतु ।

इन्द्राग्न्योः प्रकृतत्वात् तावेवात्र प्रयुक्तौ प्रार्थ्येते । हे इन्द्राग्नी, युवां संविदानौ संजानानौ ऐकमत्यं गतौ इदं मया हूयमानं हव्यं हविः जुषेथां सेवेथाम् । युवयोः प्रसादात् नः अस्माकं चरितं आचरितं विक्रयादिकमुत्थितं तस्मात्

(१) असं. ३।१५।४-७.

व्यवहारादुत्पन्नं लाभयुक्तं धनं च शुनं सुखमस्तु । हे देवाः, धनेन मूल्यधनेन धनं वृद्धियुक्तं धनं इच्छमानः कामयमानोऽहं येन धनेन प्रपणं व्यवहर्तुं परिमाणकल्पनं चरामि करोमि । तदपि शुनमस्तु इति पूर्वेण संबन्धः । हे अग्ने, सातघ्नः सातं लाभः । सातं लाभं घ्नन्तीति सातघ्नः । लाभप्रतिबन्धकान् देवान् हविषा हूयमानेन नि षेध परितोष्य निवारय । येन धनेनेत्यादि पूर्ववत् । हे देवाः युष्मत्प्रसादात् तत् मे मदीयं धनं भूयः बहुतरं भवतु । कनीयः अल्पतरं मा भवतु । येनेति यत् प्रकृतं धनं तस्मिन् मे मदीये धने रुचिं सर्वजनप्रीतिं धनप्रदानेन आदानेच्छां इन्द्र आ दधातु स्थापयतु । तथा प्रजापत्यादयश्च रुचिं कुर्वन्तु । अस्रा.

**उप त्वा नमसा वयं होतर्वैश्वानर स्तुमः ।**
**स नः प्रजास्वात्मसु गोषु प्राणेषु जागृहि ॥**

हे होतः देवानामाह्वातः, वैश्वानर विश्वनरहित अग्ने, त्वा त्वां वयं नमसा हविर्लक्षणेन अन्नेन सह उप स्तुमः उपेत्य स्तोत्रं कुर्मः । स स्तुतस्त्वं नः अस्माकं प्रजासु पुत्रपौत्रादिलक्षणासु आत्मसु अस्मासु गोषु अस्मदीयेषु पशुषु प्राणेषु च जागृहि बुध्यस्व । प्रजादिषु दुःखलेशोऽपि यथा न प्राप्नोति तथा रक्षन् अवहितो वर्तस्वेत्यर्थः । अस्रा.

### कृषिनिष्पत्तिकर्म

**[१]सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् ।**
**धीरा देवेषु सुम्नयौ ॥**

कवयः, मेधाविनामैतत् । मेधाविनो जनाः सीरा सीराणि लाङ्गलानि युञ्जन्ति कर्षणार्थे योजयन्ति । धीराः धीमन्तस्ते युगा युगानि च पृथक् वि तन्वते बलीवर्दानां स्कन्धेषु प्रसारयन्ति । किमर्थम् ? देवेषु देवविषये सुम्नयौ सुखकरयज्ञेच्छौ सति, यजमाने इत्यर्थः । 'यज्ञो वै सुम्नं धीरा देवेषु यज्ञं तन्वानाः' (शब्रा. ७।२।२।४) इति वाजसनेयकम् । यद्वा, देवविषये सुम्नं सुखकरं हविर्लक्षणमन्नं यातः प्रापयत इति सुम्नयौ बलीवर्दौ । तौ च युञ्जन्तीति संबन्धः । अस्रा.

**[१]युनक्त सीरा वि युगा तनोत**
**कृते योनौ वपतेह बीजम् ।**
**विराजः श्नुष्टिः सभरा असन्नो**
**नेदीय इत्सृण्यः पक्वमा यवन् ॥**

हे कृषीवलाः, सीरा युनक्त सीराणि लाङ्गलानि युगैः सह योजयत । तथा युगा वि तनोत युगानि बलीवर्दानां स्कन्धेषु प्रसारयत । अपि च, योनौ अङ्कुरोत्पत्तियोग्ये इह अस्मिन् कृते कृष्टक्षेत्रे बीजं व्रीहियवादिकं वपत । विराजः अन्नस्य व्रीहियवादिरूपस्य 'अन्नं वै विराट्' (तैब्रा. ३।८।१०।४) इति श्रुतेः । श्नुष्टिः आशुप्रापकः स्तम्बः सभराः फलभारसहितः नः अस्माकं असत् भवतु । सफलं व्रीह्यादिकं नेदीय इत् अन्तिकतमं अल्पेनैव कालेन पक्वं परिणतफलोपेतं सत् सृण्यः । द्वितीयार्थे षष्ठी । सृणिं अङ्कुशं लवनसाधनं दात्रादिकं आ यवम् आयौतु प्राप्नोतु । 'यदा वा अन्नं पच्यतेऽथ तत्सृण्योपचरन्ति' (शब्रा. ७।२।२।५) इति वाजसनेयकम् । अस्रा.

**[२]लाङ्गलं पवीरवत्सुशीमं सोमसत्सरु ।**
**उदिद्वपतु गामविं प्रस्थावद्रथवाहनं**
**पीवरीं च प्रफर्व्यम् ॥**

---

(१) ऋसं. १०।१०१।४ सुम्नयौ (सुम्नया); असं. ३।१७।१; तैसं. ४।२।५।५ ऋसंवत्; कासं. १६।१२ (१४४) ऋसंवत्ः २१।१४ (७३) देवेषु सुम्नयौ (इन्द्राय सुम्नया); मैसं. २।७।१२ (१५४) ऋसंवत्; शुसं. १२।६७ ऋसंवत्; शब्रा. ७।२।२।४ ऋसंवत्.

(१) ऋसं. १०।१०१।३ तनोत (तनुध्वं) विराजः श्नुष्टिः (गिरा च श्रुष्टिः) पक्वमा यवन् (पक्वमेयात्); असं. ३।१७।२; तैसं. ४।२।५।५ विराजः श्नुष्टिः (गिरा च श्रुष्टिः) इत्सृण्यः पक्वमा यवन् (इत् सृण्या पक्वमाऽयत्); कासं. १६।१२ (१४५) कृते योनौ (कृतो योनिः) विराजः श्नुष्टिः (गिरा च श्रुष्टिः) पक्वमा यवन् (पक्वमायत्); मैसं. २।७।१२ (१५५) विराजः श्नुष्टिः (गिरा च श्रुष्टिः) नेदीय (नेदीया) मा यवन् (मायत्); शुसं. १२।६८ ऋसंवत्; शब्रा. ७।२।२।५ ऋसंवत्.

(२) असं. ३।१७।३; तैसं. ४।२।५।६ (लाङ्गलं पवीरवं सुशेवं सुमतित्सरु । उदित्कृषति गामविं प्रफर्व्यं च पीवरीम् । प्रस्थावद्रथवाहनम् ॥); कासं. १६।१२ (१४८) (लाङ्गलं

पवीरवत् पवीरं पविः वज्रम् । यत् वज्रमिव निशित-धारं लाङ्गलाग्रे प्रोतं सदयोमयं शल्यं भूमिं विपाटयति तत्सहितम् । सुशीमं कर्षकस्य सुखकरं सोमसत्सरु व्रीह्यादि-संपादनद्वारा सोमयागनिष्पादकः त्सरुः भूमौ प्रच्छन्न-गमनं कर्षकहस्तग्राह्योऽवयवविशेषो वा यस्य तत् तथो-क्तम् । एवंगुणविशिष्टं लाङ्गलं उदित् वपतु । इत् इत्यव-धारणे । उद्धरतु संपादयतु इत्यर्थः । किं तदित्याह— गां अविं च प्रस्थावत् प्रस्थानयुक्तं गमनसमर्थम् । रथवाहनं रथवाहनसमर्थं अश्वबलीवर्दादिकं पीवरीं स्थूलां सर्वकाम-समर्थां प्रफर्व्यम् । प्रथमवयाः कन्या प्रफर्वी । ताम् । कर्षणेन धान्यादिसमृद्धौ सत्यां एतद्गवादिसमृद्धिर्भवतीति भावः । असा.

[1]इन्द्रः सीतां नि गृह्णातु तां पूषाभि रक्षतु ।
सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥

इन्द्रो देवः सीतां लाङ्गलपद्धतिं नि गृह्णातु नीचीनं गृह्णातु । तां पूषा पोषको देवः अभि रक्षतु सर्वतः पाल-यतु । सा सीता नः अस्मभ्यं पयस्वती । पय इत्युपलक्षित-मभिमतफलम् । तद्युक्ता सती उत्तरामुत्तरां समां उत्तरोत्तरं संवत्सरम् । '० अत्यन्तसंयोगे' (पा. २।३।५) द्वितीया । सर्वेष्वपि कालेषु इत्यर्थः । दुहां दुग्धाम्, अभिमतफलमिति शेषः । यद्वा, पयस्वती उदकवती सती दुहां व्रीहियवादिसस्यानि दुग्धां उत्तरोत्तरं संवत्सरमिति द्विकर्मकः । असा.

[1]शुनं सुफाला वि तुदन्तु भूमिं
शुनं कीनाशा अनु यन्तु वाहान् ।
शुनासीरा हविषा तोशमाना
सुपिप्पला ओषधीः कर्तमस्मै ॥

सुफालाः शोभनानि लाङ्गलमुखानि अस्माकं शुनं सुखं यथा भवति तथा भूमिं वि तुदन्तु विकृषन्तु । कीनाशाः कर्षकाः शुनं यथा भवति तथा वाहान् बली-वर्दान् अनु यन्तु अनुगच्छन्तु । शुनासीरा हे शुना-सीरौ वाय्वादित्यौ 'शुनो वायुः सीर आदित्यः' (नि. ९।४० ) इति हि यास्कः । यद्वा, शुनः सुखकरो देवः । सीरो लाङ्गलाभिमानी देवः । तौ युवां हविषा अस्मदीयेन तोषमाणा तोषमाणौ तुष्यन्तौ अस्मै यज-मानाय ओषधीः व्रीहियवाद्याः सुपिप्पलाः शोभनफलोपेताः कर्त कुरुतम् । असा.

[2]शुनं वाहाः शुनं नरः शुनं कृषतु लाङ्गलम् ।
शुनं वरत्रा बध्यन्तां शुनमष्ट्रामुदिङ्गय ॥

वाहाः बलीवर्दाः शुनं सुखं कुर्वन्तु । नरः कर्षकाः शुनं सुखं कृषन्तु । लाङ्गलं हलं शुनं यथा भवति तथा कृषतु । वरत्राः रज्जवः शुनं सुखं बध्यन्ताम् । अष्ट्रां प्रतोदं शुनं सुखार्थं उदिङ्गय प्रेरय । अत्र शुनासीरयोर्मध्ये शुनः संबोध्यः । असा.

[3]शुनासीरेह स्म मे जुषेथाम् ।
यद्दिवि चक्रथुः पयस्तेनेमामुप सिञ्चतम् ॥

शुनासीरा शुनासीरौ देवौ इह स्म इह खलु अस्मिन् क्षेत्रे मे मदीयं हविः जुषेतां सेवेताम् । यत् तौ देवौ

---

पवीरवं सुशेवं सोमपित्सरु । उदिद्वपति गामविं प्रस्थावद्रथवाहनं प्रफर्व्यं च पीवरीम् ॥ ); मैसं. २।७।१२ ( १५६ ) पूर्वार्धे कासं-वत्, पीवरीं च प्रफर्व्यम् ( प्रफर्व्यं च पीवरीम् ); शुसं. १२।७१ ( लाङ्गलं पवीरवत्सुशेवं सोमपित्सरु । तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणम् ॥ ); शब्रा. ७।२।२।११ वाहणम् ( वाहनम् ) शेष शुसंवत् .

( १ ) ऋसं. ४।५७।७ पूषाभि रक्षतु ( पूषानु यच्छतु ); असं. ३।१७।४.

( १ ) असं. ३।१७।५ ; मैसं. २।७।१२ ( १५७ ) कीनाशा अनु यन्तु वाहान् ( कीनाशो अभ्येतु वाहैः ) कर्तमस्मै ( कर्तनास्मै ); शुसं. १२।६९ तुदन्तु ( कृषन्तु ) अनु यन्तु वाहान् ( अभियन्तु वाहैः ) कर्तमस्मै ( कर्तनास्मै ) ; शब्रा. ७।२।२।९ शुसंवत्, पू.

( २ ) ऋसं. ४।५७।४ ; असं. ३।१७।६ ; तैब्रा. ६।६।१२ नरः ( नाराः ).

( ३ ) ऋसं. ४।५७।५ सीरेह स्म मे ( सीराविमां वाचं ) ; असं. ३।१७।७ ; तैब्रा. ६।६।१२ पूर्वार्धे ( शुनासीराविमां वाचं ) ; आश्रौ. २।२० ; नि. ९।४१ ऋसंवत् .

दिवि आकाशे पयः उदकं चक्रतुः कृतवन्तौ तेन वृष्टिजलेन इमां कृष्यमाणां भूमिं उप सिञ्चतां आर्द्रीकुरुताम् ।
अस्ता.

[1]सीते वन्दामहे त्वार्वाची सुभगे भव ।
यथा नः सुमना असो यथा नः सुफला भुवः ॥

हे सीते, त्वा त्वां वन्दामहे नमस्कुर्मः । हे सुभगे सुभाग्ये सीताभिमानिदेवते, त्वं अर्वाची अस्मदभिमुखी भव । यथा येन प्रकारेण नः अस्माकं सुमनाः शोभनमनस्का असः स्याः । यथा येन प्रकारेण नः अस्माकं सुफला शोभनफलोपेता भुवः भवेः । तथा अर्वाची भवेति संबन्धः ।
अस्ता.

[2]घृतेन सीता मधुना समक्ता
विश्वैर्देवैरनुमता मरुद्भिः ।
सा नः सीते पयसाभ्याववृत्स्वो-
र्जस्वती घृतवत्पिन्वमाना ॥

घृतेन उदकेन मधुना मधुररसेन समक्ता सम्यग् अक्ता सिक्ता सा सीता विश्वैर्देवैः मरुद्भिश्च अनुमता अङ्गीकृता । हे सीते, सा त्वं पयसा उदकेन नः अस्मान् अभ्याववृत्स्व अभिमुखमावर्तस्व । कथंभूता ? ऊर्जस्वती बलोपेता घृतवत् घृतयुक्तमन्नं पिन्वमाना सिञ्चन्ती ।
अस्ता.

( १ ) ऋसं. ४।५७।६ ( अर्वाची सुभगे भव सीते वन्दामहे त्वा । यथा नः सुभगासति यथा नः सुफलासति ॥ ); असं. ३।१७।८ ; तैब्रा. ६।६।२ सुमना असो ( सुभगा सति ) भुवः ( सति ).

( २ ) असं. ३।१७।९ ; तैसं. ४।२।५।६ उत्तरार्धे (ऊर्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाऽभ्याववृत्स्व ॥ ); कासं. १६।१२ ( १२७ ) समक्ता ( समज्यतां ) मता, ( मतं ) उत्तरार्धे ( ऊर्जो भागं मधुमत्पिन्वमानास्मान् सीते पयसाभ्याववृत्स्व ॥ ); मैसं. २।७।१२ ( १६० ) समक्ता ( समज्यतां ) उत्तरार्धे कासंवत्; शुसं. १२।७० समक्ता ( समज्यतां ) उत्तरार्धे ( ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसाभ्याववृत्स्व ॥ ); शब्रा. ७।२।२।१० समक्ता ( समज्यतां ) शेषं तैसंवत्.

पञ्च मानवाः

[1]यं त्वा होतारं मनसाभि संविदु-
स्त्रयोदश भौवनाः पञ्च मानवाः ।
वर्चोधसे यशसे सूनृतावते
तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥

हे अग्ने, यं त्वा त्वां होतारं देवानामाह्वातारं मनसा बुद्ध्या अभि संविदुः आभिमुख्येन संविदन्ति सम्यग् जानन्ति । के पुनस्ते इत्याह— त्रयोदश । त्रयश्च दश च त्रयोदश । त्रयोदशसंख्याका भौवनाः । भवन्ति सत्तां लभन्ते अस्मिन् भूतजातानीति भुवनः संवत्सरः । तत्संबन्धिनश्चैत्राद्या मासा भौवनाः । ते हि संसर्पोहस्पत्याख्येन अधिमासेन सह त्रयोदश भवन्ति । 'अस्ति त्रयोदशो मास इत्याहुः' ( तैसं. ६।५।३।४ ) इति हि ब्राह्मणम् । तथा मानवाः मनुना सृष्ट्यादौ कल्पिता वसन्ताद्याः पञ्चर्तवः । हेमन्तशिशिरयोः समासाभिप्रायमेतत् । 'पञ्चर्तवः संवत्सरस्येति हि ब्राह्मणम्' ( नि. ४।२७ ) इति यास्कः । यद्वा, 'विश्वकर्मन् भौवन मां दिदासिथ' ( ऐब्रा. ८।२१ ) 'विश्वकर्मा भौवनः स्वात्मनि सर्वाणि भूतानि जुहवांचकार' (नि. १०।२६) इत्यादिश्रुत्यन्तरप्रसिद्धा भुवनाख्यस्य महर्षेः पुत्रा विश्वकर्मप्रभृतयः त्रयोदशसंख्याकाः । पञ्च मानवाः निषादपञ्चमाश्चत्वारो वर्णाः । गन्धर्वाप्सरसो देवा असुरा रक्षांसि इत्येके । एवमात्मकाः सर्वे त्वामभि संविदुरिति संबन्धः । तस्मै वर्चोधसे । वर्चः तेजः दधाति धारयति प्रयच्छतीति वा वर्चोधाः । यशसे यशस्विने । यद्वा, व्याप्नुवते । सूनृतावते । प्रियसत्यात्मिका वाक् सूनृता । तद्वते एवंभूताय तुभ्यं तेभ्यः प्रागुक्तेभ्यस्त्वद्विभूतिरूपेभ्यः अग्निभ्यश्च एतत् प्रदीयमानं हविः हुतं अस्तु दत्तं भवतु ।
अस्ता.

[2]इमा याः पञ्च प्रदिशो मानवीः पञ्च कृष्टयः ।
वृष्टे शापं नदीरिवेह स्फातिं समावहान् ॥

( १ ) असं. ३।२१।५.
( २ ) असं. ३।२४।३.

इमाः परिदृश्यमानाः याः प्रदिशः प्रकृष्टा दिशः प्राच्याद्याः पञ्च सन्ति तथा मानवीः मानव्यः मनोः सकाशादुत्पन्नाः पञ्च कृष्टयः। मनुष्यनामैतत्। निषाद-पञ्चमाश्चत्वारो वर्णाः पञ्चविधा मनुष्याः सन्ति ते सर्वे इह अस्मिन् यजमाने स्फातिं धनधान्यसमृद्धिं समावहान् समावहन्तु सम्यक् प्रापयन्तु। तत्र दृष्टान्तः— वृष्ट इति। देवे वृष्टे वर्षजलं मुञ्चति सति नदीरिव नद्य इव नदन-शीला आपो यथा प्रवाहमध्यस्थं शापं प्राणिजातं वेगेन देशान्तरं प्रापयन्ति तद्वत् इत्यर्थः। असा.

जनानां सांमनस्यकर्म

**[1]सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।**
**अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या॥**

हे विवदमाना जनाः, वः युष्माकं अविद्वेषं विद्वेषा-भावोपलक्षितं सांमनस्यं कर्म कृणोमि करोमि। कीदृशं तत् सांमनस्यम्? सहृदयं समानैर्हृदयैरुपेतम्, समानचित्त-वृत्तियुक्तमित्यर्थः। सांमनुष्यम्। मिथः संप्रीतियुक्ता मनुष्याः संमनुष्याः तैर्निर्वर्तितं सांमनुष्यम्। ईदृशं समानज्ञानहेतुभूतं सख्यं करोमीत्यर्थः। ततो यूयमपि जातं वत्सं अघ्न्याः। गोनामैतत्। अहन्तव्या गाव इव अन्योन्यं परस्परं अभि हर्यत आभिमुख्येन कामयध्वम्। असा.

**अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।**
**जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम्॥**

पुत्रः तनयः पितुरनुव्रतः। व्रतमिति कर्मनाम। अनु-कूलकर्मा भवतु। यत् पिता कामयते तत्कर्मकारी भवतु। माता च संमनाः पुत्रादिभिः समानमनस्का भवतु। पत्ये भर्त्रे जाया भार्या मधुमतीं माधुर्यवतीं शन्तिवां सुखयुक्तां वाचं वदतु ब्रवीतु, समानमनस्का भवतु इत्यर्थः। असा.

**मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा।**
**सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥**

भ्राता सोदरः भ्रातरं मा द्विष्यात् दायभागादि-निमित्तेन भ्रातृविषयमप्रियं मा कुर्यात्। उत अपि च स्वसारं भगिनीं स्वसा मा द्विष्यात्। ते सर्वे भ्रात्रादयः सम्यञ्चः समञ्चनाः समानगतयः सव्रताः समानकर्माणो भूत्वा भद्रया कल्याण्या वाचा वागिन्द्रियेण वाचं वदतु वदन्तु। असा.

**येन देवा न वियन्ति नो च विद्विषते मिथः।**
**तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः॥**

येन ब्रह्मणा देवा इन्द्रादयः न वियन्ति विमतिं न प्राप्नुवन्ति। नो च नैव च मिथः परस्परं विद्विषते विद्वेषं न कुर्वते। तत् संज्ञानं समानज्ञाननिमित्तं ऐकमत्या-पादकं ब्रह्म मन्त्रात्मकं सांमनस्यं वः युष्माकं गृहे पुरुषेभ्यः। तादर्थ्ये चतुर्थी। तदर्थं कृण्मः कुर्मः। असा.

**ज्यायस्वन्तश्चित्तिनो मा वि यौष्ट**
**संराधयन्तः सधुराश्चरन्तः।**
**अन्यो अन्यस्मै वल्गु वदन्त एत**
**सध्रीचीनान्वः संमनसस्कृणोमि॥**

ज्यायस्वन्तः ज्यायस्त्वगुणोपेताः, ज्येष्ठकनिष्ठभावेन परस्परमनुसरन्त इत्यर्थः। चित्तिनः समानचित्तयुक्ताः। संराधयन्तः समानसंसिद्धिकाः, समानकार्या इत्यर्थः। सधुराः समानकार्योद्वहनाः। इत्थं चरन्तः वर्तमानाः यूयं मा वि यौष्ट मा पृथक् भूत, वियुक्ता मा भवते-त्यर्थः। अन्योन्यस्मै परस्परं वल्गु शोभनं प्रियवाक्यं वदन्तः भाषमाणा यूयं ऐत आगच्छत। अहमपि हे जनाः, वः युष्मान् सध्रीचीनान् सहाञ्चतः कार्येषु सह प्रवृत्तान् संमनसः समानमनस्कान् कृणोमि करोमि। असा.

**समानी प्रपा सह वोऽन्नभागः**
**समाने योक्त्रे सह वो युनज्मि।**
**सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः॥**

हे सांमनस्यकामाः, वः युष्माकं समानी एका प्रपा पानीयशाला भवतु। अन्नभागश्च सहैव भवतु। परस्परा-नुरागवशेन एकत्रावस्थितमन्नपानादिकं युष्माभिरुपभुज्य-

(१) असं. ३।३०।१-७.

तामित्यर्थः । तदर्थमहं वः युष्मान् समाने योक्त्रे एकस्मिन् बन्धने स्नेहपाशे सह युनज्मि सह बध्नामि । अपि च, सम्यञ्चः संगताः एकफलार्थिनो भूत्वा समानज्ञानाः सन्तः अग्निं सपर्यत पूजयत । कथमिव स्थिता इति तत्राह । अरा नाभिमिव अभितः । रथचक्रस्य मध्यच्छिद्रं नाभिः । तस्या अभितो वर्तमाना अराः चक्रावयवाः कीलकाः नियतस्थानाः परिवेष्ट्य वर्तन्ते । एवमेकमग्निमभितो वर्तमानाः परिचरतेत्यर्थः । असा.

**सध्रीचीनान् वः संमनसस्कृणो-**
**म्येकश्नुष्टीन्त्संवननेन सर्वान् ।**
**देवा इवामृतं रक्षमाणाः**
**सायंप्रातः सौमनसो वो अस्तु ॥**

सध्रीचीनान् सह प्रवर्तमानान् एककार्यकरणे सहोद्युक्तान् संमनसः समानमनस्कान् वः युष्मान् कृणोमि करोमि । तथा युष्माकं एकश्नुष्टिं एकविधं व्यापनं एकविधस्यान्नस्य भुक्तिं वा करोमि । संवननेन वशीकरणेन अनेन सांमनस्यकर्मणा युष्मान् सर्वान्, वशीकरोमीत्यर्थः । अमृतं द्युलोकस्थं अजरामरत्वप्रापकं पीयूषं रक्षमाणाः ऐकमत्येन पालयन्तः देवा इव इन्द्रादयो यथा सौमनस्ययुक्ता भवन्ति एवं वः युष्माकं सायंप्रातः एतदुपलक्षिते सर्वस्मिन् काले सौमनसः सौमनस्यं शोभनमनस्कत्वं अस्तु भवतु । असा.

कण्वो ब्राह्मणः

**[1]ब्राह्मणेन पर्युक्तासि कण्वेन नार्षदेन ।**
**सेनेवैषि त्विषीमती न तत्र**
**भयमस्ति यत्र प्राप्नोष्योषधे ॥**

नार्षदेन नृषदस्य पुत्रेण कण्वेन एतत्संज्ञेन ब्राह्मणेन मन्त्रद्रशा हे ओषधे सहदेवि, पर्युक्तासि परितो विनियुक्तासि । अतः त्विषीमते दीप्तिमते यजमानाय परिरक्षणार्थं सेनेव एषि गच्छसि । तादृशी त्वं यत्र यस्मिन् देशे प्राप्नोषि तत्र भयं अभिचारादिजनितभीतिर्नास्ति ।

(१) असं. ४।१९।२.

अतो भयनिवारकत्वात् सेनया उपमीयसे इत्यर्थः । असा.

आर्यः शूद्रश्च

**[1]तां मे सहस्राक्षो देवो दक्षिणे हस्त आ दधत् ।**
**तयाऽहं सर्वं पश्यामि यश्च शूद्र उतार्यः ॥**

तां उक्तप्रभावां सदंपुष्पाख्यामोषधिं देवः दानादिगुणयुक्तः सहस्राक्षः इन्द्रो मे मम दक्षिणे हस्ते आ दधत् अधारयत् । हे तादृशि ओषधे, त्वया दक्षिणहस्ते मणिरूपेण धृतया अहं सर्वं द्रष्टव्यं विषयं पश्यामि साक्षात्करोमि । द्रष्टव्यं विषयं निर्दिशति— यश्चेति । शूद्रोपलक्षितो यस्त्रैवर्णिकव्यतिरिक्तो जनः । आर्यः विद्वान् ब्राह्मणः । त्रैवर्णिकोपलक्षणमेतत् । ये च ब्राह्मणक्षत्रियवैश्याः ये च तद्व्यतिरिक्ताः शूद्रादयः तान् सर्वान् वशीकृत्य तत्कृतं रक्षःपिशाचादिकं निरसितुं पश्यामीत्यर्थः । असा.

**उदग्रभं परिपाणाद्यातुधानं किमीदिनम् ।**
**तेनाहं सर्वं पश्याम्युत शूद्रमुतार्यम् ॥**

परिपानात् परिरक्षणात् हेतोः किमीदिनं [ किं इदानीं] किमिदानीमिति चरन्तं यातुधानं राक्षसं उत् अग्रभं उद्गृहीतवानस्मि, वशीकृतवानस्मीत्यर्थः । तेन यातुधानेन अहं सर्वं ग्रहं पश्यामि । उत शूद्रं शूद्रजातियुक्तं उत आर्यं ब्राह्मणजातियुक्तं च, सर्वं ग्रहं पश्यामीत्यर्थः । असा.

ग्रामात् भूतपिशाचादिग्रहोच्चाटनकर्तुर्महिमा

**[2]न पिशाचैः सं शक्नोमि न स्तेनैर्न वनर्गुभिः ।**
**पिशाचास्तस्मान्नश्यन्ति यमहं ग्राममाविशे ॥**

नाहं पिशाचैः सं शक्नोमि संशक्तः अनुप्रविष्टो न भवामि । तथा स्तेनैः चोरैः प्रच्छन्नवृत्तिभिर्ग्रामगतैः न सं शक्नोमि न संगतो भवामि । न वनर्गुभिः । वनर्गुशब्दश्चोरनाम । ' वनर्गू वनगामिनौ ' ( नि. ३।१४ ) इति यास्कः । वनगामिभिश्चोरैरपि न संशक्तोऽस्मि । तथा

(१) असं. ४।२०।४, ८.
(२) असं. ४।३६।७–८.

पिशाचाः राक्षसाः तस्मात् ग्रामान्निर्गत्य नश्यन्तु नष्टा भवन्तु । यं ग्रामं अहमाविशे अनुविश्य वसामि । तस्मात् मदधिष्ठितात् देशात् पलायन्तामित्यर्थः । असा.

**यं ग्राममाविशत इदमुग्रं सहो मम ।**
**पिशाचास्तस्मान्नश्यन्ति न पापमुप जानते ॥**

मम मदीयं इदं उग्रं तीक्ष्णं मन्त्रप्रभावजनितं सहः बलं यं ग्राममाविशते अनुप्रविश्य वर्तते तस्मात् ग्रामात् पिशाचा नश्यन्ति तत्र न प्रविशन्ति । यदि प्रविविक्षन्ति नश्यन्त्येवेत्यर्थः । अतो न तद्विषयं पापं हिंसारूपं उप जानते तत्रत्या जनाः, रक्षःपिशाचादिकृतमुपद्रवं नावबुध्यन्ते इत्यर्थः । असा.

आर्यो दासश्च

[1]**सत्यमहं गभीरः काव्येन**
**सत्यं जातेनास्मि जातवेदाः ।**
**न मे दासो नार्यो महित्वा**
**व्रतं मीमाय यदहं धरिष्ये ॥**
**एकं रजस एना परो अन्यद्-**
**स्त्येना पर एकेन दुर्णशं चिदर्वाक् ।**
**तत्ते विद्वान् वरुण प्र ब्रवीम्य-**
**धोवचसः पणयो भवन्तु ।**
**नीचैर्दासा उप सर्पन्तु भूमिम् ॥**
**त्वं ह्य१ङ्ग वरुण ब्रवीषि**
**पुनर्मघेष्ववद्यानि भूरि ।**
**मो षु पणीँरभ्ये३तावतो भून्मा**
**त्वा वोचन्नराधसं जनासः ॥**

पञ्च मानवाः, ब्राह्मणः राजन्यः वैश्यश्च, ब्राह्मणा अब्राह्मणाश्च, ब्राह्मणभार्या अन्यैर्न निरोद्धव्या

[2]**तेऽवदन् प्रथमा ब्रह्मकिल्बिषे-**
**ऽकूपारः सलिलो मातरिश्वा ।**
**वीडुहरास्तप उग्रं मयोभू-**
**रापो देवीः प्रथमजा ऋतस्य ॥**

[1]**सोमो राजा प्रथमो ब्रह्मजायां**
**पुनः प्रायच्छदहृणीयमानः ।**
**अन्वर्तिता वरुणो मित्र आसी-**
**दग्निर्होता हस्तगृह्या निनाय ॥**

[2]**हस्तेनैव ग्राह्य आधिरस्या**
**ब्रह्मजायेति चेदवोचत् ।**
**न दूताय प्रह्येया तस्थ एषा**
**तथा राष्ट्रं गुपितं क्षत्रियस्य ॥**

[3]**यामाहुस्तारकैषा विकेशीति**
**दुच्छुनां ग्राममवपद्यमानाम् ।**
**सा ब्रह्मजाया वि दुनोति राष्ट्रं**
**यत्र प्रापादि शश उल्कुषीमान् ॥**

[4]**ब्रह्मचारि चरति वेविषद्विषः**
**स देवानां भवत्येकमङ्गम् ।**
**तेन जायामन्वविन्दद्बृहस्पतिः**
**सोमेन नीतां जुह्व१ न देवाः ॥**

[5]**देवा वा एतस्यामवदन्त पूर्वे**
**सप्तऋषयस्तपसा ये निषेदुः ।**
**भीमा जाया ब्राह्मणस्यापनीता**
**दुर्धां दधाति परमे व्योमन् ॥**

[6]**ये गर्भा अवपद्यन्ते जगद्यच्चापलुप्यते ।**
**वीरा ये तृह्यन्ते मिथो ब्रह्मजाया हिनस्ति तान् ॥**
**उत यत्पतयो दश स्त्रियाः पूर्वे अब्राह्मणाः ।**
**ब्रह्मा चेद्धस्तमग्रहीत्स एव पतिरेकधा ॥**
**ब्राह्मण एव पतिर्न राजन्यो३ न वैश्यः ।**
**तत्सूर्यः प्रब्रुवन्नेति पञ्चभ्यो मानवेभ्यः ॥**

---

(१) असं. ५।११।३, ६-७.

(२) ऋसं. १०।१०९।१ वीडु ( वीळु ) उग्रं (उग्रो ) ऋतस्य ( ऋतेन ) ; असं. ५।१७।१.

(१) ऋसं. १०।१०९।२ ; असं. ५।१७।२.

(२) ऋसं. १०।१०९।३ जायेति चदवोचत् ( जायेयमिति चेदवोचन् ) प्रहेया ( प्रह्ये ) ; असं. ५।१७।३.

(३) असं. ५।१७।४.

(४) ऋसं. १०।१०९।५ ; असं. ५।१७।५.

(५) ऋसं. १०।१०९।४ देवा वा ( देवा ) स्तपसा (स्तपसे) स्यापनीता ( स्योपनीता ) ; असं. ५।१७।६.

(६) असं. ५।१७।७-९.

[१]पुनर्वै देवा अददुः पुनर्मनुष्या अददुः ।
राजानः सत्यं गृह्णाना ब्रह्मजायां पुनर्ददुः ॥
[२]पुनर्दाय ब्रह्मजायां कृत्वा देवैर्निकिल्बिषम् ।
ऊर्जं पृथिव्या भक्त्वोरुगायमुपासते ॥
[३]नास्य जाया शतवाही कल्याणी तल्पमा शये ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥
न विकर्णः पृथुशिरास्तस्मिन् वेश्मनि जायते ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥
नास्य क्षत्ता निष्कग्रीवः सूनानामेत्यग्रतः ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥
नास्य श्वेतः कृष्णकर्णो धुरि युक्तो महीयते ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥
नास्य क्षेत्रे पुष्करिणी नाण्डीकं जायते बिसम् ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥
नास्मै पृश्निं वि दुहन्ति येऽस्या दोहमुपासते ।
यस्मिन् राष्ट्रे निरुध्यते ब्रह्मजायाचित्त्या ॥
नास्य धेनुः कल्याणी नानड्वान्त्सहते धुरम् ।
विजानिर्यत्र ब्राह्मणो रात्रिं वसति पापया ॥

ब्राह्मणो राजन्यश्च, ब्राह्मणगौर्नापहार्या, ब्राह्मणो न हन्तव्यः

[४]नैतां ते देवा अददुस्तुभ्यं नृपते अत्तवे ।
मा ब्राह्मणस्य राजन्य गां जिघत्सो अनाद्याम् ॥
अक्षद्रुग्धो राजन्यः पाप आत्मपराजितः ।
स ब्राह्मणस्य गामद्यादद्य जीवानि मा श्वः ॥
आविष्टिताघविषा पृदाकूरिव चर्मणा ।
सा ब्राह्मणस्य राजन्य तृष्टैषा गौरनाद्या ॥
निर्वै क्षत्रं नयति हन्ति वर्चो-
ऽग्निरिवारब्धो वि दुनोति सर्वम् ।
यो ब्राह्मणं मन्यते अन्नमेव
स विषस्य पिबति तैमातस्य ॥

(१) ऋसं. १०।१०९।६ व्या अददुः (व्या उत) गृह्णाना (कृण्वाना); असं. ५।१७।१०.
(२) ऋसं. १०।१०९।७ कृत्वा (कृत्वी) भक्त्वोरु (भक्त्वायोरु); असं. ५।१७।११.
(३) असं. ५।१७।१२-१८.
(४) असं. ५।१८।१-१५.

य एनं हन्ति मृदुं मन्यमानो
देवपीयुर्धनकामो न चित्तात् ।
सं तस्येन्द्रो हृदयेऽग्निमिन्ध
उभे एनं द्विष्टो नभसी चरन्तम् ॥
न ब्राह्मणो हिंसितव्योऽग्निः प्रियतनोरिव ।
सोमो ह्यस्य दायाद इन्द्रो अस्याभिशस्तिपाः ॥
शतापाष्ठां नि गिरति तां न शक्नोति निःखिदन् ।
अन्नं यो ब्रह्मणां मल्वः स्वाद्व१द्मीति मन्यते ॥
जिह्वा ज्या भवति कुल्मलं
वाङ्नाडीका दन्तास्तपसाभिदिग्धाः ।
तेभिर्ब्रह्मा विध्यति देवपीयून्
हृद्बलैर्धनुर्भिर्देवजूतैः ॥
तीक्ष्णेषवो ब्राह्मणा हेतिमन्तो
यामस्यन्ति शरव्यां३ न सा मृषा ।
अनुहाय तपसा मन्युना
चोत दूरादव भिन्दन्त्येनम् ॥
ये सहस्रमराजन्नासन् दशशता उत ।
ते ब्राह्मणस्य गां जग्ध्वा वैतहव्याः पराभवन् ॥
गौरेव तान् हन्यमाना वैतहव्याँ अवातिरत् ।
ये केसरप्राबन्धायाश्चरमाजामपेचिरन् ॥
एकशतं ता जनता या भूमिर्व्यधूनुत ।
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन् ॥
देवपीयुश्चरति मर्त्येषु
गरगीर्णो भवत्यस्थिभूयान् ।
यो ब्राह्मणं देवबन्धुं हिनस्ति
न स पितृयाणमप्येति लोकम् ॥
अग्निर्वै नः पदवायः सोमो दायाद उच्यते ।
हन्ताभिशस्तेन्द्रस्तथा तद्वेधसो विदुः ॥
इषुरिव दिग्धा नृपते पृदाकूरिव गोपते ।
सा ब्राह्मणस्येषुर्घोरा तया विध्यति पीयतः ॥
[१]अतिमात्रमवर्धन्त नोदिव दिवमस्पृशन् ।
भृगुं हिंसित्वा सृञ्जया वैतहव्याः पराभवन् ॥

(१) असं. ५।१९।१ ; जैब्रा. १।१५२.

[1]ये बृहत्सामानमाङ्गिरसमार्पयन् ब्राह्मणं जनाः ।
पेत्वस्तेषामुभयादमविस्तोकान्यावयत् ॥
ये ब्राह्मणं प्रत्यष्ठीवन् ये वास्मिञ्छुल्कमीषिरे ।
अस्नस्ते मध्ये कुल्यायाः केशान् खादन्त आसते ॥
ब्रह्मगवी पच्यमाना यावत्साभि विजङ्गहे ।
तेजो राष्ट्रस्य निर्हन्ति न वीरो जायते वृषा ॥
क्रूरमस्या आशसनं तृष्टं पिशितमस्यते ।
क्षीरं यदस्याः पीयते तद्वै पितृषु किल्बिषम् ॥
उग्रो राजा मन्यमानो ब्राह्मणं यो जिघत्सति ।
परा तत्सिच्यते राष्ट्रं ब्राह्मणो यत्र जीयते ॥
अष्टापदी चतुरक्षी चतुःश्रोत्रा चतुर्हनुः ।
द्व्यास्या द्विजिह्वा भूत्वा सा
राष्ट्रमव धूनुते ब्रह्मज्यस्य ॥
तद्वै राष्ट्रमा स्रवति नावं भिन्नामिवोदकम् ।
ब्रह्माणं यत्र हिंसन्ति तद्राष्ट्रं हन्ति दुच्छुना ॥
तं वृक्षा अप सेधन्ति छायां नो मोपगा इति ।
यो ब्राह्मणस्य सद्धनमभि नारद मन्यते ॥
विषमेतद्देवकृतं राजा वरुणोऽब्रवीत् ।
न ब्राह्मणस्य गां जग्ध्वा राष्ट्रे जागार कश्चन ॥
नवैव ता नवतयो या भूमिर्व्यधूनुत ।
प्रजां हिंसित्वा ब्राह्मणीमसंभव्यं पराभवन् ॥
यां मृतायानुबध्नन्ति कूद्यं पदयोपनीम् ।
तद्वै ब्रह्मज्य ते देवा उपस्तरणमब्रुवन् ॥
अश्रूणि कृपमाणस्य यानि जीतस्य वावृतुः ।
तं वै ब्रह्मज्य ते देवा अपां भागमधारयन् ॥
येन मृतं स्नपयन्ति श्मश्रूणि येनोन्दते ।
तं वै ब्रह्मज्य ते देवा अपां भागमधारयन् ॥
न वर्षं मैत्रावरुणं ब्रह्मज्यमभि वर्षति ।
नास्मै समितिः कल्पते न मित्रं नयते वशम् ॥

शूद्रा, वल्हिकमहावृषगन्धारिमगधाङ्गमूजवन्तो जनाः

[2]तक्मन् मूजवतो गच्छ बल्हिकान् वा परस्तराम् ।
शूद्रामिच्छ प्रफर्व्यं१ तां तक्मन् वीव धूनुहि ॥
महावृषान् मूजवतो बन्ध्वद्धि परेत्य ।
प्रैतानि तक्मने ब्रूमो अन्यक्षेत्राणि वा इमा ॥
गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः ।
प्रैष्यन् जनमिव शेवधिं तक्मानं परि दद्मसि ॥

ग्रामाय स्वस्तिप्रार्थना

[1]अस्मै ग्रामाय प्रदिशश्चतस्र ऊर्जं
सुभूतं स्वस्ति सविता नः कृणोतु ।
अशत्र्विन्द्रो अभयं नः कृणो-
त्वन्यत्र राज्ञामभि यातु मन्युः ॥

अस्मै ग्रामाय । षष्ठ्यर्थे चतुर्थी । अस्य ग्रामस्य अस्मदावासभूतस्य प्रदिशश्चतस्रः प्रकृष्टाः प्राच्याद्याश्चतस्रो दिशः । अत्यन्तसंयोगे द्वितीया । प्रागादिसर्वदिक्षु ऊर्जं अन्नं सुभूतं सुष्ठु उत्पन्नं स्वस्ति । अविनाशिनामैतत् । अविनाशोपलक्षितं क्षेमं एतत् सर्वं नः अस्माकं सविता सर्वस्य प्रेरको देवः सूर्यः कृणोतु करोतु । तथा अशत्रुः अनुपजातविरोधी इन्द्रो देवः नः अस्माकं अभयं शत्रुनिमित्तभयराहित्यं कृणोतु करोतु । तत्प्रसादात् राज्ञां मन्युः क्रोधः अस्मत्तः अन्यत्र अभि यातु अभिगच्छतु ।
असा.

सजातानां जनानां च सांमनस्यकर्म

[2]एह यातु वरुणः सोमो अग्निर्
बृहस्पतिर्वसुभिरेह यातु ।
अस्य श्रियमुपसंयात सर्व
उग्रस्य चेत्तुः संमनसः सजाताः ॥

इह अस्मिन् देशे वरुणः सोमः अग्निश्च प्रत्येकं आ यातु सांमनस्यकरणार्थमागच्छतु । बृहस्पतिः बृहतां देवानां अधिपतिर्देवः वसुभिः अष्टसंख्याकैः गणदेवैः सह इह अस्मिन् देशे आ यातु आगच्छतु । एते खलु सांमनस्यकारिणो देवाः । तथा च तैत्तिरीयकम्— ' अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः ' ( तैसं. ६।२।२।१ ) इति । हे सजाताः समानजन्मानो

---

( १ ) असं. ५।१९।२–१५.
( २ ) असं. ५।२२।७–८, १४.

( १ ) असं. ६।४०।२.
( २ ) असं. ६।७३।१–३.

बान्धवाः, ते सर्वे यूयं संमनसः समानमनस्काः सन्तः उग्रस्य उद्गूर्णबलस्य चेतुः कार्याकार्यविभागं सम्यग्जानानस्य अस्य यजमानस्य श्रियं संपदं उपसंयात उपसंप्राप्नुत, उपजीवका भवतेत्यर्थः। असा.

**यो वः शुष्मो हृदयेष्वन्तरा-**
**कूतिर्या वो मनसि प्रविष्टा।**
**तान्सीवयामि हविषा घृतेन**
**मयि सजाता रमतिर्वो अस्तु ॥**

हे सजाताः, वः युष्माकं हृदयेषु यः शुष्मः शोषकं बलमस्ति। तथा वः युष्माकं हृदयमध्यवर्तिनि मनसि अन्तःकरणे या आकूतिः इदं मे स्यात् इदं मे स्यादिति कल्पना अन्तः प्रविष्टा तां विविधामाकूतिं बलं च हूयमानेन घृतेन हविषा सीवयामि परस्परसंबद्धां करोमि। हे सजाताः, वः युष्माकं रमतिः रमणं अनुकूलप्रवृत्तिः मयि मदीये सांमनस्यकामे पुरुषे अस्तु भवतु। असा.

**इहैव स्त माप याताध्यस्म-**
**त्पूषा परस्तादपथं वः कृणोतु।**
**वास्तोष्पतिरनु वो जोहवीतु**
**मयि सजाता रमतिर्वो अस्तु ॥**

हे सजाताः, इह अस्मदीये गृहे एव स्त भवत अनुरागेण वर्तध्वम्। अध्यस्मत्। अधिः पञ्चम्यर्थानुवादी। अस्मत्तोऽधि माप यात अपसरणं मा कुरुत। अस्मत्तः परस्तात् अन्यत्र प्रातिकूल्येन वर्तमानानां वः युष्माकं पूषा मार्गरक्षको देवः अपथं अमार्गं कृणोतु करोतु, अपसरणाय मार्गं न ददात्वित्यर्थः। न पन्थाः अपथम्। वास्तोष्पतिः एतत्संज्ञको गृहाणां पालको देवः वः युष्मान् अनु जोहवीतु अनुसृत्य पुनः पुनरस्मदर्थं आह्वयतु। अन्यत् व्याख्यातम्। असा.

**[1]सं वः पृच्यन्तां तन्वः सं मनांसि समु व्रता।**
**सं वोऽयं ब्रह्मणस्पतिर्भगः सं वो अजीगमत् ॥**

हे सांमनस्यकामाः, वः युष्माकं तन्वः शरीराणि सं पृच्यन्तां परस्परानुरागेण संसृज्यन्ताम्। पृचि संपर्के। तथा मनांसि शरीरान्तर्वर्तीनि अन्तःकरणानि संसृज्यन्ताम्। सम् उ। उशब्दः चार्थे। व्रता व्रतानि। कर्मनामैतत्। कृषिवाणिज्यादीनि कर्माणि च संसृज्यन्ताम्। अपि च, ब्रह्मणस्पतिः एतत्संज्ञको वेदराशेः पालयिता अयं देवः वः युष्मान् समजीगमत्। संगतमनस्कान् करोतु। तथा भगः एतत्संज्ञो देवः वः युष्मान् समजीगमत् संगतमनस्कान् करोतु। असा.

**संज्ञपनं वो मनसोऽथो संज्ञपनं हृदः।**
**अथो भगस्य यच्छ्रान्तं तेन संज्ञपयामि वः ॥**

हे सांमनस्यकामाः, वः युष्माकं मनसः ज्ञानसाधनस्य इन्द्रियस्य संज्ञपनं सम्यग्ज्ञानजननं येन कर्मणा भवति तत् कर्म करोमीत्यर्थः। अथो अपि च हृदः हृदयस्य मनसोऽपि आधारभूतस्य संज्ञपनं समानज्ञानजननं करोमि। अथो अपि च भगस्य एतत्संज्ञस्य सौभाग्यकरस्य देवस्य यच्छ्रान्तं श्रमजनितं तपोऽस्ति, तेन श्रमजनिततपसा वः युष्मान् सांमनस्यकामान् संज्ञपयामि समानज्ञानान् करोमि। असा.

**[1]यथादित्या वसुभिः संबभूवु-**
**र्मरुद्भिरुग्रा अहृणीयमानाः।**
**एवा त्रिणामन्नहृणीयमान**
**इमान् जनान्त्संमनसस्कृधीह ॥**

आदित्याः अदितेः पुत्राः मित्रवरुणादयः यथा येन प्रकारेण वसुभिः अष्टसंख्याकैर्गणदेवैः संबभूवुः समानज्ञाना अभूवन्। यथा च मरुद्भिः एकोनपञ्चाशत्संख्याकैः सह उग्राः उद्गूर्णबला रुद्रा अहृणीयमानाः अक्रुध्यन्तः समानज्ञाना अभूवन्। एव एवं हे त्रिणामन् त्रिषु भूम्यन्तरिक्षद्युस्थानेषु पार्थिववैद्युतसूर्यात्मना सर्वेषां नमयितः। यद्वा, त्रीणि गार्हपत्यादीनि नामानि यस्य स तथोक्तः। तादृश हे अग्ने, अहृणीयमानः अक्रुध्यंस्त्वं इमान्

(१) असं. ६।७४।१-२.

(१) असं. ६।७४।३; तैसं. २।१।११।३ द्भिरुग्रा अहृणीयमानाः (द्भी रुद्राः समजानताभि) उत्तरार्धे (एवा त्रिणामन्नहृणीयमाना विश्वे देवाः समनसो भवन्तु ॥).

सांमनस्यकामान् जनान् इह अस्मिन् ग्रामनगरादौ संमनसः समानमनस्कान् परस्परानुरक्तचित्तान् कृधि कुरु। असा.

*[1]सं वो मनांसि सं व्रता
समाकूतीर्नमामसि।
अमी ये विव्रता स्थन
तान् वः सं नमयामसि॥

[2]अहं गृभ्णामि मनसा मनांसि
मम चित्तमनु चित्तेभिरेत।
मम वशेषु हृदयानि वः कृणोमि
मम यातमनुवर्त्मान एत॥

[3]ओते मे द्यावापृथिवी ओता देवी सरस्वती।
ओतौ म इन्द्रश्चाग्निश्चर्ध्यास्मेदं सरस्वति॥

द्यावापृथिवी द्यौश्च पृथिवी च द्यावापृथिव्यौ। ते उभे मे मह्यं ओते आभिमुख्येन संतते परस्परं संबद्धे वा। देवी द्योतमाना सरस्वती द्यावापृथिव्योर्मध्ये वर्तमाना वाग्देवता साऽपि ओता अस्मदाभिमुख्येन संबद्धा। तथा इन्द्रश्च अग्निश्च मे मह्यं मदभिलषितफलसिद्ध्यर्थे ओतौ आभिमुख्येन संबद्धौ परस्परप्रोतौ वा एककार्योद्युक्तौ। अतः एतेषामनुग्रहात् हे सरस्वति मन्त्रात्मिके देवि, इदं इदानीं वयं ऋध्यास्म समृद्धा भूयास्म। असा.

अन्नस्य यवस्य समृद्धिः

[4]उच्छ्रयस्व बहुर्भव स्वेन महसा यव।
मृणीहि विश्वा पात्राणि मा त्वा
दिव्याशनिर्वधीत्॥

हे यव धान्य, त्वं उच्छ्रयस्व उत्तिष्ठ प्ररूढः सन् उन्नतो भव। तथा बहुः अनेकविधो भव। स्वेन आत्मीयेन महसा तेजसा रसवीर्येण सह विश्वा विश्वानि सर्वाणि पात्राणि कुसूलकोष्ठागारादीनि वृणीहि। वर्णव्यत्ययः। पृणीहि पूरय। दिव्या दिवि भवा अशनिः त्वा त्वां मा वधीत् मा हिंसीत्। असा.

आशृण्वन्तं यवं देवं यत्र त्वाच्छावदामसि।
तदुच्छ्रयस्व द्यौरिव समुद्र इवैध्यक्षितः॥

आशृण्वन्तं आभिमुख्येन अस्मदुक्तमाकर्णयन्तं यवं यवधान्यरूपेण अवस्थितं देवं तत्र तस्यां भूमौ त्वा त्वां अछवदामसि आभिमुख्येन वदामः प्रार्थयामहे। तत् तत्र भूम्यां द्यौरिव आकाश इव उच्छ्रयस्व उन्नतो भव। सस्यावस्थायामुक्तम्। फलावस्थायामप्याह— समुद्र इव अक्षितः अक्षीणः क्षयरहितः एधि भव। असा.

अक्षितास्त उपसदोऽक्षिताः सन्तु राशयः।
पृणन्तो अक्षिताः सन्त्वत्तारः सन्त्वक्षिताः॥

हे यव, ते तव उपसदः उपसत्तारः उपगन्तारः कर्मकराः अक्षिताः क्षयरहिताः सन्तु भवन्तु। राशयः धान्यसमूहाः अक्षिताः क्षयरहिताः सन्तु भवन्तु। पृणन्तः गृहादिकं पूरयन्तः समाहर्तारो जनाः अक्षिताः क्षयरहिताः सन्तु भवन्तु। अत्तारः भोक्तारो जनाः अक्षिताः क्षयरहिताः सन्तु भवन्तु। असा.

ग्रामे सांमनस्यकर्म

[1]संज्ञानं नः स्वेभिः संज्ञानमरणेभिः।
संज्ञानमश्विना युवमिहास्मासु नि यच्छतम्॥

स्वेभिः स्वकीयैः पुरुषैः नः अस्माकं संज्ञानं संगतं ज्ञानं ऐकमत्यम्, भवत्विति शेषः। तथा अरणेभिः अरणैः अरमणैः अनुकूलमवद्भिः। रणतिः शब्दार्थः।

---

* अनयोर्व्याख्यानं अस्मिन्नेव प्रकरणे राका. पृ. ३८९ इत्यत्र द्रष्टव्यम्।

(१) असं. ३।८।५, ६।९४।१; कासं. १०।१२ (३९) समाकूतीर्नमामसि (समु चित्तान्याकरम्); मैसं. २।२।६ (२५) तीर्नमामसि (तीरनंसत) स्थन तान् (स्थ तान्).

(२) असं. ३।८।६, ६।९४।२.

(३) असं. ६।९४।३.

(४) असं. ६।१४२।१-३.

(१) ऋसं. (खिल) ३६।२ नः स्वेभिः (वः स्वेभ्यः) मरणेभिः (मरणेभ्यः) यच्छतम् (यच्छताम्); असं. ७।५२।१; कासं. १०।१२ (३३) स्वेभिः (स्वेभ्यः) मरणेभिः (मरणेभ्यः); मैसं. २।२।६ (२२) हास्मासु (हास्मभ्यं) शेषं कासंवत्; तैब्रा. २।४।४।६ स्वेभिः (स्वैः) मरणेभिः (मरणैः).

प्रतिकूलैः पुरुषैः । यद्वा, अर्तैः अरणशब्दः । अरातिभिः सह संज्ञानं समानज्ञानं भवतु । हे अश्विना अश्विनौ, युवं युवां इह अस्मिन् विषये इह इदानीं वा अस्मासु संज्ञानं समानज्ञानं स्वीयैः परैश्च सह ऐकमत्यं नि यच्छतं नियमयतं, स्थापयतमित्यर्थः । असा.

[1]सं जानामहै मनसा सं चिकित्वा
मा युष्महि मनसा दैव्येन ।
मा घोषा उत्स्थुर्बहुले विनिर्हते
मेषुः पप्तदिन्द्रस्याहन्यागते ॥

मनसा अन्यदीयेन सं जानामहै समानज्ञाना भवाम । यद्वा, मनः कर्म । परकीयं मनः संयोजयामः, यथा अस्मद्विषयेऽनुकूलं भवति तथा कुर्म इत्यर्थः । चिकित्वा ज्ञात्वा । सम् । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । संगतकार्यकारिणो भवाम । यद्वा, पूर्वं मनसा संगतिरुक्ता । इदानीं निश्चयात्मकज्ञानेन संगतिः प्रार्थ्यते । चिकित्वा चिकित्वना, ज्ञानेनेत्यर्थः । सं जानामहै इत्यनुषङ्गः । स्वेषां परेषां च मनसा ज्ञानेन च संगता भवामेत्यर्थः । किंच, दैव्येन देवसंबन्धिना देवताविषयेण । तादृशेन मनसा मा युष्महि मा वियुक्ता भूम, प्रतिकूलजनितविक्षेपराहित्येन स्वकीयं मनः सर्वदा देवताविषयं भवत्वित्यर्थः । अपि च, बहुले अधिके विनिर्हुते कौटिल्ये निमित्ते घोषाः वैमनस्यनिबन्धनाः शब्दाः मा उत्स्थुः उत्थिता मा भूवन् । यद्वा, बहुलशब्देन तमो विवक्ष्यते । विनिर्हुते विशेषेण स्तैन्यादिकौटिल्यनिमित्ते बहुले तमसि, रात्रावित्यर्थः । घोषाः वैमनस्यनिबन्धनाः शब्दा उत्थिता मा भूवन् । तथा अहनि अह्नि वासरे आगते च इन्द्रस्य इषुः । ऐन्द्या वाचः शत्रुनिवारकत्वात् इषुत्वेन रूपणम्, 'वागस्यैन्द्री सपत्नक्षयणी' (तैसं. १।६।२।२) इति तैत्तिरीयश्रुतेः । यद्वा, इन्द्रस्य इषुः अशनिः अशनिरूपा मर्मभेदिनी परकीया वाक् मा पप्तत् अस्मासु मा पततु । अहोरात्रोपलक्षितेषु सर्वेषु दिवसेष्वपि वैमनस्यनिबन्धनाः परेषां वाचः अस्मासु मा पतन्तु, किंतु अनुकूला एव भवन्तु इत्यर्थः । असा.

(१) असं. ७।५२।२.

रम्यं समृद्धं गृहम्

[1]ऊर्जं बिभ्रद्वसुवनिः सुमेधा
अघोरेण चक्षुषा मित्रियेण ।
गृहानैमि सुमना वन्दमानो
रमध्वं मा बिभीत मत् ॥

ऊर्जं अन्नं बिभ्रत् धारयन् वसुवनिः अन्नादिसाधनस्य वसुनो धनस्य संभक्ता । सुमेधाः शोभनमेधायुक्तः । अघोरेण अभयंकरेण न केवलमप्रतिकूलेन किंतु मित्रियेण मित्रं सुहृत् तदर्हेण अनुकूलेन स्निग्धेन चक्षुषा । पश्यन्निति शेषः । सुमनाः शोभनमनस्कः धनादिसाहित्येन प्राप्तसौमनस्यः, वन्दमानः स्तुवन् गृहान् ऐमि आगच्छामि । 'गृहाः पुंभूम्नि' इति वचनात् गृहशब्दः पुंलिङ्गो बहुवचनान्तश्च । हे गृहाः, यूयं रमध्वं क्रीडत सुखिनः स्यात । मयाऽधिपतिनेति शेषः । अतः मत् मत्तः देशान्तरादागच्छतो मत्तः मा बिभीत अन्यो गृहस्वामी सन् अस्मान् प्रविशतीति भयं मा प्राप्नुत । असा.

इमे गृहा मयोभुव ऊर्जस्वन्तः पयस्वन्तः ।
पूर्णा वामेन तिष्ठन्तस्ते नो जानन्त्वायतः ॥

मयोभुवः । मय इति सुखनाम । सुखस्य भावयितारः ऊर्जस्वन्तः अन्नरसवन्तः पयस्वन्तः क्षीरादिसमृद्धाः वामेन वननीयेन धनेन पूर्णाः संपूर्णाः समृद्धास्तिष्ठन्तः ते इमे पुरतो दृश्यमाना अस्मदीया गृहाः आयतः प्रवासादागच्छतो नः अस्मान् जानन्तु स्वामित्वेनावबुध्यन्ताम् । असा.

[2]येषामध्येति प्रवसन् येषु सौमनसो बहुः ।
गृहानुप ह्वयामहे ते नो जानन्त्वायतः ॥

(१) असं. ७।६०।१–२.

(२) असं. ७।६०।३ ; शुसं. ३।४२ जानन्त्वायतः ( जानन्तु जानतः ) ; आपश्रौ. ६।२७।३ शुसंवत् ; कौगृ. ३।७।२ शुसंवत् ; हिगृ. १।२९।१ मध्येति ( मभ्येति ) सन् येषु ( सन्नेति ) बहुः ( वसुः ) जानन्त्वायतः ( जानन्तु जानतः ).

प्रवसन् प्रवासं कुर्वन् देशान्तरे वसन् पुरुषो येषां यान् गृहानध्येति स्मरति। येषु गृहेषु सौमनसः सौमनस्यवान् बहुः अधिकः पदार्थो वर्तते। तान् गृहान् उक्तविशेषणान् उप ह्वयामहे प्राप्तुं प्रार्थयामहे। अनुज्ञास्वीकाराय यत् प्रार्थनं तदुपहव इत्युच्यते। 'ते नो जानन्त्वायतः' इति पादो व्याख्यातः। असा.

**[1]उपहूता भूरिधनाः**
**सखायः स्वादुसंमुदः।**
**अक्षुध्या अतृष्या स्त**
**गृहा मास्मद्बिभीतन॥**

हे गृहाः, उपहूताः अनुज्ञार्थे प्रार्थिता यूयं भूरिधनाः प्रभूतधनोपेताः स्त भवत। सखायः समानख्याना मित्रभूता भवत। स्वादुसंमुदः स्वादुभिः मधुरैः पदार्थैः संमोदमाना भवत। अक्षुध्याः, क्षुधं बुभुक्षामर्हन्तीति क्षुध्याः, न क्षुध्याः अक्षुध्याः। अतृष्याः, तृषं पिपासामर्हन्तीति तृष्याः, न तृष्याः अतृष्याः। क्षुत्तृष्णोपेतैर्जनैर्युक्ता मा भूत, अपि तु धनादिसमृद्ध्या सर्वदा तृप्तैर्जनैर्युक्ता भवतेत्यर्थः। हे गृहाः, अस्मत् अस्मत्तः देशान्तरादागच्छद्भ्यो मा बिभीतन भयं मा प्राप्नुत। असा.

**[2]उपहूता इह गाव**
**उपहूता अजावयः।**
**अथो अन्नस्य कीलाल**
**उपहूतो गृहेषु नः॥**

इह एषु अस्मदीयेषु गृहेषु गावः धेनवः उपहूताः अनुज्ञार्थे प्रार्थिता भवन्तु। अजावयः अजाश्च अवयश्च उपहूताः सन्तु। अथो अपि च नः अस्माकं गृहेषु अन्नस्य कीलालः सारभूतोऽशः उपहूतो भवतु। एतदुपलक्षणम्। यद्यत् गृहे भोग्यं वर्तते तत् सर्वमनुज्ञायै प्रार्थितं भवत्वित्यर्थः। असा.

**[1]सूनृतावन्तः सुभगा इरावन्तो हसामुदाः।**
**अतृष्या अक्षुध्या स्त गृहा मास्मद्बिभीतन॥**

हे गृहाः, सूनृतावन्तः। प्रियसत्यात्मिका वाक् सूनृतेत्युच्यते। तद्वन्तः स्त भवत, अरिष्टादिनिमित्तवाग्राहित्येन पुत्रमित्रादिसंपत्तिनिमित्तवाक्सहिता भवतेत्यर्थः। प्रवसति यजमाने गृहे जातमप्यरिष्टं पुनरागच्छति गृहस्वामिनि तद्दिवसे न ज्ञापनीयमित्याश्वलायनेनोक्तम्— 'विदितमप्यलीकं न तदहर्ज्ञापयेयुः' (आश्रौ. २।५।१८) इति। सर्वदाऽपि अरिष्टराहित्यमनेन पदेन प्रार्थ्यते। सुभगाः शोभनभाग्योपेता भवत। इरावन्तः इरा अन्नं तद्वन्तः स्त। हसामुदाः हासेन मोदमानाः। गृहस्थितानां हासेन तदीयः संतोषोऽभिव्यज्यते। हासाभिव्यक्तसंतोषा भवत। अतृष्या अक्षुध्या इत्यर्धर्चो व्याख्यातः। असा.

**इहैव स्त मानु गात विश्वा रूपाणि पुष्यत।**
**ऐष्यामि भद्रेणा सह भूयांसो भवता मया॥**

हे गृहाः, इहैव अस्मिन् प्रदेशे एव स्त भवत सुखिनो वर्तध्वम्। मा अनु गात प्रवसन्तं मां गृहस्वामिनं माऽनुगच्छत। विश्वा विश्वानि सर्वाणि रूपाणि रूपवन्ति निरूप्यमाणानि वा पुत्रादीनि वस्तूनि पुष्यत समृद्धानि कुरुत। भद्रेण भन्दनीयेन धनेन सह ऐष्यामि पुनरागमिष्यामि। ततः मया देशान्तरात् पुनरागतेन अर्जितधनेन भूयांसः अतिप्रभूता भवत। असा.

विराज उत्क्रान्तिः मनुष्येषु

**[2]सोदक्रामत्सा मनुष्या३नागच्छत्तां मनुष्या३ उपाह्वयन्तेरावत्येहीति॥**

**तस्या मनुर्वैवस्वतो वत्स आसीत्पृथिवी पात्रम्॥**

**तां पृथी वैन्योऽधोक्तां कृषिं च सस्यं चाधोक्॥**

**ते कृषिं च सस्यं च मनुष्या३ उप जीवन्ति कृष्टराधिरुपजीवनीयो भवति य एवं वेद॥**

(१) असं. ७।६०।४; आपश्रौ. ६।२७।३ स्वादु (साधु) उत्तरार्धे (अरिष्टाः सर्वपूरुषा गृहा नः सन्तु सर्वदा।); हिगृ. १।२९।१ भूरिधनाः (भूरिसखाः) उत्तरार्धं आपश्रौवत्.

(२) असं. ७।६०।५; शुसं. ३।४३; आपश्रौ. ६।२७।३; कौगृ. ३।३।१; हिगृ. १।२९।१.

(१) असं. ७।६०।६-७.

(२) असं. ८।१० चतुर्थपर्याये। ९-१२.

शाला ( गृहम् )

[1]उपमितां प्रतिमितामथो परिमितामुत ।
शालाया विश्ववाराया नद्धानि वि चृतामसि ॥
यत्ते नद्धं विश्ववारे पाशो ग्रन्थिश्च यः कृतः ।
बृहस्पतिरिवाहं बलं वाचा वि स्रंसयामि तत् ॥

आ ययाम सं बबर्ह ग्रन्थींश्चकार ते दृढान् ।
परूंषि विद्वांछस्तेवेन्द्रेण वि चृतामसि ॥

वंशानां ते नहनानां प्राणाहस्य तृणस्य च ।
पक्षाणां विश्ववारे ते नद्धानि वि चृतामसि ॥

संदंशानां पलदानां परिष्वञ्जल्यस्य च ।
इदं मानस्य पत्न्या नद्धानि वि चृतामसि ॥
यानि तेऽन्तः शिक्यान्याबेधू रण्याय कम् ।
प्र ते तानि चृतामसि शिवा मानस्य
पत्नी न उद्धिता तन्वे भव ॥

हविर्धानमग्निशालं पत्नीनां सदनं सदः ।
सदो देवानामसि देवि शाले ॥

अक्षुमोपशं विततं सहस्राक्षं विषूवति ।
अवनद्धमभिहितं ब्रह्मणा वि चृतामसि ॥

यस्त्वा शाले प्रतिगृह्णाति येन चासि मिता त्वम् ।
उभौ मानस्य पत्नि तौ जीवतां जरदष्टी ॥

अमुत्रैनमा गच्छताद् दृढा नद्धा परिष्कृता ।
यस्यास्ते विचृतामस्यङ्गमङ्गं परुष्परुः ॥

यस्त्वा शाले निमिमाय संजभार वनस्पतीन् ।
प्रजायै चक्रे त्वा शाले परमेष्ठी प्रजापतिः ॥

नमस्तस्मै नमो दात्रे शालापतये च कृण्मः ।
नमोऽग्नये प्रचरते पुरुषाय च ते नमः ॥

गोभ्यो अश्वेभ्यो नमो यच्छालायां विजायते ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥

अग्निमन्तश्छादयसि पुरुषान् पशुभिः सह ।
विजावति प्रजावति वि ते पाशांश्चृतामसि ॥

अन्तरा द्यां च पृथिवीं च यद्व्यच-
स्तेन शालां प्रति गृह्णामि त इमाम् ।
यदन्तरिक्षं रजसो विमानं
तत्कृण्वेऽहमुदरं शेवधिभ्यः ।
तेन शालां प्रति गृह्णामि तस्मै ॥
ऊर्जस्वती पयस्वती पृथिव्यां निमिता मिता ।
विश्वान्नं बिभ्रती शाले मा हिंसीः प्रतिगृह्णतः ॥
तृणैरावृता पलदान् वसाना
रात्रीव शाला जगतो निवेशनी ।
मिता पृथिव्यां तिष्ठसि हस्तिनीव पद्वती ॥
इटस्य ते वि चृताम्यपिनद्धमपोर्णुवन् ।
वरुणेन समुब्जितां मित्रः प्रातर्व्युब्जतु ॥
ब्रह्मणा शालां निमितां कविभिर्निमितां मिताम् ।
इन्द्राग्नी रक्षतां शालाममृतौ सोम्यं सदः ॥
कुलायेऽधि कुलायं कोशे कोशः समुब्जितः ।
तत्र मर्तो वि जायते यस्माद्विश्वं प्रजायते ॥
या द्विपक्षा चतुष्पक्षा षट्पक्षा या निमीयते ।
अष्टापक्षां दशपक्षां शालां मानस्य
पत्नीमग्निर्गर्भ इवा शये ॥
प्रतीचीं त्वा प्रतीचीनः शाले प्रैम्यहिंसतीम् ।
अग्निर्ह्य१न्तरापश्चर्तस्य प्रथमा द्वाः ॥
[2]इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः ।
गृहानुप प्र सीदाम्यमृतेन सहाग्निना ॥

ब्रह्म क्षत्रं विशः

[3]केन देवाँ अनु क्षियति केन दैवजनीर्विशः ।
केनेदमन्यन्नक्षत्रं केन सत्क्षत्रमुच्यते ॥
ब्रह्म देवाँ अनु क्षियति ब्रह्म दैवजनीर्विशः ।
ब्रह्मेदमन्यन्नक्षत्रं ब्रह्म सत्क्षत्रमुच्यते ॥

देवानां पूरयोध्या

[1]न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ॥

---

( १ ) असं. ९।३।१–२२.

( १ ) असं. ३।१२।९, ९।३।२२.
( २ ) असं. १०।२।२२–२३.
( ३ ) असं. १०।२।३०.

[1]अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः ॥

[2]तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते ।
तस्मिन् यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः ॥

[3]प्रभ्राजमानां हरिणीं यशसा संपरीवृताम् ।
पुरं हिरण्ययीं ब्रह्मा विवेशापराजिताम् ॥

किरातकन्या

[4]कैरातिका कुमारिका सका खनति भेषजम् ।
हिरण्ययीभिरभ्रिभिर्गिरीणामुप सानुषु ॥

तपस्विभ्य ऋषिजातेभ्यो ब्राह्मणेभ्यो धनदानं स्वर्गदम्

[5]सोम राजन्त्संज्ञानमा वपेभ्यः
सुब्राह्मणा यतमे त्वोपसीदान् ।
ऋषीनार्षेयांस्तपसोऽधि जातान्
ब्रह्मौदने सुहवा जोहवीमि ॥

हे राजन् राजमान सोम तदात्मक ब्रह्मौदन, एभ्यः भोक्तृभ्यो ब्राह्मणेभ्यः । तादर्थ्ये चतुर्थी । संज्ञानं सम्यग् ज्ञानं आ वप निधेहि, मोहं मा कृथा इत्यर्थः । यतमे यज्जातीयाः सुब्राह्मणाः शोभना ब्राह्मणा भृग्वङ्गिरोविदः त्वा त्वां उपसीदान् उपसन्ना भवन्ति । एभ्य इति पूर्वत्र संबन्धः । अपि च तपसोऽधि जाता दीक्षारूपात् तपस उत्पन्ना । 'ब्रह्मणो वा एष जायते यो दीक्षते' इति हि ब्राह्मणम् । एवंभूता सुहवा शोभनाह्वाना पत्नी आर्षेयान् प्रागुक्तलक्षणान् ऋषीन् ब्रह्मौदने विषये जोहवीमि पुनःपुनराह्वयामि । असा.

(१) असं. १०।२।३१ ; तैआ. १।२७।२ हिरण्ययः ( हिरण्मयः ) स्वर्गो + ( लोको ).
(२) असं. १०।२।३२.
(३) असं. १०।२।३३ ; तैआ. १।२७।३ प्रभ्राज ( विभ्राज ) हिरण्ययीं ( हिरण्मयीं ) जिताम् ( जिता ).
(४) असं. १०।४।१४.
(५) असं. ११।१।२६.

[1]शुद्धाः पूता योषितो यज्ञिया इमा
ब्रह्मणां हस्तेषु प्रपृथक्सादयामि ।
यत्काम इदमभिषिञ्चामि वोऽह-
मिन्द्रो मरुत्वान्त्स ददादिदं मे ॥

शुद्धाः निर्मलाः पापरहिताः पूताः स्वसंसर्गेण अन्यस्यापि पावयित्र्यः योषितः स्त्रीरूपा मिश्रणशीला वा यज्ञियाः यज्ञार्हाः इमाः एवंगुणविशिष्टा अपः ब्रह्मणां प्रागुदीरितलक्षणानां ब्राह्मणानां हस्तेषु पाणिषु । अत्र प्र इत्युपसर्गः उपसृष्टां क्रियामाह । प्रक्षालनक्रियाव्याजेनेत्यर्थः । प्रकर्षेण वा पृथक् सादयामि, सांकर्यं यथा न भवति तथा विक्षिपामीत्यर्थः । हे उदीरितलक्षणा आपः, वः युष्मानहं यत्कामः यत् फलं कामयमानः इदं इदानीमभिषिञ्चामि अभितः क्षारयामि इदं काम्यमानं फलं सः प्रसिद्धो मरुत्वान् मरुद्गणैर्युक्त इन्द्रो मे मह्यं ददात् ददातु । असा.

[2]इदं मे ज्योतिरमृतं हिरण्यं
पक्वं क्षेत्रात्कामदुघा म एषा ।
इदं धनं नि दधे ब्राह्मणेषु
कृण्वे पन्थां पितृषु यः स्वर्गः ॥

इदं निधीयमानं हिरण्यं अमृतं अविनश्वरं मे मम ज्योतिः प्रकाशः, स्वर्गमार्गस्य प्रकाशको दीप इत्यर्थः । पक्वं पाकेन संस्कृतमेतदन्नं क्षेत्रात् व्रीहियवादिसस्याढ्यात् भूप्रदेशादुत्पन्ना एषा मे कामदुघा कामानां दोग्ध्री धेनुः । इदं धनं दक्षिणात्वेन दीयमानं ब्राह्मणेषु नि दधे निक्षिपामि, यथा मम तत् स्वर्गे लोके कोटिगुणितं स्यात् । तथा पितृषु अस्मदीयेषु पितृपितामहादिषु विषये यः प्रसिद्धः तैरभिलषितः स्वर्गः पुण्यलोकः तस्य पन्थां पन्थानं कृण्वे करोमि । असा.

(१) असं. ६।१२२।५ ददादिदं मे ( ददातु तन्मे ) : ११।१।२७.
(२) असं. ११।१।२८.

पञ्चानां जनानामाश्रयः विविधभाषिकनानाधर्मजनान् धारयन्ती रक्षणाय इन्द्रं वृणाना पृथिवी

[1]सत्यं बृहदृतमुग्रं दीक्षा तपो
ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्युरुं
लोकं पृथिवी नः कृणोतु ॥

[2]असंबाधं बध्यतो मानवानां
यस्या उद्वतः प्रवतः समं बहु ।
नानावीर्या ओषधीर्या बिभर्ति
पृथिवी नः प्रथतां राध्यतां नः ॥

[3]यस्यां समुद्र उत सिन्धुरापो
यस्यामन्नं कृष्टयः संबभूवुः ।
यस्यामिदं जिन्वति प्राणदेज-
त्सा नो भूमिः पूर्वपेये दधातु ॥

यस्याश्चतस्रः प्रदिशः पृथिव्या
यस्यामन्नं कृष्टयः संबभूवुः ।
या बिभर्ति बहुधा प्राणदेज-
त्सा नो भूमिर्गोष्वप्यन्ने दधातु ॥

[4]यस्यां पूर्वे पूर्वजना विचक्रिरे
यस्यां देवा असुरानभ्यवर्तयन् ।
गवामश्वानां वयसश्च विष्ठा
भगं वर्चः पृथिवी नो दधातु ॥

(१) असं. १२।१।१ ; मैसं. ४।१४।११ (१५६) यज्ञः (यज्ञाः) भव्यस्य (भुवनस्य).

(२) असं. १२।१।२ ; मैसं. ४।१४।११ (१५७) पूर्वार्धे (असंबाधा या मध्यतो मानवेभ्यो यस्या उद्वतः प्रवतः समं महत् ।) नानावीर्या (नानारूपा).

(३) असं. १२।१।३-४.

(४) असं. १२।१।५ ; मैसं. ४।१४।११ (१५९) उत्तरार्धे (या विभर्ति बहुधा प्राणदेजत्सा नो भूमिः पूर्वपेयं दधातु ॥).

[1]विश्वंभरा वसुधानी प्रतिष्ठा
हिरण्यवक्षा जगतो निवेशनी ।
वैश्वानरं बिभ्रती भूमिरग्नि-
मिन्द्रऋषभा द्रविणे नो दधातु ॥

[2]यां रक्षन्त्यस्वप्ना विश्वदानीं
देवा भूमिं पृथिवीमप्रमादम् ।
सा नो मधु प्रियं दुहा-
मथो उक्षतु वर्चसा ॥

[3]यार्णवेऽधि सलिलमग्र आसीद्यां
मायाभिरन्वचरन् मनीषिणः ।
यस्या हृदयं परमे व्योम-
न्त्सत्येनावृतममृतं पृथिव्याः ।
सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ॥

यस्यामापः परिचराः समानी-
रहोरात्रे अप्रमादं क्षरन्ति ।
सा नो भूमिर्भूरिधारा पयो
दुहामथो उक्षतु वर्चसा ॥

यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे ।
इन्द्रो यां चक्र आत्मनेऽनमित्रां शचीपतिः ।
सा नो भूमिर्वि सृजतां माता पुत्राय मे पयः ॥

गिरयस्ते पर्वता हिमवन्तो-
ऽरण्यं ते पृथिवि स्योनमस्तु ।
बभ्रुं कृष्णां रोहिणीं विश्वरूपां
ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम् ।
अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम् ॥

(१) असं. १२।१।६ ; मैसं. ४।१४।११ (१६१) पूर्वार्धे (विश्वंभरा वसुधानी पुरुक्षुद्धिरण्यवर्णा जगतः प्रतिष्ठा ।) द्रविणे (द्रविणं).

(२) असं. १२।१।७ ; मैसं. ४।१४।११ (१५८) प्रियं (घृतं).

(३) असं. १२।१।८-२०.

यत्ते मध्यं पृथिवि यच्च नभ्यं
यास्त ऊर्जस्तन्व: संबभूवु: ।
तासु नो धेह्यभि न: पवस्व
माता भूमि: पुत्रो अहं पृथिव्या: ।
पर्जन्य: पिता स उ न: पिपर्तु ॥

यस्यां वेदिं परिगृह्णन्ति भूम्यां
यस्यां यज्ञं तन्वते विश्वकर्माण: ।
यस्यां मीयन्ते स्वरव: पृथिव्या-
मूर्ध्वा: शुक्रा आहुत्या: पुरस्तात् ।
सा नो भूमिर्वर्धयद्वर्धमाना ॥

यो नो द्वेषत्पृथिवि य: पृतन्याद्यो-
ऽभिदासान्मनसा यो वधेन ।
तं नो भूमे रन्धय पूर्वकृत्वरि ॥

त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं
बिभर्षि द्विपदस्त्वं चतुष्पद: ।
तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं
मर्त्येभ्य उद्यन्त्सूर्यो रश्मिभिरातनोति ॥

ता न: प्रजा: सं दुह्रतां समग्रा वाचो मधु
पृथिवि धेहि मह्यम् ॥
विश्वस्वं मातरमोषधीनां ध्रुवां भूमिं
पृथिवीं धर्मणा धृताम् ।
शिवां स्योनामनु चरेम विश्वहा ॥

महत्सधस्थं महती बभूविथ महान् वेग
एजथुर्वेपथुष्टे ।
महांस्त्वेन्द्रो रक्षत्यप्रमादम् ।
सा नो भूमे प्र रोचय हिरण्यस्येव संदृशि मा नो
द्विक्षत कश्चन ॥

अग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु ।
अग्निरन्त: पुरुषेषु गोष्वश्वेष्वग्नय: ॥

अग्निर्दिव आ तपत्यग्नेर्देवस्योर्व१न्तरिक्षम् ।
अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम् ॥

[1]अग्निवासा: पृथिव्यसितज्ञूस्त्विषीमन्तं
संशितं मा कृणोतु ॥
[2]भूम्यां देवेभ्यो ददति यज्ञं हव्यमरंकृतम् ।
भूम्यां मनुष्या जीवन्ति स्वधयान्नेन मर्त्या: ।
सा नो भूमि: प्राणमायुर्दधातु
जरदष्टिं मा पृथिवी कृणोतु ॥
यस्ते गन्ध: पृथिवि संबभूव
यं बिभ्रत्योषधयो यमाप: ।
यं गन्धर्वा अप्सरसश्च भेजिरे तेन
मा सुरभिं कृणु मा नो द्विक्षत कश्चन ॥
यस्ते गन्ध: पुष्करमाविवेश
यं संजभ्रु: सूर्याया विवाहे ।
अमर्त्या: पृथिवि गन्धमग्रे तेन मा
सुरभिं कृणु मा नो द्विक्षत कश्चन ॥
यस्ते गन्ध: पुरुषेषु स्त्रीषु पुंसु भगो रुचि: ।
यो अश्वेषु वीरेषु यो मृगेषूत हस्तिषु ।
कन्यायां वर्चो यद्भूमे तेनास्माँ
अपि सं सृज मा नो द्विक्षत कश्चन ॥
शिला भूमिरश्मा पांसु: सा भूमि: संधृता धृता ।
तस्यै हिरण्यवक्षसे पृथिव्या अकरं नम: ॥
यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा ।
पृथिवीं विश्वधायसं धृतामच्छावदामसि ॥
उदीराणा उतासीनास्तिष्ठन्त: प्रक्रामन्त: ।
पद्भ्यां दक्षिणसव्याभ्यां मा
व्यथिष्महि भूम्याम् ॥

विमृग्वरीं पृथिवीमा वदामि
क्षमां भूमिं ब्रह्मणा वावृधानाम् ।
ऊर्जं पुष्टं बिभ्रतीमन्नभागं
घृतं त्वाभि नि षीदेम भूमे ॥
शुद्धा न आपस्तन्वे क्षरन्तु
यो न: सेदुरप्रिये तं नि दध्म: ।
पवित्रेण पृथिवि मोत्पुनामि ॥

---

(१) अस. १२।१।२१ ; गोब्रा. १।२।९.
(२) अस. १२।१।२२-३०.

[1]यास्ते प्राचीः प्रदिशो या उदीची-
यास्ते भूमे अधराद्याश्च पश्चात् ।
स्योनास्ता मह्यं चरते भवन्तु
मा नि पप्तं भुवने शिश्रियाणः ॥

[2]मा नः पश्चान्मा पुरस्तान्नुदिष्ठा मोत्तरादधरादुत ।
स्वस्ति भूमे नो भव मा विदन् परिपन्थिनो
वरीयो यावया वधम् ॥

यावत्तेऽभि विपश्यामि भूमे सूर्येण मेदिना ।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ॥

यच्छयानः पर्यावर्ते दक्षिणं सव्यमभि
भूमे पार्श्वम् ।
उत्तानास्त्वा प्रतीचीं यत्पृष्टीभिरधिशेमहे ।
मा हिंसीस्तत्र नो भूमे सर्वस्य प्रतिशीवरि ॥

यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु ।
मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम् ॥

ग्रीष्मस्ते भूमे वर्षाणि शर-
द्धेमन्तः शिशिरो वसन्तः ।
ऋतवस्ते विहिता हायनी-
रहोरात्रे पृथिवि नो दुहाताम् ॥

याप सर्पं विजमाना विमृग्वरी
यस्यामासन्नग्नयो ये अप्स्व१न्तः ।
परा दस्यून् ददती देवपीयू-
निन्द्रं वृणाना पृथिवी न वृत्रम् ।
शक्राय दध्रे वृषभाय वृष्णे ॥

यस्यां सदोहविर्धाने यूपो यस्यां निमीयते ।
ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः ।
युज्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे ॥

यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः ।
सप्त सत्रेण वेधसो यज्ञेन तपसा सह ॥

सा नो भूमिरा दिशतु यद्धनं कामयामहे ।
भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः ॥

यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलबाः ।
युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः ।
सा नो भूमिः प्र णुदतां सपत्नानसपत्नं
मा पृथिवी कृणोतु ॥

यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः ।
भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेदसे ॥

यस्याः पुरो देवकृताः क्षेत्रे यस्या विकुर्वते ।
प्रजापतिः पृथिवीं विश्वगर्भामाशामाशां
रण्यां नः कृणोतु ॥

निधिं बिभ्रती बहुधा गुहा वसु
मणिं हिरण्यं पृथिवी ददातु मे ।
वसूनि नो वसुदा रासमाना
देवी दधातु सुमनस्यमाना ॥

जनं बिभ्रती बहुधा विवाचसं
नानाधर्माणं पृथिवी यथौकसम् ।
सहस्रं धारा द्रविणस्य मे
दुहां ध्रुवेव धेनुरनपस्फुरन्ती ॥

यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा
हेमन्तजब्धो भृमलो गुहा शये ।
क्रिमिर्जिन्वत्पृथिवि यद्यदेजति प्रावृषि
तन्नः सर्पन्मोप सृपद्यच्छिवं तेन नो मृड ॥

ये ते पन्थानो बहवो जनायना
रथस्य वर्त्मानसश्च यातवे ।
यैः संचरन्त्युभये भद्रपापास्तं पन्थानं
जयेमानमित्रमतस्करं यच्छिवं तेन नो मृड ॥

मल्वं बिभ्रती गुरुभृद्भद्र-
पापस्य निधनं तितिक्षुः ।
वराहेण पृथिवी संविदाना
सूकराय वि जिहीते मृगाय ॥

---

(१) असं. १२।१।३१ ; मैसं. ४।१४।११ (१६०) यास्ते भूमे अधराद्याश्च पश्चात् ( याश्च भूम्यधराग्याश्च पश्चा ) स्योनास्ता ( शिवास्ता ).

(२) असं. १२।१।३२-६३.

ये त आरण्याः पशवो मृगा वने हिताः
सिंहा व्याघ्राः पुरुषादश्चरन्ति ।
उलं वृकं पृथिवि दुच्छुनामित
ऋक्षीकां रक्षो अप बाधयास्मत् ॥

ये गन्धर्वा अप्सरसो ये चारायाः किमीदिनः ।
पिशाचान्त्सर्वा रक्षांसि तानस्मद्भूमे यावय ॥

यां द्विपादः पक्षिणः संपतन्ति
हंसाः सुपर्णाः शकुना वयांसि ।
यस्यां वातो मातरिश्वेयते
रजांसि कृण्वंश्च्यावयंश्च वृक्षान् ।
वातस्य प्रवामुपवामनु वात्यर्चिः ॥

यस्यां कृष्णमरुणं च संहिते
अहोरात्रे विहिते भूम्यामधि ।
वर्षेण भूमिः पृथिवी वृतावृता सा नो
दधातु भद्रया प्रिये धामनिधामनि ॥

द्यौश्च म इदं पृथिवी चान्तरिक्षं च मे व्यचः ।
अग्निः सूर्य आपो मेधां विश्वे देवाश्च सं ददुः ॥

अहमस्मि सहमान उत्तरो नाम भूम्याम् ।
अभीषाडस्मि विश्वाषाडाशामाशां विषासहिः ॥

अदो यद्देवि प्रथमाना पुरस्ता-
द्देवैरुक्ता व्यसर्पो महित्वम् ।
आ त्वा सुभूतमविशत्तदानी-
मकल्पयथाः प्रदिशश्चतस्रः ॥

ये ग्रामा यदरण्यं याः सभा अधि भूम्याम् ।
ये संग्रामाः समितयस्तेषु चारु वदेम ते ॥

अश्व इव रजो दुधुवे वि तान् जनान्
य आक्षियन् पृथिवीं यादजायत ।
मन्द्राग्रेत्वरी भुवनस्य गोपा
वनस्पतीनां गृभिरोषधीनाम् ॥

यद्वदामि मधुमत्तद्वदामि यदीक्षे तद्वनन्ति मा ।
त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधतः ॥

शन्तिवा सुरभिः स्योना कीलालोध्नी पयस्वती ।
भूमिरधि ब्रवीतु मे पृथिवी पयसा सह ॥

यामन्वैच्छद्धविषा विश्वकर्मा-
न्तरर्णवे रजसि प्रविष्टाम् ।
भुजिष्यं[१] पात्रं निहितं गुहा
यदाविर्भोगे अभवन्मातृमद्भ्यः ॥

त्वमस्यावपनी जनानामदितिः कामदुघा पप्रथाना ।
यत्त ऊनं तत्त आ पूरयाति प्रजापतिः
प्रथमजा ऋतस्य ॥

उपस्थास्ते अनमीवा अयक्ष्मा
अस्मभ्यं सन्तु पृथिवि प्रसूताः ।
दीर्घं न आयुः प्रतिबुध्यमाना
वयं तुभ्यं बलिहृतः स्याम ॥

भूमे मातर्नि धेहि मा भद्रया सुप्रतिष्ठितम् ।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम् ॥

ब्राह्मणः त्रैलोक्यसमः

[१]त्रयो लोकाः संमिता ब्राह्मणेन
द्यौरेवासौ पृथिव्य१न्तरिक्षम् ।
अंशून् गृभीत्वान्वारभेथामा
प्यायन्तां पुनरा यन्तु शूर्पम् ॥

ब्राह्मणस्य गौः क्षत्रियेण नापहरणीया

[२]तस्या आहननं कृत्या मेनिराशसनं
वलग ऊबध्यम् ॥
अस्वगता परिह्णुता ॥
अग्निः क्रव्याद्भूत्वा ब्रह्मगवी
ब्रह्मज्यं प्रविश्याति ॥
सर्वास्याङ्गा पर्वा मूलानि वृश्चति ॥
छिनत्त्यस्य पितृबन्धु परा भावयति मातृबन्धु ॥
विवाहां ज्ञातीन्त्सर्वानपि क्षापयति ब्रह्मगवी
ब्रह्मज्यस्य क्षत्रियेणापुनर्दीयमाना ॥
अवास्तुमेनमस्वगमप्रजसं करोत्यपरापरणो
भवति क्षीयते ॥
य एवं विदुषो ब्राह्मणस्य क्षत्रियो गामादत्ते ॥

---

( १ ) असं. १२।३।२०.
( २ ) असं. १२।५।३९-४६.

व्रात्यब्रह्मणो ब्रह्मक्षत्रोत्पत्तिः

[1]अतो वै ब्रह्म च क्षत्रं चोदतिष्ठतां ते अब्रूतां कं प्र विशावेति ॥
अतो वै बृहस्पतिमेव ब्रह्म प्रा विशत्विन्द्रं क्षत्रं तथा वा इति ॥
अतो वै बृहस्पतिमेव ब्रह्म प्राविशदिन्द्रं क्षत्रम् ॥
इयं वा उ पृथिवी बृहस्पतिर्द्यौरेवेन्द्रः ॥
अयं वा उ अग्निर्ब्रह्मासावादित्यः क्षत्रम् ॥
ऐनं ब्रह्म गच्छति ब्रह्मवर्चसी भवति ॥
यः पृथिवीं बृहस्पतिमग्निं ब्रह्म वेद ॥
ऐनमिन्द्रियं गच्छतीन्द्रियवान् भवति ॥
य आदित्यं क्षत्रं दिवमिन्द्रं वेद ॥

ब्रह्मराजन्यौ शूद्रार्यौ च

[2]प्रियं मा दर्भ कृणु ब्रह्मराजन्याभ्यां शूद्राय चार्याय च ।
यस्मै च कामयामहे सर्वस्मै च विपश्यते ॥

हे दर्भ, मा मां त्वां धारयमाणं ब्रह्मराजन्याभ्यां ब्राह्मणक्षत्रियाभ्यां वर्णाभ्यां प्रियं कृणु कुरु, ब्राह्मणानां क्षत्रियाणां च यथाऽहं प्रियो भवामि तथा मां कुरु इत्यर्थः । अनेन तेषां वशीकरणं प्रार्थितं भवति । तथा शूद्राय च आर्याय च । जात्यभिप्रायमिदम् । शूद्राणामार्याणां च मां प्रियभूतं कुरु । किंच अहं यस्मै-यस्मै अनुलोमेषु प्रतिलोमेषु च जातीयेषु मध्ये यस्मैयस्मै प्रियभावं कामयामहे तस्मै सर्वस्मै विपश्यते पापमन्विष्यते पुरुषाय मां प्रियं कुरु । असा.

प्रियत्वप्रार्थना आत्मनः राजसु शूद्रे आर्ये च

[3]प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥

(१) असं. १५।१०।३–११.

(२) असं. १९।३२।८.

(३) असं. १९।६२।१ ; हिगृ. १९।३।२६ (प्रियं मा कुरु देवेषु प्रियं मा ब्रह्मणि कुरु । प्रियं विश्येषु शूद्रेषु प्रियं मा कुरु राजसु ॥).

वेदाः पावनं द्विजानाम्

[1]स्तुता मया वरदा वेदमाता प्र चोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं कीर्तिं द्रविणं ब्रह्मवर्चसम् ।
मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥

स्वानुष्ठितकर्मणो निरभिसंधिना सर्वार्थे फलाशासनं स्वस्याविकलं भवतीत्यभिप्रायेण मन्त्रद्रष्टा ऋषिः स्वानुष्ठितवेदाध्ययनेन गायत्रीजपेन वा द्विजानामायुरादिफलमाशास्य तन्मध्यवर्तिनः स्वस्यापि फलं सिद्धवत् अनुवदति । मया वेदाध्यायकेन सावित्रीं जपता वा स्तुता अभिष्टुता स्वभ्यस्ता वरदा इष्टकामप्रदात्री पावमानी । पवमानः पापात् परिशोधकः सूत्रात्मा 'वायुरेव पवमानो दिशो हरित आविष्टः' (ऐआ. २।१।१) इति ऐतरेयकश्रुतेः । तत्प्रतिपादिका पावमानी वेदमाता वेदस्य ऋगादिरूपस्य माता सर्ववेदसारत्वेन मातृवत्प्रधानभूता सावित्री वेद एव वा माता, मातृवद्धितकारित्वात् । 'वेद एव द्विजातीनां निःश्रेयसकरः परः ।' इति स्मृतेः । द्विजानां द्विजन्मनां ब्राह्मणानां त्रैवर्णिकानां वा आयुरादिफलानि प्र चोदयन्ताम् । पूजायां बहुवचनम् । प्रेरयतु प्रयच्छतु । ब्रह्मवर्चसं ब्रह्मणां वर्चः ब्राह्मं तेजः अथ मह्यं स्तोत्रे सर्वेषां फलप्रार्थकाय दत्त्वा आयुरादिकं फलं वितीर्य ब्रह्मलोकं ब्रह्मणो लोकः सत्यलोकः ब्रह्मैव वा लोकः लोक्यमानं विद्वद्भिरनुभूयमानं परतत्त्वं व्रजत । इति प्रत्यक्षवादः । अत्रापि पूर्ववद्बहुवचनम् । शब्दावगम्यब्रह्माकारं परित्यज्य वाङ्मनसातीतार्थब्रह्मरूपा भवेति मन्त्रदर्शिना ऋषिणा साक्षात्कृतपरत्वेन उच्यते । असा.

(१) असं. १९।७१।१ ; तैआ. १०।३६ (स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता । आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा प्रजातुं ब्रह्मलोकम् ॥).

प्रजानां राजद्वारा धनजयः

* [1]गोभिष्टरेमामतिं दुरेवां
यवेन क्षुधं पुरुहूत विश्वाम् ।
वयं राजभिः प्रथमा धना-
न्यस्माकेन वृजनेना जयेम ॥

पञ्च पञ्चजनाः, ब्रह्मक्षत्रविशः

[2]पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि । चरोस्त्वा पञ्चबिलस्य यन्त्राय धर्त्राय गृह्णामि । ब्रह्मणस्त्वा तेजसे यन्त्राय धर्त्राय गृह्णामि । क्षत्रस्य त्वौजसे यन्त्राय धर्त्राय गृह्णामि । विशे त्वा यन्त्राय धर्त्राय गृह्णामि ॥

पञ्चजनशब्दः समस्तो देवमनुष्यासुररक्षोगन्धर्वेषु रूढः । ते च देवादयः पञ्चसंख्याकाः । चरुशब्दः पाकाधारभूतां स्थालीमाचष्टे । सा च क्वचित्पञ्चबिलैर्युज्यते । तच्च पुरुषमेधावसाने कल्पसूत्रकार उदाजहार– 'पञ्चबिलस्य चरोर्विज्ञायत आज्य आग्नेयः पूर्वस्मिन् बिले, दधन्यैन्द्रो दक्षिणे, शृते प्रतिदुहिनीतमिश्रे वा वैश्वदेवः पश्चिमे, अप्सु मैत्रावरुण उत्तरे, पयसि बार्हस्पत्यो मध्यमे' इति । तस्य पञ्चबिलस्य चरोर्नियमनायेति योज्यम् । ब्रह्मणः ब्राह्मणजातेः तेजः ब्रह्मवर्चसं, तस्य यन्त्राय । क्षत्रियजातेरोजः युद्धसामर्थ्यम् । वैश्यजातेः कृषिवाणिज्यादिषु नियमनम् । तैसा.

ब्राह्मणा देवाः

[3]एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः ॥

प्रत्यक्षं, वर्तन्त इति शेषः । तैसा.

* व्याख्यानं 'मानवो राजा, तस्य कर्माणि च' इत्यस्मिन् प्रकरणे ( पृ. ८७ ) द्रष्टव्यम् ।

( १ ) ऋसं. २०।१७।१०. शेषः स्थलादिनिर्देशः 'मानवो राजा, तस्य कर्माणि च' इत्यस्मिन् प्रकरणे ( पृ. ८७ ) द्रष्टव्यः ।

( २ ) तैसं. १।६।१।२–३.

( ३ ) तैसं. १।७।३।१.

पञ्चजनाः

[1]ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः ।
दैव्यः कोशः समुब्जितः ॥

येऽतिग्राह्यरूपा ग्रहाः पञ्चजनीनाः पञ्चजनेभ्यो देवमनुष्यासुररक्षोगन्धर्वेभ्यो निषादपञ्चमेभ्यो वर्णेभ्यो वा हिताः, येषामतिग्राह्याणां तिस्र आग्नेयैन्द्रसौर्याख्यातिग्राह्यरूपाः परमजाः प्रकृतयः । किंच, येषां प्रभावेन दैव्यः दिवि भवः कोशो मेघः समुब्जितः सम्यङ् न्युब्जीकृतः, वर्षाभिमुखः कृत इत्यर्थः । तैसा.

शूद्रार्यसृष्टिः

[2]नवदशभिरस्तुवत । शूद्रार्यावसृज्येताम् । अहोरात्रे अधिपत्नी आस्ताम् ॥

शूद्रार्यौ शूद्रो वैश्यश्चेति जातिद्वयम् । अहर्देवता रात्रिदेवता चेत्येते जातिद्वयस्य अधिपत्नी स्वामिरूपे आस्ताम् । तैसा.

रथपतिसेनानीक्षत्तृरथकारादयो रुद्रविभूतयः

[3]नमो रथेभ्यो रथपतिभ्यश्च वो नमः । नमः सेनाभ्यः सेनानिभ्यश्च वो नमः । नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमः । नमस्तक्षभ्यो रथकारेभ्यश्च वो नमः । नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमः । नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमः । नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमः । नमो मृगयुभ्यः श्वनिभ्यश्च वो नमः । नमः श्वभ्यः श्वपतिभ्यश्च वो नमः ॥

पक्षिपुञ्जानां घातकाः पुञ्जिष्टाः । मत्स्यघातिनो निषादाः । शुनां गलेषु बद्धानां पाशानां धारकाः श्वनयः । तैसा.

( १ ) तैसं. १।७।१२।१–२.

( २ ) तैसं. ४।३।१०।२.

( ३ ) तैसं. ४।५।४।१–२ ; कासं. १७।१३ ( ४९ ) ; मैसं. २।९।४–५ ( ३०–३१ ) ; शुसं. १६।२६–२८ . कासं. मैसं. शुसं. इत्येतेषां ग्रन्थानां पाठभेदाः तद्बाहुल्यात् न कृताः ।

ब्रह्मक्षत्रसंबन्धः

[1]ब्रह्मणैव क्षत्रꣳ सꣳ श्यति । क्षत्रेण ब्रह्म । तस्माद्ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणम् । तस्माद्राजन्यो ब्राह्मणवानत्यन्यꣳ राजन्यम् ॥

ब्राह्मणेनैव पुरोहितेन राजा धर्मे तीक्ष्णीकृतो भवति । राज्ञा नियामकेन ब्राह्मणोऽपि संशितः स्वाचारे नियमितो भवति । यस्मादेवं तस्माद्राजन्येन स्वामिना युक्तो ब्राह्मणः स्वामिरहितं ब्राह्मणमत्येति । राजाऽपि धर्मबोधकेन पुरोहितेन ब्राह्मणेन युक्तस्तद्रहितमधार्मिकं राजन्यं राजानमत्येति । तैसा. ( ४।१।१०।३–४ )

तेजस्वि चातुर्वर्ण्यम्

[2]रुचं नो धेहि ब्राह्मणेषु रुचꣳ राजसु नस्कृधि ।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥

हे अग्ने, नः अस्मदीयेषु ब्राह्मणेषु रुचं धेहि प्रकाशं कुरु । नः अस्मदीयेषु राजसु रुचं कृधि प्रकाशं कुरु । तथा विश्येषु वैश्येषु शूद्रेषु च रुचं प्रकाशं कुरु । तथा रुचा त्वदीयया दीप्त्या मयि रुचं धेहि प्रकाशं कुरु । तैसा.

मरुतः देवानां विशः

[3]मरुतो वै देवानां विशः । देवविशं खलु वै कल्पमानं मनुष्यविशमनु कल्पते यन्मारुतीमृचमन्वाह विशां क्लृप्त्यै ॥

एकोनपञ्चाशत्संख्याकाः सप्तगणरूपा मरुतः मनुष्यवैश्यवद्देवानां धनसंपादकाः प्रजाः । अनेन मन्त्रानुवचनेन देवविशां समूहः स्वव्यापारे क्लृप्तो भवति । तं च कल्पमानमनुसृत्य मनुष्यप्रजासंघः कल्पते । अतो मन्त्रानुवचनं प्रजानां क्लृप्त्यै भवति ।

तैसा. ( १।२।४।१ )

( १ ) तैसं. ५।१।१०।३.

( २ ) तैसं. ५।७।६।३–४ ; मैसं. ३।४।८ ( १४ ) नस्कृधि ( धारय ) ; शुसं. १८।४८.

( ३ ) तैसं. ६।१।५।३.

वर्णगुणोत्कर्षप्रार्थना

[1]आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् । आऽस्मिन् राष्ट्रे राजन्य इषव्यः शूरो महारथो जायताम् । दोग्ध्री धेनुः । वोढाऽनड्वान् । आशुः सप्तिः । पुरन्धिर्योषा । जिष्णू रथेष्ठाः सभेयो युवाऽस्य यजमानस्य वीरो जायताम् । निकामेनिकामे नः पर्जन्यो वर्षतु । फलिन्यो न ओषधयः पच्यन्ताम् । योगक्षेमो नः कल्पताम् ॥

ब्रह्मन् ब्राह्मणजातौ ब्रह्मवर्चसी श्रुताध्ययनसंपन्नो ब्राह्मण आजायतां सर्वत उत्पद्यताम् । एतदेकं वाक्यमेको मन्त्रः । एवमुत्तरत्रापि । इषव्यः बाणाद्यायुधेषु कुशलः । धेनुरित्यादिषु आजायतामित्यनुवर्तते । सप्तिः अश्वः । आशुः शीघ्रगामी । पुरवासिभिर्ध्यायते इति पुरन्धिः, रूपवतीत्यर्थः । अस्य यजमानस्य जिष्णुत्वादिगुणविशिष्टः पुत्र आजायताम् । नः अस्माकं यदा यदा अपेक्षा तदा तदा पर्जन्यो वर्षतु । ओषधयश्च बहुफलयुक्ताः पच्यन्ताम् । अलब्धस्य लाभो योगः । लब्धस्य परिपालनं क्षेमः । योगसहितः क्षेमः योगक्षेमः । सोऽस्माकं संपद्यताम् । तैसा.

मरुतः देवानां विशः

[2]इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्
यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् ।
एवमिमं यजमानं दैवीश्च विशो
मानुषीश्चानुवर्त्मानो भवन्तु ॥

( १ ) तैसं. ७।५।१८।१ ; कासं. (अश्व.) ५।१४ (१७) सप्तिः ... रथेष्ठाः ( सप्तिर्जिष्णू रथेष्ठाः पुरन्धिर्योषा ) फलिन्यो न ( फलवतीर्न ) ; मैसं. ३।१२।६ ( ८ ) ब्राह्मणो ( ब्राह्मणस्तेजस्वी) आऽस्मिन् (आ) इषव्यः शूरो ( शूर इषव्यो ) पुरन्धिः ... युवाऽस्य ( सभेयो युवा पुरन्धिर्योषा जिष्णू रथेष्ठा आस्य ) फलिन्यो न ( फलवतीनां ) ; शुसं. २२।२२ जायता ... शूरो ( जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी ) फलिन्यो ( फलवत्यो ) .

( २ ) तैसं. ४।६।५।७ वर्त्मानोऽभवन् (वर्त्मानः ) ; कासं. १८।६ ( ५५ ) वर्त्मानोऽभवन् यथेन्द्रं ( वर्त्मानो यथेन्द्रं ) ; मैसं. २।११।१ ( १ ) कासंवत् ; शुसं. १७।८६ .

दैवीः दैव्यः देवानामिमाः देवसंबन्धिन्यः विशः प्रजाः मरुतः मरुद्रूपाः इन्द्रमनुवर्त्मानोऽभवन् । अनु पश्चात् वर्त्म वर्तनं यासां ताः इन्द्रमनुगामिन्योऽभवन्निति स्वरूपाख्यानम् । दैवीर्विशो मरुतः यथा इन्द्रमनुवर्त्मानः इन्द्रमनुसृत्य वर्तमानाः अभवन् । उपमानमेतत् । दैवीर्मानुषीश्च देवसंबन्धिन्यो मनुष्यसंबन्धिन्यश्च विशः एवं इन्द्रवत् इमं यजमानं अनुवर्त्मानः अनुसृत्य वर्तमाना भवन्त्विति प्रार्थना । शुम.

ब्रह्मक्षत्रयोः सम्यक् सहचारप्रशंसा

**[1]यत्र ब्रह्म च क्षत्रं च सम्यञ्चौ चरतः सह ।**
**तं लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥**

पुण्यं पवित्रं लोकं प्रज्ञेषं जानीयाम् । लोकमप्राप्तानां तल्लोकज्ञानं न भवतीति स्वर्लोकगमनं प्रार्थ्यते । तं कम् ? यत्र लोके ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिश्च सह अवियोगेन चरतः तिष्ठत इत्यर्थः । कीदृशे ब्रह्मक्षत्रे ? सम्यञ्चौ, लिङ्गव्यत्ययः । समीची सम्यक् अञ्चतस्ते । तत्र चाग्निना सह देवाः संचरन्ति । सदा च विप्राः क्षत्रियाश्च यं गच्छन्ति तं देवलोकं प्राप्नुयामित्यर्थः । शुम

**[2]इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् ।**
**मयि देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा ॥**

श्रीकामोऽनया श्रियं याचते । ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः इदं इमे उभे ब्रह्मक्षत्रे मे मम श्रियमश्नुताम् । देवाः मयि उत्तमां श्रियं दधतु स्थापयन्तु । तस्यै प्रसिद्धायै ते तुभ्यं श्रियै स्वाहा सुहुतमस्तु । चौ समुच्चयार्थौ । श्रीमेधे विना यज्ञासिद्धेस्ते प्रार्थ्येते । शुम.

सर्ववर्णेभ्योऽनुद्वेजनी वाणी

**[3]यथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुप मादो नमतु ॥**

इमां कल्याणीं अनुद्वेगकरीं वाचमहं यथा यतः आवदानि सर्वतो ब्रवीमि दीयतां भुज्यतामिति सर्वेभ्यो वच्मि । केभ्यस्तदाह— ब्रह्मराजन्याभ्यां ब्राह्मणाय राजन्याय क्षत्रियाय च शूद्राय अर्याय वैश्याय स्वाय आत्मीयाय अरणाय पराय । अरणः अपगतोदकः शत्रुः । नास्ति रणः शब्दो येन सह, वाक्संबन्धरहितः शत्रुरिति वा । प्रियो देवानां मध्ये । यथेति पूर्वोक्तिरत्र तथाशब्दोऽध्याहार्यः । यतोऽहं ब्राह्मणादिभ्यः कल्याणीं वाचं वदामि तथा ततोऽहं देवानां प्रियः भूयासम् । इह संसारे दक्षिणायै दक्षिणायाः दातुश्च प्रियः भूयासम् । देवा दक्षिणादातारश्च मयि प्रीतिं कुर्वन्त्वित्यर्थः । किंच मे मम अयं कामः समृध्यतां सफलो भवतु । अयमिति नामनिर्देशः । धनपुत्रादिलाभकामो मे संपद्यतामित्यर्थः । किंच अदो मा मां उपनमतु । अद इति इष्टनामग्रहणम् । देवदत्तादिर्मां प्रीणयतु । शुम.

ब्राह्मणादि चातुर्वर्ण्यं मागध—सूत—रथकार—तक्ष—कौलाल—कर्मार—इषुकार—धनुष्कार—ज्याकार—रज्जुसर्ज— मृगयु— श्वनि—पौञ्जिष्ठ—नैषाद—व्रात्य— कितव— विदलकारी—कण्टकीकारी—पेशस्कारी—अनुरुत्—नक्षत्रदर्श—प्रश्नि— अभिप्रश्नि—प्रश्नविवाक—हस्तिप—अश्वप—गोपाल—अविपाल—अजपाल—कीनाश— सुराकार—गृहप—वित्तध—अनुक्षत्तृ—दार्वाहार—अग्न्येध— अभिषेक्तृ — परिवेष्टृ—पेशितृ— प्रकरितृ— उपसेक्तृ— उपमन्थितृ— वासःपल्पूली—पिशुन—क्षत्तृ—अनुचर—परिष्कन्द—अश्वसाद—भागदुघ—अयस्ताप—निसर—योक्तृ—अभिसर्तृ—विमोक्तृ—त्रिष्ठि —मानस्कृत —आञ्जनीकारी—अजिनसंध—चर्मम्न—धैवर—दाश—बैन्द—शौष्कल— मार्गार—कैवर्त—आन्द— मैनाल— पर्णक— किरात—पौल्कस— हिरण्यकार—वाणिज— सभास्थाणु— गोव्यच्छ— गोघात— गोविकर्तृ— चरकाचार्य— शैलग— आडम्बराघात— वीणावाद— तूणवध्म—शंखध्म—वनप—दावप—ग्रामण्य— गणक— अभिक्रोशक—पाणिघ्न— तलव—चाण्डाल— वंशनर्त्यादयः पुरुषमेधे उत्सर्जनीयाः पशवः

**[1]ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणं पाप्मने**

(१) शुसं. २०।२५ .
(२) शुसं. ३२।१६ .
(३) शुसं. २६।२ .

(१) शुसं. ३०।५ ; तैब्रा. ३।४।१।१ ब्राह्मणं + (आलभते ।) या अयोगूं (यायोगूम् ।) .

**क्लीबमाक्रयाया अयोगूं कामाय पुँश्चलूमतिक्रुष्टाय मागधम् ॥**

अतः परं पुरुषमेधकाः पशवः आ अध्यायसमाप्तेः। ततः प्रतियूपमेकैकमेकादशिनं नियुज्य ब्राह्मणादीनष्टचत्वारिंशत्संख्यान् पुरुषान् 'प्रकामोद्यायोपसदं' इत्यन्तानग्निष्टे यूपे नियुनक्ति। इतरेषु यूपेष्वेकादशैकादशपुरुषान् 'वर्णायानुरुधं' इत्यादीन्नियुनक्ति। ब्रह्मणे ब्राह्मणम्। तत्र 'ब्रह्मणे जुष्टं नियुनज्मि' इति अग्निष्टे ब्राह्मणं प्रथमं नियुनक्ति। एवमग्रे सर्वेषां यूपे एव बन्धनम्। चतुर्थ्यन्तं देवतापदं द्वितीयान्तं पुरुषपदं बोद्धव्यम्। क्षत्राय राजन्यं क्षत्रियम्। मरुद्भ्यो वैश्यम्। तपसे शूद्रम्। तमसे तस्करं स्तेनम्। नारकाय वीरहणं नष्टाग्निं शूरं वा। पाप्मने क्लीबं नपुंसकम्। आक्रयायै अयोगूं अयसो गन्तारम्। कामाय पुंश्चलूं व्यभिचारिणीम्। अतिक्रुष्टाय मागधं मगधदेशजं क्षत्रियायां वैश्यपुंसो जातं वा। शुम.

**[1]नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलं नर्माय रेभं हसाय कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम् ॥**

नृत्ताय सूतं ब्राह्मण्यां क्षत्रियाज्जातः सूतः। गीताय शैलूषं नटम्। धर्माय सभाचरं सभायां चरतीति तम्। नरिष्ठायै भीमलं भयंकरम्। नर्माय रेभं शब्दकर्तारं वाचाटम्। हसाय कारिं करणविशिष्टम्। आनन्दाय स्त्रीषखं स्त्रियाः सखायम्। प्रमदे कुमारीपुत्रं कानीयम् (? कानीनम्)। मेधायै रथकारं माहिष्येण करण्यां (? करण्यां) जातम्। धैर्याय तक्षाणं सूत्रधारम्। शुम.

**[1]तपसे कौलालं मायायै कर्मारं रूपाय मणिकारं शुभे वपं शरव्याया इषुकारं हेत्यै धनुष्कारं कर्मणे ज्याकारं दिष्टाय रज्जुसर्जं मृत्यवे मृगयुमन्तकाय श्वनिनम् ॥**

तपसे कौलालं कुलालापत्यम्। मायायै कर्मारं लोहकारम्। रूपाय मणिकारं रत्नकर्तारम्। शुभे शुभाय वपं बीजवप्तारम्। शरव्यायै इषुकारं बाणकर्तारम्। हेत्यै धनुष्कारं चापकारिणम्। कर्मणे ज्याकारं प्रत्यञ्चनकर्तारम्। दिष्टाय रज्जुसर्जं रज्जोः स्रष्टारं निर्मातारम्। मृत्यवे मृगयुं मृगग्राहम्। अन्तकाय श्वनिनं शुनो नेतारम्। शुम.

**[2]नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदं गन्धर्वाप्सरोभ्यो व्रात्यं प्रयुग्भ्य उन्मत्तं सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यताया अकितवं पिशाचेभ्यो विदलकारीं यातुधानेभ्यः कण्टकीकारीम् ॥**

नदीभ्यः पौञ्जिष्ठं पुञ्जिष्ठः अन्त्यजः पुल्कसस्तदपत्यम्। ऋक्षीकाभ्यो नैषादं निषादपुत्रम्। पुरुषव्याघ्राय दुर्मदं उन्मत्तम्। गन्धर्वाप्सरोभ्यो व्रात्यं सावित्रीपतितम्। प्रयुग्भ्यः उन्मत्तम्। सर्पदेवजनेभ्यः अप्रतिपदं, प्रतिपद्यते जानातीति प्रतिपत्। अतथाविधं, विकलमित्यर्थः। अयेभ्यः कितवं द्यूतकारम्। ईर्यतायै अकितवं अद्यूतकृतम्। पिशाचेभ्यः विदलकारीं वंशविदारिणीं वंशपात्रकारिणीम्। यातुधानेभ्यः कण्टकीकारीं कण्टकीकर्म तत्कारिणीम्। शुम.

---

(१) शुसं. ३०।६; तैब्रा. ३।४।२।१ नृत्ताय ...... रेभं (गीताय सूतम्। नृत्ताय शैलूषम्। धर्माय सभाचरम्। नर्माय रेभम्। नरिष्ठायै भीमलम्।) प्रमदे (प्रमुदे)।

(१) शुसं. ३०।७; तैब्रा. ३।४।३।१ तपसे (श्रमाय) कर्मारं (कार्मारं) धनुष्कारं (धन्वकारं) सर्जं (सर्गं) श्वनिनम्। (श्वनितम् ॥)।

(२) शुसं. ३०।८; तैब्रा. ३।४।५।१ पौञ्जिष्ठ (पौञ्जिष्ट) गन्धर्वा ... उन्मत्तं (प्रयुद्भ्य उन्मत्तम्। गन्धर्वाप्सराभ्यो व्रात्यम्।) पदमयेभ्यः (पदम्। अवेभ्यः) कितवमी (कितवम्। इ) विदलकारीं (बिदलकारम्।) कीकारीम् (ककारम् ॥)।

**[1]संधये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराध्या एदिधिषुःपतिं निष्कृत्यै पेशस्कारीं९ संज्ञानाय स्मरकारीं प्रकामोद्यायोपसदं वर्णायानुरुधं बलायोपदाम् ॥**

संधये जारं उपपतिम्। गेहाय उपपतिं व्यभिचारिणम्। आर्त्यै परिवित्तं ऊढे कनिष्ठेऽनूढम्। निर्ऋत्यै परिविविदानं अनूढे ज्येष्ठे ऊढवन्तम्। अराध्यै देव्यै एदिधिषुःपतिं ज्येष्ठायां पुत्र्यामनूढायामूढा एदिधिषुः तत्पतिम्। निष्कृत्यै पेशस्कारीं रूपकर्त्रीम्। संज्ञानाय स्मरकारीं कामदीप्तिकरीम्। प्रकामोद्याय तत्संज्ञाय देवाय उपसीदतीत्युपसत् समीपस्थितस्तम्। एतानग्निष्टे नियुनक्ति। अथ द्वितीये यूपे। वर्णाय अनुरुधं, अनुरुध्यते अनुसरतीत्यनुरुत् तम्। बलाय उपदां, उपददातीत्युपदाः तं उपायनदातारम्। शुम.

**[2]उत्सादेभ्यः कुब्जं प्रमुदे वामनं द्वार्भ्यः स्रामं९ स्वप्नायान्धमधर्माय बधिरं पवित्राय भिषजं प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्यादायै प्रश्नविवाकम् ॥**

उत्सादेभ्यः कुब्जं वक्राङ्गम्। प्रमुदे वामनं ह्रस्वाङ्गम्। द्वार्भ्यः स्रामं सर्वदा जलक्लिन्ननेत्रम्। स्वप्नाय अन्धं नेत्रहीनम्। अधर्माय बधिरं कर्णेन्द्रियहीनम्। पवित्राय भिषजं वैद्यम्। प्रज्ञानाय नक्षत्रदर्शं, नक्षत्राणि दर्शयति तं गणकम्। आशिक्षायै प्रश्निनं प्रश्नवन्तम्, शकुनादिप्रष्टारमित्यर्थः। उपशिक्षायै अभिप्रश्निनं अभिप्रश्नवन्तम्। अथ तृतीये यूपे। मर्यादायै प्रश्नविवाकं कृतान् प्रश्नान् यो विविनक्ति ब्रूते स प्रश्नविवाकः तम्। शुम.

**[1]अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्यायाविपालं तेजसेऽजपालमिरायै कीनाशं कीलालाय सुराकारं भद्राय गृहपं९ श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम् ॥**

अर्मेभ्यो हस्तिपं गजपालकम्। जवाय अश्वपं तुरगपालकम्। पुष्ट्यै गोपालं धेनुपालकम्। वीर्याय अविपालम्। तेजसे अजपालम्। इरायै कीनाशं कर्षुकम्। 'कीनाशः कर्षुके यमे'। कीलालाय सुराकारं मद्यकृतम्। भद्राय गृहपं गेहपालकम्। श्रेयसे वित्तधं, वित्तं दधातीति वित्तधः तं धनकर्तारम्। आध्यक्ष्याय अनुक्षत्तारं सारथ्यनुसारिणम्। शुम.

**[2]भायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारं९ सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायोपमन्थितारं मेधाय वासःपल्पूलीं प्रकामाय रजयित्रीम् ॥**

अथ चतुर्थे यूपे। भायै दार्वाहारं काष्ठानामाहर्तारम्। प्रभायै अग्न्येधं, अग्निमेधयतीति तं अग्नेर्वर्धकम्। ब्रध्नस्य विष्टपाय सूर्यलोकाय अभिषेक्तारम्। वर्षिष्ठाय नाकाय उत्कृष्टस्वर्गाय परिवेषणकर्तारम्। देवलोकाय पेशितारम्। पिश अवयवे। पिंशतीति पेशिता, तं प्रतिमाद्यवयवकर्तारम्। मनुष्यलोकाय प्रकरितारम्। कॄ विक्षेपे, विक्षेप्तारम्। सर्वेभ्यो लोकेभ्यः उपसेक्तारं उपसेचनकर्तारम्। अवऋत्यै वधाय उपमन्थितारं उप-

---

(१) शुसं. ३०।९; तैब्रा. ३।४।४।१ (संधये जारम्। गेहायोपपतिम्। निर्ऋत्यै परिवित्तम्। आर्त्यै परिविविदानम्। अराध्यै दिधिषूपतिम्। पवित्राय भिषजम्। प्रज्ञानाय नक्षत्रदर्शम्। निष्कृत्यै पेशस्कारीम्। बलायोपदाम्। वर्णायानूरुधम् ॥).

(२) शुसं. ३०।१०; तैब्रा. ३।४।६।१ पवित्राय......दर्श (संज्ञानाय स्मरकारीम्। प्रकामोद्यायोपसद).

(१) शुसं. ३०।११; तैब्रा. ३।४।९।१ वीर्याया......पालमि (तेजसेऽजपालम्। वीर्यायाविपालम्। इ) वित्तधमाध्यक्ष्याया (वित्तपम्। अध्यक्षाया).

(२) शुसं. ३०।१२; तैब्रा. ३।४।८।१ (भायै दार्वाहारम्। प्रभाया आग्नेन्धम्। नाकस्य पृष्ठायाभिषेक्तारम्। ब्रध्नस्य विष्टपाय पात्रनिर्णेगम्। देवलोकाय पेशितारम्। मनुष्यलोकाय प्रकरितारम्। सर्वेभ्यो लोकेभ्य उपसेक्तारम्। अवर्त्यै वधायोपमन्थितारम्। सुवर्गाय लोकाय भागदुघम्। वर्षिष्ठाय नाकाय परिवेष्टारम् ॥).

मन्थनकर्तारम् । मेधाय वासःपल्पूलीं वाससां प्रक्षालनकर्तारम् । पल्पूल प्रक्षालनच्छेदनयोः । प्रकामाय रजयित्रीं वस्त्राणां रङ्गकारिणीं नारीम् । शुम.

[1]ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दं प्रियाय प्रियवादिनमरिष्ट्या अश्वसादꣳ स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥

ऋतये स्तेनहृदयं स्तेनस्येव हृदयं यस्य तम् । अथ पञ्चमे यूपे । वैरहत्याय पिशुनं परवृत्तसूचकम् । विविक्त्यै क्षत्तारं प्रतीहारम् । औपद्रष्ट्र्याय अनुक्षत्तारं प्रतिहारसेवकम् । बलाय अनुचरं सेवकम् । भूम्ने परिष्कन्दं, परितः स्कन्दति रेतः सिञ्चति तम् । प्रियाय प्रियवादिनं मधुरभाषिणम् । अरिष्ट्यै अश्वसादं अश्वारोहम् । स्वर्गाय लोकाय भागदुघं, भागं दुग्धे भागदुघः तं विभागप्रदम् । वर्षिष्ठाय नाकाय परिवेष्टारम् । शुम.

[2]मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारꣳ शोकायाभिसर्तारं क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनं वपुषे मानस्कृतꣳ शीलायाञ्जनीकारीं निर्ऋत्यै कोशकारीं यमायासूम् ॥

मन्यवे अयस्तापं अयस्तपं लोहतापकम् । क्रोधाय निसरं नितरां सर्तारम् । अथ षष्ठे यूपे । योगाय योक्तारं योगकर्तारम् । शोकाय अभिसर्तारं संमुखमागच्छन्तम् । क्षेमाय विमोक्तारं विमोचनकरम् । उत्कूलनिकूलेभ्यः त्रिष्ठिनं, त्रिषु तिष्ठतीति त्रिष्ठी तं, विद्यादिषु स्थितं शीलवन्तमित्यर्थः । वपुषे मानस्कृतं पूजाया अभिमानस्य वा कर्तारम् । सक् छान्दसः । शीलाय आञ्जनीकारीं अञ्जनविद्याकर्त्रीम् । निर्ऋत्यै कोशकारीं, खड्गाद्यावरणं कोशः तत्कारिणीं स्त्रियम् । यमाय असूं, न सूते सा असूः तां वन्ध्याम् । शुम.

[1]यमाय यमसूमथर्वभ्योऽवतोकाꣳ संवत्सराय पर्यायिणीं परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीं वत्सराय विजर्जराꣳ संवत्सराय पलिक्नीमृभुभ्योऽजिनसंधꣳ साध्येभ्यश्चर्मम्नम् ॥

यमाय यमसूं युग्मप्रसवित्रीम् । अथर्वभ्योऽवतोकां निरपत्याम् । संवत्सराय पर्यायिणीं, पर्यायः अनुक्रमः । तद्वतीं अनुक्रमप्रज्ञाम् । अथ सप्तमे यूपे । परिवत्सराय अविजातां अप्रसूताम् । इदावत्सराय अतीत्वरीं अत्यन्तं कुलटाम् । ' पुंश्चली कुलटेत्वरी ' । इद्वत्सराय अतिष्कद्वरीं, अतिस्कन्दति स्रवति इति अतिस्कद्वरी । स्कन्देर्वन्नन्तात् ङीब्रेफौ । वत्सराय विजर्जरां शिथिलशरीराम् । संवत्सराय पलिक्नीं श्वेतकेशाम् । ऋभुभ्यः अजिनसंधं चर्मसंधातारम् । साध्येभ्यः चर्मम्नं चर्माभ्यासकरम् । शुम.

[2]सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो वैन्दं नड्वलाभ्यः शौष्कलं पाराय मार्गारमवाराय कैवर्तं तीर्थेभ्य आन्दं विषमेभ्यो मैनालꣳ स्वनेभ्यः पर्णकं गुहाभ्यः किरातꣳ सानुभ्यो जम्भकं पर्वतेभ्यः किंपूरुषम् ॥

सरोभ्यो धैवरं कैवर्तापत्यम् । उपस्थावराभ्यः दाशम् । दाशृ दाने, दातारम् । दाशो धीवरो वा । वैशन्ताभ्यो

---

(१) शुसं. ३०।१३ ; तैब्रा. ३।४।७।१ ऋतये ( ऋत्यै ) विविक्त्यै ( विविच्यै ) द्रष्ट्र्यायानुक्षत्तारं ( द्रष्टाय संग्रहीतारम् । ) स्वर्गाय......वेष्टारम् ॥ ( मेधाय वासःपल्पूलीम् । प्रकामाय रजयित्रीम् ॥ ).

(२) शुसं. ३०।१४ ; तैब्रा. ३।४।१०।१ योगाय......याञ्जनीकारीं ( शोकायाभिसरम् । उत्कूलविकूलाभ्यां त्रिस्थिनम् । योगाय योक्तारम् । क्षेमाय विमोक्तारम् । वपुषे मानस्कृतम् । शीलायाञ्जनीकारम् । ).

(१) शुसं. ३०।१५ ; तैब्रा. ३।४।११।१ ( यम्यै यमसूम् । अथर्वभ्योऽवतोकाम् । संवत्सराय पर्यारिणीम् । परिवत्सरायाविजाताम् । इदावत्सरायापस्कद्वरीम् । इद्वत्सरायातीत्वरीम् । वत्सराय विजर्जराम् । संवत्सराय पलिक्नीम् । वनाय वनपम् । अन्यतोऽरण्याय दावपम् ॥ ).

(२) शुसं. ३०।१६ ; तैब्रा. ३।४।१२।१ धैवर......कैवर्तं ( धैवरम् । वैशन्ताभ्यो दाशम् । उपस्थावरीभ्यो बैन्दम् । नड्वलाभ्यः शौष्कलम् । पार्याय कैवर्तम् । अवार्याय मार्गारम् । ).

वैन्दं विन्दो निषादापत्यम् । नड्वलाभ्यः शौष्कलं मत्स्यजीविनं, शुष्कलाः मत्स्याः । तैर्जीवति तम् । अथाष्टमे यूपे । पाराय मार्गारं, मृगारेरपत्यं मार्गारः तम् । अवाराय कैवर्तम् । तीर्थेभ्यः आन्दम् । अदि बन्धने । अदति आन्दः, तं बन्धनकर्तारम् । विषमेभ्यो मैनालम् । अल् वारणे । मीनान् अलति वारयति जालैरसौ मीनालः, तदपत्यम् । स्वनेभ्यः पर्णकं भिल्लम् । गुहाभ्यः किरातम् । सानुभ्यः जम्भकम् । जमि नाशने । जम्भयतीति तत् (१ तं) हिंसकम् । पर्वतेभ्यः किंपूरुषं कुत्सितनरम् ।

शुम.

**[१]बीभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चादोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलं भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या अपगल्भꣳ सꣳशराय प्रच्छिदम् ॥**

बीभत्सायै पौल्कसं पुल्कसापत्यम् । वर्णाय हिरण्यकारं स्वर्णनिष्पादकम् । तुलायै वाणिजं वणिगपत्यम् । अथ नवमे यूपे । पश्चादोषाय ग्लाविनं 'ग्लै (१ ग्लै) हर्षक्षये' अहृष्टम् । विश्वेभ्यो भूतेभ्यः सिध्मलं सिध्माख्यरोगवन्तम् । भूत्यै जागरणं जागरूकम् । अभूत्यै स्वपनं शयालुम् । आर्त्यै जनवादिनं जनान् वदति तम् । व्यृद्ध्यै अपगल्भम् । संशराय प्रच्छिदं प्रच्छेदनकर्तारम् ।

शुम.

**[२]अक्षराजाय कितवं कृतायादिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम् ॥**

अक्षराजाय कितवं धूर्तम् । कृताय आदिनवदर्शम् । आदीनवः दोषः, तं पश्यति तथाभूतम् । त्रेतायै कल्पिनं कल्पकम् । द्वापराय अधिकल्पिनं अधिकल्पनाकर्तारम् । अथ दशमे यूपे । आस्कन्दाय सभास्थाणुं सभायां स्थिरम् । मृत्यवे गोव्यच्छं गाः प्रति गमनशीलम् । अन्तकाय गोघातं गवां हन्तारम् । क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति यः पुमान् गां विकृन्ततं छिन्दन्तं भिक्षमाणो याचमानः उपतिष्ठते तं याचितारं क्षुधे देव्यै आलभेत । दुष्कृताय चरकाचार्यं चरकाणां गुरुम् । पाप्मने सैलगम् । सीलगः दुष्टः, तदपत्यम् । शुम.

**[१]प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम् ॥**

प्रतिश्रुत्कायै अर्तनं दुःखिनम् । घोषाय भषं जल्पकम् । अन्ताय बहुवादिनम् । अनन्ताय मूकं वाग्विकलम् । शब्दाय आडम्बराघातं, आडम्बरमाहन्ति तं कोलाहलकर्तारम् । अथैकादशे यूपे । महसे वीणावादं वीणावादनकर्तारम् । क्रोशाय तूणवध्मं, वाद्यविशेषं धमति तथाभूतम् । अवरस्पराय शङ्खध्मं शङ्खवादकम् । वनाय वनपं वनपालकम् । अन्यतोऽरण्याय दावपं वनवह्निपम् ।

शुम.

**[२]नर्माय पुंश्चलूꣳ हसाय कारिं यादसे शाबल्यां ग्रामण्यं गणकमभिक्रोशकं तान्महसे वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्तायानन्दाय तलवम् ॥**

(१) शुसं. ३०।१७ ; तैब्रा. ३।४।१४।१ वर्णाय...... स्वपनमार्त्यै ( भूत्यै जागरणम् । अभूत्यै स्वपनम् । तुलायै वाणिजम् । वर्णाय हिरण्यकारम् । विश्वेभ्यो देवेभ्यः सिध्मलम् । पश्चाद्दोषाय ग्लावम् । ऋत्यै ) ।

(२) शुसं. ३०।१८ ; तैब्रा. ३।४।१६।१ ( अक्षराजाय कितवम् । कृताय सभाविनम् । त्रेताया आदिनवदर्शम् । द्वापराय बहिःसदम् । कलये सभास्थाणुम् । दुष्कृताय चरकाचार्यम् । अध्वने ब्रह्मचारिणम् । पिशाचेभ्यः सैलगम् । पिपासायै गोव्यच्छम् । निर्ऋत्यै गोघातम् । क्षुधे गोविकर्तम् । क्षुत्तृष्णाभ्यां तम् । यो गां विकृन्तन्तं मांसं भिक्षमाण उपतिष्ठते ॥ ).

(१) शुसं. ३०।१९.

(२) शुसं. ३०।२० ; तैब्रा. ३।४।१५।१ ( हसाय पुꣳश्चलूमालभते । वीणावादं गणकं गीताय । यादसे शाबुल्याम् । नर्माय भद्रवतीम् । तूणवध्मं ग्रामण्यं पाणिसंघातं नृत्ताय । मोदायानुक्रोशकम् । आनन्दाय तलवम् ॥ ) ।

नर्माय पुंश्चलूं दुष्टां नारीम् । हसाय कारिं करणशीलम् । यादसे शाबल्यां, शबलः कर्बुरवर्णः तदपत्यभूतां स्त्रियम् । ग्रामण्यं ग्रामनेतारम् । गणकं ज्योतिर्विदम् । अभिक्रोशकं निन्दकम् । तान् त्रीन् 'महसे जुष्टं नियुनज्मि' इति एकादशे यूपे आलभते । एवं प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टाः तान् समाप्तिपर्यन्तान् द्वितीयोच्छ्रिते यूपे नियुनक्ति । तांश्च 'वीणावादं पाणिघ्नम्' इत्यादीन् 'रात्र्यै कृष्णं पिङ्गाक्षम्' इत्यन्ताश्चतुर्दश । ततः 'अथैतानष्टौ विरूपान्' इत्यष्टौ च, मागधादींश्चतुरः, एवं षड्विंशतिं द्वितीये यूपे । पूर्वोक्ता एकादश, एवं सप्तत्रिंशत् । तानेवाह— वीणावादं पाणिघ्नं हस्ततालवादकं तूणवध्मं, तान् त्रीन् नृत्ताय आलभते । आनन्दाय तलवम् । वा गतिगन्धनयोः । गन्धनं हिंसा । तलं हस्तादितलं वाति वाद्यमुखं हन्ति स तलवः, तं वाद्यवादकम् । शुम.

**'अग्नये पीवानं पृथिव्यै पीठसर्पिणं वायवे चाण्डालमन्तरिक्षाय व॑ꣳशनर्तिनं दिवे खलति॑ꣳ सूर्याय हर्यक्षं नक्षत्रेभ्यः किर्मिरं चन्द्रमसे किलासमह्ने शुक्लं पिङ्गाक्ष॑ꣳ रात्र्यै कृष्णं पिङ्गाक्षम् ॥**

अग्नये पीवानं स्थूलम् । पृथिव्यै पीठसर्पिणम् । पीठेन आसनेन सर्पति गच्छति पीठसर्पी, तं पङ्गुम् । वायवे चाण्डालं चण्डालकर्माणम् । अन्तरिक्षाय वंशनर्तिनं वंशेन नर्तनशीलम् । दिवे खलतिं अलोमशिरस्कं, खल्वाटमित्यर्थः । सूर्याय हर्यक्षं हरितनेत्रम् । नक्षत्रेभ्यः किर्मिरं कर्बुरवर्णम् । चन्द्रमसे किलासं सिध्मरोगवन्तम् । अह्ने शुक्लवर्णं पिङ्गाक्षम् । रात्र्यै कृष्णवर्णं पिङ्गाक्षम् । शुम.

**'अथैतानष्टौ विरूपानालभतेऽतिदीर्घं चातिह्रस्वं चातिस्थूलं चातिकृशं चातिशुक्लं चातिकृष्णं चातिकुल्वं चातिलोमशं च । अशूद्रा अब्राह्मणास्ते प्राजापत्याः । मागधः पुंश्चली कितवः क्लीबोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः ॥**

तत एतान् वक्ष्यमाणानष्टौ विरूपान् परस्परं विरुद्धरूपान् पशूनालभते । तानाह— अतिदीर्घं अतिह्रस्वं अतिस्थूलं अतिकृशं अतिशुक्लं अतिकृष्णं अतिकुल्वं रोमरहितं अतिलोमशं सर्वाङ्गव्यापिरोमाणम् । ते अष्टौ अशूद्राः अब्राह्मणाः शूद्रब्राह्मणव्यतिरिक्ताः पशवो भवन्ति । तेऽष्टावपि प्राजापत्याः प्रजापतिदेवताः 'अष्टावुत्तमानालभते' इत्युपक्रम्य 'ते वै प्राजापत्या भवन्ति' ( शब्रा. १३।६।२।७–८ ) इति श्रुतेः । अत्र जातिनियमात्पूर्वेषु जातेरनियमः । वीणावादादयश्चतुर्दश अतिदीर्घादयोऽष्टौ एवं द्वाविंशतिः शेषाः । तथा मागधः पुंश्चली कितवः क्लीबः एते चत्वारोऽपि शूद्रब्राह्मणव्यतिरिक्ताः प्रजापतिदेवताः । पूर्वैः सहैते षड्विंशतिः । ते सर्वे द्वितीययूपे नियोज्याः । सर्वेषां नियोगानन्तरं तान्नियुक्तान् पुरुषान् 'सहस्रशीर्षा पुरुषः' ( शुसं. ३१।१–१६ ) इति षोडशर्चेनानुवाकेन दक्षिणत उपविष्टो होतृवदभिष्टौति । होतृवदिति प्रथमोत्तमयोस्त्रिर्वचनं ऋगन्तानां प्रणवेन संधानं च । यथा सहस्रशीर्षा पुरुषः— ०ङ्गुलो३म् पुरुष एवेद॑ꣳ— ०रोहतो३म् । एवमभिष्टौति । तत आलम्भनक्रमेण यथादेवतं प्रोक्षणादि । ब्राह्मणादीनां पर्यग्निकरणानन्तरमिदं ब्रह्मणे इदं क्षत्रायेत्येवं सर्वेषां यथा स्वस्वदेवतोद्देशेन त्यागः । ततः सर्वान् ब्राह्मणादीन् यूपेभ्यो विमुच्योत्सृजति । तत एकादशिनैः पशुभिः संज्ञपनादिप्रधानयागान्तं वनस्पतियागं कृत्वा प्राक् स्विष्टकृतः अध्वर्युराज्यं संस्कृत्य सकृद्गृहीतमाज्यं गृहीत्वा ओं पुरुषदेवताभ्यो ब्रह्मादिभ्यः

---

( १ ) शुसं. ३०।२१ ; तैब्रा. ३।४।१७।१ ( भूम्यै पीठसर्पिणमालभते । अग्नयेऽ॑ꣳसलम् । वायवे चाण्डालम् । अन्तरिक्षाय व॑ꣳशनर्तिनम् । दिवे खलतिम् । सूर्याय हर्यक्षम् । चन्द्रमसे मिर्मिरम् । नक्षत्रेभ्यः किलासम् । अह्ने शुक्लं पिङ्गलम् । रात्रियै कृष्णं पिङ्गाक्षम् ॥ ).

( १ ) शुसं. ३०।२२ ; तैब्रा. ३।४।१९।१ अथैता...... लोमशं च । ( अथैतानरूपेभ्य आलभते । अतिह्रस्वमतिदीर्घम् । अतिकृशमत्य॑ꣳसलम् । अतिशुक्लमतिकृष्णम् । अतिश्लक्ष्णमतिलोमशम् । अतिकिरिटमतिदन्तुरम् । अतिमिर्मिरमतिमेमिषम् । आशायै जामिम् । प्रतीक्षायै कुमारीम् ॥ ).

आहवनीये जुहोति, ओं ब्रह्मणे स्वाहा क्षत्राय स्वाहा मरुद्भ्यः तपसे तमसे इत्याद्यध्यायान्तं सर्वदेवताभ्यः चतुरशीत्युत्तरशतसंख्याकाभ्यः तावतीर्घृताहुतीर्हुत्वा स्विष्टकृदादि उदवसानीयान्तं कर्म कृत्वाऽन्ते यजमानः 'अयं ते योनिः' इति मन्त्रेणाऽऽत्मन्यग्नीन् समारोप्य 'अद्भ्यः संभृतः' ( ३१।१७) इति षडृचेनानुवाकेन सूर्यमुपस्थाय पश्चादनवलोकयन्नरण्यं गत्वा संन्यसेत् । 'गार्हपत्येऽधरारणिमनुप्रहृत्याऽऽहवनीय उत्तरारणिमात्मन्यग्नी समारोप्यारण्यं व्रजेत्' इति शाङ्खायनोक्तेः । यदि पुरुषमेधानन्तरं ग्रामवासेच्छा तर्ह्युदवसानीयान्ते सायमाहुती हुत्वाऽरण्योरग्नी समारोप्योत्तरनारायणेनार्कमुपस्थाय देवयजनमादीप्य गृहं व्रजेत् । गृहे आगत्य निर्मथ्याग्निं स्थापयेत् यथेच्छं यज्ञानपि कुर्यात् । अयमपि पक्षोऽस्ति । तत् पुरुषमेधानन्तरं संन्यास एव । शुम.

सारथिः

'सुषारथिरश्वानिव यन्मनुष्या-
नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठं
तन्मे मनः शिवसंकल्पमस्तु ॥

यत् मनो मनुष्यान् नरान् नेनीयते अत्यर्थमितस्ततो नयति । नयतेः क्रियासमभिहारे यङ् । मनःप्रेरिता एव प्राणिनः प्रवर्तन्ते । मनुष्यग्रहणं प्राणिमात्रोपलक्षकम् । तत्र दृष्टान्तः– सुसारथिः अश्वानिव शोभनः सारथिः यन्ता यथा कशया अश्वान् नेनीयते । द्वितीयो दृष्टान्तः । अभीशुभिर्वाजिन इव यथा सुसारथिः अभीशुभिः प्रग्रहैः वाजिनः अश्वान्, नेनीयते इत्यनुषङ्गः । रश्मिभिर्नियच्छतीत्यर्थः । उपमाद्वयम् । प्रथमायां नयनं द्वितीयायां नियमनम् । तथा मनः प्रवर्तयति नियच्छति च नरानित्यर्थः । यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिः यस्य तत् । हृद्येव मन उपलभ्यते । यच्च मनः अजिरं जरारहितं, बाल्ययौवनस्थाविरेषु मनसस्तदवस्थत्वात् । यच्च जविष्ठं अतिजववत् वेगवत् जविष्ठम्, 'न वै वातात्किंचनाशीयोऽस्ति न मनसः किंचनाशीयोऽस्ति' ( शब्रा. ५।१।४।८ ) इति श्रुतेः । शुम.

(१) शुसं. ३४।६.

त्रैवर्ण्यधारणप्रार्थना

**'इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व । धर्मासि सुधर्माऽमेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं धारय ॥**

'इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते ।' ( काश्रौ. २६।६।९ ) । पिन्वमानमतितप्तं घर्ममभिमन्त्रयते इत्यर्थः । ऋचां पङ्क्तिः घर्मदेवत्या । हे पिन्वमान घर्म, इषे वृष्ट्यै पिन्वस्व पुष्टो भव वृष्ट्यर्थम् । ऊर्जे अन्नाय पिन्वस्व अन्नं वर्धय । ब्रह्मणे ब्राह्मणेभ्यः पिन्वस्व । क्षत्राय क्षत्रियेभ्यः पिन्वस्व । द्यावापृथिवीभ्यां पिन्वस्व । ब्राह्मणक्षत्रियद्यावापृथिवीस्तर्पयेत्यर्थः । 'धर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम्' ( काश्रौ. २६।६।१० ) । ऐशानीं दिशं प्रत्युत्क्रामतीत्यर्थः । यजुर्गायत्री घर्मदेवत्या । हे धर्म, हे सुधर्म, सुष्ठु धारयतीति सुधर्मः । हे साधुधरणशील, त्वं धर्मः असि सर्वजगतो धारणमसि, आहुतिपरिणामद्वारेण सर्वं धरसीत्यर्थः । 'अमेन्यस्मे इति खरे करोति' ( काश्रौ. २६।६।११ ) । महावीरं खरे आसादयतीत्यर्थः । ऋक् बृहती घर्मदेवत्या । हे धर्म, अमेनि । मिञ् हिंसायाम् । मिनोति हिनस्तीति मेनिः । न मेनिः अमेनिः । 'सुपां सुलुक्' ( पा. ७।१।३९ ) सुलोपः । अमेनिः अहिंसन् अक्रुध्यन् सन् अस्मे अस्मासु नृम्णानि धनानि धारय स्थापय । नृन् नमयतीति नृम्णम् 'अक्रुध्यन्नो धनानि धारय' ( शब्रा. १४।२।२।३० ) इति श्रुतिः । ब्रह्म क्षत्रं विशं च धारय । विप्रादीनस्मद्वशान् कुर्वित्यर्थः । शुम.

(१) मैसं. ४।९।९ (१३५–१४५); शुसं. ३८।१४; शब्रा. १४।२।२।२७–३०; तैआ. ४।१०।१–२, ५।८।६. मैसं., शब्रा., तैआ. इत्येतेषां ग्रन्थानां पाठभेदाः तद्बाहुल्यान्न कृताः ।

वर्णानां यज्ञाधिकारविचारः– कवषो दास्याः पुत्रोऽपि देवतानुग्रहात् यज्ञेऽधिकृतः

**'ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन्– दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति। तं बहिर्धन्वोदवहन्– अत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति। स बहिर्धन्वोदूह्ळः पिपासया वित्त एतदपोनप्त्रीयमपश्यत्– 'प्र देवत्रा ब्रह्मणे गातुरेतु' इति। तेनापां प्रियं धामोपागच्छत्। तमापोऽनूदायन्। तं सरस्वती समन्तं पर्यधावत्॥**

अथापोनप्त्रीयादयो वक्तव्याः। तदर्थमादावाख्यायिकामाह– ऋषय इति। भृग्वङ्गिरःप्रभृतयः ऋषयः कदाचित् सरस्वत्यां एतन्नामकनदीतीरे सत्रमासत। द्वादशाहमारभ्योपरितनं त्रयोदशरात्रादिकं बहुयजमानकं कर्म सत्रमित्युच्यते। तदुद्दिश्य तत्र स्थितवन्तः सत्रमन्वतिष्ठन्नित्यर्थः। तदानीं तेषां मध्ये कश्चिदिलूषाख्यस्य पुरुषस्य पुत्रः कवषनामकोऽवस्थितोऽभूत्। ते च ऋषयस्तं कवषं सोमयागान्निःसारितवन्तः। तेषामभिप्राय उच्यते। दास्याः पुत्र इत्युक्तिरधिक्षेपार्था। कितवः द्यूतकारः। तस्मादब्राह्मणोऽयम्। ईदृशः नः अस्माकं शिष्टानां मध्ये स्थित्वा कथं दीक्षां कृतवानिति तेषामभिप्रायः। तं कवषं सरस्वतीतीराद्बहिः दूरे धन्व जलरहितां भूमिं प्रत्युदवहन् उद्धृतवन्तः बलादपसारितवन्तः। धन्वदेशे बलात्प्रेरयितॄणामयमभिप्रायः– अत्र जलवर्जितदेशे एनं कवषं पिपासा मारयतु, सरस्वत्या नद्याः पवित्रमुदकमयं पापिष्ठो मा पिबत्विति। स च कवषोऽत्र सरस्वत्या बहिः दूरं धन्व निर्जलं देशं प्रत्युदूह्ळः उत्कर्षेणापसारितः पिपासया वित्तः लब्धः आक्रान्तः तत्परिहारार्थमेतत् 'प्र देवत्रा' इत्यादिकमपोनप्तृदेवताकं सूक्तं वेदमध्ये विचार्यापश्यत्। तेन सूक्तेन जपितेनापां जलाभिमानिनीनां देवतानां प्रियं स्थानमुपागच्छत्। तं चाऽऽगतमापो देवता अनूदायन् अनुग्रहेणोत्कर्षो यथा भवति तथा प्राप्तवत्यः। ततः सरस्वती नदी तं कवषं पर्यधावत् परितः प्रवाहवेगेन प्रवृत्ताऽऽसीत्। ऐब्रासा.

(१) ऐब्रा. ८।१.

**तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते यदेनं सरस्वती समन्तं परिससार॥**

उक्तमर्थं लोकप्रसिद्ध्या द्रढयति– तस्मादिति। यत् यस्मिन् स्थाने सरस्वती नदी एनं कवषं समन्तं सर्वासु दिक्षु परिससार तत्स्थानमेतर्ह्यप्येतस्मिन्काले तीर्थविशेषाभिज्ञाः पुराणकर्तारः परिसारकमित्येतन्नाम्ना व्यवहरन्ति। ऐब्रासा.

**ते वा ऋषयोऽब्रुवन्– विदुर्वा इमं देवा उपेमं ह्वयामहा इति। तथेति तमुपाह्वयन्त। तमुपहूयैतदपोनप्त्रीयमकुर्वत– 'प्र देवत्रा ब्रह्मणे गातुरेतु' इति। तेनापां प्रियं धामोपागच्छन्नुप देवानाम्॥**

अथ सत्रानुष्ठायिनां तेषामृषीणां कृत्यं दर्शयति– त इति। ते भृग्वादयः परस्परमिदमब्रुवन्– इमं कवषं देवाः सर्वेऽपि विदुर्वै जानन्त्येव। अतोऽस्य कितवत्वादिदोषो नास्ति। तस्मादिममस्मत्समीपं प्रत्याह्वयामः। इति विचार्य तमुपाहूय तेन दृष्टमेतदपोनप्तृदेवताकं 'प्र देवत्रा' इत्यादि सूक्तमकुर्वत प्रयुक्तवन्तः। तेन सूक्तेन जलदेवतानामन्यदेवतानां च प्रियं स्थानमुपागच्छन्। ऐब्रासा.

ब्रह्मक्षत्रयोः सम्यक् सहचारप्रशंसा

**'ब्रह्म संधत्तं तन्मे जिन्वतम्। क्षत्रꣳ संधत्तं तन्मे जिन्वतम्॥**

हे ग्रहौ, युवां ब्रह्म यजमानसंबन्धिनीं ब्राह्मणजातिं संधत्तं स्वोचितधर्मराहित्यं यथा न भवति तथा संपादयतम्। किंच मे तद्ब्रह्म मदीयां ब्राह्मणजातिं जिन्वतं प्रीणयतम्। एवमग्रेऽपि सर्वत्र योज्यम्। क्षत्रं देशाधिपतिस्वामिगता क्षत्रियजातिः। तैब्रासा.

त्रैवर्णिकादीनामग्न्याधानकालादिविचारः

**'वसन्ता ब्राह्मणोऽग्निमादधीत। वसन्तो वै ब्राह्मणस्यर्तुः। स्व एवैनमृतावाधाय। ब्रह्मवर्चसी**

(१) तैब्रा. १।१।१।१; आपश्रौ. १२।२२।६.

(२) तैब्रा. १।१।२।६–८.

**भवति । मुखं वा एतदृतूनाम् । यद्वसन्तः । यो वसन्ताग्निमाधत्ते । मुख्य एव भवति । अथो योनिमन्तमेवैनं प्रजातमाधत्ते । ग्रीष्मे राजन्य आदधीत । ग्रीष्मो वै राजन्यस्यर्तुः । स्व एवैनमृतावाधाय । इन्द्रियावी भवति । शरदि वैश्य आदधीत । शरद्वै वैश्यस्यर्तुः । स्व एवैनमृतावाधाय । पशुमान् भवति ॥**

अधिकारिविशेषादृतून् विधत्ते— वसन्तेति । वसन्तः वसन्तर्तुः तस्य च ब्राह्मणस्य च प्राथम्यसाम्यात् स्वस्वामिभावात् स्वकीये ऋतावादधानस्य ब्राह्मणस्य स्वोचितं ब्रह्मवर्चसमेव फलम् । किंच 'मधुश्च माधवश्च वासन्तिकावृतू' ( तैसं. ४।४।११।१ ) इत्याम्नानान्मुखत्वं प्राथम्यं वसन्तस्याप्यवगन्तव्यम् । अपि च यथा स्त्रीणामृतुविशेषे प्रवृत्तः पुरुषः प्रजननसमर्थो भवति तथर्तुविशेषे योनिमन्तं प्रजननसामर्थ्यवन्तं प्रादुर्भूतं प्रजातं चाग्निमाधत्ते । एवं ग्रीष्मशरद्वाक्ययोरपि व्याख्येयम् । तैब्रासा.

**'द्वादशसु विक्रामेष्वग्निमादधीत । द्वादश मासाः संवत्सरः । संवत्सरादेवैनमवरुध्याऽऽधत्ते ॥**

तृतीये देवयजनदेशे प्रक्षेप्तव्याः संभारा उक्ताः । अथ चतुर्थे तैः संभारैर्युक्तेष्वायतनेषु वह्न्याधानमभिधीयते । यदुक्तं सूत्रकारेण— 'प्राचीनप्रवणं देवयजनमुद्धत्य तस्मिन्नुदीचीनवंशं शरणं करोति । तस्याग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति । तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनम् । एकादशसु राजन्यस्य । द्वादशसु वैश्यस्य । चतुर्विंशत्यामपरिमिते वा यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते । ' ( आपश्रौ ५।४।१–४ ) इति । तत्रैकं पक्षं विधत्ते— द्वादशस्विति । विक्रामः प्रक्रमः । स च द्विपदः । तथा चोक्तम् – 'प्रक्रमो द्विपदस्त्रिपदो वा ' इति । गार्हपत्याद्द्वादशसु विक्रामेषु समाप्तेष्वाहवनीयायतनं कृत्वा तत्राग्निमादध्यात् । संख्यासाम्येन मासद्वारा संवत्सरबलादेनमग्निमवरुध्याऽऽधानं कृतवान् । तैब्रासा.

**यद्द्वादशसु विक्रामेष्वादधीत । परिमितमवरुन्धीत । चक्षुर्निमित आदधीत । इयद्द्वादशविक्रामा३ इति । परिमितं चैवापरिमितं चावरुन्द्धे ॥**

पक्षान्तरं विधत्ते— यदिति । द्वादशसु विक्रामेष्वाधाने सति देशस्य पादेन परिमितत्वात्फलमपि परिमितमेव भवति । तस्माद्देशो न पादेन परिमातव्यः । किंतु चक्षुषा दृष्ट्वा प्रायेणैतावान् देशो द्वादशविक्रामः संभवतीति निश्चित्य तत्राऽऽदधीत । एवं सति पादेन परिमितत्वाभावात्परिमितदोषोऽपि न भविष्यति । चक्षुषा परिमितत्वात्तदीयगुणश्च भविष्यति । चाक्षुषनिश्चयद्योतनार्था प्लुतिः । तैब्रासा.

**अनृतं व वाचा वदति । अनृतं मनसा ध्यायति । चक्षुर्वै सत्यम् । अद्रा३गित्याह । अदर्शमिति । तत्सत्यम् । यश्चक्षुर्निमितेऽग्निमाधत्ते । सत्य एवैनमाधत्ते ॥**

इममेव पक्षं पुनः प्रशंसति— अनृतमिति । वाङ्मनसयोरनृतविषयत्वमपि क्वचित् दृष्टम् । चक्षुस्तु पुरोवर्तिवस्तुनो याथात्म्यमेव पश्यतीति तत्सत्यस्वरूपम् । अत एव लोकेऽपि दूरदेशवृत्तान्तं पुरुषमुखादाकर्ण्य 'किं त्वमेव दृष्टवान्, उत श्रुतवानसि ' इत्येवं सत्यत्वनिश्चयाय पृच्छन्ति । विचारार्था प्लुतिः । सोऽपि 'अहमेव दृष्टवानस्मि ' इति यदा ब्रूते तदा तत्सत्यमिति निश्चिन्वन्ति । तस्माच्चक्षुर्निमितस्य सत्यत्वात् सत्यदेशेऽग्निराहितो भवति । यत्तु लोके शुक्तिरजतादिदर्शनं तच्च काचकामलादिदोषकृतमिति न कदाचिदपि चक्षुः सत्यं व्यभिचरति ।

तैब्रासा.

**तस्मादाहिताग्निर्नानृतं वदेत् । नास्य ब्राह्मणोऽनाश्वान् गृहे वसेत् । सत्ये ह्यस्याग्निराहितः ॥**

इदानीं प्रसङ्गादाहिताग्नेः कंचिद्धर्मं दर्शयति— तस्मादिति । यस्माच्चक्षुर्निमितत्वेन सत्यभूते देशेऽयमग्निराहितः तस्मादाहिताग्निः सत्यमेव वदेत्, न त्वनृतम्, सत्यानृतयोरेकत्र विरोधात् । गृहस्थस्य गृहे ब्राह्मणस्यानश्नतो यो

( १ ) तैब्रा. १।१।४।१–९.

निवासः सोऽप्यनृतसमानः । तस्मात्तं ब्राह्मणं भोजयेदेव ।
तैब्रासा.

**आग्नेयी वै रात्रिः । आग्नेयाः पशवः । ऐन्द्रमहः । नक्तं गार्हपत्यमादधाति । पशूनेवावरुन्द्धे । दिवाऽऽहवनीयम् । इन्द्रियमेवावरुन्द्धे ॥**

देशविशेषं विधाय कालविशेषं विधत्ते– आग्नेयीति । रात्रावग्नेः प्रकाशाधिक्याद्रात्रिराग्नेयी । एतच्चाग्निहोत्रब्राह्मणे एवोपपादितम्– 'अग्निं वावाऽऽदित्यः सायं प्रविशति । तस्मादग्निर्दूरान्नक्तं ददृशे ।' (तैब्रा. २।१।२।९) इति । अग्नेः पशुप्रदत्वात् पशूनामाग्नेयत्वम् । एतच्चाग्न्युपस्थानब्राह्मणे देवैरभिहितम्– 'इममेवाग्निꣳ स्तवाम स नः स्तुतः पशून्पुनर्दास्यतीति । तेऽग्निमस्तुवन्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत्' (तैसं. १।५।९।३) इति । एवमिन्द्रस्याहःसंबन्धो ब्राह्मणान्तरादूद्रष्टव्यः । तस्माद्रात्रौ गार्हपत्याधानेन पशून् प्राप्नोति । अहन्याहवनीयाधानेनेन्द्रियं प्राप्नोति । तैब्रासा.

**अर्धोदिते सूर्य आहवनीयमादधाति । एतस्मिन्वै लोके प्रजापतिः प्रजा असृजत । प्रजा एव तद्यजमानः सृजते । अथो भूतं चैव भविष्यच्चावरुन्द्धे ॥**

अहन्यपि विशेषं विधत्ते– अर्धोदित इति । लोक्यते अवगम्यते इति व्युत्पत्त्या लोकशब्दः कालपरः । अर्धोदयकाले प्रजानां सृष्टत्वात्तत्राऽऽधानं प्रजार्थं भवति । अपि च उदयस्यासंपूर्णत्वात् भूतं अतीतं रात्रिरूपं च भविष्यत् आगाम्यहश्चेत्युभयं प्राप्तं भवति । तैब्रासा.

**इडा वै मानवी यज्ञानूकाशिन्यासीत् । साऽशृणोत् । असुरा अग्निमादधत इति । तदगच्छत् । त आहवनीयमग्र आदधत । अथ गार्हपत्यम् । अथान्वाहार्यपचनम् । साऽब्रवीत् । प्रतीच्येषाꣳ श्रीरगात् । भद्रा भूत्वा पराभविष्यन्तीति । यस्यैवमग्निराधीयते । प्रतीच्यस्य श्रीरेति । भद्रो भूत्वा पराभवति ॥**

अथ आधातव्यानामग्नीनां क्रमं निर्णेतुमाहवनीयस्य प्राथम्यं निराचष्टे– इडेति । इडा नाम गोरूपा काचिद्देवता । सा च मनुसंबन्धिनी । तत्संबन्धश्च 'मानवी घृतपदी मैत्रावरुणी' (तैब्रा. ३।५।८।२) इतीडोपाह्वानस्य ब्राह्मणे स्पष्टमाम्नातः– 'मानवीत्याह मनुर्ह्येतामग्रेऽपश्यत्' (तैसं. २।६।७।३–४) इति । सा चेडा यज्ञानूकाशिनी यज्ञतत्त्वप्रकाशनसमर्थाऽऽसीत् । सा कदाचिदसुराणामग्न्याधानवार्तां श्रुत्वा द्रष्टुं गता । दृष्ट्वा मनोः पार्श्वे समागत्यैवमुवाच– 'असुराः प्रथमं पूर्वदिगवस्थितमाहवनीयमाधाय ततः पश्चिमदिगवस्थितं गार्हपत्यमाधाय दक्षिणदिगवस्थितमन्वाहार्यपचनं चाऽऽहितवन्तः । तथा चाऽऽधानसुकृतेन कंचित्कालं धनिका भूत्वा पश्चाद्विनाशं प्राप्स्यन्ति । एतेषां पश्चिमाभिमुखत्वेन प्रवृत्तत्वादेषां श्रीरपि प्रतीची प्रतिकूलगमना सती तेभ्योऽसुरेभ्यो निवर्तिष्यते' इति । अतोऽसुरवदिदानींतनस्याऽऽहिताग्नेरप्यन्ते पराभवो भवति । तैब्रासा.

**साऽशृणोत् । देवा अग्निमादधत इति । तदगच्छत् । तेऽन्वाहार्यपचनमग्र आदधत । अथ गार्हपत्यम् । अथाऽऽहवनीयम् । साऽब्रवीत् । प्राच्येषाꣳ श्रीरगात् । भद्रा भूत्वा सुवर्गं लोकमेष्यन्ति । प्रजां तु न वेत्स्यन्त इति । यस्यैवमग्निराधीयते । प्राच्यस्य श्रीरेति । भद्रो भूत्वा सुवर्गं लोकमेति । प्रजां तु न विन्दते ॥**

अथान्वाहार्यपचनस्य प्राथम्यं निराचष्टे– सेति । पूर्ववद्व्याख्येयम् । अत्र गार्हपत्यादूर्ध्वं प्राङ्मुखप्रवृत्तेर्देवानां श्रीरपि प्राची प्रवृत्ता । प्रकृष्टं पूर्वदिगवस्थितं स्वर्गं अञ्चति गच्छतीति प्राची । तस्माद्देवानां स्वर्गप्राप्तिर्भविष्यति, किंतु प्रजाहेतोर्गार्हपत्यस्य पूर्वमाधानाभावात् प्रजां न लप्स्यन्ते । एवं तादृगाधानकर्तरि यजमानेऽपि द्रष्टव्यम् ।
तैब्रासा.

**साऽब्रवीदिडा मनुम् । तथा वा अहं तवाग्निमाधास्यामि । यथा प्र प्रजया पशुभिर्मिथुनैर्जनिष्यसे । प्रत्यस्मिँल्लोके स्थास्यसि । अभि सुवर्गं**

लोकं जेष्यसीति । गार्हपत्यमग्र आदधात् । गार्हपत्यं वा अनु प्रजाः पशवः प्रजायन्ते । गार्हपत्येनैवास्मै प्रजां पशून्प्राजनयत् । अथान्वाहार्यपचनम् । तिर्यङ्ङिव वा अयं लोकः । अस्मिन्नेव तेन लोके प्रत्यतिष्ठत् । अथाऽऽहवनीयम् । तेनैव सुवर्गं लोकमभ्यजयत् । यस्यैवमग्निराधीयते । प्र प्रजया पशुभिर्मिथुनैर्जायते । प्रत्यस्मिँल्लोके तिष्ठति । अभि सुवर्गं लोकं जयति ॥

अथ गार्हपत्यस्य प्राथम्यं विधत्ते— सेति । गार्हपत्यस्य प्रजापशुस्वामित्वात् तस्य प्रथमाधानेन तत्प्राप्तिः । गार्हपत्यस्य दक्षिणभागे स्थितो योऽयमन्वाहार्यपचनस्तस्य तिर्यक्त्वेन वर्तमानस्योर्ध्वगमनाभावेन मनुष्यलोकसदृशत्वात् तदाधानेन मनुष्यलोके प्रतिष्ठा । तत ऊर्ध्वमाहवनीयाधानाय प्राङ्मुखप्रवृत्तेः स्वर्गस्य च प्राग्वर्तित्वात्तत्प्राप्तिः । तैब्रासा.

यस्य वा अयथादेवतमग्निराधीयते । आ देवताभ्यो वृश्च्यते । पापीयान् भवति । यस्य यथादेवतम् । न देवताभ्य आ वृश्च्यते । वसीयान् भवति । भृगूणां त्वाऽङ्गिरसां व्रतपते व्रतेनाऽऽदधामीति भृग्वङ्गिरसामादध्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीत्यन्यासां ब्राह्मणीनां प्रजानाम् । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनाऽऽदधामीति राज्ञः । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनाऽऽदधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनाऽऽदधामीति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति रथकारस्य । यथादेवतमग्निराधीयते । न देवताभ्य आवृश्च्यते । वसीयान् भवति ॥

अथ अधिकारिभेदेन आधानमन्त्रविशेषान् विधत्ते— यस्येति । यस्य पुरुषस्य याऽभिमानिनी देवता तामनतिक्रम्य आधानं तस्य पुरुषस्य यथादेवतमित्युच्यते । तदतिक्रमे सति देवताद्रोहो दारिद्र्यं च भवति । अनतिक्रमे तु देवताप्रसादो धनसंपत्तिश्च भवति । ये मनुष्याः भृगुगोत्रोत्पन्ना ये चाङ्गिरोगोत्रोत्पन्नास्तेषामुभयेषां तत्प्रतिपादकेन भृगूणामिति मन्त्रेण आधानम् । हे व्रतपते कर्मस्वामिन्नग्ने, भृगूणामङ्गिरसां च संबन्धिना व्रतेन कर्मविशेषेण निमित्तभूतेन त्वामादधामि इहाऽऽयतने स्थापयामीति मन्त्रार्थः । एवमुत्तरत्रापि योज्यम् । गोत्रान्तरगतानां ब्राह्मणानामादित्या एव देवताः । अभिषिक्तस्य राज्ञो वरुणो देवता । इतरस्य क्षत्रियस्येन्द्रो देवता । इन्द्रियेण व्रतेन इन्द्रियाभिवृद्धिहेतुना कर्मणेत्यर्थः । वैश्यस्य ग्रामनिर्वाहको मनुर्देवता । रथकारः अनुलोमजः संकीर्णजातिः । तस्य ऋभवो देवता । एतैर्मन्त्रैः यथादेवतमाधानं संपद्यते । तैब्रासा.

[1]गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात् । गायत्रछन्दा वै ब्राह्मणः । स्वस्य छन्दसः प्रत्ययनस्त्वाय । त्रिष्टुब्भी राजन्यस्य । त्रिष्टुप्छन्दा वै राजन्यः । स्वस्य छन्दसः प्रत्ययनस्त्वाय । जगतीभिर्वैश्यस्य । जगतीछन्दा वै वैश्यः । स्वस्य छन्दसः प्रत्ययनस्त्वाय ॥

अधिकारिभेदादृग्व्यवस्थां विधत्ते— गायत्रीभिरिति । 'समिधाऽग्निं दुवस्यत' इत्याद्या गायत्र्यः । 'समिध्यमानः प्रथमोऽनु धर्मः' इत्याद्यास्त्रिष्टुभः । 'त्वामग्ने समिधानम्' इत्याद्या जगत्यः । एताश्च उपरितनप्रपाठके आम्नास्यन्ते । गायत्रीब्राह्मणयोरेकमुखत्वं संबन्धः । अतः स्वकीयस्यैव गायत्रीछन्दसः प्रत्ययनस्त्वाय पुनःप्राप्तये गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात् । एवमुत्तरयोर्वाक्ययोर्योज्यम् । तैब्रासा.

### दैव्यो ब्राह्मणः शूद्रश्चासुर्यः

[2]ब्राह्मणश्च शूद्रश्च चर्मकर्ते व्यायच्छेते । दैव्यो वै वर्णो ब्राह्मणः । असुर्यः शूद्रः । इमेऽरात्सुरिमे सुभूतमक्रन्नित्यन्यतरो ब्रूयात् । इम उद्वासीकारिण इमे दुर्भूतमक्रन्नित्यन्यतरः । यदेवैषां सुकृतं या राद्धिः । तदन्यतरोऽभिश्रीणाति । यदेवैषां दुष्कृतं

(१) तैब्रा. १।१।९।६–७.
(२) तैब्रा. १।२।६।७–८.

**याऽराद्धिः । तदन्यतरोऽपहन्ति । ब्राह्मणः संजयति । अमुमेवाऽऽदित्यं भ्रातृव्यस्य संविन्दन्ते ॥**

देवाश्चासुराश्चायमादित्योऽस्माकमेव भूयादिति परस्परं कलहं कृतवन्तः । तत्र देवानां जयोऽभूत् । अतोऽत्रापि वेदिमध्ये ब्राह्मणो बहिः शूद्रश्चावस्थाय किंचिदार्द्रं चर्म परिमण्डलाकारं गृहीत्वा तद्विषये कलहं कुर्याताम् । तत्र देवस्वरूपो ब्राह्मणः, असुरस्वरूपः शूद्रः । तस्मिन्कलहावसरे 'इमेऽरात्सुः' इति मन्त्रं ब्राह्मणो ब्रूयात् । तस्यायमर्थः– इमे यजमानाः सत्रे समृद्धिं गताः शोभनं कर्म कृतवन्त इति । शूद्रस्तु मन्त्रान्तरं ब्रूयात् । तस्यायमर्थः– इमे यजमानाः कर्मव्याजेन धनहानिं कृत्वा देशमेतं उद्वासं निवासशून्यं कुर्वन्ति । तस्मादिमे दुर्व्यापारं कृतवन्त इति । एवं सति एषां यजमानानां यत्सुकृतं परलोकहितं या चेह लोके समृद्धिस्तदुभयं अन्यतरो ब्राह्मणः संपादयति । यदन्यत्किंचित्प्रमादकृतं एषां दुष्कृतं, या चैषामसमृद्धिः दारिद्र्यरूपा तदुभयं अन्यतरः शूद्रो विनाशयति । निन्दाजनितेन हि क्लेशेन पापफलं सर्वमनुभूतम् । तत्र कलहे ब्राह्मणः सम्यग्जयेत् । तेन भ्रातृव्यस्य संबन्धिनममुमादित्यं एते यजमानाः सम्यग्लभन्ते । तैब्रासा.

वर्णगुणोत्कर्षप्रार्थना

**[1]आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह । ब्राह्मण एव ब्रह्मवर्चसं दधाति । तस्मात् पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत ॥**

ब्रह्मन् ब्राह्मणजातियुक्ते पुरुषे ब्रह्मवर्चसी वेदशास्त्राभिज्ञः पुत्रो ब्राह्मण आजायताम् । एतन्मन्त्रोपस्थानेन सर्वस्मिन्नपि ब्राह्मणे वेदशास्त्राभिज्ञत्वं संपादयति । तस्मात् मन्त्रसामर्थ्यादेव पुरा सृष्ट्यादौ ब्राह्मणो वेदशास्त्राभिज्ञस्तदर्थानुष्ठायी वाऽजायत । तैब्रासा.

**आऽस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतामित्याह । राजन्य एव शौर्यं महिमानं दधाति । तस्मात्पुरा राजन्य इषव्यः शूरो महारथोऽजायत ॥**

इषव्यः बाणेषु कुशलः धानुष्कः । स्पष्टमन्यत् । तैब्रासा.

**दोग्ध्री धेनुरित्याह । धेन्वामेव पयो दधाति । तस्मात्पुरा दोग्ध्री धेनुरजायत । वोढाऽनड्वानित्याह । अनडुह्येव वीर्यं दधाति । तस्मात्पुरा वोढाऽनड्वानजायत । आशुः सप्तिरित्याह । अश्व एव जवं दधाति । तस्मात्पुराऽऽशुरश्वोऽजायत । पुरंधिर्योषेत्याह । योषित्येव रूपं दधाति । तस्मात्स्त्री युवतिः प्रिया भावुका ॥**

एतेषु मन्त्रेषु 'दोग्ध्री धेनुः' इत्यादिष्वाजायतामित्यनुवर्तते । पुरं सर्वगुणसंपूर्णं शरीरं धारयतीति पुरंधिः । स्पष्टमन्यत् । तैब्रासा.

**जिष्णू रथेष्ठा इत्याह । आ ह वै तत्र जिष्णू रथेष्ठा जायते । यत्रैतेन यज्ञेन यजन्ते ॥**

योद्धुं यो रथमारोहति स रथेष्ठाः । स च जयशील आजायताम् । यस्मिन् देशे एतेन 'जिष्णुः' इत्यादिमन्त्रयुक्तेन यज्ञेन यजन्ते तत्र रथारूढः सर्वोऽपि जिष्णुः जयशील एवाऽऽजायते । तैब्रासा.

**सभेयो युवेत्याह । यो वै पूर्ववयसी । स सभेयो युवा । तस्माद्युवा पुमान्प्रियो भावुकः ॥**

पूर्ववयस्कस्य यौवनोपेतत्वात् सभायोग्यत्वम् । अत एव युवतिवद्युवा सर्वेषां प्रियो भवति । तैब्रासा.

**आऽस्य यजमानस्य वीरो जायतामित्याह । आ ह वै तत्र यजमानस्य वीरो जायते । यत्रैतेन यज्ञेन यजन्ते ॥**

जिष्णुवाक्यवद्व्याख्येयम् । तैब्रासा.

**निकामे निकामे नः पर्जन्यो वर्षत्वित्याह । निकामे निकामे ह वै तत्र पर्जन्यो वर्षति । यत्रैतेन यज्ञेन यजन्ते ॥**

नः अस्माकं निकामे (निकामे) अपेक्षा यदा यदा भवति तदा तदा पर्जन्यो वर्षतु । स्पष्टमन्यत् । तैब्रासा.

**फलिन्यो न ओषधयः पच्यन्तामित्याह । फलिन्यो ह वै तत्रौषधयः पच्यन्ते । यत्रैतेन यज्ञेन यजन्ते । योगक्षेमो नः कल्पतामित्याह ।**

(१) तैब्रा. ३।८।१३।१–४.

कल्पते ह वै तत्र प्रजाभ्यो योगक्षेमः। यत्रैतेन यज्ञेन यजन्ते ॥

फलिन्यः प्रभूतफलोपेताः । अलब्धस्य लाभो योगः । लब्धस्य पालनं क्षेमः । योगसहितः क्षेमो योगक्षेमः ।
तैब्रासा.

विद्याः वर्णाश्च

[1]ऋग्भ्यो जाता॑ सर्वशो मूर्तिमाहुः । सर्वा गतिर्याजुषी हैव शश्वत् । सर्वं तेजः सामरूप्य॑ ह शश्वत् । सर्व॑ हेदं ब्रह्मणा हैव सृष्टम् ॥

या या मूर्तिरस्ति आदित्यस्य वा देवतान्तरस्य वा, तां सर्वामप्यभिज्ञा ऋग्भिः समुत्पन्नामाहुः । या या गतिर्देवानां विद्यते सा शश्वत् सर्वदैव याजुषी हैव यजुषैव संपादिता । यद्यत्तेजो देवेषु विद्यते तत्सर्वं शश्वत् सर्वदा सामरूप्यं ह साम्नैव निरूपणीयम् । तदेवं सर्वमपीदं देवव्यवहारजातं ब्रह्मणा हैव देवेनैव सृष्टम् । तैब्रासा.

ऋग्भ्यो जातं वैश्यं वर्णमाहुः । यजुर्वेदं क्षत्रियस्याऽऽहुर्योनिम् । सामवेदो ब्राह्मणानां प्रसूतिः । पूर्वे पूर्वेभ्यो वच एतदूचुः ॥

यथा देवव्यवहारस्य सर्वस्य हि वेदत्रयमेव कारणम्, एवं मनुष्यव्यवहारस्यापि इत्येतद्वचः पूर्वे सृष्ट्यादावुत्पन्ना महर्षयः पूर्वेभ्यः तदानींतनेभ्यः स्वशिष्येभ्य ऊचुः ।
तैब्रासा.

चातुर्वर्ण्यभाषणभेदः

[2]तानि वा एतानि चत्वारि वाचः । एहीति ब्राह्मणस्य । आगह्याद्रवेति वैश्यस्य च राजन्यबन्धोश्च । आधावेति शूद्रस्य । स यदेव ब्राह्मणस्य तदाह । एतद्धि यज्ञियतमम् । एतदु ह वै वाचः शान्ततमं यदेहीति । तस्मादेहीत्येव ब्रूयात् ॥

ब्रह्मक्षत्रादिवर्णभेदोपजीवनेन हविष्कृदाह्वानमन्त्रे विशेषमाह— तानि वा एतानि चत्वारीति । वाचः संबन्धीनि चत्वारि रूपाणि । कानि पुनस्तानीत्याह— एहीत्यादि । वैश्यस्य 'हविष्कृदागहि' इति मन्त्रः । राजन्यबन्धोः क्षत्रियजातेः 'हविष्कृदाद्रव' इति । आपस्तम्बस्तु राजन्यवैश्ययोर्वैपरीत्येनासूत्रयत्— 'हविष्कृदेहीति ब्राह्मणस्य, हविष्कृदागहीति राजन्यस्य, हविष्कृदाद्रवेति वैश्यस्य, हविष्कृदाधावेति शूद्रस्य' (आपश्रौ. १।१९।८) इति ।

एवं पूर्वपक्षतया ब्राह्मणक्षत्रादिवर्णप्रयुक्तं विशेषमुपन्यस्य स्वमतं निगमयति— स यदेव ब्राह्मणस्येति । एतद्धीति । एहीति एतत् खलु यज्ञियतमं अतिशयेन यज्ञार्हम्, 'इड एह्यदित एहि' (शुसं. ३।२७) इत्यादावन्यत्रापि यज्ञे प्रयोगात् । शान्ततममिति । आगह्याद्रवेत्यादेः सकाशादेहीत्येतदेवातिशयेन शान्तम्, प्रार्थनावाक्येष्वेहीत्येव सर्वत्र प्रयोगात् आगह्यादीनां च निकृष्टप्रेषणरूपत्वाच्चेत्यर्थः । शब्रासा.

वर्णत्रयोत्पत्तिः

[1]भूरिति वै प्रजापतिर्ब्रह्माजनयत, भुव इति क्षत्रं, स्वरिति विशम् । एतावद्वा इद॑ सर्वं यावद्ब्रह्म क्षत्रं विट् । सर्वेणैवाधीयते ॥

ब्रह्मक्षत्रादिवर्णत्रयोत्पत्तिहेतुत्वेन तत्करणकं आधानं प्रशंसति— भूरिति वा इति । ब्रह्म ब्राह्मणजातिः । क्षत्रं क्षत्रियजातिः । स्वरित्यादि निगदसिद्धम् । शब्रासा.

विद्वांसो ब्राह्मणा देवाः

[2]द्वया वै देवाः । देवा अहैव देवाः । अथ ये ब्राह्मणाः शुश्रुवा॑सोऽनूचानास्ते मनुष्यदेवाः । तेषां द्वेधा विभक्त एव यज्ञः । आहुतय एव देवानाम् । दक्षिणा मनुष्यदेवानां ब्राह्मणाना॑ शुश्रुवुषामनूचानानाम् । आहुतिभिरेव देवान् प्रीणाति, दक्षिणाभिर्मनुष्यदेवान् ब्राह्मणाञ्छुश्रुवुषोऽनूचानान् । त एनमुभये देवाः प्रीताः सुधायां दधति ॥

---

(१) तैब्रा. ३।१२।९।१–२.
(२) शब्रा. १।१।४।१२.

(१) शब्रा. २।१।४।१२.
(२) शब्रा. २।२।२।६ : ४।३।४।४ सुधायां दधति (स्वर्गं लोकमभिवहन्ति).

आहुतिदृष्टान्तेनैतद्दक्षिणादानं प्रशंसति– द्वया वा इति । द्वैविध्यमेव दर्शयति– देवा अहैवेति । अग्न्यादिदेवरूपा एव देवाः केचित् । अपरे तु ब्राह्मणरूपदेवाः । ते विशेष्यन्ते– शुश्रुवांस इत्यादिना । शुश्रुवांसः बहुश्रुताः, अनूचानाः साङ्गवेदाध्ययनेन ज्ञातार्थानुष्ठानपराः । एते मनुष्यरूपा देवाः । अत एव तैत्तिरीयकम्– 'एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः' (तैसं. १।७।३।१) इति । यथा आहुतिभिः अग्न्यादिदेवानां प्रीतिर्यज्ञे, एवं मनुष्यदेवान् प्रीणयितुं दक्षिणादानमित्यर्थः ।

शब्रासा.

त्रैवर्णिका एव यज्ञाधिकारिणः, न शूद्रः

[1]तन्न सर्व इवाभिप्रपद्येत । ब्राह्मणो वैव राजन्यो वा वैश्यो वा । ते हि यज्ञियाः ॥

तत्रात्रैवर्णिकानां शूद्रादीनामभिप्राप्तिं निषेधति– तन्न सर्व इवाभिप्रपद्येतेति ।

शब्रासा.

स वै न सर्वेणेव संवदेत । देवान् वा एष उपावर्तते यो दीक्षते । स देवतानामेको भवति । न वै देवाः सर्वेणेव संवदन्ते । ब्राह्मणेन वैव राजन्येन वा वैश्येन वा । ते हि यज्ञियाः । तस्माद्येनं शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयात्– 'इममिति विचक्ष्व, इममिति विचक्ष्व' इति । एष उ तत्र दीक्षितस्योपचारः ॥

दीक्षितस्य सर्वैः सह वाग्व्यवहारं निषेधति– स वै नेति । सर्वशब्दस्य संकोचमाह– ब्राह्मणेन वैवेति । तस्मात् ब्राह्मणादिवर्णत्रयस्य यज्ञार्हत्वात् यदि शूद्रेण सह संवादो विन्देत् लब्धश्चेत् एतेषां त्रैवर्णिकानां मध्ये एकं इमं शूद्रं इति एवं मयेदानीमुक्तप्रकारेण विचक्ष्व ब्रूहीति स्वयं ब्रूयात् । वीप्सया सर्वोऽपि वचनप्रकारः परिगृह्यते । एष उपचारः व्यवहारः ।

शब्रासा.

त्रैवर्णिकाः यज्ञकाले ब्राह्मणा एव

[2]अथ यद्ब्राह्मण इत्याह । अनद्धेव वा अस्यातः पुरा जानं भवति । इदं ह्याहुः– रक्षांसि योषितमनुसचन्ते, तदुत रक्षांस्येव रेत आदधतीति । अथात्राद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते । तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात् । ब्रह्मणो हि जायते– यो यज्ञाज्जायते । तस्मादाहुः– न सवनकृतं हन्यात् । एनस्वी हैव सवनकृतेति ॥

आवेदनवाक्यगतस्य ब्राह्मणपदस्य प्रयोजनमाह– अथ यद्ब्राह्मण इति । अतः अस्याः दीक्षायाः पुरा जानं जन्म अनद्धेव अविनिश्चितमिव भवति । अनद्धात्वे कारणमाह– इदं ह्याहुरिति । इदं वक्ष्यमाणं आहुः अभिज्ञाः । यतो राक्षसाः स्त्रियं अनुसचन्ते अनुसंश्रवयन्ति, गर्भाधानसमये रेतः च आदधति । अतो योनितो जन्यते । ब्राह्मण इत्यस्य व्याख्यानं– यज्ञादिति । यज्ञशब्दाभिधेयाद्ब्रह्मणो जातत्वात् ब्राह्मणशब्दव्यवहारः । अत एव राजन्यवैश्ययोरपि दीक्षितयोः 'दीक्षितोऽयं ब्राह्मणः' (काश्रौ. ७।४।१०) इत्येवं ब्रूयात् । यज्ञजन्मप्रशंसार्थं कंचिन्नियममाह– न सवनकृतमिति । सवनकृतं अभिषवकर्तारं यष्टारं, त्रैवर्णिकेष्वन्यतममपीत्यर्थः । सवनकृता सवनकृता निमित्तेन, तद्वधेनेत्यर्थः ।

शब्रासा.

स्त्रीशूद्राणामनृतत्वम्

[1]अनृतं स्त्री शूद्रः श्वा कृष्णः शकुनिः ॥

कृष्णः शकुनिः कृष्णवर्णः पक्षी, काक इत्यर्थः । स्त्रीशूद्रादय एते अनृतं अनृतात्मकाः । स्त्रीणां वेदाध्ययनाद्यभावात् कामचारसंभवाच्चानृतत्वम् । शूद्रस्य संस्कारविहीनत्वात् सृष्ट्यादौ प्रजापतेः पादादुत्पन्नत्वात् च अनृतत्वम् । श्वकृष्णशकुन्योः जन्मान्तरकृतमहापापपरिणामरूपत्वात् अनृतत्वम् ।

शब्रासा.

चातुर्वर्ण्योत्पत्तिः

[2]सोऽकामयत यज्ञं सृजेयेति । स मुखत एव त्रिवृतमसृजत । तं गायत्रीच्छन्दोऽन्वसृज्यताग्नि-

(१) शब्रा. ३।१।१।९–१०.
(२) शब्रा. ३।२।१।४०.

(१) शब्रा. १४।१।१।३१.
(२) ताब्रा. ६।१।६–१३.

**देवता ब्राह्मणो मनुष्यो वसन्त ऋतुः । तस्मात् त्रिवृत् स्तोमानां मुखं गायत्री च्छन्दसामग्निर्देवतानां ब्राह्मणो मनुष्याणां वसन्त ऋतूनाम् । तस्माद्ब्राह्मणो मुखेन वीर्यं करोति मुखतो हि सृष्टः ॥**

'प्रजापतिः प्रजासृष्टिसाधनत्वेनाग्निष्टोममपश्यत् । तेन प्रजा असृजत' इति योऽग्निष्टोम उक्तस्तस्य त्रिवृदादिभिः स्तोमैर्गायत्र्यादिभिश्छन्दोभिरग्न्यादिभिर्देवैरन्यैः ब्राह्मणादिभिः साध्यत्वात्तेषां सृष्टिं क्रमेण विवक्षुरादौ त्रिवृद्गायत्र्यादिसंपाद्यां सृष्टिमाह— स इति । सः प्रजापतिरकामयत । किमिति ? सर्वसाधकं यज्ञं सृजेयेति । 'स एतमग्निष्टोममपश्यत्तमाहरत्' ( ताब्रा. ६।१।१ ) इत्युक्तस्यैवेदं विवरणम् । सः प्रजापतिः मुखतः आत्मनो मुखादेव त्रिवृतं त्रिवारं आवृत्तित्रयसाध्यमेतन्नामकं स्तोममसृजत । तं त्रिवृतमनु पश्चात् गायत्रीच्छन्दः गायत्रं नाम च्छन्दोऽसृज्यत । तदनु अग्निर्देवताऽन्वसृज्यत । तमनु मनुष्यो ब्राह्मणोऽन्वसृज्यत । तथा तमनु वसन्ताख्यश्च ऋतुरसृज्यत । यस्मा(द्य ?)देते मुखत एव सृष्टाः तस्मादेते त्रिवृदादयः स्वस्वजातीयानां मध्ये मुख्या अभवन् । त्रिवृदादीनां मुख्यानां मध्ये ब्राह्मणस्य मुख्यत्वप्रयुक्तं वीर्यं लोकसिद्धं दर्शयति— तस्मात् मुखसृष्टत्वेन मुख्यत्वात् ब्राह्मणो मुखेनेदानीमपि वीर्यं स्वाध्यायप्रवचनादिजन्यं सामर्थ्यं करोति । तस्मादित्युक्तं विवृणोति— हि यस्मात् ब्राह्मणो मुखतः सृष्टः तस्मादित्यर्थः । ताब्रासा.

**करोति मुखेन वीर्यं य एवं वेद ॥**

उक्तार्थविदुषः फलमाह— करोतीति । एवमुक्तमर्थं यो वेद सोऽपि मुखेन वीर्यं करोति, मुखसाध्येन स्वाध्यायप्रवचनादिनैव अभीष्टं साधयतीत्यर्थः ।

ताब्रासा.

**स उरस्त एव बाहुभ्यां पञ्चदशमसृजत । तं त्रिष्टुप्छन्दोऽन्वसृज्यतेन्द्रो देवता राजन्यो मनुष्यो ग्रीष्म ऋतुः । तस्माद्राजन्यस्य पञ्चदश स्तोमस्त्रिष्टुप्छन्द इन्द्रो देवता ग्रीष्म ऋतुः । तस्मादु बाहुवीर्यो बाहुभ्यां हि सृष्टः ॥**

अथ पञ्चदशस्तोमत्रिष्टुभादीनां सृष्टिमाह— स इति । सः प्रजापतिरुरस्त एव । तस्यैव च व्याख्यानं बाहुभ्यामिति । पञ्चदशस्तोमं ( ? पञ्चदशं ) तृचगतानां तिसृणामृचां त्रिष्वपि पर्यायेषु पञ्चवारावृत्तिसाध्यं पञ्चदशस्तोममसृजत । एवमुत्तरत्र सप्तदशादीनामावृत्तिप्रयुक्तसंख्यावत्त्वमिति द्रष्टव्यम् । 'तमनु त्रिष्टुप्छन्दः' इत्यादिः 'ग्रीष्म ऋतुः' इत्यन्तः पूर्ववद्योज्यः । तस्मात् यस्मात् पञ्चदशादीनां राजन्येन सहोत्पत्तिः तस्मात् राजन्यस्य पञ्चदशादयो भवन्ति । तेषां पञ्चदशादीनां राजन्यसंबन्धः श्रुतिषु प्रसिद्धः । ( 'वसन्ते हि ब्राह्मणमुपनयीत' ? ) 'ग्रीष्मे राजन्योऽग्नीनादधीत' ( ग्रीष्मे राजन्यः ? ) इत्यादिना राजन्यसंबन्धः । एवं प्रथमेऽपि पर्याये ब्राह्मणस्य त्रिवृद्गायत्र्यादीनां विशेषसंबन्धोऽवगतः । तस्मादु बाहुवीर्य इत्यादि स्पष्टम् । ताब्रासा.

**करोति बाहुभ्यां वीर्यं य एवं वेद ॥**

अथ विदुषः फलमाह— करोतीति । ऋज्वर्थः ।

ताब्रासा.

**स मध्यत एव प्रजननात्सप्तदशमसृजत । तं जगतीच्छन्दोऽन्वसृज्यत विश्वे देवा देवता वैश्यो मनुष्यो वर्षा ऋतुः । तस्माद्वैश्योऽद्यमानो न क्षीयते प्रजननाद्धि सृष्टः । तस्मादु बहुपशुः । वैश्वदेवो हि जागतः । वर्षा ह्यस्यर्तुः । तस्माद्ब्राह्मणस्य च राजन्यस्य चाद्योऽधरो हि सृष्टः ॥**

अथ सप्तदशादिसृष्टिमाह— स इति । स प्रजापतिः मध्यतः मध्यदेशादेव । तस्यैव व्याख्यानं प्रजननात् सप्तदशं स्तोममसृजत । तमनु जगतीच्छन्दोऽन्वसृज्यत । तदनु क्रमेण विश्वे देवा देवता वैश्यो मनुष्यो वर्षा ऋतुश्चान्वसृज्यत । तस्मात् प्रजोत्पादकप्रजननादुत्पन्नत्वात् वैश्यजातीयः अद्यमानः भक्ष्यमाणः राजादिभिर्धनैरपह्रियमाणोऽपि न क्षीयते, किन्तु पशुपालनादिना समृद्धो भवत्येव । तत्र हेतुः— प्रजननाद्धि सृष्ट इति । तस्मादु तस्मादेव कारणात् स वैश्यो बहुपशुर्भवति । तत्रोपपत्तिरुच्यते— वैश्वदेवो हि जागतः । विश्वैर्देवैः सह सृष्टत्वात् असावपि वैश्वदेवस्तस्मादित्यर्थः । वैश्वदेवत्वमस्य बहुपशुत्वे

हेतुः । जागतः जगत्या सहोत्पन्नत्वात् असौ जगतीसंबन्धो भवति । 'वर्षा ह्यस्यर्तुः' इत्ययमपि बहुपशुत्वे हेतुः । एतत् स्तोमसंबन्धस्योपलक्षणम् । अनेन वैश्यस्य सप्तदश-स्तोमजगतीच्छन्दःप्रभृतीनां च विशेषसंबन्ध उक्तो भवति । तस्मादयं पूर्वसृष्टस्य ब्राह्मणस्य च राजन्यस्य चाऽऽद्यः अदनीयः उपजीवनीयो भवति । तस्मादिति हेतुं विवृणोति– हि यस्मात् अधरः पश्चाद्भावी निकृष्टः सृष्टः तस्मादित्यन्वयः । ताब्राभा.

**स पत्त एव प्रतिष्ठाया एकविꣳशमसृजत । तमनुष्टुप्छन्दोऽन्वसृज्यत न काचन देवता शूद्रो मनुष्यः । तस्माच्छूद्र उत बहुपशुरयज्ञियो विदेवो हि । न हि तं काचन देवताऽन्वसृज्यत । तस्मात्पादावनेज्यं नाति वर्धते पत्तो हि सृष्टः । तस्मादेकविꣳश स्तोमानां प्रतिष्ठा प्रतिष्ठाया हि सृष्टः । तस्मादनुष्टुभं छन्दाꣳसि नानु व्यूहन्ति ॥**

अथैकविंशस्तोमादिसृष्टिमाह– स इति । स प्रजापतिः पत्त एव प्रतिष्ठाया इति परस्परं सामानाधिकरण्यम् । पादयोः प्रतिष्ठाहेतुत्वं स्पष्टम् । प्रतिष्ठारूपाभ्यां पादाभ्यां एकविंशं स्तोममसृजत । तमनु अनुष्टुप्छन्दोऽन्वसृज्यत । तदनु इतरेष्विव चात्र काचन देवता न सृष्टा, किंतु शूद्रो मनुष्योऽन्वसृज्यत । तस्मात्पूर्वं देवसृष्ट्यभावात् शूद्र उत बहुपशुः पशुबहुत्वोपेतोऽपि अयज्ञियः यज्ञानर्होऽभूत् । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तैसं. ७।१।१।६) इति श्रुत्यन्तरम् । तस्मादित्युक्तं कस्मादित्याह– विदेवः देवरहितः खल्वयम् । एतदपि कुत इत्यत आह– तं शूद्रमनु न हि काचन देवता असृज्यत । यस्मात् विदेवः तस्मात् शूद्रः पादावनेज्यं त्रैवर्णिकानां पादप्रक्षालनरूपं कर्मातिक्रम्य न वर्धते । एतदितरशुश्रूषोपलक्षणं, द्विजातिशुश्रूषातिरिक्तं किञ्चिदपि धर्मं नानुतिष्ठेदित्यर्थः । तथा च स्मर्यते– 'शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते । अन्यथा कुरुते किञ्चिद्भवेत्तत्तस्य निष्फलम् ॥' इति । तत्रोपपत्तिरुच्यते– हि यस्मादयं पत्तः सृष्टः । किंच, तस्मात् प्रजापतेः प्रतिष्ठारूपपादतः सृष्टत्वात् अयमेकविंशस्तोमः इतरस्तोमानां मध्ये प्रतिष्ठा भवति । एकविंशस्तोमकेन यज्ञायज्ञीयेन अग्निष्टोमस्य समाप्तेरस्य प्रतिष्ठात्वम् । हि यस्मात् एकविंशः प्रतिष्ठायाः सृष्टः, अतः इत्यर्थः । तस्मात् पादतो निकृष्टप्रदेशादुत्पन्नत्वात् अनुष्टुप्छन्द(? अनुष्टुभं छन्दां)स्यनु, तृतीयार्थमित्यर्थः( ? तृतीयार्थे ) अनोः कर्मप्रवचनीयत्वात् छन्दांसीति द्वितीया । अनुसवनप्रयुक्तैर्गायत्र्यादिच्छन्दोभिः सह न व्यूहन्ति, पृष्ठ्यादिषु छन्दसां व्यूहे क्रियमाणे स्वस्थाने एवानुष्टुभं प्रयुञ्जते न तस्य स्थानेऽन्यद्गायत्र्यादिकं छन्दः, तेषां वा स्थानेऽनुष्टुभं प्रयुञ्जते इत्यर्थः । ताब्राभा.

**पापवसीयसो विधृत्यै ॥**

किमर्थमेवमिति तत्राह– पापेति । पापं अधरस्थानादुत्पन्नमनुष्टुप्छन्दः, वसीयः पुण्यं मुखाद्युत्तमस्थानोत्पन्नं गायत्र्यादिकं, तदुभयस्य विधृत्यै विधरणाय असांकर्यायेत्यर्थः । ताब्राभा.

**विधृतिः पापवसीयसो भवति य एवꣳवेद ॥**

अथ वेदितुः फलमाह यदुक्तम् (१) अर्थज्ञानातिशयाय– विधृतिरिति । (पाप)पुण्यद्वयस्य विधृतिः विवेचनको भवति तस्मिन्नुभे समानाश्रयणे स्त इत्यर्थः । ताब्राभा.

ब्राह्मणस्य पात्रता अमीमांस्या

**'ब्राह्मणं पात्रे न मीमाꣳसेत यं ब्राह्मणमिव मन्यते । प्र देवपात्रमाप्नोति न मनुष्यपात्राच्छिद्यते ॥**

ब्राह्मणं पात्रे पात्रभावे अयं पात्रं भवति न वेति न मीमांसेत विचारं न कुर्यात् । किं ब्राह्मणब्रुव(त्व)-मात्रेण न मीमांसितव्यम् ? नेत्याह– यं पुरुषं ब्राह्मणमिव मन्येत । इवशब्द एवकारार्थः । जात्या ब्राह्मणमेव यदि निश्चिनुयात् तदा तद्विषयं वृत्तविद्यादिस्वभावासद्भावं न मीमांसेतेत्यर्थः । तथा च स्मृतिः– 'न पृच्छेद्गोत्रचरणे न स्वाध्यायं श्रुतं तथा । हृदये कल्पयेदेवं सर्वदेवमयो द्विजः ॥' (पस्मृ. १।४८) इति । एवं यस्मिन् विचारमकृत्वा पात्रमेवेति यो निश्चयं करोति तस्य तदेव

(१) ताब्रा. ६।५।९.

(देव)पात्रमन्वेति, विद्यातपोयुक्ते यत्फलं भवति तत्तस्मिन्नपि भवतीत्यर्थः । किंच स पुमान् मनुष्यपात्रान्न छिद्यते, मनुष्याणां पात्रं भवतीत्यर्थः । ताब्रासा.

**[1]दैवा वै स्वर्गं लोकमायन् । तेषां दैवा अहीयन्त व्रात्यां प्रवसन्तः । त आगच्छन् यतो देवाः स्वर्गं लोकमायन् । तेन त॰स्तोमं न छन्दोऽविन्दन्येन तानाप्स्यन् । ते देवा मरुतोऽब्रुवन् । एतेभ्यस्त॰ स्तोमं तच्छन्दः प्रयच्छत येनास्मानाप्नवानिति । तेभ्य एत॰षोडश॰स्तोमं प्रायच्छन् परोक्षमनुष्टुभम् । ततो वै ते तानाप्नुवन् ॥**

अथ चत्वारो व्रात्ययज्ञा एकाहाः । तेषु षोडशस्तोमं साधारण्येन विधित्सुराह— देवा इति । देवाः पुराऽस्मिन् लोकेऽवस्थाय यागानुष्ठानेन स्वर्गं लोकं प्राप्नुवन् । तेषां देवानामनुचराः अत एव देवसंबन्धात् दैवा जनाः व्रात्यां व्रात्यतां आचारहीनतां प्राप्य प्रवसन्तः प्रवासं कुर्वन्तः बहिष्कृताः सन्तोऽहीयन्त हीनाः पृथिव्यामेव परित्यक्ता आसन् । अथ देवेषु स्वर्गं गतेषु ते देवजना आगच्छन् । यतः यस्मिन् स्थाने देवाः स्वर्गसाधनयागमन्वतिष्ठन् तत्स्थानं प्रति स्वर्गसाधनदिदृक्षया समागता इत्यर्थः । आगत्य च तं स्वर्गसाधनं स्तोमं नाविन्दन्, तथा छन्दश्च नाविन्दन् नालभन्त, स्तोमेन छन्दसा च तान् देवान् स्वर्गं गतान् आप्स्यन् । एवमेतैः स्तोमच्छन्दसोरलब्धयोः सतोः स्वर्गलोकस्थिता देवा इमं वृत्तान्तमवगत्य मरुतः मरुत्संज्ञकान् देवानब्रुवन् । कथमिति ? एतेभ्यः हीनेभ्यः तं स्तोमं तच्छन्दश्च यूयं प्रयच्छत येन स्तोमेन छन्दसाऽस्मानाप्नवान् ते प्राप्नुयुरिति । एवं देवैरुक्ता मरुतः तेभ्यो हीनेभ्यः एतं षोडशं षोडशस्तोत्रीयात्मकं स्तोमं प्रायच्छन् परोक्षं परोक्षेण वर्तमानं अप्रत्यक्षमनुष्टुभं छन्दश्च प्रायच्छन् । व्रात्ययज्ञेषु प्रथमस्य चतुर्षु स्तोत्रेषु षोडशः स्तोमः । तथा च चत्वारः षोडशाः द्वे अनुष्टुभौ भवतः । एवमनुष्टुभः परोक्षत्वं द्रष्टव्यम् । ततः अनन्तरं स्तोमच्छन्दोरूपेण साधनेन ते हीनास्तान् देवान् आप्नुवन् । एवमेव सर्वेष्वपि व्रात्ययज्ञेषु षोडशस्तोमः प्रयोक्तव्य इत्युक्तं भवति । 'परोक्षमनुष्टुभम्' इत्यनेन चतुःषोडशी प्रथमो व्रात्ययज्ञः कार्य इति विधिरुन्नेतव्यः । चतुर्विधा हि व्रात्याः— निन्दिताः कनीयांसो ज्यायांसः, एतत्त्रितयव्यतिरिक्ता हीनाचाराश्चेति । तत्र कनीयः( ? निन्दित )प्रभृतीनां व्रात्यानां उत्तरे त्रयो यज्ञाः त्रितयव्यतिरिक्तानां व्रात्यानां अयं प्रथमश्चतुःषोडशी । तदुक्तमापस्तम्बेन— 'चतुःषोडशी सर्वेषाम्' इति । ताब्रासा.

**हीना वा एते हीयन्ते ये व्रात्यां प्रवसन्ति, न हि ब्रह्मचर्यं चरन्ति, न कृषिं, वणिज्याम् । षोडशो वा एतत् स्तोमः समाप्तुमर्हति ॥**

अथैतत् प्रकृते योजयति— हीना इति । ये पुरुषाः व्रात्यां व्रात्यतां विहिताकरणप्रतिषिद्धनिषेवणरूपां प्राप्य प्रवसन्ति, एते हीना निकृष्टाः सन्तो हीयन्ते निकृष्टतमा भवन्ति । तत् कस्य हेतोः ? न खल्वेते ब्रह्मचर्यं ब्राह्मणोचितं कर्माऽऽचरन्ति । ततो हीनाः यस्माच्च कृषिं वणिज्यां वणिजः क्रियां क्रयविक्रयादिरूपां च न कुर्वन्ति, ततो वैश्यजातेरपि हीनाः । तस्मादेते निकृष्टतमा भवन्तीत्यर्थः । तथा विधानात् एतत् यः स्तोमः समाप्तुमर्हति श्रैष्ठ्यं प्रापयितुं योग्यो भवति एष षोडशिनः स्तोमः । ताब्रासा.

**मरुत्स्तोमो वा एष यानि क्षुद्राणि छन्दा॰सि तानि मरुताम् ॥**

कथमस्येदृशं सामर्थ्यमिति, तदाह— मरुदिति । एष षोडशस्तोमो मरुत्स्तोमो वै मरुतां संबन्धी स्तोमः । कथमस्य मरुतां संबन्ध इति, तदुच्यते— यानि क्षुद्राणि न्यूनाक्षराणि छन्दांसि 'पवस्व मधुमत्तमः' 'परि प्र धन्व, अधाहीन्द्र गिर्वणः' इत्यादीनि तानि मरुतां संबन्धीनि, सप्तगणात्मना एकोनपञ्चाशत्संख्यया च विभक्तत्वेन तेषामपि क्षुद्रत्वात् । ताब्रासा.

**ककुभं प्राचीमुदूहति । अथ यदेषा द्विपदा ककुभो लोके क्रियते रूपेणैवैना॰स्तत् समर्धयति ॥**

अतः क्षुद्रत्वसाम्यादाह— ककुभमिति । ककुप्छब्देन वृषभस्य ककुदः स्मारितत्वात् द्विपदेत्यनेन च पादद्वय-

(१) ताब्रा. १७।१।१-१७.

स्मरणात् एनान् व्रात्यान् रूपेणैव स्वावयवेनैव समृद्धान् करोतीत्यर्थः । ताव्रासा.

**‘ अधाहीन्द्र गिर्वणः ’ इति विषमं छन्दः । विषम इव वै व्रातः । सर्वानेवैतान् समान् करोति ॥**

अथ ब्रह्मसाम्नः स्तोत्रीया विधाय स्तौति– अधेति । ‘ अधाहीन्द्र गिर्वणः ’ इत्याद्याः तिस्रो ब्रह्मसाम्नः स्तोत्रीयाः । तासु च विषमं विविधं छन्दो दृश्यते । प्रथमा ककुप्, मध्यमपादस्य द्वादशाक्षरत्वात् । द्वितीया उष्णिक्, तृतीयपादस्य द्वादशाक्षरत्वात् । तृतीयायास्तु द्वौ पादौ द्वादशाक्षरौ, तृतीयोऽष्टाक्षर इति छन्दोवैषम्यम् । व्रातः व्रात्यसमुदायः विषम इव वै विविध इव भवति । विविधानाचारयुक्ता हि व्रात्याः । तथा च विषमच्छन्दसा तेषां वैषम्यं परिहरन् सर्वानेवैतान् व्रात्यान् समान् श्रेष्ठत्वापादनेन समवीर्यान् करोति । ताव्रासा.

**तासु द्यौतानम् ॥**

अथ तासु गातव्यं साम विधत्ते– तास्विति । तासु पूर्वोक्तासु ‘ अधाहीन्द्र गिर्वणः ’ इत्याद्यासु द्युतानेन दृष्टं साम द्यौतानं गातव्यम् । तच्च ब्रह्मसाम भवतीत्यर्थः । तथा च कल्पकारः “ अधाहीन्द्र गिर्वणः ’ इति, ‘ ऐन्दुमिन्द्राय सिञ्चत ’ इति द्यौतानमारुतः ” इति । ताव्रासा.

**द्युतानो मारुतस्तेषां गृहपतिरासीत् । त एतेन स्तोमेनायजन्त । ते सर्व आर्ध्नुवन् । यदेतत्साम भवत्यृद्ध्या एव ॥**

अथैतस्य समृद्धिहेतुतामाह– द्युतान इति । मारुतः मारुतां ( ? मरुतां ) संबन्धी द्युतानः तेषां देवानां ( ? दैवानां ) व्रात्यानां गृहपतिरासीत् । बहुयजमानके कर्मणि यूपाञ्जनर्तुयाज्यावचनादीनि केवलकर्त्रर्थानि यः करोति स गृहपतिरित्युच्यते । एवं द्युतानं गृहपतिं कृत्वा ते दैवा व्रात्याः द्युतानगृहपतयः एतेन स्तोमेन षोडशस्तोमकेन यज्ञेनायजन्त । ततस्ते सर्वे आर्ध्नुवन् समृद्धा अभवन् । यदेतत् द्युतानेन दृष्टं साम व्रात्यस्तोमे ब्रह्मसाम भवति तदेषां समृद्ध्या एव संपद्यते । ताव्रासा.

**यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवर्ध्नुयादपेतर आर्ध्नीत । अथ यदनिरुक्तमुपयन्ति सर्वानेवैतानृद्धौ भूतौ प्रतिष्ठापयति ॥**

अथैतस्य शाखान्तरीयं निधनं निषिध्य अस्माभिरधीयमानं निधनमेव कार्यमिति प्रतिपादयन् स्तौति— यदिति । अत्र सूत्रे शाखान्तरीयं पक्षमुक्त्वा स्वमतमप्युक्तम्– ‘ इन्द्रेति द्यौताने निधनं निराहुस्तस्य प्रतिषेधः । यथाम्नायमेवोपेयुः ’ ( लाश्रौ. ८।६।५–६ ) इति । अयमर्थः– निरुक्तं इन्द्रेति निष्कृष्यैकदेवताप्रतिपादकं निधनं शाखान्तरीयं यत् यदि उपेयुः प्राप्नुयुः प्रयुञ्जीरन् । तथा च प्रधानभूतस्यैवेन्द्रस्य निष्कृष्य कथनात् एतेषां मध्ये प्रधानभूतो गृहपतिरेव ऋध्नुयात् समृद्धो भवेत्, इतरे त्वपगतर्द्धयो भवेयुः । अथानिरुक्तमनिर्धारितदैवतं अध्ययनसिद्धं ‘ आ औहो ’ इत्येवंरूपं द्युतानस्य निधनं यत् यद्युपयन्ति प्रयुञ्जते तर्हि उद्गाता सर्वानेवैतान् व्रात्यान् ऋद्धौ समृद्धौ भूतावैश्वर्ये च प्रतिष्ठापयति । तस्यानिर्धारितदेवतात्वेन सर्वदेवतासाधारण्यात् सर्वेषां समृद्धिः । ताव्रासा.

**गरगिरो वा एते ये ब्रह्माद्यं जन्यमन्नमदन्ति, अदुरुक्तवाक्यं दुरुक्तमाहुः, अदण्ड्यं दण्डेन घ्नन्तश्चरन्ति, अदीक्षिता दीक्षितवाचं वदन्ति । षोडशो वा एतेषाᳪ स्तोमः पाप्मानं निर्हन्तुमर्हति । यदेते चत्वारः षोडशा भवन्ति तेन पाप्मनोऽधि निर्मुच्यन्ते ॥**

अथैतस्मिन् व्रात्ययज्ञे चतुर्षु स्तोत्रेषु षोडशः स्तोमः प्रयोक्तव्य इति तत् प्रशंसितुमाह– गरगिर इति । एते वक्ष्यमाणा गरगिरो वै गरस्य विषस्य भक्षयितारः, ये व्रात्याः ब्रह्माद्यं ब्राह्मणैर्भोज्यं जन्यं जनपदसंबन्धि अन्नमदन्ति, ब्राह्मणार्थं परिकल्पितमन्नं बलात्कारेण भुञ्जत इत्यर्थः । ये च अदुरुक्तवाक्यं शोभनार्थप्रतिपादकं वाक्यं दुरुक्तं दुष्टमाहुः, तथा अदण्ड्यं दण्डानर्हं जनं दण्डेन

घ्नन्तः हिंसन्तः चरन्ति, तथा स्वयमदीक्षिताः अकृतदीक्षा दीक्षितैः प्रयोज्यां वाचं वदन्ति । एवं ये बहुविधान् विपरीताचारानाचरन्ति एते विषभक्षकाः, नरकहेतोर्भूयसः पापसंचयस्य निष्पद्यमानत्वादित्यर्थः । तस्मात् एतेषां व्रात्यानां पाप्मानं पापं निर्हन्तुं निर्दग्धुं षोडशस्तोम एवार्हति । तथा च यदेते चत्वारः षोडशाः षोडशस्तोमा भवन्ति अच्छावाकस्य आज्यपृष्ठयोः माध्यंदिनार्भवयोश्च पवमानयोः, तेन षोडशस्तोमचतुष्टयेन पाप्मनः सकाशात् अधि उपरि निर्मुच्यन्ते, प्रक्षीणपापाः शुद्धा भवन्तीत्यर्थः । ताब्रासा.

**'देवो वो द्रविणोदाः' इत्यग्निष्टोमसाम कार्यम् । देवतास्वेवैनान् प्रतिष्ठापयति ॥**

अथाग्निष्टोमसाम्नः स्तोत्रीयामनूद्य स्तौति— देव इति । 'देवो वो द्रविणोदाः' इत्यस्मिन् प्रगाथे यज्ञायज्ञीयमग्निष्टोमसाम कार्यम् । तथा च देवशब्दस्य श्रूयमाणत्वात् देवतास्वेवैनान् व्रात्यान् शुद्धान् कृत्वा प्रतिष्ठापयति । ताब्रासा.

**अथो खल्वाहुः— 'अदर्शि गातुवित्तमः' इत्येव सतोबृहतीषु कार्यम् । विषम इव वै व्रातः । सर्वानेवैनान् सतोबृहतः करोति ॥**

अथ शाखान्तरीयं मतमुपन्यस्यति— अथो इति । अथो खल्विति पक्षान्तरपरिग्रहे । अन्ये ब्रह्मवादिन आहुः कथयन्ति । किमिति ? 'अदर्शि गातुवित्तमः' इत्याद्यास्वेव सतोबृहतीषु प्रग्रथननैरपेक्ष्येण स्वभावत एव बृहतीच्छन्दस्कासु ऋक्षु अग्निष्टोमसाम कार्यमिति । उपपत्तिं चाऽऽहुः— व्रातः व्रात्यसमुदायः विषम इव वै विविधाचार एव खलु । तथा च नानाविधान् सर्वानेवैनान् सतोबृहतः स्वभावतो महतः करोति । ताब्रासा.

**तदाहुः— शिथिलमिव वा एतत् छन्दश्चराचरं यत् सतोबृहती । 'देवो वो द्रविणोदाः' इत्येव कार्यम् ॥**

अथैतन्मतं दूषयित्वा स्वपक्षं निगमयति— तदिति । तत् तत्र विषये अन्ये पुनर्ब्रह्मवादिन आहुः— यत् सतोबृहत्याख्यं छन्दः एतत् शिथिलमिव वै अदृढमेव । यतः एतच्चराचरं संचरणशीलं स्थास्नु न भवति । यस्मादेवं तस्मात् 'देवो वो द्रविणोदाः' इत्येतास्वेव कार्यम् । ताब्रासा.

**एषा वै प्रतिष्ठिता बृहती या पुनःपदा । तद्यत्पदं पुनरारभते तस्मात्पुत्रो मातरमध्येति ॥**

अथैतासूक्तदोषवैलक्षण्यमाह— एषेति । या बृहती पुनःपदा सकृदाम्नातं पादं पुनरभ्यस्य या बृहती संपद्यते एषा पुनःपदा प्रतिष्ठिता बृहती । तत् तथा सति यत् यस्मात् सकृदाम्नातं पदं पादं अविस्मारणेन पुनः पुनरारभते तस्मात् कारणात् पुत्रः स्तनन्धयः मातरमध्येति पुनः पुनः स्मरति । इक् स्मरणे इति धातुः । ताब्रासा.

**उष्णीषं च प्रतोदश्च ज्याह्णोडश्च विपथश्च फलकास्तीर्णः कृष्णशं वासः कृष्णवलक्षे अजिने रजतो निष्कस्तद् गृहपतेः ॥**

'द्युतानो मारुतस्तेषां गृहपतिरासीत्' इत्याम्नानात् गृहपतिप्रमुखा बहवो व्रात्या अनेन यजेरन्निति प्रतीयते । तत्र गृहपतिना संपाद्यानि दक्षिणाद्रव्याणि दर्शयति— उष्णीषमिति । उष्णीषं शिरोवेष्टनं वस्त्रम् । अयःशलाकाग्रदण्डः प्रतोदः येन कर्षकैर्बलीवर्दा निष्पीड्यन्ते । ह्णोडतिर्गत्यर्थः । ज्या ह्णोडा वाता यस्य चापस्य स ज्याह्णोडः, इषुरहितः केवलो धनुर्दण्ड इत्यर्थः । तदुक्तं सूत्रकारेण— 'धनुष्केणानिषुणा व्रात्याः प्रसेधमाना यन्ति स ज्याह्णोडः' (लाश्रौ. ८।६।८) इति । तथा फलकास्तीर्णः फलकाभिरास्तीर्णो विस्तारितो रथः, स च विपथः विविधं कुटिलं पथो गच्छतीति विविधगामिभ्यामश्वाश्वतराभ्यां युक्तः कार्य इत्यर्थः । कृष्णशं कृष्णदशं कृष्णा दशा यस्य तादृशं वासः । दकारलोपश्छान्दसः । यद्वा लोमशमितिवत् मत्वर्थीयः शप्रत्ययः, कार्ष्ण्ययुक्तमित्यर्थः । वलक्षः शुक्लवर्णः कृष्णशुक्लवर्णे अजिने आविके चर्मणी पार्श्वतस्तन्तुभिः स्यूते भवत इत्यर्थः । रजतः रजतनिर्मितो निष्कोऽलङ्कारः भूषा । एतान्युष्णीषादीनि द्रव्याणि गृहपतेः स्वभूतानि संपाद्यानि, दक्षिणार्थं गृहपतिना आनेतव्यानीत्यर्थः । तदुक्तं सूत्रकारेण— 'एतत्सर्वं गृहपतिराहरेत्' (लाश्रौ. ८।६।१८) इति । अतः 'समुद्रातुः'

(ताब्रा. १८।३।२) इव 'तद्गृहपतेः' (इति) षष्ठ्या निर्दिष्टस्य संप्रदानत्वशङ्का न कार्येत्यर्थः। ताब्रासा.

**वल्कुकान्तानि दामतूषाणीतरेषां द्वे द्वे दामनी द्वे द्वे उपानहौ द्विषꣳहितान्यजिनानि ॥**

अथान्यैः संपादनीयानि द्रव्याणि दर्शयति– वल्कूकेति। वल्कूकेति लोहितवर्णस्याऽऽख्या। लोहितवर्णोऽन्तो येषां वाससां तानि तथोक्तानि। तूषमिति वस्त्रस्य दशोच्यते। दामतूषाणि, रज्जुरूपदशानीत्यर्थः। प्रतिवस्त्रं द्वे द्वे दामनी, उभयोरपि प्रान्तयोः एकैकं दाम रज्जुर्यथा भवति तथा कर्तव्यमित्यर्थः। तथा एकैकस्य व्रात्यस्य द्वे द्वे उपानहौ, वर्मसदृशे पादाङ्गुष्ठवेष्टने चर्मणी भवत इत्यर्थः। तदुक्तं सूत्रकारेण– 'द्वे द्वे उपानहाविति कृष्णाः कर्णिन्य इति शाण्डिल्यः। याः काश्चेति धानञ्जय्यः' (लाश्रौ. ८।६।२३–२४) इति। पूर्ववत् शुक्लकृष्णान्यजिनानि द्विषंहितानि, एकैकस्य द्वे द्वे अजिने शुक्लकृष्णे पूर्ववत् संहिते भवत इत्यर्थः। एतानि द्रव्याणि गृहपतिव्यतिरिक्तैर्व्रात्यैः संपाद्यानि। ताब्रासा.

**एतद्वै व्रात्यधनम्। यस्मा एतद्ददति तस्मिन्नेव मृजाना यन्ति ॥**

अथैतस्य दानं व्रात्यतानिर्हरणहेतुरित्याह– एतदिति। एतदुष्णीषप्रतोदादिकं द्रव्यजातं खलु व्रात्यस्याविनाभूतं धनम्। अतो यस्मै पुरुषाय एतद्धनं ददति प्रयच्छन्ति तस्मिन्नेव पुरुषे मृजानाः व्रात्यत्वापादकं पापं निर्मृज्य शुद्धाः सन्तो (यन्ति) गच्छन्ति त्रैविद्यवृत्तिं प्राप्नुवन्ति। अस्य च व्रात्यधनस्य प्रतिग्रहीतृविशेषः सूत्रकारेणोक्तः– 'व्रात्येभ्यो व्रात्यधनानि ये व्रात्यचर्याया अविरताः स्युर्ब्रह्मबन्धवे वा मागधदेशीयायं' (लाश्रौ. ८।६।२८) इति। ताब्रासा.

**त्रयस्त्रिꣳशता त्रयस्त्रिꣳशता गृहपतिमभिसमायन्ति। त्रयस्त्रिꣳशद्धि देवा आर्ध्नुवन् ऋद्ध्या एव ॥**

अथैतेषां प्रत्येकं त्रयस्त्रिंशत्संख्या गावोऽपि दक्षिणार्थं संपाद्या इत्याह– त्रयस्त्रिंशतेति। त्रयस्त्रिंशता त्रयस्त्रिंशत्संख्याभिर्गोभिः गृहपतिमभिसमायन्ति समागच्छन्ति। सर्वेषां प्रत्येकं त्रयस्त्रिंशत्संपादनार्थं वीप्सा। अतो गृहपतिरपि गवां त्रयस्त्रिंशतं संपादयेदित्यर्थः। इमा गावोऽपि मागधदेशीयेभ्यो व्रात्येभ्यो देयाः, 'यस्मा एतद्ददति तस्मिन्नेव मृजाना यन्ति' इति साधारणोक्तेः। कुत एतत् त्रयस्त्रिंशत्संख्यायाः संपादनमिति? तत्रोच्यते– त्रयस्त्रिंशत्संख्याकाः खलु देवाः देवसंबन्धिनो व्रात्या आर्ध्नुवन् अनेन व्रात्यस्तोमेन समृद्धा अभवन्। अतस्तत्संबन्धद्वारा ऋद्ध्यै समृद्ध्यर्थमेव त्रयस्त्रिंशता गोभिः समागमनमिति। ताब्रासा.

व्रात्याः, तेषां स्तोमश्च

**[1]अथैष षट्षोडशी। ये नृशꣳसा निन्दिताः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् ॥**

अथाभिशस्तैर्निन्दितैरनुष्ठेयो व्रात्यस्तोमः प्रस्तूयते– अथेति। अथ अनन्तरं एष वक्ष्यमाणो यज्ञः षट्षोडशी षट्षोडशाः स्तोमाः यस्य स तथोक्तः। नृशंसा निन्दिताः मनुष्यैरभिशंसनेन पापाध्यारोपेण गर्हिताः सन्तो ये पुरुषाः व्रात्यां व्रात्यत्वं प्राप्य प्रवसेयुः त एतेन षट्षोडशिना यजेरन्। ताब्रासा.

**अभिपूर्वेण वा एते पाप्मना गृहीता ये नृशꣳसा निन्दिताः सन्तो व्रात्यां प्रवसन्ति, यत् षट् षोडशानि स्तोत्राणि भवन्ति, तेन पाप्मानोऽधि निर्मुच्यन्ते ॥**

षट्षोडशित्वं पाप्मनो निर्हरणहेतुरिति प्रतिपिपादयिषया प्रथममेषां पापसद्भावमाह– अभिपूर्वेणेति। अभिपूर्वेण क्रमेण खल्वेते पाप्मना पापेन गृहीताः ये नृशंसा निन्दिताः अभिशंसनेन गर्हिताः सन्तो व्रात्यां प्रवसन्ति, तथा च यत् षट् स्तोत्राणि षोडशानि षोडशस्तोमानि भवन्ति। तेन षोडशेन पाप्मनोऽधि पापान्निर्मुच्यन्ते। उक्थसंस्थो ह्ययं व्रात्यस्तोमः। तत्र त्रिषु पवमानस्तोत्रेषु अच्छावाकस्याऽऽज्यपृष्ठोक्थ्येषु (चेति)

(१) ताब्रा. १७।२।१–४.

षट्स्तोत्रेषु षोडशस्तोमो भवति । तदुक्तं कल्पकारेण- 'षोडशाः पवमाना अच्छावाकसामानि च' इति । ताब्रासा.

**यदेकवि॑ शोऽग्निष्टोमो भवति । प्रतिष्ठाया एकवि॑शः । मध्यत एव यज्ञस्य प्रतितिष्ठति ॥**

अथास्य अग्निष्टोमसाम्नः स्तोमं विधाय स्तौति- यदिति । यज्ञस्योक्थसंस्थत्वात् अग्निष्टोमसाम्नो यज्ञमध्यत्वम् । सिद्धमन्यत् । ताब्रासा.

**उक्थो भवति । पशवो वा उक्थानि । पशवो नृशं॑ समग्र्यं परिणयन्ति । पशुभिरेवैनानग्र्यं परिणयति ॥**

तथाऽस्योक्थसंस्थां विधाय स्तौति- उक्थ इति । पशवो गवादयो हि नृशंसं नरैरभिशस्यमानं पुरुषं अग्र्यं श्रैष्ठ्यं परिणयन्ति, तत्पालनदानादिभिः पापक्षयात् । उक्थस्तोत्राणि च पशुसंस्तुतानि । अतः पशुभिरेवैनान् व्रात्यान् अग्र्यं श्रैष्ठ्यं परिणयति प्रापयति उद्गाता । ताब्रासा.

**[१]अथैष द्विषोडशी । ये कनिष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् ॥**

अथ वयसा कनीयांसो ये व्रात्यास्तैरनुष्ठेयो यागो विधीयते- अथेति । अथ अनन्तरं एष द्विषोडशी षोडशस्तोमके द्वे स्तोत्रे यस्य स तथोक्तः । ये कनिष्ठाः युवतमाः सन्तो व्रात्यतां प्राप्य प्रवसेयुः बहिष्कृताः प्रवासं कुर्युः, त एतेन द्विषोडशिना व्रात्यस्तोमेन यजेरन् । ताब्रासा.

**हीना वा एते हीयन्ते ये कनिष्ठाः सन्तो व्रात्यां प्रवसन्ति । यत्त्रिवृतः पवमाना भवन्ति । मुखं वै त्रिवृत् स्तोमानाम् । मुखत एवैनान् यज्ञस्य परिणयति ॥**

अथैतस्मिन् त्रिषु पवमानस्तोत्रेषु त्रिवृत्स्तोम एव कार्य इति विधित्सुराह- हीना इति । वयसाऽतिहीनाः खलु इमे हीयन्ते पुनराचारतोऽपि हीना भवन्ति । तथा च तेषां हीनत्वपरिहाराय त्रिवृत एव पवमाना भवन्ति, बहिष्पवमानादिषु त्रिषु पवमानस्तोत्रेषु त्रिवृत्स्तोमः कार्य इत्यर्थः । स्तोमानां मध्ये त्रिवृत्स्तोमः मुखं वै मुख्यः प्रथमः । यदेवंविधस्य त्रिवृतः पवमानेषु करणं, तेन यज्ञस्य मुखतः सवनत्रयप्रारम्भ एव एनान् परिणयति ब्राह्मणत्वं प्रापयति । ताब्रासा.

**यद्द्वे षोडशे स्तोत्रे भवतस्तेन पाप्मनोऽधि निर्मुच्यन्ते ॥**

अथास्य अच्छावाकसंबन्धिनोः आज्यपृष्ठस्तोत्रयोः षोडशस्तोमः कार्य इति स्तुतिमुखेन दर्शयति- यदिति । सिद्धप्रायमेतत् । ताब्रासा.

**एकवि॑ शोऽग्निष्टोमो भवति । प्रतिष्ठा वा एकवि॑शः । अन्तत एव यज्ञस्य प्रतितिष्ठति ॥**

अथाग्निष्टोमसाम्नः एकविंशस्तोमं विधाय स्तौति- एकविंश इति । अग्निष्टोमसंस्थत्वादेतस्य व्रात्यस्तोमस्य अग्निष्टोमसाम्नोऽन्तत्वम् । ताब्रासा.

**[१]अथैष शमनीचामेढ्राणा॑ स्तोमः । ये ज्येष्ठाः सन्तो व्रात्यां प्रवसेयुस्त एतेन यजेरन् ॥**

अथ ये स्थविरा व्रात्यास्तैरनुष्ठेयं व्रात्ययज्ञं दर्शयति- अथेति । अथ अनन्तरं एष वक्ष्यमाणो यज्ञः शमनीचामेढ्राणां स्तोमः शमेन यौवनोपरमेण नीचं अनुद्धतं मेढ्रं येषां ते शमनीचामेढ्राः, स्थाविर्याद्विनष्टवीर्या इत्यर्थः । तेषां संबन्धी स्तोमः । अतो ये ज्येष्ठाः वृद्धतमाः सन्तो व्रात्यतां प्राप्य प्रवसेयुः (ते) एतेन व्रात्यस्तोमेन यजेरन् । ताब्रासा.

**अग्रादग्र॑ रोहन्त्यूर्ध्वाः स्तोमा यन्त्यनपभ्रं॑शाय ॥**

अथास्योर्ध्वस्तोमतां विधत्ते- अग्रादिति । अस्मिन् यज्ञे त्रिवृदादयः स्तोमा ऊर्ध्वाः अभिमुखाः उत्तरोत्तरमधिकसंख्याकाः सन्तो यन्ति गच्छन्ति यागं निर्वर्तयन्ति अनपभ्रंशाय अनधःपतनाय । अधिकसंख्याकं स्तोमं कृत्वा यदि न्यूनसंख्याकं स्तोमं प्रयुञ्जीरन् तदा भवेदधःपातः,

---

(१) ताब्रा. १७।३।१-४.

(१) ताब्रा. १७।४।१-३.

नैवमूर्ध्वस्तोममित्यर्थः । तथा चैवं कुर्वाणा यजमानाः अग्रात् श्रैष्ठ्यात् अग्रं श्रैष्ठ्यं रोहन्ति आरूढा भवन्ति, उत्तरोत्तरमुन्नतं पदं प्राप्नुवन्तीत्यर्थः । एतस्योर्ध्वस्तोमत्वं कल्पकारेण दर्शितम्– 'द्वे त्रिवृती स्तोत्रे द्वे पञ्चदश-सप्तदशे द्वे एकविंशचतुर्विंशे' इत्यादिना । एवं च पूर्व-स्मात् स्तोत्रादुत्तरमुत्तरं स्तोत्रमधिकस्तोमकं भवतीत्युक्तं भवति । ताब्रासा.

**एतेन वै शमनीचामेढ्रा अयजन्त । तेषां कुषीतकः सामश्रवसो गृहपतिरासीत् । तान् लुशाकपिः खार्गलिरनुव्याहरत् । अवाकीर्षत । कनीयांसौ स्तोमावुपागुरिति । तस्मात्कौषीत-कानां न कश्चनातीव जिहीते । यज्ञावकीर्णा हि ॥**

अथैतस्य शमनीचामेढ्राणां स्तोमत्वं दर्शयन् ऊर्ध्व-स्तोमत्वव्यतिरिक्तेन प्रकारान्तरेण स्तोमकल्पने दोषं दर्शयति– एतेनेति । एतेन खलु स्तोमेन पुरा शमनीचा-मेढ्राः अपगतयौवनत्वेन निर्वीर्यप्रजननाः देवसंबन्धिनो व्रात्या अयजन्त । तस्मादेष शमनीचामेढ्राणां स्तोम इत्याख्यायते । तदानींतनानां तेषां व्रात्यानां समश्रवसः पुत्रः कुषीतको नाम ऋषिः गृहपतिः मुख्यः आसीत् । तान् कुषीतकगृहपतिसहितान् लुशाकपिर्नामा खार्गलिः खर्गलपुत्रः अनुव्याहरत् अशपत् । ततस्ते अवाकीर्षत अवकीर्णिनः भ्रष्टाचारा अभवन् । अनुव्याहरतोऽयम-भिप्रायः– एते कुषीतकगृहपतयः कनीयांसौ अल्पसंख्यावेव द्वौ स्तोमावुपागुः प्राप्नुवन्निति । पूर्वदर्शितमुत्तराधिक-संख्यं स्तोमं परित्यज्य न्यूनसंख्यं स्तोमद्वयं प्रायुञ्जतेति । तस्मादेतस्यायथानुष्ठानात् यथार्थदर्शिना लुशाकपिना शापः कृत इत्यर्थः । यस्मादेते कुषीतकमुखाः शप्ता आसन् तस्मादेव कारणात् कौषीतकानां कौषीतकशाखाध्येतॄणां कौषीतकिगोत्राणां वा मध्ये कश्चन कोऽपि पुरुषः नातीव जिहीते अतीव श्रेयो न गच्छति । ओहाङ् गताविति धातुः । हि यस्मादेते यज्ञावकीर्णाः अन्यथाऽनुष्ठितेन यज्ञेन निमित्तेन अवकीर्णाः अवकीर्णिनः विभ्रष्टब्रह्मचर्याः भवन्ति तस्मादित्यर्थः । ताब्रासा.

चातुर्वर्ण्योत्पत्तिः, वर्णभेदेन छन्दोविशेषाः

**[१]प्रजापतिर्वा इदमग्र आसीत् । जनो ह वै प्रजापतिर्देवता । सोऽकामयत बहुः स्यां प्रजायेय भूमानं गच्छेयमिति । स शीर्षत एव मुखत-स्त्रिवृतं स्तोममसृजत, गायत्रीं छन्दः, रथंतरं साम, अग्निं देवतां, ब्राह्मणं मनुष्यं, अजं पशुम् । तस्माद्ब्राह्मणो गायत्रीछन्दा आग्नेयो देवतया । तस्मादु मुखं प्रजानाम् । मुखाद्ध्येनमसृजत ॥**

**सोऽकामयत प्रैव जायेयेति । स बाहुभ्या-मेवोरसः पञ्चदशं स्तोममसृजत, त्रिष्टुभं छन्दः, बृहत्साम, इन्द्रं देवतां, राजन्यं मनुष्यं, अश्वं पशुम् । तस्माद्राजन्यस्त्रिष्टुप्छन्दा ऐन्द्रो देवतया । तस्मादु बाहुभ्यां वीर्यं करोति । बाहुभ्यां ह्येन-मुरसो वीर्यादसृजत ॥**

**सोऽकामयत प्रैव जायेयेति ॥**

**स उदरादेव मध्यतः सप्तदशं स्तोममसृजत, जगतीं छन्दः, वामदेव्यं साम, विश्वान् देवान् देवतां, वैश्यं मनुष्यं, गां पशुम् । तस्माद्वैश्यो जगतीछन्दा वैश्वदेवो देवतया । तस्मादु प्रजनिष्णुः । उदराद्ध्येनं प्रजननादसृजत ॥**

**सोऽकामयत प्रैव जायेयेति । स पद्भ्यामेव प्रतिष्ठाया एकविंशं स्तोममसृजत, अनुष्टुभं छन्दः, यज्ञायज्ञीयं साम, न कांचन देवतां, शूद्रं मनुष्यं, अविं पशुम् । तस्माच्छूद्रोऽनुष्टुप्छन्दा वेश्मपति-देवः । तस्मादु पादावनेज्यनैव जिजीविषति । पद्भ्यां ह्येनं प्रतिष्ठाया असृजत ॥**

**एतया वै सृष्ट्या प्रजापतिः प्रजा असृजत । स य एतदेवं वेद भूमानमेव प्रजया पशुभि-र्गच्छति । तस्माद्वेतं यज्ञं भूयिष्ठं प्रशंसन्ति यदग्निष्टोमम् । प्रजापतियज्ञो ह्येषः ॥**

---

(१) जैब्रा. १।६८–६९.

चतुर्णां वर्णानां ज्यायस्त्वकनीयस्त्वे

[1]तदाहुर्यदेते पृष्ठ्यस्य विषमा स्तोमास्त्रिवृत्पञ्चदशः सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंश इति, कथमेतत् समात्सममुपेतं भवतीति । स ब्रूयाद्ब्रह्म वै त्रिवृत् । क्षत्रं पञ्चदशः । ब्रह्म वै क्षत्राज्ज्यायः । तेन समात्सममुपेतं भवति । विट् सप्तदशः । क्षत्रमु वै विशो ज्यायः । तेन समात्सममुपेतं भवति । एकविंशं स्तोममनु शूद्रः । वैश्यो वै शूद्राज्ज्यायान् । तेन समात्सममुपेतं भवति । त्रिणवं स्तोममनु ग्राम्याः पशवः । शूद्रो वै ग्राम्येभ्यः पशुभ्यः श्रेयान् । अत्ता हि स तेषाम् । तेन समात्सममुपेतं भवति । त्रयस्त्रिंशं स्तोममन्वारण्याः पशवः । ग्राम्या वै पशव आरण्येभ्यः पशुभ्यः श्रेयांसः । बिभ्यत इतरे चरन्त्यधिगन्तेतरेषां हन्ता । तेन समात्सममुपेतं भवति ॥

चतुर्णां वर्णानां छन्दोविशेषाः

[2]गायत्रो वै ब्राह्मणः । त्रैष्टुभो राजन्यः । जागतो वैश्यः । आनुष्टुभः शूद्रः । तद्यद्गायत्रीं प्रातःसवनं संपद्यते, गायत्र्यैव तच्छन्दसा दर्भः शातानीकिर्ब्राह्मणे मनुष्येऽध्यपचितिमगच्छत् । अथ यत्त्रिष्टुभं माध्यंदिनं सवनं संपद्यते, त्रिष्टुभैव तच्छन्दसा दर्भः शातानीकी राजन्ये मनुष्येऽध्यपचितिमगच्छत् । अथ यज्जगतीं तृतीयसवनं संपद्यते, जगत्यैव तच्छन्दसा दर्भः शातानीकिर्वैश्ये मनुष्येऽध्यपचितिमगच्छत् । अष्टाक्षरा गायत्री । एकादशाक्षरा त्रिष्टुप् । द्वादशाक्षरा जगती । वागिति यज्ञायज्ञीयस्य निधनम् । तद्द्वात्रिंशत् । द्वात्रिंशदक्षराऽनुष्टुप् । आनुष्टुभः शूद्रः । अनुष्टुभैव तच्छन्दसा दर्भः शातानीकिः शूद्रे मनुष्येऽध्यपचितिमगच्छत् । एतावन्तो वै मनुष्याः । एतावन्ति मनुष्यजातानि । तेष्वेव तदध्यपचितिमगच्छत् ॥

अदण्ड्यो ब्राह्मणः

[1]तस्माद्ब्राह्मणो राजन्यस्याज्येयोऽमार्योऽदण्ड्योऽघात्यः ॥

अश्वमेधफलं चातुर्वर्ण्यगुणोत्कर्षः

[2]यर्हि वा एतेन पुरेजिरे, सर्वमेव वीर्यवदास— ऋषिर्ह स्म मन्त्रकृद्ब्राह्मण आजायते, अतिव्याधी राजन्यः शूरः, पोषयिष्णुर्वैश्यो रयिमान्, उत्थाता शूद्रो दक्षः कर्मकर्ता, कल्याण्य स्त्रियः पतिव्रताः । अकृष्टपच्यं ह स्म धान्यं पच्यते । अपि ह स्मैको व्रीहिपात्रः पक्वः कुलायालं भवति । तथा पयस्वद्ध तर्हि सर्वमेवाऽऽस । अपि ह स्मारण्ये वीर्याण्युपाजायन्ते— अघलाः सिंहाः, अघलाः शार्दूलाः, अघला ऋक्षा ऋक्षीकाः, अघला अह्योऽजगराः । पुरुषव्याघ्रा ह स्मारण्येष्वाददानास्तिष्ठन्ति । अपि ह स्मैकः शिशुमारो बहूनि तीर्थानि गोपायति । वीर्येण ह वाव ते तत्तथाऽऽसुः ॥

रमणीयचरणाः कपूयचरणाश्च वर्णाः, तेषां आत्मज्ञानेन शुद्धिः

[3]तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥

तत् तत्र तेष्वनुशयिनां ये इह लोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणाः । रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते रमणीयचरणाः उच्यन्ते । क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः । तेनानुशयेन पुण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेण अभ्याशो ह क्षिप्रमेव । यदिति

(१) जैब्रा. २।३२.
(२) जैब्रा. २।१०२.

(१) जैब्रा. २।१९६.
(२) जैब्रा. २।२६६.
(३) छाउ. ५।१०।७–१०.

क्रियाविशेषणम्। ते रमणीयां क्रौर्यादिवर्जितां योनिमापद्येरन् प्राप्नुयुः ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वकर्मानुरूपेण। अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणः अशुभानुशयाः अभ्याशो ह यत्ते कपूयां यथाकर्म योनिमापद्येरन् कपूयामेव धर्मसंबन्धवर्जितां जुगुप्सितां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा स्वकर्मानुरूपेणैव। शंकर.

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेति। एतत्तृतीयꣳ स्थानम्। तेनासौ लोको न संपूर्यते। तस्माज्जुगुप्सेत। तदेष श्लोकः–॥**

ये तु रमणीयचरणाः द्विजातयस्ते स्वकर्मस्थाश्चेष्टादिकारिणः ते धूमादिगत्या गच्छन्त्यागच्छन्ति च पुनःपुनर्घटीयन्त्रवत्। विद्यां चेत्प्राप्नुयुस्तदाऽर्चिरादिना गच्छन्ति। यदा तु न विद्यासेविनः, नापीष्टादिकर्म सेवन्ते, तदाऽथैतयोः पथोः यथोक्तयोरर्चिर्धूमादिलक्षणयोर्न कतरेणान्यतरेण चन अपि यन्ति। तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि भवन्ति। अत उभयमार्गपरिभ्रष्टा ह्यसकृज्जायन्ते म्रियन्ते चेत्यर्थः। तेषां जननमरणसंततेरनुकरणमिदमुच्यते। जायस्व म्रियस्वेति ईश्वरनिमित्तचेष्टोच्यते। जननमरणलक्षणेनैव कालयापना भवति, न तु क्रियासु भोगेषु वा कालोऽस्तीत्यर्थः। एतत्क्षुद्रजन्तुलक्षणं तृतीयं पूर्वोक्तौ पन्थानावपेक्ष्य स्थानं संसरताम्। येनैवं दक्षिणमार्गगा अपि पुनरागच्छन्ति, अनधिकृतानां ज्ञानकर्मणोरगमनमेव दक्षिणेन पथेति, तेनासौ लोको न संपूर्यते। पञ्चमस्तु प्रश्नः पञ्चाग्निविद्यया व्याख्यातः। प्रथमो दक्षिणोत्तरमार्गाभ्यामपाकृतः। दक्षिणोत्तरयोः पथोः व्यावर्तनाऽपि– मृतानामग्नौ प्रक्षेपः समानः, ततो व्यावर्त्य अन्येऽर्चिरादिना यन्ति, अन्ये धूमादिना, पुनरुत्तरदक्षिणायने षण्मासान् प्राप्नुवन्तः संयुज्य पुनर्व्यावर्तन्ते, अन्ये संवत्सरमन्ये मासेभ्यः पितृलोकम्– इति व्याख्याता। पुनरावृत्तिरपि क्षीणानुशयानां चन्द्रमण्डलादाकाशादिक्रमेणोक्ता। अमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तम्– तेनासौ लोको न संपूर्यते इति। यस्मादेवं कष्टा संसारगतिस्तस्माज्जुगुप्सेत। यस्माच्च जन्ममरणजनितवेदनानुभवकृतक्षणाः क्षुद्रजन्तवो ध्वान्ते च घोरे दुस्तरे प्रवेशिताः सागर इवागाधेऽप्लवे निराशाश्चोत्तरणं प्रति, तस्माच्चैवंविधां संसारगतिं जुगुप्सेत बीभत्सेत घृणी भवेत्– मा भूदेवंविधे संसारमहोदधौ घोरे पात इति। तदेतस्मिन्नर्थे एष श्लोकः पञ्चाग्निविद्यास्तुतये। शंकर.

**स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन्ब्रह्महा च। एते पतन्ति चत्वारः पञ्चमश्चाऽऽचरꣳस्तैरिति॥**

स्तेनः हिरण्यस्य ब्राह्मणसुवर्णस्य हर्ता। सुरां पिबन् ब्राह्मणः सन्। गुरोश्च तल्पं दारानावसन्। ब्रह्महा ब्राह्मणस्य हन्ता च। इत्येते पतन्ति चत्वारः। पञ्चमश्च तैः सहाऽऽचरन्निति। शंकर.

**अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते। शुद्धः पूतः पुण्यलोको भवति य एवं वेद॥**

अथ ह पुनर्यो यथोक्तान् पञ्चाग्नीन् वेद, स तैरप्याचरन् महापातकिभिः सह न पाप्मना लिप्यते, शुद्ध एव। तेन पञ्चाग्निदर्शनेन पावितो यस्मात्पूतः, पुण्यो लोकः प्राजापत्यादिर्यस्य सोऽयं पुण्यलोको भवति। य एवं वेद यथोक्तं समस्तं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद। शंकर.

कैकेयस्य अश्वपतेः राज्ञः निष्पापः पुण्यरतो जनपदः

**[1]तान्होवाच। अश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति। तꣳ हन्ताभ्यागच्छामेति। तꣳ हाभ्याजग्मुः॥**

एवं संपाद्य तान्होवाच– अश्वपतिर्वै नामतः, भगवन्तः, अयं केक(? के)यस्यापत्यं कैकेयः संप्रति सम्यगिममात्मानं वैश्वानरमध्येति। शंकर.

**तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार। स ह प्रातः संजिहान उवाच– न मे स्तेनो जन-**

(१) छान्दो. ५।११।४–५.

पदे न कदर्यो न मद्यपः। नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः। यक्ष्यमाणो वै भगवन्तोऽहमस्मि। यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि। वसन्तु भगवन्त इति ॥

तेभ्यो ह राजा प्राप्तेभ्यः पृथक्पृथगर्हाणि अर्हणानि पुरोहितैर्भृत्यैश्च कारयांचकार कारितवान्। स हान्येद्यू राजा प्रातः संजिहान उवाच विनयेनोपगम्यैतद्धनं मत्त उपादध्वमिति। तैः प्रत्याख्यातः, मयि दोषं पश्यन्ति नूनं यतो न प्रतिगृह्णन्ति मत्तो धनमिति मन्वानः, आत्मनः सद्वृत्ततां प्रतिपिपादयिषन्नाह— न मे मम जनपदे स्तेनः परस्वहर्ता विद्यते। न कदर्यः अदाता सति विभवे। न मद्यपो द्विजोत्तमः सन्। नानाहिताग्निः शतगुः। नाविद्वानधिकारानुरूपम्। न स्वैरी परदारेषु गन्ता। अत एव स्वैरिणी कुतः? दुष्टचारिणी न संभवतीत्यर्थः। तैश्च न वयं धनेनार्थिन इत्युक्त आह— अल्पं मत्वैते धनं न गृह्णन्तीति। यक्ष्यमाणो वै कतिभिरहोभिरहं हे भगवन्तः, अस्मि। तदर्थं क्लृप्तं धनं मया यावदेकैकस्मै यथोक्तमृत्विजे धनं दास्यामि तावत्प्रत्येकं भगवद्भ्योऽपि दास्यामि। वसन्तु भगवन्तः पश्यन्तु च मम यागमिति। शंकर.

* [1]ब्रह्म वा इदमग्र आसीदेकमेव। तदेकꣳसन्न व्यभवत्। तच्छ्रेयोरूपमत्यसृजत क्षत्रं, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात्क्षत्रात्परं नास्ति। तस्माद्ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये। क्षत्र एव तद्यशो दधाति। सैषा क्षत्रस्य योनिर्यद्ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिम्। य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति, स पापीयान् भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥

स नैव व्यभवत्। स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥

क्षत्रे सृष्टेऽपि स नैव व्यभवत्, कर्मणे ब्रह्म तथा न व्यभवत्, वित्तोपार्जयितुरभावात्। स विशमसृजत कर्मसाधनवित्तोपार्जनाय। कः पुनरसौ विट्? यान्येतानि देवजातानि, स्वार्थे निष्ठा, य एते देवजातिभेदा इत्यर्थः। गणशः गणं गणं आख्यायन्ते कथ्यन्ते, गणप्राया हि विशः। प्रायेण संहता हि वित्तोपार्जने समर्थाः, न एकैकशः। वसवः अष्टसंख्यो गणः, तथैकादश रुद्राः, द्वादश आदित्याः, विश्वेदेवास्त्रयोदश विश्वाया अपत्यानि सर्वे वा देवाः, मरुतः सप्त सप्त गणाः। शंकर.

स नैव व्यभवत्। स शौद्रं वर्णमसृजत पूषणम्। इयं वै पूषा। इयꣳ हीदꣳ सर्वं पुष्यति यदिदं किंच ॥

सः परिचारकाभावात्पुनरपि नैव व्यभवत्। स शौद्रं वर्णमसृजत, शूद्र एव शौद्रः, स्वार्थेऽणि वृद्धिः। कः पुनरसौ शौद्रो वर्णः, यः सृष्टः? पूषणं, पुष्यतीति पूषा। कः पुनरसौ पूषेति विशेषतस्तन्निर्दिशति— इयं पृथिवी वै पूषा। स्वयमेव निर्वचनमाह— इयं हि इदं सर्वं पुष्यति यदिदं किंच। शंकर.

स नैव व्यभवत्। तच्छ्रेयोरूपमत्यसृजत धर्मम्। तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः। तस्माद्धर्मात्परं नास्ति। अथो अबलीयान् बलीयाꣳसमाशꣳसते धर्मेण। यथा राज्ञैवम्। यो वै स धर्मः सत्यं वै तत्। तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति। धर्मं वा वदन्तꣳ सत्यं वदतीति। एतद्ध्येवैतदुभयं भवति ॥

स चतुरः सृष्ट्वाऽपि वर्णान् नैव व्यभवत् उग्रत्वात्क्षत्रस्यानियतताशङ्कया। तत् श्रेयोरूपमत्यसृजत। किं तत्? धर्मम्। तदेतत् श्रेयोरूपं सृष्टं क्षत्रस्य क्षत्रं क्षत्रस्यापि नियन्तृ। उग्रादप्युग्रम्। यद्धर्मः यो धर्मः। तस्मात्

---

* अस्य व्याख्यानं 'मानवो राजा, तस्य कर्माणि च' इत्यस्मिन् प्रकरणे ( राका. पृ. ३५४ ) द्रष्टव्यम्।

( १ ) बृउ. १।४।११-१५

क्षत्रस्यापि नियन्तृत्वात् धर्मात्परं नास्ति, तेन हि नियम्यन्ते सर्वे । तत्कथमिति उच्यते– अथो अपि अबलीयान् दुर्बलतरः बलीयांसं आत्मनो बलवत्तरमपि आशंसते कामयते जेतुं धर्मेण बलेन । यथा लोके राज्ञा सर्वबलवत्तमेनाल्पः कुटुम्बिकः, एवम् । तस्मात्सिद्धं धर्मस्य सर्वबलवत्तरत्वात्सर्वनियन्तृत्वम् । यो वै स धर्मः व्यवहारलक्षणः लौकिकैर्व्यवह्रियमाणः सत्यं वै तत् । सत्यमिति यथाशास्त्रार्थता । स एवानुष्ठीयमानो धर्मनामा भवति, शास्त्रार्थत्वेन ज्ञायमानस्तु सत्यं भवति । यस्मादेवं तस्मात्, सत्यं यथाशास्त्रं वदन्तं व्यवहारकाले आहुः समीपस्था उभयविवेकज्ञाः– धर्मं वदतीति, प्रसिद्धं लौकिकं न्यायं वदतीति । तथा विपर्ययेण धर्मं वा लौकिकं व्यवहारं वदन्तमाहुः – सत्यं वदति, शास्त्रादनपेतं वदतीति । एतत् यदुक्तं उभयं ज्ञायमानमनुष्ठीयमानं च एतत् धर्म एव भवति । तस्मात्स धर्मो ज्ञानानुष्ठानलक्षणः शास्त्रज्ञानितरांश्च सर्वानेव नियमयति । तस्मात्स क्षत्रस्यापि क्षत्रम् । अतस्तदभिमानोऽविद्वान् तद्विशेषानुष्ठानाय ब्रह्मक्षत्रविट्शूद्रनिमित्तविशेषमभिमन्यते । तानि च निसर्गतः एव कर्माधिकारनिमित्तानि । शंकर.

**तदेतद्ब्रह्म क्षत्रं विट् शूद्रः । तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु, क्षत्रियेण क्षत्रियः, वैश्येन वैश्यः, शूद्रेण शूद्रः । तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येषु । एताभ्याᳪ हि रूपाभ्यां ब्रह्माभवत् ॥**

तदेतच्चातुर्वर्ण्यं सृष्टं– ब्रह्म क्षत्रं विट् शूद्र इति । उत्तरार्थं उपसंहारः । यत्तत् स्रष्टृ ब्रह्म, तदग्निनैव, नान्येन रूपेण, देवेषु ब्रह्म ब्राह्मणजातिः अभवत् । ब्राह्मणः ब्राह्मणस्वरूपेण, मनुष्येषु ब्रह्माभवत् । इतरेषु वर्णेषु विकारान्तरं प्राप्य, क्षत्रियेण क्षत्रियोऽभवत् इन्द्रादिदेवताधिष्ठितः, वैश्येन वैश्यः, शूद्रेण शूद्रः । यस्मात्क्षत्रादिषु विकारापन्नं, अग्नौ ब्राह्मण एव चाविकृतं स्रष्टृ ब्रह्म, तस्मादग्नावेव देवेषु देवानां मध्ये लोकं कर्मफलं इच्छन्ति, अग्निसंबद्धं कर्म कृत्वेत्यर्थः । तदर्थमेव हि तद्ब्रह्म कर्माधिकरणत्वेनाग्निरूपेण व्यवस्थितम् । तस्मात्तस्मिन्नग्नौ कर्म कृत्वा तत्फलं प्रार्थयन्ते इत्येतदुपपन्नम् । ब्राह्मणे मनुष्येषु मनुष्याणां पुनर्मध्ये कर्मफलेच्छायां नाग्न्यादिनिमित्तक्रियापेक्षा, किं तर्हि ? जातिमात्रस्वरूपप्रतिलम्भेनैव पुरुषार्थसिद्धिः । यत्र तु देवाधीना पुरुषार्थसिद्धिः तत्रैवाग्न्यादिसंबद्धक्रियापेक्षा । स्मृतेश्च– 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' (मस्मृ. २।८७) इति । पारिव्राज्यदर्शनाच्च । तस्माद्ब्राह्मणत्व एव मनुष्येषु लोकं कर्मफलमिच्छन्ति । यस्मादेताभ्यां हि ब्राह्मणाग्निरूपाभ्यां कर्मकर्त्रधिकरणरूपाभ्यां यत्स्रष्टृ ब्रह्म साक्षादभवत् । शंकर.

---

## पुरः

पुरो जनानां रक्षिकाः

**[1]अच्छिद्रा सूनो सहसो नो अद्य
स्तोतृभ्यो मित्रमहः शर्म यच्छ ।
अग्ने गृणन्तमंहस उरुष्यो-
र्जो नपात्पूर्भिरायसीभिः ॥**

हे सहसः सूनो बलस्य पुत्र । बलेन हि मथ्यमानोऽग्निर्जायते । मित्रमहः अनुकूलदीप्तिमन्नग्ने, नः अस्मभ्यं स्तोतृभ्यः अद्य अस्मिन् कर्मणि अच्छिद्रा अच्छेद्यानि शर्म शर्माणि सुखानि यच्छ देहि । किंच, हे ऊर्जो नपात् अन्नस्य पुत्र । भुक्तेनान्नेन जठराग्नेः प्रवर्धनादग्नेरन्नपुत्रत्वम् । एवंविध अग्ने, गृणन्तं त्वां स्तुवन्तं आयसीभिः व्याप्तैः, यद्वा अयोवत् दृढतरैः, पूर्भिः पालनैः अंहसः पापात् उरुष्य रक्ष । 'उरुष्यती रक्षाकर्मा' (नि. ५।२३) इति यास्कः । ऊर्जो नपात् । न पातयतीति नपात् । ऋसा.

---

(१) ऋसं. १।५८।८.

मरुतां सेनया शतगुणप्राकाराभिः पूर्भिः मानवा रक्षिताः

[1]शतभुजिभिस्तमभिह्रुतेरघात्
पूर्भी रक्षता मरुतो यमावत ।
जनं यमुग्रास्तवसो विरप्शिनः
पाथना शंसात्तनयस्य पुष्टिषु ॥

हे मरुतः, यूयं शतभुजिभिः । शतमित्यपरिमित-नाम । असंख्यातभोगवद्भिः पूर्भिः पालनैः जेतव्यैः शत्रूणां नगरैर्वा, तं रक्षत पालयत । तमित्युक्तं कमित्याह— यं जनं अभिह्रुतेः अभिभवकारणात् कुटिलस्वभावात् अघात् पापात् आवत अरक्षत । किंच, हे उग्राः उद्गूर्णतेजसः, हे तवसः बलवन्तो वेगवन्तो वा, हे विरप्शिनः । महन्नामैतत् । महान्तः । रपणीयाः शब्दाः रपाः । ते येषां ते रप्शिनः । विविधा रप्शिनः स्तोतारो येषां ते तथोक्ताः । हे तादृशाः, यूयं यं च जनं पाथन पाथ रक्षथ । कस्मान्निमित्तादिति उच्यते— तनयस्य । उपलक्षणमेतत् । पुत्रादीनां पुष्टिषु पोषेषु निमित्तभूतेषु शंसात् अभिशंसनात् । यमेत्रं कुरुथ तं रक्षतेति शेषः । पापक्षयाद्यनिष्टपरिहारेण पुत्रादिपोषरूपेष्टप्राप्त्या च रक्षथेत्यर्थः । ऋसा.

जनाः सुशासनार्थं पुरः पतिं पूजयन्ति

[2]विष्पर्धसो नरां न शंसै-
रस्माकासदिन्द्रो वज्रहस्तः ।
मित्रायुवो न पूर्पतिं सुशिष्टौ
मध्यायुव उप शिक्षन्ति यज्ञैः ॥

नरां नेतॄणां मध्ये सस्पर्धान् नरान् यथा विस्पर्धसः कुर्वन्ति सखिभूताः तद्वत् वयमपीन्द्रं शंसैः स्तुतिभिः सखायो वयं तं तथा कुर्मः । स च वज्रहस्तः विरोधि-शिक्षणाय सर्वदा वज्रधारी इन्द्रः अस्माकं असत् । विस्पर्धमनुकूलो भवतु । किंच, मित्रायुवो न मित्रेच्छवो हितैषिण इव सुशिष्टौ सुशासने वर्तमानं पूर्पतिं पुरः स्वामिनं यथा अभिमतदानेन पूजयन्ति तथा मध्यायुवः अस्माकं श्रियां यशसां च मध्येऽवस्थितिं कामयमाना अध्वर्य्वादयः यज्ञैः यज्ञसाधनैः हविःस्तोत्रादिभिः उप शिक्षन्ति उपेत्य यजन्ते । शिक्षतिर्दानकर्मा । ऋसा.

(१) ऋसं. १।१६६।८.
(२) ऋसं. १।१७३।१०.

शतेन पूर्भिः रक्षणम्

[1]विश्वासां गृहपतिर्विशामसि
त्वमग्ने मानुषीणाम् ।
शतं पूर्भिर्यविष्ठ पाह्यंहसः समेद्धारं शतं हिमाः
स्तोतृभ्यो ये च ददति ॥

हे अग्ने, त्वं मानुषीणां मनोरपत्यभूतानां विश्वासां सर्वासां विशां प्रजानां गृहपतिः असि गृहस्वामी भवसि । हे यविष्ठ युवतमाग्ने, अतस्त्वं शतं हिमाः शतं हेमन्तान् संवत्सरान् समेद्धारं त्वां सम्यगिद्धं कृतवन्तं मां शतं शतेन शतसंख्याकैः पूर्भिः पालनैः अंहसः पापात् आहन्तुः शत्रोर्वा पाहि रक्ष । ये च स्तोतृभ्यः ददति धनं तव समिन्धनस्य कर्तरि प्रयच्छन्ति तांश्च पाहि । ऋसा.

जनानां शतप्राकाराभिः पूर्भिः रक्षणम्

[2]यथा वः स्वाहाग्नये दाशेम
परीळाभिर्घृतवद्भिश्च हव्यैः ।
तेभिर्नो अग्ने अमितैर्महोभिः
शतं पूर्भिरायसीभिर्नि पाहि ॥

हे अग्ने, अग्नये अग्रस्य नेत्रे वः तुभ्यं स्वाहा स्वाहुतं हविः । किंच, यथा वयं इळाभिः गोभिः गोविकारैः क्षीरादिभिः घृतवद्भिः घृतसहितैः हव्यैः पुरोडाशादिभिः च ( परि ) दाशेम परिचरेम तथा त्वमपि तेभिः प्रसिद्धैः अमितैः अपरिमितैः महोभिः तेजोभिः शतं अपरि-मिताभिः आयसीभिः हिरण्मयीभिः, ' रुक्मं अयः ' ( निघण्टुः १।२।४ ) इति हिरण्यनामसु पाठात् । पूर्भिः नगरीभिरिव नः अस्मान् नि पाहि नितरां रक्ष । ऋसा.

(१) ऋसं. ६।४८।८ ; तैआ. ४।७।५ विश्वासां (त्वमग्ने) त्वमग्ने (विश्वासां) (स्तोतृभ्यो ये च ददति० ).
(२) ऋसं. ७।३।७.

[1]अधा मही न आयस्यनाधृष्टो नृपीतये ।
पूर्भवा शतभुजिः ॥

अध अधुना हे अग्ने, अनाधृष्टः अप्रतिधर्षणीयस्त्वं नः अस्माकं नृपीतये नृणां रक्षणार्थं मही महती आयसी अयसा निर्मिता शतभुजिः अत्यन्तं विस्तृता शतगुणा पूः पुरी । तद्रक्षासाधनभूतप्राकारादिर्वा पूरुच्यते । भव । यथा अयसा निर्मिता पुरी तद्रक्षासाधनभूतप्राकारादिर्वा शत्रुभ्यो भीतान् रक्षति तद्वद्राक्षसेभ्यो भीतानस्मान् पाहीत्यर्थः । ऋसा.

[2]ये राधांसि ददत्यश्व्या मघा
कामेन श्रवसो महः ।
ताँ अंहसः पिपृहि पर्तृभिष्ट्वं
शतं पूर्भिर्यविष्ठ्य ॥

हे यविष्ठ्य युवतमाग्ने, त्वं ये यजमानाः महः महतः श्रवसः यशसः कामेन इच्छया, यशस्कामाः सन्त इत्यर्थः । राधांसि साधकानि अश्व्या अश्वात्मकानि मघा मघानि ददति तान् दातॄन् अंहसः पापात् शत्रोर्वा पर्तृभिः रक्षासाधनभूतैः शतं अपरिमिताभिः पूर्भिः नगरीभिश्च पिपृहि पालय । ऋसा.

दुर्गे निहितो निधिः

[3]अयं निधिः सरमे अद्रिबुध्नो
गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्ति तं पणयो ये सुगोपा
रेकु पदमलकमा जगन्थ ॥

ते पुनराहुः– हे सरमे, अयं निधिः अस्मदीयः कोशः अद्रिबुध्नः अद्रिः बन्धको यस्य तादृशः । तथा, आहृतैः गोभिः अश्वेभिः अश्वैश्च वसुभिः आत्मीयैर्धनैश्च न्यृष्टः नितरां प्राप्तो भवति । सुगोपाः सुष्ठु गोपायितारः ये पणयः तेऽसुराः तं निधिं रक्षन्ति पालयन्ति । रेकु शङ्कितं गोभिः शब्दायमानं पदं अस्माभिः पालितं स्थानं अलकं व्यर्थमेव आ जगन्थ आगतवत्यसि । ऋसा.

(१) ऋसं. ७।१५।१४.
(२) ऋसं. ७।१६।१०.
(३) ऋसं. १०।१०८।७.

---

## भाषा

### राष्ट्री वाक्

[1]यद्वाग्वदन्त्यविचेतनानि
राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं दुदुहे पयांसि
क्व स्विदस्याः परमं जगाम ॥

राष्ट्री राजनशीला देवानां मन्द्रा मादयित्री (मोहयित्री) वा यत् यदा वाक् अविचेतनानि विज्ञानरहितान् अप्रज्ञातानर्थान् वदन्ती प्रज्ञापयन्ती निषसाद यज्ञे निषीदति तदा चतस्रः दिशः प्रति ऊर्जं अन्नं पयांसि तत्कारणभूतानि उदकानि दुदुहे । अस्याः माध्यमिकायाः वाचः स्वभूतं यत् परमं श्रेष्ठं तत् क्व जगाम क्व गच्छतीति न दृश्यते इत्यर्थः । तथा च यास्कः– 'यद्वाग्वदन्त्यविचेतनान्यविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगामेति यत्पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा' (नि. ११।२८) इति । ऋसा.

[2]देवीं वाचमजनयन्त देवा-
स्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना
धेनुर्वागस्मानुप सुष्टुतैतु ॥

(१) ऋसं. ८।१००।१०; तैब्रा. २।४।६।११; आश्रौ. १।३।८; नि. ११।२८.

(२) ऋसं. ८।१००।११; तैब्रा. २।४।६।१०; आश्रौ. १।३।८; नि. ११।२९; पागृ. १।१९।२.

एषा माध्यमिका वाक् सर्वप्राण्यन्तर्गता धर्माभिवादिनी भवतीति विभूतिमुपदर्शयति– यां देवीं द्योतमानां माध्यमिकां वाचं देवाः माध्यमिकाः अजनयन्त जनयन्ति तां वाचं विश्वरूपाः सर्वरूपाः व्यक्तवाचोऽव्यक्तवाचश्च पशवो वदन्ति, तत्पूर्वकत्वाद्वाक्प्रवृत्तेः। सा वाक् देवी मन्द्रा मदना स्तुत्या हर्षयित्री वा वृष्टिप्रदानेन (नः) अस्मभ्यं इषं अन्नं ऊर्जं पयोघृतादिरूपं रसं च दुहाना क्षरन्ती धेनुः धेनुभूता सुष्टुता अस्माभिः स्तुता अस्मान्, नेमान्, उप ऐतु उपगच्छतु, वर्षणायोद्युक्तेत्यर्थः। तथा च यास्कः– 'देवीं वाचमजनयन्त देवास्तां विश्वरूपाः (? सर्वरूपाः) पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च सा नो मदनाऽन्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता' (नि. ११।२९) इति। ऋसा.

वाङ्महिमा, तस्या उत्पत्तिः कार्यं च

'बृहस्पते प्रथमं वाचो अग्रं
यत्प्रैरत नामधेयं दधानाः।
यदेषां श्रेष्ठं यदरिप्रमासीत्
प्रेणा तदेषां निहितं गुहाविः॥

बृहस्पतिरनेन सूक्तेन विदितवेदार्थान् बालान् दृष्ट्वा स्मयमानः स्वात्मानं संबोध्याऽऽह– हे बृहस्पते अन्तरात्मन्, प्रथमं उत्पत्त्यनन्तरमितरवागुच्चारणात्प्रागेव नामधेयं नाम दधानाः पदार्थेषु निदधाना बालाः यत् प्रैरत प्रेरितवन्तः तत् वाचोऽग्रं भवति। यत् तत तातेत्यादिकं वाक्यं पूर्वमभिधाय पश्चादन्या वाचो वदिष्यन्ति खलु तस्मात् वाचोऽग्रम्। अस्यां दशायामवस्थितान् बालान् पश्य। तथा इदानीं एषां श्रेष्ठं प्रशस्यतमं यत् यच्च अरिप्रं पापरहितं वेदार्थज्ञानमासीत् एषां तज्ज्ञानं गुहा गुहायां निहितं गोप्यं तत् प्रेणा। मकारलोपश्छान्दसः। प्रेम्णा आविर्भवति, वेदाभ्यासकाले सरस्वती स्वार्थमेभ्यः प्रकाशयतीत्यर्थः। एवं विस्मये 'बृहस्पते प्रथमं वाचो अग्रम्' (ऐआ. १।३।३।४) इत्यादिकमारण्यकमनुसंधेयम्। ऋसा.

'सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधि वाचि॥

तितउना। परिपूयते अनेनेति। यद्वा, ततः विस्तृताः भृष्टयवाः अत्रेति तितउः। उक्तनिर्वचनेन सूर्पेण सक्तुमिव यथा कश्चित् सक्तुं दुर्धावं पुनाति तद्वत् प्रकृतितः प्रत्ययतश्च शब्दानुत्पुनन्तः धीराः धीमन्तो विद्वांसः यत्र यस्मिन् काले विद्वत्संघे वा मनसा प्रज्ञायुक्तेन वाचमक्रत अकृषत कुर्वन्ति। अत्र तत्र काले सखायः समानख्यानाः शास्त्रादिविषयज्ञानाः ते सख्यानि तेषु भवानि ज्ञानानि जानते जानन्ति। यद्वा, सखायः वाचा बद्धसख्याः ते तस्याः तस्याः वाचः सख्यानि जानन्ति, वाक्ययुक्तानभ्युदयान् लभन्ते इत्यर्थः। तस्मात् एषां वाचि भद्रा कल्याणी निहिता लक्ष्मीः भवति। अधिः सप्तम्यर्थद्योतकः। अर्थज्ञानं वाचि पश्याम इत्यर्थः। 'तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा सक्तुमिव तितउना' (नि. ४।९) इत्यादि निरुक्तमनुसंधेयम्। ऋसा.

'यज्ञेन वाचः पदवीयमायन्
तामन्वविन्दन्नृषिषु प्रविष्टाम्।
तामाभृत्या व्यदधुः पुरुत्रा
तां सप्त रेभा अभि सं नवन्ते॥

विदितार्थाः धीराः पदवीयम्। पदेन यातव्यः पन्थाः पदवीयः। तं वाचः मार्गं यज्ञेन आयन् प्राप्तवन्तः। ऋषिषु अतीन्द्रियार्थदर्शिषु प्रविष्टां तां वाचं अविन्दन् अलभन्त। अनन्तरं तां वाचं आभृत्य आहृत्य पुरुत्रा बहुषु देशेषु व्यदधुः व्यकार्षुः, सर्वान् मनुष्यानध्यापया-

(१) ऋसं. १०।७१।१; ऐआ. १।३।३।४–७; आश्रौ. १।४।११.

(१) ऋसं. १०।७१।२; नि. ४।९.
(२) ऋसं. १०।७१।३; आश्रौ. १।३।८.

मामुरित्यर्थः। एतादृशीं (तां) वाचं रेभाः शब्दायमानाः पक्षिणः पक्षिरूपाणि गायत्र्यादीनि सप्त छन्दांसि अभि सं नवन्ते अभितः संगच्छन्ते। ऋसा.

'उत त्वः पश्यन्न ददर्श वाच-
मुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं[1] वि सस्रे
जायेव पत्य उशती सुवासाः॥

त्वशब्दः एकवाची। एकः। उतशब्दोऽप्यर्थे। पश्यन् अपि मनसा पर्यालोचयन्नपि वाचं न ददर्श दर्शनफलाभावान्न पश्यति। त्वः एकः शृण्वन् अपि एनां वाचं न शृणोति, श्रवणफलाभावात्। इत्यनेनार्धेन अविद्वानभिहितः। तृतीयपादेन विदितवेदार्थमाह– त्वस्मै एकस्मै अपि तन्वं आत्मीयं शरीरं वि सस्रे स्वयं वाक् विविधं गमयति आत्मानं विवृणुते, प्रकाशयतीत्यर्थः। तत्र दृष्टान्तः– जायेव। यथा उशती संभोगं कामयमाना सुवासाः शोभनवसना जाया पत्ये भर्त्रे ऋतुकाले संभोगार्थं स्वयमात्मानं विवृणुते। तद्वदेनां पश्यति शृणोति चेति विदितवेदार्थस्य प्रशंसा। 'अप्येकः पश्यन्न पश्यति वाचं' (नि. १।१९) इत्यादि निरुक्तमत्र द्रष्टव्यम्। ऋसा.

'उत त्वं सख्ये स्थिरपीतमाहु-
र्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष
वाचं शुश्रुवाँ अफलामपुष्पाम्॥

त्वं उत एकमपि सख्ये विदुषां संसदि या सत्कथा सा सखिकर्मत्वात् सख्यमित्युच्यते। सा च वाचा क्रियते। अतो वाक्संबन्धात् वाक्सख्ये स्थिरपीतं मधु यस्य हृदये स्थिरं भवति। यद्वा, स्थिरपीतं स्थिरप्राप्तिं आहुः। यद्वा, तस्मिन् ज्ञातार्थमाहुः। लोके यथा ज्ञातार्थं पुरुषं पीतार्थमिति वदन्ति। किंच, एनं विज्ञातार्थं पुरुषं वाजिनेषु। वाक् इना ईश्वरा येषां ते वाजिनाः अर्थाः वाच आयत्ताः खलु। वाग्ज्ञेयेष्वर्थेषु न अपि हिन्वन्ति। अपिशब्दोऽन्वर्थे। केचिदपि नानुगच्छन्ति। अयमेवातिशयेन विद्वानित्यर्थः। यद्वा, वाजिनेषु सारभूतेषु निरूपणीयेष्वर्थेषु एनं न हिन्वन्ति न बहिः कुर्वन्ति, एनं पुरस्कृत्यैव सर्वे वेदार्थं विचारयन्तीत्यर्थः। इति अर्थज्ञः प्रशस्तः। अनन्तरमुत्तरार्धेन केवलपाठको निन्द्यते– एषः अविज्ञातार्थः पुरुषः अधेन्वा धेनुत्वविवर्जितया कामानामदोग्ध्र्या देवमनुष्यस्थानेषु वाक्प्रतिरूपया मायया चरति। किं कुर्वन्? अफलामपुष्पाम्। वाचोऽर्थः पुष्पफलम्। अर्थवर्जिताम्। यद्वा, वाचोऽर्थो याज्ञदैवते। यज्ञे भवं ज्ञानं याज्ञम्। देवतासु भवं ज्ञानं दैवतम्। तद्वर्जितां कर्मादिविषयज्ञानवर्जितां वाचं शुश्रुवान्। केवलं पाठमात्रेणैव श्रुतवान् स चरति। यथा वन्ध्या पीना गौः किं द्रोणमात्रं क्षीरं दोग्धीति मायामुत्पादयन्ती चरति, यथा वन्ध्यो वृक्षोऽकाले पल्लवादियुक्तः सन् पुष्प्यति फलतीति भ्रान्तिमुत्पादयँस्तिष्ठति तथा पाठं प्रब्रुवाणः चरतीत्यर्थः। 'अप्येकं वाक्सख्ये स्थिरपीतम्' (नि. १।२०) इत्यादि निरुक्तमत्रानुसंधेयम्। ऋसा.

'यस्तित्याज सचिविदं सखायं
न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति
नहि प्रवेद सुकृतस्य पन्थाम्॥

सचिविदम्। सचिशब्दः सखिवाची। सखिविदम्। यः अध्येता सः वेदस्य सखा, संप्रदायोच्छेदनिवारकत्वेन वेदं प्रत्युपकारित्वात्। तादृशमुपकारिणमध्येतारं वेत्तीति सचिवित्। तमभिज्ञं सखायं अध्येतॄणां पुरुषाणां स्वार्थबोधनेनोपकारित्वात् सखिभूतं वेदं यः पुमान् तित्याज तत्याज पदार्थविनियोगेन परित्यजति, तस्य पुरुषस्य वाचि सर्वस्यां लौकिक्यां शास्त्रीयायां वाच्यपि भागः भजनीयः कश्चिदर्थः न अस्ति। ईं अयं पुरुषः यत् वेदव्यतिरिक्तं शृणोति तत् अलकं अलीकं व्यर्थमेव

(१) ऋसं. १०।७१।४; नि. १।१९.
(२) ऋसं. १०।७१।५; नि. १।२०.

(१) ऋसं. १०।७१।६; ऐआ. ३।२।४।३; तैआ. १।३।१, २।१५।१ सचि (सखि).

शृणोति । हि यस्मात् कारणात् सुकृतस्य पन्थां पन्थानं न प्रवेद श्रद्धाराहित्यादनुष्ठानमार्गं न जानाति । तस्मात् तदीयश्रवणमपि निष्फलमित्यर्थः । द्वितीयचतुर्थपादयोरभिप्रायः आरण्यके दर्शितः– 'न तस्यानूक्ते भागोऽस्ति' (ऐआ. ३।२।४) इत्यादिना । तथा 'तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाऽभ्युक्ता' (तैआ. २।१५।५) इत्यध्वर्युभिश्च । ऋसा.

'अक्षण्वन्तः कर्णवन्तः सखायो
मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे
ह्रदाइव स्नात्वा उ त्वे ददृश्रे ॥

अक्षण्वन्तः अक्षिमन्तः । अनेन दृश्यते सर्वमित्यक्षि । यद्वा, तैजसत्वात् अन्येभ्योऽङ्गेभ्यो व्यक्ततरम् । तथा च श्रूयते– 'तस्मादेते व्यक्ततरे इव' इति । तादृशाक्षियुक्ताः । कर्णवन्तः । कर्णौ निकृत्तद्वारः, गर्भावस्थायामेव केनापि निर्मितबिल इत्यर्थः । यद्वा, शरीरस्य शिरसो वोर्ध्वे गते उच्चैः स्थिते (बिले कर्णौ) । कर्णविलक्षणा(? कर्णबिललक्षणा)काशवन्तः । तथा चाऽऽम्नायते– 'ऋच्छन्ती इव खे उदगन्ताम्' इति । तादृशाः सखायः । समानं ख्यानं ज्ञानं येषामिति सखायः, तेषु वाक्येषु बाह्येष्विन्द्रियेषु समानज्ञाना इत्यर्थः । ते मनोजवेषु । मनसा गम्यन्ते ज्ञायन्ते इति मनोजवाः प्रज्ञाद्याः । तेषु असमाः अतुल्याः बभूवुः भवन्ति । तेषु मध्ये केचित् आदघ्नासः । आस्यशब्दस्य पृषोदरादित्वादाकारादेशः । आस्यदघ्नाः आस्यप्रमाणोदकाः ह्रदाइवेति मध्यमप्रज्ञानाह । अथ त्वे एके उपकक्षासः कक्षसमीपप्रमाणोदकाः ह्रदा इव, अल्पोदका इत्यर्थः । अनेनाल्पप्रज्ञानाह । तथा त्वे एके स्नात्वाः स्नानार्हाः अक्षोभ्योदकाः ह्रदा इव ददृश्रे दृश्यन्ते । अनेन महाप्रज्ञानाह । उः पूरणः । 'अक्षिमन्तः कर्णवन्तः सखायोऽक्षि चष्टेः' (नि. १।९) इत्यादिकं निरुक्तमत्र द्रष्टव्यम् । ऋसा.

(१) ऋसं. १०।७१।७ ; नि. १।९.

'ह्रदा तष्टेषु मनसो जवेषु
यद्ब्राह्मणाः संयजन्ते सखायः ।
अत्राऽऽह त्वं वि जहुर्वेद्याभि-
रोहब्रह्माणो वि चरन्त्यु त्वे ॥

सखायः समानख्यानाः ब्राह्मणाः ह्रदा बुद्धिमतां हृदयेन तष्टेषु निश्चितेषु परिकल्पितेषु मनसो जवेषु गन्तव्येषु वेदार्थेषु गुणदोषनिरूपणाः यत् यदा संयजन्ते संगच्छन्ते । यजिरत्र संगतिकरणवाची । अत्र अस्मिन् ब्राह्मणसंघे त्वं अविज्ञातार्थमेकं पुरुषं वेद्याभिः वेदितव्याभिः विद्याभिः प्रवृत्तिभिर्वा वि जहुः विशेषेण परित्यजन्ति । अह इति विनिश्चये । ओहब्रह्माणः । ऊह्यमानं ब्रह्म विद्याश्रुतिमतिबुद्धिलक्षणं येषां ते तथोक्ताः । तादृशाः ते (? त्वे) एके विद्वांसः वि चरन्ति यथाकामं वेदार्थेषु विनिश्चयार्थं प्रवर्तन्ते । उः प्रसिद्धौ । 'ह्रदा तष्टेषु मनसां प्रजवेषु' (नि. १३।१३) इत्यादिकं निरुक्तं द्रष्टव्यम् । ऋसा.

'इमे ये नार्वाङ्न परश्चरन्ति
न ब्राह्मणासो न सुतेकरासः ।
त एते वाचमभिपद्य पापया
सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥

अनया वेदार्थानभिज्ञा निन्द्यन्ते । इमे ये अविद्वांसः अर्वाक् अर्वाचीनं अधोभाविन्यस्मिँल्लोके ब्राह्मणैः सह न चरन्ति, ये परः परस्तात् देवैः सह न चरन्ति ते ब्राह्मणासः ब्राह्मणाः वेदार्थतत्पराः न भवन्ति । तथा, सुतेकरासः । सोमं सुतं अभिषुतं कुर्वन्तीति सुतेकराः ऋत्विजः । तेऽपि न भवन्ति । अप्रजज्ञयः अविद्वांसः त एते मनुष्याः वाचं लौकिकीं अभिपद्य प्राप्य तया पापया पापकारिण्या वाचा युक्तास्ते सिरीः सीरिणो भूत्वा तन्त्रं कृषिलक्षणं तन्वते विस्तारयन्ति, कुर्वन्तीत्यर्थः । सर्वथा वेदार्थो ज्ञेय इत्यभिप्रायः । ऋसा.

(१) ऋसं. १०।७१।८ ; नि. १३।१३.

(२) ऋसं. १०।७१।९.

[1]सर्वे नन्दन्ति यशसाऽऽगतेन
सभासाहेन सख्या सखायः ।
किल्बिषस्पृत्पितुषणिर्ह्येषा-
मरं हितो भवति वाजिनाय ॥

सखायः समानख्यानाः समानज्ञानाः सर्वे सभ्याः मनुष्याः सभासहेन सभां सोढुं शक्नुवता सख्या ऋत्विजां सखिभूतेन यज्ञं प्रति आगतेन यशसा यशस्विना सोमेन हेतुना नन्दन्ति हृष्टा भवन्ति । स हि स एव सोमः एषां जनानां किल्बिषस्पृत् । यः स्वस्मादन्यः पुरुषः श्रेष्ठतामश्नुते स किल्बिषं भवति बाध्यत्वेन । यथा पापं सदाचारैः बाधितव्यं भवति तद्वत् । पापरूपस्य शत्रोर्बाधकः । यद्वा, यज्ञे साध्वनुप्रवचनाकरणेन यत् किल्बिषमेषां जायते तत् यो बाधते स किल्बिषस्पृत् । तथा (त्वं ?) पितुषणिः । पितुरित्यन्ननाम दक्षिणा वा । तमनेन सोमेन सनोति यजमानः संभजते इति तादृशः । तेषामन्नदक्षिणादातेत्यर्थः । किंच, हितः पात्रेषु निहितः सोमः वाजिनाय । इन्द्रियं वीर्यं वाजिनम् । तेषां वीर्याय तत् कर्तुं अरं अलं पर्याप्तः समर्थो भवति । ' सर्वे नन्दन्ति यशसाऽऽगतेनेत्यन्वाह यशो वै सोमो राजा ' इत्यादिकं ' इन्द्रियं वै वीर्यं वाजिनमाजरसं हास्मै वाजिनं नापच्छिद्यते ' इत्यन्तं ब्राह्मणमत्रानुसंधेयम् (ऐब्रा. १।१३) ।
ऋऽसा.

[2]ऋचां त्वः पोषमास्ते पुपुष्वान्
गायत्रं त्वो गायति शक्वरीषु ।
ब्रह्मा त्वो वदति जातविद्यां
यज्ञस्य मात्रां वि मिमीत उ त्वः ॥

अनया होत्राद्यृत्विक्कर्मणां विनियोगमाचष्टे । त्वः एको होता ऋचां पोषं यथाविधि कर्मणि प्रयोगं पुपुष्वान् । एको धातुरनुवादार्थः । बह्वीर्ऋचः पुष्यन् शंसन् आस्ते । त्वः एकः उद्गाता शक्करीषु । शक्वर्यः ऋचः । आभिर्ऋग्भिर्वृत्रं हन्तुमिन्द्रः समर्थोऽभूदिति शक्वर्यः । तासु गायत्रं साम गायति । त्वः एकः ब्रह्मा च जातविद्यां जाते जाते कर्तव्ये प्रायश्चित्तादौ वेदयित्रीं वाचं वदति । ब्रह्मा हि सर्वं वेदितुं योग्यो भवति खलु । त्वः एकः अध्वर्युश्च यज्ञस्य मात्रां यज्ञो यया मीयते अभिषवग्रहणादिकया क्रियया तां मात्रां यज्ञशरीरं वि मिमीते अत्यर्थं निर्मिमीते । ' ऋचामेकः पोषमास्ते पुपुष्वान् होतर्गर्चनी ' ( नि. १।८ ) इत्यादिनिरुक्तानुसारेणार्थोऽभ्यधायि । एवं बृहस्पतिः विदितवेदार्थं तुष्टाव । ऋऽसा.

राष्ट्री वाक्

[1]इयं पित्रे राष्ट्र्येत्यग्र इति । वाग्वै राष्ट्री । वाचमेवास्मिंस्तद्दधाति ॥

अस्मिन् मन्त्रे तृतीयान्तो राष्ट्रीशब्दो वाचं ब्रूते । तत् तेन मन्त्रपाठेनास्मिन् प्रवर्ग्ये वाचमेव संपादयति ।
ऐब्रासा.

---

## विद्या

त्रयी विद्या

[2]प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति । स तपोऽतप्यत । स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम् । ताँल्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्त । अग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवः । तानि ज्योतींष्यभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त । ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात् । तान् वेदानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त । भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात्स्वरिति सामवेदात् ॥

सर्वप्रायश्चित्तसंपादकस्य व्याहृतित्रयस्य सृष्टिं वक्तुमुपक्रमते– प्रजापतिरिति । पुरा प्रजापतिरेको भूत्वा प्रजो-

---

(१) ऋसं. १०।७१।१० ; ऐब्रा. ३।२ ; आश्रौ. १।४।४.

(२) ऋसं. १०।७१।११ ; नि. १।८.

(१) ऐब्रा. ४।२.

(२) ऐब्रा. २५।७.

त्पादनेन बहुविधः स्यामिति कामयित्वा तत्सिद्ध्यर्थं तपः पर्यालोचनमकरोत् । इदं वस्त्वीदृशमिति पर्यालोचनरूपं तपः कृत्वा पर्यालोचितप्रकारेणोत्पद्यतामिति संकल्प्य तेन संकल्पेन लोकत्रयमसृजत । तान् लोकान् पुनरप्यभितः पर्यालोचितवान् । किमेषु लोकेषु सारभूतं संपादनीयमिति पर्यालोचनम् । तथा पर्यालोचितेभ्यो लोकेभ्यः प्रजापतिः ( ? तेः ) संकल्पानुसारेण अग्निवाय्वादित्यरूपाणि ज्योतींष्यजायन्त । तत्रापि सारं पर्यालोच्य त्रिभ्यो ज्योतिर्भ्यो वेदत्रयमुत्पादितवान् । तेभ्यश्च वेदेभ्यो व्याहृतित्रयरूपाणि शुक्राणि ज्योतींषि पापाख्यतमोनिवारणसमर्थान्यजायन्त । ऐब्रासा.

**तानि शुक्राण्यभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति । तानेकधा समभरत्तदेतदोमिति । तस्मादोमोमिति प्रणौति । ओमिति वै स्वर्गो लोकः । ओमित्यसौ योऽसौ तपति ॥**

एवं व्याहृतित्रयस्योत्पत्तिमुक्त्वा प्रणवस्योत्पत्तिमाह— तानीति । तानि शुक्राणि व्याहृतित्रयरूपाणि ज्योतींषि सारोत्पादनाय पर्यालोचितवान् । तेभ्यः पर्यालोचितेभ्यः प्रजापतिसंकल्पाद्वर्णत्रयमजायत । तच्च त्रयमेकधा संयोजितवान् । तदेतदेकीभूतं वर्णत्रयमोमित्येवं संपन्नम् । तस्मात्सर्वसारत्वाद्धोता ( यः ? ) प्रयोगमध्ये ओमिति प्रणवं करोति । सर्वप्रयोगसंग्रहार्था वीप्सा । सोऽयमोंकारः स्वर्गप्राप्तिहेतुत्वात्तदात्मकः । तथा योऽसावादित्यस्तपत्यसावप्योंकारस्वरूपः, आदित्यप्राप्तेरप्योंकारसाधनत्वात् । ओंकारस्य सर्वफलहेतुत्वं कठा आमनन्ति— ‘ एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ’ इति । ऐब्रासा.

**स प्रजापतिर्यज्ञमतनुत । तमाहरत् । तेनायजत । स ऋचैव होत्रमकरोद्यजुषाऽऽध्वर्यवं साम्नोद्गीथम् । यदेतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकरोत् ॥**

अथ प्रायश्चित्तं विधातुमुपयुक्तमुपाख्यानमाह— स इति । पुरा प्रजापतिः स्वेच्छया यज्ञमतनुत विस्तारितवान् । केन प्रकारेणेति सोऽभिधीयते— तं यज्ञसाधनसमूहमाहृत्य तेन साधनेन यागं कृतवान् । वेदत्रयगतैर्मन्त्रैः क्रमेण हौत्राध्वर्यवौद्गात्राणि निष्पाद्य ततस्त्रय्यै विद्यायै वेदत्रयरूपायां विद्यायां यदेतच्छुक्रं सारं व्याहृतित्रयादिरूपं तेन सारेण ब्रह्मत्वं कृतवान् । ऐब्रासा.

**[1]अयं वै यज्ञो योऽयं पवते । तस्य वाक्च मनश्च वर्तन्यौ । वाचा च हि मनसा च यज्ञो वर्तते । इयं वै वागदो मनः । तद्वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति । मनसैव ब्रह्मा संस्करोति ॥**

सोऽयं वायुः पवते अन्तरिक्षे संचरति अयमेव यज्ञस्वरूपो वायुसदृशो यज्ञः । यथा वायोः संचारमार्गास्तथा तस्य यज्ञस्य वाक्च मनश्च वर्तन्यौ प्रवृत्तिमार्गौ । यस्मात् वाचा मन्त्ररूपया मनसा च प्रयोगानुसंधात्रा यज्ञो वर्तते तस्मादुभौ मार्गौ । तत्र वागियं वै भूमिस्वरूपैव । मनस्त्वदः स्वर्गरूपम् । तत् तथा सति वाग्रूपया त्रय्या विद्यया होत्रादयो रथस्थानीयस्य यज्ञस्यैकं पक्षं भागं संस्कुर्वन्ति सम्यक् संपादयन्ति । ब्रह्मा मनसैव संस्करोति सम्यक्संपादयति । अन्यं भागमिति शेषः । होत्रादिभिर्वाचाऽनुष्ठीयमानेष्वङ्गेषु वैकल्यराहित्यं ब्रह्माऽनुसंदध्यादित्यर्थः । छन्दोगाश्चैतमर्थमामनन्ति— ‘ एष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतराम् ’ इति । ऐब्रासा.

शिल्पानि

**[2]शिल्पानि शंसन्ति ॥**

अथ पृष्ठ्यषडहस्य षष्ठेऽहनि शिल्पनामकानि शस्त्राणि विधत्ते— शिल्पानीति । ऐब्रासा.

**देवशिल्पानि । एतेषां वै शिल्पानामनुकृतीह शिल्पमधिगम्यते । हस्ती कंसो वासो हिरण्यमश्वतरीरथः शिल्पम् ॥**

शिल्पत्वं लौकिकनिदर्शनेन प्रशंसति— देवेति । शिल्पशब्दश्च आश्चर्यकरं कर्म ब्रूते । तच्च शिल्पं द्विविधम्—

( १ ) ऐब्रा. २५।८.
( २ ) ऐब्रा. ३०।१.

देवशिल्पं मानुषशिल्पं चेति । नाभानेदिष्ठादीनि यानि शिल्पानि सन्ति तानि देवानां प्रीतिहेतुत्वात् देवशिल्पानीत्युच्यन्ते । एतेषामेव देवशिल्पानामनुकृति सदृशरूपं इह मनुष्यलोके शिल्पमधिगम्यते प्रतीयते । हस्तीत्यादिना तदेवोदाह्रियते । लोके शिल्पिनः कर्मकाराः मृद्दार्वादिभिः हस्तिसदृशमाकारं निर्मिमते । तथा अन्यैः शिल्पिभिः कंसः दर्पणादि निर्मीयते । अपरैर्वासः विविधं निर्मीयते । अपरैः सुवर्णमयं कटकमुकुटादि निर्मीयते । अपरैश्च अश्वतरीरथः निर्मीयते । गर्दभ्यामश्वादुत्पन्ना अश्वतरजातिः । तद्युक्तः रथः अश्वतरीरथः । तदेतत्सर्वमस्माभिरधिगम्यमानं मानुषशिल्पम् । एतत् दृष्ट्वा नाभानेदिष्ठादिशिल्पमाश्चर्यकरमिति निश्चेतव्यम् ।

ऐब्रासा.

**आत्मसंस्कृतिर्वाव शिल्पानि । छन्दोमयं वा एतैर्यजमान आत्मानं संस्कुरुते ॥**

प्रकारान्तरेण शिल्पानि प्रशंसति– आत्मेति । वक्ष्यमाणानि नाभानेदिष्ठादिशिल्पानि आत्मसंस्कृतिः जीवात्मनः संस्कारकारणानि । तस्मादेतैर्यजमानः जीवात्मानं छन्दोमयं वेदमयो यथा भवति तथा संस्कुरुते ।

ऐब्रासा.

विद्याः

**[१]ऋचो यजूꣳषि सामानि । अथर्वाङ्गिरसश्च ये । सर्वास्ताः ॥**

अथर्वणा अङ्गिरसा च महर्षिणा दृष्टा मन्त्राश्चतुर्थवेदे समाम्नाता अथर्वाङ्गिरसः ।

तैब्रासा.

**इतिहासपुराणं च । सर्पदेवजनाश्च ये । सर्वास्ताः ॥**

इतिहासः भारतादिः । पुराणं ब्राह्मपाद्मेत्यादि । सर्पेष्वेव देवाकारा मनुष्याकाराश्च सर्पदेवजनाः ।

तैब्रासा.

(१) तैब्रा. ३।१२।८।१–२.

नव विद्याः

**[१]ओं ब्रह्म ह वा इदमग्र आसीत्, स्वयं त्वेकमेव । तदैक्षत । महद्वै यक्षं, तदेकमेवास्मि ॥**

**[२]स खलु पृथिव्या एवाग्निं निरमिमतान्तरिक्षाद्वायुं दिव आदित्यम् । स तांस्त्रीन् देवानभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यस्त्रीन् वेदान्निरमिमत ऋग्वेदं यजुर्वेदं सामवेदमिति । अग्ने ऋग्वेदं, वायोर्यजुर्वेदं, आदित्यात्सामवेदम् । स तांस्त्रीन् वेदानभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यस्तिस्रो महाव्याहृतीर्निरमिमत भूर्भुवः स्वरिति । भूरित्यृग्वेदात्, भुव इति यजुर्वेदात्, स्वरिति सामवेदात् । स य इच्छेत्सर्वैरेतैस्त्रिभिर्वेदैः कुर्वीयेत्येताभिरेव तं महाव्याहृतिभिः कुर्वीत । सर्वैर्ह वा अस्यैतैस्त्रिभिर्वेदैः कृतं भवति य एवं वेद । यश्चैवं विद्वानेवमेताभिर्महाव्याहृतिभिः कुरुते ॥**

**[३]तानङ्गिरस ऋषीनाङ्गिरसांश्चार्षेयानभ्यश्राम्यदभ्यतपत्समतपत् । तेभ्यः श्रान्तेभ्यस्तप्तेभ्यः संतप्तेभ्यो यान् मन्त्रानपश्यत्स आङ्गिरसो वेदोऽभवत् ॥**

**[४]श्रेष्ठो ह वेदस्तपसोऽधिजातो**
**ब्रह्मज्यानां क्षितये संबभूव ।**
**ऋज्यद्भूतं यदसृज्यतेदं**
**निवेशनमनृणं दूरमस्य ॥**

**[५]स दिशोऽन्वैक्षत प्राचीं दक्षिणां प्रतीचीमुदीचीं ध्रुवामूर्ध्वामिति । तास्तत्रैवाभ्यश्राम्यदभ्यतपत्समतपत् । ताभ्यः श्रान्ताभ्यस्तप्ताभ्यः संतप्ताभ्यः**

(१) गोब्रा. १।१।१.
(२) गोब्रा. १।१।६.
(३) गोब्रा. १।१।८.
(४) गोब्रा. १।१।९.
(५) गोब्रा. १।१।१०.

पञ्च वेदान्निरमिमत सर्पवेदं पिशाचवेदमसुरवेदमितिहासवेदं पुराणवेदमिति ॥

साङ्गाः वेदाः

[१]तद्याः प्राच्यो नद्यो वहन्ति याश्च दक्षिणाच्यो याश्च प्रतीच्यो याश्च उदीच्यस्ताः सर्वाः पृथङ्नामधेयीरित्याचक्षते । तासां समुद्रमभिपद्यमानानां छिद्यते नामधेयं समुद्र इत्याचक्षते । एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः सनिरुक्ताः सानुशासनाः सानुमार्जनाः सवाकोवाक्याः । तेषां यज्ञमभिपद्यमानानां छिद्यते नामधेयं यज्ञ इत्येवाचक्षते ॥

अथर्ववेदः

[२]अथर्वाणश्च ह वा आङ्गिरसश्च भृगुचक्षुषी, तद्ब्रह्माभिव्यपश्यन् । तद्जानन्– वयं वा इदं सर्वं यत् भृग्वङ्गिरस इति ॥

चत्वारो वेदाः षडङ्गानि च

[३]सर्वच्छन्दसां वेदेषु समासभूतैकोच्छ्वासा वर्णान्ते । चत्वारो वेदाः शरीरे । षडङ्गान्योषधिवनस्पतयो लोमानि । चक्षुषी सूर्याचन्द्रमसौ । सा स्वाहा सा स्वधा सैषा यज्ञेषु वषट्कारभूता प्रयुज्यते । तस्या अग्निर्दैवतं ब्राह्मणो रूपमिति ब्राह्मणम् ॥

एकोनविंशतिर्विद्याः

[४]अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तꣳ होवाच– यद्वेत्थ तेन मोपसीद । ततस्त ऊर्ध्वं वक्ष्यामीति । स होवाच ॥

अधीहि अधीष्व, भगवः भगवन्, इति ह किलोपससाद । ' अधीहि भगवः ' इति मन्त्रः । सनत्कुमारं योगीश्वरं ब्रह्मिष्ठं नारदः उपसन्नवान् । तं न्यायतः उपसन्नं होवाच – यदात्मविषये किंचिद्वेत्थ तेन तत्प्रख्यापनेन मामुपसीद, इदमहं जाने इति, ततोऽहं भवतो विज्ञानात् ते तुभ्यं ऊर्ध्वं वक्ष्यामि । इत्युक्तवति स होवाच नारदः । शंकर.

ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्याम् । एतद्भगवोऽध्येमि ॥

ऋग्वेदं भगवोऽध्येमि स्मरामि, यद्वेत्थेति विज्ञानस्य पृष्टत्वात् । तथा यजुर्वेदं सामवेदमाथर्वणं चतुर्थं वेदं, वेदशब्दस्य प्रकृतत्वात् । इतिहासपुराणं पञ्चमं वेदम् । वेदानां भारतपञ्चमानां वेदं व्याकरणमित्यर्थः । व्याकरणेन हि पदादिविभागशः ऋग्वेदादयो ज्ञायन्ते । पित्र्यं श्राद्धकल्पम् । राशिं गणितम् । दैवं उत्पातज्ञानम् । निधिं महाकालादिनिधिशास्त्रम् । वाकोवाक्यं तर्कशास्त्रम् । एकायनं नीतिशास्त्रम् । देवविद्यां निरुक्तम् । ब्रह्मणः ऋग्यजुःसामाख्यस्य विद्यां ब्रह्मविद्यां शिक्षाकल्पच्छन्दश्चितयः ( ? तीः ) । भूतविद्यां भूततन्त्रम् । क्षत्रविद्यां धनुर्वेदम् । नक्षत्रविद्यां ज्यौतिषम् । सर्पदेवजनविद्यां सर्पविद्यां गारुडं, देवजनविद्यां गन्धयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि । एतत्सर्वं हे भगवः, अध्येमि । शंकर.

द्वादश विद्याः

[१]स यथाऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि । अस्यैवैतानि निश्वसितानि ॥

( १ ) गोब्रा. १।२।१०.
( २ ) गोब्रा. १।२।२२.
( ३ ) गोब्रा. १।३।१६.
( ४ ) छाउ. ७।१।१–२.

( १ ) बृउ. २।४।१०.

यथा अग्नेः विस्फुलिङ्गधूमाङ्गारार्चिषां प्राग्विभागात् अग्निरेवेति भवत्यन्येकत्वं, एवं जगत् नामरूपविकृतं प्रागुत्पत्तेः प्रज्ञानघन एवेति युक्तं ग्रहीतुं इत्येतदुच्यते– स यथा, आर्द्रैधाग्नेः आर्द्रैरेधोभिरिद्धोऽग्निः आर्द्रैधाग्निः। तस्मात् अभ्याहितात् पृथग्धूमाः, पृथक् नानाप्रकारं, धूमग्रहणं विस्फुलिङ्गादिप्रदर्शनार्थं, धूमविस्फुलिङ्गादयः विनिश्चरन्ति विनिर्गच्छन्ति। एवं यथाऽयं दृष्टान्तः, अरे मैत्रेयि, अस्य परमात्मनः प्रकृतस्य महतो भूतस्य निश्वसितमेतत्। निश्वसितमिव निश्वसितम्। यथा अप्रयत्नेनैव पुरुषनिश्वासो भवति, एवं वै अरे। किं तन्निश्वसितमिव ततो जातमित्युच्यते– यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः चतुर्विधं मन्त्रजातम्। इतिहास इति उर्वशीपुरूरवसोः संवादादिः 'उर्वशी हाप्सराः' इत्यादि ब्राह्मणमेव, पुराणम् 'असद्वा इदमग्र आसीत्' इत्यादि, विद्या देवजनविद्या 'वेदः सोऽयं' इत्याद्या, उपनिषदः 'प्रियमित्येतदुपासीत' इत्याद्याः, श्लोकाः ब्राह्मणप्रभवा मन्त्राः 'तदेते श्लोकाः' इत्यादयः, सूत्राणि वस्तुसंग्रहवाक्यानि वेदे यथा 'आत्मेत्येवोपासीत' इत्यादीनि, अनुव्याख्यानानि मन्त्रविवरणानि, व्याख्यानानि अर्थवादाः, अथवा वस्तुसंग्रहवाक्यविवरणान्यनुव्याख्यानानि, यथा चतुर्थाध्याये 'आत्मेत्येवोपासीत' इत्यस्य यथा वा 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवम्' इत्यस्य अयमेवाध्यायशेषः, मन्त्रविवरणानि व्याख्यानानि। एवमष्टविधं ब्राह्मणम्। एवं मन्त्रब्राह्मणयोरेव ग्रहणम्। नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्तिः पुरुषनिश्वासवत्, न च पुरुषबुद्धिप्रयत्नपूर्वकः। अतः प्रमाणं निरपेक्ष एव स्वार्थे। तस्मात् यत् तेनोक्तं तत्तथैव प्रतिपत्तव्यं आत्मनः श्रेय इच्छद्भिः ज्ञानं वा कर्म वेति। नामप्रकाशवशाद्धि रूपस्य विक्रियावस्था। नामरूपयोरेव हि परमात्मोपाधिभूतयोर्व्याक्रियमाणयोः सलिलफेनवत् तत्त्वान्यत्वेनानिर्वक्तव्ययोः सर्वावस्थयोः संसारत्वं इत्यतः नाम्नः एव निश्वसितत्वमुक्तं, तद्वचनेनैव इतरस्य निश्वसितत्वसिद्धेः। अथवा सर्वस्य द्वैतजातस्य अविद्याविषयत्वमुक्तम्– 'ब्रह्म तं परादात् ... इदं सर्वं यदयमात्मा' इति। तेन वेदस्याप्रामाण्यमाशङ्क्येत। तदाशङ्कानिवृत्त्यर्थमिदमुक्तम्– पुरुषनिश्वासवत् अप्रयत्नोत्थितत्वात् प्रमाणं वेदः, न यथा अन्यो ग्रन्थ इति। शंकर॰

---

## धनम्

### गवां महिमा

[1]आ गावो अग्मन्नुत भद्रमक्रन्<br>
त्सीदन्तु गोष्ठे रणयन्त्वस्मे।<br>
प्रजावतीः पुरुरूपा इह स्यु-<br>
रिन्द्राय पूर्वीरुषसो दुहानाः॥

गावः आ अग्मन् अस्मदीयं गृहमागच्छन्तु। उत अपि च, भद्रं भजनीयं शुभं अक्रन् कुर्वन्तु। तथा गोष्ठे अस्मदीये गवां स्थाने सीदन्तु उपविशन्तु। तदनन्तरं अस्मे अस्मासु रणयन्तु रमन्ताम्। अपि च, इह अस्मिन् गोष्ठे पुरुरूपाः नानावर्णाः गावः प्रजावतीः प्रजावत्यः संततिसहिताः पूर्वीः बह्व्यः इन्द्राय इन्द्रार्थं उषसः उषःकालान् प्रति दुहानाः दोग्ध्र्यः स्युः भवेयुः। ऋसा॰

[2]इन्द्रो यज्वने पृणते च शिक्ष-<br>
त्युपेद्ददाति न स्वं मुषायति।<br>
भूयोभूयो रयिमिदस्य वर्धय-<br>
न्नभिन्ने खिल्ये नि दधाति देवयुम्॥

इन्द्रो यज्वने यजनशीलाय पृणते च स्तुतिभिः प्रीणयित्रे च स्तोत्रे शिक्षति अपेक्षितं धनं ददाति। न केवलं सकृदेव दानं, अपि तु सर्वदैवेत्याह– उपेद्ददाति उपेत्य सर्वदा ददात्येव। यज्वनः स्तोतुश्च स्वं स्वभूतं धनं न मुषायति कदाचिदपि नापहरति। अपि च, अस्य उभयविधस्य रयिं धनं आत्मना दत्तं भूयोभूयः पुनःपुनः वर्धयन् इत् वृद्धिं प्रापयन्नेव देवयुं देवं इन्द्रमात्मनः

---

(१) ऋसं. ६।२८।१; असं. ४।२१।१; तैब्रा. २।८।८।११.
(२) ऋसं. ६।२८।२; असं. ४।२१।२ पृणते च शिक्षत्यु (गृणते च शिक्षत उ); तैब्रा. २।८।८।११ खिल्ये (खिले).

इच्छन्तं तं जनं अभिन्ने शत्रुभिरभेद्ये खिल्ये । खिलं अप्रतिहतं स्थानम् । तदेव खिल्यम् । स्वार्थिको यत् । अन्यैर्गन्तुमशक्ये स्थले नि दधाति निक्षिपति, निवासयतीत्यर्थः । ऋसा.

[1]न ता नशन्ति न दभाति तस्करो
नासामामित्रो व्यथिरा दधर्षति ।
देवाँश्च याभिर्यजते ददाति च
ज्योगित्ताभिः सचते गोपतिः सह ॥

ताः गावः न नशन्ति अस्मत्सकाशान्न नश्यन्तु । किंच, तस्करः चोरोऽपि न दभाति अस्मदीया गा न हिंस्यात् । तथा आमित्रः अमित्रस्य शत्रोः संबन्धि व्यथिः शस्त्रं आसां इमा गाः न आ दधर्षति नाऽऽक्रामतु । गोपतिः एवंभूतानां गवां स्वामी यजमानः याभिः गोभिः देवांश्च इन्द्रादीनुद्दिश्य यजते यजनं करोति । या गाः इन्द्रार्थं ददाति च प्रयच्छति च ताभिः तादृशीभिर्गोभिः सह ज्योगित् चिरकालमेव सचते संगच्छताम् । ऋसा.

[2]न ता अर्वा रेणुककाटो अश्नुते
न संस्कृतत्रमुप यन्ति ता अभि ।
उरुगायमभयं तस्य ता अनु
गावो मर्तस्य वि चरन्ति यज्वनः ॥

रेणुककाटः रेणुकस्य रेणोः पार्थिवस्य रजसः उद्भेदकः । कटिर्भेदनकर्मा । अर्वा युद्धार्थमागतोऽश्वः ताः गाः न अश्नुते न प्राप्नुयात् । तथा ताः गावः संस्कृतत्रं विशसनादिसंस्कारं न अभि उप यन्ति नाभिगच्छन्तु । अपि च, ताः गावः यज्वनः यागशीलस्य तस्य मर्तस्य मनुष्यस्य उरुगायं विस्तीर्णगमनं अभयं भयवर्जितं प्रदेशं अनु उद्दिश्य वि चरन्ति विशेषेण गच्छन्तु । ऋसा.

(१) ऋसं. ६।२८।३ ; असं. ४।२१।३ ; तैब्रा. २।४।६।९ नासामा ( नैना अ ) ; आश्रौ. ११६।१४ , २।३।५.

(२) ऋसं. ६।२८।४ ; असं. ४।२१।४ काटो अश्नु ( काटोऽश्नु ) ; कासं. १३।१६ ( ८१ ) ; तैब्रा. २।४।६।९ मर्तस्य ( मर्त्यस्य ) ; आश्रौ. १।६।१४, २।३।५.



[1]गावो भगो गाव इन्द्रो मे अच्छान्
गावः सोमस्य प्रथमस्य भक्षः ।
इमा या गावः स जनास इन्द्र
इच्छामीद्धृदा मनसा चिदिन्द्रम् ॥

गावः एव मह्यं भगः धनं भवन्तु । इन्द्रः च मे मह्यं गावः गाः अच्छान् यच्छतु । गावः प्रथमस्य हविषां श्रेष्ठस्य सोमस्य भक्षः भक्षणं भवन्तु, अभिषुतस्य हि सोमस्य गव्येनाऽऽज्यादिना संस्क्रियमाणत्वात् । हे जनासः जनाः, इमाः एवंभूताः या गावः सन्ति सः, ता इत्यर्थः । ता एव गावः इन्द्रः भवन्ति, दधिघृतादिरूपेण इन्द्रस्याऽऽप्यायनत्वात् । एवंभूतं इन्द्रं हृदा श्रद्धायुक्तेन मनसा चित् । चिदिति अप्यर्थे । इच्छामीत् कामये एव, साधनभूताभिर्गोभिः एवंभूतमिन्द्रं यष्टुमिच्छामीत्यर्थः । ऋसा.

[2]यूयं गावो मेदयथा कृशं चि-
दश्रीरं चित्कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचो
बृहद्वो वय उच्यते सभासु ॥

हे गावः, यूयं मेदयथ स्नेहयथ, आप्यायनं कुरुथेत्यर्थः । तथा कृशं चित् क्षीणमपि अश्रीरं चित् अश्लीलमपि सुप्रतीकं शोभनाङ्गं कृणुथ कुरुथ । हे भद्रवाचः कल्याणध्वन्युपेता गावः, अस्मदीयं गृहं भद्रं कल्याणं कृणुथ, गोभिरुपेतं कुरुथ । सभासु यागपरिषत्सु हे गावः, युष्माकं बृहत् महत् वयः अन्नं उच्यते, सर्वैर्दीयते इत्यर्थः । ऋसा.

(१) ऋसं. ६।२८।५ ; असं. ४।२१।५ मे अच्छान् ( म इच्छाद् ) मीद्धृदा ( मि हृदा ) ; कासं. १३।१६ ( ८० ) ; तैब्रा. २।८।८।१२ अच्छान् ( अच्छात् ).

(२) ऋसं. ६।२८।६ ; असं. ४।२१।६; तैब्रा. २।८।८।१२ चिदश्रीरं ( चित् । अश्लीलं ).

[1]प्रजावतीः सूयवसं रिशन्तीः
शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा वः स्तेन ईशत माऽघशंसः
परि वो हेती रुद्रस्य वृज्याः ॥

हे गावः, यूयं प्रजावतीः प्रजावत्यः वत्साभिर्युक्ता भवतेति शेषः । सुयवसं शोभनतृणं रिशन्तीः रिशन्त्यः भक्षणार्थे हिंसन्त्यो भवत । सुप्रपाणे सुखेन पातव्ये तटाकादौ शुद्धाः निर्मलाः अपः उदकानि पिबन्तीः पिबन्त्यश्च भवत । वः युष्मान् स्तेनः तस्करः मा ईशत मा ईशिष्ट ईश्वरो मा भूत् । तथा ( अपि ? ) अघशंसः व्याघ्रादिः शत्रुः मा ईशत । अपि च, वः युष्मान् रुद्रस्य कालात्मकस्य परमेश्वरस्य हेतिः आयुधं च परि वृज्याः परिवृणक्तु परिहरतु । ऋसा.

[2]उपेदमुपपर्चनमासु गोषूप पृच्यताम् ।
उप ऋषभस्य रेतस्युपेन्द्र तव वीर्ये ॥

आसु गोषु इदमुपपर्चनं आप्यायनं उप पृच्यतां संपृच्यताम् । हे इन्द्र, तव वीर्ये त्वदीयवीर्ये निमित्ते ऋषभस्य गवां गर्भमादधानस्य वृषभस्य रेतसि इदमुपपचनं आप्यायनम् । गोषु हि आप्यायितासु सतीषु त्वत्संबन्धिक्षीरादिहविर्द्वारेणेन्द्र आप्यायितो भवतीत्यर्थः । उप इति पुनर्वचनं पादभेदानां पूरणार्थमिति । ऋसा.

[3]मयोभूर्वातो अभि वातूस्रा
ऊर्जस्वतीरोषधीरा रिशन्ताम् ।
पीवस्वतीर्जीवधन्याः पिब-
न्त्ववसाय पद्वते रुद्र मृळ ॥

वातः वायुः मयोभूः सुखस्य भावयिता सन् उस्राः गाः अभि वातु अभिगच्छतु । ताश्च गावः ऊर्जस्वतीः रसवतीः ओषधीः बलवन्ति तृणानि आ रिशन्तां अभितः स्वादयन्तु । तथा पीवस्वतीः प्रवृद्धाः जीवधन्याः जीवानां प्रीणयित्रीरपश्च पिबन्तु । हे रुद्र ज्वरादिरोगस्य प्रेक्षणेन संहर्तर्देव, पद्वते पादयुक्ताय अवसाय अन्नाय गोरूपाय मृळ उपदयां कुरु, मा बाधस्वेत्यर्थः । ऋसा.

[1]याः सरूपा विरूपा एकरूपा
यासामग्निरिष्टया नामानि वेद ।
या अङ्गिरसस्तपसेह चक्रु-
स्ताभ्यः पर्जन्य महि शर्म यच्छ ॥

याः गावः सरूपाः समानरूपाः याश्च विरूपाः विभिन्नरूपाः याश्च एकरूपाः एकेनैव वर्णेनोपेताः यासां च गवां नामानि ' इडे रन्तेऽदिते ' ( तैसं. ७।१।६।८ ) इत्यादीनि इष्टया यागेन हेतुना अग्निः वेद जानाति, याः च गाः अङ्गिरसः ऋषयः तपसा पशुप्राप्तिसाधनेन चित्रायागादिलक्षणेन इह अस्मिन् लोके चक्रुः कृतवन्तः, ताभ्यः सर्वाभ्यो गोभ्यो हे पर्जन्य, महि महत् शर्म सुखं यच्छ प्रदेहि । ऋसा.

[2]या देवेषु तन्व१मैरयन्त
यासां सोमो विश्वा रूपाणि वेद ।
ता अस्मभ्यं पयसा पिन्वमानाः
प्रजावतीरिन्द्र गोष्ठे रिरीहि ॥

याः गावः देवेषु यष्टव्येषु तन्वं आत्मीयं शरीरं ऐरयन्त हवीरूपेण प्रेरयन्ति, यासां च गवां विश्वा सर्वाणि रूपाणि रूप्यमाणानि क्षीरादीनि श्रयणद्रव्याणि सोमः वेद जानाति, अस्मभ्यं अस्मदर्थं पयसा क्षीरेण पिन्वमानाः वर्धमानाः अत एव प्रजावतीः प्रजाभिः वत्सैः उपेताः ताः गाः हे इन्द्र, गोष्ठे अस्मदीये रिरीहि गमय । ऋसा.

---

( १ ) ऋसं. ६।२८।७ ; असं. ४।२१।७ सूयवसं रि ( सुयवसे रु ) हेती रुद्रस्य वृज्याः ( रुद्रस्य हेतिर्वृणक्तु ) ; तैब्रा. २।८।८।१२ रिशन्तीः ( रुशन्तीः ) वृज्याः ( वृञ्ज्यात् ).

( २ ) ऋसं. ६।२८।८ ; असं. ९।४।२३ ( उपेहोपपर्चनास्मिन्गोष्ठ उप पृञ्च नः । उप ऋषभस्य यद्रेत उपेन्द्र तव वीर्यम् ॥ ); तैब्रा. २।८।८।१२ उप ऋष ( उपर्ष ) ; लाश्रौ. ३।३।४ तैब्रावत्.

( ३ ) ऋसं. १०।१६९।१ ; तैसं. ७।४।१७।१ ; तैब्रा. ३।८।१८।३.

( १ ) ऋसं. १०।१६९।२ ; तैसं. ७।४।१७।१.

( २ ) ऋसं. १०।१६९।३ ; तैसं. ७।४।१७।१-२ तन्व ( तनुव ).

[1]प्रजापतिर्मह्यमेता रराणो
विश्वैर्देवैः पितृभिः संविदानः ।
शिवाः सतीरुप नो गोष्ठमाक-
स्तासां वयं प्रजया सं सदेम ॥

प्रजापतिः विधाता मह्यं स्तोत्रे एताः गाः रराणः प्रयच्छन् । रातेर्व्यत्ययेन शानच् । छान्दसः शपः श्लुः । विश्वैः सर्वैः देवैः पितृभिः च संविदानः ऐकमत्यं गतः सन् शिवाः सतीः कल्याणीर्भवन्तीर्गाः नः अस्माकं गोष्ठं व्रजं उप गोष्ठसमीपे अकः करोतु । तासां गवां प्रजया संतानेन वयं सं सदेम संगच्छेमहि । ऋसा.

नदीनां महिमा

[2]प्र क्षोदसा धायसा सस्र एषा
सरस्वती धरुणमायसी पूः ।
प्रबाबधाना रथ्येव याति
विश्वा अपो महिना सिन्धुरन्याः ॥

सरस्वत्या( ? ती ) एषा नदीवन्निगमा । एषा दृश्यमाना नदीरूपा सरस्वती आयसी अयसा निर्मिता पूः पुरीव धरुणम् । लिङ्गव्यत्ययः । धरुणा धारयित्री धायसा धारकेण क्षोदसा उदकेन प्र सस्रे प्रधावति शीघ्रं गच्छति । सिन्धुः स्यन्दनशीला नदीरूपा सा अन्याः विश्वाः सर्वाः अपः आपगाः महिना महिम्ना प्रबाबधाना भृशं बाधमाना रथ्येव प्रतोलीव विस्तीर्णा सती याति गच्छति । यद्वा, रथ्येव रथिनेव, यथा रथी रथेन मार्गस्थं तरुगुल्मादिकं चूर्णीकृत्य गच्छति तद्वत् स्वकीयेन वेगेन सर्वं संपिंषती गच्छतीत्यर्थः । ऋसा.

( १ ) ऋसं. १०।१६९।४ ; तैसं. ७।४।१७।२.

( २ ) ऋसं. ७।९५।१ ; मैसं. ४।१४।७ ( ९९ ) बाबधाना ( बाधमाना ) ; ऐब्रा. २३।१ ; शाब्रा. २६।८ ; आश्रौ. १।३।७, २।२।९.

[1]एकाऽचेतत्सरस्वती नदीनां
शुचिर्यती गिरिभ्य आ समुद्रात् ।
रायश्चेतन्ती भुवनस्य भूरे-
र्घृतं पयो दुदुहे नाहुषाय ॥

सहस्रवत्सरेण क्रतुना यक्ष्यमाणो नाहुषो नाम राजा सरस्वतीं नदीं प्रार्थयामास । सा च तस्मै सहस्रसंवत्सरपर्याप्तं पयो घृतं च प्रददौ । अयमर्थोऽत्र प्रतिपाद्यते— नदीनां अन्यासां मध्ये शुचिः शुद्धा गिरिभ्यः सकाशात् आ समुद्रात् समुद्रपर्यन्तं यती गच्छन्ती एका सरस्वती नदी अचेतत् नाहुषस्य प्रार्थनामज्ञासीत् । तथा भुवनस्य भूतजातस्य भूरेः बहुलस्य रायः धनानि चेतन्ती प्रज्ञापयन्ती प्रयच्छन्ती नाहुषाय राज्ञे घृतं पयः च सहस्रसंवत्सरक्रतोः पर्याप्तं दुदुहे दुग्धवती दत्तवती । ऋसा.

[2]बृहदु गायिषे वचोऽसुर्या नदीनाम् ।
सरस्वतीमिन्महया सुवृक्तिभिः
स्तोमैर्वसिष्ठ रोदसी ॥

अनया ऋषिरात्मानं संबोध्य सरस्वत्याः स्तुतौ प्रेरयति – हे वसिष्ठ, त्वं बृहदु बृहदेव महदेव वचः स्तोत्रं गायिषे गायसि । किमर्थम् ? नदीनां मध्ये असुर्या । असुराशब्दाच्चतुर्थ्येकवचनस्य ड्यादेशः । असुरायै बलवत्यै नदीरूपायै सरस्वत्यै, अस्याः प्रीणनार्थमित्यर्थः । तथा, रोदसी द्यावापृथिव्योः स्थितां दिवि देवतारूपेण भूम्यां वाग्रूपेण निवसन्तीं सरस्वतीमित् सरस्वतीमेव सुवृक्तिभिः सुष्ठु दोषवर्जितैः स्तोमैः स्तोत्रैः महय पूजय । सर्वदा सरस्वतीमेव स्तुहि, नान्यां देवतामिति भावः । ऋसा.

[3]उभे यत्ते महिना शुभ्रे अन्धसी
अधिक्षियन्ति पूरवः ।
सा नो बोध्यवित्री मरुत्सखा
चोद राधो मघोनाम् ॥

( १ ) ऋसं. ७।९५।२ ; मैसं. ४।१४।७ ( १०० ) गिरिभ्य ( गिरिभ्या ) ; आश्रौ. १।३।७.

( २ ) ऋसं. ७।९६।१ ; ऐब्रा. २२।१ ; आश्रौ. २।१।१२.

( ३ ) ऋसं. ७।९६।२–३.

हे शुभ्रे शुभ्रवर्णे सरस्वति, यत् यस्याः ते तव महिना महिम्ना उभे अन्धसी उभयविधं दिव्यं पार्थिवं चान्नि (? चान्नं) ग्राम्यमारण्यं वा पूरवः पूरयितव्या मनुष्याः अधिक्षियन्ति अधिगच्छन्ति, सा त्वं अवित्री रक्षित्री सती नः अस्मान् बोधि बुध्यस्व। अपि च, मरुत्सखा। मरुतः माध्यमिका देवगणाः। ते सखायः यस्याः माध्यमिकायाः वाचस्तादृशी त्वं मघोनां हविर्लक्षणधनोपेतानां अस्माकं राधः धनं चोद प्रेरय। ऋसा.

भद्रमिद्भद्रा कृणवत्सरस्व-
त्यकवारी चेतति वाजिनीवती।
गृणाना जमदग्निवत्स्तुवाना च वसिष्ठवत् ॥

भद्रा कल्याणी भजनीया वा सरस्वती भद्रमित् भद्रमेव कल्याणमेव कृणवत् अस्माकं करोतु। तथा अकवारी अकुत्सितगमना वाजिनीवती अन्नवती चेतति चेतयतु अस्मान् प्रज्ञापयतु। यद्वा, मदीयं स्तोत्रं चेतति जानातु। तथा जमदग्निवत् जमदग्निना ऋषिणा इव मया गृणाना स्तूयमाना वसिष्ठवत् वसिष्ठार्हं वसिष्ठस्यानुरूपं स्तुवाना स्तूयमाना च भव। ऋसा.

'प्र सु व आपो महिमानमुत्तमं
कारुर्वोचाति सदने विवस्वतः।
प्र सप्तसप्त त्रेधा हि चक्रमुः
प्र सृत्वरीणामति सिन्धुरोजसा ॥

हे आपः, वः युष्माकं महिमानं महत्त्वं स्तोत्रं उत्तमं उत्कृष्टतमं कारुः स्तोता सिन्धुक्षिदहं विवस्वतः परिचरणवतो यजमानस्य सदने यज्ञगृहे सु सुष्ठु प्र वोचाति प्रब्रवीमि। ता नद्यः सप्तसप्त भूत्वा त्रेधा पृथिव्यामन्तरिक्षे दिवि चेति त्रेधा त्रिप्रकारं (प्र) चक्रमुः प्रावहन्। सृत्वरीणां आसां मध्ये सिन्धुः एतन्नामिका नदी ओजसा स्वबलेन अति सर्वा अपि नदीरतिक्रम्य प्र वहतीति शेषः। ऋसा.

(१) ऋसं. १०।७५।१-४.

प्र तेऽरदद्वरुणो यातवे पथः
सिन्धो यद्वाजाँ अभ्यद्रवस्त्वम्।
भूम्या अधि प्रवता यासि सानुना
यदेषामग्रं जगतामिरज्यसि ॥

हे सिन्धो देवि, ते तव यातवे गमनाय वरुणः देवः पथः मार्गान् प्र अरदत् प्राचीनं व्यलिखत्। सा हि प्राक् प्रवहति। अथवा, प्रकृष्टं इतरनदीभ्योऽप्यत्यन्तं विस्तृतं व्यदारयत्। यत् यस्मात् हे सिन्धो, वाजान् अन्नानि अभिलक्ष्य त्वं अभ्यद्रवः अभ्यगच्छः। किंच, त्वं भूम्याः अधि उपरि सानुना समुच्छ्रितेन प्रवता मार्गेण यासि गच्छसि। सिन्धुः खलु पर्वतान् विभिद्य गता। यत् येन समुच्छ्रितेन मार्गेण गच्छन्ती त्वं एषां सर्वेषां जगतां जङ्गमानां प्राणिनां अग्रं प्रत्यक्षं इरज्यसि ईशिषे। ऋसा.

दिवि स्वनो यतते भूम्योप-
र्यनन्तं शुष्ममुदियर्ति भानुना।
अभ्रादिव प्र स्तनयन्ति वृष्टयः
सिन्धुर्यदेति वृषभो न रोरुवत् ॥

भूम्योपरि भूमेरुपरि प्रवर्तमानः स्वनः दिवि यतते गच्छति दिवं व्याप्नोति। सेयं सिन्धुः अनन्तं अपर्यन्तं शुष्मं वेगं भानुना दीप्तेनोर्मिणा उदियर्ति उद्गमयति। अभ्रादिव अन्तरिक्षात् यथा वृष्टयः प्र स्तनयन्ति तद्वत् अस्याः शब्दाः प्रादुर्भवन्ति। यत् यदा सिन्धुः इयं रोरुवत् भृशं शब्दयन् वृषभो न वृषभ इव एति गच्छति तदैवं भवति। ऋसा.

अभि त्वा सिन्धो शिशुमिन्न मातरो
वाश्रा अर्षन्ति पयसेव धेनवः।
राजेव युध्वा नयसि त्वमित्सिचौ
यदासामग्रं प्रवतामिनक्षसि ॥

हे सिन्धो, त्वा त्वां शिशुमिन्न मातरः मातरः पुत्रमिव वाश्राः शब्दयन्त्यः इतरा नद्यः अभि अर्षन्ति अभिगच्छन्ति। पयसेव धेनवः पयसा युक्ता नवप्रसूतिका गावः इव। किंच, युध्वा युद्धकृत् राजेव त्वमित् त्वमेव सिचौ सिच्यमानौ तटौ नयसि उदकपूरं यत् यदा आसां प्रवतां

त्वया सह गच्छन्तीनां अग्रं अग्रे इनक्षसि व्याप्नोषि सर्वासां पुरतो गच्छसि । ऋसा.

[1]इमं मे गङ्गे यमुने सरस्वति
शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तया-
ऽऽर्जीकीये शृणुह्या सुषोमया ॥

अत्र प्रधानभूताः सप्त नद्यः तदवयवभूता नद्यः तिस्रः स्तूयन्ते– हे गङ्गे, हे यमुने, हे सरस्वति, हे शुतुद्रि, हे परुष्णि, हे असिक्न्या अवयवभूतया सहिते मरुद्वृधे, हे वितस्तया सुषोमया च सहिते आर्जीकीये, त्वं च एवं सप्त नद्यः यूयं मे स्तोमं स्तोत्रं (इमं) अस्मदीयं आ सचत आसेवध्वम्, (आ) शृणुहि शृणुत च । आर्जीकीयाया वितस्तया सुषोमया च साहित्यं निरुक्ते उक्तम्– 'वितस्तया चार्जीकीय आ शृणुहि सुषोमया च' (नि. ९।२६) इति । अत्र 'गङ्गा गमनात्' (नि. ९।२६) इत्यादि निरुक्तं द्रष्टव्यम् । ऋसा.

[2]तृष्टामया प्रथमं यातवे सजूः
सुसर्त्वा रसया श्वेत्या त्या ।
त्वं सिन्धो कुभया गोमतीं क्रुमुं
मेहत्न्वा सरथं याभिरीयसे ॥

हे सिन्धो, त्वं क्रुमुं क्रमणशीलां गोमतीं नदीं यातवे प्रतियातुं पर्वतादवरूढा प्रथमं तृष्टामया नद्या सजूः संगताऽसि । पश्चात् सुसर्त्वा रसया श्वेत्या त्या कुभया मेहत्न्वा च सह सजूर्भव याभिः त्वं सरथं समानं रथमारुह्य ईयसे गच्छसि । ऋसा.

ऋजीत्येनी रुशती महित्वा
परि ज्रयांसि भरते रजांसि ।
अदब्धा सिन्धुरपसामपस्तमा-
ऽश्वा न चित्रा वपुषीव दर्शता ॥

ऋजीती ऋजुगामिनी एनी श्वेतवर्णा रुशती दीप्यमाना सिन्धुः ज्रयांसि वेगवन्ति रजांसि उदकानि परि भरते प्रभरति । तादृशी अदब्धा अहिंसिता सिन्धुः अपसां कर्मवतीनां मध्ये अपस्तमा वेगाख्यकर्मवती भवति । अश्वा न वडवेव चित्रा चायनीया वपुषी वपुष्मती योषित् इव दर्शता दर्शनीया भवति । ऋसा.

स्वश्वा सिन्धुः सुरथा सुवासा
हिरण्ययी सुकृता वाजिनीवती ।
ऊर्णावती युवतिः सीलमाव-
त्युताधि वस्ते सुभगा मधुवृधम् ॥

सेयं सिन्धुः स्वश्वा शोभनाश्वोपेता सुरथा शोभनरथा सुवासाः शोभनवसना हिरण्ययी हिरण्मयाभरणा सुकृता वाजिनीवती अन्नवती ऊर्णावती । तस्याः समीपे देशे हि सन्त्यूर्णाः यासां रोमभिः कम्बलाः क्रियन्ते । युवतिः नित्यतरुणी सर्वदाऽहीनोदका सीलमावती । सीराणि यया ओषध्या रज्जुभूतया बध्यन्ते सा सीलमेति निगद्यते कृषीवलैः । तादृगोषध्युपेता । उत अपि च, सुभगा सिन्धुः मधुवृधं मधुवर्धकं निर्गुण्ड्यादिकं अधि वस्ते आच्छादयति । तस्यास्तीरे निर्गुण्ड्यादीनि बहूनि सन्ति । ऋसा.

[1]सुखं रथं युयुजे सिन्धुरश्विनं
तेन वाजं सनिषदस्मिन्नाजौ ।
महान् ह्यस्य महिमा पनस्यते-
ऽदब्धस्य स्वयशसो विरप्शिनः ॥

सिन्धुः देवता सुखं सुखकरं शोभनद्वारं वा अश्विनं अश्ववन्तं रथं युयुजे युनक्ति । तेन रथेन वाजं अन्नं सनिषत् प्रयच्छतु । अस्मिन्नाजौ संग्रामे यज्ञे वा अस्य सिन्धुरथस्य महिमा महान् हि पनस्यते स्तूयते । कीदृशस्यास्य ? अदब्धस्य अन्यैरहिंसस्य स्वयशसः स्वायत्तकीर्तेः विरप्शिनः । महन्नामैतत् । महतः । ऋसा.

---

(१) ऋसं. १०।७५।५ ; तैआ. १०।१ परुष्ण्या । असिक्न्या (परुष्णिया । असिक्निया) ; नि. ९।२६.

(२) ऋसं. १०।७५।६–८.

(१) ऋसं. १०।७५।९ ; नि. ७।७.

सप्त ग्राम्याः पशवः

[1]इडायास्पदं घृतवत्सरीसृपं
जातवेदः प्रति हव्या गृभाय ।
ये ग्राम्याः पशवो विश्वरूपा-
स्तेषां सप्तानां मयि रन्तिरस्तु ॥

इलायाः । गोनामैतत्, 'इला धेनुः सहवत्सा न आगात्' इत्यादिश्रुतेः । तस्याः पदं पादः घृतवत् घृतोपेतम्. 'सा यत्रयत्र न्यक्रामत् ततो घृतमपीड्यत' (तैसं. २।६।७।१) इति श्रुतेः । सरीसृपं अत्यर्थं सर्पत् । इडापदात्मना भावितं पशोर्दक्षिणं पादं हव्या हव्यानि धानाकरम्भादीनि हवींषि च । हे जातवेदः जातानां वेदितरग्ने, प्रति गृभाय प्रतिगृहाण । गृहीतहविषस्तव प्रसादात् ग्राम्याः ग्रामे भवाः गोश्वाजाविपुरुषगर्दभोष्ट्राख्याः विश्वरूपाः नानाकाराः ये पशवः सन्ति तेषामुक्तानां सप्तानां पशूनां रन्तिः प्रीतिः मयि चास्तु । ततः समृद्धिर्भवतु इत्यर्थः । असा.

वशाः, ऋषभाः, उक्षाणः

[2]यस्य वशास ऋषभास उक्षणो
यस्मै मीयन्ते स्वरवः स्वर्विदे ।
यस्मै शुक्रः पवते ब्रह्मशुम्भितः
स नो मुञ्चत्वंहसः ॥

वशासः वशा वन्ध्या गावः ऋषभासः ऋषभाः उक्षणः उक्षाणः सेचनसमर्थाः । एवं वशादिरूपाः पशवः यस्य इन्द्रस्य यागार्थमालभ्यन्ते, यस्मै इन्द्राय स्वर्विदे स्वर्गस्य लम्भयित्रे स्वरवः । यूपावतक्षणशकलः स्वरुः । तेन तद्वन्त उपलक्ष्यन्ते । स्वरवः स्वरुमन्तो यूपाः मीयन्ते अवटेषु स्थाप्यन्ते । यस्मै इन्द्राय शुक्रः निर्मलो रसवान् सोमः ब्रह्मशुम्भितः ब्रह्मभिः मन्त्रैः अभिषवसाधनैरलंकृतः सन् पवते दशापवित्रधारया स्रवति, सः तादृशः इन्द्रः नः अस्मान् अंहसः सर्वानर्थनिदानभूतात् पापात् मुञ्चतु मोचयतु । अस्मत्तः पापं विश्लेषयतु इत्यर्थः । असा.

(१) असं. ३।१०।६ ; सामब्रा. २।२।११.
(२) असं. ४।२४।४.

सस्यसंरक्षणम्

[1]यस्ते पृथु स्तनयित्नुर्य ऋष्वो
दैवः केतुर्विश्वमाभूषतीदम् ।
मा नो वधीर्विद्युता देव सस्यं
मोत वधी रश्मिभिः सूर्यस्य ॥

हे देव द्योतनशील पर्जन्य, ते तव स्वभूतः पृथुः विस्तीर्णः महान् यः स्तनयित्नुः गर्जनरूपशब्दं कुर्वन् अशनिः यश्च ऋष्वः बाधकः । दैवः देवस्य पर्जन्यस्य संबन्धी देवैर्निर्मितो वा । केतुः अनर्थज्ञापकोऽशनिः केतुरूपो वा ग्रहः इदं परिदृश्यमानं विश्वं आभूषति व्याप्नोति । बाधितुमिति शेषः । हे देव पर्जन्य, विद्युता तादृश्या अशन्या नः अस्माकं सस्यं शाल्यादिकं मा वधीः मा बाधिष्ठाः । उत अपि च सूर्यस्य सवितुः रश्मिभिः संतापकैः किरणैः अस्मदीयं सस्यं मा वधीः मा शोषय । अयमर्थः— क्षेत्रेषु उप्ताः शाल्यादयः अतिवृष्ट्यना-वृष्टिभ्यां बाध्यन्ते । सस्यविनाशेन तदुपजीविन्यः प्रजा विनश्यन्ति । अतोऽत्र तत्परिहारः प्रार्थ्यते इति । असा.

सप्त मधूनि

[2]यो वै कशायाः सप्त मधूनि वेद मधुमान् भवति ।
ब्राह्मणश्च राजा च धेनुश्चानड्वांश्च व्रीहिश्च यवश्च मधु सप्तमम् ॥
मधुमान् भवति मधुमदस्याऽऽहार्यं भवति ।
मधुमतो लोकान् जयति य एवं वेद ॥

ग्राम्याः पशवः

[3]यः प्रजाकामः पशुकामः स्यात्स एतं प्राजापत्य-मजं तूपरमा लभेत । प्रजापतिमेव स्वेन भागधेयेनोप धावति । स एवास्मै प्रजां पशून्प्र जनयति । यच्छ्मश्रुणस्तत्पुरुषाणाꣳ रूपम् । यत्तूपरस्तदश्वानाम् । यदन्यतोदन्तद्गवाम् । यदव्या इव शफा-

(१) असं. ७।११।१.
(२) असं. ९।१।२२–२३.
(३) तैसं. २।१।१।३–५.

स्तदवीनाम् । यदजस्तदजानाम् । एतावन्तो वै ग्राम्याः पशवः । तान् रूपेणैवाव रुन्द्धे ॥

पशुं प्रशंसति– यदिति । पुंस्पशावजे श्मश्रूणि विद्यन्ते । तूपरत्वं सर्वेष्वजेष्वभावेऽपि प्रकृते विद्यते । अन्यतः अध एव दन्ता इत्यन्यतोदन् अन्यतोदत्त्वम् । अविखुरसदृशाः शफा दृश्यन्त एव । अजत्वजातिश्चास्ति । तस्मात्पुरुषादिरूपत्वम् । यद्यपि ग्राम्येषु पशुषु गर्दभोष्ट्रावपि सप्तसंख्यासिद्ध्ये तत्र तत्र गृह्येते तथाऽपि पुरुषादयः पञ्चैव प्रशस्ताः, विप्रराजादिभिरत्यन्तमादृतत्वात् । अत एव तदीयेन रूपेण सर्वरूपसदृशेन तान् पुरुषादीन् सर्वानधीनान् करोति । तैसा.

[1]सप्त ग्राम्याः पशवः, सप्ताऽऽरण्याः ॥

गोपुरुषाश्वाजाविगर्दभोष्ट्राः ग्राम्याः । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयाः सप्त आरण्याः । तैसा.

धान्यानि धातवः पशवश्च

[2]अन्नं च मेऽक्षुच्च मे व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे गोधूमाश्च मे मसुराश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे ॥

अन्नं प्रसिद्धम् । अक्षुत् अन्नसाध्यः क्षुत्परिहारः । व्रीहियवमाषतिलमुद्गाः प्रसिद्धाः । खल्वाः मुद्गेभ्योऽपि स्थूलबीजाः । गोधूमाः प्रसिद्धाः । मसुराः मुद्गवत् सूपहेतवः । प्रियङ्गवः प्रसिद्धाः । अणवः सूक्ष्मशालयः । श्यामाकाः ग्राम्या धान्यविशेषाः । नीवाराः आरण्याः । तैसा.

[3]अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मेऽयश्च मे सीसं च मे त्रपुश्च मे श्यामं च मे लोहं च मेऽग्निश्च म आपश्च मे वीरुधश्च म ओषधयश्च मे कृष्टपच्यं च मेऽकृष्टपच्यं च मे ग्राम्याश्च मे पशव आरण्याश्च यज्ञेन कल्पन्ताम् ॥

अश्मादयः प्रसिद्धाः । श्यामं कृष्णायसम् । लोहं कांस्यताम्रादि । अग्न्यादयः प्रसिद्धाः । ग्राम्यारण्यपशवो यज्ञेन निमित्तीभूतेन कल्पन्तां समर्था भवन्तु । तैसा.

[1]गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च मे वेहच्च मेऽनड्वाञ्च मे धेनुश्च मे ॥

गर्भाः वत्साश्च प्रसिद्धाः । सार्धसंवत्सरो वत्सरूपः पुंगवः त्र्यविः । तथाविधा गौः त्र्यवी । द्विसंवत्सर ऋषभो दित्यवाट् । तथाविधा गौः दित्यौही । सार्धद्विसंवत्सर ऋषभः पञ्चाविः । तथाविधा गौः पञ्चावी । संवत्सरत्रयोपेत ऋषभः त्रिवत्सः । तथाविधा गौः त्रिवत्सा । सार्धत्रिवत्सर ऋषभः तुर्यवाट् । तथाविधा गौः तुर्यौही । चतुःसंवत्सर ऋषभः पष्ठवात् । तथाविधा गौः पष्ठौही । सेचनसमर्थ ऋषभः उक्षा । वन्ध्या गौर्वशा । उक्ष्णोऽप्यधिकवयस्क ऋषभः । गर्भघातिनी गौः वेहत् । शकटस्य वाहकोऽनड्वान् । नवप्रसूता गौः धेनुः । तैसा.

ग्राम्याः पशवः

[2]प्राजापत्यमजं तूपरं विश्वरूपमालभेत सर्वेभ्यः कामेभ्यः । प्रजापतिर्योनिः । योनेरेव प्रजायते । प्रजापतिः प्रदाता । तमेव भागधेयेनोपधावति । सोऽस्मै सर्वान् कामान् प्रयच्छति । अश्वस्येव वा एतस्य शिरः । गर्दभस्येव कर्णौ । पुरुषस्येव

---

(१) तैसं. २।४।६।२.

(२) तैसं. ४।७।४।२-३ ; कासं. १८।९ (५९) ; मैसं. २।११।४ (४) ; शुसं. १८।१०-१२.

(३) तैसं. ४।७।५।१-२ ; कासं. १८।१० (६०) ; मैसं. २।११।५ (५) ; शुसं. १८।१३-१४. कासं., मैसं., शुसं. इत्येतेषां ग्रन्थानां पाठभेदाः बाहुल्यान्न निर्दिष्टाः । ' अश्मा च मे, गर्भाश्च मे ' इत्यग्रिमपरिच्छेदविषयेऽप्येवमेव व्यवस्था ज्ञेया ।

(१) तैसं. ४।७।१०।१-२ ; कासं. १८।१२ (६२) ; मैसं. २।११।६ (६) ; शुसं. १८।२६-२७.

(२) कासं. १३।१ (१).

श्मश्रूणि । गोरिव पूर्वौ पादौ । अवेरिवापरौ । शुन इव लोमानि । अजो भवति । एतावन्तो वै ग्राम्याः पशवः । तानेवैतेनाऽऽप्त्वाऽवरुन्द्धे ॥

[1]प्राजापत्यं तूपरमालभेत पशुकामः । प्राजापत्या वै पशवः । प्रजापतिः पशूनां प्रजनयिता । तमेव भागधेयेनोपासरत् । सोऽस्मै पशून् प्रजनयति । योनिर्वै प्रजापतिः । योनेरेव प्रजायते । सर्वेषाꣳ वा एष पशूनाꣳ रूपाणि प्रति । पुरुषस्येव श्मश्रूणि । अश्वस्येव शिरः । गर्दभस्येव कर्णौ । शुन इव लोमानि । गोरिव पूर्वौ पादौ । अवेरिवापरौ । अजः खलु वै सर्वाण्येव पशूनाꣳ रूपाण्याप्त्वाऽवरुन्द्धे । सर्वाण्येनं पशूनाꣳ रूपाण्युपतिष्ठन्ते ॥

सप्तान्नानि

[2]सप्तान्नहोमाञ्जुहोति । सप्त वा अन्नानि । यावन्त्येवान्नानि । तान्येवावरुन्द्धे । सप्त ग्राम्या ओषधयः । सप्ताऽऽरण्याः । उभयीषामवरुद्ध्यै ॥

अन्नहेतूनामोषधीनां सप्तत्वात् तत्कार्याणामन्नानामपि सप्तत्वम् । ओषधीनां सप्तत्वमापस्तम्बोऽग्निचयने दर्शयति– ' तिलमाषव्रीहियवाः प्रियङ्ग्वणवो गोधूमा वेणुः श्यामाका नीवारा जर्तिलाश्च गवीधुका अरण्यजा मार्कटका विज्ञेया गार्मुतसप्तमाः कुलत्थसप्तमा वा सप्त ग्राम्याः कृष्टे सप्ताऽऽरण्या अकृष्टे ' इति । तैसा. ( १।७।१०।३ )

धातवः

[3]यावत्कृष्णायसꣳ सर्वम् । देवत्रा यच्च मानुषम् । सर्वास्ताः ॥

देवत्रा देवलोके कृष्णवर्णनायसा निर्मितमायुधादि मानुषं च कुठारादि । तैब्रासा.

यावल्लोहायसꣳ सर्वम् । देवत्रा यच्च मानुषम् । सर्वास्ताः ॥

लोहायसं ताम्रजन्यं पात्रम् । तैब्रासा.

सर्वꣳ सीसꣳ सर्वं त्रपु । देवत्रा यच्च मानुषम् । सर्वास्ताः ॥

सीसं त्रपु च तारतम्येन चैकवर्णं लोहद्वयम् । तैब्रासा.

सर्वꣳ हिरण्यꣳ रजतम् । देवत्रा यच्च मानुषम् । सर्वास्ताः ॥

हिरण्यं द्विविधम्– श्वेतं पीतं च । तत्र श्वेतं रजतं पीतं सुवर्णम् । तैब्रासा.

सर्वꣳ सुवर्णꣳ हरितम् । देवत्रा यच्च मानुषम् । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेनर्षिणा तेन ब्रह्मणा । तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ॥

हरितं पीतं हिरण्यम् । अत एव मनोहरत्वात् सुवर्णम् । तच्च देवलोकगतं मनुष्यलोकगतं च यद्यदस्ति ताः सर्वाः कामदुघाः कृत्वोपदधे । सर्वत्रानुषङ्गद्योतनार्थं पुनः पाठः । तैब्रासा.

महिमेति धनस्याऽऽख्या

[1]गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति ॥

गोअश्वादीह महिमेत्याचक्षते । गावश्चाश्वाश्च गोअश्वं, द्वन्द्वैकवद्भावः । सर्वत्र गवाश्वादि महिमेति प्रसिद्धम् । शंकर.

( १ ) मैसं. २।५।१ ( १ ).
( २ ) तैब्रा. १।३।८।१.
( ३ ) तैब्रा. ३।१२।६।५-६.

( १ ) छाउ. ७।२४।२.

# सभा समितिश्च

## वेदाः

विदथ्यः सभेयो वीरः

'सोमो धेनुं सोमो अर्वन्तमाशुं
सोमो वीरं कर्मण्यं ददाति ।
सादन्यं विदथ्यं सभेयं
पितृश्रवणं यो ददाशदस्मै ॥

यः यजमानः ददाशत् सोमाय हविर्लक्षणान्यन्नानि दद्यात् तस्मै यजमानाय सोमः धेनुं सवत्सां दोग्ध्रीं गां ददाति । तथा आशुं शीघ्रगामिनं अर्वन्तं अश्वं ददाति प्रयच्छति । तथा वीरं पुत्रं अस्मै यजमानाय ददाति । कीदृशं पुत्रम् ? कर्मण्यं लौकिककर्मसु कुशलम् । सदन्यम् । सदनं गृहम्, तदर्हम्, गृहकार्यकुशलमित्यर्थः । विदथ्यम् । विदन्ति एषु देवानिति विदथाः यज्ञाः । तदर्हम्, दर्शपूर्णमासादियागानुष्ठानपरमित्यर्थः । सभेयं सभायां साधुम्, सकलशास्त्राभिज्ञमित्यर्थः । पितृश्रवणम् । पिता श्रूयते प्रख्यायते येन पुत्रेण तादृशम् । कर्मण्यम् । कर्मसु साधुः कर्मण्यः । सभेयम् । 'तत्र साधुः' इत्यर्थे ढप्रत्ययः ।

ऋसा.

देवव्याप्ता सभा

'त्वेषं रूपं कृणुत उत्तरं यत्
संपृञ्चानः सदने गोभिरद्भिः ।
कविर्बुध्नं परि मर्मृज्यते धीः
सा देवताता समितिर्बभूव ॥

सदने अन्तरिक्षे गोभिः गन्त्रीभिः अद्भिः मेघस्थाभिः सह संपृञ्चानः वैद्युतरूपेण संयुक्तः सन् त्वेषं दीप्तं सर्वैः द्रष्टुमशक्यं उत्तरं उत्कृष्टतरं रूपं वैद्युतं प्रकाशं यत् यदा कृणुते करोति तदानीं कविः क्रान्तदर्शी धीः सर्वेषां धारकः सोऽग्निः बुध्नं सर्वस्योदकस्य मूलभूतमन्तरिक्षं परि मर्मृज्यते परितो मार्ष्टि स्वतेजसाऽऽच्छादयति । तस्याग्नेः सा देवताता देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिः अस्माभिः स्तुता सती समितिर्बभूव तेजसां संहतिर्भवति । सीदन्ति अस्मिन् गन्धर्वादय इति सदनं अन्तरिक्षम् । देवताता । देवेन तता देवताता ।

ऋसा.

सभ्या वाणी

'मिम्यक्ष येषु सुधिता घृताची
हिरण्यनिर्णिगुपरा न ऋष्टिः ।
गुहा चरन्ती मनुषो न योषा
सभावती विदथ्येव सं वाक् ॥

सुधिता सुष्ठु निहिता सुष्ठु हिता वा लोके, घृताची घृतं क्षरणशीलमुदकं अञ्चन्ती हिरण्यनिर्णिक् हितरमणीयरूपा । निर्णिगिति रूपनाम । एवंरूपा ऋष्टिः विद्युदाख्याऽऽयुधविशेषो वा, उपरा न मेघमालेव येषु मरुत्सु संमिम्यक्ष । म्यक्षतिर्गतिकर्मा । संगताऽभूत् । मेघपङ्क्तिविद्युतौ इमे ( ? उभे ) अपि संगते इत्यर्थः । मेघपङ्क्तिर्विद्युचोभे दृष्टान्तेन विशेष्येते– गुहा निगूढा गुहायां वा अन्तरिक्षे चरन्ती । तत्र दृष्टान्तः– मनुषो न योषा । मनुष्यस्य परिवृढादेर्महिषीवत् । सा यथा सुवेषा अन्तःपुरे एव मध्ये चरति तद्वत् । किं सर्वदैवमिति ? नेत्याह– सभावती । सभा जनसंघः, तद्वती, वर्षकाले आविर्भवन्तीत्यर्थः । तत्र दृष्टान्तः– विदथ्या वाक् इव । विदथः यज्ञः । तदर्हतीति विदथ्या प्रैषस्तोत्रादिरूपा वाक् । सा यथा यज्ञसभां प्राप्याऽऽविर्भवति तद्वत् । यद्वा, विदथ्या वेदनार्हा विवदमानयोर्वाक् । सा यथा सभावती तद्वत् । सैवंरूपा येषु मिम्यक्ष ते मरुतो देवयजनमागच्छन्त्वित्यर्थः ।

ऋसा.

---

( १ ) ऋसं. १।९१।२० ; मैसं. ४।१४।१ ( १ ) ; शुसं. ३४।२१ ; तैब्रा. २।८।३।१ ददाति ( ददातु) पितृश्र ( पितुःश्र) ; आश्रौ. १।२।१९.

( २ ) ऋसं. १।९५।८.

( १ ) ऋसं. १।१६७।३.

[1]उताशिष्ठा अनु शृण्वन्ति वह्नयः
सभेयो विप्रो भरते मती धना।
वीळुद्वेषा अनु वश ऋणमाददिः
स ह वाजी समिथे ब्रह्मणस्पतिः ॥

उत अपि च, आशिष्ठाः आशुतराः शीघ्रगामिनः वह्नयः। अश्वनामैतत्। वोढारो ब्रह्मणस्पतेरश्वाः अनु शृण्वन्ति अस्माभिः कृतं स्तोत्रमनुक्रमेण शण्वन्ति। यद्वा, ब्रह्मणस्पतिना कृतमनुशासनं शृण्वन्ति। अतस्ते तमस्मदीयं यज्ञं प्रापयन्तु इति शेषः। सभेयः सभायां साधुः। 'ढश्छन्दसि' (पासू. ४।४।१०६) इति ढः। विप्रः मेधावी अध्वर्युः होता वा मती मत्या मननीयेन स्तोत्रेण धना हविर्लक्षणानि धनानि तस्मै ब्रह्मणस्पतये भरते बिभर्ति। संपादयतीति यावत्। यद्वा, स्तोत्रेण धनानि भरते बिभर्ति पोषयति। अतः वीळुद्वेषाः। वीळून् दृढान् प्रबलान् राक्षसादीन् द्वेष्टीति तादृशो ब्रह्मणस्पतिः वशा वशायाः ऋणं अस्माभिः यज्वभिः प्रदेयमवदानात्मकं अनु अनुक्रमेण आददिः आदाता भवत्विति शेषः। अवदानस्य ऋणत्वं च तैत्तिरीये– 'त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यः' (तैसं. ६।३।१०।५) इत्यादिना स्पष्टमाम्नातम्। यद्वा, अनुः आनुगुण्ये। वशा वशस्य कामस्य अभिलाषस्य अनुगुणमादाता भवत्विति योज्यम्। हशब्दः प्रसिद्धौ। सः खलु ब्रह्मणस्पतिः समिथे। संयन्ति संगच्छन्ते अस्मिन् आहुतिभिः देवा इति समिथः यज्ञः। तस्मिन् वाजी अन्नवान्। तस्मात् हविष आदाता भवत्वित्यर्थः। ऋसा.

सभावान् यज्ञः

[2]गोमाँ अग्नेऽविमाँ अश्वी यज्ञो
नृवत्सखा सदमिदप्रमृष्यः।
इळावाँ एषो असुर प्रजावान्
दीर्घो रयिः पृथुबुध्नः सभावान् ॥

हे असुर बलवन्, हे अग्ने, एषः मदीयोऽयं यज्ञः गोमान् गोभिस्तद्वान्, अविमान् अवयः मेषाः अस्य सन्ति इति तद्वान्, अश्वी अश्वोपेतश्चास्तु। नृवत्सखा। नरः कर्मणां नेतारः अध्वर्य्वादयः, तद्वन्तः सखायः अनुष्ठातारः यजमानाः यस्य स तथोक्तः। सदमित् सदैव अप्रमृष्यः अप्रधृष्यश्चास्तु। तथा इळावान्। इळा हविर्लक्षणमन्नम्, तद्वान्। प्रजावान् पुत्रपौत्रादियुक्तश्चास्तु। दीर्घः अविच्छिन्नानुष्ठानोपेतः रयिः धनवान्। लुप्तमत्वर्थीयः। पृथुबुध्नः। पृथूनि बहुलानि बुध्नानि धनादीनि कारणानि यस्य स तथोक्तः। सभावान् उपद्रष्टृरूपसभायुक्तश्चास्तु। ऋसा.

गावः सभासु स्तुताः

* [1]यूयं गावो मेदयथा कृशं चि-
दश्रीरं चित्कृणुथा सुप्रतीकम्।
भद्रं गृहं कृणुथ भद्रवाचो
बृहद्वो वय उच्यते सभासु ॥

नराणां सभा

[2]प्र ते अग्नयोऽग्निभ्यो वरं निः
सुवीरासः शोशुचन्त द्युमन्तः।
यत्रा नरः समासते सुजाताः ॥

अग्निभ्यः लौकिकेभ्योऽग्निभ्यः वरं अत्यन्तं द्युमन्तः दीप्तिमन्तः सुवीरासः कल्याणपुत्रपौत्रप्रदाः ते अग्नयः प्र निः शोशुचन्त प्रकर्षेण नितरां दीप्यन्ते। यत्र येष्वग्निषु सुजाताः सुजन्मानः नरः कर्मणां नेतारो यजमानाः ऋत्विजो वा समासते सहाऽऽसते। ऋसा.

---

(१) ऋसं. २।२४।१३.

(२) ऋसं. ४।२।५; तैसं. १।६।६।४, १।७।६।७, ३।१।११।१; कासं. ५।६ (३५), ३२।६ (१५); मैसं. १।४।३

* अस्याः ऋचः व्याख्यानं 'जनाः, तत्संबन्धीनि कर्माणि च' इत्यस्मिन् प्रकरणे (राका. पृ. ४४९) द्रष्टव्यम्।

(२५) गोमाँ (गोमं) विमाँ (विमं) बुध्नः (बुध्न्यः), १।४।८ (३७); माश्रौ. १।४।३।१९.

(१) ऋसं. ६।२८।६. शेषः स्थलादिनिर्देशः 'जनाः, तत्संबन्धीनि कर्माणि च' इत्यस्मिन् प्रकरणे (राका. पृ. ४४९) द्रष्टव्यः।

(२) ऋसं. ७।१।४.

इन्द्रभक्तः सभार्हः

[१]अश्वी रथी सुरूप इद्
गोमाँ इदिन्द्र ते सखा ।
श्वात्रभाजा वयसा सचते सदा
चन्द्रो याति सभामुप ॥

हे इन्द्र, ते तव सखा मित्रभूतः पुरुषः अश्व्यादिगुणविशिष्ट एव भवति । इच्छब्दः प्रत्येकमभिसंबध्यते । अश्वी इत् बहुभिरश्वैरुपेत एव भवति । न कदाचिदश्वैर्वियुज्यते । रथी रथवानेव स भवति । सुरूप इत् शोभनरूपः शोभनावयव एव स भवति । गोमाँ इत् बह्वीभिर्गोभिर्युक्त एव स भवति । न कदाचिदेतैर्वियुज्यते इत्यर्थः । अपि च, श्वात्रभाजा । श्वात्रं इति धननाम । आशु अतनीयं शीघ्रं प्राप्तव्यं शोभनं धनं संभजता ईदृग्धनसंयुक्तेन वयसा । अन्ननामैतत् । अन्नेन स सर्वदा सचते समवैति संगच्छते । अत एव चन्द्रः सर्वेषामाह्लादकः सन् सभां जनसंसदं उप याति उपगच्छति । ऋसा.

सत्यकर्मा राजा समितिगामी

[२]परि सद्मेव पशुमान्ति होता
राजा न सत्यः समितीरियानः ।
सोमः पुनानः कलशाँ अयासीत्
सीदन्मृगो न महिषो वनेषु ॥

होता देवानामाह्वाता ऋत्विक् पशुमन्ति पशुमतः सद्मेव यज्ञगृहान् यथोपगच्छति । किंच, राजा न यथा राजा सत्यः सत्यकर्मा सन् समितीः । संग्रामनामैतत् सम्यक् प्राप्यते योद्धृभिरत्रेति । तान् संग्रामान् इयानः गच्छन् भवति, तथा पुनानः सोमः वनेषु वननीयेषु वसतीवर्याख्येषूदकेषु सीदन् मृगो न महिषः महिषाख्यो मृग इव उदकेषु तिष्ठन् कलशान् द्रोणाभिधानान् अयासीत् परियाति । यद्वा, महिषो महान् पूज्यो वा सोमः कलशान् परिगच्छतीति । ऋसा.

सभा देवी

[१]यदग्न एषा समितिर्भवाति
देवी देवेषु यजता यजत्र ।
रत्ना च यद्विभजासि स्वधावो
भागं नो अत्र वसुमन्तं वीतात् ॥

हे यजत्र यष्टव्य अग्ने, यत् यदा एषा समितिः अस्मत्कर्तृका स्तुतिसंहतिः यजता यजतेषु यष्टव्येषु देवेषु मध्ये देवी द्योतमाना भवाति, यष्टव्या देवाः अस्माभिः स्तूयन्ते इज्यन्ते चेत्यर्थः । हे स्वधावः हविर्लक्षणान्नवन्नग्ने, त्वं यत् यदा रत्ना च रत्नानि रमणीयानि धनानि स्तोतृभ्यो यष्टृभ्यश्च विभजासि विभजसि अत्र तदानीं तथा नः अस्मान् प्रति वसुमन्तं धनवन्तं नानाधनावयवभूतं भागं अंशं वीतात् वयय आगमय, अस्मभ्यं प्रयच्छेत्यर्थः । ऋसा.

कितवसभा

[२]सभामेति कितवः पृच्छमानो
जेष्यामीति तन्वा३ शूशुजानः ।
अक्षासो अस्य वि तिरन्ति कामं
प्रतिदीव्ने दधत आ कृतानि ॥

तन्वा शरीरेण शूशुजानः शोशुचानः दीप्यमानः कितवः कोऽत्रास्ति धनिकस्तं जेष्यामीति पृच्छमानः पृच्छन् सभां कितवसंबन्धिनीं एति गच्छति । तत्र प्रतिदीव्ने प्रतिदेवित्रे कितवाय कृतानि देवनोपयुक्तानि कर्माणि आ दधतः जयार्थमाभिमुख्येन मर्यादया वा दधतः अस्य कितवस्य कामं इच्छां अक्षासः अक्षाः वि तिरन्ति वर्धयन्ति । ऋसा.

---

(१) ऋसं. ८।४।९ ; सासं. १।३।५ (२७७) इदिन्द्र (यदिन्द्र) चन्द्रो वा (चन्द्रैर्या).

(२) ऋसं. ९।९२।६.

(१) ऋसं. १०।११।८ ; असं. १८।१।२६ ; मैसं. ४।१४।१५ (२२२) ; ऐआ. ५।१।१।२४.

(२) ऋसं. १०।३४।६.

यज्ञसभायां अन्यतमसभ्यविजयिनोऽभिनन्दनमन्यैः सभ्यैः

* [1]सर्वे नन्दन्ति यशसाऽऽगतेन
सभासाहेन सख्या सखायः ।
किल्बिषस्पृत्पितुषणिर्ह्येषा-
मरं हितो भवति वाजिनाय ॥

राजानः समितिंगमाः

[2]यत्रौषधीः समग्मत
राजानः समिताविव ।
विप्रः स उच्यते भिष-
ग्रक्षोहामीवचातनः ॥

यत्र यस्मिन् देशे ओषधीः ओषधयः समग्मत संगच्छन्ते । राजानः समिताविव संग्रामे यथा संगता भवन्ति तद्वत् । तासां नानाविधानामोषधीनां संगमनं यस्मिन् देशेऽस्ति तत्र विप्रः प्राज्ञः ब्राह्मणः स भिषक् उच्यते रक्षोहा रक्षोहन्ता । अमीवचातनः । अमीवा व्याधिः, तस्य चातनः चातयिता नाशयिता च भवति तदानीम् । ऋसा.

समितिजयकामना

[3]अभिभूरहमागमं विश्वकर्मेण धाम्ना ।
आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥

हे सपत्नाः, अभिभूः अभिभविता अहं विश्वकर्मेण सर्वकर्मक्षमेण धाम्ना धारकेण तेजसा बलेन वा सार्धं आगमं आगतवानस्मि । अतः वः युष्माकं चित्तं मनः आ ददे गृह्णामि, मनोगतं धैर्यं हरामीत्यर्थः । वः युष्माकं व्रतं कर्म चाहं आ ददे । वः युष्मदीयः यः समितिः संग्रामः तं च अहं आ ददे अपहरामि । ऋसा.

* अस्या ऋचः व्याख्यानं 'जनाः, तत्संबन्धीनि कर्माणि च' इत्यस्मिन् प्रकरणे (राका. पृ. ४४४) द्रष्टव्यम् ।

(१) ऋसं. १०।७१।१०; ऐब्रा. ३।२; आश्रौ. १।४।४.

(२) ऋसं. १०।९७।६; तैसं. ४।२।६।२ प्रथमपादे (यदोषधयः संगच्छन्ते); कासं. १६।१३ (१५८) यत्रौषधीः (यदोषधयः) ताविव (ता इव); मैसं. २।७।१३ (१७१) ताविव (ता इव) भिषग्र (कवी र) शेषं तैसंवत्; शुसं. १२।८०.

(३) ऋसं. १०।१६६।४.

समानी समितिः

* [1]समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः
समानेन वो हविषा जुहोमि ॥

समितिः विश्वरूपा देवी, यस्यां राजानः अराजानश्च भाषन्ते

[2]आगन्मेमां समितिं विश्वरूपां
यस्यां पूर्वमवदद्देव एकः ।
सा नः सूक्तैर्जुजुषाणा समीच्य-
स्मान्वृणीतां सुमनस्यमाना ॥
इयं देवी समितिर्विश्वरूपा
शिल्पं कृण्वाना चरति जनेषु ।
तां राजानः कवयो हृत्सु केतै-
रराजानश्च वदनैः पुनन्ति ॥
अग्निं सामित्यमुप सं सदेम
वाचा प्रियं मधुमत्या वदन्तः ।
सोमो राजा वरुणो मित्रधर्मा
मयि श्रीयमाण उप सं नमन्तु ॥
यो वः शुष्मो हृदये वो बाह्वोर्यो यश्च चक्षुषि ।
जिह्वाया अग्रे यो मन्युस्तं वो वि नयामसि ॥

विवादजयकर्म

[3]नेच्छत्रुः प्राशं जयाति सहमानाभिभूरसि ।
प्राशं प्रतिप्राशो जह्यरसान् कृण्वोषधे ॥

* अस्या ऋचः व्याख्यानं 'जनाः, तत्संबन्धीनि कर्माणि च' इत्यस्मिन् प्रकरणे (राका. पृ. ३८७) द्रष्टव्यम् ।

(१) ऋसं. १०।१९१।३. शेषः स्थलादिनिर्देशः 'जनाः, तत्संबन्धीनि कर्माणि च' इत्यस्मिन् प्रकरणे (राका. पृ. ३८७) द्रष्टव्यः ।

(२) पसं. १।९२।१-४.

(३) असं. २।२७।१-७.

हे पाठाख्ये ओषधे, शत्रुः प्रतिवादी प्राशं प्रष्टारं वादिनं त्वत्सेवकं मां नेत् जयाति। इदिति अवधारणे। नैव जयतु। यतस्त्वं सहमाना शत्रुसहनस्वभावा अतः अभिभूरसि प्रतिवादिनः शत्रोरभिभवित्री भवसि। एवमतिशयितवीर्ययुक्तायास्तव सेवया मां शत्रुर्न जयतु इत्यर्थः। अस्याः सहनशीलत्वं श्रुत्यन्तरे सिद्धवत् आम्नातम्— 'उत्तानपर्णे सुभगे सहमाने सहस्वति।' 'उप तेऽधां सहमानाम्' (ऋसं. १०।१४५।६) इति च। प्राशं प्रष्टारं वादिनं मामुद्दिश्य प्रतिप्राशः प्रतिकूलप्रश्नकर्तॄन् प्रतिवादिनो जहि पराजितान् कुरु। यद्वा, प्रतिप्राश इति षष्ठी। प्रतिवादिनः प्राशं प्रश्नं जहीत्यर्थः। पराजयप्रकारमेवाह— हे ओषधे प्रतिवादिवाक्यजनिततापापहर्त्रि। ओषः पाकः अस्यां धीयते इति। यद्वा, ओषे दाहके ज्वरादौ एनां पाठादिरूपां वैद्योपदेशप्रकारेण धयन्ति पिबन्ति आतुराः इति ओषधिः। अपि वा दोषं वातपित्तादिकं धयति पिबति विनाशयतीति ओषधिः। पृषोदरादित्वात् आदिवर्णलोपः। अत्र यास्कः— 'ओषधय ओषद्धयन्तीति वा ओषत्येना धयन्तीति वा दोषं धयन्तीति वा' (नि. ९।२७) इति। हे तथाविधौषधे, प्रतिवादिनः अरसान् नीरसान् शुष्ककण्ठान् वक्तुमसमर्थान् कृणु कुरु। यद्वा, अरसान् रसरहितवाक्यान्, असंगतप्रलापिनः कुरु इत्यर्थः। असा.

**सुपर्णस्त्वाऽन्वविन्दत्सूकरस्त्वाऽखनन्नसा।**
**प्राशं प्रतिप्राशो० ॥**

सुपर्णः शोभनपक्षो वैनतेयः त्वा त्वां अन्वविन्दत् विषाद्यपहरणाय अन्विष्य अलभत। सूकरः आदिवराहः त्वा त्वां नसा नासिकया तत्सहितया दंष्ट्र्या अखनत् विदारितवान्। भूम्या अन्तरवस्थितां त्वां लोकोपकारार्थमुदहार्षीदित्यर्थः। अनेन अस्या अमोघवीर्यत्वमुक्तम्। प्राशं प्रतिप्राशं इत्यादि गतम्। असा.

**इन्द्रो ह चक्रे त्वा बाहावसुरेभ्य स्तरीतवे।**
**प्राशं प्रतिप्राशो० ॥**

हे पाठे, त्वां इन्द्रः त्रिलोकीपतिः असुरेभ्यः असुरान् स्तरीतवे स्तरीतुं, हिंसितुमित्यर्थः। बाहौ दक्षिणभुजे चक्रे कृतवान् धृतवान्। तथा अहमपि प्रतिवादिविजयार्थं त्वाम्। गतमन्यत्। असा.

**पाटामिन्द्रो व्याश्नादसुरेभ्य स्तरीतवे।**
**प्राशं प्रतिप्राशो० ॥**

पाठां उक्तप्रभावामोषधिं असुरांस्तरीतुमिन्द्रो व्याश्नात् अभक्षयत्। गतमन्यत्। असा.

**तयाऽहं शत्रून्त्साक्ष इन्द्रः सालावृकाँ इव।**
**प्राशं प्रतिप्राशो० ॥**

या उदीरितप्रभावा पाठा तया अहं धारणभक्षणादिना शत्रून् प्रतिवादिनः साक्षे अभिभवामि, निरुत्तरान् असत्प्रायान् करोमीत्यर्थः। तत्र दृष्टान्तः— इन्द्रो देवः सालावृकान्। अरण्यश्वानः सालावृकाः। तद्रूपानसुरान् यथा विगीर्णवान्। अयमेवार्थो दाशतय्या स्पष्टमाम्नातः— 'त्वमिन्द्र सालावृकान्त्सहस्रं आसन् दधिषे' (ऋसं. १०।७३।३)। असा.

**रुद्र जलाषभेषज नीलशिखण्ड कर्मकृत्।**
**प्राशं प्रतिप्राशो० ॥**

रौति शब्दायते तारकं ब्रह्म उपदिशतीति रुद्रः। तथा च जाबालश्रुतिः— 'अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे' (जाउ. १) इति। शब्दब्रह्मात्मना रोरूयमाणो द्रवति सर्वप्राणिहृदये वर्तते इति वा, अस्त्रेण छिन्नशिरसं शोचन्तं प्रजापतिमनु स्वयमपि शोकवशात् अरोदीदिति वा, उत्पत्तिकाले स्वयमरुददिति वा, रोदयति सर्वमन्तकाल इति वा रुद्रः। तदुक्तं यास्केन— "रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा। (यदरुदत् तद्रुद्रस्य रुद्रत्वमिति विज्ञायते। ?) 'यदरुदत् तद्रुद्रस्य रुद्रत्वम्' इति काठकम्। 'यदरोदीत् तद्रुद्रस्य रुद्रत्वम्' इति हारिद्रवकम्" (नि. १०।५) इति। तथा महोपनिषदि— 'तस्य ध्यानान्तस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत बिभ्रच्छ्रियं सत्यम्' (महोप. १) इति। अथर्वशिरस्यपि— 'संयुगस्यान्तकाले संहृत्य विश्वा भुवनानि गोप्ता तस्मादुच्यत एको रुद्रः' (अशिउ. ४) इति। अथवा रुत् रोदनकरं सांसारिकं दुःखं तद्धेतुभूता-

मविद्यां वा द्रावयति विनाशयतीति रुद्रः। तदुक्तं वायवीयसंहितायाम्– 'रुद् दुःखं दुःखहेतुर्वा तद् द्रावयति नः प्रभुः। रुद्र इत्युच्यते तस्मात् शिवः परमकारणम्॥' इति। हे उक्तमहिमोपेत रुद्र जलाषभेषज। जलाषमिति सुखनाम। जायन्ते इति जाः जनाः। तैर्लष्यते वाञ्छयते इति जलाषं सुखम्। जलाषं सुखकरं भेषजं यस्य। यद्वा, उदकनामैतत्। जलाषं उदकमात्रं यस्य स्मरणेन भेषजं भवति स तथोक्तः। तस्य ध्येयमाकारं दर्शयति– नीलशिखण्ड नीलवर्णकपर्दोपेत। अनेन नित्यतारुण्यमुक्तम्। हे कर्मकृत्। स्वोपासकानां दुष्कर्माणि कृन्ततीति कर्मकृत्। अथवा साध्वसाधुरूपाणि कर्माणि कारयतीति कर्मकृत्, 'एष ह्येव साधु कर्म कारयति' (शाब्रा. ३।८) इत्यादिश्रुतेः। यद्वा, सृष्ट्यादीनि पञ्च कृत्यानि करोतीति कर्मकृत्। उक्तं हि– 'पञ्चविधं तत्कृत्यं सृष्टिः स्थितिसंहृती तिरोभावः। तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य॥' इति। एवंमहानुभाव रुद्र, मया सेव्यमानामिमां पाठाख्यामोषधिं प्रतिवादितिरस्करणसमर्थां कुरु इति शेषः। एवं रुद्रानुगृहीते पाठाख्ये ओषधे। प्राशं प्रतिप्राशो जहीत्यादि पूर्ववत्।

अस्रा.

**तस्य प्राशं त्वं जहि यो न इन्द्राभिदासति।**
**अधि नो ब्रूहि शक्तिभिः प्राशि मामुत्तरं कृधि॥**

हे इन्द्र, यः प्रतिवादी नः अस्मान् अभिदासति उपक्षपयति युक्तिभिस्तिरस्करोति। तस्य उपक्षपयितुः प्राशं प्रतिकूलप्रश्नरूपं वाक्यं त्वं जहि नाशय। तथा शक्तिभिः त्वदीयैः सामर्थ्यविशेषैः नः अस्मान् अधि ब्रूहि अधिकवचनयुक्तान् ग्राह्यवाचः कुरु। फलितमाह– प्राशं प्रष्टारं वादिनं मामुत्तरं प्रतिवादिनोऽप्युत्कृष्टतरं कृधि कुरु।

अस्रा.

राज्ञः सभासदः राजानः

**'यद्राजानो विभजन्त इष्टापूर्तस्य**
**षोडशं यमस्यामी सभासदः।**
**अविस्तस्मात्प्र मुञ्चति दत्तः शितिपात्स्वधा॥**

यमस्य धर्मराजस्य अमी दक्षिणस्यां दिशि द्युलोके परिदृश्यमानाः सभासदः सभायामुपविष्टाः दुष्टनिग्रहे शिष्टपरिपालने च नियुक्ताः राजानः राजमानाः ईश्वरा वा देवाः इष्टापूर्तस्य। इष्टं श्रुतिविहितं यागादि कर्म। पूर्तं स्मृतिविहितं वापीकूपतटाकादिनिर्माणलक्षणं कर्म। तस्य उभयविधस्य कर्मणः षोडशं षोडशसंख्यापूरकं यत् पापं विभजन्ते पुण्यराशेर्विभक्तं कुर्वन्ति। अयमर्थः– श्रुतिस्मृतिविहितकर्मसु अनुष्ठीयमानेषु प्रमादालस्यादिना कियानपि पापस्य षोडश्या कलया अंशः समुपजायत एव, तत् यमस्य सभ्याः परिशोधयन्तीति। तस्मात् राजभिर्विभज्य गृहीतात् पापात् अस्मिन् सवयज्ञे दत्तः अविः अस्मान् प्र मुञ्चतु। यद्वा, इष्टापूर्तस्य साधकं षोडशम्। 'षोडशकलो वै पुरुषः' (तैब्रा. १।७।५।५) इति श्रुतेः षोडशकलमात्मानं यमस्य सभासदः अमी राजानः यत् विभजन्ते पशुशरीरात् विभक्तं कुर्वन्ति अविः अविशरीराभिमानी आत्मा तस्मात् शरीरवियोगजनितात् दुःखात् प्र मुञ्चतु प्रमुक्तो भवतु। शितिपात् श्वेतपात् स दत्तोऽविः स्वधा। अन्ननामैतत्। यमसंबन्धिभ्यः सभासद्भ्यः अन्नं भवतु। यद्वा, स्वधेति पितृणां हविर्दाने, 'स्वधाकारो हि पितृणाम्' (तैब्रा. ३।३।६।४) इति श्रुतेः। हविष्ट्वेन दत्तो भवतु।

अस्रा.

सदस्यानां सांमनस्यमिष्टम्

**'सभा च मा समितिश्चावतां**
**प्रजापतेर्दुहितरौ संविदाने।**
**येना संगच्छा उप मा स शिक्षा-**
**च्चारु वदानि पितरः संगतेषु॥**

सभा विदुषां समाजः। समितिः संयन्ति संगच्छन्ते युद्धाय अत्रेति समितिः संग्रामः। सांग्रामीणजनसभेत्यर्थः। यद्वा, संग्रामनामानि यज्ञनामानि भवन्तीति यास्केनोक्तत्वात् समितिशब्देन यज्ञ उच्यते। परस्परसमुच्चयार्थौ चकारौ। ते उभे अपि मा मां वादिनं अवतां रक्षताम्।

(१) असं. ३।२९।१.

(१) असं. ७।१२।१-४.

कीदृश्यौ ? प्रजापतेः सर्वजगत्स्रष्टुः दुहितरौ पुत्र्यौ । ' चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा । सा ब्रूते यं स धर्मः स्यात् ॥ ' (यास्मृ. १।९) इति, ' यदार्याः प्रशंसन्ति स धर्मः ' इति (च) स्मृतेः विद्वत्संघस्य सभात्वात् तदुक्तेश्च सर्वशास्त्रनिर्णीतधर्मरूपत्वात् प्रजापतिपुत्रीत्वव्यपदेशः । ते च सभे संविदाने अस्मद्रक्षणविषयमैकमत्यं प्राप्ते । किंच, येन वादिना संगच्छै वक्तुं संगतो भवानि । स विद्वान् मा मां संगतं उप शिक्षात् उपेत्य शिक्षयतु, समीचीनं वादयत्वित्यर्थः । शिक्ष विद्योपादाने । ण्यन्तात् लेटि आडागमः । यद्वा, शिक्षात् मां वक्तुं शक्तं समर्थमिच्छतु । शकेः सन्नन्तात् पञ्चमलकारे रूपम् । अयमर्थः— येन सह अहं विवदे स स्वयं मदुक्तवचनविघटनपटूनि वाक्यानि अभाषमाणः प्रत्युत मामेव स्ववचनतिरस्कारकवाक्यवादिनं करोत्विति । अपि च, हे पितरः पालकाः मदुक्तं वाक्यं साधु साध्विति अनुमोदमानाः पितृभूताः वा हे सभासदो जनाः, संगतेषु मया सह वक्तुं मिलितेषु वादिषु चारु न्यायोपेतं सदुत्तरं वदामि । यथा सम्यक् वदामि तथा अनुगृह्णीतेत्यर्थः । असा.

**विद्म ते सभे नाम नरिष्टा नाम वा असि ।**
**ये ते के च सभासदस्ते मे सन्तु सवाचसः ॥**

हे सभे, ते तव नाम नामधेयं विद्म जानीमः । तन्नाम दर्शयति— हे सभे, नाम । नाम्नेति यावत् । नरिष्टा । रिषिणा क्तान्तेन नसमासः । अहिंसिता परैरनभिभाव्या । एतन्नामिका असि वै भवसि खलु । एकस्य वचनमन्यैराद्रियते तिरस्क्रियतेऽपि । बहवः संभूय यद्येकं वाक्यं वदेयुस्तद्धि न परैरतिलङ्घ्यम् । अतः अनतिलङ्घ्यवाक्यत्वात् नरिष्टेति नाम सभाया युज्यते । अतस्ते तव संबन्धिनः ये के च सभासदः सभायां सीदन्तो विद्वांसः ते सर्वे मे मम सवाचसः समानवाक्याः सन्तु भवन्तु । नहि सभा सर्वा संभूय एकं प्रति ब्रूते, अपि तु तत्रत्याः कतिपये । तेऽपि मद्विषये अनुकूलवाक्या भवन्तु इति प्रार्थ्यते । असा.

**एषामहं समासीनानां वर्चो विज्ञानमा ददे ।**
**अस्याः सर्वस्याः संसदो मामिन्द्र भगिनं कृणु ॥**

समासीनानां सभायामवतिष्ठमानानां एषां पुरोवर्तिनां वादिनां वर्चः तेजः वैदुष्यजनितप्रभावविशेषं विज्ञानं वेदशास्त्रार्थविषयं ज्ञानं च । ' विज्ञानं शिल्पशास्त्रयोः ' इति तद्विदः । तत् अहं आ ददे स्वीकरोमि, अपहरामीत्यर्थः । किं बहुना ? हे इन्द्र । इन्द्रस्यैव वागनुशासनकर्तृत्वात् सभाजयकर्मणि तस्यैव प्रार्थनम् । तथा च तैत्तिरीयके— ' ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुरु ' इति प्रक्रम्य आम्नातम्— ' तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते ' (तैसं. ६।४।७।३) इति । तादृशेन्द्र, अस्याः पुरः स्थितायाः सर्वस्याः संसदः सभायाः भगिनम् । भगः भाग्यं वैदुष्यलक्षणं जयलक्षणं वा । तद्वन्तं मां कृणु कुरु । सर्वामपि सभां मदेकवाक्यश्रवणपरां कुरु इत्यर्थः । अथवा भगः भागः, तद्वन्तं कुरु । सर्वस्याः सभायाः यावती वैदुष्यकृता संभावना तावद्भागभाजं कुर्विति इन्द्रः प्रार्थ्यते । असा.

**यद्वो मनः परागतं यद्बद्धमिह वेह वा ।**
**तद्व आ वर्तयामसि मयि वो रमतां मनः ॥**

हे सभासदः, वः युष्माकं यन्मनः मानसं परागतं अस्मत्तः परागत्य अन्यत्र गतम्, अस्मदनभिमुखमित्यर्थः । यच्च मनः इह वा अस्मिन् वा विषये बद्धं संसक्तम् । मनसो विषयानासङ्गेनानवस्थानात् तत्संबन्धार्हान् सर्वान् पदार्थानभिनयेन दर्शयति— इह वा इह वेति । अस्मद्व्यतिरिक्तसर्वविषयेषु संसक्तं वर्तते । तत् तादृशं वः युष्माकं मनः आ वर्तयामसि अस्मदभिमुखं कुर्मः । आवर्तितं च वो मनः मयि रमतां मदनुकूलार्थचिन्तापरं भवत्वित्यर्थः । असा.

विराज उत्क्रान्तिः सभायां समितौ आमन्त्रणे च

**'विराड् वा इदमग्र आसीत्तस्या जातायाः**
**सर्वमबिभेदियमेवेदं भविष्यतीति ॥**

(१) असं. ८।१०।१-१३.

सोदक्रामत्सा गार्हपत्ये न्यक्रामत् ॥
गृहमेधी गृहपतिर्भवति य एवं वेद ॥
सोदक्रामत्साऽऽहवनीये न्यक्रामत् ॥
यन्त्यस्य देवा देवहूतिं प्रियो देवानां भवति
य एवं वेद ॥
सोदक्रामत्सा दक्षिणाग्नौ न्यक्रामत् ॥
यज्ञर्तो दक्षिणीयो वासतेयो भवति य एवं वेद ॥
सोदक्रामत्सा सभायां न्यक्रामत् ॥
यन्त्यस्य सभां सभ्यो भवति य एवं वेद ॥
सोदक्रामत्सा समितौ न्यक्रामत् ॥
यन्त्यस्य समितिं सामित्यो भवति य एवं वेद ॥
सोदक्रामत्साऽऽमन्त्रणे न्यक्रामत् ॥
यन्त्यस्याऽऽमन्त्रणमामन्त्रणीयो भवति
य एवं वेद ॥

राज्ञोऽनुगामिन्यः सभाः समितयश्च

[1]स विशोऽनु व्यचलत् ॥
तं सभा च समितिश्च सेना च सुरा
चानुव्यचलन् ॥
सभायाश्च वै स समितेश्च सेनायाश्च सुरायाश्च
प्रियं धाम भवति य एवं वेद ॥

सभ्याग्निप्रार्थना सभासदस्यरक्षणाय

[2]अपश्चा दग्धान्नस्य भूयासम् ।
अन्नादायान्नपतये रुद्राय नमो अग्नये ।
सभ्यः सभां मे पाहि ये च सभ्याः सभासदः ॥

अन्नस्य अपश्चा( दग्धा ) पश्चाद्भागे अदग्धा स्थालीपृष्ठभागे दग्धान्नरहितः भूयासम् । अल्पान्नस्य स्थालीपृष्ठभागे दुःशृतान्नसद्भावः, प्रभूतान्नस्य तु तादृग्दोषसंभवो नास्तीति बह्वन्नलाभ आशास्यते । बह्वन्नलाभे कारणमाह– अन्नादाय अन्नस्य भोक्त्रे भोजयित्रे वा अन्नपतये अन्नस्य स्वामिने रुद्राय रोदयित्रे रुद्रात्मकाय वा अग्नये नमः, 'रुद्रो वा एष यदग्निः' ( तैब्रा. १।१।८।४ ) इति तैत्तिरीयश्रुतेः । अग्निपरिचर्यया अन्नलाभो भवतीत्यर्थः । सभ्यः सभार्हः त्वं मे मदीयां सभां पुत्रमित्रपश्वादिसंघं पाहि रक्ष । अग्निरेव संबोध्यः । ये च सभासदः सभायां समाजे सीदन्तः ते सभ्याः सभार्हाः सन्ति, ते च अस्मदीयं प्रजासंघं रक्षन्तु इति ।
असा-

सभायां कृतस्य पापस्य नाशः

* [1]यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
यच्छूद्रे यदर्ये एनश्चकृमा वयम् ।
यदेकस्याधि धर्मणि तस्यावयजनमसि स्वाहा ॥

सभा सभापतिश्च

[2]नमः सभाभ्यः सभापतिभ्यश्च वो नमः ॥

आमन्त्रणार्था सभा

[3]धर्मधृत्या जुहोति । धर्मधृतमेवैनं करोति सवितारं धारयितारम् । गां घ्नन्ति । तां विदीव्यन्ते । तां सभासद्भ्य उपहरन्ति । तेनास्य सोऽभीष्टः प्रीतो भवति । 'प्र नूनं ब्रह्मणस्पतिः' इत्यामन्त्रणे जुहोति मन्त्रवत्या वैश्वदेव्या । मन्त्रमेवास्मै गृह्णाति । तमभिसमेत्य मन्त्रयन्ते । सह वै देवाश्च मनुष्याश्चौदनपचन आसन् । ते

(१) असं. १५।९।१–३.
(२) असं. १९।५५।५.

* अस्य व्याख्यानं 'मानवो राजा, तस्य कर्माणि च' इत्यस्मिन् प्रकरणे ( राका. पृ. १२५ ) द्रष्टव्यम् ।

(१) तसं. १।८।३।१–२. शेषः स्थलादिनिर्देशः '.मानवो राजा, तस्य कर्माणि च' इत्यस्मिन् प्रकरणे ( राका. पृ. १२५ ) द्रष्टव्यः ।

(२) तैसं. ४।५।३।२ ; कासं. १७।१३ ( ४९ ) ; मैसं. २।९।४ ( ३० ) ; शुसं. १६।२४.

(३) कासं. ८।७ ( १४–१५ ) ; कपिसं. ७।४ दीव्यन्ते ( दीव्यन्ति ) ब्रह्मणस्पतिः + ( मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ) संक्रमाः ( संक्रामाः ) तस्मादामन्त्रणं सु प्रातर्ग ( तस्मात्सु-प्रातरामन्त्रणं ग ) नाहुत ए ( नाहुत या ) पशुभिर्य ( पशुभिश्च य ).

मनुष्या देवानत्यचरन् । तेभ्यो देवा अन्नं प्रत्युह्य गार्हपत्यमभ्युदक्रामन् । ताँस्तस्मिन्नन्वागच्छन् । ते मनुष्या एव देवानत्यचरन् । तेभ्यो देवाः पशून् प्रत्युह्याऽऽहवनीयमभ्युदक्रामन् । ताँस्तस्मिन्नन्वागच्छन् । ते मनुष्या एव देवानत्यचरन् । तेभ्यो देवा यज्ञं प्रत्युह्य सभामभ्युदक्रामन् । ताँस्तस्यामन्वागच्छन् । ते मनुष्या एव देवानत्यचरन् । तेभ्यो देवा विराजं प्रत्युह्याऽऽमन्त्रणमभ्युदक्रामन् । ताँस्ततो नानुप्राच्यवन्त । एते वै देवानाँ संक्रमाः । श्रेयाँसँ श्रेयाँसँ लोकमभ्युत्क्रामति य एवं वेद । एतद्वै देवानाँ सत्यमनभिजितं यदामन्त्रणम् । तस्मादामन्त्रणं सु प्रातर्गच्छेत् । सत्यमेव गच्छति । तस्मादामन्त्रणं नाहुत एयात् । तस्मादामन्त्रणे नानृतं वदेत् । वह्निर्वै नामौदनपचनः । आऽस्य वह्निर्जायते य एवं वेद । गृहा गार्हपत्यः । गृहवान् भवति य एवं वेद । धिष्ण्या आहवनीयः । उपैनं यज्ञो नमति य एवं वेद । सप्रथा मध्याधिदेवनम् । प्रथते प्रजया च पशुभिर्य एवं वेद । अनाप्त आमन्त्रणम् । नैनमाप्नोति य ईप्सति य एवं वेद ॥

सभागोपनप्रार्थना

[२]सप्रथ सभां मे गोपायेत्याह । सभामेवैतेनेन्द्रियꣳ स्पृणोति ॥

[१]सप्रथ सभां मे गोपाय ।
ये च सभ्याः सभासदः ।
तानिन्द्रियावतः कुरु ।
सर्वमायुरुपासताम् ॥

प्रथया ख्यात्या सहितः सप्रथः । तादृश हे सभ्य, मे सभां अधिदेवनस्थानं गोपाय । ये च सभ्याः सभायोग्याः सभासदः सभायामुपविष्टाः सन्ति तान् सर्वान् इन्द्रियावतः चक्षुरादीन्द्रियपाटवयुक्तान् कुरु । ते च सभ्याः सर्वमायुः शतसंवत्सरमायुः उपासतां सेवन्ताम् । तैब्रासा.

( १ ) तैब्रा. १।१।१०।५.

( २ ) तैब्रा. १।२।१।२६.

सभायां जेता

[१]अप्रतिवाद्येनं भ्रातृव्यो भवति य एवं वेद ॥

एवं उक्तं प्रतिवचनं यो वेद भ्रातृव्यः शत्रुः एनं अप्रतिवादी भवति अनेनोक्तं प्रतिवक्तुं न शक्नोति । ताब्रासा.

इन्द्रस्य राज्ञो दैवी सभा

[२]अथैष विघनः । प्रजापतिर्देवानसृजत वसून् रुद्रानादित्यान् । तेभ्यो यज्ञं चेमांश्च लोकान् प्रायच्छत् । वसुभ्य एव प्रातःसवनं प्रायच्छत्, रुद्रेभ्यो माध्यंदिनं सवनम्, आदित्येभ्यस्तृतीयसवनम् । वसुभ्य एवेमं लोकं प्रायच्छत्, रुद्रेभ्योऽन्तरिक्षम्, आदित्येभ्योऽमुम् । अथेन्द्रमसृजत । स इदमेषां सर्वं विभक्तमपश्यत् । सोऽब्रवीद्यदिदमेषां सर्वं विभक्तम्, अथ कस्मै मामसृष्ठा इति । एतेषां त्वा, इत्यब्रवीत्, श्रैष्ठ्यायाऽऽधिपत्यायासृक्षीति । सोऽहं कथमेषां श्रेष्ठोऽधिपति स्यामिति । परेह्येनान् ब्रूहीत्यब्रवीत्, युष्माकं मा प्रजापति श्रैष्ठ्यायाऽऽधिपत्यायासृष्टेति । स एत्याब्रवीत्– युष्माकं मा प्रजापति श्रैष्ठ्यायाऽऽधिपत्यायासृष्टेति । तेऽब्रुवन्– वयं वाव श्रेष्ठा स्मः, वयमधिपतयः, ये ज्येष्ठा स्म इति नाजानन् । स पुनरेत्याब्रवीत्– न वा अमी तज्जानन्ति यत्त्वमात्थेति । स एतं यज्ञमपश्यत् । तमाहरत् । तेनैनमयाजयत् । स हेष्ट्वैव सर्वा मृधो व्यहत । यद्व्यहत, तद्विघनस्य विघनत्वम् । वि ह वै द्विषन्तं भ्रातृव्यं हते य एवं वेद ॥

तं विजिग्यानं सर्वे देवा अभितः समन्तं पर्यविशन्– वसवः पुरस्तात्, रुद्रा दक्षिणतः,

( १ ) ताब्रा. १०।७।३.

( २ ) जैब्रा. २।१४१–१४२.

**आदित्याः पश्चात्, मरुत उत्तरतः, विश्वे देवा उपरिष्टात्, साध्याश्चाप्त्याश्चाधस्तात्, अभितोऽङ्गिरसः। एषा वै दैवी श्रीर्दैवी सभा दैवी संसत्। गच्छति ह वा एतां दैवीं श्रियं दैवीं सभां दैवीं संसदं य एवं वेद। स वा एष षड् बृहतीरभिसंपद्यते। षड् वा ऋतवः संवत्सरश्रीः। श्रियां वावैनं तदध्यौहत्। स एष ऋतुषु च संवत्सरे चैतस्यां श्रियामध्यूढस्तपति। तस्य 'प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम्' इत्येताः सतोबृहतयो भवन्ति गायत्रीभाजनम्। ब्रह्म वै गायत्री। क्षत्रं बृहती। ब्रह्मैव तद्यशसाऽनक्ति। ब्रह्मणोऽस्य तत्सतः क्षत्रस्येव प्रकाशो भवति य एवं वेद॥**

सभायां चारुवक्ता

**[1]अथ खल्वियं सर्वस्यै वाच उपनिषत्। सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषद इमां त्वेवाऽऽचक्षते॥**

प्रासङ्गिकब्रह्मविद्याकथनानन्तर्यार्थे अथशब्दः। वक्ष्यमाणोपासनायाः प्रसिद्ध्यर्थः खलुशब्दः। इयं अनन्तरमेव वक्ष्यमाणा उपनिषत् उपासना सर्वस्यै वाचः संबन्धिनी, अकारादिक्षकारान्तानां मातृकामन्त्रगतानां सर्वेषां वर्णानामत्रोपासनीयत्वात्। यद्यप्यस्मिन्नारण्यके प्रोक्ताः सर्वा अपि संहितोपासनाः कृत्स्नवाग्विषया एव, तथापि तदभिज्ञाः पुरुषाः इमामेवोपनिषदं वक्ष्यमाणामुपासनामेव सर्वोत्कृष्टामाचक्षते। ऐआसा.

**पृथिव्या रूपं स्पर्शाः। अन्तरिक्षस्योष्माणः। दिवः स्वराः। अग्ने रूपं स्पर्शाः। वायोरूष्माणः। आदित्यस्य स्वराः। ऋग्वेदस्य रूपं स्पर्शाः। यजुर्वेदस्योष्माणः। सामवेदस्य स्वराः। चक्षुषो रूपं स्पर्शाः। श्रोत्रस्योष्माणः। मनसः स्वराः। प्राणस्य रूपं स्पर्शाः। अपानस्योष्माणः। व्यानस्य स्वराः॥**

प्रतिज्ञातामुपासनां दर्शयति– पृथिव्या इति। ककारादयो मकारावसाना वर्गपञ्चकनिष्ठा वर्णाः स्पर्शसंज्ञकाः। शषसहाश्चत्वारः ऊष्मसंज्ञकाः। अकारादय औकारान्ताश्चतुर्दश स्वरसंज्ञकाः। एतेषु स्पर्शोष्मस्वरेषु पृथिव्यादिलोकदृष्टिः, अग्न्यादिदेवतादृष्टिः, ऋगादिवेददृष्टिः, चक्षुरादीन्द्रियदृष्टिः, प्राणादिवायुदृष्टिश्च कर्तव्या। ऐआसा.

**अथ खल्वियं दैवी वीणा भवति। तदनुकृतिरसौ मानुषी वीणा भवति॥**

अस्या उपासनाया अङ्गत्वेन स्वतन्त्रत्वेन वा वीणाध्यानं विधत्ते– अथेति। अथ पृथिव्यादिध्यानकथनानन्तरम्। खलुशब्दः वीणाप्रसिद्ध्यर्थः। इयं अस्माभिर्दृश्यमाना शरीररूपा दैवी देवनिर्मिता काचिद्वीणा विद्यते। न हि देवव्यतिरेकेण कश्चिदपीमं देहं निर्मातुं क्षमते। या तु गायकैर्धार्यमाणा काष्ठमयी वीणा सा तु मनुष्यैर्निर्मितत्वात् मानुषी। असौ च तदनुकृतिर्भवति। तां दैवीं वीणामनुसृत्य कृतिः निष्पादनं यस्याः सा तदनुकृतिः, तत्सदृशीत्यर्थः। ऐआसा.

**यथाऽस्याः शिर एवममुष्याः शिरः। यथाऽस्या उदरमेवममुष्या अम्भणम्। यथाऽस्यै जिह्वैवममुष्यै वादनम्। यथाऽस्यास्तन्त्रय एवममुष्या अङ्गुलयः। यथाऽस्याः स्वरा एवममुष्याः स्वराः। यथाऽस्याः स्पर्शा एवममुष्याः स्पर्शाः। यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती। यथा ह्येवेयं लोमशेन चर्मणाऽपिहिता भवत्येवमसौ लोमशेन चर्मणाऽपिहिता॥**

शरीररूपायाः देववीणायाः काष्ठनिर्मितायाः मानुषवीणायाश्च सादृश्यं ध्यानाय दर्शयति– यथेति। अस्याः अस्माभिर्दृश्यमानायाः शरीररूपायाः दैव्या वीणाया ऊर्ध्वभागे प्रसिद्धं शिरो यथा भवति एवममुष्याः उपासकशरीराद्व्यतिरिक्तायाः काष्ठनिर्मिताया मानुष्या वीणायाः ऊर्ध्वभागे शिरो द्रष्टव्यम्। यो भागो गायकस्य वामांसमाश्रित्यावस्थितस्तत्रालाबुखण्डोपेतत्वेन शिरस आकारो दृश्यते। तदिदमेकं सादृश्यम्। उत्तराण्यपि

(१) ऐआ. ३।२।५।१–८.

सादृश्यान्येवं द्रष्टव्यानि । अस्याः शरीरवीणायाः प्रसिद्धोदरवत् अमुष्याः काष्ठवीणाया अम्भणं वीणादण्डमध्यवर्तिच्छिद्रम् । शरीरवीणायामवस्थिता जिह्वा यथा स्वरोत्पत्तिहेतुस्तथैवामुष्यै काष्ठवीणाया हस्तेन वादनं स्वरोत्पत्तिहेतुः । तन्त्रयोऽङ्गुलयः इति पदद्वयं व्यत्यासेन योजनीयम् । अस्याः शरीरवीणायाः अङ्गुलयः यथा बहुविधा दीर्घा वर्तन्ते तथैव अमुष्याः काष्ठवीणायाः तन्त्रयः दीर्घतन्तवः । यथा अस्याः शरीरवीणायाः स्वराः कोष्ठाग्निप्रेरितवायोः संबन्धिविशेषेणोत्पन्नाः षड्जर्षभगान्धारादयो वर्तन्ते तथैवामुष्याः काष्ठवीणायास्तत्तत्स्थानेष्वङ्गुलिधारणेन षड्जादिस्वरा आविर्भवन्ति । स्वराभिव्यक्त्यर्थं यथा शरीरमध्ये वायोः स्पर्शविशेषाः प्रयत्नात्संपद्यन्ते तथा काष्ठवीणाया अङ्गुलिस्पर्शविशेषाः प्रयत्नसंपाद्याः । यथा चेयं शरीरवीणा शब्दवती स्वराभिव्यक्तिहेतुभूतध्वनियुक्ता तर्द्मवती तर्दनवती । धमनीभिः शरीरावयवानां दृढबन्धनं तर्दनम् । तथैव काष्ठवीणाऽपि शब्दवती स्वरविशेषाभिव्यक्तिहेतुभूतध्वनियुक्ता, तथा तर्द्मवती तर्दनेन तन्त्रीणां दृढबन्धनेन युक्ता । यथा चेयं शरीरवीणा लोमशेन प्रभूतरोमाधारेण चर्मणा अपिहिता आच्छादिता भवति एवमसौ काष्ठवीणाऽपि लोमशेन व्याघ्रादिचर्मणा आच्छादिता भवति । ऐआसा.

**लोमशेन ह् स्म वै चर्मणा पुरा वीणा अपिदधाति ॥**

ननु इदानींतनाः काष्ठवीणाश्चर्मणा न बध्यन्ते इत्याशङ्क्याह– लोमशेनेति । इदानीमत्र चर्मापिधानाभावेऽपि पूर्वकाले देवलोकादौ तद्विद्यते इति द्रष्टव्यम् । ऐआसा.

**स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति । भूमिप्राऽस्य कीर्तिर्भवति । यत्र क चाऽऽर्या वाचो भाषन्ते विदुरेनं तत्र ॥**

वीणाध्यानस्य फलं दर्शयति– स इति । यः पुमान् मानुषवीणासादृश्यानुसंधानपुरःसरं एतां शरीररूपां दैवीं वीणामुपास्ते सोऽयं श्रुतवदनः सर्वजनश्रोत्रप्रियं वदनं उक्तिः यस्यासौ श्रुतवदनः विद्वत्सभायां राजसभायां च सर्वेषां प्रियतमैर्वचनैरत्यन्तं रञ्जको भवति । तथा अस्य कीर्तिः भूमिप्रा भूमेः पूरयित्री भवति, सर्वस्यां भूमावविवादेन सर्वेऽपि जनाः एनं विद्याधिकं मन्यन्ते इत्यर्थः । किंच, यत्र क च यस्मिन्कस्मिन्नपि देशे यस्मिन्कस्मिन्नपि ग्रामविशेषे केचिदार्याः वेदशास्त्रपारंगतास्तदनुष्ठानपरा बहवः सभायामुपविश्य भाषन्ते विद्याप्रसङ्गं कुर्वन्ति तत्र तस्यां सभायामेनं विदुः सर्वज्ञोऽयमत्यन्तपण्डित इत्येनमुपासकं स्मरन्ति । ऐआसा.

**अथातो वाग्रसः । यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत तत्रैतामृचं जपेत् ॥**

वीणाध्यानफलोक्तिप्रसङ्गेन विद्वत्सभारञ्जनहेतुं मन्त्रविशेषं विधत्ते– अथेति । अथ वीणोपास्तिकथनानन्तरं यतः कारणात् फलोक्तिप्रसङ्गेन सभारञ्जनहेतुर्मन्त्रो बुद्धिस्थः अतः कारणात् वाग्रसः वाचः सारभूतो मन्त्रः, अभिधीयते इति शेषः । यस्यां संसदि विद्वत्सभायां अधीयानः वेदशास्त्रगोष्ठीं कुर्वाणः पुरुषो राजसभायां वा लौकिकान्युचितवाक्यानि भाषमाणो वा न विरुरुचुषेत विशेषेण रुचिकरः सर्वजनानां रञ्जको यदि न भवेत् तत्र तस्यां सभायां रञ्जकत्वसिद्ध्यर्थं एतां वक्ष्यमाणामृचं जपेत् तन्मन्त्रपुरश्चरणादिकं कुर्यात् । ऐआसा.

**' ओष्ठापिधाना न कुलीदन्तैः परिवृता पविः । सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ॥ ' इति वाग्रसः ॥**

तामेतां ऋचं दर्शयति– ओष्ठापिधानेति । सर्वस्यै वाचः वेदशास्त्रलौकिकोक्तिरूपस्य सर्वस्यापि वचनजातस्य ईशाना स्वामिरूपा वाग्देवता मां सभारञ्जकोक्तिकामं इह अस्यां विद्वत्सभायां राजसभायां वा चारु शोभनं सर्वरञ्जकं यथा भवति तथा वादयेत्, संभाषकोक्तिं प्रेरयतु । कीदृशी वाग्देवता ? ओष्ठापिधाना न । उपमार्थो नकारः । ओष्ठद्वयं अपिधानं वस्त्रवदाच्छादनं यस्याः जिह्वादिस्थानगताया वाग्देवतायाः सेयमोष्ठापिधाना । ओष्ठयोः आच्छादकवस्त्रसादृश्यमेव, न तु मुख्यमाच्छदकत्वमित्यभिप्रेत्योपमार्थो नकारः पठितः । कुलीदन्तैः वज्रवद्धनीभूतैः अन्तरालच्छिद्ररहितैर्दन्तैः परिवृता परितो वेष्टिता वाग्देवता । दन्तानां विरलत्वे सति उच्चार्यमाणाः

वर्णाः आभासा भवन्ति । पविः वज्रवत्तीक्ष्णशब्दोच्चारणे अत्यन्तं पट्वी देवतेत्यर्थः । अथवा ओष्ठेत्यादिविशेषणैर्देवता न प्रशस्यते, किन्तु स्वकीयवाचि दोष उद्भाव्यते । अस्मिन्पक्षे नकारो निषेधार्थः । येयं मदीया वाक् सेयमोष्ठाभ्यां बहिराच्छादिता । अतः कुलीदन्तैः परिवृता वेष्टिता । अतो बहिर्निर्गता सभां रञ्जयितुं न पविः नात्यन्तं पटुः । अतः कारणात् वाग्देवते, 'सर्वस्यै' इत्यादिना त्वामहं प्रार्थये । इत्येवमुक्तो यो मन्त्रः सोऽयं वाग्रसः सर्वस्या वाचः सारभूतोऽवगन्तव्यः ।

ऐआसा.

पञ्चालजनपदसभा

**[१]श्वेतकेतुर्हाऽऽरुणेयः पञ्चालानाꣳ समितिमेयाय । तꣳह प्रवाहणो जैवलिरुवाच– कुमारानु त्वाऽशिषत्पितेति । अनु हि भगव इति ॥**

श्वेतकेतुर्नामतः । ह इत्यैतिह्यार्थः । अरुणस्यापत्यमारुणिः, तस्यापत्यमारुणेयः । पञ्चालानां जनपदानां समितिं सभां एयाय आजगाम । तमागतवन्तं प्रवाहणो नामतो जीवलस्य अपत्यं जैवलिः उवाच उक्तवान् । हे कुमार, अनु त्वा त्वां अशिषत् अन्वशिषत्पिता ? किमनुशिष्टस्त्वं पित्रेत्यर्थः । इत्युक्तः स आह– अनु हि अनुशिष्टोऽस्मि भगवः, इति सूचयन्नाह । शांकर.

**[२]श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम । स आजगाम जैवलिं प्रवाहणं परिचारयमाणम् ॥**

(१) छांउ. ५।३।१.

(२) बृउ. ६।२।१.

श्वेतकेतुः नामतः । अरुणस्यापत्यं आरुणिः, तस्यापत्यं आरुणेयः । हशब्दः ऐतिह्यार्थः । वै निश्चयार्थः । पित्रा अनुशिष्टः सन् आत्मनो यशःप्रथनाय पञ्चालानां परिषदमाजगाम । पञ्चालाः प्रसिद्धाः । तेषां परिषदमागत्य, जित्वा, राज्ञोऽपि परिषदं जेष्यामीति गर्वेण स आजगाम जीवलस्यापत्यं जैवलिं पञ्चालराजं प्रवाहणनामानं स्वभृत्यैः परिचारयमाणं, आत्मनः परिचरणं कारयन्तमित्येतत् । शांकर.

वैदेहजनकसभा

**[१]जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे । तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव । कः स्विदेषां ब्राह्मणानामनूचानतम इति ॥**

जनको नाम ह किल सम्राट् राजा बभूव विदेहानाम् । तत्र भवो वैदेहः । स च बहुदक्षिणेन यज्ञेन, शाखान्तरप्रसिद्धो वा बहुदक्षिणो नाम यज्ञः, अश्वमेधो वा दक्षिणाबाहुल्यात् बहुदक्षिण इहोच्यते, तेन ईजे अयजत् । तत्र तस्मिन् यज्ञे निमन्त्रिता दर्शनकामा वा कुरूणां देशानां पञ्चालानां च ब्राह्मणाः, तेषु हि विदुषां बाहुल्यं प्रसिद्धम्, अभिसमेताः अभिसंगताः बभूवुः । तत्र महान्तं विद्वत्समुदायं दृष्ट्वा तस्य ह किल जनकस्य वैदेहस्य यजमानस्य, को नु खल्वत्र ब्रह्मिष्ठः ? इति विशेषेण ज्ञातुमिच्छा विजिज्ञासा बभूव । कथम् ? कः स्वित् को नु खलु एषां ब्राह्मणानां अनूचानतमः ? सर्वे इमे अनूचानाः, कः स्विदेषामतिशयेनानूचान इति ।

शांकर.

(१) बृउ. ३।१।१.

# युद्धम्

## देवानां युद्धम्
### वेदाः

देवसेना रुद्रपुत्रा मरुतः सुक्षत्राः विविधशस्त्रधारिणो रथारूढाः युद्धवाद्ययुक्ताः पर्वतेषु योद्धारः सख्युः सेनान्य इन्द्रस्य सखायः ईशाननिर्मातारः

**[1]ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः ।**
**मरुद्भिरग्न आ गहि ॥**

ये मरुतः शुभ्रत्वादिगुणोपेताः तैः मरुद्भिः इत्यन्वयः । शुभ्राः शोभनाः घोरवर्पसः उग्ररूपधराः सुक्षत्रासः शोभनधनोपेताः रिशादसः हिंसकानां भक्षकाः । 'मघम्' इत्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु 'क्षत्रं भगः' (निघण्टुः २।१०।९) इति पठितम् । घोरवर्पसः, घोरं वर्पो येषाम् । रिशन्ति हिंसन्तीति रिशाः, तान् अदन्तीति रिशादसः । ऋसा.

**[2]ते जज्ञिरे दिव ऋष्वास उक्षणो**
**रुद्रस्य मर्या असुरा अरेपसः ।**
**पावकासः शुचयः सूर्याइव**
**सत्वानो न द्रप्सिनो घोरवर्पसः ॥**

ते मरुतः दिवः अन्तरिक्षात् जज्ञिरे प्रादुर्बभूवुः । कीदृशाः ? ऋष्वासः दर्शनीयाः, उक्षणः सेक्तारः, युवान इत्यर्थः । रुद्रस्य मर्याः । मर्यशब्दो मनुष्यवाची इह मरुतां मर्त्यत्वासंभवात् पुत्रा इत्यस्मिन्नर्थे पर्यवस्यति । मरुतां रुद्रपुत्रत्वं च मन्त्रान्तरे स्पष्टम्– 'आ ते पितर्मरुतां सुम्नमेतु' (ऋसं. २।३३।१) इति । असुराः शत्रूणां निरसितारः अरेपसः । रेप इति पापनाम । पापरहिताः पावकासः सर्वेषां शोधकाः सूर्याइव शुचयः दीप्ताः सत्वानो न यथा परमेश्वरस्य भूतगणा अतिशयितबलपराक्रमाः तत्सदृशा इत्यर्थः । सत्वान इति भूतगणा उच्यन्ते, 'अथो ये अस्य सत्वानः' (तैसं. ४।५।१।३) इत्यादौ तथा दर्शनात् । द्रप्सिनः वृष्ट्युदकबिन्दुभिर्युक्ताः, 'मरुतः सृष्टां (वृष्टिं ?) नयन्ति' (तैसं. २।४।१०।२) इति श्रुतेः । घोरवर्पसः । वर्प इति रूपनाम । घोररूपाः, शत्रूणां भयंकररूपा इत्यर्थः । यद्वा, सत्वानो न घोरवर्पसः । यथा भूतगणा भयंकररूपास्तद्वदेतेऽपीत्यर्थः । ऋष्वासः । 'ऋषी गतौ' 'गत्यर्था बुद्ध्यर्थाः' इति अत्र ज्ञानार्थः । ऋसा.

**युवानो रुद्रा अजरा अभोग्घनो**
**ववक्षुरध्रिगावः पर्वताइव ।**
**दृळ्हा चिद्विश्वा भुवनानि पार्थिवा**
**प्र च्यावयन्ति दिव्यानि मज्मना ॥**

युवानः तरुणाः रुद्राः रुद्रपुत्राः अजराः जरारहिताः अभोग्घनः ये देवान् हविर्भिर्न भोजयन्ति तेषां हन्तारः अध्रिगावः अधृतगमनाः परैरनिवारितगतयः पर्वताइव दृढाङ्गाः एवंभूता मरुतः ववक्षुः स्तोतॄणामभिमतं प्रापयितुमिच्छन्ति । अपि च, विश्वा सर्वाणि भुवनानि सद्भावं प्राप्तानि पार्थिवा पृथिव्यां भवानि दिव्यानि दिवि भवानि च वसूनि दृळ्हा चित् दृढान्यपि मज्मना । मज्मनेति (? मज्मेति) बलनाम । मज्मना शोधकेन बलेन प्र च्यावयन्ति प्रचालयन्ति । अभोग्घनः । भोजयन्तीति भोजः । न भोजः अभोजः । तेषां हन्तारः । ऋसा.

**चित्रैरञ्जिभिर्वपुषे व्यञ्जते**
**वक्षःसु रुक्माँ अधि येतिरे शुभे ।**
**अंसेष्वेषां नि मिमृक्षुरृष्टयः**
**साकं जज्ञिरे स्वधया दिवो नरः ॥**

वपुरिति रूपनाम । वपुषे रूपाय शोभार्थं मरुतः चित्रैः नानाविधैः अञ्जिभिः रूपाभिव्यञ्जनसमर्थैराभरणैः स्वशरीराणि व्यञ्जते व्यक्तं कुर्वन्ति, अलंकुर्वन्तीत्यर्थः । वक्षःसु भुजान्तरेषु रुक्मान् रोचमानान् हारान् अधि येतिरे उपरि चक्रिरे । किमर्थम् ? शुभे शोभार्थम् । अपि च, एषां मरुतां अंसेषु ऋष्टयः आयुधानि

(१) ऋसं. १।१९।५.
(२) ऋसं. १।६४।२–५.

नि मिमृक्षुः निमृष्टाः स्थिता बभूवुः । तैरायुधैः सहिताः नरः नेतारो मरुतः दिवः अन्तरिक्षात् स्वधया स्वकीयेन बलेन साकं सह जज्ञिरे प्रादुर्बभूवुः ।　　　　ऋसा.

**ईशानकृतो धुनयो रिशादसो**
**वातान्विद्युतस्तविषीभिरक्रत ।**
**दुहन्त्यूधर्दिव्यानि धूतयो**
**भूमिं पिन्वन्ति पयसा परिज्रयः ॥**

ईशानकृतः स्तोतारमीशानं धनाधिपतिं कुर्वाणाः धुनयः मेघादीनां कम्पयितारः रिशादसः रिशानां हिंसकानामत्तारः । यद्वा, रिशतां हिंसतां असितारः निरसितारः । एवंभूता मरुतः तविषीभिः आत्मीयैर्बलैः वातान् पुरोवातादीन् विद्युतः विद्योतमानास्तडितश्च अक्रत कुर्वन्ति । कृत्वा च परिज्रयः परितो गन्तारः धूतयः कम्पयितारो मरुतः दिव्यानि दिवि भवानि ऊधः ऊधःस्थानीयान्यभ्राणि दुहन्ति रिक्तीकुर्वन्ति, जलरहितानि कुर्वन्तीत्यर्थः । तदनन्तरं भूमिं पयसा मेघान्निर्गतेनोदकेन जलेन पिन्वन्ति सिञ्चन्ति । रिशादसः । रिश हिंसायाम् । रिशन्ति हिंसन्तीति रिशाः शत्रवः । तान् अदन्तीति रिशादसः । यद्वा, रिशच्छब्दात् शत्रन्तात् 'असु क्षेपणे' इत्यस्मात् क्विप् । व्यत्ययेन पूर्वपदस्य उपधादीर्घः ।　　　　ऋसा.

[1]**पिन्वन्त्यपो मरुतः सुदानवः**
**पयो घृतवद्विदथेष्वाभुवः ।**
**अत्यं न मिहे वि नयन्ति वाजिन-**
**मुत्सं दुहन्ति स्तनयन्तमक्षितम् ॥**

सुदानवः शोभनदानाः मरुतः पयः क्षीरवत् सारवतीः अपः पिन्वन्ति सिञ्चन्ति । आभुवः । आभवन्तीत्याभुवः ऋत्विजः । ते विदथेषु यज्ञेषु घृतवत् यथा घृतं सिञ्चन्ति एवं मरुतोऽपि वृष्टिं कुर्वन्तीति भावः । तत्र हेतुमाह— अत्यं न यथा अश्वं सादिनो विनयन्ति युद्धार्थं शिक्षयन्ति एवं मरुतः वाजिनं वेगवन्तं मेघं मिहे वर्षणाय वि नयन्ति, स्वाधीनं कुर्वन्तीति भावः । विनीय च स्तनयन्तं गर्जन्तं अक्षितं अक्षीणं उत्सम् । उत्सवन्त्यस्मादाप इत्युत्सो मेघः । तं दुहन्ति रिक्तीकुर्वन्ति ।　　　　ऋसा.

[1]**महिषासो मायिनश्चित्रभानवो**
**गिरयो न स्वतवसो रघुष्यदः ।**
**मृगाइव हस्तिनः खादथा वना**
**यदारुणीषु तविषीरयुग्ध्वम् ॥**

महिष इति महन्नाम । महिषासः महान्तः । मायेति ज्ञाननाम । मायिनः प्राज्ञाः चित्रभानवः शोभनदीप्तयः गिरयो न स्वतवसः पर्वता इव स्वकीयेन बलेन युक्ताः रघुष्यदः शीघ्रगमनाः हे मरुतः, एवंभूतगुणविशिष्टा यूयं हस्तिनः हस्तवन्तः मृगाइव गजा इव वना वनानि वृक्षजातानि खादथ भक्षयथ, प्रभङ्क्थेति यावत् । यत् यस्मात् आरुणीषु अरुणवर्णासु वडवासु तविषीः बलानि अयुग्ध्वं संयोजितवन्तः । तस्मात् भवतामिव वाहनस्यापि प्रबलत्वात् तत्संयुक्ता भवन्तः सर्वे भञ्जन्तीत्यर्थः । रघुष्यदः । 'स्यन्दू प्रस्रवणे' । रघु शीघ्रं स्यन्दन्ते गच्छन्तीति रघुष्यदः ।　　　　ऋसा.

**सिंहाइव नानदति प्रचेतसः**
**पिशाइव सुपिशो विश्ववेदसः ।**
**क्षपो जिन्वन्तः पृषतीभिर्ऋष्टिभिः**
**समित्सबाधः शवसाऽहिमन्यवः ॥**

प्रचेतसः प्रकृष्टज्ञाना मरुतः सिंहाइव नानदति भृशं शब्दं कुर्वन्ति । यथा सिंहा गिरिगह्वरेषु गम्भीरं शब्दं कुर्वन्ति एवं मरुत्सु अपि आगतेषु गम्भीरः शब्द उत्पद्यते इति भावः । तथा सुपिशः शोभनावयवाः शोभनालंकारा वा । तत्र दृष्टान्तः— पिशाइव । पिश इति रुरुनाम । यथा रुरवः स्वशरीरगतैः श्वेतबिन्दुभिरलंकृतास्तद्वत् । विश्ववेदसः सर्वज्ञाः क्षपः शत्रूणां क्षपयितारः जिन्वन्तः स्तोतॄन् प्रीणयन्तः शवसा बलेन अहिमन्यवः आहननशीलमन्युयुक्ताः, यद्विषयः कोपो जायते तस्य हनने समर्था इत्यर्थः । यद्वा, मननं

---

(१) ऋसं. १।६४।६ ; तैसं. ३।१।११।७ ; शाब्रा. १५।३.

(१) ऋसं. १।६४।७–१३.

ज्ञानं मन्युः। अहीनज्ञानाः, उत्कृष्टबुद्धय इत्यर्थः। एवंभूता मरुतः पृषतीभिः। पृषत्य इति मरुतां वाहनस्याऽऽख्या। पृषत्यः श्वेतबिन्द्वङ्किता मृग्य इत्यैतिहासिकाः। नानावर्णा मेघमाला इति नैरुक्ताः। ताभिः ऋष्टिभिः आयुधैश्च सहिताः सन्तः सबाधः शत्रुभिर्बाधितान् यजमानान् समित् समानमेव युगपदेव रक्षितुमागच्छन्तीति शेषः। ऋसा.

**रोदसी आ वदता गणश्रियो**
**नृषाचः शूराः शवसाऽहिमन्यवः।**
**आ वन्धुरेष्वमतिर्न दर्शता**
**विद्युन्न तस्थौ मरुतो रथेषु वः॥**

हे गणश्रियः गणशः श्रयमाणाः सप्तगणरूपेणावस्थिताः, नृषाचः नॄन् यजमानान् हविःस्वीकरणाय सेवमानाः, शूराः शौर्योपेताः, एवंभूता हे मरुतः, शवसा बलेन अहिमन्यवः आहननस्वभावकोपयुक्ताः सन्तः रोदसी द्यावापृथिव्यौ आ वदत आ समन्ताच्छब्दयत। युष्मदागमने सति भवदीयशब्देन द्यावापृथिव्यौ पूर्णे कुरुतेति भावः। किंच, हे मरुतः, वः युष्माकं तेजः वन्धुरेषु। बन्धककाष्ठनिर्मितं सारथेः स्थानं वन्धुरमित्युच्यते। तद्युक्तेषु रथेषु आ तस्थौ आतिष्ठति अवस्थितं सत् सर्वैर्दृश्यते। तत्र दृष्टान्तद्वयमुच्यते— अमतिर्न। अमतिरिति रूपनाम। यथा निर्मलं रूपं सर्वैर्दृश्यते। दर्शता विद्युन्न। यथा वा दर्शनीया विद्युत् मेघस्था सर्वैर्दृश्यते। एवं रथे स्थितानां युष्माकं ज्योतिरपि सर्वैर्दृश्यते इत्यर्थः। ऋसा.

**विश्ववेदसो रयिभिः समोकसः**
**संमिश्लासस्तविषीभिर्विरप्शिनः।**
**अस्तार इषुं दधिरे गभस्त्यो-**
**रनन्तशुष्मा वृषखादयो नरः॥**

विश्ववेदसः सर्वज्ञाः रयिभिः धनैः समोकसः समाननिवासाः समवेता वा धनाधिपतय इत्यर्थः। तविषीभिः बलैः संमिश्लासः संमिश्राः, संयुक्ता इत्यर्थः। विरप्शिनः। महन्नामैतत्। महान्तः अस्तारः शत्रूणां निरसितारः अनन्तशुष्माः अनवच्छिन्नबलाः वृषखादयः। वृषा इन्द्रः खादिः आयुधस्थानीयो येषां ते तथोक्ताः। यद्वा, वृषा सोमः खादिः खाद्यः पेयो येषां ते। नरः नेतारः। एवंभूता मरुतः। गभस्तिरिति बाहुनाम। गभस्त्योः बाह्वोः इषुं दधिरे। शत्रूणां निरसनाय धनुर्बाणादिकमायुधं धारयन्ति। विविधं शब्दं रपन्तीति विरप्शाः स्तोतारः। ते एषां सन्तीति विरप्शिनः। यद्वा, विविधं रपणं विरप्शम्। तदेषामस्तीति। मरुतो हि विविधं शब्दं कुर्वते। अनन्तशुष्माः। नास्त्यन्तः अस्येति अनन्तः। अनन्तः शुष्मः बलं येषाम्। ऋसा.

**हिरण्ययेभिः पविभिः पयोवृध**
**उज्जिघ्नन्त आपथ्यो३ न पर्वतान्।**
**मखा अयासः स्वसृतो ध्रुवच्युतो**
**दुध्रकृतो मरुतो भ्राजदृष्टयः॥**

मरुतः हिरण्ययेभिः सुवर्णमयैः। यद्वा, हितरमणीयैः पविभिः रथानां चक्रैः पर्वतान् पर्ववतो मेघान्। यद्वा, शिलोच्चयान् उज्जिघ्नन्ते ऊर्ध्वं गमयन्ति, स्थानात् प्रच्यावयन्तीत्यर्थः। तत्र दृष्टान्तः— पथ्यः न। यथा पथि गच्छन् रथो मार्गे आस्थितं तृणवृक्षादिकं चूर्णीकृत्योर्ध्वं नयति गमयति। यद्वा, यथा संयुक्ता गजा मार्गस्थितं वृक्षादिकं भग्नं कुर्वन्ति। कीदृशा मरुतः? पयोवृधः पयसः वृष्ट्युदकस्य वर्धयितारः। यद्वा, पृश्नेः पयसा वर्धमानाः। 'पृश्नियै वै पयसो मरुतो जाताः' (तैसं. २।२।११।४) इति श्रूयते। मखाः। मख इति यज्ञनाम। तद्वन्तः अयासः देवयजनदेशं प्रति गन्तारः स्वसृतः शत्रून् प्रति स्वयमेव सरन्तः गच्छन्तः ध्रुवच्युतः ध्रुवाणां निश्चलानां पर्वतादीनामपि च्यावयितारः दुध्रकृतः दुध्रं दुष्टानां धारयितारमात्मानं कुर्वाणाः। यद्वा, दुर्धरं अन्यैर्धर्तुमशक्यमात्मानं कुर्वाणाः। भ्राजदृष्टयः दीप्यमानायुधाः। पथ्यः पथि भवः। अयासः। 'अय पय गतौ', अयन्ते इत्ययाः। दुध्रकृतः। अत्र दुःशब्देन दुष्टा लक्ष्यन्ते। 'धृञ् धारणे'। दुष्टान् धारयतीति दुध्रः। तं कुर्वन्तीति दुध्रकृतः। यद्वा, 'ईषद्दुःसुषु०' (पासू. ३।३।१२६) इति

दुःशब्दे उपपदे कर्मणि खल् । गुणाभावः छान्दसः । तं कुर्वन्तीति दुध्रकृतः । रेफलोपश्छान्दसः । ऋसा.

घृषुं पावकं वनिनं विचर्षणिं
रुद्रस्य सूनुं हवसा गृणीमसि ।
रजस्तुरं तवसं मारुतं गण-
मृजीषिणं वृषणं सश्चत श्रिये ॥

घृषुं शत्रूणां बलस्य घर्षकं विनाशयितारं पावकं सर्वेषां शोधकं वनिनम् । वनमित्युदकनाम । उदकवन्तम्, वृष्टिप्रदमित्यर्थः । विचर्षणिं विशेषेण सर्वस्य द्रष्टारं रुद्रस्य महादेवस्य सूनुं पुत्रभूतम् । एवंविधं मरुतां समूहं हवसा आह्वानसाधनेन स्तोत्रेण गृणीमसि शब्दयामः, स्तुम इत्यर्थः । हे ऋत्विग्यजमानाः, यूयमपि श्रिये ऐश्वर्याय धनार्थं मारुतं गणं मरुतां संघं सश्चत प्राप्नुत । कीदृशम् ? रजस्तुरं पार्थिवस्य पांसोस्त्वरयितारम्, प्रेरकमित्यर्थः । तवसं प्रवृद्धं ऋजीषिणम् । तृतीयसवने हि मरुतः स्तूयन्ते । तत्र च 'ऋजीषमभिषुण्वन्ति' इति ऋजीषसंबन्धः श्रुतः । अतस्तद्वन्तं वृषणं कामानां वर्षितारम् । रजस्तुरम् । रजांसि तुतोर्तीति रजस्तूः । 'तुर त्वरणे' । ऋसा.

प्र नू स मर्तः शवसा जनाँ अति
तस्थौ व ऊती मरुतो यमावत ।
अर्वद्भिर्वाजं भरते धना नृभि-
रापृच्छ्यं क्रतुमा क्षेति पुष्यति ॥

स मर्तः मनुष्यः शवसा बलेन जनान् जातान् अन्यान् पुरुषान् अति अतीत्य नु क्षिप्रं (प्र) तस्थौ प्रतिष्ठितो भवति । हे मरुतः, वः युष्माकं ऊती ऊत्या रक्षणेन यं पुरुषं आवत अरक्षत । अपि च, स पुरुषः अर्वद्भिः अश्वैः साधनभूतैः वाजं अन्नं नृभिः स्वकीयैर्मनुष्यैः धना धनानि च भरते संपादयति । तथा आपृच्छ्यं आप्रष्टव्यं शोभनं क्रतुं अग्निष्टोमादिकर्म आ क्षेति आप्नोति, पुष्यति प्रजया पशुभिः पुष्टो भवति च । ऋसा.

[1]आ ये रजांसि तविषीभिरव्यत
प्र व एवासः स्वयतासो अध्रजन् ।
भयन्ते विश्वा भुवनानि हर्म्या
चित्रो वो यामः प्रयतास्वृष्टिषु ॥

हे मरुतः, युष्मत्संबन्धिनः ये एवासः एवाः अश्वविशेषाः तविषीभिः स्वकीयैर्बलैर्वृष्टिप्रदानादिरूपैः रजांसि लोकान् आ अव्यत सर्वत आवृण्वन्ति ते वः युष्माकं एवासः अश्वाः स्वयतासः स्वयमेव सारथिना विनैव युक्ताः प्र अध्रजन् प्रकर्षेण गच्छन्ति व्याप्नुवन्ति । किंच, युष्मदागमनात् विश्वा भुवनानि सर्वाणि भूतजातानि विश्वा हर्म्या सर्वाणि हर्म्याणि च भयन्ते बिभ्यति पतनात् । यस्मादेवं तस्मात् वो यामः चित्रः चायनीयः, आश्चर्यभूत इत्यर्थः । भीतेः कारणमाह– ऋष्टिषु युद्धस्थासु हेतिषु प्रयतासु प्रकर्षेणोद्यतासु सतीषु । अथवा भीतौ दृष्टान्तः– ऋष्टिषु प्रयतासु सतीषु । लुप्तोपमेयम् । आयुधेषूद्यतेषु यथा जना बिभ्यति तद्वद्युष्मदागमनात् बिभ्यतीत्यर्थः । ऋसा.

यत्त्वेषयामा नदयन्त पर्वतान्
दिवो वा पृष्ठं नर्या अचुच्यवुः ।
विश्वो वो अज्मन्भयते वनस्पती
रथीयन्तीव प्र जिहीत ओषधिः ॥

मरुतः त्वेषयामाः प्रदीप्तगमनाः यत् यदा पर्वतान् पर्ववतो गिरेर्गह्वराणि पूरकान् मेघान् वा नदयन्त नादयन्ति, वा अथवा दिवः विद्योतनात्मकस्यान्तरिक्षस्य पृष्ठं उपरिभागं नर्याः नरेभ्यो हिताः अचुच्यवुः गच्छन्ति तदा वः युष्मत्संबन्धिनि अज्मन् गमने निमित्तभूते सति विश्वः वनस्पतिः वनस्य पालयिता वृक्षसमूहः भयते बिभेति । तथा ओषधिः प्रियङ्गुव्रीह्यादिः प्र जिहीते प्रकर्षेण गच्छति, स्वस्थानात् इतस्ततश्चलतीत्यर्थः । तत्र दृष्टान्तः– रथीयन्तीव रथमात्मन इच्छन्ती स्त्री, रथारूढेत्यर्थः । तादृशी स्त्रीव । सा यथा चलति तद्वत् । ऋसा.

---

(१) ऋसं. १।१६६।४–११.

यूयं न उग्रा मरुतः सुचेतुना-
ऽरिष्टग्रामाः सुमतिं पिपर्तन ।
यत्रा वो दिद्युद्रदति क्रिविर्दती
रिणाति पश्वः सुधितेव बर्हणा ॥

हे उग्राः उद्गूर्णबलाः मरुतः, यूयं सुचेतुना शोभनचेतसा अरिष्टग्रामाः अहिंसितसंघाः सन्तः नः अस्माकं सुमतिं शोभनबुद्धिं पिपर्तन पूरयत । कस्मिन् काले इति तदुच्यते— यत्र यस्मिन् काले वः युष्मत्संबन्धिनी क्रिविर्दती विक्षेपणशीलदन्ती दिद्युत् हेतिः रदति विलिखति मेघसंस्त्यायं, पश्वः पशूंश्च रिणाति रेषति हिनस्ति । वायौ वाति सति पशवः शीर्यन्ते इति प्रसिद्धम् । हिंसायां दृष्टान्तः— सुधिता सुहिता सुष्ठु प्रेरिता बर्हणा हतिः तत्साधना हेतिर्वा यथा रिणाति तद्वत् ।
ऋ॰सा.

प्र स्कम्भदेष्णा अनवभ्रराधसो-
ऽलातृणासो विदथेषु सुष्टुताः ।
अर्चन्त्यर्कं मदिरस्य पीतये
विदुर्वीरस्य प्रथमानि पौंस्या ॥

प्र स्कम्भदेष्णाः प्रकर्षेण स्तम्भितदानाः, अविरतदाना इत्यर्थः । अनवभ्रराधसः अभ्रष्टहविरादिधनाः । राध इति धननाम । अलातृणासः । नकारस्य स्थाने लकारः । अनातृणासः आतर्दनरहिताः । अथवा, अलं पर्याप्तं आतर्दनाः शत्रूणाम् । यद्वा, अलं अत्यर्थं दातारः फलानाम् । एवंरूपा मरुतः विदथेषु यागेषु अर्कं अर्चनीयमिन्द्रं स्वसखीभूतं अर्चन्ति पूजयन्ति, स्तुत्यादिना संभावयन्तीत्यर्थः । किमर्थम् ? मदिरस्य मादनसाधनस्य सोमस्य पीतये पानाय । तस्येन्द्रस्य महत्त्वं कथं जानन्तीत्यत आह— ते मरुतः वीरस्य विविधं शत्रूणामीरकस्य इन्द्रस्य प्रथमानि प्रतमानि मुख्यानि पौंस्या पुंस्त्वानि वृत्रवधादिरूपाणि विदुः जानन्ति ।
* ऋ॰सा.

* अत्र 'सुष्टुताः' इति पदं न व्याख्यातम् ।

शतभुजिभिस्तमभिह्रुतेरघात्
पूर्भी रक्षता मरुतो यमावत ।
जनं यमुग्रास्तवसो विरप्शिनः
पाथना शंसात्तनयस्य पुष्टिषु ॥

हे मरुतः, यूयं शतभुजिभिः । शतमित्यपरिमितनाम । असंख्यातभोगवद्भिः पूर्भिः पालनैः जेतव्यैः शत्रूणां नगरैर्वा तं रक्षत पालयत । तमित्युक्तं कमित्याह— यं जनं अभिह्रुतेः अभिभवकारणात् कुटिलस्वभावात् अघात् पापात् आवत अरक्षत । किंच, हे उग्राः उद्गूर्णतेजसः, हे तवसः बलवन्तो वेगवन्तो वा, हे विरप्शिनः । महन्नामैतत् । महान्तः । रपणीयाः शब्दाः रपाः । ते येषां ते रप्शिनः । विविधाः रप्शिनः स्तोतारो येषां ते तथोक्ताः । हे तादृशाः, यूयं यं च जनं पाथन पाथ रक्षथ । कस्मान्निमित्तादिति उच्यते— तनयस्य । उपलक्षणमेतत् । पुत्रादीनां पुष्टिषु पोषेषु निमित्तभूतेषु शंसात् अभिशंसनात् । यमेवं कुरुथ तं रक्षतेति शेषः । पापक्षयाद्यनिष्टपरिहारेण पुत्रादिपोषरूपेष्टप्राप्त्या च रक्षयेत्यर्थः ।
ऋ॰सा.

विश्वानि भद्रा मरुतो रथेषु वो
मिथस्पृध्येव तविषाण्याहिता ।
अंसेष्वा वः प्रपथेषु खादयो-
ऽक्षो वश्चक्रा समया वि वावृते ॥

हे मरुतः, वः रथेषु युष्मत्संबन्धिरथेषु रंहणसाधनेषु विश्वानि भद्रा सर्वाणि कल्याणानि भोगयोग्यानि द्रव्याणि अस्मभ्यं प्रदेयानि फलानि वा आहितानि । तथा वः अंसेष्वा तदुपलक्षितभुजेष्वपि । आकारोऽप्यर्थे । मिथस्पृध्येव बलाधिक्यात् परस्परस्पर्धाविषयाणि तविषाणि बलानि अंसेषूक्तलक्षणान्यायुधानि वा आहितानि । किंच, वः प्रपथेषु । प्रगताः पन्थानो येषु विश्रामस्थानेषु तानि प्रपथानि । तेषु खादयः खाद्यानि भक्ष्याण्याहितानि । यद्वा, प्रगतः पन्थाः यैस्तेषु पादाग्रेषु खादयः स्थिरा आभरणविशेषा आहिताः । किंच, अक्षो वः युष्मत्संबन्धी रथ्यः अक्षः चक्रा तत्रोपनिबद्धानि चक्राणि

समया समीपे तेषां परिसरे वि वव्रुते विशेषेण वर्तते, न कदाचिदपि चक्रेषु संलग्नो भवतीत्यर्थः। यस्मादेवं देवयजनगमनसाधनानि सन्ति तस्मात् शीघ्रमागच्छध्व-मित्यभिप्रायः। ऋसा.

भूरीणि भद्रा नर्येषु बाहुषु
वक्षःसु रुक्मा रभसासो अञ्जयः।
अंसेष्वेताः पविषु क्षुरा अधि
वयो न पक्षान् व्यनु श्रियो धिरे॥

ते मरुतः नर्येषु नरेभ्यो हितेषु बाहुषु भुजेषु भूरीणि प्रभूतानि भद्रा भद्राणि कल्याणानि धनानि स्तोतृभ्यो दातुं धिरे दधिरे धारयन्ति। तथा वक्षःसु उरःस्थलेषु रुक्माः सुवर्णरत्नादिनिर्मितान्याभरणानि धारयन्ति। कीदृशानि? रभसासः राभस्ययुक्तानि कान्तिमन्ति वा। तथा अञ्जयः व्यक्तानि। अंसेषु भुजमूलेषु एताः शुक्ल-वर्णाः मालाः। पविषु वज्रसदृशेष्वायुधेषु क्षुराः क्षुरधाराः। अधि सप्तम्यर्थानुवादी। एवमेते मरुतः सर्वाङ्गेषु श्रियः लक्ष्मीः (अनु) अनुक्रमेण वि धिरे विविधं धारयन्ति। तत्र दृष्टान्तः– वयो न पक्षान् पक्षिणः पक्षानिव। ऋसा.

महान्तो मह्ना विभ्वो३ विभूतयो
दूरेदृशो ये दिव्याइव स्तृभिः।
मन्द्राः सुजिह्वाः स्वरितार आसभिः
संमिश्ला इन्द्रे मरुतः परिष्टुभः॥

ये मरुतः महान्तः माहात्म्योपेताः। केन? मह्ना महत्त्वेन प्रभावातिशयेन। तथा विभ्वः विभवः व्याप्ताः तथा विभूतयः विविधैश्वर्यवन्तः दूरेदृशः दूरे दृश्यमानाः प्रकाशमानाः। दूरदर्शने दृष्टान्तः– दिव्याः स्तृभिः इव। स्तृ इति नक्षत्रनाम, 'ऋक्षाः स्तृभिरिति नक्षत्राणाम्' (नि. ३।२०) इति निरुक्तत्वात्। दिवि भवाः देवाः स्तृभिः स्वपुष्पकभूतैस्तेजःपुञ्जैर्नक्षत्रैर्यथा दूरे दृश्यमाना भवन्ति तद्वत्। किंच, मन्द्राः मादनाः सुजिह्वाः शोभनजिह्वाः आसभिः आस्यैः स्वरितारः शब्दयितारः, प्रियवचना इत्यर्थः। अत एव सुजिह्वा इत्युक्तम्। किंच, इन्द्रे संमिश्लाः सम्यग्मिश्रयितारः, इन्द्रसहायिन इत्यर्थः, 'मरुतो हैनं नाजहुः' (ऐब्रा. ३।२०) इति श्रुतेः। तथा परिष्टुभः परिस्तोभ-युक्ताः स्तुतिभिर्युक्ताः। एवं महाभागा ये मरुतः सन्ति ते अस्मद्यज्ञं आगच्छन्तीति शेषः। ऋसा.

[१]सोमासो न ये सुतास्तृप्तांशवो
हृत्सु पीतासो दुवसो नाऽऽसते।
ऐषामंसेषु रम्भिणीव रारभे
हस्तेषु खादिश्च कृतिश्च सं दधे॥

ये मरुतः सुताः अभिषुताः तृप्तांशवः तर्पितावयवाः सोमासो न सोमा इव। यथा वल्लीरूपाः सोमाः अभिषवात्पूर्वमाप्यायनेन तृप्तावयवाः सन्तः पश्चात् सुताः अभिषुताः रसभूताः पीतासः पीताः सन्तः हृत्सु पातॄणां हृदयेषु दुवसो न आसते परिचरन्त इवाऽऽसते तद्वत् ये मरुतो यज्ञे आहूतास्तृप्तावयवा भवन्ति, ध्यायमानाः सन्तो हृत्सु हृदयेषु दुवसो न परिचरन्त इवाऽऽसते। यद्वा, प्राणादिरूपेण शरीरे स्थिताः दुवसः परिचरन्त इव गमनादिचेष्टाः कुर्वन्त आसते। एषामंसेषु रम्भिणीव युवतमांसालम्बिनी योषिदिव आ रारभे आरेभे आश्लि-ष्यति। अवलम्बने सामर्थ्यात् शक्त्याख्यायुधविशेषो भुजलक्ष्मीर्वा। किंच, हस्तेषु खादिः हस्तत्राणकः च कृतिः कर्तनी च खड्गलताष्टिश्च (? दिश्च) सं दधे संधीयते सम्यग्धृता भवति। परस्परसमुच्चयार्थश्चकाराः (? थौं चकारौ)। ये मरुतः उक्तरूपाः ते आविर्भव-न्तीत्यर्थः। ऋसा.

अव स्वयुक्ता दिव आ वृथा ययु-
रमर्त्याः कशया चोदत त्मना।
अरेणवस्तुविजाता अचुच्यवु-
र्दृळ्हानि चिन्मरुतो भ्राजदृष्टयः॥

एते मरुतः स्वयुक्ताः स्वैर्युक्ताः परस्परं संयुक्ताः स्वेन धनेन वा युक्ताः सन्तः दिवः द्युलोकात् वृथा अनायासेन अव आ ययुः अवाङ्मुखमागच्छन्ति। हे अमर्त्याः मरुतः, यूयं त्मना आत्मना स्वयमेव कशया।

(१) ऋसं. १।१६८।३-४.

वाङ्नामैतत् । वाचा स्तुतिरूपया चोदत प्रेरयत । स्तोतुमिति शेषः । ते च मरुतः अरेणवः अपापाः तुविजाताः बहुयज्ञेषु प्रादुर्भूताः भ्राजदृष्टयः दीप्ताः एवंभूताः सन्तः दळ्हानि चित् दृढान्यपि पर्वतानि (? पर्वतादीनि) अचुच्यवुः च्यावयन्ति चालयन्ति । ऋसा.

[१]अंसेषु व ऋष्टयः पत्सु खादयो
वक्षःसु रुक्मा मरुतो रथे शुभः ।
अग्निभ्राजसो विद्युतो गभस्त्योः
शिप्राः शीर्षसु वितता हिरण्ययीः ॥

हे मरुतः, वः युष्माकं अंसेषु ऋष्टयः आयुधानि, भासन्ते इति शेषः । पत्सु खादयः कटकाः । वक्षःसु रुक्माः हाराः । रथे शुभः मधुराप्रुषा आपः । अग्निभ्राजसः अग्निदीप्ताः विद्युतः गभस्त्योः हस्तयोः भासन्ते इत्यर्थः । शीर्षसु शिरःसु हिरण्ययीः हिरण्यमय्यः शिप्राः उष्णीषमय्यः वितताः विस्तृताः । प्रतिवाक्यं वितता इति वा संबन्धनीयम् । ऋसा.

[२]वाशीमन्त ऋष्टिमन्तो मनीषिणः
सुधन्वान इषुमन्तो निषङ्गिणः ।
स्वश्वाः स्थ सुरथाः पृश्निमातरः
स्वायुधा मरुतो याथना शुभम् ॥

हे मरुतः, यूयं वाशीमन्तः । वाशीति तक्षणसाधनमायुधम् । तद्वन्तः स्थ । ऋष्टिमन्तः । ऋष्टिर्नाम छुरिका । तद्वन्तः स्थ । एवं सर्वत्र योज्यम् । मनीषिणः मनस ईश्वराः मनस्विनः सुधन्वानः शोभनधनुष्काः इषुमन्तः बाणवन्तः निषङ्गिणः निषङ्गवन्तः स्वश्वाः स्थ शोभनाश्वाः भवथ । सुरथाः शोभनरथाः पृश्निमातरः पृश्नेः पुत्राः स्वायुधाः खड्गपरश्वादिसकलायुधोपेताः । एवं महात्मानः सन्तः शुभं शोभनं यथा भवति तथा शुभमुदकाय वा रथेन याथन गच्छथ । ऋसा.

(१) ऋसं. ५।५४।११.
(२) ऋसं. ५।५७।२,४.

वातत्विषो मरुतो वर्षनिर्णिजो
यमाइव सुसदृशः सुपेशसः ।
पिशङ्गाश्वा अरुणाश्वा अरेपसः
प्रत्वक्षसो महिना द्यौरिवोरवः ॥

वातत्विषः सर्वदा संप्राप्तदीप्तयः वर्षनिर्णिजः वृष्टेः शोधयितारः । अथवा, निर्णिगिति रूपनाम । वर्षमेव रूपं येषां ते तादृशाः, वृष्टिप्रदा इत्यर्थः । यमाइव युगलोत्पन्ना इव सुसदृशः परस्परं बलरूपादिभिरत्यन्तं सरूपाः सुपेशसः शोभनरूपाः पिशङ्गाश्वाः पिशङ्गवर्णाश्वोपेताः तथा अरुणाश्वाः अरेपसः अपापाः प्रत्वक्षसः प्रकृष्टं तनूकर्तारः द्वेष्टॄणां महिना महत्त्वेन द्यौरिव अन्तरिक्षमिव उरवः विस्तीर्णाः । उक्तलक्षणाः नाम भेजिरे इत्युत्तरेण संबन्धः । ऋसा.

[१]धृतव्रताः क्षत्रिया यज्ञनिष्कृतो
बृहद्दिवा अध्वराणामभिश्रियः ।
अग्निहोतार ऋतसापो अद्रुहो-
ऽपो असृजन्ननु वृत्रतूर्ये ॥

धृतव्रताः धृतकर्माणः जात्या क्षत्रियाः । यद्वा, क्षत्रं बलं, तदर्हाः । यज्ञनिष्कृतः । यज्ञं प्रति निर्गमनं यज्ञनिः । तस्य कर्तारः बृहद्दिवाः महातेजस्काः अध्वराणां रक्षोभिरहिंसितानां यज्ञानां अभिश्रियः अभिसेवकाः अग्निहोतारः अग्निः होता आह्वाता येषां तादृशाः ऋतसापः । 'षप समवाये' । सत्यभाजः अत एव अद्रुहः केषांचिदप्यद्रोग्धारः । यद्वा, द्रुहेः कर्मण्यौणादिकः क्विप् । कैश्चिदप्यहिंस्याः । एवंप्रभावा देवाः वृत्रतूर्ये । वृत्रस्तूर्यते हिंस्यते अत्रेति वृत्रतूर्यः संग्रामः । तस्मिन् अपामावरकशत्रुवधे अपः उदकानि अन्वसृजन् अन्वसारयन् । ऋसा.

[२]विप्रासो न मन्मभिः स्वाध्यो
देवाव्यो३ न यज्ञैः स्वप्नसः ।
राजानो न चित्राः सुसंदृशः
क्षितीनां न मर्या अरेपसः ॥

(१) ऋसं. १०।६६।८.
(२) ऋसं. १०।७८।१.

विप्रासो न विप्रा ब्राह्मणा इव ते यथा मन्मभिः स्तुतिभिः स्वाध्यः शोभनध्याना भवन्ति एवं मरुतोऽपि अस्मदीयैर्मन्मभिः मननीयैः स्तोत्रैः स्वाध्यः सुमनसो भवन्ति । अथवा, मन्मभिः स्तोत्रैर्युक्ता विप्रासो न मेधाविनः स्तोतार इव स्वाध्यः यज्ञे यजमाने वा सुध्याना इत्यर्थः । तथा यज्ञैः यागैः देवाव्यो न देवानां तर्पयितारो यजमाना इव स्वप्नसः । अप्न इति कर्मनाम । शोभनकर्माणः । ते यथा कर्मसु व्यापृता भवन्ति तद्वत् वृष्टिप्रदानादिकर्मसु व्यापृता इत्यर्थः । राजानो न मूर्धाभिषिक्ताः क्षितिपतय इव चित्राः चायनीयाः पूजनीयाः । यद्वा, चित्राभरणाः । तथा सुसंदृशः सुष्ठु दर्शनीयाः । तथा क्षितीनां निवासानां स्वामिनः मर्याः न मनुष्या इव अरेपसः अपापाः । यथा प्रतिग्रहार्थमन्यत्रागत्वा स्वगृह एवानुतिष्ठन्तो निर्दोषा भवन्ति तादृशा इत्यर्थः । ईदृशाः शोभन्ते इत्यर्थः । ऋसा.

[1]अग्निर्न ये भ्राजसा रुक्मवक्षसो
वातासो न स्वयुजः सद्यऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः
सुशर्माणो न सोमा ऋतं यते ॥

हे मरुतः, अग्निर्न अग्निरिव स यथा भ्राजसा तेजसा शोभते तद्वत् भ्राजसा युक्ताः । किंच, रुक्मवक्षसः रुक्मालंकृतवक्षस्काः वातासो न प्रत्यक्षवाता इव स्वयुजः स्वयं युज्यमानाः सद्यऊतयः सद्योगमनाः प्रज्ञातारो न प्रकर्षेण ज्ञातारः ज्ञानिन इव ज्येष्ठाः पूज्याः सुनीतयः सुनयनाः सुशर्माणो न सोमाः सुसुखाः सोमा इव ते यूयं ऋतं यते यज्ञं गच्छते यजमानाय गच्छतेति । ऋसा.

[2]वातासो न ये धुनयो जिगत्नवो-
ऽग्नीनां न जिह्वा विरोकिणः ।
वर्मण्वन्तो न योधाः शिमीवन्तः
पितॄणां न शंसाः सुरातयः ॥

ये मरुतः वातासो न वायवः इव धुनयः शत्रूणां कम्पयितारः जिगत्नवः गमनशीलाः । अत्र मारुते सूक्ते मरुतामेव दृष्टान्तकथनं संचरणस्वभाववायुपदार्थतदभिमानिदेवताभेदेनाविरुद्धम् । तथा अग्नीनां न जिह्वाः अग्नीनां ज्वाला इव विरोकिणः विरोचनशीलमुखाः । तथा वर्मण्वन्तो न योधाः कवचिनो योद्धार इव शिमीवन्तः शौर्यकर्मवन्तः । तथा पितॄणां न शंसाः पितॄणां जनकानां शंसा वाच इव सुरातयः सुदानाः । एवंमहानुभावा एते मरुतोऽस्मद्यज्ञमागच्छन्तु । ऋसा.

रथानां न ये१ऽराः सनाभयो
जिगीवांसो न शूरा अभिद्यवः ।
वरेयवो न मर्या घृतप्रुषो-
ऽभिस्वर्तारो अर्कं न सुष्टुभः ॥

रथानां न रथचक्राणामिव अराः ते यथा बहवोऽपि सनाभयः समाननाभयो भवन्ति तद्वत् ये परस्परं सनाभयः समानबन्धनाः एकस्मिन्नेवान्तरिक्षे वर्तमानाः, परस्परं बन्धुभूता इत्यर्थः । जिगीवांसो न शूराः जयशीलाः शूरा इव अभिद्यवः अभिगतदीप्तयः । किंच, वरेयवो न मर्याः वृतं वरं परस्मै प्रदातुमिच्छन्तो मनुष्या इव घृतप्रुषः उदकसेक्तारः । उदकपूर्वं हि वराणि वसूनि दीयन्ते नियमेन । वृष्ट्युदकप्रदा इत्यर्थः । किंच, अभिस्वर्तारः अर्कं न अर्कं अर्चनीयं स्तोत्रमभिस्वर्तारः अभितः शब्दयितारो बन्दिन इव सुष्टुभः सुशब्दाः । ऋसा.

अश्वासो न ये ज्येष्ठास आशवो
दिधिषवो न रथ्यः सुदानवः ।
आपो न निम्नैरुदभिर्जिगत्नवो
विश्वरूपा अङ्गिरसो न सामभिः ॥

ये मरुतः अश्वासो न अश्वा इव ज्येष्ठासः ज्येष्ठाः प्रशस्यतमाः आशवः शीघ्रगमनाः । तथा दिधिषवो न वसूनां धारका इव रथ्यः रथस्वामिनः सुदानवः सुदानाः । तथा आपो न आप इव निम्नैः प्रवणगैः उदभिः उदकैः सह जिगत्नवः गमनशीलाः । तथा विश्वरूपाः नानारूपाः सामभिः युक्ताः अङ्गिरसो न अङ्गिरस इव, सर्वदा सामगा इत्यर्थः । ऋसा.

---

(१) ऋसं. १०।७८।२ ; नि. ३।१५.
(२) ऋसं. १०।७८।३-७.

ग्रावाणो न सूरयः सिन्धुमातर
आदर्दिरासो अद्रयो न विश्वहा ।
शिशूला न क्रीळयः सुमातरो
महाग्रामो न यामन्नुत त्विषा ॥

सूरयः उदकस्य प्रेरकाः ग्रावाणो न मेघा इव सिन्धुमातरः नदीनिर्मातारः । आदर्दिरासः आदरणशीलानि अद्रयो न वज्राद्यायुधानीव विश्वहा सर्वदा शत्रूणां हन्तार इत्यर्थः । यद्वा, सर्वदा अद्रयो न वज्रा इव शत्रूणामादर्दिरासः आदरणशीलाः । सुमातरः शोभनमातृकाः शिशूला न शिशव इव क्रीळयः विहर्तारः । उत अपि च, महाग्रामो न महाजनसंघ इव यामन् यामनि गमने त्विषा दीप्त्या युक्ता भवन्ति । तेऽस्मद्यज्ञमागच्छन्तु । ऋसा.

उषसां न केतवोऽध्वरश्रियः
शुभंयवो नाञ्जिभिर्व्यश्वितन् ।
सिन्धवो न ययियो भ्राजदृष्टयः
परावतो न योजनानि ममिरे ॥

ये मरुतः उषसां न केतवः उषसां रश्मय इव अध्वरश्रियः यज्ञस्याऽऽश्रयितारः भवन्ति । तथा शुभंयवो न कल्याणकामा वरा इव अञ्जिभिः आभरणैः व्यश्वितन् दीप्यन्ते । 'श्विता वर्णे' । लङि रूपम् । तथा सिन्धवो न नद्य इव ययियः गमनशीलाः भ्राजदृष्टयः दीप्यमानायुधाः परावतो न दूराध्वनीना वडवा इव योजनानि दूरदेशान् ममिरे परिच्छिन्दन्ति । तेऽस्मद्यज्ञमागच्छन्त्विति । ऋसा.

सेनानीः इन्द्रः

[1]युध्मो अनर्वा खजकृत्समद्वा
शूरः सत्राषाड्जनुषेमषाळ्हः ।
व्यास इन्द्रः पृतनाः स्वोजा
अधा विश्वं शत्रूयन्तं जघान ॥

युध्मः योद्धा अनर्वा अभिगन्तृरहितः युद्धेष्वपराङ्मुखो वा खजकृत् युद्धकृत्, 'खले खजे' (निघण्टुः २।१७।३९) इति युद्धनामसु पाठात् । समद्वा । समत् कलहः, तद्वान् । शूरः शौर्योपेतः जनुषा जन्मना स्वभावत एव सत्राषाट् बहूनामभिभविता अषाळ्हः स्वयं च केनाप्यनभिभूतः स्वोजाः सुबलः ईं अयं इन्द्रः पृतनाः शत्रूणां सेनाः व्यास विक्षिपति । अध अपि च, शत्रूयन्तं शात्रवमाचरन्तं विश्वं सर्वं जघान हन्ति । ऋसा.

वृषा जजान वृषणं रणाय
तमु चिन्नारी नर्यं ससूव ।
प्र यः सेनानीरध नृभ्यो अस्ती-
नः सत्वा गवेषणः स धृष्णुः ॥

वृषा सेक्ता पिता कश्यपः वृषणं कामानां वर्षितारमिन्द्रं रणाय युद्धार्थं जजान । 'जन जनने' इति धातुः । नर्यं नरहितं तमु तमेवेन्द्रं नारी चित् अदितिरपि ससूव सुषुवे । अध अपि च, यः इन्द्रः नृभ्यः नृणां सेनानीः सेनानां नेता सन् प्र अस्ति प्रभवति सः इन्द्रः इनः सर्वस्य जगतः ईश्वरो भवति, 'नियुत्वान् इनः' (निघण्टुः २।२२।४) इति ईश्वरनामसु पाठात् । सत्वा शत्रूणां सादकश्च गवेषणः गवामन्वेष्टा च धृष्णुः शत्रूणां धर्षकश्च भवतीति शेषः । ऋसा.

सेनानीः सोमः

[1]प्र सेनानीः शूरो अग्रे रथानां
गव्यन्नेति हर्षते अस्य सेना ।
भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्य
आ सोमो वस्त्रा रभसानि दत्ते ॥

सेनानीः सेनानामग्रे उपनेता शूरः शत्रूणां बाधकः सोमः गव्यन् शत्रूणां गा इच्छन् । यद्वा, यजमानानां पश्वादिकमिच्छन् । रथानां अग्रे रथानां पुरतः प्र एति प्रकर्षेण संग्रामं गच्छति । अस्य सोमस्य सेना च हर्षते हृष्यति । किंच, सखिभ्यः समानख्यानेभ्यो यजमानेभ्यः इन्द्रहवान् तैः कृतानीन्द्रस्याऽऽह्वानानि भद्रान् कल्याणानि

(१) ऋसं. ७।२०।३,५.

(१) ऋसं. ९।९६।१; सासं. १।५।७ (५३३) अग्रे (अग्रे).

यथार्थानि कृण्वन् कुर्वन् । आहूतो हीन्द्रः सोमं पीत्वा कामान् प्रयच्छतीति । रभसानि इन्द्रस्य वेगेनागमने निमित्तानि वस्त्रा वस्त्राणि आच्छादकानि पयःप्रभृतीन्याश्रयणानि आ दत्ते आगृह्णाति । ऋसा.

युद्धे विजेतुः सत्कारः

[1]इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत् प्रजापतिम्– अहमेतदसानि यत्त्वम्, अहं महानसानीति । स प्रजापतिरब्रवीत्– अथ कोऽहमिति । यदेवैतदवोच इत्यब्रवीत् । ततो वै को नाम प्रजापतिरभवत् । को वै नाम प्रजापतिः । यन्महानिन्द्रोऽभवत्तन्महेन्द्रस्य महेन्द्रत्वम् ॥

इन्द्रः पुरा वृत्रं हत्वा सर्वा विजितीः जेतव्या भूमीः विजित्य प्रजापतिमिदमब्रवीत्– हे प्रजापते, त्वमिदानीं यदसि एतदहमितः परमसानि भवानि । किं तदिति वीक्षायां विशेषाकारेणोच्यते– अहं महानसानि सर्वेभ्यो भूतेभ्योऽधिकः पूज्यो भवानीति । ततः स प्रजापतिरिदमब्रवीत्– मदीये महत्त्वे त्वया स्वीकृते सति अनन्तरमहं को नाम भविष्यामीति । तत इन्द्रः इदमब्रवीत्– हे प्रजापते, स्वात्मानमुद्दिश्य निवेदनेन क इति यदेवैतदवोचस्तदेव त्वं भवेति । तत आरभ्य क इत्येतन्नामवान् प्रजापतिरभूत् । एतत् कशब्दवाच्यत्वं सर्वत्र प्रसिद्धम् । अत एव श्रुत्यन्तरेषु प्रतिग्रहमन्त्रब्राह्मणे एवमाम्नायते– 'क इदं कस्मा अदादित्याह । प्रजापतिर्वै कः । प्रजापतय एव तद्ददाति (? स प्रजापतये ददाति)' (तैब्रा. २।२।५।५) इति । कशब्दस्य सुखवाचित्वात् तेन प्रजापतेर्व्यवहारे सति सुखी प्रजापतिरित्युक्तं भवति । प्रजापतिगतं महत्त्वं स्वीकृत्येन्द्रो यस्मात् महानभवत्, तस्मात् महेन्द्रनाम संपन्नम् । श्रुत्यन्तरेऽप्येतदाम्नातम्– 'इन्द्रो वृत्रमहन् । तं देवा अब्रुवन्– महान् वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वम्' (तैसं. ६।५।५।३) इति । ऐब्रासा.

स महान् भूत्वा देवता अब्रवीत्– उद्धारं म उद्धरतेति । यथाऽप्येतर्हीच्छति, यो वै भवति यः श्रेष्ठतामश्नुते स महान् भवति । तं देवा अब्रुवन्– स्वयमेव ब्रूष्व यत्ते भविष्यतीति । स एतं माहेन्द्रं ग्रहमब्रूत माध्यन्दिनं सवनानां, निष्केवल्यमुक्थानां, त्रिष्टुभं छन्दसां, पृष्ठं साम्नाम् । तमस्मा उद्धारमुदहरन् ॥

स इन्द्रः उक्तप्रकारेण महत्त्वं प्राप्य देवताः प्रत्येतदब्रवीत्– हे देवाः, उद्धारं उत्कर्षे निमित्तीकृत्य यः पुंसा पूजाविशेषो ह्रियते सोऽयं सत्कारः उद्धारः, तं सत्कारभागं मे मदर्थमुद्धरत पृथक्कुरुतेति । यथेत्यादिना लौकिकदृष्टान्त उच्यते । यो वै भवति यः पुमान् भवति ऐश्वर्यं प्राप्नोति, यश्च श्रेष्ठतां विद्याचारादिप्रयुक्तवैशिष्ट्यमश्नुते स प्राप्तैश्वर्यो विशिष्टश्च सर्वेषां मध्ये महान् भवति । स तादृशः पुरुषः एतर्ह्यपि इदानीमपि यथा विशिष्टपूजारूपं भागमिच्छति तथाऽयमिन्द्रोऽपीत्यध्याहारः । तं उद्धारेच्छावन्तमिन्द्रं देवा इदमब्रुवन्– हे इन्द्र, यत्ते प्रियं भविष्यति तत्स्वयमेव ब्रूष्वेति । ततः स इन्द्रो ग्रहाणां मध्ये एतं माहेन्द्रं ग्रहमब्रूत, तथा सवनानां मध्ये माध्यंदिनं सवनम्, शस्त्राणां मध्ये निष्केवल्यं शस्त्रम्, छन्दसां मध्ये त्रिष्टुभम्, साम्नां मध्ये पृष्ठस्तोत्रनिष्पादकं बृहद्रथन्तरवैरूपादिकम् । ततो देवा अस्मै इन्द्राय तमुद्धारं माहेन्द्रग्रहादिकं यज्ञादुदहरन् । तदेतच्छाखान्तरेऽप्याम्नातम्– 'स एतं माहेन्द्रमुद्धारमुदहरत वृत्रꣳ हत्वाऽन्यासु देवतास्वधीति (? स्वधि) यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरते न (? तेऽन्यासु) प्रजास्वधि' (तैसं. ६।५।५।३–४) इति । ऐब्रासा.

देवानां युद्धनीतिः

[1]देवासुराः संयत्ता आसन् । सोऽग्निरब्रवीत् । मामग्रेऽयजत । मया मुखेनासुराञ्जेष्यथेति । मां

(१) ऐब्रा. १२।१० ; मेधा. ७।९७ 'इन्द्रो वै वृत्रं...... उद्धारं म उद्धरत' इत्यन्तं निर्देशमात्रम् ; मवि. ७।९७ 'इन्द्रो वै वृत्रं......यथाऽप्येतर्हीच्छति' इत्यन्तं निर्देशमात्रम् ; ममु. ७।९७ मेधावत्.

(१) तैब्रा. १।६।२।५–७.

द्वितीयमिति सोमोऽब्रवीत् । मया राज्ञा जेष्यथेति । मां तृतीयमिति सविता । मया प्रसूता जेष्यथेति । मां चतुर्थीमिति सरस्वती । इन्द्रियं वोऽहं धास्यामीति । मां पञ्चममिति पूषा । मया प्रतिष्ठया जेष्यथेति । तेऽग्निना मुखेनासुरानजयन् । सोमेन राज्ञा । सवित्रा प्रसूताः । सरस्वतीन्द्रियमदधात् । पूषा प्रतिष्ठाऽऽसीत् । ततो वै देवा व्यजयन्त ॥

लोके युद्धार्थमुद्यतायां सेनायां केचन शूरा भटा मुखतो योद्धुं गच्छन्ति । तेषां युद्धं द्रष्टुं कश्चिद्राजा स्वामित्वेन संनिधत्ते । केचन दण्डहस्ताः पृष्ठतः स्थित्वा योद्धॄनपरावृत्तये बलात्प्रेरयन्ति । अन्ये केचन दुन्दुभ्यादिजयघोषेण योद्धॄणामुत्साहं जनयन्ति । अपरा कियत्यपि सेना पुरोगताया युध्यन्त्याः सेनायाः पृष्ठतः सहायत्वेनावतिष्ठते । तानेतान् पञ्चविधव्यापारानग्न्यादयः क्रमेण स्वीकृतवन्तः । ततो देवानां जयोऽभूत् ।

तैब्रासा. ( तैसं. १।८।२।१ )

युद्धे देवानां विजयः परब्रह्मनिमित्तः, अतः विजयिनाऽहंकारः परिहर्तव्यः

[१]ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्त— अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥

ब्रह्म यथोक्तलक्षणं परं ह किल देवेभ्यः अर्थाय विजिग्ये जयं लब्धवत् देवानामसुराणां च संग्रामेऽसुरान् जित्वा जगदरातीनीश्वरसेतुभेत्तॄन् देवेभ्यो जयं तत्फलं च प्रायच्छज्जगतः स्थेम्ने । तस्य ह किल ब्रह्मणो विजये देवाः अग्न्यादयः अमहीयन्त महिमानं प्राप्तवन्तः । तदा आत्मसंस्थस्य प्रत्यगात्मनः ईश्वरस्य सर्वज्ञस्य सर्वक्रियाफलसंयोजयितुः प्राणिनां सर्वशक्तेर्जगतः स्थितिं चिकीर्षोरयं जयो महिमा चेत्यजानन्तस्ते देवा ऐक्षन्त ईक्षितवन्तः— अग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽस्माकमेवायं विजयोऽस्माकमेवायं महिमा अग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते, नास्मत्प्रत्यगात्मभूतेश्वरकृत इति ।

शंकर.

तद्धैषां विजज्ञौ । तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत किमिदं यक्षमिति ॥

एवं मिथ्याभिमानेक्षणवतां तद्ध किलैषां मिथ्येक्षणं विजज्ञौ विज्ञातवत् ब्रह्म । सर्वेक्षितृ हि तत्सर्वभूतकरणप्रयोक्तृत्वाद्देवानां च मिथ्याज्ञानमुपलभ्य मैवासुरवद्देवा मिथ्याभिमानात् पराभवेयुरिति तदनुकम्पया देवान् मिथ्याभिमानापनोदनेन अनुगृह्णीयामिति तेभ्यो देवेभ्यो ह किल अर्थाय प्रादुर्बभूव स्वयोगमाहात्म्यनिर्मितेनात्यद्भुतेन विस्मापनीयेन रूपेण देवानामिन्द्रियगोचरे प्रादुर्बभूव । तत्प्रादुर्भूतं ब्रह्म न व्यजानत नैव विज्ञातवन्तो देवाः किमिदं यक्षं पूज्यं महद्भूतमिति । शंकर.

तेऽग्निमब्रुवन्— जातवेद एतद्विजानीहि किमेतद्यक्षमिति । तथेति ॥

तदभ्यद्रवत् । तमभ्यवदत्कोऽसीति । अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥

तस्मिंस्त्वयि किं वीर्यमिति । अपीदं सर्वं दहेयम् । यदिदं पृथिव्यामिति ॥

तस्मै तृणं निदधौ । एतद्दहेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाक दग्धुम् । स तत एव निववृते । नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥

ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवोऽग्निं अग्रगामिनं जातवेदसं सर्वज्ञकल्पमब्रुवन् उक्तवन्तः— हे जातवेदः, एतदस्मद्गोचरस्थं यक्षं विजानीहि विशेषतो बुध्यस्व त्वं नस्तेजस्वी, किमेतद्यक्षमिति । तथाऽस्त्विति तद्यक्षमभ्यद्रवत् तत्प्रति गतवानग्निः । तं च गतवन्तं पिपृच्छिषुं तत्समीपे अप्रगल्भत्वात्तूष्णींभूतं तद्यक्षमभ्यवदत् अग्निं प्रति अभाषत कोऽसीति । एवं ब्रह्मणा पृष्टोऽग्निरब्रवीदग्निर्वा अग्निनामाऽहं प्रसिद्धो जातवेदा इति च नामद्वयेन प्रसिद्धतयाऽऽत्मानं श्लाघयन् । इत्येवमुक्तवन्तं ब्रह्म अवोचत्— तस्मिन्नेवं प्रसिद्धगुणनामवति त्वयि किं वीर्यं सामर्थ्यमिति । सोऽब्रवीत्— इदं जगत् सर्वं दहेयं भस्मीकुर्यां, यदिदं स्थावरादि पृथिव्यामिति । पृथिव्या-

(१) केउ. ३।१–१२.

मित्युपलक्षणार्थं, यतोऽन्तरिक्षस्थमपि दह्यत एवाग्निना। तस्मै एवमभिमानवते ब्रह्म तृणं निदधौ पुरोऽग्नेः स्थापितवद्ब्रह्म। एतत्तृणमात्रं ममाग्रतो दह, न चेदसि दग्धुं समर्थः, मुञ्च दग्धृत्वाभिमानं सर्वत्र, इत्युक्तस्तत्तृणमुपप्रेयाय तृणसमीपं गतवान्सर्वजवेन सर्वोत्साहकृतेन वेगेन। गत्वा न शशाक नाशकद्दग्धुम्। स जातवेदास्तृणं दग्धुमशक्तो व्रीडितो हतप्रतिज्ञस्तत एव यक्षादेव तूष्णीं देवान् प्रति निववृते निवृत्तः प्रतिगतवान्। नैतद्यक्षमशकं शक्तवानहं विज्ञातुं विशेषतो यदेतद्यक्षमिति।

शंकर.

**अथ वायुमब्रुवन्— वायवेतद्विजानीहि किमेतद्यक्षमिति। तथेति॥**

**तदभ्यद्रवत्। तमभ्यवदत्कोऽसीति। वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति॥**

**तस्मिंस्त्वयि किं वीर्यमिति। अपीदं सर्वमाददीय। यदिदं पृथिव्यामिति॥**

**तस्मै तृणं निदधौ। एतदादत्स्वेति। तदुपप्रेयाय सर्वजवेन। तन्न शशाकाऽऽदातुम्। स तत एव निववृते। नैतदशकं विज्ञातुं यदेतद्यक्षमिति॥**

अथ अनन्तरं वायुमब्रुवन्— हे वायो, एतद्विजानीहीत्यादि समानार्थं पूर्वेण। वानाद्गमनाद्गन्धनाद्वा वायुः। मातरि अन्तरिक्षे श्वयतीति मातरिश्वा। इदं सर्वमप्याददीय गृह्णीयाम्। यदिदं पृथिव्यामित्यादि समानमेव।

शंकर.

**अथेन्द्रमब्रुवन्— मघवन्नेतद्विजानीहि किमेतद्यक्षमिति। तथेति तदभ्यद्रवत्तस्मात्तिरोदधे। स तस्मिन्नेवाऽऽकाशे। स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्। तां होवाच— किमेतद्यक्षमिति॥**

अथ इन्द्रमब्रुवन्— मघवन्नेतद्विजानीहीत्यादि पूर्ववत्। इन्द्रः परमेश्वरो मघवा बलवत्त्वात् तथेति तदभ्यद्रवत्। तस्मादिन्द्रादात्मसमीपं गतात् तद्ब्रह्म तिरोदधे तिरोभूतं इन्द्रस्येन्द्रत्वाभिमानोऽतितरां निराकर्तव्य इति। अतः संवादमात्रमपि नादाद्ब्रह्मेन्द्राय। तद्यक्षं यस्मिन्नाकाशे आकाशप्रदेशे आत्मानं दर्शयित्वा तिरोभूतं, इन्द्रश्च ब्रह्मणस्तिरोधानकाले यस्मिन्नाकाशे आसीत्, स इन्द्रस्तस्मिन्नेवाऽऽकाशे तस्थौ। किं तद्यक्षमिति ध्यायन्न निववृते अग्न्यादिवत्। तस्येन्द्रस्य यक्षे भक्तिं बुद्ध्वा विद्या उमारूपिणी प्रादुरभूत्स्त्रीरूपा। स इन्द्रस्तामुमां बहुशोभमानां सर्वेषां हि शोभमानानां शोभनतमां विद्याम्। तदा बहुशोभमानेति विशेषणमुपपन्नं भवति। हैमवतीं हेमकृताभरणवतीमिव, बहुशोभमानामित्यर्थः। अथवा, उमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेनेश्वरेण सह वर्तते इति ज्ञातुं समर्थेति कृत्वा तामुपजगाम। इन्द्रस्तां ह उमां किल उवाच पप्रच्छ— ब्रूहि किमेतद्दर्शयित्वा तिरोभूतं यक्षमिति।

शंकर.

इन्द्रस्य आत्मज्ञानेन विजयः सर्वाधिपत्यं च

**[1]सा ब्रह्मेति होवाच। ब्रह्मणो वा एतद्विजये महीयध्वमिति। ततो हैव विदांचकार ब्रह्मेति॥**

सा ब्रह्मेति होवाच। ह किल। ब्रह्मणः ईश्वरस्यैव विजये, ईश्वरेणैव जिता असुराः। यूयं तत्र निमित्तमात्रम्। तस्यैव विजये यूयं महीयध्वं महिमानं प्राप्नुथ। एतदिति क्रियाविशेषणार्थम्। मिथ्याभिमानस्तु युष्माकमयं अस्माकमेवायं विजयोऽस्माकमेवायं महिमेति। ततः तस्मादुमावाक्यात् हैव विदांचकार ब्रह्मेतीन्द्रः। अवधारणात्ततो हैवेति, न स्वातन्त्र्येण।

शंकर.

**तस्माद्वा एते देवा अतितरामिवान्यान्देवान्। यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुः। ते ह्येनत्प्रथमो विदांचकार ब्रह्मेति॥**

यस्मादग्निवाय्विन्द्रा एते देवाः ब्रह्मणः संवाददर्शनादिना सामीप्यमुपगताः, तस्मादैश्वर्यगुणैरतितरामिव शक्तिगुणादिमहाभाग्यैरन्यान्देवानतितरां अतिशयेन शेरत इवैते देवाः। इवशब्दोऽनर्थकः अवधारणार्थो वा। यदग्निर्वायुरिन्द्रस्ते हि देवा यस्मादेनद्ब्रह्म नेदिष्ठमन्तिकतमं प्रियतमं पस्पृशुः स्पृष्टवन्तः यथोक्तैर्ब्रह्मणः संवादादिप्रकारैः। ते हि यस्माच्च हेतोरेनद्ब्रह्म प्रथमः प्रथमाः

---

(१) केउ. ४।१-३.

प्रधानाः सन्त इत्येतत्, विदांचकार विदांचक्रुरित्येतत्, ब्रह्मेति। शंकर.

**तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान्। स ह्येनन्नेदिष्ठं पस्पर्श। स ह्येनत्प्रथमो विदांचकार ब्रह्मेति॥**

यस्मादग्निवायू अपीन्द्रवाक्यादेव विदांचक्रतुः, इन्द्रेण ह्युमावाक्यात्प्रथमं श्रुतं ब्रह्म, इत्यतस्तस्माद्वा इन्द्रोऽतितरां अतिशयेन शेत इवान्यान्देवान्। स ह्येनन्नेदिष्ठं पस्पर्श यस्मात्, स ह्येनत्प्रथमो विदांचकार ब्रह्मेत्युक्तार्थं वाक्यम्। शंकर.

---

## मानवानां युद्धम्

### वेदाः

शूराणां युद्धम्, तेषां सहायाः इन्द्रो ब्रह्मणस्पतिः मरुतः अन्ये वा अग्न्यादयो देवाः

[1]**एन्द्र सानसिं रयिं सजित्वानं सदासहम्।**
**वर्षिष्ठमूतये भर॥**

हे इन्द्र, ऊतये अस्मद्रक्षार्थं रयिं धनं आ भर आहर। कीदृशं रयिम्? सानसिं संभजनीयं सजित्वानं समानशत्रुजयशीलम्। धनेन हि शूरान् भृत्यान् संपाद्य शत्रवो जीयन्ते। सदासहं सर्वदा शत्रूणामभिभवहेतुं वर्षिष्ठं अतिशयेन वृद्धं, प्रभूतमित्यर्थः। सजित्वानं, समानान् अरीन् जेतुं शीलमस्य। ऋसा.

[2]**नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै।**
**त्वोतासो न्यर्वता॥**

येन धनेन संपादितानां भटानां नि मुष्टिहत्यया नितरां मुष्टिप्रहारेण वृत्रा शत्रून् नि रुणधामहै निरुद्धान् करवाम, तादृशं धनमाहरेत्यर्थः। त्वोतासः त्वया रक्षिता वयं अर्वता अस्मदीयेनाश्वेन नि रुणधामहै इत्यनुषङ्गः। पदातियुद्धेनाश्वयुद्धेन च शत्रून् विनाशयाम इत्यर्थः। त्वया ऊताः रक्षिताः त्वोतासः। अर्वति गच्छति इति अर्वा। ऋसा.

**इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि।**
**जयेम सं युधि स्पृधः॥**

हे इन्द्र, त्वोतासः त्वया पालिताः वयं घना घनं शत्रुप्रहरणायात्यन्तदृढं वज्रं आयुधं आ ददीमहि स्वीकुर्मः। तेन च वज्रेण युधि युद्धे स्पृधः स्पर्धमानान् शत्रून् सं जयेम सम्यक् जयेम। ऋसा.

**वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम्।**
**सासह्याम पृतन्यतः॥**

वयं कर्मानुष्ठातारः शूरेभिः शौर्ययुक्तैः अस्तृभिः आयुधानां प्रक्षेप्तृभिर्भटैः, संयुज्येमहीति शेषः। हे इन्द्र, तादृशा भटसहिता वयं युजा सहायभूतेन त्वया पृतन्यतः सेनामिच्छतः शत्रून् सासह्याम अतिशयेनाभिभवेम। ऋसा.

[1]**महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे।**
**द्यौर्न प्रथिना शवः॥**

अयं इन्द्रः महान् शरीरेण प्रौढः परश्च गुणैरुत्कृष्टोऽपि। नु किंच वज्रिणे वज्रयुक्तायेन्द्राय महित्वं पूर्वोक्तं द्विविधमाधिक्यं सर्वदा अस्तु। स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतत्। किंच, द्यौर्न द्युलोक इव शवः बलं इन्द्रस्य सेनारूपं प्रथिना प्रथिम्ना पृथुत्वेन युज्यतामिति शेषः। यथा द्युलोकः प्रभूतः एवमस्य सेना प्रभूता। नुशब्दो यद्यपि क्षिप्रनामसु 'नु मक्षु' (निघण्टुः २।१५।१) इति पठितः, तथाप्यत्र तस्यान्वयाभावात् निपातत्वेन अनेकार्थत्वसंभवाच्च समुच्चयार्थोऽत्र गृहीतः। ऋसा.

---

(१) ऋसं. १।८।१; असं. २०।७०।१७; सासं. १।२।२ (१२९); तैसं. ३।४।११।३-४; कासं. ८।१७ (८०), २६।११ (३२); मैसं. ४।१२।३ (६५); तैब्रा. ३।५।७।३-४; ऐआ. ५।२।५।२; आश्रौ. १।१।६.

(२) ऋसं. १।८।२-४; असं. २०।७०।१८-२०.

(१) ऋसं. १।८।५; असं. २०।७१।१; सासं. १।२।६ (१६६) परश्च नु (पुरश्च नो).

[1]ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो ।
समन्येषु ब्रवावहै ॥

हे शतक्रतो शतसंख्याककर्मोपेत, अस्मिन् प्रसक्ते वाजे संग्रामे नः अस्माकं ऊतये रक्षणाय ऊर्ध्वः उन्नतः उत्सुकः तिष्ठ भव । त्वं च अहं च मिलित्वा अन्येषु कार्यान्तरेषु सं ब्रवावहै सम्यक् विचारयावः । ऋसा.

[2]योगेयोगे तवस्तरं वाजेवाजे हवामहे ।
सखाय इन्द्रमूतये ॥

योगेयोगे प्रवेशेप्रवेशे तत्तत्कर्मोपक्रमे वाजेवाजे कर्मविघातिनि तस्मिंस्तस्मिन् संग्रामे तवस्तरं अतिशयेन बलिनं इन्द्रं उतये रक्षार्थे सखायः सखिवत् प्रिया वयं हवामहे आह्वयामः । ऋसा.

[3]उप क्षत्रं पृञ्चीत हन्ति राजभि-
र्भये चित्सुक्षितिं दधे ।
नास्य वर्ता न तरुता महाधने
नार्भे अस्ति वज्रिणः ॥

ब्रह्मणस्पतिर्देवः क्षत्रं बलं उप पृञ्चीत स्वात्मनि संपृक्तं कुर्यात् । ततः राजभिः वरुणादिभिः सह हन्ति शत्रून् मारयति । भये चित् भीतिहेतौ युद्धेऽपि सुक्षितिं दधे सुष्ठु निवासस्थैर्यं धारयति न तु पलायते । वज्रिणः वज्राद्यायुधवतः अस्य ब्रह्मणस्पतेः महाधने प्रभूतधननिमित्ते युद्धे वर्ता प्रवर्तयिता अन्यः कोऽपि न अस्ति, स्वयमेव प्रवर्तते इत्यर्थः । महाधने इति संग्रामनाम, 'महाधने, समीके' ( निघण्टुः २।१७।४१,११) इति तन्नामसु पाठात् । तथा तरुता तरणस्य उल्लङ्घनस्य कर्ता अन्यः कोऽपि न अस्ति । तथैव अर्भे स्वल्पे युद्धेऽप्यन्यः प्रवर्तयिता न अस्ति । सुक्षितिम् । शोभना क्षितिः सुक्षितिः । महाधने । महच्च तद्धनं च महाधनम् । तेन शब्देन तद्धेतुभूतः संग्रामो लक्ष्यते । ऋसा.

(१) ऋसं. १।३०।६ ; असं. २०।४५।३ ; सासं. २।९६।३ (१६०१).

(२) ऋसं. १।३०।७ ; असं. १९।२४।७, २०।२६।१ ; सासं. १।२।५ (१६३), २।२।३ (७४३) ; तैसं. ४।१।२।१, ५।१।२।१-२ ; कासं. १६॥१ (७), १९।२ (३) ; मैसं. २।७।२ (१४), ३।१।३ (३); शुसं. ११।१४ ; ताब्रा. ९।२।२० ; शब्रा. ६।३।२।४; आश्रौ. ११।६।४ ; माश्रौ. ६।१।१।१० ; हिगृ. १९।१।६७.

(३) ऋसं. १।४०।८.

[1]त्वं ह त्यदिन्द्र सप्त युध्यन्
पुरो वज्रिन्पुरुकुत्साय दर्दः ।
बर्हिर्न यत्सुदासे वृथा व-
र्गंहो राजन्वरिवः पूरवे कः ॥

हे वज्रिन् वज्रवन् इन्द्र, पुरुकुत्साय एतत्संज्ञाय ऋषये युध्यन् तदीयशत्रुभिः सह युद्धं कुर्वाणः त्वं एव त्यत् ताः सप्त पुरः तदीयानि सप्तसंख्यानि नगराणि दर्दः व्यदारयः, अभैत्सीरित्यर्थः । अपि च, सुदासे एतत्संज्ञाय राज्ञे अंहोः एतत्संज्ञस्यासुरस्य संबन्धि यत् धनमस्ति तत् वृथा अनायासेन बर्हिर्न बर्हिरिव वर्क् अवृणक् अच्छिनः इत्यर्थः । तदनन्तरं पूरवे त्वां हविषा पूरयते तस्मै सुदासे हे राजन् स्वामिन् इन्द्र, वरिवः धनं कः अकार्षीः । ऋसा.

[2]यः स्त्रीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु ।
अरक्षद्दाशुषे गयम् ॥

पूर्व्यः चिरंतनः यः अग्निः स्त्रीहितीषु वधकारिणीषु कृष्टिषु शत्रुभूतासु प्रजासु संजग्मानासु संगतासु सतीषु दाशुषे हवींषि दत्तवते यजमानाय गयं धनं अरक्षत् रक्षति, तस्मै मन्त्रं वोचेम इति पूर्वेण संबन्धः । ऋसा.

[3]उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽजनि ।
धनंजयो रणेरणे ॥

अग्निः उत् अजनि अरण्योः सकाशादुत्पन्नः । उत अनन्तरं जन्तवः जाताः सर्वे ऋत्विजः ब्रुवन्तु तमग्निं

(१) ऋसं. १।६३।७.

(२) ऋसं. १।७४।२ ; सासं. २।१२।१ (१३८०).

(३) ऋसं. १।७४।३ ; सासं. २।१२।१ (१३८२) ; तैसं. ३।५।११।४ ; कासं. ८।१६ (५६), १५।१२ (५७) ; मैसं. ४।१०।३ (६५) जन्तव (जन्तवा) ; ऐब्रा. ३।५ ; शाब्रा. ८।१ ; आश्रौ. १।२।१६,१८ ; शाश्रौ. ३।१३।१७.

स्तुवन्तुं । कीदृशोऽग्निः ? वृत्रहा वृत्राणामावरकाणां शत्रूणां हन्ता रणेरणे सर्वेषु संग्रामेषु धनंजयः शत्रुधनानां जेता । ऋसा.

[१]त्वया वयं मघवन्निन्द्र शत्रू-
नभि ष्याम महतो मन्यमानान् ।
त्वं त्राता त्वमु नो वृधे भू-
र्विद्यामेषं वृजनं जीरदानुम् ॥

हे मघवन् धनवन् इन्द्र, त्वया सहायेन वयं यजमानाः महतो मन्यमानान् अतिबलानवध्यान् मन्यमानान् शत्रूनभि ष्याम अभिभवितारो भवेम । हे इन्द्र, त्वं त्राता त्वमेवास्माकं रक्षकः । अतः त्वमु त्वमेव नः अस्माकं वृधे धनादिवर्धनाय भूः भव । वयं च इषं अन्नं वृजनं बलं जीरदानुं चिरकालजीवनं च विद्याम लभेमहि । ऋसा.

[२]न स जीयते मरुतो न हन्यते
न स्रेधति न व्यथते न रिष्यति ।
नास्य राय उप दस्यन्ति नोतय
ऋषिं वा यं राजानं वा सुषूदथ ॥

हे मरुतः, यूयं यं ऋषिं मन्त्रद्रष्टारं ब्राह्मणं राजानं वा सुषूदथ क्षारयथ प्रेरयथ सत्कर्मसु सः ऋषिः राजा वा न जीयते अन्यैर्न पराभाव्यते । 'जि जये' । 'ज्या वयोहानौ' इत्यस्य वा रूपम् । हे मरुतः, न हन्यते न हिंस्यते अत्यर्थं प्राणैर्न वियुज्यते । न स्रेधति न क्षीयते । न व्यथते न पीड्यते । न रिष्यति न हिंस्यते । अत्र हिंसा बाधमात्रम् । अस्य रायः धनानि न उप दस्यन्ति नोपक्षीयन्ते । तथा नोतयः रक्षा अप्युप दस्यन्ति । ऋसा.

[३]उत न एषु नृषु श्रवो धुः
प्र राये यन्तु शर्धन्तो अर्यः ॥

अयं द्वृचो दैवो मारुतो वा । उत अपि च, नः अस्मदीयेषु एषु नृषु पुरुषेषु श्रवः अन्नं धुः देवा मरुतो वा धारयन्तु । राये धनार्थं शर्धन्तः उत्सहमानाः प्रीयमाणा वा अर्यः अरयः प्र यन्तु प्रगच्छन्तु, म्रियन्तामित्यर्थः । ऋसा.

तपन्ति शत्रुं स्व१र्ण भूमा
महासेनासो अमेभिरेषाम् ॥

महासेनासः महासेना राजानः एषां मरुतां देवानां वा अमेभिः बलैः भूमा भुवनानि स्वर्ण आदित्य इव शत्रुं स्वकीयं तपन्ति बाधन्ते । महान्तोऽपि राजानः यैः बलैः शत्रून् बाधन्ते तानि बलानि देवानामेवेत्यर्थः । ऋसा.

[१]प्रिया वो नाम हुवे तुराणा-
मा यत्तृपन्मरुतो वावशानाः ॥

हे मरुतः, तुराणां शत्रूणां हिंसकानां त्वरावतां वा वः युष्माकं प्रिया प्रियेण नाम नाम्ना आ हुवे आह्वयामि । यत् येनानेन वावशानाः कामयमानाः सन्तः तृपत् तृप्तिं गच्छन्ति । ऋसा.

[२]स्वायुधास इष्मिणः सुनिष्का
उत स्वयं तन्व१ः शुम्भमानाः ॥

स्वायुधासः स्वायुधाः शोभनास्त्राः इष्मिणः गन्तारः सुनिष्काः शोभनालंकाराः उत अपि च तन्वः स्वकीयानि शरीराणि शुम्भमानाः स्वयमेव शोभयन्तः मरुतः एवम्भूता भवन्तीत्यर्थः । ऋसा.

* [३]युवां नरा पश्यमानास आप्यं
प्राचा गव्यन्तः पृथुपर्शवो ययुः ।
दासा च वृत्रा हतमार्याणि च
सुदासमिन्द्रावरुणाऽवसाऽवतम् ॥

(१) ऋसं. १।१७८।५.
(२) ऋसं. ५।५४।७.
(३) ऋसं. ७।३४।१८-१९.

* अस्या ऋचः व्याख्यानं 'जनाः, तत्संबन्धीनि कर्माणि च' इत्यस्मिन् प्रकरणे (राका. पृ. ३८०) द्रष्टव्यम् ।

(१) ऋसं. ७।५६।१० ; तैसं. २।१।११।१-२ ; कासं. ८।१७ (७२) ; मैसं. ४।११।२ (७५) शानाः (शानः).
(२) ऋसं. ७।५६।११.
(३) ऋसं. ७।८३।१-३.

**यत्रा नरः समयन्ते कृतध्वजो**
**यस्मिन्नाजा भवति किं चन प्रियम्।**
**यत्रा भयन्ते भुवना स्वर्दृश-**
**स्तत्रा न इन्द्रावरुणाऽधि वोचतम्॥**

यत्र यस्मिन् संग्रामे नरः मनुष्याः कृतध्वजः उच्छ्रितध्वजाः समयन्ते युद्धार्थं संगच्छन्ते। यस्मिन् च आजा आजौ युद्धे। चन इति निपातद्वयसमुदायो विभज्य योजनीयः। किंच किमपि प्रियं अनुकूलं न भवति, अपि तु सर्वं दुष्करं भवति। यत्र च युद्धे भुवना भुवनानि भूतजातानि स्वर्दृशः शरीरपातादूर्ध्वं स्वर्गस्य द्रष्टारो वीराश्च भयन्ते बिभ्यति तत्र तादृशे संग्रामे हे इन्द्रावरुणौ, नः अस्मान् अधि वोचतं अस्मत्पक्षपातवचनौ भवतम्। ऋसा.

**सं भूम्या अन्ता ध्वसिरा अदृक्षते-**
**न्द्रावरुणा दिविघोष आरुहत्।**
**अस्थुर्जनानामुप मामरातयो-**
**ऽर्वागवसा हवनश्रुता गतम्॥**

हे इन्द्रावरुणौ, भूम्याः अन्ताः पर्यन्ताः ध्वसिराः सैनिकैर्ध्वस्ताः सं अदृक्षत संदृश्यन्ते। तथा दिवि द्युलोके घोषः सैनिकानां शब्दश्च आरुहत् आरूढोऽभूत्। जनानां अस्मदीयानां भटानां अरातयः शत्रवः मां उप अस्थुः उपस्थिताः। एवं प्रवर्तमानेऽस्मिन् युद्धे हे हवनश्रुता आह्वानशीलाविन्द्रावरुणौ, अर्वाक् अस्मदभिमुखं अवसा रक्षणेन सह आ गतं आगच्छतम्। ऋसा.

**[१]ममाग्ने वर्चो विहवेष्वस्तु**
**वयं त्वेन्धानास्तन्वं पुषेम।**
**मह्यं नमन्तां प्रदिशश्चतस्र-**
**स्त्वयाऽध्यक्षेण पृतना जयेम॥**

हे अग्ने, विविधमाहूयन्ते येषु शूरा इति विहवाः संग्रामाः। यद्वा, विविधं यागार्थं देवा आहूयन्ते एष्विति विहवाः यज्ञाः। संग्रामेषु यज्ञेषु वा वर्चः दीप्तिः त्वदनुग्रहात् मम अस्तु भवतु। वयं च त्वा त्वां इन्धानाः समिद्भिर्दीपयन्तः तन्वं तव शरीरं पुषेम हविर्भिर्वर्धयेम। अपि च, मह्यं मदर्थं चतस्रः प्रदिशः प्रकृष्टा दिशः, तद्वासिनो जना इत्यर्थः। नमन्तां स्वत एव प्रह्वीभवन्तु। त्वया अस्माभिर्हविर्भिः प्रवर्धितेन अध्यक्षेण ईश्वरेण सता पृतनाः शत्रुसेनाः जयेम अभिभवेम। ऋसा.

**[१]मम देवा विहवे सन्तु सर्व**
**इन्द्रवन्तो मरुतो विष्णुरग्निः।**
**ममान्तरिक्षमुरुलोकमस्तु**
**मह्यं वातः पवतां कामे अस्मिन्॥**

सर्वे देवाः विहवे संग्रामे यज्ञे वा मम सन्तु ममैव साधका भवन्तु। के पुनस्ते? इन्द्रवन्तः इन्द्रेण युक्ताः मरुतो विष्णुरग्निः च। तथा अन्तरिक्षं मम उरुलोकं विस्तीर्णप्रकाशकं अस्तु। लोकः आलोकः प्रकाशः। उरुर्लोको यस्य। अपि च, अस्मिन् कामे कामयितव्ये फले निमित्तभूते सति वातः वायुः पवतां अनुगुणं प्रवातु। ऋसा.

**[२]प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत।**
**अभीके चिदु लोककृत्संगे समत्सु वृत्रहा-**
**ऽस्माकं बोधि चोदिता**
**नभन्तामन्यकेषां ज्याका अधि धन्वसु॥**

अस्मै इन्द्राय। षष्ठ्यर्थे चतुर्थी। अस्येन्द्रस्य पुरोरथं रथस्य पुरः पुरतः। 'पुरोऽव्ययम्' (पासू. १।४।६७) इति गतित्वात् गतिसमासः। रथस्याग्रतो वर्तमानं

---

(१) ऋसं. १०।१२८।१; असं. ५।३।१; तैसं. ४।७।१४।१ तन्वं (तनुवं); कासं. ४।१४ (८९), ३१।१५ (४७), ४०।१० (७०); मैसं. १।४।१ (१), ५ (३४); आपश्रौ. १।१।४, ४।८।७, ६।१६।७; काश्रौ. २।१।३.

(१) ऋसं. १०।१२८।२; असं. ५।३।३ कामे अस्मिन् (कामायास्मै); तैसं. ४।७।१४।१ इन्द्र (इन्द्रा) रुलोक (रु गोप); कासं. ४०।१० (७१) पवतां (पवते).

(२) ऋसं. १०।१३३।१; असं. २०।९५।२; सासं. २।२०।४ (१८०१); तैसं. १।७।१३।५; मैसं. ४।१२।४ (१०४); ऐब्रा. १६।३; तैब्रा. २।५।८।१-२; ऐआ. ५।१।१।७; आश्रौ. १।६।२; शाश्रौ. ९।६।१२.

शूषं बलं सु प्रो अर्चत हे स्तोतारः, सुष्ठु प्रपूजयत । प्र उ इति निपातसमुदायः प्रो इति । इन्द्रो विशेष्यते— समत्सु । समानं माद्यन्त्यत्रेति समदः संग्रामाः । समत्सु संग्रामेषु संगे संगमनीये शत्रुबले । अभीके चित् अभ्यर्णेऽपि निकटं प्राप्तेऽपि केशाकेश्यवस्थायामपि लोककृत् स्थितिकृत् न पलायिता स्थित्वा च वृत्रहा वृत्राणामावरकाणां हन्ता एवंविधः स इन्द्रः अस्माकं स्तोतॄणां चोदिता धनानां प्रेरिता सन् बोधि अस्माभिः कृतानि परिचरणानि बुध्यताम् । अपि च, अन्यकेषां कुत्सितानामन्येषां शत्रूणां अधि धन्वसु धनुःष्वधिरोपिता ज्याकाः कुत्सिता ज्याः नभन्तां हिंस्यन्तां नश्यन्तु । ऋसा.

[१]त्वं सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।
अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यं
तं त्वा परि ष्वजामहे
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥

हे इन्द्र, त्वं सिन्धून् स्यन्दनशीलान् जलपूरान् अधराचः अधरं अधोमुखं अञ्चतः गन्तॄन् अवासृजः मेघान्निरगमयः । यतस्त्वं अहिं अन्तरिक्षे गतं मेघं अहन् हतवानसि । यद्वा, अहिं आगत्य हन्तारं सर्वस्य जगत आवरकं वृत्रमसुरमहन् हतवानसि । अतो हे इन्द्र, त्वं अशत्रुः शत्रुरहितः जज्ञिषे जायसे । तथा विश्वं सर्वं वार्यं वरणीयं संभजनीयं धनं पुष्यसि वर्धयसि । तं तादृशं त्वा त्वां परि ष्वजामहे हविर्भिः स्तुतिभिश्चाऽऽलिङ्गनं कुर्मः, वशीकुर्म इत्यर्थः । गतमन्यत् । ऋसा.

[२]वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
अस्ताऽसि शत्रवे वधं यो न इन्द्र जिघांसति
या ते रातिर्ददिर्वसु
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥

विश्वाः सर्वाः अरातयः अदात्र्यः अर्यः अभिगन्त्र्यः नः अस्माकं शत्रुभूताः प्रजाः सु सुष्ठु वि नशन्त विनश्यन्तु । हे इन्द्र, त्वदर्थं धियः कर्माणि स्तुतयो वा प्रवर्तन्ताम् । हे इन्द्र, यः नः अस्मान् जिघांसति हन्तुमिच्छति तस्मै शत्रवे वधं हननसाधनमायुधं अस्ताऽसि क्षेप्ता भवसि । ते तव या रातिः धनप्रदानहेतुर्हस्तः सा रातिः वसु धनं ददिः अस्मभ्यं दाता भवतु । सिद्धमन्यत् । ऋसा.

[१]यो न इन्द्राभितो जनो वृकायुरादिदेशति ।
अधस्पदं तमीं कृधि विबाधो असि सासहिर्-
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥

हे इन्द्र, यः जनः वृकायुः । वृकः हिंसकोऽरण्यश्वा स्तेनो वा । स इवाऽऽचरन् नः अस्मान् अभितः सर्वतः आदिदेशति अभिलक्ष्य आयुधान्यतिसृजति । तमीं तमिमं जनं अधस्पदं पादस्याधस्ताद्वर्तमानं कृधि कुरु । यतस्त्वं विबाधः विशेषेण बाधिता शत्रूणां सासहिः अभिभविता च असि । सिद्धः शेषः । ऋसा.

[२]यो न इन्द्राभिदासति सनाभिर्यश्च निष्ट्यः ।
अव तस्य बलं तिर महीव द्यौरध त्मना
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥

हे इन्द्र, यः सनाभिः समानजन्मा शत्रुः नः अस्मान् अभिदासति उपक्षयति यश्च निष्ट्यः निकृष्टजन्मा अस्मानुपक्षयति । अध अनन्तरमेव महीव द्यौः महती द्यौरिव विस्तृतं तस्य शत्रोः बलं त्मना आत्मना स्वयमेव अव तिर जहि । अवतिरतिर्वधकर्मा । गतमन्यत् । ऋसा.

वयमिन्द्र त्वायवः सखित्वमा रभामहे ।
ऋतस्य नः पथा नयाति विश्वानि दुरिता
नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥

हे इन्द्र, त्वायवः त्वामात्मनं इच्छन्तः वयं सखित्वं सखिकर्म यज्ञात्मकं आ रभामहे उपक्रमामहे । ऋतस्य सत्यस्य यज्ञस्य पथा मार्गेण विश्वानि सर्वाणि दुरिता

(१) ऋसं. १०।१३३।२ ; असं. २०।९५।३ ; सासं. २।२०।४ (१८०२).

(२) ऋसं. १०।१३३।३ ; असं. २०।९५।४ ; सासं. २।२०।४ (१८०३).

(१) ऋसं. १०।१३३।४ ; असं. ६।६।१ (यो नः सोमाभिदासति सनाभिर्यश्च निष्ट्यः । अप तस्य बलं तिर महीव द्यौर्वधत्मना ॥) शेषं नास्ति ।

(२) ऋसं. १०।१३३।५–६.

दुरितानि दुर्गमनानि पापानि तत्फलानि च नः अस्मान् अति नय अतिपारय । गतमन्यत् । ऋसा.

[1]**ऋषभं मा समानानां सपत्नानां विषासहिम् ।**
**हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥**

हे सपत्ननाशनाभिमानिन्निन्द्र, मा मां समानानां सदृशानां अस्मत्कुलीनानां मध्ये ऋषभं ऋषभवत् प्रशस्तं कृधि कुरु । तथा सपत्नानां शत्रूणां विषासहिं विशेषेणाभिभवितारं कुरु । येऽस्मत्कुल एव जाता अस्माकमेवानिष्टमाचरन्ति ते सपत्नाः । अपि च, शत्रूणां अन्येषामपि शातयितॄणां वैरिणां हन्तारं हिंसितारं कृधि कुरु । तथा विराजं विशेषेण राजमानं गोपतिं गोस्वामिनं च मां कुरु । न केवलमेकस्या एव गोः पतिं अपि तु सर्वासामित्याह– गवामिति । ऋसा.

**अहमस्मि सपत्नहेन्द्रइवारिष्टो अक्षतः ।**
**अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ॥**

अहं सपत्नहा सपत्नानां शत्रूणां हन्ता अस्मि भवामि । इन्द्रइव इन्द्रो यथा केनाप्यहिंसितो भवति तथाऽहमपि अरिष्टः अहिंसितः अक्षतः अव्रणश्च भवामि । इमे दृश्यमानाः सर्वे सपत्नाः मे मम पदोः पादयोः अधः अधस्तात् अभिष्ठिताः आक्रान्ता भवन्तु । ऋसा.

**अत्रैव वोऽपि नह्याम्युभे आर्त्नीइव ज्यया ।**
**वाचस्पते नि षेधेमान्यथा मदधरं वदान् ॥**

हे सपत्नाः, यत्र देशे यूयं निवसथ अत्रैव अस्मिन्नेव देशे वः युष्मान् अपि नह्यामि अपिनद्धान् पाशैर्बद्धान् करोमि ज्यया मौर्व्या उभे आर्त्नीइव, यथा द्वे धनुषः कोटी दृढं वध्येते तथेत्यर्थः । हे वाचस्पते वाचः शब्दस्य पालयितर्देव, इमान् सपत्नान् नि षेध प्रतिषेध । यथा येन प्रकारेण मत् मत्तः अधरं निकृष्टतरं वदान् वदन्ति तथा निरुद्धवाचः कुरु इत्यर्थः । ऋसा.

***अभिभूरहमागमं विश्वकर्मेण धाम्ना ।**
**आ वश्चित्तमा वो व्रतमा वोऽहं समितिं ददे ॥**

**योगक्षेमं व आदायाहं भूयासमुत्तम**
**आ वो मूर्धानमक्रमीम् ।**
**अधस्पदान्म उद्वदत मण्डूकाइवोदका-**
**न्मण्डूका उदकादिव ॥**

हे सपत्नाः, वः युष्माकं योगक्षेमम् । अप्राप्तस्य धनस्य प्राप्तिः योगः । प्राप्तस्य रक्षणं क्षेमः । तदुभयं आदाय युष्मत्तो गृहीत्वा अहं उत्तमः श्रेष्ठः भूयासम् । ततः वः युष्माकं मूर्धानं शिरः आ अक्रमीं आक्रमिषं पादेनाधितिष्ठामि । अनन्तरं मे मम अधस्पदात् पादस्याधस्तात् वर्तमानाः यूयं उद्वदत उच्चैराक्रोशत । उदकात् वृष्टाज्जलात् अधःप्रदेशे वर्तमाना मण्डूका इव, ते यथा भृशमाक्रोशन्ति तथोद्वदतेत्यर्थः । 'मण्डूका उदकादिव' इति पुनरुक्तिरादरार्था । ऋसा.

मन्युर्देवः सेनानीः युद्धे शौर्यप्रेरकः

[1]**यस्ते मन्योऽविधद्वज्र सायक**
**सह ओजः पुष्यति विश्वमानुषक् ।**
**साह्याम दासमार्यं त्वया युजा**
**सहस्कृतेन सहसा सहस्वता ॥**

हे मन्यो क्रोधाभिमानिन् देव । 'मन्युर्मन्यतेर्दीप्तिकर्मणः क्रोधकर्मणो वधकर्मणो वा' ( नि. १०।२९ ) इति निरुक्तम् । यः यजमानः ते तुभ्यं अविधत् परिचरति, हे वज्र वज्रवत् सारभूत, सायक सायकवच्छत्रूणां हिंसक, स मनुष्यः सहः बलं बाह्यं ओजः शारीरं बलं च आनुषक् अनुषक्तं पुष्यति त्वदनुग्रहात् संग्रामे । यस्मादेवं तस्मात् वयं दासं उपक्षयकर्तारं आर्यं असत्तोऽधिकं चोभयविधं शत्रुं साह्याम अभिभवेम । केन साधनेनेति तदुच्यते– त्वया युजा त्वया सहायेन । सहायो विशेष्यते– सहस्कृतेन बलोत्पादितेन सहसा सहमानेन परान् सहस्वता बलवता, ईदृशेन त्वया सहायेनेत्यर्थः । ऋसा.

---

* अस्या ऋचः व्याख्यानं 'सभा समितिश्च' इत्यस्मिन् प्रकरणे ( राका. पृ ४६० ) द्रष्टव्यम् ।

( १ ) ऋसं. १०।१६६।१–५.

( १ ) ऋसं. १०।८३।१ ; असं. ४।३२।१ युजा + ( वयं ).

[1]मन्युरिन्द्रो मन्युरेवाऽऽस देवो
मन्युर्होता वरुणो जातवेदाः ।
मन्युं विश ईळते मानुषीर्याः
पाहि नो मन्यो तपसा सजोषाः ॥

अयं मन्युरिन्द्रः मन्युरेव देवः सर्वोऽपि मन्युरेव आस अभवत् । मन्युः एव होता होमनिष्पादकोऽग्निः । तथा मन्युः वरुणोऽपि जातवेदाः जातप्रज्ञो वरुणश्च, सर्वेष्वपि तेजस्विषु मन्युसद्भावात् । याः मानुषीः मनुषोऽपत्यभूताः विशः प्रजाः सन्ति ताः मन्युं एव देवं ईळते स्तुवन्ति । हे मन्यो, तपसा एतन्नामकेनास्मत्पित्रा सजोषाः समानप्रीतिस्त्वं ( नः ) पाहि रक्ष । ऋसा.

[2]अभीहि मन्यो तवसस्तवीयान्
तपसा युजा वि जहि शत्रून् ।
अमित्रहा वृत्रहा दस्युहा च
विश्वा वसून्या भरा त्वं नः ॥

हे मन्यो, त्वं अभीहि अभिगच्छ अस्मद्यज्ञम् । कीदृशस्त्वम् ? तवसः बलवतोऽपि तवीयान् अत्यन्तं बलवान् । स त्वं तपसा अस्मत्पित्रा युजा सहायेन शत्रून् वि जहि । किंच, अमित्रहा अमित्राणां हन्ता । अमित्रः अस्निग्धः । तथा वृत्रहा आवरकाणां शत्रूणां हन्ता । तथा दस्युहा च । दस्युः उपक्षपणकारी शत्रुः । तादृश मन्युदेव, त्वं विश्वा सर्वाणि वसूनि धनानि नः अस्मभ्यं आ भर आहर । ऋसा.

[3]त्वं हि मन्यो अभिभूत्योजाः
स्वयंभूर्भामो अभिमातिषाहः ।
विश्वचर्षणिः सहुरिः सहावा-
नस्मास्वोजः पृतनासु धेहि ॥

हे मन्यो, त्वं अभिभूत्योजाः परेषामभिभावुकबलः स्वयंभूः स्वयमेवोत्पन्नः भामः क्रुद्धः अभिमातिषाहः । अभितो हिंसन्तीत्यभिमातयः शत्रवः । तेषामभिभविता । विश्वचर्षणिः सर्वेषां द्रष्टा सहुरिः सहनशीलः सहावान् सहनवान् ईदृशस्त्वं अस्मासु पृतनासु संग्रामेषु ओजः बलं धेहि देहि । ऋसा.

[1]अभागः सन्नप परेतो अस्मि
तव क्रत्वा तविषस्य प्रचेतः ।
तं त्वा मन्यो अक्रतुर्जिहीळा-
हं स्वा तनूर्बलदेयाय मेहि ॥

हे प्रचेतः प्रकृष्टज्ञान मन्यो, तविषस्य महतः तव क्रत्वा कर्मणा अभागः भागरहितः सन् , त्वां यज्ञेऽयाजकः सन्नित्यर्थः । त्वदनुकूलरहितोऽहं अप परेतोऽस्मि युद्धे शत्रुभिरभिभूतः सन् दूरं गतोऽस्मि । तं तादृशं भागरहितं त्वा त्वां हे मन्यो, अक्रतुः कर्मरहितः अहं जिहीळ क्रुद्धं कृतवानित्यर्थः । यद्वा, अहमेव त्वत्सहायमेव क्रोधितवान् । अथेदानीं स्वा तनूः मम शरीरभूतः त्वं बलदेयाय बलदानाय मेहि मां प्राप्नुहि ।

ऋसा.

[2]अयं ते अस्म्युप मेह्यर्वाङ्
प्रतीचीनः सहुरे विश्वधायः ।
मन्यो वज्रिन्नभि मामा ववृत्स्व
हनाव दस्यूँरुत बोध्यापेः ॥

हे सहुरे शत्रूणां सहनशील, विश्वधायः विश्वस्य धर्तर्मन्यो, अयं जनः अहं ते तव अस्मि कर्मकृत् । यत एवमतः प्रतीचीनः प्रतिगन्ता अर्वाङ् अस्मदभिमुखं मा मां उप इहि उपागच्छ । हे मन्यो वज्रिन्, मां अभि आ ववृत्स्व अभ्यावर्तस्व । किमर्थमभ्यागमनमिति चेदुच्यते— हनाव आवां दस्यून् शत्रून् । उत अपि च, आपेः बन्धुं बोधि बुध्यस्व । ऋसा.

---

( १ ) ऋसं. १०।८३।२ ; असं. ४।३२।२ मन्युं वि ( मन्युर्वि ) ; मैसं. ४।१२।३ ( ७९ ) जात ( विश्व ) र्याः पाहि ( र्या अवा ) ; तैब्रा. २।४।१।११ रिन्द्रो ( र्भगो ) जात ( विश्व ) मानुषीर्याः ( वेवयन्तीः ) सजोषाः ( श्रमेण ).

( २ ) ऋसं. १०।८३।३ ; असं. ४।३२।३.

( ३ ) ऋसं. १०।८३।४ ; असं. ४।३२।४ सहावा (सहीया) ; मैसं. ४।१२।३ ( ८० ) भूर्भामो ( जो भामो ) वानस्मास्वोजः पृतनासु धेहि ( वान्त्स हूयमानो अमृताय गछत् ).

( १ ) ऋसं. १०।८३।५ ; असं. ४।३२।५ देयाय मेहि ( दावा न एहि ).

( २ ) ऋसं. १०।८३।६ ; असं. ४।३२।६ मेह्य ( न एह्य ) धायः ( दावन् ) मामा ( न आ ).

[1]अभि प्रेहि दक्षिणतो भवा मे-
ऽधा वृत्राणि जङ्घनाव भूरि।
जुहोमि ते धरुणं मध्वो अग्र-
मुभा उपांशु प्रथमा पिबाव ॥

हे मन्यो, अभि प्रेहि अभिगच्छ। मम युद्धं गत्वा च मे मम दक्षिणतो भव। अध अथ आवां वृत्राणि शत्रून् भूरि प्रभूतं जङ्घनाव हनाव। ते तुभ्यं अग्रं श्रेष्ठं मध्वः मधु सोमरसं जुहोमि। उभौ त्वं चाहं च उपांशु अप्रकाशं प्रथमा प्रथमौ सन्तौ पिबाव। * ऋसा.

[2]त्वया मन्यो सरथमारुजन्तो
हर्षमाणासो धृषिता मरुत्वः।
तिग्मेषव आयुधा संशिशाना
अभि प्र यन्तु नरो अग्निरूपाः ॥

हे मन्यो हे मरुत्वः, त्वया सरथं समानं एकमेव रथं आरुह्येति शेषः। आरुजन्तः गच्छन्तः हर्षमाणासः हृष्टाः धृषिताः धृष्टाः तिग्मेषवः तीक्ष्णबाणाः आयुधा आयुधानि संशिशानाः सम्यग् निश्यन्तः नरः युद्धस्य नेतारः इन्द्रादयो देवास्त्वदनुचरा वा अग्निरूपाः अग्निवत्तीक्ष्णदाहादिकर्माणः, यद्वा संनद्धाः कवचिनः अभि प्र यन्तु युद्धे सहायार्थम्। अत्र 'त्वया मन्यो सरथमारुह्य रुजन्तः' (नि. १०।३०) इत्यादि निरुक्तमनुसंधेयम्। ऋसा.

[3]अग्निरिव मन्यो त्विषितः सहस्व
सेनानीर्नः सहुरे हूत एधि।
हत्वाय शत्रून्वि भजस्व वेद
ओजो मिमानो वि मृधो नुदस्व ॥

हे मन्यो, अग्निरिव त्विषितः ज्वलितः सहस्व अभिभव शत्रून्। हे सहुरे सहनशील, सेनानीः एधि भव नः अस्माकं संग्रामे हूतः सन्। किंच, हत्वाय हत्वा शत्रून् वि भजस्व प्रयच्छ अस्माकं वेदः धनं शत्रुसंबन्धि। किंच, ओजो मिमानः अस्माकं बलं कुर्वन् मृधः शत्रून् वि नुदस्व, घातयेत्यर्थः। ऋसा.

[1]सहस्व मन्यो अभिमातिमस्मे
रुजन् मृणन् प्रमृणन् प्रेहि शत्रून्।
उग्रं ते पाजो नन्वा रुरुध्रे
वशी वशं नयस एकज त्वम् ॥

हे मन्यो, अस्मे अस्माकं अभिमातिं अभिगन्तारं शत्रुं सहस्व अभिभव। रुजन् हिंसन् मृणन् प्रमृणन् प्रकर्षेण हिंसन् यथा पुनर्न जीवेत्तथा कुर्वन् त्वं शत्रून् प्रति प्रेहि। ते तव पाजः बलं उग्रं उद्गूर्णं के ननु आ रुरुध्रे आरुंधन्ति ? न तथा संभवति। हे एकज, त्वं असहायः वशी त्वं वशं नयसे प्रापयसि शत्रुम्। ऋसा.

[2]एको बहूनामसि मन्यवीळितो
विशंविशं युधये सं शिशाधि।
अकृत्तरुक्त्वया युजा वयं
द्युमन्तं घोषं विजयाय कृण्महे ॥

हे मन्यो, ईळितः स्तुतः त्वं एकः एव असहायः एव बहूनां शत्रूणां असि भवसि पर्याप्तो हन्तुम्। अतः विशंविशं तां तामस्मद्विरोधिनीं प्रजां युधये युद्धाय सं शिशाधि सम्यक् तीक्ष्णीकुरु। किंच, हे अकृत्तरुक् अच्छिन्नदीप्ते, त्वया युजा सहायेन वयं द्युमन्तं दीप्तिमन्तं घोषं सिंहनादवन्तं विजयाय विशिष्टजयार्थं कृण्महे कुर्मः। ऋसा.

---

* अत्र 'धरुणं' इति पदं न व्याख्यातम्।

(१) ऋसं. १०।८३।७ ; असं. ४।३२।७ मेऽधा (नोऽधा) मुभा उ (मुभावु).

(२) ऋसं. १०।८४।१ ; असं. ४।३१।१ द्वितीयपादे (हर्षमाणा हृषितासो मरुत्वन्।) ; तैब्रा. २।४।१।१० धृषिता (धृषता) अभि प्र यन्तु (उपप्रयन्ति) ; नि. १०।३० सो धृषिता (सोऽधृषिता).

(३) ऋसं. १०।८४।२ ; असं. ४।३१।२ ; नि. १।१७.

(१) ऋसं. १०।८४।३ ; असं. ४।३१।३ मस्मे (मस्मै) रुरुध्रे (रुरुध्रे) नयस (नयासा).

(२) ऋसं. १०।८४।४ ; असं. ४।३१।४ मन्यवीळितो (मन्य ईडिता) युधये (युद्धाय) कृण्महे (कृण्मसि).

[1]विजेषकृदिन्द्रइवानवब्रवो३-
ऽस्माकं मन्यो अधिपा भवेह।
प्रियं ते नाम सहुरे गृणीमसि
विद्मा तमुत्सं यत आबभूथ॥

हे मन्यो, इन्द्रइव विजेषकृत् विजयकर्ता। तथा अनवब्रवः अनिन्दितवचनः। 'अनवब्रवोऽनवक्षिप्तवचनः' (नि. ६।२९) इति यास्कः। ईदृशस्त्वं अस्माकं अधिपाः अधिकं पाता रक्षिता भव इह अस्मिन् यज्ञे। हे सहुरे शत्रूणां सहनशील, ते प्रियं नाम स्तोत्रं गृणीमसि गृणीमः स्तुमः। यतः नाम्नः स्तोत्रात् त्वं आबभूथ आभवसि प्रवृद्धो भवसि तमुत्सं बलस्योद्गमयितारं विद्म जानीमः। ऋसा.

[2]आभूत्या सहजा वज्र सायक
सहो बिभर्ष्यभिभूत उत्तरम्।
क्रत्वा नो मन्यो सह मेद्येधि
महाधनस्य पुरुहूत संसृजि॥

हे वज्र वज्रवत्सारभूत, हे सायक शत्रूणामन्तकर, अभिभूते शत्रूणामभिभावुक मन्यो, आभूत्या। आभूतिः अभिभवः। तेन सहजाः सहैवोत्पन्नः त्वं उत्तरं उत्कृष्टतरं सहः बलं बिभर्षि धारयसि। हे मन्यो, क्रत्वा कर्मणा सह नः अस्माकं मेद्येधि स्निग्धो भव। कुत्रेति तदुच्यते— महाधनस्य। संग्रामनामैतत्। संग्रामस्य संसृजि सर्गे। हे पुरुहूत बहुभिराहूत, इति मन्युसंबोधनम्। ऋसा.

[3]संसृष्टं धनमुभयं समाकृत-
मस्मभ्यं दत्तां वरुणश्च मन्युः।
भियं दधाना हृदयेषु शत्रवः
पराजितासो अप नि लयन्ताम्॥

संसृष्टं अविभागमापन्नं उभयं उभयविधं धनं समाकृतं सम्यगानीतं अस्मभ्यं दत्ताम्। कः? वरुणश्च देवः मन्युः च। भियं भयं हृदयेषु दधानाः शत्रवः अस्मद्विरोधिनः पराजितासः पराजिताः अप नि लयन्तां अपनिलीना भवन्तु। ऋसा.

शत्रवः बान्धवा अबान्धवाश्च

[1]आ तक्षत सातिमस्मभ्यमृभवः
सातिं रथाय सातिमर्वते नरः।
सातिं नो जैत्रीं सं महेत विश्वहा
जामिमजामिं पृतनासु सक्षणिम्॥

हे नरः यज्ञस्य नेतारः ऋभवः, अस्मभ्यं अनुष्ठातृभ्यः सातिं संभजनीयं अन्नं धनं वा आ तक्षत आ समन्तात् कुरुत। तथा अस्मदीयाय रथाय रंहणशीलाय पुत्रादये रथायैव वा सातिं संभजनीयं धनं आतक्षत। तथा अर्वते अश्वाय सातिं संभजनीयं अन्नं धनं वा अश्वयोग्यं, आतक्षतेत्येव। किंच, विश्वहा सर्वेष्वहःसु नः अस्माकं जैत्रीं जयशीलां अपरिमितत्वेन सर्वाधिकां सातिं संभजनीयं धनं सं महेत सर्वो जनः सम्यक् पूजयतु। वयं च पृतनासु संग्रामेषु जामिं सहजातं अजामिं सहानुत्पन्नं शत्रुं वा सक्षणिं अस्मानभिभवन्तं युष्मत्प्रसादादभिभवेमेति शेषः।

द्विविधाः शत्रवः पदातयः रथारूढाश्च

[2]यं क्रन्दसी संयती विह्वयेते
परेऽवर उभया अमित्राः।
समानं चिद्रथमातस्थिवांसा
नाना हवेते स जनास इन्द्रः॥

यं क्रन्दसी रोदसी शब्दं कुर्वाणे मानुषी दैवी च द्वे सेने वा संयती परस्परं संगच्छन्त्यौ यमिन्द्रं विह्वयेते स्वरक्षार्थं विविधमाह्वयतः। परे उत्कृष्टाः अवरे अधमाश्च उभयाः उभयविधाः अमित्राः शत्रवः यमाह्वयन्ति। समानं इन्द्ररथसदृशं रथं आतस्थिवांसा आस्थितौ द्वौ

(१) ऋसं. १०।८४।५; असं. ४।३१।५; नि. ६।२९.

(२) ऋसं. १०।८४।६; असं. ४।३१।६ विभर्ष्यभि (विभर्षि सह).

(३) ऋसं. १०।८४।७; असं. ४।३१।७ दत्तां (धत्तां) भियं (भियो); आगृ. ३।१०।११.

(१) ऋसं. ४।३३।३.

(२) ऋसं. २।१२।८; असं. २०।३४।८.

रथिनौ तमेवेन्द्रं नाना पृथक् पृथक् हवेते आह्वयेते। यद्वा, समानं एकरथं आरूढाविन्द्राग्नी हवेते यज्ञार्थं यजमानैः पृथगाहूयेते तयोरन्यतरः सः इन्द्रः नाहमिति। ऋसा.

इन्द्राय सोमदानं राजोत्कर्षहेतुः

[१]न स राजा व्यथते यस्मिन्निद्र-
स्तीव्रं सोमं पिबति गोसखायम्।
आ सत्वनैरजति हन्ति वृत्रं
क्षेति क्षितीः सुभगो नाम पुष्यन्॥

स राजा न व्यथते व्यथितो न भवति। यस्मिन् राजनि तदीये यज्ञे इन्द्रः तीव्रं मदजनकं सोमं पिबति गोसखायम्। विकारे प्रकृतिशब्दः। क्षीरादिमिश्रणवन्तम्। स राजा सत्वनैः सत्वभिः अनुचरैः आ सर्वतः अजति गच्छति हन्ति च वृत्रं पापं वैरिणं वा। क्षेति गच्छति क्षितीः प्रजाः। अथवा, क्षितीः निवासान् निवसते। सुभगः शोभनसुखः नाम नामकं धनं इन्द्रस्य स्तोत्रं वा पुष्यन् पोषयन्। ऋसा.

पुष्यात्क्षेमे अभि योगे भवा-
त्युभे वृतौ संयती सं जयाति।
प्रियः सूर्ये प्रियो अग्ना भवाति
य इन्द्राय सुतसोमो ददाशत्॥

पुष्यात् पोषयेत् बन्ध्वादीन्। क्षेमे प्राप्तस्य धनस्य रक्षणे योगे अलब्धस्य प्राप्तौ च अभि भवाति भवति। अभीत्यनर्थको धात्वर्थानुवादी वा, प्रभुर्भवतीत्यर्थः। तथा उभे वृतौ वर्तमाने संयती नियते अहोरात्रे सं जयाति सम्यक् जयति, ते सुखकरे स्यातामित्यर्थः। किंच, सः प्रियः भवति सूर्ये तथा अग्ना अग्नौ प्रियः भवति य इन्द्राय सुतसोमो ददाशत् सोमं ददाति। ऋसा.

युद्धप्रयोजनम्

[२]वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम्।
नयन्ति दुरिता तिरः॥

राजानः वरुणादयः। एषां स्वकीययजमानानां पुरः पुरस्तात् दुर्गा गन्तुं दुःशकानि शत्रुनगराणि वि घ्नन्ति विशेषेण नाशयन्ति। तथा द्विषः शत्रूनपि वि घ्नन्ति। तथा दुरिता यजमानसंबन्धीनि दुरितानि तिरः नयन्ति विनाशं प्रापयन्ति। दुर्गा। दुःखेन गच्छन्त्यत्रेति दुर्गाणि। ऋसा.

[१]अर्वद्भिरग्ने अर्वतो नृभिर्नॄन्
वीरैर्वीरान्वनुयामा त्वोताः।
ईशानासः पितृवित्तस्य रायो
वि सूरयः शतहिमा नो अश्युः॥

हे अग्ने, त्वोताः त्वया रक्षिताः सन्तो वयं अर्वद्भिः अस्मदीयैरश्वैः अर्वतः शत्रुसंबन्धिनः अश्वान् नृभिः अस्मदीयैर्भटैः नॄन् शत्रोर्भटान्। वीर्याज्जायन्ते इति वीराः पुत्राः। तैः वीरान् शत्रुपुत्रांश्च वनुयाम हन्याम। 'वनुष्यतिर्हन्तिकर्माऽनवगतसंस्कारो भवति' (नि. ५।२) इति यास्कः। पितृवित्तस्य पित्रादिपरंपरया लब्धस्य रायः धनस्य ईशानासः स्वमिनः सूरयः विद्वांसः नः अस्माकं पुत्राः शतहिमाः शतं संवत्सरान् जीवन्तः सन्तः वि अश्युः विशेषेण भुञ्जताम्, अस्मदीयानां पुत्राणामारोग्यं दीर्घमायुश्च भवत्वित्यर्थः। त्वोताः त्वयोताः। शतहिमाः। अत्र हिमशब्देन तद्वान् हेमन्तो लक्ष्यते। ब्राह्मणं च भवति– 'शतं हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह' (तैसं. १।५।८।५) इति। शतं हिमाः शतं हेमन्तर्तवो येषां ते, शतसंवत्सरजीविन इत्यर्थः। ऋसा.

[२]शूरो वा शूरं वनते शरीरै-
स्तनूरुचा तरुषि यत्कृण्वैते।
तोके वा गोषु तनये यदप्सु
वि क्रन्दसी उर्वरासु ब्रवैते॥

हे इन्द्र, शूरः त्वदनुगृहीतो वीरः शरीरैः अङ्गैः शूरं वा वीरमपि वनते हन्ति। 'वा' इत्ययं अपीत्यस्यार्थे वर्तते। यद्वा, वेत्यनेन विकल्पाभिधायकेन अशूरो वा

(१) ऋसं. ५।३७।४-५.
(२) ऋसं. १।४१।३.

(१) ऋसं. १।७३।९.
(२) ऋसं. ६।२५।४.

त्वदनुगृहीतः सन् शूरं वनते । कदा वनते इत्येतदाह— तनूरुचा शरीरेण शोभमानौ परस्परविरोधिनौ तरुषि युद्धे यत् यदा कृण्वैते संग्रामं कुर्वाते । यत् यदा च तोके वा पुत्रनिमित्ते वा गोषु निमित्तभूतासु वा तनये पौत्रे निमित्तभूते वा अप्सु उदकेषु निमित्तेषु वा उर्वरासु सर्वसस्याढ्यासु भूमिषु निमित्तासु क्रन्दसी क्रन्दमानौ आक्रोशन्तौ वि ब्रवैते विवदेते । हे इन्द्र, पुत्रादिलाभजयः त्वदनुगृहीतस्य भवतीत्यर्थः । ऋसा.

### स्त्रीसैन्यम्

[1]स्त्रियो हि दास आयुधानि चक्रे
किं मा करन्नबला अस्य सेनाः ।
अन्तर्ह्यख्यदुभे अस्य धेने
अथोप प्रैद्युधये दस्युमिन्द्रः ॥

दासः उपक्षपयिता नमुचिरसुरः स्त्रियः स्त्रीः आयुधानि युद्धसाधनानि चक्रे हि कृतवान् खलु, इन्द्रेण सह योद्धुं प्रहितवानित्यर्थः । अस्य असुरस्य संबन्धिन्यः अबलाः स्त्रीरूपाः सेनाः मा मां किं करन् किं कुर्युरिति मन्यमान इन्द्रस्तासां मध्ये अस्य असुरस्य धेने प्रीणयित्र्यौ सुरूपे उभे द्वे स्त्रियौ अन्तः अख्यत् हि गृहमध्ये निदधे खलु । अथ अनन्तरं इन्द्रः दस्युं नमुचिं युधये युद्धाय उप प्रैत् उपप्रागच्छत् । ऋसा.

[2]अत्रेदु मे मंससे सत्यमुक्तं
द्विपाच्च यच्चतुष्पात्संसृजानि ।
स्त्रीभिर्यो अत्र वृषणं पृतन्या-
दयुद्धो अस्य वि भजानि वेदः ॥

मे मम अत्र अस्मिन् स्तोत्रे उक्तं मया कथितं सत्यमित् यथाभूतमेव मंससे त्वं जानीहि, अर्थवादरूपेण नैतदध्यारोपितगुणमित्यर्थः । उ इति पूरणः । किंच, द्विपाच्च मनुष्यादिकं च चतुष्पाच्च पश्वादिकं च यत् स्थावरजङ्गमात्मकं जगत् संसृजानि अहमुत्पादयानीति त्वं जानीहि । अत्र अस्मिन् जगति स्त्रीभिः स्त्रीसदृशैः बलाहीनैः पुरुषैः सह यः शूरंमन्यो जनः वृषणं अभिलषितस्य वर्षितारं माम् । परित्यज्येति शेषः । पृतन्यात् युद्धं कर्तुमिच्छति, अहं अस्य ईदृशस्य स्वभूतं वेदः धनं अयुद्धः तेन पुरुषेणायोद्धा सन् बलादपहृत्य वि भजानि, स्तोतृभ्यो यष्टृभ्यश्च ददामीत्यर्थः । ऋसा.

( १ ) ऋसं. ५।३०।९.
( २ ) ऋसं. १०।२७।१०.

### मुष्टियुद्धम्

[1]नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै ।
त्वोतासो न्यर्वता ॥

येन धनेन संपादितानां भटानां नि मुष्टिहत्यया नितरां मुष्टिप्रहारेण वृत्रा शत्रून् नि रुणधामहै निरुद्धान् करवाम, तादृशं धनमाहरेत्यर्थः । त्वोतासः त्वया रक्षिताः वयं अर्वता अस्मदीयेनाश्वेन नि रुणधामहै इत्यनुषङ्गः । पदातियुद्धेनाश्वयुद्धेन च शत्रून् विनाशयाम इत्यर्थः । ऋसा.

[2]यूयं राजानमिर्यं जनाय
विभ्वतष्टं जनयथा यजत्राः ।
युष्मदेति मुष्टिहा बाहुजूतो
युष्मत्सदश्वो मरुतः सुवीरः ॥

हे मरुतः, यूयं जनाय यजमानाय राजानं स्वामिनं राजमानं वा इर्यं शत्रूणां प्रेरकं च्यावयितारं विभ्वतष्टम् । विभ्वा नाम ऋभूणां मध्यमः । स कुशली । तेन निर्मितम्, अत्यन्तरूपवन्तमित्यर्थः । तादृशं पुत्रं जनयथ उत्पादयथ हे यजत्राः यष्टव्याः । हे मरुतः, युष्मत् युष्मत्तः एति गच्छति पुत्रः । कीदृशः ? मुष्टिहा । मुष्टिशब्दो बाहूपलक्षकः । स्वभुजबलेनैव हन्ता शत्रूणाम् । तदेवोच्यते— बाहुजूतः । बाहुः प्रेरकः शत्रूणां यस्य तादृशः पुत्र एति । तथा युष्मत् युष्मत्तः सदश्वः विद्यमानाश्वः, बह्वश्वः इत्यर्थः । सुवीरः शोभनवीर्यः पुत्रः एति, जायते इत्यर्थः । ऋसा.

( १ ) ऋसं. १।८।२ ; असं. २०।७०।१८.
( २ ) ऋसं. ५।५८।४.

[1]त्वां वाजी हवते वाजिनेयो
महो वाजस्य गध्यस्य सातौ ।
त्वां वृत्रेष्विन्द्र सत्पतिं तरुत्रं
त्वां चष्टे मुष्टिहा गोषु युध्यन् ॥

वाजी हविर्लक्षणान्नवान् वाजिनेयः वाजिन्याः पुत्रो भरद्वाजः हे इन्द्र, त्वां गध्यस्य सर्वैः प्राप्यस्य महः महतः वाजस्य अन्नस्य सातौ लाभे निमित्ते हवते स्तौति । अपि च, हे इन्द्र, सत्पतिं सज्जनानां पालकं तरुत्रं दुर्जनानां तारकं त्वां वृत्रेषु उपद्रवेषु निमित्तेषु भरद्वाजो हवते । मुष्टिहा मुष्टिबलेन शत्रूणां हन्ता गोषु निमित्तभूतासु युध्यन् शत्रुभिः सह युद्धं कुर्वन् भरद्वाजः त्वां चष्टे पश्यति प्रतिपालयते । ऋसा.

[2]साह्वा ये सन्ति मुष्टिहेव हव्यो
विश्वासु पृत्सु होतृषु ।
वृष्णश्चन्द्रान्न सुश्रवस्तमान् गिरा
वन्दस्व मरुतो अह ॥

विश्वासु सर्वासु पृत्सु पृतनासु युद्धेषु होतृषु आह्वानशीलेषु योद्धृषु च ये मरुतः सह्वाः सन्ति अभिभवितारो भवन्ति हव्यः ह्वातव्यः मुष्टिहेव । मुष्टिभिरेव हन्तीति मुष्टिहा मल्लः । स इव । नेति संप्रत्यर्थे । न संप्रति वृष्णः वर्षितॄन् चन्द्रान् आह्लादकान् सुश्रवस्तमान् अतिशयेन शोभनयशस्कान् तान् मरुतः अह मरुत एव गिरा वाचा वन्दस्व स्तुहि । ऋसा.

युद्धे गोजयार्थं प्रदेशजयार्थं च राज्ञः धनुरादिभिः संनहनम्

[3]जीमूतस्येव भवति प्रतीकं
यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तन्वा जय त्वं
स त्वा वर्मणो महिमा पिपर्तु ॥

समदां संग्रामाणां उपस्थे उपस्थाने सति यत् यदा अयं राजा वर्मी कवची याति तदा लोहमयेन वर्मणा संनद्धस्य राज्ञः प्रतीकं रूपं जीमूतस्येव मेघस्येव भवति, मेघस्य यादृशं रूपं तादृशमस्य भवतीत्यर्थः । हे राजन्, त्वं अनाविद्धया शत्रुभिरबाधितया तन्वा शरीरेण शत्रून् जय । वर्मणः स तादृशः महिमा त्वा त्वां पिपर्तु पालयतु । ऋसा.

[1]धन्वना गा धन्वनाऽऽजिं जयेम
धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति
धन्वना सर्वाः प्रदिशो जयेम ॥

धन्वना चापेन गाः शत्रूणां जयेम वयं वशीकरवाम । धन्वना आजिं संग्रामं च जयेम । धन्वना तीव्राः उद्धताः समदः अत्यन्तं मदवतीः शत्रूसेनाश्च जयेम । तथा च यास्कः– 'समदः समदो वात्तेः संमदो वा मदतेः' ( नि. ९।१७ ) इति । धनुः शत्रोः अपकामं कामस्यापायं कृणोति करोतु । किंच, धन्वना वयं सर्वाः प्रदिशः सर्वासु दिक्षु वर्तमानान् शत्रून् जयेम । प्रदिक्शब्दो लक्षणया तत्स्थेषु पुरुषेषु वर्तते मञ्चाः क्रोशन्तीतिवत् । धन्वन्शब्दस्य जयतेश्चाऽऽवृत्तिरादरार्था । ऋसा.

[2]वक्ष्यन्तीवेदा गनीगन्ति कर्णं
प्रियं सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताऽधि धन्व-
ञ्ज्या इयं समने पारयन्ती ॥

पूर्वत्र ऋग्द्वयेन कवचधनुषी स्तुते । अत्र ज्यास्तुतिः । इयं ज्या समने संग्रामे धन्वन् धन्वनि । अधि इति सप्तम्यर्थानुवादः । वितता विस्तृता पारयन्ती पारं नयन्ती प्रियं प्रियकरं वाक्यं वक्ष्यन्तीव कर्णं धन्विनो राज्ञः

---

( १ ) ऋसं. ६।२६।२.

( २ ) ऋसं. ८।२०।२०.

( ३ ) ऋसं. ६।७५।१ ; तैसं. ४।६।६।१ तन्वा ( तनुवा ) ; कासं. ( अश्व. ) ६।१ ( १ ) ; मैसं. ३।१६।३ ( ३१ ) ; शुसं. २९।३८ ; तैब्रा. ३।९।४।३ ; आगृ. ३।१२।३.

( १ ) ऋसं. ६।७५।२ ; तैसं. ४।६।६।१ ; कासं. ( अश्व. ) ६।१ ( २ ) ; मैसं. ३।१६।३ ( ३२ ) कृणोति ( कृणोतु ) प्रदिशो ( पृतना ) ; शुसं. २९।३९ ; नि. ९।१७.

( २ ) ऋसं. ६।७५।३ ; तैसं. ४।६।६।१-२ ; कासं. ( अश्व. ) ६।१ ( ३ ) ; मैसं. ३।१६।३ ( ३३ ) ; शुसं. २९।४० ; नि. ९।१८.

कर्णप्रदेशं आ गनीगन्ति आगच्छति । इत् इति पूरणः । योषा नारी सखायं पतिं इव परिषस्वजाना इषुं परिष्वजमाना शिङ्क्ते शब्दायते च । तथा च यास्कः– 'वक्ष्यन्तीवागच्छति कर्णं प्रियमिव सखायमिषुं परिष्वजमाना योषेव शिङ्क्ते शब्दं करोति वितताधि धनुषि ज्येयं समने संग्रामे पारयन्ती पारं नयन्ती' ( नि. ९।१८ ) इति । ऋसा.

¹ते आचरन्ती समनेव योषा
मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यतां संविदाने
आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥

अत्र धनुष्कोट्योः स्तुतिः । ते धनुष्कोट्यौ समनेव समनस्केव योषा पतिसमीपं न त्यजति तद्वत् आचरन्ती अभितश्चरन्त्यौ उपस्थे उपस्थाने मातेव पुत्रं यथा माता पुत्रं धारयति तद्वत् बिभृतां राजानं धारयेताम् । किंच, इमे धनुष्कोट्यौ संविदाने संजानाने विसंवादरहिते आर्त्नी गच्छन्त्यौ अस्य राज्ञः अमित्रान् विष्फुरन्ती विहिंसन्त्यौ शत्रून् च अप विध्यताम् । तथा च यास्कः– 'ते आचरन्त्यौ समनसाविव योषे मातेव पुत्रं बिभृतामुपस्थ उपस्थानेऽपविध्यतां शत्रून् संविदाने आर्त्न्याविमे विघ्नत्यावमित्रान्' ( नि. ९।४० ) इति । ऋसा.

²बह्वीनां पिता बहुरस्य पुत्र-
श्चिश्चा कृणोति समनावगत्य ।
इषुधिः संकाः पृतनाश्च सर्वाः
पृष्ठे निनद्धो जयति प्रसूतः ॥

इषुधिरत्र स्तूयते । इषुधिः बह्वीनां इषूणां पिता भवति । रक्षणहेतुत्वात् पितेत्युच्यते । इषुशब्दस्योभयलिङ्गत्वात् बह्वीनामिति प्रयोगः । अस्य इषुधेः पुत्रः इषुः बहुः भवति । बहव इषवो हि इषुधौ निधीयन्ते । इषूणां निधानत्वात् इषुधिः । तथा च यास्कः– 'इषुधिरिषूणां निधानम्' ( नि. ९।१३ ) इति । चिश्चा कृणोति । चिश्चेति शब्दानुकृतिः । इषुषु उद्ध्रियमाणेषु इषुधिश्चिश्चाशब्दं करोति । किंच, इषुधिः पृष्ठे निनद्धः धन्विनो राज्ञः पृष्ठभागे बद्धः समना युद्धानि अवगत्य प्राप्य प्रसूतः प्रसुवन् इषून् प्रेरयन् संकाः । सह कायन्ति शब्दायन्ते इति संकाः पृतनाः सर्वाः सेनाः जयति । ऋसा.

¹रथे तिष्ठन्नयति वाजिनः पुरो
यत्रयत्र कामयते सुषारथिः ।
अभीशूनां महिमानं पनायत
मनः पश्चादनु यच्छन्ति रश्मयः ॥

अत्र पूर्वार्धे सारथिस्तुतिः, उत्तरार्धे अभीशूनां स्तुतिः । सुषारथिः शोभनसारथिः रथे तिष्ठन् पुरः पुरस्तात् वर्तमानान् वाजिनः अश्वान् यत्रयत्र नेतुं कामयते तत्रतत्र नयति । ये रथे रश्मयः अश्वग्रीवाभ्यां व्याप्य वर्तमानाः पाशाः पश्चात् रथस्य पृष्ठभागे विद्यमानाः अश्वान् मनः सारथेर्मनः अनुकूलं अनु ( ? अनु अनुकूलं ) यच्छन्ति नियच्छन्ति । तेषां अभीशूनां रश्मीनां महिमानं महत्त्वं पनायत हे जनाः, स्तुत । तथा च यास्कः– 'रथे तिष्ठन्नयति वाजिनः पुरस्तात्सतो यत्र यत्र कामयते सुषारथिः कल्याणसारथिरभीशूनां महिमानं पूजयत मनः पश्चात्सन्तोऽनुयच्छन्ति रश्मयः' ( नि. ९।१६ ) इति । ऋसा.

---

( १ ) ऋसं. ६।७५।४ ; तैसं. ४।६।६।२ ; कासं. ( अश्व. ) ६।१ ( ४ ) ; मैसं. ३।१६।३ ( ३४ ) विध्यतां ( विध्यतः ) ; शुसं. २९।४१ ; नि. ९।४०.

( २ ) ऋसं. ६।७५।५ ; तैसं. ४।६।६।२ ; कासं. ( अश्व. ) ६।१ ( ५ ) ; मैसं. ३।१६।३ ( ३५ ) बह्वीनां ( बहूनां ) ; शुसं. २९।४२ ; आपश्रौ. २०।१६।८ ; नि. ९।१४.

( १ ) ऋसं. ६।७५।६ ; तैसं. ४।६।६।२–३ ; कासं. (अश्व.) ६।१ ( ६ ) ; मैसं. ३।१६।३ (३६) यच्छन्ति ( यछन्ति ) ; शुसं. २९।४३ ; नि. ९।१६.

[1]तीव्रान् घोषान्कृण्वते वृषपाणयो-
ऽश्वा रथेभिः सह वाजयन्तः।
अवक्रामन्तः प्रपदैरमित्रान्
क्षिणन्ति शत्रूँरनपव्ययन्तः ॥

अत्र अश्वस्तुतिः। अश्वाः वृषपाणयः पांसूनां वर्षकखुराः रथेभिः रथैः सह वाजयन्तः वेगमाचरन्तः तीव्रान् उच्चतरान् घोषान् शब्दान् कृण्वते कुर्वते। किंच, अनपव्ययन्तः अपलायमानाः अमित्रान् हिंसकान् शत्रून् प्रपदैः पादाग्रैः अवक्रामन्तः क्षिणन्ति हिंसन्ति। ऋसा.

[2]रथवाहनं हविरस्य नाम
यत्राऽऽयुधं निहितमस्य वर्म।
तत्रा रथमुप शग्मं सदेम
विश्वाहा वयं सुमनस्यमानाः ॥

अस्य राज्ञः रथवाहनं शत्रून् जित्वा रथेनोह्यमानं धनं हविः भवति, अग्नेर्हविरिव वर्धकं भवतीत्यर्थः। नाम इति संमतिः। यत्र रथे अस्य राज्ञः आयुधं धनुःशरादिकं वर्म कवचं च निहितं भवति तत्र तं शग्मं सुखकरं विश्वाहा सर्वदा सुमनस्यमानाः सुखमनसो भवन्तः वयं पायवो भरद्वाजाः उप सदेम उपगच्छेम। ऋसा.

[3]स्वादुषंसदः पितरो वयोधाः
कृच्छ्रेश्रितः शक्तीवन्तो गभीराः।
चित्रसेना इषुबला अमृध्राः
सतोवीरा उरवो व्रातसाहाः ॥

अत्र रथगोपस्तुतिः। पितरः रथस्य पालयितारः स्वादुषंसदः शत्रूणां स्वादुनि अन्ने संसीदन्तः शत्रूणामन्नमवसादयन्तो वा वयोधाः अन्नस्य दातारः कृच्छ्रेश्रितः आपदि श्रयन्तः शक्तीवन्तः। शक्तिः आयुधविशेषः, तद्वन्तः शक्तीवन्तः, शक्तिहस्ता इति यावत्। यद्वा, शक्तिः बलं, तद्वन्तः। गभीराः अनाधृष्याः चित्रसेनाः दर्शनीयसेनाः इषुबलाः बाणबलाः अमृध्राः हिंसितुमशक्याः सतोवीराः प्राप्तवीर्याः। तथा च यास्कः– 'तिरः सत इति प्राप्तस्य। तिरस्तीर्णं भवति। सतः संसृतं भवति' (नि. ३।२०) इति। उरवः महान्तः व्रातसाहाः समूहानामभिभवितारः भवन्तीति। ऋसा.

[4]ब्राह्मणासः पितरः सोम्यासः
शिवे नो द्यावापृथिवी अनेहसा।
पूषा नः पातु दुरितादृतावृधो
रक्षा माकिर्नो अघशंस ईशत ॥

ब्राह्मणासः हे ब्राह्मणाः पितरः ऋतावृधः सत्यस्य यज्ञस्य वा वर्धयितारः सोम्यासः सोमार्हाः सोमसंपादिनो वा। तथा च यास्कः– 'सोम्याः सोमसंपादिनः' (नि. ११।१८) इति। नः अस्मान् रक्षत। रक्ष इत्युपरितनमेकवचनान्तं सत्यपि व्यवधाने बहुवचनान्ततया विपरिणतं सदत्र संबध्यते, अध्याहारस्यातिजघन्यत्वात्। किंच, अनेहसा अपापे द्यावापृथिवी द्यावापृथिव्यौ नः अस्माकं शिवे सुखकृतौ भवताम्। पूषा पोषको देवोऽपि नः अस्मान् दुरितात् दुष्कृतात् पातु रक्षतु। नः अस्माकं अघशंसः पापशंसः शत्रुरपि माकिः ईशत मा ईशिष्ट। ऋसा.

---

(१) ऋसं. ६।७५।७; तैसं. ४।६।६।३; कासं. (अश्व.) ६।१ (७); मैसं. ३।१६।३ (३७) शत्रूँन (शत्रून् रन); शुसं. २९।४४; आपश्रौ. २०।१६।१०.

(२) ऋसं. ६।७५।८; तैसं. ४।६।६।३; कासं. (अश्व.) ६।१ (८); शुसं. २९।४४ वाहनं (वाहणं); आपश्रौ. २०।१६।१८.

(३) ऋसं. ६।७५।९; तैसं. ४।६।६।३; कासं. (अश्व.) ६।१ (९); मैसं. ३।१६।३ (४१) कृच्छ्रे (कृच्छ्रे); शुसं. २९।४६; आपश्रौ. २०।१६।११.

(४) ऋसं. ६।७५।१०; तैसं. ४।६।६।३–४; कासं. (अश्व.) ६।१ (१०); मैसं. ३।१६।३ (४२) अनेहसा (उभे स्ताम्); शुसं. २९।४७.

[1]सुपर्णं वस्ते मृगो अस्या दन्तो
गोभिः संनद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति
तत्रास्मभ्यमिषवः शर्म यंसन् ॥

अस्यामृचि इषवः स्तूयन्ते । सुपर्णं शोभनं वाजं वस्ते इयमिषुर्धारयति । अस्याः इषोः मृगः मृगावयवः शृङ्गं दन्तः भवति । इषवः काश्चित् दन्तमुखा भवन्ति हि । अथवा, अस्या दन्तो मृगः शत्रून् मृगयमाणो भवति । किंच, गोभिः गोविकारैः स्नायुभिः संनद्धा सम्यक् बद्धा । अथवा गौरिति ज्यानाम । तया संबद्धा । अत्र वचनव्यत्ययः । तथा च निगमः– ' वृक्षेवृक्षे नियता मीमयद्गौः ' ( ऋसं. १०।२७।२२ ) इति। अस्यायमर्थः– वृक्षेवृक्षे धनुषि धनुषि गौः ज्या नियता मीमयत् शब्दं करोतीति । तथा च यास्कः– ' वृक्षेवृक्षे धनुषि धनुषि । वृक्षो व्रश्चनात् वृत्वा क्षां तिष्ठतीति वा । क्षा क्षियतेर्निवासकर्मणः । नियता मीमयद्गौः शब्दं करोति। मीमयतिः शब्दकर्मा । ' ( नि. २।६ ) इति । प्रसूता प्रेरिता सती पतति । यत्र युद्धे नरः सं च सह च वि च पृथक् च द्रवन्ति चरन्ति तत्र अस्मभ्यं इषवः शराः शर्म सुखं यंसन् प्रयच्छन्तु । तथा च यास्कः– ' सुपर्णं वस्त इति वाजानभिप्रेत्य मृगमयोऽस्या दन्तो मृगयतेर्वा गोभिः संनद्धा पतति प्रसूतेति व्याख्यातम्। यत्र नराः संद्रवन्ति च विद्रवन्ति च तत्रास्मभ्यमिषवः शर्म शरणं प्रयच्छन्तु * । ' ( नि. ९।१९ ) इति । ऋसा.

* ' शर्म शरणं प्रयच्छन्तु ' इत्यस्य स्थाने आनन्दाश्रममुद्रितनिरुक्ते वेंकटेश्वरमुद्रणालयमुद्रितनिरुक्ते च अयं पाठः– ' शर्म यच्छन्तु शरणं संग्रामेषु ' इति ।

( १ ) ऋसं. ६।७५।११ ; तैसं. ४।६।६।४ ; कासं. ( अश्व. ) ६।१ ( ११ ) ; मैसं. ३।१६।३ ( ४४ ) ; शुसं. २९।४८ ; नि. ९।१९.

[2]ऋजीते परि वृङ्धि नोऽश्मा भवतु नस्तनूः ।
सोमो अधि ब्रवीतु नोऽदितिः शर्म यच्छतु ॥

ऋजीते । ऋजु गच्छतीति ऋजीतिः इषुः । हे इषो, नः अस्मान् परि वृङ्धि परितो वर्धय । नः अस्माकं तनूः शरीरं अश्मा भवतु अश्मवदभेद्या दृढा भवतु । किंच, नः अस्मभ्यं सोमो अधि ब्रवीतु पक्षपातेन ब्रवीतु । अदितिः अपि शर्म सुखं यच्छतु । ऋसा.

[3]आ जङ्घन्ति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥

अश्वाजनि अश्वानां क्षेप्त्रि कशे, यया त्वया प्रचेतसः प्रकृष्टज्ञानाः सादिनः सारथयो वा, एषां अश्वानां सानु सानूनि सक्थीनि आ जङ्घन्ति आघ्नन्ति जघनान् जघनानि च उप जिघ्नते उपजिघ्नन्ति सा त्वं समत्सु संग्रामेषु अश्वान् चोदय प्रेरय । तथा च यास्कः– ' आघ्नन्ति सानून्येषां सरणानि सक्थीनि । सक्थि सचतेरासक्तोऽस्मिन् कायः । जघनानि चोपघ्नन्ति । जघनं जङ्घन्यतेः । अश्वाजनि प्रचेतसः प्रवृद्धचेतसोऽश्वान् समत्सु समरणेषु संग्रामेषु चोदय । ' ( नि. ९।२० ) इति। ऋसा.

[4]अहिरिव भोगैः पर्येति बाहुं
ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान्
पुमान्पुमांसं परि पातु विश्वतः ॥

( १ ) ऋसं. ६।७५।१२ ; तैसं. ४।६।६।४–५ वृङ्धि ( वृङ्ग्धि ) ; कासं. ( अश्व. ) ६।१ ( १२ ) ऋजीते ( वृजीते ) ; मैसं. ३।१६।३ ( ४३ ) तैसंवत् ; शुसं. २९।४९ ; आपश्रौ. २०।१६।१२.

( २ ) ऋसं. ६।७५।१३ ; तैसं. ४।६।६।५ ; कासं. ( अश्व. ) ६।१ ( १४ ) ; मैसं. ३।१६।३ ( ४६ ) जघनाँ उप जिघ्नते ( जघनं उपजिघ्नतु ) चोदय ( नोदय ) ; शुसं. २९।५० ; नि. ९।२०.

( ३ ) ऋसं. ६।७५।१४ ; तैसं. ४।६।६।५ ; कासं. (अश्व.) ६।१ ( १३ ) ; मैसं. ३।१६।३ ( ४५ ) ; शुसं. २९।५१ ; आगृ. ३।१२।११ ; नि. ९।१५.

अत्र धन्विनः प्रकोष्ठे बन्धनीयस्य हस्तघ्नस्य स्तुतिः। हस्तघ्नः। हस्ते हस्तसमीपे वर्तिनि प्रकोष्ठे स्थितः सन् ज्यया हन्यते इति हस्तघ्नः। ज्यायाः हेतिं ज्याहेतुकां हिंसां परिबाधमानः निवारयन् भोगैः शरीरेण। वचनव्यत्ययः। अहिरिव सर्प इव बाहुं प्रकोष्ठम्। लक्षणया बाहुशब्दः प्रकोष्ठे वर्तते। पर्येति परिवेष्टयति। किंच, विश्वा विश्वानि वयुनानि ज्ञानानि ज्ञातव्यानि, 'माया वयुनम्' (निघण्टुः ३।९।१०) इति तन्नामसु पाठात्। विद्वान् जानन् पुमान् पौरुषोपेतः स्वयं पुमांसं धन्विनं विश्वतः सर्वतः परि पातु रक्षति। तथा च यास्कः— 'अहिरिव भोगैः परिवेष्टयति बाहुं ज्याया वधात्परित्रायमाणो हस्तघ्नः सर्वाणि प्रज्ञानानि प्रजानन् पुमान् पुरुमना भवति पुंसतेर्वा' (नि. ९।१५) इति।

ऋसा.

[1]आलाक्ता या रुरुशीर्ष्ण्यथो यस्या अयो मुखम्।
इदं पर्जन्यरेतस इष्वै देव्यै बृहन्नमः॥

या इषुः आलाक्ता आलेन विषेण अक्ता रुरुशीर्ष्णी हन्तृशिरस्का। अर्तेः हिंसाकर्मणो रुरुशब्दोत्पत्तिः। शृङ्गशीर्ष्णी वा। अथो किंच, यस्याः इषोः मुखं अयः अयोमयं भवति। पर्जन्यरेतसे। पर्जन्यो रेतो यस्याः सा पर्जन्यरेताः। तस्यै पर्जन्यकार्यभूतायै, शरकाण्डस्य पर्जन्यजन्यत्वात्। बृहत् बृहत्यै तस्यै इष्वै देव्यै इदं नमः क्रियते इति।

ऋसा.

[2]अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते।
गच्छामित्रान्प्र पद्यस्व माऽमीषां कं चनोच्छिषः॥

ब्रह्मसंशिते मन्त्रेण तीक्ष्णीकृते शरव्ये हिंसाकुशले इषो, त्वं अवसृष्टा क्षिप्ता परा पत परागच्छ। इतो देशात् गच्छ च। अमित्रान् हिंसकान् प्र पद्यस्व प्राप्नुहि च। अमीषां अमित्राणां मध्ये कं चन कंचिदपि मा उच्छिषः अवशिष्टं मा कुरु।

ऋसा.

[1]यत्र बाणाः संपतन्ति कुमारा विशिखाइव।
तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु
विश्वाहा शर्म यच्छतु॥

यत्र युद्धे कुमारा विशिखाइव मुण्डिता इव बाणाः संपतन्ति तत्र नः अस्मभ्यं ब्रह्मणस्पतिः शर्म सुखं विश्वाहा सर्वदा यच्छतु। अदितिः च शर्म यच्छतु। द्विरुक्तिरादरार्था।

ऋसा.

[2]मर्माणि ते वर्मणा छादयामि
सोमस्त्वा राजाऽमृतेनानु वस्ताम्।
उरोर्वरीयो वरुणस्ते कृणोतु
जयन्तं त्वाऽनु देवा मदन्तु॥

हे राजन्, ते त्वदीयानि मर्माणि। येषु स्थानेषु विद्धः सद्यो म्रियते तानि मर्माणि। वर्मणा कवचेन छादयामि। सोमः राजा त्वा त्वां अनु मर्मच्छादनानन्तरं अमृतेन वस्तां आच्छादयतु। किंच, वरुणः अपि ते तुभ्यं उरोर्वरीयः उरुतरं सुखं कृणोतु करोतु। जयन्तं त्वा त्वां देवाः सर्वेऽपि अनु मदन्तु अनुहृष्यन्तु।

ऋसा.

[3]यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम्॥

---

(१) ऋसं. ६।७५।१५.

(२) ऋसं. ६।७५।१६; असं. ३।१९।८ उत्तरार्धे (जयामित्रान्प्र पद्यस्व जह्येषां वरंवरं मामीषां मोचि कश्चन॥); सासं. २।२१।१ (१८६३); तैसं. ४।६।४।४–५ संशिते (संशिता) पद्यस्व मामीषां (विश मैषां); शुसं. १७।४५; तैब्रा. ३।७।६।२३ सृष्टा (सृष्टः) शरव्ये ब्रह्मसंशिते (शरो ब्रह्मसंशितः) पद्यस्व मामीषां (विश। मैषां); आपश्रौ. ३।१४।३ तैब्रावत्; आगृ. ३।१२।१८.

(१) ऋसं. ६।७५।१७; सासं. २।२१।१ (१८६६) तत्रा (तत्र); तैसं. ४।६।४।५ उत्तरार्धे (इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु॥); शुसं. १७।४८ तत्रा नो ब्रह्मण (तत्र इन्द्रो बृह); आगृ. ३।१२।१९.

(२) ऋसं. ६।७५।१८; असं. ७।११८।१; सासं. २।२१।१ (१८७०); तैसं. ४।६।४।५ (मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिवस्ताम्। उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनु मदन्तु देवाः॥); शुसं. १७।४९.

(३) ऋसं. ६।७५।१९; असं. १।१९।३ (यो नः स्वो यो अरणः सजात उत निष्ट्यो यो अस्माँ अभिदासति।) पू.:

यः स्वः ज्ञातिः अरणः अरममाणः यश्च निष्ट्यः तिरोभूतः दूरे स्थितः नः अस्मान् जिघांसति हन्तुमिच्छति तं देवाः सर्वे देवाः धूर्वन्तु हिंसन्तु । ब्रह्म मन्त्रः मम अन्तरं शराणां निवारकं वर्म विद्यते । ऋसा.

युद्धे कवचधारणम्

[1]यत्र शूरासस्तन्वो वितन्वते
प्रिया शर्म पितॄणाम् ।
अध स्मा यच्छ तन्वे३ तने च छर्दि-
रचित्तं यावय द्वेषः ॥

यत्र यस्मिन् काले शूरासः शूराः शौर्यवन्तो योद्धारः तन्वः स्वकीयानि शरीराणि वितन्वते विस्तारयन्ति स्वामिनो जयाय शत्रूणां पुरतो दर्शयन्ति । तथाऽस्मिन् काले प्रिया प्रियाणि शर्म शर्माणि स्थानानि पितॄणां जनकानां संबन्धीनि, तैरर्जितानीति यावत् । एतानि च वितन्वते शत्रूणां पुरस्तात् विस्तारयन्ति, परित्यजन्तीति यावत् । अध स्म अस्मिन् काले तन्वे शरीराय तने तनयाय च छर्दिः छादनं आयुधानां निवारकं कवचं अचित्तं शत्रुभिरज्ञातं यथा भवति तथा यच्छ प्रयच्छ, शत्रुज्ञानात् पूर्वमेव देहीत्यर्थः । अपि च, द्वेषः द्वेष्टॄन् शत्रून् यावय तेभ्यो वियोजय । ऋसा.

राज्ञो विजिगीषोः रथः

[2]वनस्पते वीड्वङ्गो हि भूया
अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीळयस्वा-
ऽऽस्थाता ते जयतु जेत्वानि ॥

१।१९।४ उत्त.; सासं. २।२१।१ (१८७२) स्वो अरणो (स्वोऽरणो) निष्ट्यो (निष्ठ्यो) ममान्तरम् ॥ + (शर्म वर्म ममान्तरम् ॥); आगृ. ३।५।७; कौगृ. ४।५।८.

(१) ऋसं. ६।४६।१२.

(२) ऋसं. ६।४७।२६; असं. ६।१२५।१; तैसं. ४।६।६।५; कासं. (अश्व.) ६।१ (१५); मैसं. ३।१६।३ (३८); शुसं. २९।५२; ऐब्रा. ३७।६; सामब्रा. १।७।१६; गोब्रा. १।२।२१; आगृ. २।६।५; गोगृ. ३।४।३१; नि. ९।१२.

घ. को. ६३

हे वनस्पते वनस्पतिविकार रथ, त्वं वीड्वङ्गः दृढावयवः भूयाः भव । अस्मत्सखा वयं सखायो यस्य स तादृशश्च भव । प्रतरणः प्रवर्धयिता सुवीरः शोभनैर्वीरैः शूरभटैः पुत्रादिभिर्वा युक्तश्च भव । अपि च, त्वं गोभिः गोविकारैश्चर्मभिः संनद्धः असि सम्यक् बद्धो भवसि । तादृशस्त्वं वीळयस्व अस्मान् दृढीकुरु । ते तव आस्थाता त्वयि अवस्थितो रथी च जेत्वानि जेतव्यानि शत्रुसैन्यानि जयतु । ऋसा.

[1]दिवस्पृथिव्याः पर्योज उद्भृतं
वनस्पतिभ्यः पर्याभृतं सहः ।
अपामोज्मानं परि गोभिरावृत-
मिन्द्रस्य वज्रं हविषा रथं यज ॥

दिवः द्युलोकात् पृथिव्याः भूमेश्च उद्भृतं उद्धृतं सारत्वेनोपात्तं यत् ओजः बलमस्ति तद्रूपम्, वनस्पतिविकारत्वाद्रथस्य । वनस्पतयो हि पृथिव्याः सारभूताः, ते च द्युसंबन्धिभिरुदकैः प्रवृद्धाः । अतो रथस्य लोकद्वयसारत्वमुपपन्नम् । परि पञ्चम्यर्थानुवादी । अपि च, वनस्पतिभ्यः वृक्षेभ्यः । परि पूर्ववत् । आभृतं आहृतं सहः बलरूपं अपां उदकानां ओज्मानं प्रेरकम् । यद्वा, ओज्मा वेगः । अपां वेग इव वेगवन्तं गोभिः गोविकारैश्चर्मभिः परि परितः आवृतं आवेष्टितं इन्द्रस्य वज्रं वज्रैकदेशम् । श्रूयते हि— 'इन्द्रो वृत्राय वज्रमुदयच्छत्स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्' इति । एवंगुणविशिष्टं रथं हविषा पुरोडाशादिना हे अध्वर्यो, यज । ऋसा.

[2]इन्द्रस्य वज्रो मरुतामनीकं
मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमां नो हव्यदातिं जुषाणो
देव रथ प्रति हव्या गृभाय ॥

(१) ऋसं. ६।४७।२७; असं. ६।१२५।२; तैसं. ४।६।६। ५-६ दिवस्पृ (दिवः पृ); कासं. (अश्व.) ६।१ (१६) तैसंवत्; शुसं. २९।५३ तैसंवत्.

(२) ऋसं. ६।४७।२८; असं. ६।१२५।३ स्य वज्रो (स्यौजो) सेमां (स इमां); तैसं. ४।६।६।६; कासं. (अश्व.)

यो रथः इन्द्रस्य वज्रः उक्तप्रकारेण वज्रैकदेशः मरुतां एतत्संज्ञानां देवगणानां अनीकं अग्रभूतं तद्वच्छीघ्रगामी मित्रस्य अहरभिमानिनो देवस्य गर्भः गर्भवदन्तर्वर्तमानः। अहनि हि रथः संचरति। वरुणस्य रात्र्यभिमानिदेवस्य नाभिः नाभिस्थानीयः। नाभिर्यथा देहमध्ये नैश्चल्येनावतिष्ठते तद्वत् रात्रौ क्वचिदवस्थितः। हे देव द्योतमान रथ, य उक्तगुणः सः तादृशस्त्वं इमां नः अस्मदीयां हव्यदातिं हविर्दानवतीं यागक्रियां जुषाणः सेवमानः सन् हव्या हव्यानि अस्मदीयानि हवींषि प्रति गृभाय प्रतिगृहाण। ऋसा.

युद्धदुन्दुभिः

'यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः॥

हे उलूखलक, यच्चिद्धि यद्यपि त्वमवघातार्थे गृहेगृहे युज्यसे तथाऽपि इह वैदिके कर्मणि तीव्रमुसलप्रहारेण द्युमत्तमं अतिशयेन दीप्तं प्रभूतध्वनियुक्तं शब्दं वद। तत्र दृष्टान्तः– जयतामिव दुन्दुभिः। यथा युद्धे जयं प्राप्नुवतां राज्ञां दुन्दुभिः महान्तं ध्वनिं करोति तद्वत्। उलूखलशब्दं यास्क एवं व्याख्यातवान्– 'उलूखलमुरुकरं वोर्ध्वखं वोर्क्करं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणम्' (नि. ९।२०) इति। ऋसा.

'उप श्वासय पृथिवीमुत द्यां
पुरुत्रा ते मनुतां विष्ठितं जगत्।
स दुन्दुभे सजूरिन्द्रेण देवै-
र्दूराद्दवीयो अप सेध शत्रून्॥

हे दुन्दुभे, पृथिवीं उत अपि च द्यां दिवं उप श्वासय आत्मीयेन जयघोषेणाऽऽश्वासय, यथा लोकद्वयं त्वदीयेन शब्देनाऽऽपूरितं भवति तादृशं शब्दं कुर्वित्यर्थः। अपि च, विस्थितं विशेषेण स्थितं जगत् स्थावरं जङ्गमं चोभयविधं प्राणिजातं त्वदीयं शब्दं पुरुत्रा बहुधा मनुतां मन्यतां जानातु। हे दुन्दुभे, स त्वं इन्द्रेण अन्यैः देवैः च सजूः सह दूराद्दवीयः दूरादपि दूरतरं शत्रून् अस्मदीयान् अप सेध अपगमय। अत्र निरुक्तम्– 'दुन्दुभिरिति शब्दानुकरणं द्रुमो भिन्न इति वा दुन्दुभ्यतेर्वा स्याद्वधकर्मणः' (नि. ९।१२) इत्यादि। ऋसा.

'आ क्रन्दय बलमोजो न आ धा
निः ष्टनिहि दुरिता बाधमानः।
अप प्रोथ दुन्दुभे दुच्छुना इत
इन्द्रस्य मुष्टिरसि वीळयस्व॥

हे दुन्दुभे, आ क्रन्दय अस्मच्छत्रून् रोदय। बलं सेनारूपं ओजः शरीरबलं च नः अस्मभ्यं आ धाः आधेहि प्रयच्छ। तथा दुरिता दुरितानि दुर्गमनानि बाधमानः हिंसंस्त्वं निः स्तनिहि नितरां शब्दं कुरु। 'स्तन शब्दे' इति धातुः। हे दुन्दुभे, दुच्छुनाः अस्मद्दुःखहेतुभूतं शुनं सुखं यासां तादृशीः शत्रुसेनाः इतः अस्मत्स्थानात् अप प्रोथ बाधस्व। त्वं च इन्द्रस्य मुष्टिरसि मुष्टिरिव शत्रूणां हन्ता भवसि। अतोऽस्मान् वीळयस्व दृढीकुरु। ऋसा.

---

६।१ (१७); मैसं. ३।१६।३ (४०); शुसं. २९।५४; गोब्रा. १।२।२१.

(१) ऋसं. १।२८।५; ऐब्रा. ३३।५; शाश्रौ. १५।२३; माश्रौ. ६।१।७।२३; नि. ९।२१.

(२) ऋसं. ६।४७।२९; असं. ६।१२६।१ मनुतां (वन्वतां); तैसं. ४।६।६।६–७; कासं. (अश्व.) ६।१ (१८); मैसं. ३।१६।३ (४७) स दुन्दुभे (सं दुन्दुभे) देवैर्दू (देवैरा); शुसं. २९।५५; आगृ. ३।१२।१७; नि. ९।१३.

(१) ऋसं. ६।४७।३०; असं. ६।१२६।२ निः ष्टनिहि (अभि ष्टन) प्रोथ (सेध) ना इत (नामित); तैसं. ४।६।६।७ निः ष्टनिहि (निष्टनिहि) ना इत (ना ऽ इत); कासं. (अश्व.) ६।१ (१९) निः ष्टनिहि (निष्टनिहि); मैसं. ३।१६।३ (४८) निः ष्टनिहि (निष्टनिहि) दुच्छुना (दुछुना); शुसं. २९।५६ कासंवत्.

[1]आऽमूरज प्रत्यावर्तयेमाः
केतुमद्दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरो-
ऽस्माकमिन्द्र रथिनो जयन्तु ॥

अस्याः पूर्वार्धो दुन्दुभिदेवत्यः, उत्तरार्धश्चैन्द्रः। यद्वा, उभावप्यर्धर्चावैन्द्रौ। हे इन्द्र, अमूः शत्रुषु स्थितास्ता गाः आ अज अस्मान् प्रत्यागमय। इमाः अस्मदीया गाः शत्रुभिर्जिघृक्षिताः प्रत्यावर्तय प्रतिनिवर्तय। अयं च दुन्दुभिः केतुमत् प्रज्ञानवत् यथा सर्वैर्ज्ञायते तथा वावदीति भृशं शब्दं करोति। अश्वपर्णाः अश्वपतनाः अश्ववाहाश्च नः अस्मदीयाश्च नरः पुरुषाः सं चरन्ति शत्रुभिर्युध्यमाना वर्तन्ते। तथा सति हे इन्द्र, अस्माकं रथिनः रथारूढाः पुरुषाः शत्रून् जयन्तु। ऋसा.

सांग्रामिकं कर्म

[2]मा नो विदन् विव्याधिनो मो
अभिव्याधिनो विदन्।
आराच्छरव्या अस्मद्विषूचीरिन्द्र पातय ॥

विव्याधिनः विशेषेण अस्त्रादिभिस्ताडनशीलाः शत्रवः नः अस्मान् युध्यमानान् मा विदन् मा लभन्तां मा प्राप्नुवन्तु। तथा अभिव्याधिनः अभिमुखं आगत्य विध्यन्ति हिंसन्तीत्यभिव्याधिनः प्रत्यर्थिनः संनिहिता भटाः। तेऽपि मो विदन् मैव लभन्ताम्। दूरस्थाः संनिहिताश्च भटाः न अस्मान् स्पृशन्तु इत्यर्थः। अधुना शत्रुसंबन्धीनि शस्त्राण्यपि न अस्मत्समीपदेशं प्राप्नुवन्तु इति प्रार्थयते। हे इन्द्र परमैश्वर्ययुक्त देव, शरव्याः शत्रुभिर्बहुशो विनिर्मुक्ताः शरसंहतीः विषूचीः विष्वक् नानामुखं अञ्चनशीलाः सतीः अस्मत् आरात् अस्मत्तो दूरदेशे पातय प्रक्षिप। असा.

विष्वञ्चो अस्मच्छरवः पतन्तु ये अस्ता
ये चाऽऽस्याः।
दैवीर्मनुष्येषवो ममामित्रान् वि विध्यत ॥

शरवः शराः हिंसकाः। ते अस्मत् अस्मत्तः सकाशात् विष्वञ्चः विविधगमनाः पतन्तु निपतन्तु, अस्मान् परित्यज्य अन्यत्र गच्छन्तु इत्यर्थः। तान् शरान् विशिनष्टि— ये शराः अस्ताः शत्रुभिर्धनुर्यन्त्रेण विनिर्मुक्ताः, तथा ये च शराः आस्याः क्षेप्तव्याः तूणीरे संगृहीताः, ते सर्वे निपतन्तु इति योजना। पूर्वं शत्रुशराणां लक्ष्यावेधलक्षणं वैयर्थ्यं प्रार्थ्य अधुना स्वीयानां शराणां शत्रुरूपस्य लक्ष्यस्य हिंसकत्वं प्रार्थयते। दैवीः देवसंबन्धिन्यः आग्नेयवारुणादिरूपाणि अस्त्राणि, तथा मनुष्येषवः मनुष्याणां अस्मदीयानां संबन्धिन्य इषवः शस्त्राणि, उभयविधास्ता इषवः अस्मदीयैर्योद्धृभिः मनुष्यैर्विमुच्यमानाः मम मदीयान् अमित्रान्, न विद्यते मित्रं एषां इति अमित्राः शत्रवः, तान् शत्रून् वि विध्यतु विविध्यन्तु मारयन्तु। असा.

यो नः स्वो यो अरणः सजात उत निष्ट्यो यो
अस्माँ अभिदासति।
रुद्रः शरव्ययैतान् ममामित्रान् वि विध्यतु ॥

नः अस्माकं संबन्धी यः स्वः ज्ञातिः अधिकबलः सन् अस्मान् अनपकर्तॄन् अभिदासति उपक्षपयति, क्षेत्रधनादिकं अपहृत्य पीडयतीत्यर्थः। तथा अरणः अरणनीयः संभाष्यो न भवतीत्यरणः शत्रुः। एवंभूतो यः शत्रुः अस्मान् अभिदासति उपक्षपयति। तथा अन्योऽपि सजातः समानजन्मा समबलः ज्ञातिः अरातिर्वा। उत अपि च निष्ट्यः निर्गतवीर्यः निकृष्टबलः यः शत्रुः अस्मान् अभिदासति क्षुद्रोपद्रवैः पीडयति। एतान् ज्ञातिप्रभृतीन् मम मदीयान् अमित्रान् शत्रून् रुद्रः। रोदयति सर्वं अन्तकाले इति रुद्रः संहर्ता देवः। शरव्यया शरूणां हिंसकानां आयुधानां संहतिः शरव्या, तया वि विध्यतु विनिहन्तु। असा.

---

(१) ऋसं. ६।४७।३१; असं. ६।१२६।३ पूर्वार्धे (प्रामूं जयाभी३मे जयन्तु केतुमद्दुन्दुभिर्वावदीतु।) पर्णाश्चरन्ति (पर्णाः पतन्तु); तैसं. ४।६।६।७; कासं. (अश्व.) ६।१ (२०); मैसं. ३।१६।३ (४९) श्चरन्ति (श्चरन्तु); शुसं. २९।५७.

(२) असं. १।१९।१-४.

**यः सपत्नो योऽसपत्नो यश्च द्विषञ्छपाति नः ।**
**देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥**

यः सपत्नः ज्ञातिरूपः शत्रुः यः असपत्नः ज्ञातिव्यतिरिक्तः शत्रुः अस्मान् बाधते, तथा यश्च शत्रुः द्विषन् द्वेषं कुर्वन् नः अस्मान् अनागसः शपाति शपेत् निग्रहरूपया वाचा नाशयेत्, तं सर्वं पूर्वोक्तं शत्रुं सर्वे निखिला देवा इन्द्रादयः धूर्वन्तु हिंसन्तु । शत्रुकृतशापस्य असंस्पर्शनोपायमाह– ब्रह्मेति । मम मन्त्रप्रयोक्तुः ब्रह्म प्रयुज्यमानं मन्त्रजालं अन्तरं व्यवधायकं वर्म कवचं भवतु । यथा शत्रुकृता वाक्शस्त्रादयः अस्मान् न स्पृशन्ति तथा अयं मन्त्रः अस्मान् छादयतु इत्यर्थः । असा.

**[1]अदारसृद्भवतु देव सोमा-**
**स्मिन् यज्ञे मरुतो मृडता नः ।**
**मा नो विददभिभा मो अशस्ति-**
**र्मा नो विदद्वृजिना द्वेष्या या ॥**

हे देव द्योतनात्मक सोम, अस्मदीयः शत्रुः अदारसृत् भवतु । दारयन्ति पुरुषहृदयं विदारयन्तीति दाराः स्त्रियः । दारान् सरति गच्छतीति दारसृत् । न दारसृत् अदारसृत् । मदीयः शत्रुः स्वस्थानात् प्रच्युतः सन् न कदाचिदपि स्वस्त्रीसमीपं प्राप्नोतु इत्यर्थः । हे मरुतः सप्तगणात्मका एकोनपञ्चाशत्संख्याका देवाः, अस्मिन् मया अनुष्ठीयमाने यज्ञे दर्शपूर्णमासात्मके संग्रामरूपे वा नः अस्मान् मृडत मृडयत, इष्टफलप्रापणेन जयप्रदानेन च सुखयतेत्यर्थः । अपि च, अभिभाः आभिमुख्येन प्रवर्तमानं शात्रवं तेजः । यद्वा, आभिमुख्येन भाति रणरङ्गे दीप्यते इति अभिभाः शत्रुः । स च नः अस्मान् मा विदत् मा लब्ध, मा प्राप्नोतु इत्यर्थः । तथा अशस्तिः अकीर्तिः मो मैव विदत् । तथा द्वेष्या द्वेष्याणि द्वेषणीयानि या यानि वृजिना वृजिनानि पापानि पराजयनिमित्तानि अभिमतफलप्रतिबन्धकानि सन्ति, तानि नः अस्मान् मो विदत् । व्यत्ययेन एकवचनम् । मा विदन् मा प्राप्नुवन्तु । यद्वा, वृजिना वृजिनं पापं अस्यामस्तीति वृजिना हिंसादिपापोपेता अत एव द्वेष्या अस्माभिर्द्वेषणीया या शात्रवी सेना अस्ति साऽपि नः अस्मान् मा विदत् । असा.

**[1]यो अद्य सेन्यो वधोऽघायूनामुदीरते ।**
**युवं तं मित्रावरुणावस्मद्यावयतं परि ॥**

अद्य इदानीं युद्धकाले सेन्यः सेनायां भवः, अघायूनां अघं हिंसालक्षणं पापं परेषां इच्छन्तीति अघायवः शत्रवः, तेषां शत्रूणां संबन्धी यो वधः हननम् । तेन तत्साधनं आयुधं लक्ष्यते । तथाविधं आयुधजालं उदीरते उद्गच्छति अस्मदभिमुखं प्राप्नोति । मित्रावरुणौ । मित्रश्च वरुणश्च । हे देवौ, युवं युवां तं शत्रुभिर्विनिर्मुक्तं वधं अस्मत् अस्मत्तः सकाशात् परि परितः यावयतं वियोजयतम् । अस्मान् यथा न स्पृशति तथा कुरुतं इत्यर्थः । असा.

**इतश्च यदमुतश्च यद्वधं वरुण यावय ।**
**वि महच्छर्म यच्छ वरीयो यावया वधम् ॥**

अनया वरुणं अवयुत्य प्रार्थयते । इतः अस्मात् संनिहितात् शत्रोः सकाशात् यत् वधं हननसाधनं आयुधं मां उद्दिश्य प्राप्नोति, तथा अमुतः अमुष्मात् दूरे दृश्यमानात् शत्रोः सकाशात् यत् आयुधं प्राप्नोति, तत् सर्वं वधं शत्रुभिर्विनिर्मुक्तं हननसाधनं आयुधं हे वरुण, त्वं यावय अस्मत्तो वियोजय । न केवलं अनिष्टनिवृत्तिः, इष्टप्राप्तिरपि मे स्यात् इत्याह– हे वरुण, महत् अधिकं अस्मद्द्वेष्यैरलभ्यं शर्म सुखं वि यच्छ विशेषेण प्रयच्छ । अपि च, वरीयः उरुतरं मन्त्रप्रयोगादिना प्रवृद्धं दुष्परिहरं वधं हननसाधनं शस्त्रास्त्रजालं हे वरुण, त्वं यवय वियोजय । यवया वधम् । 'अन्येषामपि दृश्यते' इति सांहितिको दीर्घः । असा.

---

(१) असं. १।२०।१ ; तैब्रा. ३।७।५।१२ द्भवतु (द्भवत) दभिभा मो (दभि भामो) वृजिना (वृजना) ; आपश्रौ. ३।२०।६ द्भवतु (द्भवत) दभिभा मो (दभिभागो) वृजिना (व्रजना).

(१) असं. १।२०।२–३.

[1]शास इत्था महाँ अस्यमित्रसाहो अस्तृतः ।
न यस्य हन्यते सखा न जीयते कदा चन ॥

हे इन्द्र, त्वं शासः शासको नियन्ता इत्था इत्थं अनेन प्रकारेण महान् महत्त्वगुणोपेतः सर्वोत्कृष्टः असि भवसि । तमेव इन्द्रं विशिनष्टि— अमित्रसाहः अमित्राणां शत्रूणां सोढा अभिभविता । तथा अस्तृतः शत्रुभिर-हिंसितः । अहिंसितत्वं कैमुतिकन्यायेनापि आह— न यस्येति । यस्य उक्तमहिमोपेतस्य इन्द्रस्य सखा शरणागतः मित्रत्वं प्राप्तः पुरुषः न हन्यते शत्रुभिर्न हिंस्यते । हिंस्यत्वं तस्य दूरापास्तं, पराजयोऽपि नास्तीत्याह— चन-शब्दः अप्यर्थे । कदा चन कदाचिदपि न जीयते शत्रु-भिर्नाभिभूयते । इन्द्रस्य सख्युरपि एवं किल, किमु वक्तव्यं इन्द्रस्य अस्तृतत्वं इति पूर्वेण संबन्धः । एवं अतिशयित-महिमोपेतस्य इन्द्रस्य प्रसादात् वयमपि शत्रून् जयेम इति वाक्यशेषः । असा.

[2]स्वस्तिदा विशां पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः सोमपा अभयंकरः ॥

स्वस्ति इति अविनाशिनाम । विनाशरहितं शोभनं फलं ददाति प्रयच्छतीति स्वस्तिदाः । स्वस्तीत्यविनाशि-नाम । 'सु अस्तीति' (इति) यास्कः (नि. ३।२१)। विशां सर्वासां प्रजानां पतिः पालयिता । वृत्रहा । वृत्रो नाम जलाधारभूतो मेघः । तं मेघं वृष्ट्यर्थं हतवान् वृत्रहा । यद्वा, वृत्रो नाम त्वष्ट्रा उत्पादितः असुरः । तं हतवान् । आह च यास्कः— 'तत् को वृत्रः ? मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिकाः' (नि. २।१६) इति । तन्नामनिर्वचनं श्रुत्यैव द्वेधा दर्शितम्— 'यदवर्तय-त्तद् वृत्रस्य वृत्रत्वम्' (तैसं. २।५।२।१) इति, 'य-दिमांल्लोकानवृणोत् तद् वृत्रस्य वृत्रत्वम्' (तैसं. २।५।२) इति च । विमृधः विशेषेण मर्धयिता शत्रूणाम् । वशी सर्वस्य प्राणिजातस्य वशयिता । वशोऽस्यास्तीति वशी । वृषा कामानां वर्षिता । सोमपाः सोमस्य पाता । एवं उक्तमहिमोपेतः इन्द्रः अभयंकरः भयराहित्यस्य कर्ता सन् नः अस्माकं संग्रामादौ पुरः पुरस्तात् पूर्वभागे एतु गच्छतु । असा.

(१) ऋसं. १०।१५२।१ साहो अस्तृतः (खादो अद्भुतः); असं. १।२०।४.

(२) ऋसं. १०।१५२।२ विशां पति (विशस्पति); असं. १।२१।१; तैब्रा. ३।७।११।४ विशां पति (विशस्पति) सोमपा (स्वस्तिदा); षब्रा. ५।१; तैआ. १०।१।११, १०।५५ तैब्रावत्; आपश्रौ. ३।१२।१ विमृधो (विमृथो) शेषं तैब्रावत्.

[1]वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
अधमं गमया तमो यो अस्माँ अभिदासति ॥

हे इन्द्र परमैश्वर्ययुक्त देव, नः अस्मभ्यं अस्मदर्थं मृधः । संग्रामनामैतत् । संग्रामान् वि जहि विनाशय, अस्मद्विजयार्थं संग्रामकारिणः शत्रून् मारयेत्यर्थः । तथा पृतन्यतः पृतनां सेनां आत्मन इच्छतः युद्धोद्योगकारिणः शत्रून् नीचा नीचैः यच्छ नियमय, युद्धार्थं संघीभाव-त्यागेन न्यग्भूतान् कुर्वित्यर्थः । अपि च, यः शत्रुः अस्मान् अभिदासति क्षेत्रधनाद्यपहारेण उपक्षपयति, तं शत्रुं अधमं पुनरुत्थानशून्यं निकृष्टं तमः मरणात्मकं गमय प्रापय । असा.

[2]वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः ॥

हे वृत्रहन् वृत्रस्य हन्तरिन्द्र, त्वं रक्षः । जातावेक-वचनम् । बाधकानि रक्षांसि । वीत्युपसर्गश्रवणात् जहीति क्रिया अत्रापि संबध्यते । वि जहि विनाशय । रक्षणीयः अस्मात् सर्वो जनः । 'रक्षो रक्षितव्यमस्मात्' इति

(१) ऋसं. १०।१५२।४ उत्तरार्धे (यो अस्माँ अभिदासत्य-धरं गमया तमः ॥); असं. १।२१।२; सासं. २।२१।१ (१८६८) ऋसंवत्; तैसं. १।६।१२।४ अधमं गमया तमो (अधस्पदं तमीं कृधि); मैसं. ४।१२।३ (५७) अस्माँ (अस्मं) शेषं तैसंवत्; शुसं. ८।४४ ऋसंवत्; शब्रा. ४।६।४।४ ऋसंवत्; आश्रौ. १।२।१०; आपश्रौ. २०।२०।७; नि. ७।२.

(२) ऋसं. १०।१५२।३; असं. १।२१।३; सासं. २।२१।१ (१८६७); तैसं. १।६।१२।५ रक्षो (शत्रून्) जहि (नुद) वृत्रहन्नमित्र (भामितोऽमित्र); तैब्रा. २।४।७।४ तैसंवत्, प्रथम-पादः; आपश्रौ. २०।२०।७; माश्रौ. ९।२।५।१० स्याभिदासतः (स्य शिरो जहि).

यास्कोऽपि ( नि. ४।१८ )। तथा मृधः संग्रामान् वि जहि। तथा वृत्रस्य वृत्रवत् प्रबलस्य शत्रोः हनू कपोलौ वि रुज विभङ्ग्धि, विदारयेत्यर्थः। अभिदासतः अभितः अस्मान् उपक्षपयतः अमित्रस्य शत्रोः मन्युं क्रोधमपि। अत्रापि उपसर्गश्रवणात् जहीति संबध्यते। वि जहि, स्वस्थानास्थितोऽपि यथा मद्विषये मन्युं न करोति तथा कुर्वित्यर्थः। अस्रा.

[1]अपेन्द्र द्विषतो मनोऽप जिज्यासतो वधम्।
वि महच्छर्म यच्छ वरीयो यावया वधम् ॥

हे इन्द्र परमैश्वर्ययुक्त देव, द्विषतः शत्रोः मनः हिंसकं क्रूरं मानसम्। अपेत्युपसर्गश्रवणात् योग्या प्रकृता जहीति क्रिया संबध्यते। अप जहि अपहतं कुरु। तथा जिज्यासतः वयोहानिं तदुपलक्षितं मरणं कर्तुं इच्छतः शत्रोः संबन्धिनं वधं हननसाधनं आयुधम्। पूर्ववत् क्रियाध्याहारः। अप जहि। महत् अधिकं अस्मद्द्वेष्यैरलभ्यं शर्म सुखं वि यच्छ विशेषेण प्रयच्छ। अपि च, वरीयः उरुतरं मन्त्रप्रयोगादिना प्रवृद्धं दुष्परिहरं वधं हननसाधनं शस्त्रास्त्रजालं हे इन्द्र, त्वं यवय वियोजय। अस्रा.

शत्रुसेनासंमोहनकर्म

[2]अग्निर्नः शत्रून् प्रत्येतु विद्वान्
प्रतिदहन्नभिशस्तिमरातिम्।
स सेनां मोहयतु परेषां
निर्हस्तांश्च कृणवज्जातवेदाः ॥

अङ्गति गच्छति सर्वं व्याप्नोतीति अग्निः। नैरुक्तास्तु अग्निशब्दं अक्षरसाम्येन बहुधा व्युत्पादयन्ति। तथाहि— अग्निः अग्रणीः सर्वदेवतानां प्रधानभूतः, 'अग्निरग्रे प्रथमो देवतानाम्' ( तैब्रा. २।४।३।३ ) इति श्रुतेः। देवासुरसंग्रामे देवसेनाया अग्रे नयनाद्वा अग्रणीरग्निः, सेनानीरित्यर्थः। 'अग्निर्देवानां सेनानीः' इति हि ब्राह्मणम्। स च 'इन्द्रो मन्थतु' ( कौसू. १६।९ ) इत्यादिसूत्रोक्तप्रकारेण मन्थनादिसंस्कारसंस्कृतः सेनाग्निरत्र विवक्षितः। सोऽयं अग्निः विद्वान् जयोपायं जानन् नः अस्माकं शत्रून् शातयितॄन् द्वेष्यान् प्रत्येतु प्रतिमुखं गच्छतु, प्रतिमुखो भवतु इत्यर्थः। किं कुर्वन्? अभिशस्तिं आभिमुख्येन अभितो वा हिंसकम्। अरातिं, रातिर्दानं, तेन च श्रेयोमात्रं उपलक्ष्यते। अस्मच्छ्रेयोविघातिनं शत्रुं प्रतिदहन् प्रातिकूल्येन प्रत्यङ्गं प्रतिपुरुषं वा भस्मसात् कुर्वन्। यद्वा, प्रतिदहन् इति 'लक्षणहेत्वोः क्रियायाः' इति हेतौ शतृप्रत्ययः। प्रतिदहनाद्धेतोः शत्रून् प्रत्येतु इति संबन्धः। अपि च, सः अग्निः परेषां शत्रूणां सेनां इनेन अधिपतिना सह वर्तमानां शत्रुहननाय संभूय गमनयुक्तां वा। यथाऽऽहुः— 'सेना सेश्वरा समानगतिर्वा' ( नि. २।११ ) इति। तां चतुरङ्गबलरूपिणीं मोहयतु व्याकुलचित्तां करोतु, युद्धविषयकार्याकार्यविभागज्ञानशून्यां करोतु इत्यर्थः। किंच, जातवेदाः जातानां प्राणिनां वेदिता सर्वज्ञोऽयं अग्निः शत्रून् निर्हस्तान् हस्तव्यापारशून्यान् आयुधग्रहणासमर्थान् कृणवत् कुर्यात्। अस्रा.

यूयमुग्रा मरुत ईदृशे स्था-
भि प्रेत मृणत सहध्वम्।
अमीमृणन् वसवो नाथिता इमे
अग्निर्ह्येषां दूतः प्रत्येतु विद्वान् ॥

हे उग्राः उद्गूर्णबलाः हे मरुतः एतन्नामानो गणदेवाः, यूयं ईदृशे अप्रधृष्ये संग्रामलक्षणे कर्मणि स्थ मत्सहायाः सन्तः संनिहिता भवथ। ततः अभि प्रेत आभिमुख्येन शत्रून् प्रहरणाय गच्छत। अनन्तरं मृणतः हिंसतः युध्यमानान् शत्रून् सहध्वं अभिभवत। तथा इमे वसवः वस्वाख्या गणदेवाः नाथिताः जयार्थं प्रार्थिताः सन्तः अमीमृणन् शत्रून् अस्माकं अभिघातयन्तु। हिशब्दः चार्थे। एषां वसूनां दूतः दूतवत् अग्रेसरः प्रधानभूतः। 'अग्निः प्रथमो वसुभिर्नो अव्यात्' (तैसं. २।१।११।२) इति हि मन्त्रवर्णः। तथाविधः विद्वान् जानन् अग्निश्च प्रत्येतु शत्रून् प्रतिगच्छतु। यद्वा, हि यस्मात् एषां वसूनां दूतः अनुचरः, 'अग्निं दूतं वृणीमहे' (ऋसं. १।१२।१) इत्यादिश्रुतेः। अतः सोऽपि तत्प्रेरितः प्रत्येतु इति। अस्रा.

---

( १ ) ऋसं. १०।१५२।५ महच्छर्म ( मन्योः शर्म ) यावया ( यवया ); असं. १।२१।४.

( २ ) असं. ३।१।१-२.

[1]अमित्रसेनां मघवन्नस्मान् छत्रूयतीमभि ।
युवं तानिन्द्र वृत्रहन्नग्निश्च दहतं प्रति ॥

हे मघवन् धनवन्निन्द्र, अस्मान् त्वत्परिचरणकर्तॄन् निरपराधानपि शत्रूयतीं शत्रूनिव आचरन्तीं अमित्रसेनां शत्रुसेनां अभि । गच्छेति योग्यक्रियाध्याहारः । हे वृत्रहन् वृत्रस्यासुरस्य घातक इन्द्र, त्वं अग्निश्च युवं युवां तां उक्तां शत्रुसेनां प्रति दहतं प्रातिकूल्येन भस्मीकुरुतम् । असा.

[2]प्रसूत इन्द्र प्रवता हरिभ्यां
प्र ते वज्रः प्रमृणन्नेतु शत्रून् ।
जहि प्रतीचो अनूचः पराचो
विष्वक् सत्यं कृणुहि चित्तमेषाम् ॥

हे इन्द्र, ते तव रथः प्रवता प्रवणवता मार्गेण । इन्द्रस्थानापेक्षया शत्रूसेनाप्रदेशः प्रवणः । अनेन अध्वनि रथस्य गतिप्रतिबन्धाभाव उक्तः । हरिभ्यां एतन्नामकाभ्यां अश्वाभ्यां युक्तः सन् सु सुष्ठु प्र एतु शत्रुसेनां प्राप्नोतु । ततः ते त्वदीयो वज्रः प्रमृणन् प्रकर्षेण हिंसन् शत्रून् अस्मदरातीन् प्रैतु प्रगच्छतु । त्वं च प्रतीचः प्रतिमुखं आगच्छतः अनूचः अनु पश्चात् आगच्छतः पराचः पराङ्मुखं गच्छतश्च शत्रून् जहि विनाशय । किंच, एषां शत्रूणां सत्यं व्यवस्थितं शत्रुहननलक्षणैककार्योद्यतं चित्तं अन्तःकरणं विष्वक् सर्वतः अञ्चनशीलं अव्यवस्थितं कार्याकार्यविभागज्ञानशून्यं कृणुहि कुरु । असा.

[3]इन्द्र सेनां मोहयामित्राणाम् ।
अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय ॥

हे इन्द्र, अमित्राणां शत्रूणां सेनां स्वकीयया मायया मोहय मूढां विचित्तां विगतकर्तव्यताचेतसं कुरु । इन्द्रस्य मायासंबन्धः श्रुत्यन्तरे प्रसिद्धः– 'मायामिरिन्द्र मायिनम्' (ऋसं. १।११।७) इति । ततः अग्नेः वातस्य वायोश्च मिलितयोस्तयोः ध्राज्या, ध्राजिः दहनविषये या वेगिता गतिः तथाविधया वेगगत्या तयोरेव वा गत्या तान् सेनागतान् शत्रून् विषूचः सर्वतः पलायमानान् कृत्वा वि नाशय । असा.

इन्द्रः सेनां मोहयतु मरुतो घ्नन्त्वोजसा ।
चक्षूंष्यग्निरा दत्तां पुनरेतु पराजिता ॥

इन्द्रः देवानां अधिपतिः सेनां शत्रुसंबन्धिनीं मोहयतु । तथा तत्सखिभूता मरुतश्च तां सेनां ओजसा बलेन घ्नन्तु । अग्निर्देवः चक्षूंषि शत्रूणां अक्षीणि आ धत्तां स्वयं स्वीकरोतु, अपहरतु इत्यर्थः । एवं मोहनादिना पराजिता पराभूता पुनरेतु प्रतिनिवर्तताम् । असा.

[1]अग्निर्नो दूतः प्रत्येतु विद्वान्
प्रतिदहन्नभिशस्तिमरातिम् ।
स चित्तानि मोहयतु परेषां
निर्हस्तांश्च कृणवज्जातवेदाः ॥

अग्निः अङ्गनादिगुणयुक्तः दूतः देवानां दूतवत् अग्रेसरः विद्वान् जयोपायं जानन् नः अस्माकं शत्रून् शातयितॄन् द्वेष्यान् प्रत्येतु प्रतिमुखं गच्छतु, प्रतिमुखो भवतु इत्यर्थः । किं कुर्वन् ? अभिशस्तिं आभिमुख्येन अभितो वा हिंसकम् । अरातिं, रातिः दानं, तेन च श्रेयोमात्रं उपलक्ष्यते । अस्मच्छ्रेयोविघातिनं शत्रुं प्रतिदहन् प्रातिकूल्येन प्रत्यङ्गं प्रतिपुरुषं वा भस्मसात्कुर्वन् । यद्वा, प्रतिदहन् इति 'लक्षणहेत्वोः क्रियायाः' इति हेतौ शतृप्रत्ययः । प्रतिदहनाद्धेतोः शत्रून् प्रत्येतु इति संबन्धः । अपि च, सः अग्निः परेषां शत्रूणां चित्तानि मोहयतु व्याकुलानि करोतु, युद्धविषयकार्याकार्यविभागज्ञानशून्यानि करोतु इत्यर्थः । किंच, जातवेदाः जातानां प्राणिनां वेदिता सर्वज्ञोऽयमग्निः शत्रून् निर्हस्तान् हस्तव्यापारशून्यान् आयुधग्रहणासमर्थान् कृणवत् कुर्यात् । असा.

अयमग्निरमूमुहद्यानि चित्तानि वो हृदि ।
वि वो धमत्वोकसः प्र वो धमतु सर्वतः ॥

(१) असं. ३।१।३ ; सासं. २।२१।१ (१८६५) छत्रू (छत्रु) युवं तानिन्द्र (उभौ तामिन्द्र).

(२) ऋसं. ३।३०।६ प्रसूत (प्र सू त) विष्वक् (विश्वं) चित्तमेषाम् (विष्टमस्तु) ; असं. ३।१।४.

(३) असं. ३।१।५–६.

(१) असं. ३।२।१–४.

हे शत्रवः, वः युष्माकं हृदि हृदये यानि चित्तानि अस्मदाक्रमणविषयज्ञानानि सन्ति तानि सर्वाणि अयं हूयमानोऽग्निः अज्ञनादिगुणयुक्तः अमूमुहत् मोहयतु । ततो वः युष्मान् ओकसः स्वस्वनिवासस्थानात् वि धमतु विशेषेण निःसारयतु, स्थानभ्रष्टान् करोतु इत्यर्थः । अपि च, सर्वतः सर्वस्मादपि स्थानात् वः युष्मान् प्र धमतु प्रकर्षेण गमयतु, स्थानशून्यान् करोतु इत्यर्थः । असा.

**इन्द्र चित्तानि मोहयन्नर्वाङाकूत्या चर ।**
**अग्नेर्वातस्य ध्राज्या तान् विषूचो वि नाशय ॥**

हे इन्द्र, चित्तानि शत्रूणां मनांसि मोहयन् आकूत्या अस्मच्छत्रुसंहरणबुद्ध्या सहितः सन् अर्वाङ् शत्रुसेनाभिमुखः चर गच्छ । ततः अग्नेः वातस्य वायोश्च मिलितयोस्तयोः ध्राज्या, ध्राजिः दहनविषये या वेगिता गतिः तथाविधया वेगगत्या तयोरेव वा गत्या तान् सेनागतान् शत्रून् विषूचः सर्वतः पलायमानान् कृत्वा वि नाशय । असा.

**व्याकूतय एषामिताथो चित्तानि मुह्यत ।**
**अथो यदद्यैषां हृदि तदेषां परि निर्जहि ।**

हे व्याकूतयः विरुद्धाः संकल्पाः, यूयं एषां शत्रूणां मनांसि इत प्राप्नुत । अथो अपि च हे चित्तानि शत्रुसंबन्धीनि मनांसि, यूयमपि मुह्यत मौढ्यं प्राप्नुत । यद्वा, हे देवाः, यूयं एषां शत्रूणां व्याकूतयः विविधाकूत्युत्पादकाः सन्तः इत तान् गच्छत । अथो अपि च तदीयानि चित्तानि मुह्यत मोहयत । अथो अपि च हे इन्द्र, एषां संग्रामार्थं प्रवृत्तानां शत्रूणां हृदि हृदये अद्य इदानीं यत् चिकीर्षितं कार्यजातं अस्ति एषां संबन्धि तत् सर्वं परि निर्जहि परितः सर्वतो नाशय । असा.

**[१]अमीषां चित्तानि प्रतिमोहयन्ती**
**गृहाणाङ्गान्यप्वे परेहि ।**
**अभि प्रेहि निर्दह हृत्सु शोकै-**
**र्ग्राह्यामित्रांस्तमसा विध्य शत्रून् ॥**

हे अप्वे, अपवाययति अपगमयति सुखं प्राणांश्चेति अप्वा पापदेवता । हे तथाविधे पापदेवते, अमीषां अस्मच्छत्रूणां चित्तानि मनांसि प्रतिमोहयन्ती प्रत्येकं मौढ्यं गमयन्ती । हेतौ शतृप्रत्ययः । प्रतिमोहनाद्धेतोः अङ्गानि गृहाण । हे अप्वे, त्वत्कर्तृकस्य शत्रुग्रहणस्यायं प्राप्तः कालः तदर्थं परेहि अस्मत्तः पराङ्मुखी सती शत्रून् गच्छ । गत्वा च अभि प्रेहि अभितः सर्वतः शत्रुशरीरं प्रसर्प, प्रविशेत्यर्थः । प्रविश्य च हृत्सु हृदयेषु स्थिता सती शोकैः रोगभयादिजन्यैः निर्दह । ततः तमसा तमोरूपया ग्राह्या पिशाच्या शत्रून् शातयितॄन् अमित्रान् द्वेष्यान् विध्य ताडय, मारयेत्यर्थः । असा.

**[१]असौ या सेना मरुतः परेषा-**
**मस्मानैत्यभ्योजसा स्पर्धमाना ।**
**तां विध्यत तमसाऽपव्रतेन**
**यथैषामन्यो अन्यं न जानात् ॥**

हे मरुतः, असौ परिदृश्यमाना परेषां शत्रूणां या सेना ओजसा स्वकीयेन बलातिशयेन स्पर्धमाना अस्माभिः सह संघर्षं युद्धोद्यमं कुर्वाणा सती अस्मान् अभि ऐति अस्मदभिमुखं आगच्छति । तां तथाविधां शत्रुसेनां अपव्रतेन । व्रतं इति कर्मनाम । अपगतकर्मणा सर्वव्यापारविघातकेन तमसा भवद्भिः प्रेरितेन मायामयेन अन्धकारेण विध्यत ताडयत । तत्प्रकारं दर्शयति– एषां शत्रूणां मध्ये अन्यः कश्चित् पुरुषः अन्यं स्वव्यतिरिक्तं पुरुषं यथा येन प्रकारेण न जानात् न जानीयात् । तथा विध्यतेति संबन्धः । परस्परवार्तानभिज्ञान् कृत्वा विनाशयतेत्यर्थः । असा.

---

(१) ऋसं. १०।१०३।१२ चित्तानि प्रतिमोह ( चित्तं प्रतिलोभ ) शोकै ...... विध्य शत्रून् ( शोकैरन्धेनामित्रास्तमसा सचन्ताम् ) ; असं. ३।२।५ ; सासं. २।२११ ( १८६१ ) ऋसंवत् ; शुसं. १७।४४ ऋसंवत् ; नि. ९।३३.

( १ ) ऋसं. ( खिल ) ३।२११ मस्मानैत्यभ्योजसा ( मभ्यैति न ओजसा ) विध्यत ( गूहत ) यथैषा ( यथामीषा ) ; असं. ३।२।६ ; सासं. २।२११ ( १८६० ) मस्मानैत्यभ्योजसा (मभ्येति न ओजसा) विध्यत ( गूहत ) यथैषा ( यथैतेषा ) ; शुसं. १७।४७ पूर्वार्धं ऋसंवत्, विध्यत ( गूहत ) यथैषामन्यो ( यथामीऽअन्यो ) जानात् ( जानन् ).

संग्रामजयकर्म

**[1]संशितं म इदं ब्रह्म संशितं वीर्यं[1] बलम् ।
संशितं क्षत्रमजरमस्तु जिष्णुर्येषामस्मि
पुरोहितः ॥**

मे मदीयं इदं ब्रह्म ब्राह्मणत्वं संशितं जातिभ्रंशकरदोषपरिहारेण सम्यक् तीक्ष्णीकृतं भवतु । तीक्ष्णीकृते हि ब्राह्मणत्वे स्वेन क्रियमाणं शान्तिकपौष्टिकादि कर्म समृद्धफलं भवतीति आदौ तत्प्रार्थना । यद्वा, ब्रह्मशब्दो वेदवाची । प्रयुज्यमानमन्त्रात्मकं इदं ब्रह्म तीक्ष्णीकृतम्, अमोघफलं भवतु इत्यर्थः । तथा मदीयं वीर्यं मन्त्रप्रभावजनितं सामर्थ्यं शारीरं बलं च संशितं सम्यक् तीक्ष्णीकृतं अस्तु । तथा मदीयं क्षत्रं क्षत्रियजातिः संशितं मन्त्रप्रभावेन तीक्ष्णीकृतं सत् अजरं जरारहितम् । अत्र शरीरावयवानां सेनावयवहस्त्यश्वादीनां च क्षयो जराशब्देन विवक्षितः । तद्रहितं जिष्णु जयशीलं अस्तु । कस्मात् एवं अन्यगतं फलं प्रार्थ्यते इति तत्राह— येषामिति । पूजार्थे बहुवचनम् । यस्य क्षत्रियस्य अहं पुरोहितः ऐहिकामुष्मिकसकलश्रेयोविषये पुरस्तात् निहितः अस्मि भवामि । यस्मादेवं पौरोहित्ये वृतोऽस्मि अतो मदीयस्य राज्ञो जयार्थं एवं प्रार्थ्यते इत्यर्थः । असा.

**[2]समहमेषां राष्ट्रं स्यामि समोजो वीर्यं[1] बलम् ।
वृश्चामि शत्रूणां बाहूननेन हविषाऽहम् ॥**

पूर्वत्र येषां इति यच्छब्दनिर्दिष्टोऽर्थः एषां इति इदमा परामृश्यते । येषां राज्ञां देशे अहं निवसामि एषां राष्ट्रं जनपदं सं श्यामि सम्यक् तीक्ष्णीकरोमि, धनकनकसमृद्धं करोमीत्यर्थः । ओजः, बलनामैतत् । येन बलेन क्षेत्रज्ञस्य शरीरे अवस्थितिर्भवति तत् ओजःशब्दवाच्यम् । उक्तं हि आचार्यैः— 'क्षेत्रज्ञस्य तदोजस्तु केवलाश्रय इष्यते । यथा स्नेहः प्रदीपस्य यथाऽभ्रमशनित्विषः ॥' इति । तादृशं शरीरदार्ढ्यनिमित्तं ओजः तज्जनितं वीर्यं पराभिभवसामर्थ्यं अन्यदपि हस्त्यश्वादिलक्षणं बलं च । सं श्यामीति संबन्धः । मन्त्रसामर्थ्येन दृढीकरोमीत्यर्थः । तथा अहं मदीयस्य राज्ञः शत्रूणां बाहून् अनेन हूयमानेन आज्यसक्त्वादिरूपेण हविषा वृश्चामि छिनद्मि, आयुधग्रहणासमर्थान् भ्रष्टवीर्यान् करोमीत्यर्थः । असा.

**नीचैः पद्यन्तामधरे भवन्तु ये नः सूरिं
मघवानं पृतन्यान् ।
क्षिणामि ब्रह्मणाऽमित्रानुन्नयामि स्वानहम् ॥**

मदीयाः शत्रवः नीचैः पद्यन्तां अवाङ्मुखाः पतन्तु । ततश्च अधरे निकृष्टाः पादाक्रान्ता भवन्तु । कीदृशास्ते शत्रव इति उच्यते— नः अस्मदीयं सूरिं कार्याकार्यविभागज्ञं मघवानम् । मघं इति धननाम । प्रभूतधनयुक्तं राजानं जेतुं ये शत्रवः पृतन्यान् पृतन्यन्ति पृतनां सेनां आत्मन इच्छन्ति । ते नीचैः पद्यन्तां इति संबन्धः । उक्तप्रयोजनसिद्धये ब्रह्मणा परिवृढेन अमोघवीर्येण मन्त्रेण अमित्रान् शत्रून् अहं क्षिणोमि हिनस्मि । न केवलं शत्रूणां हिंसनं अपि तु स्वान् स्वकीयान् राज्ञः उन्नयामि, उत्कृष्टं जयं प्रापयामीत्यर्थः । असा.

**तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत ।
इन्द्रस्य वज्रात्तीक्ष्णीयांसो येषामस्मि
पुरोहितः ॥**

येषां राज्ञां अहं पुरोहितः अस्मि ते राजानः परशोः वृक्षच्छेदनसमर्थात् निशितधारात् तीक्ष्णीयांसः अतिशयेन तीक्ष्णाः शत्रुबलच्छेदनसमर्था भवन्तु । तथा अग्नेः विश्वदहनसमर्थादपि तीक्ष्णतराः अतिशयेन तीक्ष्णाः । क्षणमात्रेण कृत्स्नं शत्रुबलं दग्धुं समर्था भवन्तु इत्यर्थः । उतशब्दः अप्यर्थे । स च भिन्नक्रमो योजितः । तथा इन्द्रस्य वज्रात् । स खलु वृत्रासुरादिहनने शिलोच्चयपक्षच्छेदनादौ च अकुण्ठितशक्तित्वेन प्रसिद्धः । ततोऽपि तीक्ष्णीयांसः अतिशयेन तीक्ष्णाः निशिताः, अप्रतिहतगतयो भवन्तु इत्यर्थः । असा.

---

(१) असं. ३।१९।१ ; तैसं. ४।१।१०।३ म इदं ब्रह्म (मे ब्रह्म) उत्तरार्धे (संशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥); कासं. १६।७ (८०) म इदं ब्रह्म (मे ब्रह्म) उत्तरार्धे (संशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः ॥); मैसं. २।७।७ (९१) ; शुसं. ११।८१ तैसंवत् ; शब्रा. ६।६।३।१४ संशितं म (संशिते मे) शेषं तैसंवत्.

(२) असं. ३।१९।२–७.

एषामहमायुधा सं स्याम्येषां
राष्ट्रं सुवीरं वर्धयामि ।
एषां क्षत्रमजरमस्तु जिष्ण्वे३-
षां चित्तं विश्वेऽवन्तु देवाः ॥

अहं एषां अस्मदीयानां राज्ञां आयुधा आयुधानि बाणखड्गकुन्तादीनि संश्यामि सम्यक् तीक्ष्णीकरोमि । एषां राष्ट्रं राज्यं सुवीरं शोभनवीरोपेतं वर्धयामि समृद्धं करोमि । अपि च, एषां राज्ञां क्षत्रं क्षतात् त्रायकं बलं क्षत्रियत्वं वा अजरं जरारहितं जिष्णु जयशीलं चास्तु । तथा एषां चित्तं युद्धोन्मुखं मनः विश्वे सर्वे देवाः अवन्तु रक्षन्तु । असा.

उद्धर्षन्तां मघवन् वाजिनान्यु-
द्वीराणां जयतामेतु घोषः ।
पृथग्घोषा उलुलयः केतुमन्त उदीरताम् ।
देवा इन्द्रज्येष्ठा मरुतो यन्तु सेनया ॥
प्रेता जयता नर उग्रा वः सन्तु बाहवः ।
तीक्ष्णेषवोऽबलधन्वनो हतोग्रायुधा
अबलानुग्रबाहवः ॥

हे मघवन् धनवन्निन्द्र, त्वत्प्रसादात् वाजिनानि बलानि हस्त्यश्वरथादीनि युद्धविषये उद्धर्षन्तां उत्कृष्टहर्षयुक्तानि भवन्तु । तथा जयतां जयं प्राप्नुवतां अस्मदीयानां वीराणां शूराणां जयप्रयुक्तो घोषः सिंहनादाख्यः उदेतु उद्गच्छतु, परश्रोत्राण्यभिभूय वर्ततां इत्यर्थः । एतदेव विव्रियते— पृथगिति । उल्लुलय इति । अनुकरणशब्दोऽयम् । उल्लुलु इत्येवमात्मकाः केतुमन्तः प्रज्ञानवन्तः सर्वैः प्रज्ञायमाना जयप्रयुक्ता घोषाः पृथक् इतस्ततः उत् ईरतां उद्गच्छन्तु ।

* इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठः श्रेष्ठः स्वामी येषां तथाविधा मरुतो देवाः युद्धेषु अस्माकं साहायकं आचरितुं सेनया स्वस्वसेनया सार्धं यन्तु प्राप्नुवन्तु । हे नरः नेतारः अस्मदीया भटाः, प्रेत प्रक्रम्य युद्धभूमिं गच्छत । ततो देवैरनुगृहीताः शत्रून् जयत । वः युष्माकं तीक्ष्णेषवः निशितबाणाद्यायुधोपेताः बाहवः उग्राः उद्गूर्णबलाः शत्रुप्रहरणसमर्थाः सन्तु भवन्तु । ततो यूयं उग्रायुधाः निशितनिस्त्रिंशबाणाद्यायुधोपेताः अत एव उग्रबाहवः उद्गूर्णहस्ताः सन्तः अबलधन्वनः बलरहितधनुराद्यायुधोपेतान् अत एव अबलान् बलशून्यान् हत हिंस्त, पञ्चत्वं प्रापयतेत्यर्थः । असा.

* 'देवा इन्द्रज्येष्ठाः' इत्यादिर्मन्त्रांशः उत्तरमन्त्रावयवो भाष्यकारमतेन ।

[१]अवसृष्टा परा पत शरव्ये ब्रह्मसंशिते ।
जयामित्रान् प्र पद्यस्व जह्येषां वरंवरं
माऽमीषां मोचि कश्चन ॥

हे ब्रह्मसंशिते ब्रह्मणा मन्त्रेण तीक्ष्णीकृते शरव्ये हिंसाकुशले इषो, त्वं अवसृष्टा अस्माभिर्धनुषो विनिर्मुक्ता परा पत परागच्छ शत्रुसेनाभिमुखं गच्छ । गत्वा च तान् अमित्रान् शत्रून् जय । तत्प्रकारमाह— प्र पद्यस्वेत्यादिना । प्रथमं शत्रून् प्र पद्यस्व प्रविश । एषां मध्ये वरंवरं श्रेष्ठं हस्त्यश्वपदातिलक्षणं बलं जहि मारय । अमीषां दूरे दृश्यमानानां शत्रूणां मध्ये कश्चन कोऽपि वीरो मा मोचि मुक्तो मा भूत्, सर्वोऽपि त्वया हन्तव्य इत्यर्थः । असा.

संग्रामजयकर्म, युद्धदुन्दुभिः

[२]उच्चैर्घोषो दुन्दुभिः सत्वनायन्
वानस्पत्यः संभृत उस्रियाभिः ।
वाचं क्षुणुवानो दमयन्त्सपत्ना-
न्त्सिंह इव जेष्यन्नभि तंस्तनीहि ॥

(१) ऋसं. ६।७५।१६ उत्तरार्धे (गच्छामित्रान् प्र पद्यस्व मामीषां कं चनोच्छिषः ॥); असं. ३।१९।८; सासं. २।२१।१ (१८६३) ऋसंवत्; तैसं. ४।६।४।४ संशिते (संशिता) उत्तरार्धे (गच्छामित्रान् प्र विश मैषां कं चनोच्छिषः ॥); शुसं. १७।४५ ऋसंवत्; तैब्रा. ३।७।६।२३ पूर्वार्धे (अवसृष्टः परापत शरो ब्रह्मसंशितः ।) उत्तरार्धं तैसंवत्; आपश्रौ. ३।१४।३ तैब्रावत्.

(२) असं. ५।२०।१-१२.

सिंह इवास्तानीद् द्रुवयो विबद्धो-
ऽभिक्रन्दन्नृषभो वासितामिव ।
वृषा त्वं वध्रयस्ते सपत्ना
ऐन्द्रस्ते शुष्मो अभिमातिषाहः ॥

वृषेव यूथे सहसा विदानो
गव्यन्नभि रुव संधनाजित् ।
शुचा विध्य हृदयं परेषां
हित्वा ग्रामान् प्रच्युता यन्तु शत्रवः ॥

संजयन् पृतना ऊर्ध्वमायु-
र्गृह्या गृह्णानो बहुधा वि चक्ष्व ।
दैवीं वाचं दुन्दुभ आ गुरस्व
वेधाः शत्रूणामुप भरस्व वेदः ॥

दुन्दुभेर्वाचं प्रयतां वदन्ती-
माशृण्वती नाथिता घोषबुद्धा ।
नारी पुत्रं धावतु हस्तगृह्या-
ऽऽमित्री भीता समरे वधानाम् ॥

पूर्वो दुन्दुभे प्र वदासि वाचं
भूम्याः पृष्ठे वद रोचमानः ।
अमित्रसेनामभिजञ्जभानो
द्युमद्वद दुन्दुभे सूनृतावत् ॥

अन्तरेमे नभसी घोषो अस्तु
पृथक् ते ध्वनयो यन्तु शीभम् ।
अभि क्रन्द स्तनयोत्पिपानः
श्लोककृन्मित्रतूर्याय स्वर्धी ॥

धीभिः कृतः प्र वदाति वाच-
मुद्धर्षय सत्वनामायुधानि ।
इन्द्रमेदी सत्वनो नि ह्वयस्व
मित्रैरमित्राँ अव जङ्घनीहि ॥

संक्रन्दनः प्रवदो धृष्णुषेणः
प्रवेदकृद्बहुधा ग्रामघोषी ।
श्रेयो वन्वानो वयुनानि विद्वान्
कीर्तिं बहुभ्यो वि हर द्विराजे ॥

श्रेयःकेतो वसुजित्सहीया-
न्त्संग्रामजित्संशितो ब्रह्मणाऽसि ।
अंशूनिव ग्रावाधिषवणे अद्रि-
र्गव्यन् दुन्दुभेऽधि नृत्य वेदः ॥

शत्रूषाण्नीषाडभिमातिषाहो
गवेषणः सहमान उद्भित् ।
वाग्वीव मन्त्रं प्र भरस्व वाचं
सांग्रामजित्यायेषमुद्वदेह ॥

अच्युतच्युत्समदो गमिष्ठो
मृधो जेता पुरएताऽयोध्यः ।
इन्द्रेण गुप्तो विदथा निचिक्य-
द्धृद्द्योतनो द्विषतां याहि शीभम् ॥

[1]विहृदयं वैमनस्यं वदामित्रेषु दुन्दुभे ।
विद्वेषं कश्मशं भयममित्रेषु
नि दध्मस्यवैनान् दुन्दुभे जहि ॥
उद्वेपमाना मनसा चक्षुषा हृदयेन च ।
धावन्तु बिभ्यतोऽमित्राः प्रत्रासेनाऽऽज्ये हुते ॥
वानस्पत्यः संभृत उस्रियाभिर्विश्वगोत्र्यः ।
प्रत्रासममित्रेभ्यो वदाऽऽज्येनाभिघारितः ॥
यथा मृगाः संविजन्त आरण्याः पुरुषादधि ।
एवा त्वं दुन्दुभेऽमित्रानभि क्रन्द
प्र त्रासयाथो चित्तानि मोहय ॥
यथा वृकादजावयो धावन्ति बहु बिभ्यतीः ।
एवा त्वं० ॥
यथा श्येनात्पतत्रिणः संविजन्ते
अहर्दिवि सिंहस्य स्तनथोर्यथा ।
एवा त्वं० ॥
परामित्रान् दुन्दुभिना हरिणस्याजिनेन च ।
सर्वे देवा अतित्रसन् ये संग्रामस्येशते ॥
यैरिन्द्रः प्रक्रीडते पद्घोषैश्छायया सह ।
तैरमित्रास्त्रसन्तु नोऽमी ये यन्त्यनीकशः ॥

(१) अथ. ५।२१।१-१२.

ज्याघोषा दुन्दुभयोऽभि क्रोशन्तु या दिशः ।
सेनाः पराजिता यतीरमित्राणामनीकशः ॥

आदित्य चक्षुरा दत्स्व मरीचयोऽनु धावत ।
पत्सङ्गिनीरा सजन्तु विगते बाहुवीर्ये ॥

यूयमुग्रा मरुतः पृश्निमातर
इन्द्रेण युजा प्र मृणीत शत्रून् ।
सोमो राजा वरुणो राजा
महादेव उत मृत्युरिन्द्रः ॥

एता देवसेनाः सूर्यकेतवः सचेतसः ।
अमित्रान्नो जयन्तु स्वाहा ॥

[1]अव मन्युरवाऽऽयताव बाहू मनोयुजा ।
पराशर त्वं तेषां पराञ्चं शुष्ममर्दयाधा
नो रयिमा कृधि ॥

शत्रुसंबन्धी मन्युः क्रोधः । 'अव मन्युं तनोमि ते' (असं. ६।४२।२) इति अन्यत्राम्नानात् तत इति संबध्यते । अवततः शत्रुपातितः तिरस्कृतो विनष्टो भवतु । तथा आयता आयतानि आयम्यमानानि धनुः-प्रभृतीनि आयुधानि अवततानि स्वस्वकार्यासमर्थानि भवन्तु । तथा बाहू शत्रुसंबन्धिनौ मनोयुजा मनोयुजौ मनःसहितौ अव अवाचीनौ आयुधोद्यमनाशक्तौ । भवतां इत्यर्थः । हे पराशर । परागत्य शृणाति हिनस्ति शत्रून् इति पराशरः इन्द्रः, 'इन्द्रो वोऽद्य पराशरीत्' (असं. ६।६६।२) इत्यत्र समाम्नानात्, 'पराशर इति निगमो भवति' (नि. ६।३०) इति यास्कवचनाच्च । हे तादृश, त्वं तेषां शत्रूणां शुष्मम् । बलनामैतत् । शोषकं बलं पराञ्चं पराङ्मुखं असदनभिमुखं यथा भवति तथा अर्दय बाधस्व । अथ अनन्तरं रयिं धनं शत्रूणां स्वभूतं नः अस्माकं आ कृधि आभिमुख्येन कुरु, प्रयच्छेत्यर्थः । असा.

निर्हस्तेभ्यो नैर्हस्तं यं देवाः शरुमस्यथ ।
वृश्चामि शत्रूणां बाहूननेन हविषाऽहम् ॥

(१) असं. ६।६५।१-३.

हे देवाः, निर्हस्तेभ्यः निर्गता हस्ता येभ्यस्ते निर्हस्ताः, निर्गतहस्तसामर्थ्या इत्यर्थः । तादर्थ्ये चतुर्थी । असुराणां निर्हस्तत्वप्राप्तये इत्यर्थः । नैर्हस्तं निर्हस्तत्वप्रापकं यं शरुं हिंसकं बाणाद्यायुधं अस्यथ क्षिपथ । अनेन शरादिरूपेण हविषा हूयमानेन देवसंबन्धिनैव आयुधेन शत्रूणां बाहून् आयुधग्रहणार्थान् अहं वृश्चामि छिनद्मि । असा.

इन्द्रश्चकार प्रथमं नैर्हस्तमसुरेभ्यः ।
जयन्तु सत्वानो मम स्थिरेणेन्द्रेण मेदिना ॥

इन्द्रः देवानां अधिपतिः प्रथमं पूर्वे असुरेभ्यः शत्रुभ्यः नैर्हस्तं निर्हस्तत्वं हस्तसामर्थ्यवैकल्यं चकार कृतवान् । तादृशेन इन्द्रेण स्थिरेण युद्धकर्मणि दृढेन मेदिना स्निग्धेन सहायभूतेन मम मदीयाः सत्वानः सादयन्ति विशरणं प्रापयन्तीति योद्धृजनाः सत्वानः जयन्तु शत्रून् पराजितान् कुर्वन्तु । असा.

[1]निर्हस्तः शत्रुरभिदासन्नस्तु
ये सेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेन्द्र महता वधेन
द्रात्वेषामघहारो विविद्धः ॥

अभिदासन् उपक्षपयन् अस्माकं पीडां कुर्वन् शत्रुः निर्हस्तोऽस्तु निर्गतहस्तसामर्थ्यो भवतु । शत्रुरिति जातावेकवचनम् । ये शत्रवः सेनाभिः स्वकीयाभिः युधं योद्धुं अस्मान् आयन्ति अभिगच्छन्ति, हे इन्द्र, तान् शत्रून् महता प्रौढेन वधेन हननसाधनेन आयुधेन वज्रेण समर्पय संयोजय । एषां शत्रूणां मध्ये यः शूरो भटः अघहारः अघस्य मरणलक्षणस्य दुःखस्य प्रापयिता असौ विविद्धः विशेषेण ताडितः सन् द्रातु कुत्सितां गतिं प्राप्नोतु । असा.

आतन्वाना आयच्छन्तोऽस्यन्तो ये च धावथ ।
निर्हस्ताः शत्रवः स्थनेन्द्रो वोऽद्य पराशरीत् ॥

आतन्वानाः धनूंषि आततज्यानि कुर्वाणाः आयच्छन्तः शरसंधानेन धनूंषि आकर्षन्तः अस्यन्तः शरान् क्षिपन्तः धनुःसकाशात् नुदन्तः ये शत्रवः ये च यूयं धावथ

(१) असं. ६।६६।१-३.

अस्मदभिमुखं शीघ्रं गच्छथ । ते यूयं शत्रवः निर्हस्ताः निर्वीर्यहस्ताः स्तन भवत । अद्य इदानीं वः युष्मान् इन्द्रः पराशरीत् पराहतान् अकार्षीत् । असा.

**निर्हस्ताः सन्तु शत्रवोऽङ्गैषां म्लापयामसि ।**
**अथैषामिन्द्र वेदांसि शतशो वि भजामहै ॥**

अस्मदीयाः शत्रवः निर्हस्ताः सन्तु भवन्तु । एषां शत्रूणां अङ्गा अङ्गानि हस्तपादाद्यवयवान् म्लापयामसि म्लापयामः, क्षीणहर्षान् कुर्मः । अथ अनन्तरं हे इन्द्र, त्वत्प्रसादात् एषां शत्रूणां वेदांसि । धननामैतत् । धनानि शतशः बहुधा वि भजामहै विभज्य प्राप्नुयाम । असा.

[1]**परि वर्त्मानि सर्वत इन्द्रः पूषा च सस्रतुः ।**
**मुह्यन्त्वद्यामूः सेना अमित्राणां परस्तराम् ॥**

इन्द्रः पूषा च इमौ देवौ सर्वतः सर्वासु दिक्षु वर्त्मानि संचरणमार्गान् परि सस्रतुः परितो निरुध्य गच्छताम् । अद्य इदानीं अमूः दूरे दृश्यमानाः अमित्राणां शत्रूणां सेनाः रथतुरगपदातयः परस्तरां अतिशयेन मुह्यन्तु व्यामूढचित्ताः कार्याकार्यज्ञानशून्या भवन्तु । असा.

[2]**मूढा अमित्राश्चरताशीर्षाण इवाहयः ।**
**तेषां वो अग्निमूढानामिन्द्रो हन्तु वरंवरम् ॥**

हे अमित्राः शत्रवः, मूढाः जयोपायज्ञानशून्याः चरत युद्धभूमौ संचरत । तत्र दृष्टान्तः— अशीर्षाण इवाहयः । अशिरस्काः छिन्नशिरसः सर्पाः केवलं चेष्टन्त एव न तु किंचित् कार्यं कर्तुं शक्नुवन्ति तथा भवतेत्यर्थः । तेषां तादृशानां अग्निमूढानां अस्मदाहुतितृप्तेन अग्निना व्यामोहं प्रापितानां वः युष्माकं मध्ये वरंवरं श्रेष्ठं श्रेष्ठं नायकं इन्द्रो देवो हन्तु मारयतु । असा.

[3]**ऐषु नह्य वृषाऽजिनं हरिणस्या भियं कृधि ।**
**पराङमित्र एषत्वर्वाची गौरुपेषतु ॥**

हे इन्द्र, वृषा कामानां वर्षिता त्वं हरिणस्य कृष्णमृगस्य अजिनं त्वचं सोममणिवेष्टनं एषु अस्मदीयेषु भटेषु आ नह्य आबद्धं कुरु । ततः शत्रूणां भियं भीतिं कृधि कुरु उत्पादय । अमित्रः शत्रुः पराङ् युद्धपराङ्मुखः सन् एषतु गच्छतु, पलायतामित्यर्थः । ततः शत्रुसंबन्धिनी गौः अर्वाची अस्मदभिमुखा उपेषतु उपगच्छतु । शत्रुसंबन्धि गवादि धनं अस्मान् प्राप्नोत्वित्यर्थः । असा.

(१) असं. ६।६७।१.
(२) ऋसं. ( खिल ) ३।२१।२ पूर्वार्धे ( अन्धा अमित्रा भवताशीर्षाणोऽहय इव । ) मूढाना (दग्धाना); असं. ६।६७।२; सासं. २।२११।१ ( १८७१ ) पूर्वार्धं ऋसंवत्, मूढाना (नुन्नाना).
(३) असं. ६।६७।३.

विजयस्वस्त्ययनकर्म

[1]**निरमुं नुद ओकसः सपत्नो यः पृतन्यति ।**
**नैर्बाध्येन हविषेन्द्र एनं पराशरीत् ॥**

अमुं शत्रुं ओकसः स्वनिवासस्थानात् निर्नुदे निर्गमयामि, मन्त्रसामर्थ्येन स्वस्थानात् प्रच्यावयामीत्यर्थः । कः पुनरसौ इत्याह— यः सपत्नः शत्रुः पृतन्यति अस्मान् बाधितुं पृतनां सेनां आत्मन इच्छति । निर्नोदनप्रकारमाह— नैर्बाध्येनेति । निःशेषेण बाधः निर्बाधः, तं अर्हतीति निर्बाध्यो हन्तव्यः शत्रुः, तद्विषये प्रयुज्यमानं हविः नैर्बाध्यम् । निर्बाधनक्षमेण हविषा आज्यादिना हूयमानेन परितुष्ट इन्द्रः एनं शत्रुं पराशरीत् पराशृणातु, यथा न पुनरावर्तते तथा पराङ्मुखं हिनस्तु इत्यर्थः । असा.

[2]**परमां तं परावतमिन्द्रो नुदतु वृत्रहा ।**
**यतो न पुनरायति शश्वतीभ्यः समाभ्यः ॥**

वृत्रहा वृत्रं असुरं हतवान् इन्द्रः तं शत्रुं परमां परावतम् । परावत् इति दूरनाम । अतिशयितदूरदेशं नुदतु प्रेरयतु । तं दूरदेशं विशिनष्टि— यतः यस्मात् दूरात् प्रणुत्तः शत्रुः शश्वतीभ्यः समाभ्यः बहुसंवत्सरकालादपि न पुनरायति पुनर्नावर्तते, तादृशं अत्यन्तदूरं देशं शत्रुं गमयत्वित्यर्थः । असा.

(१) असं. ६।७५।१ ; तैब्रा. ३।३।११।३ नैर्बा ( निर्बा ) एनं ( एणं ) ; आपश्रौ. ३।१४।२ तैब्रावत्.
(२) असं. ६।७५।२ ; तैब्रा. ३।३।११।३ तं परा ( त्वा परा ) नुदतु ( नयतु ) रायति ( रायसि ) ; आपश्रौ. ३।१४।२ तैब्रावत्.

[1]एतु तिस्रः परावत एतु पञ्च जनाँ अति ।
एतु तिस्रोऽति रोचना यतो न पुनरायति
शश्वतीभ्यः समाभ्यो यावत्सूर्यो असद्दिवि ॥

इन्द्रेण नुन्नः असन्च्छत्रुः परावतः दूरवर्तिनीः तिस्रो भूमीः अत्येतु अतिक्रम्य गच्छतु । 'त्रयो वा इमे त्रिवृतो लोकाः' (ऐब्रा. २।१७) इति वाक्यशेषात् 'तिस्रो भूमीर्धारयन्' (ऋसं. २।२७।८) इति मन्त्रवर्णाच्च तिस्रः परावत इत्युक्तम् । तथा पञ्च जनान् । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः । तान् अत्येतु । मनुष्यसंचारदेशं विहाय दूरं गच्छत्वित्यर्थः । तथा तिस्रः त्रिसंख्याका रोचनाः सूर्यचन्द्राग्नीनां रोचमानाः प्रभाः अत्येतु अतिक्रम्य गच्छतु । सूर्यादीनां प्रभाः यत्र न सन्ति तं देशं गच्छत्वित्यर्थः । यतो न पुनरायतीत्यादि व्याख्यातम् । उक्तं कालबहुत्वं विशिनष्टि- यावत्सूर्य इति । यावत्कालपर्यन्तं दिवि द्युलोके सूर्यः सर्वस्य प्रेरकः आदित्यः असत् भवेत्, तावत्कालपर्यन्तं शत्रुः पुनर्नावर्ततां इत्यर्थः । असा.

[2]य एनं परिषीदन्ति समादधति चक्षसे ।
संप्रेद्धो अग्निर्जिह्वाभिरुदेतु हृदयादधि ॥

एनं स्वस्त्ययनकामं ये रक्षःप्रभृतयो हिंसकाः परिषीदन्ति हिंसितुं परित उपविशन्ति, ततः चक्षसे हिंसायै समादधति समाहिताः संनद्धाः भवन्ति । यद्वा, एनं अग्निं परिचरितुं ये जनाः पर्युपविशन्ति, चक्षसे दर्शनाय समादधति इध्मप्रक्षेपेण प्रज्वलयन्ति, तैः संप्रेद्धः प्रकर्षेण संदीपितोऽग्निः स्वकीयाभिर्जिह्वाभिः सह हृदयादधि अस्मदीयाद्धृदयात् उदेतु उद्गच्छतु, उत्पद्यतामित्यर्थः । 'अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि' (तैब्रा. १।२।१।२०) इति हि निगमः । यद्वा, पर्युपविशतां रक्षःप्रभृतीनां हृदयात् संप्रवृद्धोऽग्निः उदेतु, तान् प्रदग्धुं इत्यर्थः । असा.

(१) असं. ६।७५।३ ; तैब्रा. ३।३।११।३ एतु (इहि) (यतो न पुनरायति शश्वतीभ्यः समाभ्यः०) ; आपश्रौ. ३।१४।२ तैब्रावत्.

(२) असं. ६।७६।१-४.

अग्नेः सांतपनस्याहमायुषे पदमा रभे ।
अद्धातिर्यस्य पश्यति धूममुद्यन्तमास्यतः ॥

सांतपनस्य अत्यर्थं तपनं संतपनं तत्संबन्धिनः अग्नेः पदं स्थानं तद्वाचिपदात्मकं शब्दं वा आयुषे जीवनाय अहं आ रभे उपक्रमे । यस्याग्नेः आस्यतः आस्यात् मुखात् उद्यन्तं उद्गच्छन्तं धूमं अद्धातिः । अद्धा प्रत्यक्षं अतति सततं ध्यानेन प्राप्नोतीति अद्धातिः एतत्संज्ञो महर्षिः पश्यति साक्षात्करोति । यद्वा, यस्याग्नेर्धूमं तपःप्रभावात् स्वस्मात् आस्यात् उद्गच्छन्तं पश्यति तादृशस्याग्नेः पदं इति संबन्धः । असा.

यो अस्य समिधं वेद क्षत्रियेण समाहिताम् ।
नाभिह्वारे पदं नि दधाति स मृत्यवे ॥

क्षत्रियेण क्षत्रजातीयेन विजयकामेन पुंसा समाहितां सम्यगाहितां क्षिप्तां अस्य अग्नेः समिधं संदीपनीं आहुतिं यः पुरुषो वेद जानाति स वेदिता मृत्यवे मृत्युं गन्तुं अभिह्वारे अभितः कुटिले मृत्युप्राप्तिनिमित्ते गजव्याघ्रादिभूयिष्ठे स्थाने पदं न नि दधाति न निक्षिपति । इत्थं वेदितुर्मरणशङ्काऽपि नैवोदेतीत्यर्थः । असा.

नैनं घ्नन्ति पर्यायिणो न सन्नाँ अव गच्छति ।
अग्नेर्यः क्षत्रियो विद्वान्नाम गृह्णात्यायुषे ॥

एनं स्वस्त्ययनकामं पर्यायिणः परितः आगन्तारः शत्रवो न घ्नन्ति न हिंसन्ति । सन्नान् समीपस्थानपि तान् अयं नावगच्छति नावबुध्यते । अस्य ज्ञानविषयेऽपि शत्रवो नावस्थातुं शक्नुवन्तीत्यर्थः । कः पुनरसौ इत्याह— यः क्षत्रियः विद्वान् उक्तप्रकारेण माहात्म्यं जानन् अग्नेर्नाम स्तावकं नामधेयं आयुषे चिरकालजीवनाय गृह्णाति उच्चारयति । नैवैनं घ्नन्तीति संबन्धः । असा.

संग्रामजयकर्म

[1]अभिभूर्यज्ञो अभिभूरग्नि-
रभिभूः सोमो अभिभूरिन्द्रः ।
अभ्य१हं विश्वाः पृतना यथाऽसा-
न्येवा विधेमाग्निहोत्रा इदं हविः ॥

(१) असं. ६।९७।१-२.

यज्ञः अस्माभिर्जयकामैः क्रियमाणो यागः अभिभूः शत्रूणां अभिभविता भवतु । तथा यागनिष्पादकोऽयं सांग्रामिकोऽग्निः अभिभूः अभिभविता अस्तु । यागसाधनभूतः सोमः अभिभूः शत्रूणां अभिभविता । तेन सोमेन तर्पित इन्द्रः अभिभूः अभिभविता । अहं शत्रुजयकामः विश्वाः सर्वाः पृतनाः सेनाः शात्रवीः यथा अभ्यसानि अभिभवानि एव एवं अग्निहोत्राः अग्नौ जुह्वतो वयं इदं संग्रामजयार्थं हविः विधेम विदध्याम । असा.

स्वधाऽस्तु मित्रावरुणा विपश्चिता
प्रजावत्क्षत्रं मधुनेह पिन्वतम् ।
बाधेथां दूरं निर्ऋतिं पराचैः
कृतं चिदेनः प्र मुमुक्तमस्मत् ॥

हे विपश्चिता विपश्चितौ मेधाविनौ हे मित्रावरुणा मित्रावरुणौ, युवाभ्यां स्वधा । अन्ननामैतत् । हविर्लक्षणं अन्नं अस्तु तृप्तिकरं भवतु । तौ युवां इह अस्मिन् राजनि प्रजावत् प्रजाभिर्युक्तं क्षत्रं बलं मधुना मधुररसेन पिन्वतं सिञ्चतम् । निर्ऋतिं पापदेवतां पराजयकारिणीं पराचैः पराङ्मुखं दूरं बाधेथाम् । अस्मत्तो दूरदेशे यथा सा पराङ्मुखी विनश्यति तथा हिंस्तं इत्यर्थः । कृतं चित् शत्रुभिः कृतमपि एनः पापं पराजयनिमित्तं अस्मत्सकाशात् प्र मुमुक्तं प्रमोचयतम् । असा.

[1]इमं वीरमनु हर्षध्वमुग्रमिन्द्रं
सखायो अनु सं रभध्वम् ।
ग्रामजितं गोजितं वज्रबाहुं
जयन्तमज्म प्रमृणन्तमोजसा ॥

(१) ऋसं. १०।१०३।६ ( गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमं सजाता अनु वीरयध्वमिन्द्रं सखायो अनु सं रभध्वम् ॥ ); असं. ६।९७।३, १९।१३।६ ; सासं. २।२१।१ ( १८५४ ) ऋसंवत् ; तैसं. ४।६।४।२ यो अनु (योऽनु) शेषं ऋसंवत् ; कासं. १८।५ ( ५० ) ( गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्मा प्रमृणन्तमोजसा । इमं सजाता अनुवीरयध्वमिन्द्रं सखायमनु संरभध्वम् ॥ ) ; मैसं. २।१०।४ ( ४० ) ; शुसं. १७।३८ ऋसंवत्.

इमं अस्मदीयं वीरं वीर्यवन्तं राजानं अनु हे सैनिकाः, हर्षध्वं वीररसेन हृष्टा भवत । कीदृशम् ? उग्रं उद्गूर्णबलं इन्द्रं परमैश्वर्ययुक्तं हे सखायः समानख्यानाः सैनिकाः, अनु सं रभध्वं राजानं अनुसृत्य युद्धोद्युक्ता भवत । यद्वा, इन्द्रः संग्रामाधिदेवता स एवात्र स्तूयते । अस्मिन् पक्षे हे सखायः समानख्याना मरुतः इत्येतावानेव विशेषः । कीदृशं इन्द्रम् ? ग्रामजितं ग्रामान् जयन्तं गोजितं गाः शात्रवीर्जयन्तं अपहरन्तं वज्रबाहुं वज्रहस्तं उद्यतायुधं अत एव जयन्तं शत्रून् पराजितान् कुर्वन्तम् । अज्म अजनशीलं क्षेपणशीलं शत्रुबलं ओजसा बलेन प्रमृणन्तं प्रकर्षेण हिंसन्तम् । असा.

[1]इन्द्रो जयाति न परा जयाता
अधिराजो राजसु राजयातै ।
चर्कृत्य ईड्यो वन्द्यश्चोपसद्यो नमस्यो भवेह ॥

अस्मिन् संग्रामे अस्य राज्ञः साहाय्यार्थं आगतः इन्द्रः पदात्मको वा अयं राजा जयाति जयतु न परा जयातै पराजयं मा प्राप्नोतु । अधिको राजा अधिराजः सर्वेषां राज्ञां अधिपतिः इन्द्रः राजसु अन्येषु भूपालेषु राजयातै अस्मान् राजयतु प्रकाशयतु वीर्यवत्तया प्रख्यापयतु । स च इन्द्रः चर्कृत्यः अतिशयेन शत्रूणां कर्तिता छेत्ता ईड्यः स्तुत्यः वन्द्यः वन्दनीयः उपसद्यः उपसदनीयः सर्वैः सेवनीयः । हे इन्द्र, यस्मात् त्वं एवंगुणविशिष्टः तस्मात् इह अस्मिन् संग्रामे नमस्यः अस्माभिः पूजनीयो भव । असा.

(१) असं. ६।९८।१ ; तैसं. २।४।१४।२ यातै ( याति ) उत्तरार्धे ( विश्वा हि भूयाः पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽसत् ॥ ) ; मैसं. ४।१२।३ ( ७६ ) ( इन्द्रो जयति न पराजयते अधिराजो राजसु राजयते । विश्वा अभिष्टिः पृतना जयत्युपसद्यो नमस्यो यथासत् ॥ ).

[1]त्वमिन्द्राधिराजः श्रवस्यु-
स्त्वं भूरभिभूतिर्जनानाम्।
त्वं दैवीर्विश इमा वि राजा-
ऽऽयुष्मत्क्षत्रमजरं ते अस्तु ॥

इन्द्राभेदेन राज्ञः स्तुतिः। हे इन्द्र, त्वं अधिराजः राज्ञां अन्येषां अधिकः सन् श्रवस्युः। श्रव इत्यन्नस्य यशसो वा नामधेयम्। तद्युक्तो भवसि। हे इन्द्र, त्वं जनानां सर्वेषां प्राणिनां अभिभूतिः अभिभविता स्वमहिम्ना तिरस्कर्ता भूः भवसि। दैवीः देवसंबन्धिनीः इमा विशः प्रजाः त्वं वि राज ईशिष्व। राजतिः ऐश्वर्य-कर्मा। हे राजन्, ते तव आयुष्मत् चिरकालजीवनोपेतं अजरं जरारहितं अपचयरहितं क्षत्रं बलं अस्तु भवतु। असा.

[2]प्राच्या दिशस्त्वमिन्द्रासि राजो-
तोदीच्या दिशो वृत्रहन्छत्रुहोऽसि।
यत्र यन्ति स्रोत्यास्तज्जितं ते
दक्षिणतो वृषभ एषि हव्यः ॥

हे इन्द्र, त्वं प्राच्याः दिशः राजाऽसि अधिपति-र्भवसि। उत उदीच्याः उत्तरस्या अपि दिशः अधिपति-रसि। प्राचीग्रहणं प्रतीच्या अप्युपलक्षणम्। उदीची-ग्रहणं दक्षिणस्या अपि उपलक्षणम्। अत एव देशस्य द्वैविध्यं उक्तम्। देशः प्राग्दक्षिणः प्राच्यः उदीच्यः पश्चिमोत्तरः इति। तस्मात् सर्वासां दिशां अधिपतिरसी-त्यर्थः। हे वृत्रहन् वृत्राणां शत्रूणां हन्तः इन्द्र, त्वं शत्रु-होऽसि अस्मदीयानां शत्रूणां हन्ता भवसि। यत्र यस्मिन् भूप्रदेशे स्रोत्याः स्रोतोऽर्हाः जलप्रवाहाः यन्ति प्रवहन्ति तत् सर्वं स्थानं ते तव जितं स्वकीयमेव भवति। कृत्स्नं भूमण्डलं त्वदायत्तमेवेत्यर्थः। ईदृशो वृषभः कामानां वर्षिता हव्यः अस्माभिराह्वातव्यः सन् संग्रामजयार्थं दक्षिणतः अस्मद्दक्षिणभागे युद्धसमये एषि गच्छ साहा-य्यार्थं वर्तस्व। असा.

[1]अभि त्वेन्द्र वरिमतः पुरा त्वांऽहूरणाद्धुवे।
ह्वयाम्युग्रं चेत्तारं पुरुणामानमेकजम् ॥

हे इन्द्र, त्वा त्वां वरिमतः उरुत्वाद्धेतोः विस्तीर्ण-शरीरत्वेन युगपत्संनिधानसमर्थत्वात् संग्रामेषु अंहूरणात् कुटिलगमनात् पराजयनिमित्तात् पुरा पूर्वमेव अभि हुवे आभिमुख्येन ह्वयामि। आह्वाने कारणमाह— उग्रं उद्गूर्ण-बलं चेत्तारं वेदितारं जयोपायज्ञं पुरुनामानं पुरुभिर्बहुभिः प्रशस्तैर्नामधेयैर्युक्तं यद्वा बहूनां शत्रूणां नमयितारं, एक-जम्। एक एव जायते युद्धेषु प्रादुर्भवतीति एकजः। तं असहायशूरं इन्द्रं ह्वयामि। असा.

यो अद्य सेन्यो वधो जिघांसन्न उदीरते।
इन्द्रस्य तत्र बाहू समन्तं परि दद्मः ॥

अद्य इदानीं सेन्यः शत्रुसेनासंबन्धी यो वधः हनन-साधनं आयुधं नः अस्मान् जिघांसन् हन्तुं इच्छन् उदीरते उद्गच्छति तत्र तस्मिन् वधे इन्द्रस्य बाहू हस्तौ अस्मद्रक्षार्थं समन्तं सर्वतः परि दध्मः प्राकारवत् परितो धारयामः। असा.

परि दद्म इन्द्रस्य बाहू समन्तं त्रातुस्त्रायतां नः।
देव सवितः सोम राजन्त्सुमनसं
मा कृणु स्वस्तये ॥

त्रातुः पालयितुः इन्द्रस्य बाहू हस्तौ समन्तं सर्वतः परि दध्मः। अतः स इन्द्रः नः अस्मान् त्रायतां रक्षतु। हे सवितः सर्वस्य प्रेरक देव हे राजन् सोम, स्वस्तये क्षेमाय अविनाशाय मा मां संग्रामे सुमनसं जयेन शोभन-मनस्कं कृणु कुरु। असा.

[2]संदानं वो बृहस्पतिः संदानं सविता करत्।
संदानं मित्रो अर्यमा संदानं भगो अश्विना ॥

---

(१) असं. ६।९८।२ ; कासं. ८।१७ (६८) (त्वमिन्द्रास्य-धिराजस्त्वं भवाधिपतिर्जनानाम्। दैवीर्विशस्त्वमुता विराजौ-जस्वत् क्षत्रमजरं ते अस्तु ॥) ; मैसं. ४।१२।२ (४२) कासंवत्.

(२) असं. ६।९८।३ ; तैसं. २।४।१४।१ पूर्वार्धे (प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्यां वृत्रहन् वृत्रहाऽसि।) एषि (एधि) ; कासं. ८।१७ (६६) पूर्वार्धं तैसंवत्, स्रोत्यास्त (स्रवत्यस्त) वृषभ एषि हव्यः (वृषभो हव्य एधि) ; मैसं. ४।१२।२ (४०) पूर्वार्धं तैसंवत्, वृषभ एषि हव्यः (वृषभो हव्य एधि).

(१) असं. ६।९९।१–३.

(२) असं. ६।१०३।१–३.

हे शत्रुसेनाः, बृहस्पतिर्देवः वः युष्माकं संदानं बन्धनं एभिः प्रक्षिप्तैः पाशैः करत् करोतु । संपूर्वो द्यतिर्बन्धने वर्तते । सविता सर्वप्रेरको देवः संदानं युष्माकं बन्धनं करोतु । मित्रश्च अर्यमा च संदानं बन्धनं करोतु । भगश्च अश्विना अश्विनौ च संदानं बन्धनं कुर्वन्तु । असा.

**सं परमान्त्समवमानथो सं द्यामि मध्यमान् ।**
**इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ॥**

परमां उत्कृष्टां दूरदेशस्थां वा शत्रुसेनां पाशैरहं सं द्यामि बध्नामि । अवमां अपकृष्टां आसन्नदेशवर्तिनीं वा परसेनां सं द्यामि । अथो अपि च मध्यमां मध्यवर्तिनीमपि सेनां सं द्यामि । तान् तथाविधसेनापतीन् शत्रून् संग्रामाधिपतिरिन्द्रः पर्यहाः परिहरतु वर्जयतु । हे अग्ने, तान् परिहृतान् शत्रून् दाम्ना पाशेन त्वं सं द्य बधान । असा.

**अमी ये युधमायन्ति केतून् कृत्वाऽनीकशः ।**
**इन्द्रस्तान् पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ॥**

अमी दूरे दृश्यमानाः ये शत्रवः युधं युद्धं आयन्ति आगच्छन्ति अनीकशः संघशः केतून् कृत्वा ध्वजान् कृत्वा । आगत्य युध्यन्ते इत्यर्थः । इन्द्रस्तान् इत्यादि पूर्ववत् । असा.

**[१]आदानेन संदानेनामित्राना द्यामसि ।**
**अपाना ये चैषां प्राणा असुनासून्त्समच्छिदन् ॥**

आदीयते आबध्यते अनेनेति आदानं पाशयन्त्रविशेषः । तेन यत् संदानं बन्धनं तेन अमित्रान् शत्रून् आ द्यामसि आद्यामः आबध्नीमः । तेषां शत्रूणां ये च अपानाः अन्तर्मुखाः प्राणवायुवृत्तयः ये च प्राणाः बहिर्मुखाः श्वासवृत्तयः तान् असून् प्राणान् असुना प्राणेन समच्छिदं सम्यक् छिनद्मि । पाशयन्त्रेण गलगतेन प्राणापानगती निरुध्य परस्परोपमर्देन हन्मीत्यर्थः । असा.

**इदमादानमकरं तपसेन्द्रेण संशितम् ।**
**अमित्रा येऽत्र नः सन्ति तानग्न आ द्या त्वम् ॥**

इदं आदानं आबन्धनसाधनं पाशयन्त्रं तपसा अभिचारकर्मोक्तनियमविशेषेण अकरं अकार्षम् । तच्च पूर्वं इन्द्रेण संशितं सम्यक् तीक्ष्णीकृतम् । शो तनूकरणे । अत्र अस्मिन् संग्रामे नः अस्माकं अमित्राः शत्रवः ये सन्ति हे अग्ने, तान् सर्वान् शत्रून् त्वं आ द्य आबधान पाशयन्त्रेण गृहाण । असा.

**ऐनान् द्यतामिन्द्राग्नी सोमो राजा च मेदिनौ ।**
**इन्द्रो मरुत्वानादानममित्रेभ्यः कृणोतु नः ॥**

इन्द्रश्च अग्निश्च इन्द्राग्नी मेदिनौ मेदस्विनौ अस्माभिर्दत्तेन हविषा माद्यन्तौ वा देवौ एनान् अस्मच्छत्रून् आ द्यतां आबध्नीताम् । तथा सोमो राजा च आबध्नातु । मरुत्वान् मरुद्गणैर्युक्तः इन्द्रः नः अस्माकं अमित्रेभ्यः शत्रुभ्यः आदानं आबन्धनं कृणोतु करोतु । असा.

सेनाकर्माणि शत्रुक्षय–शत्रुभयनाशन–शत्रुजय–स्वबलवर्धनानि

**[१]इन्द्रो मन्थतु मन्थिता शक्रः शूरः पुरंदरः ।**
**यथा हनाम सेना अमित्राणां सहस्रशः ॥**

**पूतिरज्जुरुपध्मानी पूतिं सेनां कृणोत्वमूम् ।**
**धूममग्निं परादृश्यामित्रा हृत्स्वा दधतां भयम् ॥**

**अमूनश्वत्थ निः शृणीहि**
**खादामून् खदिराजिरम् ।**
**ताजद्भङ्ग इव भज्यन्तां हन्त्वेनान् वधको वधैः ॥**

**परुषानमून् परुषाह्वः कृणोतु**
**हन्त्वेनान् वधको वधैः ।**
**क्षिप्रं शर इव भज्यन्तां बृहज्जालेन संदिताः ॥**

**अन्तरिक्षं जालमासीज्जालदण्डा दिशो महीः ।**
**तेनाभिधाय दस्यूनां शक्रः सेनामपावपत् ॥**

**बृहद्धि जालं बृहतः शक्रस्य वाजिनीवतः ।**
**तेन शत्रूनभि सर्वान् न्युब्ज**
**यथा न मुच्यातै कतमश्चनैषाम् ॥**

---

(१) असं. ६।१०४।१–३.

(१) असं. ८।८।१–२४.

बृहत्ते जालं बृहत इन्द्र शूर
सहस्रार्घस्य शतवीर्यस्य ।
तेन शतं सहस्रमयुतं न्यर्बुदं
जघान शक्रो दस्यूनामभिधाय सेनया ॥
अयं लोको जालमासीच्छक्रस्य महतो महान् ।
तेनाहमिन्द्रजालेनामूंस्तमसाऽभि दधामि
सर्वान् ॥
सेदिरुग्रा व्यृद्धिरार्तिश्चानपवाचना ।
श्रमस्तन्द्रीश्च मोहश्च तैरमूनभि दधामि सर्वान् ॥
मृत्यवेऽमून् प्र यच्छामि मृत्युपाशैरमी सिताः ।
मृत्योर्ये अघला दूतास्तेभ्य एनान् प्रति
नयामि बद्ध्वा ॥
नयतामून् मृत्युदूता यमदूता अपोम्भत ।
परःसहस्रा हन्यन्तां तृणेढ्वेनान् मत्यं भवस्य ॥
साध्या एकं जालदण्डमुद्यत्य यन्त्योजसा ।
रुद्रा एकं वसव एकमादित्यैरेक उद्यतः ॥
विश्वे देवा उपरिष्टादुब्जन्तो यन्त्वोजसा ।
मध्येन घ्नन्तो यन्तु सेनामङ्गिरसो महीम् ॥
वनस्पतीन् वानस्पत्यानोषधीरुत वीरुधः ।
द्विपाच्चतुष्पादिष्णामि यथा सेनाममूं हनन् ॥
गन्धर्वाप्सरसः सर्पान् देवान्
पुण्यजनान् पितॄन् ।
दृष्टानदृष्टानिष्णामि यथा सेनाममूं हनन् ॥
इम उप्ता मृत्युपाशा यानाक्रम्य न मुच्यसे ।
अमुष्या हन्तु सेनाया इदं कूटं सहस्रशः ॥
घर्मः समिद्धो अग्निनाऽयं होमः सहस्रहः ।
भवश्च पृश्निबाहुश्च शर्व सेनाममूं हतम् ॥
मृत्योराषमा पद्यन्तां क्षुधं सेदिं वधं भयम् ।
इन्द्रश्चाक्षुजालाभ्यां शर्व सेनाममूं हतम् ॥
पराजिताः प्र त्रसतामित्रा नुत्ता धावत ब्रह्मणा ।
बृहस्पतिप्रणुत्तानां माऽमीषां मोचि कश्चन ॥
अव पद्यन्तामेषामायुधानि मा शकन्
प्रतिधामिषुम् ।
अथैषां बहु बिभ्यतामिषवो घ्नन्तु मर्मणि ॥

सं क्रोशतामेनान् द्यावापृथिवी
समन्तरिक्षं सह देवताभिः ।
मा ज्ञातारं मा प्रतिष्ठां विदन्त
मिथो विघ्नाना उप यन्तु मृत्युम् ॥
दिशश्चतस्रोऽश्वतर्यो देवरथस्य
पुरोडाशाः शफा अन्तरिक्षमुद्धिः ।
द्यावापृथिवी पक्षसी ऋतवोऽभीशवो-
ऽन्तर्देशाः किंकरा वाक्परिरथ्यम् ॥
संवत्सरो रथः परिवत्सरो रथोपस्थो
विराडीषाग्नी रथमुखम् ।
इन्द्रः सव्यष्ठाश्चन्द्रमाः सारथिः ॥
इतो जयेतो वि जय सं जय जय स्वाहा ।
इमे जयन्तु परामी जयन्तां
स्वाहैभ्यो दुराहामीभ्यः ।
नीललोहितेनामूनभ्यवतनोमि ॥

शत्रुजयकर्म

[1]ये बाहवो या इषवो धन्वनां वीर्याणि च ।
असीन् परशूनायुधं चित्ताकूतं च यद्धृदि ।
सर्वं तदर्बुदे त्वममित्रेभ्यो दृशे
कुरूदारांश्च प्र दर्शय ॥

ये अस्मदीयानां योद्धॄणां भटानां बाहवः आयुधग्राहिणो हस्ताः याः इषवः बाणाः तथा धन्वनां धनुषां अस्मदीयानां यानि च वीर्याणि वीरकर्माणि शत्रुनिपातनसामर्थ्यानि सन्ति तान् सर्वान् बाह्वादीन् असीन् खड्गान् परशून् परश्वधान् कुठारविशेषान् यदन्यदप्यायुधं आयोधनसाधनशस्त्रं यच्च अस्मदीयानां योद्धॄणां हृदि हृदये अवस्थितं चित्ताकूतं चित्तेन मनसा संकल्प्यमानं शत्रूणां मारणम् । यद्वा, चित्तानि अस्मदीयानां भटानां धैर्ययुक्तानि मनांसि, आकूतानि संकल्पाः इमं अनेन प्रकारेण हनिष्यामि इममनेनेत्येवं बहुधा भिन्नाः । ये बाहव इत्यादिना यदेतदनुक्रान्तं तत् सर्वं हे अर्बुदे । अर्बुदो नाम सर्पऋषिः । तथा च ऐतरेयके समाम्नायते—

---

(१) असं. ११।९।१-२६.

'अर्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृत्' (ऐब्रा. ६।१) इति। तस्य द्वौ पुत्रो अर्बुदिश्च न्यर्बुदिश्चेति। अर्बुदस्य हे पुत्र हे सर्प, त्वं उक्तं सर्वं अमित्रेभ्यः अस्मच्छत्रुभ्यः दृशे दृष्टये कुरु। यथा शत्रूणां मनसि भीतिर्जायते तथा अस्मदीयानि युद्धोपकरणानि दर्शयेत्यर्थः। अपि च, उदारान् उद्गतान् अन्तरिक्षचरान् रक्षःपिशाचादीन् मन्त्रसामर्थ्योद्भावितान् शत्रूणां भीत्यर्थं प्रदर्शय। यद्वा, सूर्यरश्मिप्रभवा उल्कादय आन्तरिक्ष्या उत्पाता उदाराः। तानपि तेभ्यः पराजयार्थं प्रदर्शय। 'तस्मात् तेपानादुदारा अजायन्त' (तैब्रा. २।२।९।२) इति तैत्तिरीयकम्। उदारयन्ति आर्तिमुद्भावयन्तीति उदाराः।
असा.

**उत्तिष्ठत सं नह्यध्वं मित्रा देवजना यूयम्।**
**संदृष्टा गुप्ता वः सन्तु या नो मित्राण्यर्बुदे॥**

हे मित्राः मित्रभूताः अस्माकं जये प्रवृत्ताः हे देवजनाः, यूयं उत्तिष्ठत अस्मात् सेनाविशेषादुद्गच्छत। सं नह्यध्वं उत्थानानन्तरं युद्धाय संनद्धा भवत। तथा वः युष्माभिः संदृष्टाः सम्यङ्निरीक्षिताः अस्मदीयाः भटाः गुप्ताः रक्षिताः सन्तु भवन्तु। वः इति तृतीयार्थे षष्ठी। हे अर्बुदे सर्प, नः अस्माकं या यानि मित्राणि अस्मदीयैः शत्रुभिः सह योद्धुमागतानि तानि त्वया गुप्तानि रक्षितानि भवन्तु इत्यर्थः।
असा.

**उत्तिष्ठतमा रभेथामादानसंदानाभ्याम्।**
**अमित्राणां सेना अभि धत्तमर्बुदे॥**

हे अर्बुदे, त्वं च न्यर्बुदिश्च युवामुत्तिष्ठतं स्थानादुच्चलतम्। आ रभेथां युद्धमुपक्रमेथाम्। अनन्तरं आदानसंदानाभ्याम्। आदीयते गृह्यते अनेनेति ग्रहणार्थं रज्जुयन्त्रमादानम्। संदीयते बध्यते अनेनेति संदानं बन्धनरज्जुः। ताभ्यां रज्जुभ्यां अमित्राणां शत्रूणां संबन्धिनीं सेनां अभि धत्तं बध्नीतम्। अभिपूर्वो दधातिर्बन्धने वर्तते। यथा– 'अश्वाभिधानीमादत्ते' (तैसं. ५।१।२।१) इति।
असा.

**अर्बुदिर्नाम यो देव ईशानश्च न्यर्बुदिः।**
**याभ्यामन्तरिक्षमावृतमियं च पृथिवी मही।**
**ताभ्यामिन्द्रमेदिभ्यामहं जितमन्वेमि सेनया॥**
**उत्तिष्ठ त्वं देवजनार्बुदे सेनया सह।**
**भञ्जन्नमित्राणां सेनां भोगेभिः परि वारय॥**

अर्बुदिन्यर्बुद्योर्माहात्म्यमनया प्रतिपाद्यते। अर्बुदिरिति प्रसिद्धः सर्पात्मको यो देवः तथा ईशानः सर्वस्य ईशिता यश्च न्यर्बुदिरिति प्रसिद्धः सर्पः, याभ्यामर्बुदिन्यर्बुदिभ्यामन्तरिक्षं सर्वमावृतं स्वशरीरैरावेष्टितम्, इयं परिदृश्यमाना मही महती पृथिवी च याभ्यामावृता, तौ सर्पात्मकौ देवौ संग्रामजयकर्मणि सर्वोत्कर्षेण वर्तेते इत्यर्थः। ताभ्यां द्यावापृथिव्यौ व्याप्य वर्तमानाभ्यां इन्द्रमेदिभ्यां इन्द्रस्य स्निग्धाभ्यामर्बुदिन्यर्बुदिभ्यां जितं शत्रुबलमहं पश्चात् सेनया अन्वेमि अनुगच्छामि। हे देवजन देवजातीय अर्बुदे, त्वं सेनया आत्मीयया सह उत्तिष्ठ उद्गच्छ, शत्रून् प्रथममभियाहीत्यर्थः। अनन्तरं अमित्राणां शत्रूणां सेनां भञ्जन् आमर्दयन् भग्नवीर्यो कुर्वन् भोगेभिः भोगैः आत्मीयैः सर्पशरीरैः परि वारय परिवेष्टय। यथा शत्रुसेना अस्मान् न पश्यति तथा तदीयानि अक्षीणि पिधेहीत्यर्थः।
असा.

**सप्त जातान् न्यर्बुद उदाराणां समीक्षयन्।**
**तेभिष्ट्वमाज्ये हुते सर्वैरुत्तिष्ठ सेनया॥**

हे न्यर्बुदे एतत्संज्ञ सर्प, उदाराणां प्रागुक्तलक्षणानां मध्ये सप्तसंख्याकान् जातान् उत्पन्नान् दृष्टितिरोधायकान् समीक्षयन् शत्रूणां दर्शयंस्त्वं आज्ये हुते। उपलक्षणमेतत्। आज्योपलक्षितेषु द्रव्येषु हुतेषु सत्सु तेभिः तैः सर्वैरुपलक्षितः सन् अस्मदीयया सेनया सह उत्तिष्ठ उद्गच्छ।
असा.

**प्रतिघ्नानाऽश्रुमुखी कृधुकर्णी च क्रोशतु।**
**विकेशी पुरुषे हते रदिते अर्बुदे तव॥**

हे अर्बुदे, तव रदिते दन्तैर्विलेखने खादने सति तथा तेन रदनेन शत्रुभूते पुरुषे हते मृते सति तदीया जाया प्रतिघ्नाना प्रतिमुखं स्वकीयं वक्षस्ताडयन्ती अश्रुमुखी बाष्पमुखी कृधुकर्णी। कृध्विति ह्रस्वनाम। कर्णाभरण-

परित्यागेन ह्रस्वकर्णी च विकेशी विकीर्णशिरोरुहा च सती क्रोशतु रोदनं करोतु । असा.

**संकर्षन्ती करूकरं मनसा पुत्रमिच्छन्ती ।**
**पतिं भ्रातरमात्स्वान् रदिते अर्बुदे तव ॥**

हे अर्बुदे, तव त्वदीये रदिते रदने दन्तैर्विलेखने सति विषावेशवशात् शत्रुस्त्री करूकरं संकर्षन्ती । करु इति अनुकरणशब्दोऽयम् । तत्करोतीति करूकरं हस्तपादाद्यवयवगतं संधिमदस्थिजातं, तत् सम्यक् कर्षन्ती । लोके हि भयवशात् उभयोर्हस्तयोः परस्पराङ्गुलिनिपीडनेन तादृशं शब्दमुत्पादयन्ति । तदनन्तरं मनसा अन्तःकरणेन विषप्रतीकाराय पुत्रं आत्मीयं सुतं इच्छन्ती, तदनन्तरं पतिं भर्तारं इच्छन्ती, ततो भ्रातरं आत्मीयं सहजं, आत् अनन्तरं स्वान् स्वकीयान् बन्धुजनान् विषनिर्हरणाय इच्छन्ती । इत्थमितिकर्तव्यतामूढा भवत्वित्यर्थः । असा.

**अलिक्लवा जाष्कमदा गृध्राः श्येनाः पतत्रिणः ।**
**ध्वाङ्क्षाः शकुनयस्तृप्यन्त्वमित्रेषु**
**समीक्षयन् रदिते अर्बुदे तव ॥**

अलि( ? वि )क्लवाः, विशिष्टक्लैब्ययुक्ता विक्लवाः, तद्विपरीता अलि( ? वि )क्लवाः, धृष्टाः पक्षिण इत्यर्थः । याश्च पक्षिजातयः क्लमदाः क्लमस्य शरीरावसादस्य दात्र्यः । ता अनुक्रामति । गृध्राः श्वेतवर्णा मांसाभिलाषिणः पक्षिणः । श्येनाः प्रसिद्धाः । पतत्रिणः अन्ये च मांसभक्षकाः पक्षिणः पतत्रिशब्देन विवक्षिताः । ध्वाङ्क्षाः काकाः । एवमात्मकाः शकुनयः हे अर्बुदे, तव रदिते त्वदीये रदने विषदन्तैर्विलेखने अमित्रेषु अस्मदीयेषु शत्रुषु सति समीक्षयन् । व्यत्ययेन एकवचनम् । तन्मरणं प्रतीक्षमाणाः तदनन्तरं तद्भक्षणेन तृप्यन्तु तृप्ता भवन्तु । असा.

**अथो सर्वं श्वापदं मक्षिका तृप्यतु क्रिमिः ।**
**पौरुषेयेऽधि कुणपे रदिते अर्बुदे तव ॥**

अथो अपि च सर्वे श्वापदं शुनः पदानीव पदानि यस्य सृगालव्याघ्रादेः तत् सर्वे श्वापदम् । मक्षिका मांसनिषेविणी या नीलमक्षिकेति प्रसिद्धा । क्रिमिः मांसेषु जीर्णेषु जायमानः प्राणी । एतत् सर्वं हे अर्बुदे, तव रदिते सति पौरुषेये पुरुषसंबन्धिनि कुणपे शवशरीरे अधि उपरि तृप्यतु । तव खादनेन सर्वेषु शत्रुषु मृतेषु तच्छरीराणि गृध्रादयः पक्षिणः श्वसृगालादयश्च भक्षयन्तु इत्यर्थः । असा.

**आ गृह्णीतं सं बृहतं प्राणापानान् न्यर्बुदे ।**
**निवाशा घोषाः सं यन्त्वमित्रेषु**
**समीक्षयन् रदिते अर्बुदे तव ॥**

हे न्यर्बुदे, त्वं च अर्बुदिश्च युवां शत्रुसंबन्धिनः प्राणापानान् आ गृह्णीतं आसमन्तात् स्वीकुरुतम् । तदनन्तरं सं बृहतं समूलं उत्खिदतम् । हे अर्बुदे, तव रदिते सति अमित्रेषु शत्रुषु तत् रदितं समीक्षयन् । षष्ठ्यर्थे प्रथमा । समीक्षयतां जनानां निवाशाः नीचीनं वाश्यमाना आभाष्यमाणा घोषाः शब्दाः सं यन्तु सम्यग्वर्तन्ताम् । विषनिपीडितानामार्तस्वरा उत्पद्यन्तामित्यर्थः । असा.

**उद्वेपय सं विजन्तां भियाऽमित्रान्त्सं सृज ।**
**उरुग्राहैर्बाह्वङ्कैर्विध्यामित्रान् न्यर्बुदे ॥**

हे न्यर्बुदे एतत्संज्ञ सर्पजातीय देव, अमित्रान् अस्मदीयान् शत्रून् उद्वेपय उत्कम्पय । ते च अनन्तरं सं विजन्तां भयात् स्वस्थानात् प्रचलिताः उद्विग्नाः भवन्तु । भिया अस्मत्सकाशाज्जनितया भीत्या सं सृज संयोजय । तदनन्तरं ऊरुग्राहैः ऊरूणां ग्रहणैः बाहुवङ्कैः बाहुना वक्रबन्धनैः अमित्रान् अस्मदीयान् शत्रून् विध्य ताडय । असा.

**मुह्यन्त्वेषां बाहवश्चित्ताकूतं च यद्धृदि ।**
**मैषामुच्छेषि किं चन रदिते अर्बुदे तव ॥**

हे अर्बुदे, तव रदिते खादने सति एषां शत्रूणां बाहवः विषावेशवशात् मुह्यन्तु मूढा व्यापारासमर्था भवन्तु । एषां शत्रूणां हृदि हृदये यत् चित्ताकूतं चित्तेन संकल्पितमर्थजातं तदपि मुह्यतु मूढं विस्मृतं भवतु । यद्वा, चित्तानि मनांसि आकूतानि कर्तव्यविशेषविषयास्तद्वृत्तयः । तत् सर्वं मुह्यतु । अपि च एषां शत्रूणां संबन्धि किं चन किमपि रथतुरगहस्त्यादिलक्षणं बलं मा

उच्छेषि उच्छिष्टं अवशिष्टं मा भूत्, सर्वमपि त्वया हन्यतामित्यर्थः। असा.

**प्रतिघ्नानाः सं धावन्तूरः पटूरावाघ्नानाः।**
**अघारिणीर्विकेश्यो रुदत्य१ः पुरुषे हते रदिते अर्बुदे तव ॥**

हे अर्बुदे, तव रदिते खादने सति पुरुषे स्वकीये भर्तरि हते सति तदीयाः स्त्रियः प्रतिघ्नानाः प्रतिमुखं स्वशरीरमाघ्नत्यः ताडयन्त्यः, तथा उरः वक्षःस्थलं पटूरौ तत्प्रदेशौ च आघ्नानाः हस्ताभ्यामाताडयन्त्यः, विकेश्यः विकीर्णकेश्यः, अघारिणीः अघेन भर्तृवियोगजनितेन दुःखेन आर्ताः, रुदत्यः संजातरोदनाः सत्यः सं धावन्तु मृतपुरुषसमीपं शीघ्रं गच्छन्तु। असा.

**श्वन्वतीरप्सरसो रूपका उतार्बुदे।**
**अन्तःपात्रे रेरिहतीं रिशां दुर्णिहितैषिणीम्।**
**सर्वास्ता अर्बुदे त्वममित्रेभ्यो दृशे कुरूदारांश्च प्र दर्शय ॥**

श्वन्वतीः शुना क्रीडार्थेन सारमेयेण सहिताः अप्सरसः गन्धर्वस्त्रियः। रूपकाः मायावशात् केवलं रूपमात्रेण उपलभ्यमानाः सेनारूपकाः। हे अर्बुदे, ताः सर्वा अमित्रेभ्यो दर्शय। तथा पात्रे अन्तः मध्ये रेरिहतीं पुनःपुनर्लिहतीं दुर्निहितैषिणीं दुष्टनिक्षिप्तमिच्छन्तीं वशां गां हे अर्बुदे, त्वं सर्वास्ताः प्रागुदीरिताः अमित्रेभ्यः शत्रुभ्यो दृशे दर्शनाय कुरु। उदारान् उल्कापातादीन् अद्भुतान् विकृतदर्शनान् यक्षराक्षसांश्च प्र दर्शय। असा.

**खडूरेऽधिचङ्क्रमां खर्विकां खर्ववासिनीम्।**
**य उदारा अन्तर्हिता गन्धर्वाप्सरसश्च ये।**
**सर्पा इतरजना रक्षांसि ॥**
**चतुर्दंष्ट्रांछ्यावदतः कुम्भमुष्काँ असृङ्मुखान्।**
**स्वभ्यसा ये चोद्भ्यसाः ॥**

दूरभूतं खं खदूरं आकाशे दूरदेशे अधि उपरि चङ्क्रमां चङ्क्रमणशीलां मायावशात् इतस्ततः प्रादुर्भवन्तीं खर्विकां अल्पह्रस्वां खर्ववासिनीं खर्वं अल्पं शब्दायमानां मानवशात् मितभाषमाणां हे अर्बुदे, त्वं शत्रुभ्यः प्र दर्शय यथा ते पराजयेरन्। ये उदाराः यक्षराक्षसादयः अन्तर्हिताः स्वमायया व्यवहिताः अस्मद्दृग्गोचरा न भवन्ति ये च गन्धर्वाप्सरसस्तथाविधाः तान् सर्वान् पराजयार्थं शत्रुभ्यो दर्शय।

*सर्पाः सर्पस्वरूपाः इतरजनाः इतरजनसंज्ञका देवाः। यद्वा, सर्पाः सर्पात्मकाः देवाः, तदपेक्षया इतरजनाः तत्सदृशा देवजातयः। रक्षांसि राक्षसाः। ते च चतुर्दंष्ट्राः दंशनसाधनचतुर्दन्तयुक्ताः। तान्। श्यावदतः श्यामवर्णदन्तयुक्तान्। एतानपि मायामयान् अमित्रेभ्यो दर्शय। तथा कुम्भमुष्कान् कुम्भाकृतिमुष्कयुक्तान्। असृङ्मुखान् रक्तास्यान्। स्वभ्यसाः स्वायत्तभीतयो राक्षसाः। ये च उद्भ्यसाः उद्गतभीतयः। भ्यस भये। घोरेण रूपेण इत्थं विविधभयजनका राक्षसा इत्यर्थः। तान् सर्वानमित्रेभ्यो मायया दर्शय। असा.

**उद्वेपय त्वमर्बुदेऽमित्राणाममूः सिचः।**
**जयांश्च जिष्णुश्चामित्राँ जयतामिन्द्रमेदिनौ ॥**

हे अर्बुदे, त्वं अमित्राणां शत्रूणां अमूः सेनाः शुचः शोचमानाः विषावेशजनितशोकार्ताः उद्वेपय उत्कम्पय। तथा अमित्रान् शत्रून् जयन् पराभावयन् जिष्णुः जयशीलश्च अर्बुदिन्यर्बुदी इन्द्रमेदिनौ इन्द्रेण सह स्निह्यन्तौ जयतां अस्माकं जयं कुरुताम्। असा.

**प्रब्लीनो मृदितः शयां हतो३ऽमित्रो न्यर्बुदे।**
**अग्निजिह्वा धूमशिखा जयन्तीर्यन्तु सेनया ॥**

हे न्यर्बुदे, अमित्रः अस्मदीयः शत्रुः प्रब्लीनः प्रभीतः मृदितः संपिष्टगात्रः हतः गतासुः शयां शेताम्। अग्निजिह्वाः अग्नेर्ज्वालाः धूमशिखाः धूमप्ररोहाः मायावशात् त्वयोत्पादिताः जयन्तीः शत्रुबलं जयन्त्यः सेनया अस्मदीयया सह यन्तु गच्छन्तु। असा.

**तयाऽर्बुदे प्रणुत्तानामिन्द्रो हन्तु वरंवरम्।**
**अमित्राणां शचीपतिर्मामीषां मोचि कश्चन ॥**

हे अर्बुदे, त्वया प्रणुत्तानां युद्धरङ्गात् प्रच्यावितानां अमित्राणां शत्रूणां शचीपतिः शच्याः पतिः इन्द्रः वरंवरं श्रेष्ठं श्रेष्ठं हन्तु मारयतु। अमीषां शत्रूणां मध्ये कश्चन

* 'सर्पा इतरजनाः' इत्यादिः उत्तरमन्त्रांशः भाष्यमतेन।

कश्चिदपि मा मोचि मा मुच्यतां, क्रमशः सर्वो हन्यतामित्यर्थः । असा.

**उत्कसन्तु हृदयान्यूर्ध्वः प्राण उदीषतु ।**
**शौष्कास्यमनु वर्तताममित्रान् मोत मित्रिणः ॥**

शत्रूणां संबन्धीनि हृदयानि अन्तःकरणानि उत्कसन्तु शरीरादुद्गच्छन्तु । तथा प्राणः प्राणवायुः ऊर्ध्वः सन् उदीषतु शत्रुशरीरान्निर्गच्छतु । अमित्रान् शत्रून् शौष्कास्यं शुष्कास्यता भीतिवशादास्यस्य निर्द्रवत्वम्, तत् अनुवर्ततां अनुगच्छतु, आस्यशोषणेन शत्रवो म्रियन्तामित्यर्थः । अपि च, मित्रिणः अस्माकं मित्रभूतान् जनान् मा अनुवर्तताम्, तेषामास्यशोषो मा भूदित्यर्थः ।

असा.

**ये च धीरा ये चाधीराः पराञ्चो बधिराश्च ये ।**
**तमसा ये च तूपरा अथो बस्ताभिवासिनः ।**
**सर्वांस्ताँ अर्बुदे त्वममित्रेभ्यो**
**दृशे कुरूदारांश्च प्र दर्शय ॥**

ये च धीराः शूरा भटाः, ये च अधीराः अशूराः कातराः, पराञ्चः पराङ्मुखाः युद्धात् पलायमानाः, ये च बधिराः भयवशात् हतश्रवणसामर्थ्याः, तमसा मोहेन ये च तूपराः । तूपरः शृङ्गहीनः पशुः, तद्वदवस्थिताः । अथो अपि च बस्ताविवाशिनः बस्ताश्च अवयश्च बस्तावयः, तद्वत् वाशितुं शीलमेषां ते बस्ताविवाशिनः, बस्ताविध्वनिं कुर्वाणा इत्यर्थः । हे अर्बुदे, त्वं सर्वांस्तान् स्वमायया उद्भावितान् अमित्रेभ्यः शत्रुभ्यः दृशे दर्शनाय कुरु पराजयार्थम् । गतमन्यत् । असा.

**अर्बुदिश्च त्रिषंधिश्चामित्रान् नो वि विध्यताम् ।**
**यथैषामिन्द्र वृत्रहन् हनाम**
**शचीपतेऽमित्राणां सहस्रशः ॥**

त्रिषंधिः कश्चित् सेनामोहको देवः संधित्रयोपेतवज्रायुधाभिमानी वा । स च अर्बुदिश्च उभौ नः अस्माकं अमित्रान् शत्रून् वि विध्यतां विविधं ताडयताम् । हे वृत्रहन् वृत्रस्य हन्तरिन्द्र हे शचीपते शच्या देव्याः पते, यथा येन प्रकारेण एषां अमित्राणां शत्रूणां संबन्धिनो जनान् सहस्रशः सहस्रसंख्याकान् एकोद्योगेन हनाम मारयाम । तथा वि विध्यतामिति संबन्धः ।

असा.

**वनस्पतीन् वानस्पत्यानोषधीरुत वीरुधः ।**
**गन्धर्वाप्सरसः सर्पान् देवान् पुण्यजनान् पितॄन् ।**
**सर्वांस्ताँ अर्बुदे त्वममित्रेभ्यो**
**दृशे कुरूदारांश्च प्र दर्शय ॥**

वनस्पतीन् वृक्षान्, वानस्पत्यान् वनस्पतिविकारान्, ओषधीः व्रीहियवाद्याः, उत वीरुधः विरोहणशीला आरण्याः, गन्धर्वाप्सरसः गन्धर्वान् अप्सरसश्च, सर्पान् विकृतवेषान् भुजङ्गान्, देवान्, पुण्यजनान् यक्षान्, पितॄन् मृतान् पूर्वपुरुषान् मायामयान् । तान् सर्वान् हे अर्बुदे, त्वं शत्रुभ्यो दृष्टिविषयान् कुरु । उक्तार्थमन्यत् ।

असा.

**ईशां वो मरुतो देव आदित्यो ब्रह्मणस्पतिः ।**
**ईशां व इन्द्रश्चाग्निश्च धाता मित्रः प्रजापतिः ।**
**ईशां व ऋषयश्चक्रुरमित्रेषु समीक्षयन्**
**रदिते अर्बुदे तव ॥**

हे शत्रवः, वः युष्माकं (? युष्मान्) मरुदाद्या देवाः । (आम्) प्रत्ययश्रवणसामर्थ्यात् चक्रुरिति अन्ते श्रूयमाणं सर्वत्र संबध्यते । ईशां चक्रुः ईश्वराः शिक्षकाः भवन्तु । तथा इन्द्रश्च अग्निश्च इत्यनुक्रान्ताश्च देवाः हे शत्रवः, वः युष्मान् ईशां चक्रः ईश्वराः युष्माकं नियन्तारो भवन्तु । तथा ऋषयः अथर्वाङ्गिरःप्रभृतयः ईशां चक्रुः ईश्वराः शिक्षकाः भवन्तु । हे अर्बुदे, अमित्रेषु अस्मदीयेषु शत्रुषु तव रदिते दन्तैर्विलेखने खादने सति तत् समीक्षयन् । व्यत्ययेन एकवचनम् । अवलोकयन्तो देवाद्याः । ईशां चक्रुः इति संबन्धः ।

असा.

**तेषां सर्वेषामीशाना उत्तिष्ठत**
**सं नह्यध्वं मित्रा देवजना यूयम् ।**
**इमं संग्रामं संजित्य यथालोकं वि तिष्ठध्वम् ॥**

तेषां सर्वेषामस्मदीयानां शत्रूणां ईशानाः ईश्वराः शिक्षकाः सन्तः उत्तिष्ठत सं नह्यध्वं च तेषां शिक्षणाय

उत्थाय संनद्धा भवत । हे मित्रा देवजनाः, यूयं इमं अस्मदीयं प्रस्तुतं संग्रामं संजित्य सम्यक् जित्वा अस्मदीयान् शत्रून् निरस्य यथालोकं यथास्थानं वि तिष्ठध्वं, स्वंस्वं स्थानं गच्छतेत्यर्थः । असा.

**[1]उत्तिष्ठत सं नह्यध्वमुदाराः केतुभिः सह ।**
**सर्पा इतरजना रक्षांस्यमित्राननु धावत ॥**

हे उदाराः औदार्यगुणोपेताः सेनानायकाः, केतुभिः आत्मीयैर्ध्वजैः सह उत्तिष्ठत युद्धार्थमुद्गच्छत, सं नह्यध्वं संनद्धाः कवचादिभिः संबद्धाः युद्धोद्युक्ता भवत । यद्वा, उदाराः पूर्वोक्ता मायामया अद्भुतरूपा यातुधानाद्याः । तेऽत्र संबोध्याः । सर्पाः हे सर्पाकृतयो देवजनाः, इतरजनाः सर्पव्यतिरिक्ता देवजातयः एतत्संज्ञाः, हे रक्षांसि राक्षसाः, यूयमपि अस्मदीयान् अमित्रान् शत्रून् अनु धावत अनु पृष्ठतः शीघ्रं गच्छत । असा.

**ईशां वो वेद राज्यं त्रिषंधे अरुणैः केतुभिः सह ।**
**ये अन्तरिक्षे ये दिवि पृथिव्यां ये च मानवाः ।**
**त्रिषंधेस्ते चेतसि दुर्णामान उपासताम् ॥**

**अयोमुखाः सूचीमुखा अथो विकङ्कतीमुखाः ।**
**क्रव्यादो वातरंहस आ सजन्त्वमित्रान्**
**वज्रेण त्रिषंधिना ॥**

हे अमित्राः, वः युष्माकं राज्यं राष्ट्रं त्रिसंधिः वज्राभिमानी देवः ईशां वेद ईशितव्यत्वेन जानातु, युष्मत्तः अपहृत्य स्ववशं करोत्वित्यर्थः । हे त्रिसंधे वज्रात्मक देव, अरुणैः अरुणवर्णैः केतुभिः आत्मीयैर्ध्वजैः सह । उत्तिष्ठेति शेषः । ये केतवः अन्तरिक्षे उत्पातरूपेण प्रादुर्भवन्ति ये च दिवि द्युलोके ये च पृथिव्यां भूलोके मानवाः मनुष्यसंबन्धिनः केतवः । तैः केतुभिः सहेति पूर्वत्र संबन्धः । हे त्रिसंधे, त्वे तव चेतसि मनसि वर्तमानं दुर्णामानं दुष्टसंज्ञकमस्मदीयं शत्रुं उपासतां संभजन्ताम् । के पुनस्त इत्याह– अयोमुखाः अयःसदृशतुण्डयुक्ताः पक्षिणः । सूचीमुखाः सूच्याकारतुण्डयुक्ताः पक्षिणः । अथो अपि च विकङ्कतीमुखाः, विकङ्कतः बहुकण्टको वृक्षविशेषः, विकङ्कतवत् बहुकण्टकयुक्तमुखाः पक्षिविशेषाः । क्रव्यादः क्रव्यं आममांसं अदन्ति भक्षयन्तीति क्रव्यादो गृध्राद्यः । वातरंहसः वातवेगाः त्रिसंधिना एतत्संज्ञेन देवेन वज्रेण वज्रायुधाभिमानिना प्रेरिताः सन्तः अमित्रान् अस्मदीयान् शत्रून् आ सजन्तु आसक्ता भवन्तु । यद्वा, संधित्रयोपेतेन वज्रायुधेन आसक्तान् संबद्धान् कुर्वन्तु । यथा ते वज्रेण हन्येरन् तथा प्रयतन्तामित्यर्थः । यस्य हि निकटे एवंरूपाः पक्षिणः उपसर्पन्ति तस्य मरणमवश्यं भवतीति शाकुनिकशास्त्रप्रसिद्धिः । असा.

**अन्तर्धेहि जातवेद आदित्य कुणपं बहु ।**
**त्रिषंधेरियं सेना सुहिताऽस्तु मे वशे ॥**

हे जातवेदः जातानां वेदितः सांग्रामिकाग्ने, आदित्य आदित्यं दिवि वर्तमानं सूर्यं बहु बहुलं कुणपम् । तृतीयार्थे द्वितीया । बहुलेन शवशरीरेण अन्तरिक्षे निपद्यमानेन अन्तर्धेहि आच्छादय । त्रिषंधेर्देवस्य संबन्धिनी इयं सेना मे मम वशे सुहिताऽस्तु सम्यक् निहिताऽस्तु । तया वयं शत्रून् जयेमैवेत्यर्थः । असा.

**उत्तिष्ठ त्वं देवजनार्बुदे सेनया सह ।**
**अयं बलिर्व आहुतस्त्रिषंधेराहुतिः प्रिया ॥**

हे देवजन देवजातीय अर्बुदे, त्वं आत्मीयया सेनया सह उत्तिष्ठ उद्गच्छ । हे अर्बुदे, आहुतिः हूयमानः पृषदाज्यहोमः वः युष्माकं अयं बलिः तृप्तिकरो हविर्भागः । यतो बलिप्रियास्त्वदीयाः सर्पाः अतोऽस्मदीयं हूयमानं पृषदाज्यं स्वीकृत्य अस्मदीयान् शत्रून् मारयन्तु इत्यर्थः । तथा त्रिषंधेर्देवस्य या सेना प्रागुक्ता साऽपि आहुतिप्रिया अनयाऽऽहुत्या प्रीता सती शत्रून् हिनस्तु । असा.

**शितिपदी सं द्यतु शरव्ये३यं चतुष्पदी ।**
**कृत्येऽमित्रेभ्यो भव त्रिषंधेः सह सेनया ॥**

शितिः श्वेतवर्णः पादे यस्याः सा शितिपदी गौः । सेयं चतुष्पदी पादचतुष्टयोपेता शरव्या शरूणां बाणानां समूहः शरव्या शरसंहतिरूपा भूत्वा सं पततु शत्रून् संप्राप्नोतु । हे कृत्ये कृत्यारूपिणि शितिपदि, त्वं

---

(१) असं. ११।१०।१-२६.

अमित्रेभ्यः शत्रुभ्यः कृत्यारूपा संहर्त्री भव । त्रिषंधेर्देवस्य सेनया सह । सेनाऽपि तव सहायभूतेत्यर्थः । असा.

**धूमाक्षी सं पततु कृधुकर्णी च क्रोशतु ।**
**त्रिषंधेः सेनया जिते अरुणाः सन्तु केतवः ॥**

शत्रुसंबन्धिनी सेना धूमाक्षी धूमेन मायामयेन आवृतानि अक्षीणि चक्षूंषि यस्याः सा तथोक्ता । तादृशी सती संपततु सम्यक् निपद्यताम् । तथा कृधुकर्णी अल्पश्रोत्रा पटहध्वनिना हतश्रवणसामर्थ्या च सा परकीया सेना क्रोशतु आक्रोशतु, इतिकर्तव्यतामूढा भवतु । इत्थं त्रिषंधेर्देवस्य संबन्धिन्या सेनया परकीये बले जिते जेतव्ये सति तत्संबन्धिनः अरुणाः अरुणवर्णाः केतवः ध्वजाः सन्तु भवन्तु । यद्वा, धूमैरक्षीणि आवृण्वती कृत्या धूमाक्षी । सा सं पततु शत्रुसेनां समागच्छतु । तथा कृधुकर्णी । कृधु इति अल्पनाम । कर्णयोः अल्पत्वापादिका श्रवणशक्तेर्विहन्त्री कृत्या कृधुकर्णी । सा च भीत्युत्पादनाय क्रोशतु । एवं त्रिषंधेः सेनया परकीये बले जिते सति तदीयाः केतवः अरुणाः रुधिरेणाक्ताः अरुणवर्णा भवन्तु । असा.

**अवायन्तां पक्षिणो ये वयां-**
**स्यन्तरिक्षे दिवि ये चरन्ति ।**
**श्वापदो मक्षिकाः सं रभन्ता-**
**मामादो गृध्राः कुणपे रदन्ताम् ॥**

अथ जयानन्तरभावीनि कार्याणि प्रार्थ्यन्ते । अन्तरिक्षे आकाशे ये वयांसि पक्षिणः संचरन्ति ते पक्षिणः अवायन्तां मृते शत्रुबले मांसभक्षणाय अवाङ्मुखं निपद्यन्ताम् । तथा दिवि द्युलोके ये पक्षिणश्चरन्ति तेऽप्यवायन्ताम् । तथा श्वापदः शुनः पादा इव पादा येषां ते तथोक्ताः श्वसृगालादयः मक्षिकाश्च सं रभन्तां शत्रुसेनायां शवभक्षणार्थमुपक्रमन्ताम् । तथा आमादः आममांसभक्षकाः गृध्राः पक्षिविशेषाः कुणपे शत्रुसेनासंबन्धिशवशरीरे रदन्तां स्वतुण्डैः पादैश्च विलिखन्तु, भक्षणाय उद्युञ्जतामित्यर्थः । असा.

**यामिन्द्रेण संधां समधत्था ब्रह्मणा च बृहस्पते ।**
**तयाऽहमिन्द्रसंधया सर्वान् देवानिह**
**हुव इतो जयत माऽमुतः ॥**

हे बृहस्पते देव, इन्द्रेण देवानामधिपतिना ब्रह्मणा च तत्स्रष्ट्रा प्रजापतिना च यां संधां संधानक्रियां प्रतिज्ञारूपां समधत्थाः । छान्दसो वर्णविकारः । संहितवानसि । तथा च मन्त्रान्तरम्– 'इयं वः सा सत्या संधाऽभूद्यामिन्द्रेण समभद्ध्वम्' ( तैसं. १।७।८।४ ) इति । हे इन्द्र, तया संधया प्रतिज्ञारूपया संधानक्रियया सर्वान् देवान् इह अस्मिन् संग्रामे हुवे आह्वयामि । हे आहूता देवाः, इतः आसु अस्मदीयासु सेनासु जयत जयं कुरुत । अमुतः अमीषु परसेनासु मा जयत । असा.

**बृहस्पतिराङ्गिरस ऋषयो ब्रह्मसंशिताः ।**
**असुरक्षयणं वधं त्रिषंधिं दिव्याश्रयन् ॥**

आङ्गिरसः अङ्गिरसः पुत्रो बृहस्पतिः देवमन्त्री ब्रह्मसंशिताः ब्रह्मणा मन्त्रेण स्वभ्यस्तेन तीक्ष्णीकृता अन्य ऋषयश्च असुरक्षयणं असुराणां क्षयकरं वधं हननसाधनं आयुधं त्रिषंधिं एतत्संज्ञं देवं संधित्रयोपेतं वज्रं वा दिवि द्युलोके स्थितं आश्रयन् असेवन्त, समभजन्तेत्यर्थः । असा.

**येनासौ गुप्त आदित्य उभाविन्द्रश्च तिष्ठतः ।**
**त्रिषंधिं देवा अभजन्तौजसे च बलाय च ॥**

येन त्रिसंधिना असौ दूरे दिवि दृश्यमानः आदित्यः गुप्तः रक्षितः असुरकृतोपद्रवपरिहारेण पालितः स आदित्यः इन्द्रश्च उभौ येन त्रिसंधिना वज्रेण बलेन तिष्ठतः स्वस्थाने प्रतिष्ठितौ भवतः तं त्रिसंधिं असुरक्षयणं आयुधभूतं देवं देवाः सर्वे अभजन्त असेवन्त । किमर्थम् ? ओजसे । ओजो नाम शरीरान्तर्गतोऽष्टमो धातुः । बलं तेजः । तस्मै च तत्कार्याय बलाय च । उभयत्र तादर्थ्ये चतुर्थी । असा.

**सर्वांल्लोकान्त्समजयन् देवा आहुत्याऽनया ।**
**बृहस्पतिराङ्गिरसो वज्रं यमसिञ्चता-**
**सुरक्षयणं वधम् ॥**

देवाः इन्द्रादयः अनया आहुत्या अनेन पृषदाज्य-होमेन सर्वान् लोकान् समजयन् असुरान् निहत्य प्राप्नुवन् । आङ्गिरसः अङ्गिरसः पुत्रो बृहस्पतिः असुरक्षयणं असुराणां क्षयकरं यं वधं हननसाधनं वज्रं आयुधं असिञ्चत सेचनेन निर्मितवान् । पृषदाज्याहुतिरेव वज्रात्मना परिणतेत्यर्थः । अनया वज्ररूपया आहुत्येति पूर्वत्रान्वयः । असा.

बृहस्पतिराङ्गिरसो वज्रं य-
मसिञ्चतासुरक्षयणं वधम् ।
तेनाहममूं सेनां नि लिम्पामि
बृहस्पतेऽमित्रान् हन्म्योजसा ॥

पूर्वोऽर्धर्चः पूर्ववद् व्याख्येयः । हे बृहस्पते, तेन त्वया निर्मितेन असुराणामन्तकारिणा वज्रेण अहं अमूः शात्रवीः सेनाम् । व्यत्ययेन एकवचनम् । सेनाः नि लिम्पामि नितरां छिनद्मि । सेनाच्छेदनानन्तरं तदधिपतीन् अमित्रान् शत्रून् ओजसा आत्मीयेन बलेन नि हन्मि निहिनस्मि । असा.

**सर्वे देवा अत्यायन्ति ये अश्नन्ति वषट्कृतम् ।**
**इमां जुषध्वमाहुतिमितो जयत माऽमुतः ॥**

सर्वे इन्द्रादयो देवाः अत्यायन्ति शत्रूनतिक्रम्य अस्मदभिमुखमागच्छन्ति । ते विशेष्यन्ते— ये देवाः वषट्कृतं वषट्कारेण दत्तं हविः अश्नन्ति भुञ्जते । ते सर्वे यूयं इमां अस्मदीयामाहुतिं जुषध्वं सेवध्वम् । तया प्रीता यूयं इतः । सप्तम्यर्थे तसिल् प्रत्ययः । आसु अस्मदीयासु सेनासु जयत जयं कुरुत । अमुतः अमूषु परकीयासु सेनासु मा जयत, तत्र पराजय एव भवतु इत्यर्थः । असा.

**सर्वे देवा अत्यायन्तु त्रिषंधेराहुतिः प्रिया ।**
**संधां महतीं रक्षत ययाऽग्रे असुरा जिताः ॥**

सर्वे इन्द्रादयो देवाः अत्यायन्ति शत्रूनतिक्रम्य अस्मदभिमुखमागच्छन्तु । तथा त्रिसंधेः एतन्नाम्नः सेनामोहकस्य देवस्य इयं अस्मदीया आहुतिः प्रिया प्रीतिकरी भवतु । हे देवाः, संधां जयविषयप्रतिज्ञां महतीं प्रौढां रक्षत । सा च त्रिसंधेराहुतिः तां प्रतिज्ञां रक्षतु । यया संधया अग्रे पूर्वे देवासुरयुद्धकाले असुरा जिताः पराजयं प्रापिताः । तां संधामिति पूर्वत्रान्वयः । असा.

**वायुरमित्राणामिष्वग्राण्याञ्चतु ।**
**इन्द्र एषां बाहून् प्रति भनक्तु**
**मा शकन् प्रतिधामिषुम् ।**
**आदित्य एषामस्त्रं वि नाशयतु**
**चन्द्रमा युतामगतस्य पन्थाम् ॥**

वायुः देवः अमित्राणां शत्रूणां इष्वग्राणि इषूणां शराणां अग्राणि आञ्चतु अभिमुखं गच्छतु । प्रतिकूलवातेन लक्ष्यप्राप्तेः प्रागेव निपात्यन्तामित्यर्थः । तथा इन्द्रो देवः एषां शत्रूणां बाहून् प्रति भनक्तु प्रातिकूल्येन भग्नान् आयुधग्रहणासमर्थान् करोतु । अतस्ते इषुं बाणं प्रतिधां पुनर्धनुषि प्रतिहितां कर्तुं मा शकन् शक्ता न भवन्तु । एषां शत्रूणां अस्त्रं आयुधजातं आदित्यः सूर्यः वि नाशयतु सामर्थ्यकुण्ठनेन विनष्टं करोतु । तथा चन्द्रमाः सोमः अगतस्य अप्राप्तस्य आजिगमिषतः शत्रोः पन्थां पन्थानं अस्मत्प्राप्त्युपायभूतं मार्गं युतां ततः पृथक्कुरुताम् । तादृशं मार्गं शत्रुर्न पश्यत्वित्यर्थः । असा.

**[1]यदि प्रेयुर्देवपुरा ब्रह्म वर्माणि चक्रिरे ।**
**तनूपानं परिपाणं कृण्वाना**
**यदुपोचिरे सर्वं तदरसं कृधि ॥**

'यदि प्रेयुः' इत्येका पूर्वे (असं. ५।८।६) आम्नाता । सा तत्रैव व्याख्याता* । असा.

**[2]क्रव्यादाऽनुवर्तयन् मृत्युना च पुरोहितम् ।**
**त्रिषंधे प्रेहि सेनया जयामित्रान् प्र पद्यस्व ॥**

हे त्रिषंधे एतत्संज्ञक देव, पुरोहितं पुरस्तात् स्थितं शत्रुं क्रव्यादा । क्रव्यं आममांसं अत्ति भक्षयतीति क्रव्यात् । तेन अनुवर्तयन् अनुगमयन् मृत्युना मारकेण देवेन च अनुगमयन् सेनया आत्मीयया प्रेहि प्रगच्छ ।

---

* आदर्शपुस्तके पञ्चमकाण्डे भाष्यं न मुद्रितम् ।

(१) असं. ५।८।६, ११।१०।१७.

(२) असं. ११।१०।१८–२७.

गत्वा च अमित्रान् शत्रून् जय, तदर्थं प्र पद्यस्व शत्रुमध्यं प्रविश। असा.

**त्रिषंधे तमसा त्वममित्रान् परि वारय।**
**पृषदाज्यप्रणुत्तानां माऽमीषां मोचि कश्चन॥**

हे त्रिषंधे एतत्संज्ञक देव, त्वं तमसा मायामयेन अन्धकारेण अमित्रान् शत्रून् परि वारय परिवृतान् परिवेष्टितान् कुरु। पृषदाज्यप्रणुत्तानाम्। दधिमिश्रमाज्यं पृषदाज्यम्। तत् अस्मिन् कर्मणि होम्यत्वेन विहितम्। तेन हूयमानेन प्रणुत्तानां प्रकर्षेण क्षिप्तानां अमीषां शत्रूणां मध्ये कश्चन एकोऽपि मा मोचि मुक्तो मा भूत्। सर्वांस्तमसा प्रावृत्य मारयेत्यर्थः। असा.

**शितिपदी सं पतत्वमित्राणाममूः सिचः।**
**मुह्यन्त्वद्यामूः सेना अमित्राणां न्यर्बुदे॥**

शितिः श्वेतवर्णः पादे यस्याः सा शितिपदी गौः। सा परसेनामध्ये विसृज्यमाना अमित्राणां शत्रूणां शुचः शोचमानाः अस्मदायुधैर्निपीड्यमानाः अमूः सेनाः सं पततु संगच्छतु। हे न्यर्बुदे एतत्संज्ञक सर्प, अमित्राणां शत्रूणां अमूः दूरे दृश्यमानाः सेनाः अद्य इदानीं युद्धसमये मुह्यन्तु मूढा भवन्तु। स्वमायावशेन तासां मोहमुत्पादयेत्यर्थः। असा.

**मूढा अमित्रा न्यर्बुदे जह्येषां वरंवरम्।**
**अनया जहि सेनया॥**

हे न्यर्बुदे एतत्संज्ञक देव, त्वं अमित्रान् शत्रून् मूढाः त्वदीयया मायया मूढान् संजातमोहान् कर्तव्याकर्तव्यविभागज्ञानशून्यान् कुरु। एषां शत्रूणां मध्ये वरंवरं श्रेष्ठंश्रेष्ठं जहि मारय। तथा अनया अस्मदीयया सेनया तान् जहि। त्वत्प्रसादात् अस्मदीयाऽपि सेना जयं लभतामित्यर्थः। असा.

**यश्च कवची यश्चाकवचो३ऽमित्रो यश्चाज्मनि।**
**ज्यापाशैः कवचपाशैरज्मनाऽभिहतः शयाम्॥**

यः शत्रुः कवची कवचवान् तनुत्रेणाऽऽवृतशरीरः यश्च शत्रुः अकवचः कवचरहितः अनावृतशरीरः यश्च अमित्रः शत्रुः अज्मनि अजति गच्छत्यनेनेति अज्म रथादि यानं, तत्र वर्तते स सर्वः शत्रुः ज्यापाशैः स्वस्वधनुर्गतैः मौर्वीपाशैः कवचपाशैः वर्मबन्धनपाशैः अज्मना रथादिना तत्रत्यैः पाशैश्च अभिहितः बद्धः शयां शेताम्। अयमर्थः—यद्यत् स्वरक्षणाय धनुःकवचादिकमाबध्यते तदेव तस्य गतिप्रतिबन्धकं भवत्विति। असा.

**ये वर्मिणो येऽवर्माणो अमित्रा ये च वर्मिणः।**
**सर्वांस्ताँ अर्बुदे हतांछ्वानोऽदन्तु भूम्याम्॥**

उक्त एवार्थो विव्रियते — ये शत्रवः वर्मिणः वर्मणा शस्त्रवारककवचेन युक्ताः ये अवर्माणः वर्मरहिताः ये च अमित्राः शत्रवः वर्मिणः, वर्म कवचव्यतिरिक्तं शस्त्रनिवारकं, तद्युक्ताः, तदाच्छन्ना इत्यर्थः। हे अर्बुदे, तान् सर्वान् त्वया हतान् मारितान् भूम्यां पृथिव्यां निपतितान् श्वानः श्वसृगालाद्याः श्वापदाः अदन्तु भक्षयन्तु। असा.

**ये रथिनो ये अरथा असादा ये च सादिनः।**
**सर्वानदन्तु तान् हतान् गृध्राः श्येनाः पतत्रिणः॥**

ये शत्रवः रथिनः रथारूढाः ये च अरथाः रथरहिताः ये च असादाः अश्वादियानरहिताः पदातयः ये च सादिनः अश्वारूढाः, हे अर्बुदे, त्वत्प्रसादेन अस्माभिर्हतान् मारितान् तान् सर्वान् शत्रून् गृध्रादयः पक्षिणो रदन्तु विलिखन्तु। नखैर्मुखेन विलिख्य भक्षयन्त्वित्यर्थः। असा.

**सहस्रकुणपा शेतामामित्री सेना समरे वधानाम्।**
**विविद्धा ककजाकृता॥**

आमित्री अमित्रसंबन्धिनी शात्रवी सेना अस्मदीयां सेनां प्राप्य वधानां हननसाधनानामायुधानां समरे संगमने सति विविद्धा विविधशस्त्रपातेन हता सहस्रकुणपा असंख्यातशवयुक्ता सती ककजाकृता कुत्सितजनना विलोलजनना वा कृता भवतु। असा.

**मर्माविधं रोरुवतं सुपर्णैरदन्तु**
**दुश्चितं मृदितं शयानम्।**
**य इमां प्रतीचीमाहुतिममित्रो नो युयुत्सति॥**

सुपर्णैः शोभनपतनैः शरैः मर्माविधं मर्मसु स्तनमूलादिस्थानेषु विध्यमानं मर्मव्यधनादेव रोरुवतं अत्यर्थं क्रोशन्तं दुश्चितं दुःखैः पूरितं मृदितं चूर्णीकृतं अत एव भूमौ शयानं एवंभूतं शत्रुं अदन्तु श्वसृगालादयो

भक्षयन्तु । यः अमित्रः शत्रुः नः अस्माकं संबन्धिनीमिमां पृषदाज्येन हूयमानामाहुतिं प्रतीचीं प्रतिमुखमञ्चन्तीं प्रतिनिवृत्तगतिं कर्तुं युयुत्सति योद्धुमिच्छति । तमेवंभूतं भक्षयन्तु इति पूर्वत्र संबन्धः । असा.

**यां देवा अनुतिष्ठन्ति यस्या नास्ति विराधनम् ।**
**तयेन्द्रो हन्तु वृत्रहा वज्रेण त्रिषंधिना ॥**

यां पृषदाज्याहुतिं देवा अनुतिष्ठन्ति वज्रोत्पादनाय आचरन्ति । यस्या आहुतेर्विराधनं विराद्धिः मोघवीर्यता नास्ति, अप्रतिहता शक्तिर्विद्यते इत्यर्थः । तया आहुत्या उत्पादितेन त्रिसंधिना संधित्रयोपेतेन वज्रेण वृत्रहा वृत्रासुरं हतवान् इन्द्रः हन्तु अस्मदीयान् शत्रून् हिनस्तु । 'सर्वांल्लोकान्त्समजयन् देवा आहुत्याऽनया' (असं. ११।१०।१२) इत्यनया ऋचा पृषदाज्याहुतेर्वज्ररूपता प्रागेवोक्ता । असा.

युद्धे हताः शूरा उत्तमलोकगामिनः

[1]**ये युध्यन्ते प्रधनेषु शूरासो ये तनूत्यजः ।**
**ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात् ॥**

प्रधनेषु । प्रकीर्णानि अस्मिन् धनानि भवन्तीति प्रधनाः संग्रामाः । तेषु शूरासः शौर्यवन्तः ये युध्यन्ते शत्रून् संप्रहरन्ति, ये च तनूत्यजः शरीराणि तत्र ये त्यक्तारो भवन्ति, ये वा ये च सहस्रदक्षिणाः सहस्रदक्षिणान् क्रतून् अनुष्ठितवन्तः तान् सर्वानेव हे प्रेत, त्वं इतो गच्छ । ते येषु उत्तमेषु लोकेषु निवसन्ति तं लोकं प्राप्नुहीत्यर्थः । असा.

युद्धोद्यतस्य राज्ञः कवचधारणम्

[2]**अप न्यधुः पौरुषेयं वधं य-**
**मिन्द्राग्नी धाता सविता बृहस्पतिः ।**
**सोमो राजा वरुणो अश्विना यमः**
**पूषाऽस्मान् परि पातु मृत्योः ॥**

पौरुषेयं पुरुषैः शातयितृभिररिभिः कृतम् । तं यं वधं वधसाधनं अप न्यधुः अपाञ्चं अपगूढं न्यधुः निहितवन्तः । वल्गलक्षणं शस्त्रास्त्रादिरूपं वा हननसाधनं मायया परेषामप्रकाशं (हननसाधनं ?) अस्मान् हिंसितुमस्मदभिमुखं प्रेरितवन्त इत्यर्थः । तस्मात् अप्रकाशात् शत्रुभिः प्रहितात् मृत्योः मृत्युसाधनात् मृत्युरूपाद्वा वधात् अस्मान् कवचधारिणः अस्मदीयान् राज्ञो वा इन्द्राग्न्यादयो देवताः परि पातु । प्रत्येकविवक्षया एकवचनम् । परितः सर्वतः पान्तु रक्षन्तु । असा.

**यानि चकार भुवनस्य यस्पतिः**
**प्रजापतिर्मातरिश्वा प्रजाभ्यः ।**
**प्रदिशो यानि वसते दिशश्च**
**तानि मे वर्माणि बहुलानि सन्तु ॥**

भुवनस्य भूतजातस्य पतिः पालको यः प्रजापतिरस्ति सः यानि वर्माणि कवचानि चकार । किमर्थम् ? प्रजाभ्यः प्रकर्षेण जायमानाभ्यो मनुष्यपश्वादिभ्यः । तादर्थ्ये चतुर्थी । तद्रक्षणार्थं मातरिश्वा, मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः सूत्रात्मा । प्रजापतेर्विशेषणमेतत् । तथा प्रदिशः प्रकृष्टाः प्राच्यादिमहादिशः दिशः अवान्तरदिशश्च यानि वर्माणि वसते आच्छादयन्ति स्वरक्षणार्थम् । तानि प्रजापतिना प्रजारक्षणार्थंनिर्मितानि दिग्भिश्च स्वरक्षणार्थं वसितानि वर्माणि कवचानि मे मम युयुत्सोः बहुलानि प्रभूतानि सन्तु भवन्तु । यदा यदाऽपेक्षते तदा लाभाय बहुलानीत्युक्तम् । अथवा स्वस्य परिवाराणां च अपेक्षया बहुलानीति । यस्य यदपेक्षितं तस्य तत् भवतु इत्यर्थः । असा.

**यत्ते तनुष्वनह्यन्त देवा द्युराजयो देहिनः ।**
**इन्द्रो यच्चक्रे वर्म तदस्मान् पातु विश्वतः ॥**

द्युराजयः दिवि द्युलोके राजमानाः देहिनः शरीरिणः । कवचधारणं देहस्यैवेति देहिनो देवा इत्युक्तम् । ते प्रसिद्धा देवाः तनूषु स्वशरीरेषु यत् वर्म अनह्यन्त धृतवन्तः असुरयुद्धे स्वदेहरक्षणार्थं प्रतिमुक्तवन्तः, इन्द्रश्च यत् वर्म कवचं चक्रे शत्रुविजयार्थम्, तत् कवचं देवैरिन्द्रेण च स्वशरीरे धारितं इदं कवचं अस्मान् युद्धोद्यतान् विश्वतः सर्वतः परकृतप्रहारेभ्यः पातु रक्षतु । असा.

(१) ऋसं. १०।१५४।३ ; असं. १८।२।१७ ; तैआ. ६।३।२ तनूत्यजः (तनुत्यजः) ; मेधा. ७८९.
(२) असं. १९।२०।१-४.

**वर्म मे द्यावापृथिवी वर्माहर्वर्म सूर्यः ।**
**वर्म मे विश्वे देवाः क्रन्मा मा प्रापत्प्रतीचिका ॥**

द्यावापृथिवी द्यावापृथिव्यौ मे मम वर्म कवचं कुरुताम् । अग्निश्च वर्म करोतु । सूर्यश्च विश्वे सर्वे देवाः इन्द्रादयश्च मे मम युयुत्सोः मदीयस्य वा राज्ञः वर्म कवचं क्रन् कुर्वन्तु । किंच प्रतीचिका प्रत्यगञ्चना प्रतीची । अज्ञातार्थे कप्रत्ययः । शत्रुसेना अज्ञातप्रतिकूलाञ्चना सती मा मां कवचधारिणं युद्धोद्यतं मो मैव प्रापत् प्राप्नोतु । कवचधारिणो ममाग्रतः शत्रुसेना प्रकाशैव आयातु । देवानुगृहीतकवचधारणेन दृप्तामपि तां परसेनां हन्तुं शक्नोमीत्यर्थः । अस्रा.

राज्यकामस्य संग्रामजयकामस्य च पशवः

**[१]देवासुरा एषु लोकेष्वस्पर्धन्त । स एतं विष्णुर्वामनमपश्यत् । तꣳ स्वायै देवताया आऽलभत । ततो वै स इमांल्लोकानभ्यजयत् ॥**

तृतीयानुवाके जयादिहेतून् पशून् विधित्सन् आदौ लोकत्रयजयहेतुं पशुं विधातुं प्रस्तौति— देवासुरा इति । लोकेषु विषयभूतेषु वामनं ह्रस्वं पशुं स्वायै विष्णुरूपायै देवतायै । तैसा.

**वैष्णवं वामनमा लभेत । स्पर्धमानो विष्णुरेव भूत्वेमांल्लोकानभि जयति ॥**

स्पर्धमानः गृहक्षेत्रादिविषये विवादवान् । विष्णुप्रियहविर्दानादस्योपचरितं विष्णुत्वम् । तैसा.

**विषम आ लभेत । विषमा इव हीमे लोकाः समृद्धयै ॥**

चोदकपरम्पराप्राप्तं समदेशमपवदितुं विधत्ते— विषम इति । पृथिव्यादिलोकानामुत्तरोत्तरं विस्तृतत्वाद्भोगाधिक्याद्वा विषमत्वम् । सोऽयं विषमदेशः समृद्धयै कल्पते । तैसा.

**इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमा लभेत संग्रामे संयत्ते । इन्द्रियेण वै मन्युना मनसा संग्रामं जयति । इन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति । स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ संग्रामम् ॥**

संग्रामार्थिनः पशुं विधत्ते— इन्द्रायेति । मनस्वते धैर्यवते । ललामशब्दः श्वेतपुण्ड्रवालाङ्कितललाटोपेतं ब्रूते । प्राशृङ्गः मुखं प्रत्यासन्नशृङ्गः पुंगवः, 'प्राशृङ्गो गौः' इति भरद्वाजवचनात्, 'प्राशृङ्गः अवाक्शृङ्ग उक्षा वशा वेहद्धेनुर्वत्स ऋषभोऽनड्वान् पुनरुत्सृष्टो गोमृग इति गव्याः' इत्यापस्तम्बवचनात् । संयत्ते प्राप्ते सति । इन्द्रियं शारीरं बलम् । मन्युः शत्रुविषयः कोपः । मनः धैर्यम् । तैसा.

**[१]सौम्यं बभ्रुमा लभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेत् । सौम्यं वै राज्यम् । सोममेव स्वेन भागधेयेनोप धावति । स एवास्मै राज्यं प्रयच्छति । उपैनꣳ राज्यं नमति । बभ्रुर्भवति । एतद्वै सोमस्य रूपꣳ समृद्धयै ॥**

राज्यप्राप्तिकामिनः पशुं विधत्ते— सौम्यमिति । राज्ञो ज्येष्ठपुत्रत्वात् शौर्यादिगुणसंपन्नत्वात् राज्यायालं सन्तं सम्यग्योग्यं सन्तं यं पुरुषं प्रति राज्यं न प्राप्नुयात्तस्यायं पशुः । 'सोमोऽस्माकं ब्राह्मणानाꣳ राजा' इति श्रुतत्वाद्राज्यं सौम्यम् । चन्द्रमण्डलस्य सुवर्णवर्णत्वात् बभ्रुत्वं सोमस्य रूपम् । तैसा.

**इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमा लभेत गतश्रीः प्रतिष्ठाकामः । पाप्मानमेव वृत्रं तीर्त्वा प्रतिष्ठां गच्छति ॥**

शत्रुबाधेन भ्रष्टश्रियः प्रतिष्ठार्थं पशुं विधत्ते— इन्द्रायेति । वृत्रतूः वैरिहिंसकः । पाप्मानमेव नरकप्रदपापवद्बाधकमेव वृत्रं वैरिणम् । तैसा.

**इन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमा लभेत यः पाप्मना गृहीतः स्यात् । पाप्मा वा अभिमातिः । इन्द्रमेवाभिमातिहनꣳ स्वेन भागधेयेनोप धावति । स एवास्मात्पाप्मानमभिमातिं प्र णुदते ॥**

पापक्षयार्थिनः पशुं विधत्ते— इन्द्रायेति । पाप्मना गोवधाद्युपपातकादिना । तैसा.

---

(१) तैसं. २।१।३।१–२.

(१) तैसं. २।१।३।३–६.

इन्द्राय वज्रिणे ललामं प्राशृङ्गमा लभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेत् । इन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोप धावति । स एवास्मै वज्रं प्र यच्छति । स एनं वज्रो भूत्या इन्धे । उपैनꣳ राज्यं नमति । ललामः प्राशृङ्गो भवति । एतद्वै वज्रस्य रूपꣳ समृद्ध्यै ॥

राज्यार्थिनः पश्वन्तरं विधत्ते– इन्द्रायेति । वज्रं वज्रवत् प्रहरणसमर्थमायुधम् । स चाऽऽयुधविशेषो वज्रसमो भूत्या इन्धे यजमानं वैरिसंतापाय प्रदीप्तं करोति । नतस्य शृङ्गस्य तीक्ष्णाग्रत्वात् तीक्ष्णधारायुक्तवज्ररूपत्वम् ।

तैसा.

वीर्यकामस्येष्टयः

[१]अप वा एतस्मादिन्द्रियं वीर्यं क्रामति यः संग्राममुपप्रयाति । ऐन्द्राग्नमेकादशकपालं निर्वपेत् संग्राममुपप्रयास्यन् । इन्द्राग्नी एव स्वेन भागधेयेनोप धावति । तावेवास्मिन्निन्द्रियं वीर्यं धत्तः । सहेन्द्रियेण वीर्येणोप प्र याति । जयति तꣳ संग्रामम् ॥

युद्धार्थं परसैन्यसमीपं प्रयास्यतो भयावेशाद्धस्तपादादीन्द्रियगता शक्तिरपक्रामति । इन्द्राग्नी तस्य धैर्यमुत्पाद्येन्द्रियशक्तिं समाधत्तः । तैसा. १।१।१४।१

वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः संग्रामं जयति । ऐन्द्राग्नमेकादशकपालं निर्वपेत् संग्रामं जित्वा । इन्द्राग्नी एव स्वेन भागधेयेनोप धावति । तावेवास्मिन्निन्द्रियं वीर्यं धत्तः । नेन्द्रियेण वीर्येण व्यृध्यते ॥

युद्धश्रमेणेन्द्रियगतस्य वीर्यस्य व्यृद्धिः ।

तैसा. १।१।१४।१

अप वा एतस्मादिन्द्रियं वीर्यं क्रामति य एति जनताम् । ऐन्द्राग्नमेकादशकपालं निर्वपेज्जनतामेष्यन् । इन्द्राग्नी एव स्वेन भागधेयेनोप धावति । तावेवास्मिन्निन्द्रियं वीर्यं धत्तः । सहेन्द्रियेण वीर्येण जनतामेति ॥

विजिगीषुकथासु स्वविद्याप्रकटनाय वा सभां जिगमिषोर्धैर्यभ्रंशरूपं वीर्यापक्रमणं भवति ।

तैसा. १।१।१४।१

सेनाकामस्य युद्धार्थिनो नष्टधैर्यस्य चेष्टयः

[१]इन्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसꣳशितेव स्यात् । इन्द्राणी वै सेनायै देवता । इन्द्राणीमेव स्वेन भागधेयेनोप धावति । सैवास्य सेनाꣳ सꣳश्यति ॥

इष्टयन्तरं विधत्ते– इन्द्राण्या इति । असंशिता तीक्ष्णा न भवति, स्वकार्यक्षमा नैव भवेदित्यर्थः ।

तैसा. १।७।१३।१

बल्बजानपीध्मे सं नह्येत् । गौर्यत्राधिष्कन्ना न्यमेहत् । ततो बल्बजा उदतिष्ठन् । गवामेवैनं न्यायमपिनीय गा वेदयति ॥

तस्यामिष्टौ कंचिदङ्गविशेषं विधत्ते– बल्बजानिति । बल्बजाः तृणविशेषाः । तानपि चोदकप्राप्ते इध्मे सम्यग्बध्नीयात् । अधिष्कन्ना अधिकं पुरीषं प्राप्ता गौर्यत्र देशे न्यमेहत् नितरां मूत्रं करोति ततो देशाद्बल्बजा उत्पद्यन्ते । तेषां च बल्बजानां बन्धत्वेन यजमानं गवामेव न्यायमपिनीय प्रापय्य गा वेदयति लम्भयति । गवां न्यायः स्वाधीनतया शिक्षितत्वम् । यथा धेनवः शिक्षिताः प्रतिदिनमरण्ये गत्वा यत्र क्वापि पलायनलक्षणं चापलं परित्यज्य काले स्वगृहमेवाऽऽयान्ति, अनायासेन दुह्यन्ते । यथा वा बलीवर्दाः शिक्षिताः सन्तो रथादीन्स्वामिन इच्छानुसारेण वहन्ति तथा सेनायाः स्ववशत्वेन कार्यकारित्वं गोन्यायः । गा वेदयति, गोवद्धितां स्वाधीनां कार्यकारित्वेन प्रापयतीत्यर्थः । तैसा. १।७।१३।१

इन्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत्संग्रामे संयत्ते । इन्द्रियेण वै मन्युना मनसा संग्रामं जयति । इन्द्रमेव मन्युमन्तं मन-

(१) तैसं. २।२।१।२-४.

(१) तैसं. २।२।८।१-३.

**स्वन्त॒ँ स्वेन भागधेयेनोप धावति । स एवा-स्मिन्निन्द्रियं मन्युं मनो दधाति । जयति त॒ँ संग्रामम् ॥**

इष्ट्यन्तरं विधत्ते– इन्द्रायेति । मनस्वते धैर्योपेताय । संग्रामे युद्धे संयत्ते सम्यक्प्रवृत्ते सति । इन्द्रियेण पाणि-पादादीन्द्रियपाटवेन । मन्युना वैरिविषयकोपाधिक्येन । मनसा पलायनभीत्यादिवर्जनरूपेण धैर्येण ।

तैब्रा. १।७।१३।२

**एतामेव निर्वपेद्यो हतमनाः स्वयंपाप इव स्यात् । एतानि हि वा एतस्मादपक्रान्तानि । अथैष हतमनाः स्वयंपाप इन्द्रमेव मन्युमन्तं मनस्वन्त॒ँ स्वेन भागधेयेनोप धावति । स एवा-स्मिन्निन्द्रियं मन्युं मनो दधाति । न हतमनाः स्वयंपापो भवति ॥**

पूर्वोक्तामेवेष्टिं फलान्तराय विधत्ते– एतामिति । यः पुरुषो रोगेण द्रव्यहान्यादिना वा हतमनाः नष्टचित्तः सन् स्वयंपाप इव भ्रान्त इव स्यात्, एतस्मात्पुरुषादेतानि इन्द्रियमन्युधैर्याणि अपक्रान्तानि । अथेदानीमेष पुरुषो नष्टचित्तः स्वयं भ्रान्तो भवति, तादृश एतामेव निर्वपे-दिति पूर्वत्रान्वयः । तैब्रा. १।७।१३।२–३

संग्रामे परस्परविरोधः शत्रुजयकरः

**[1]देवासुराः संयत्ता आसन् । ते देवा मिथो विप्रिया आसन् । ते१ऽन्योऽन्यस्मै ज्यैष्ठ्या-यातिष्ठमानाः पञ्चधा व्यक्रामन्– अग्निर्वसुभिः, सोमो रुद्रैः, इन्द्रो मरुद्भिः, वरुण आदित्यैः, बृह-स्पतिर्विश्वैर्देवैः । तेऽमन्यन्त– असुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामः । यन्मिथो विप्रियाः स्मः । या न इमाः प्रियास्तनुवस्ताः समवद्यामहै । ताभ्यः स निर्ऋच्छाद्यो नः प्रथमो१ऽन्योऽन्यस्मै द्रुह्या-दिति । तस्माद्यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति ॥**

संयत्ताः संग्रामं प्राप्ताः । मिथः परस्परं ते च देवाः सर्वेऽपि स्वातिरिक्तस्य ज्यैष्ठ्यमनङ्गीकुर्वाणाः पञ्चव्यूहा अभवन् । तेषु व्यूहेष्वग्न्यादयः पञ्च देवाः सेनान्यः, वस्वादयः पञ्च गणाः । ततस्ते कंचित्कालं परस्पर-विरोधिनो भूत्वा पश्चादेवं विचारितवन्तः– यदि वयमन्यो-न्यविरोधिनस्तदा वैरिणामसुराणामिदं जयरूपं कार्यं वय-मेव साधयामः । ततस्तद्विरोधपरिहारहेतुं शपथं कर्तुमस्म-दीयाः प्रियाः पुत्रभार्यादिरूपाः इमास्तनूरेकत्र संघीकुर्मे इति विचार्य संघीकृत्य शपथमेवं परिभाषितवन्तः– अस्माकं मध्ये यः प्रथमं द्रुह्यति स ताभ्यस्तनूभ्यो निर्गच्छेत् निर्भ्रष्टो भवत्विति । यस्माद्देवानामेवं वृत्तं तस्मान्मनुष्याणामपि शपथं कृतवतां मध्ये यः प्रथमं द्रुह्यति स विनाशं प्राप्नोति । समाने एकस्मिन् विषये तानूनप्त्रिणः शपथवन्तः सतानूनप्त्रिणः ।

तैब्रा. १।२।१०।२

पुरभेदो जयकरः

**[1]तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी । ता देवा जेतुं नाशक्नुवन् । ता उपसदैवाजिगीषन् । तस्मादाहुर्यश्चैवं वेद यश्च न । उपसदा वै महापुरं जयन्तीति । त इषु॒ँ समस्कुर्वत । अग्निमनीक॒ँ सोम॒ँ शल्यं विष्णुं तेजनम् । तेऽब्रुवन्– क इमामसिष्यतीति । रुद्र इत्यब्रुवन् । रुद्रो वै क्रूरः । सोऽस्यत्विति । सो-ऽब्रवीत्– वरं वृणै । अहमेव पशूनामधिपतिरसा-नीति । तस्माद्रुद्रः पशूनामधिपतिः । ता॒ँ रुद्रो-ऽवासृजत् । स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्यो-ऽसुरान् प्राणुदत ॥**

ये पूर्वमग्निना वरूथेन पराभूता असुरास्तेषामसुराणां पृथिव्यन्तरिक्षद्युलोकेषु स्वरक्षार्थं तिस्रः पुरो दुर्गरूपा आसन् । तासु पृथिवीवर्तिनी लोहप्राकारवेष्टिता । अन्तरिक्षवर्तिनी रजतप्राकारवेष्टिता । द्युलोकवर्तिनी हिरण्यप्राकारवेष्टिता । तादृशीः पुरः देवा अग्निना

(१) तैसं. ६।२।२।१–२.

(१) तैसं. ६।२।३।१–२.

वरूथेनापि जेतुमशक्ता युद्धं परित्यज्योपसदैव जेतुमैच्छन् । दुर्गं परितोऽवरुध्य चिरं तत्समीपेऽवस्थाय तमुपवसत (? मुपावसन्) चिरकालावस्थाने सति दुर्गमध्येऽन्नपानादिक्षयादन्तर्भेदाद्वा जयो भवति (इति)। यस्मात् देवैश्चिरवासो जयोपायत्वेन विचारितस्तस्माल्लोकेऽप्याहुः । के किमाहुः ? यश्च ब्राह्मणादिर्वेदाध्ययनेन वेदविचारं जानाति, यश्च शूद्रादिर्न जानाति ते सर्वेऽपि युद्धेनाजेयं महापुरमुपसदा जेतुं शक्यमित्याहुः। ततो देवाः कालविलम्बो मा भूदिति विचार्य युद्धेनैव जेतुमिषुं संस्कृतवन्तः । अग्निं सोमं विष्णुं च संभूय एकबाणं कृत्वा तेन जेतुमुद्युक्ताः । अनीकशब्दो बाणस्य प्रथमभागकाष्ठमाचष्टे । शल्यशब्दो लोहम् । तेजनशब्दः तदग्रम् । तामिमां देवतात्रयसमष्टिरूपामिषुं स्त्रीबालसहितकृत्स्नासुरघातिनीं को नाम मोक्ष्यतीति विचार्य शक्तो निर्घृणश्च रुद्र इति निश्चित्य तस्मै वरं दत्तवन्तः । स रुद्रस्तामिषुं मुक्त्वा तया प्राकारत्रयं विभिद्य त्रिभ्यो लोकेभ्योऽसुरान्निःसारयामास । तैसा. १।२।११।२

### युद्धनीतिः शत्रुवधे

**[1]राज्ञा राजानमंशभुवा घ्नन्ति । वैश्येन वैश्यम् । शूद्रेण शूद्रम् ॥**

तद्यथा रामो विभीषणेनांशभुवा सहितो रावणं जघान । वैश्यशूद्रयोरप्युदाहार्यम् । तैसा. १।४।५।१

### युद्धार्थं पुरकरणम्

**[2]देवासुरा वा एषु लोकेषु समयतन्त । ते वा असुरा इमानेव लोकान्पुरोऽकुर्वत । यथौजीयांसो बलीयांस एवं ते वा अयस्मयीमेवेमामकुर्वत, रजतामन्तरिक्षं, हरिणीं दिवम् । ते तथेमांल्लोकान्पुरोऽकुर्वत । ते देवा अब्रुवन्– पुरो वा इमेऽसुरा इमांल्लोकानक्रत । पुर इमांल्लोकान्प्रतिकरवामहा इति । तथेति ते सद एवास्याः प्रत्यकुर्वत आग्नीध्रमन्तरिक्षाद्धविर्धाने दिवः । ते तथेमांल्लोकान्पुरः प्रत्यकुर्वत ॥**

देवाश्चासुराश्च लोकत्रयविषये समयतन्त परस्परं युद्धं कृतवन्तः । तदानीमसुरा इमानेव भूरादींस्त्रींल्लोकान् पुरोऽकुर्वत प्राकारपरिवेष्टितानि नगराणि कृतवन्तः । यथा लोके महान्तो राजानोऽभ्यधिकेनौजसा शरीरशक्त्या संपन्ना अभ्यधिकेन सैन्यरूपेण बलेन च संपन्नाः प्रौढानि दुर्गाणि कुर्वन्ति, एवमेते कृतवन्तः । तत्रेमां भूमिमयस्मयीं लोहप्राकारयुक्तामकुर्वत । अन्तरिक्षं लोकं च रजतप्राकारवेष्टितां पुरीमकुर्वत । द्युलोकं हरिणीं हिरण्मयीं सुवर्णप्राकारवेष्टितां पुरीमकुर्वत । तथेत्युक्तनगरनिर्माणकृतस्योपसंहारः । तमिममर्थं सर्वे तैत्तिरीयाः संक्षिप्याऽऽमनन्ति– 'तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी' (तैसं. ६।२।३।१) इति । ततस्ते देवा विचारयन्तः परस्परमिदमब्रुवन्– असुरा इमे भूरादीनिमांल्लोकान् पुरो वै स्वकीयनगराण्येव कृतवन्तः, अतो वयमपीमान् भूरादींल्लोकान् पुरः अस्मदीयनगराणि प्रतिकरवामहै असुराणां प्रतिकूलानि संपादयाम इति । एवं विचारं परस्परमङ्गीकृत्य त्रिषु लोकेष्वसुराः क्वचिद्देशविशेषे यथा स्वकीयानि नगराणि कृतवन्तस्तथा देवा अस्याः पृथिव्याः सकाशात्सद एव प्रत्यकुर्वत । सौमिकवेद्यां प्राचीनवंशात्पूर्वभाविसदोनामकमण्डपमेवासुरप्रतिकूलमकुर्वत । अन्तरिक्षलोकादाग्नीध्रनामकं धिष्ण्यमकुर्वत । द्युलोकाद्धविर्धाननामके द्वे शकटे अकुर्वत । ते तथेत्यादिरुक्तार्थोपसंहारः। असुरनिर्मितपुरत्रयप्रतिकूलं सद-आग्नीध्रहविर्धानरूपत्रयं कृतवन्तः । असुरैर्लोकत्रये प्रौढासु तिसृषु दुर्गरूपासु पुरीषु निर्मितासु देवाश्च स्वरक्षार्थं सदःप्रभृतीनि त्रीणि दुर्गाणि कृत्वा विजयं प्राप्ताः ।

ऐब्रासा.

### युद्धलब्धधनस्य चतुर्थो भागः सारथेः

**[1]तस्माद्धाप्येतर्हि भरताः सत्वनां वित्तिं प्रयन्ति । तुरीये हैव संग्रहीतारो वदन्ते अमुनैवानूकाशेन– यदद इन्द्रः सारथिरिव भूत्वोदजयत् ॥**

(१) तैसं. ६।४।८।३.
(२) ऐब्रा. ४।६.

(१) ऐब्रा. ९।१.

यस्मात्सारथिरूपस्येन्द्रस्य चतुर्थभागः पूर्वं प्रवृत्तस्तस्माद्ध तत एव कारणादेतर्ह्यपि इदानीमपि भरताः । भरः संग्रामः, तं तन्वन्ति विस्तारयन्तीति भरताः योद्धारः सत्वनां सारथीनां वित्तिं वेतनां जीवितरूपां प्रयन्ति प्रकर्षेण संपादयन्ति । ते च संग्रहीतारः सारथयः तुरीये हैव युद्धलब्धस्य द्रव्यस्य चतुर्थभाग एव वदन्ते अस्माकमेतावदुचितमिति कथयन्ति । तदौचित्ये युक्तिमाह अमुनैव पूर्वोक्तेनैवानूकाशेन दृष्टान्तेन । स एव दृष्टान्तः 'यददः' इत्यादिना स्पष्टीक्रियते । यस्मात्कारणादिन्द्रो वायोः सारथिरिव भूत्वा अदः चतुर्थांशरूपं सोमात्मकं धनमुदजयत्, तस्माल्लोकेऽपि तथैव प्रवृत्तमित्यर्थः । ऐब्रासा.

अभिजिन्नक्षत्रे युद्धारम्भः इष्टः

**'अभिजिन्नाम नक्षत्रम् । उपरिष्टादषाढानाम् । अवस्ताच्छ्रोणायै । देवासुराः संयत्ता आसन् । ते देवास्तस्मिन्नक्षत्रेऽभ्यजयन् । यदभ्यजयन् । तदभिजितोऽभिजित्त्वम् । यं कामयेतानपजय्यं जयेदिति । तमेतस्मिन्नक्षत्रे यातयेत् । अनपजय्यमेव जयति । पापपराजितमिव तु ॥**

उत्तराषाढानक्षत्रस्य यश्चतुर्थः पादः श्रवणनक्षत्रस्य यः प्रथमः पादस्तदुभयं मिलित्वा नक्षत्रसंधिरूपमभिजिदाख्यं किंचिन्नक्षत्रम् । देवास्तस्मिन्नक्षत्रे युद्धं कृत्वाऽभितो जितवन्तः । तस्मादभिजिदिति नाम संपन्नम् । एवं सति केनापि जेतुमशक्यं सैन्यमयं राजा जयत्विति कामयमानोऽभिजिन्नक्षत्रे प्रयत्नं कारयेत् । ततो जयत्येव । किंत्वस्ति किंचिदन्यत् । शत्रोः पापेन तदीयं सैन्यं पराजितमिव भवति । अस्य राज्ञो न कश्चित्प्रयासः । तैब्रासा.

सेनादेवी

**'सेना ह नाम पृथिवी धनंजया ।**
**विश्वव्यचा अदितिः सूर्यत्वक् ।**
**इन्द्राणी देवी प्रासहा ददाना ।**
**सा नो देवी सुहवा शर्म यच्छतु ॥**

सेना ह नाम देवानां सेना अत्यन्तं प्रसिद्धा । सा च पृथिवी विस्तीर्णा धनंजया शत्रूणां धनं जेतुं समर्था विश्वव्यचाः सर्वव्यापिनी अदितिः अखण्डनीया सूर्यत्वक् सूर्यवदुज्ज्वलरूपा, तया सेनया युक्तेन्द्राणी देवी प्रासहा प्रकृष्टेन बलेनाऽऽददाना शत्रूणां धनं स्वीकुर्वाणा वर्तते । सा तादृशी सुहवा सुखेनाऽऽह्वातुं शक्या देवी नः अस्मभ्यं शर्म यच्छतु सुखं ददातु । तैब्रासा.

रथशराभ्यां राजन्यः युद्धे व्यवहरति

**'इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्धाऽभवत् । तस्य स्फ्यस्तृतीयं वा यावद्वा, यूपस्तृतीयं वा यावद्वा, रथस्तृतीयं वा यावद्वा । अथ यत्र प्राहरत्तच्छकलोऽशीर्यत । स पतित्वा शरोऽभवत् । तस्माच्छरो नाम यदशीर्यत । एवमु स चतुर्धा वज्रोऽभवत् ॥**

अथ वेदिकरणार्थे स्फ्यादानविधिमनुसृत्य स्फ्यस्य वज्ररूपत्वं वक्तुमितिहासमाचष्टे— इन्द्रो हेति । तस्येत्यादि । तस्य चतुर्धा विभक्तस्य वज्रस्य स्फ्यस्तृतीयोंऽशः । न्यूनाधिकराहित्येन तृतीयांशत्वज्ञानं दुर्लभमित्यभिप्रेत्य पक्षान्तरमाह— यावद्वेति । तृतीयाद्भागात् न्यूनमधिकं वा यावदेव किञ्चित्तावानेव स्फ्य इत्यर्थः । एवं यूपस्तृतीयमित्यादौ योजना । चतुर्थभागस्य परिणामप्रकारमाह— अथ यत्रेति । तच्छकल इति । तत् तत्र देशे प्रहृतः स वज्रः शकलो भूत्वा अशीर्यत शीर्णोऽभूत् । स च शीर्णो भूमौ पतित्वा शरात्मना परिणत इत्यर्थः । शरशब्दं निर्वक्ति— तस्मादिति । चतुर्धाभवनमुपसंहरति— एवमिति । शब्रासा.

**ततो द्वाभ्यां ब्राह्मणा यज्ञे चरन्ति । द्वाभ्या राजन्यबन्धवः संग्यामे । यूपेन च स्फ्येन च ब्राह्मणाः, रथेन च शरेण च राजन्यबन्धवः ॥**

तेषां वज्रावयवानां स्फ्यादीनां ब्राह्मणराजन्ययोर्व्यवस्थया विनियोगमाह— तत इति । राजन्यबन्धवः

(१) तैब्रा. १।५।२।४.
(२) तैब्रा. २।४।२।७-८.
(१) शब्रा. १।२।४।१-२.

क्षत्रियजातीयाः संय्याचे युद्धे, चरन्तीत्यनुषङ्गः। द्वाभ्यामिति संगृह्योक्तं विभजति— यूपेन चेति।

शब्रासा.

मित्रलाभाज्जयः

[1]यतरं वै संयत्तयोर्मित्रमागच्छति स जयति ॥

संयत्तयोः युद्धाय प्रयतमानयोर्मध्ये यतरं एव योद्धारं मित्रं सखायं साहाय्यं कर्तुमागच्छति स जयतीति लोके प्रसिद्धम्। शब्रासा.

अतिमानः पराभवकारणम्

[2]देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे। ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवाऽऽस्येषु जुह्वतश्चेरुः। तेऽतिमानेनैव पराबभूवुः। तस्मान्नातिमन्येत। पराभवस्य हैतन्मुखं यदतिमानः ॥

उभये प्राजापत्याः प्रजापतेः पुत्राः अदित्यामुत्पादिताः देवाः दित्यामुत्पादिताः असुराः पस्पृधिरे स्पर्धां कृतवन्तः। ततस्तेषामुभयेषां मध्ये असुराः अभिमानेनैव असदतिरिक्तः को नाम विद्यते यस्मिन् अस्मद्व्यतिरिक्ते श्रेष्ठे वयं हविर्जुहवाम। स नास्त्येवेति अतिशयेनाहंकारेण स्वेष्वेव आस्येषु हविर्जुह्वतः चेरुः अवर्तन्त। तेनाहंकारेण ते असुराः पराबभूवुः। एवमतिमानस्य पराभवनिमित्तत्वात् स न कार्यः प्रेक्षावतेति प्रसङ्गादुपदिश्यते— तस्मान्नातिमन्येतेति। पराभवो नाशः। तस्यैवैतन्मुखं उपायः अतिमानः अहंकार इति यत्। शब्रासा.

अथ देवा अन्योन्यस्मिन्नेव जुह्वतश्चेरुः। तेभ्यः प्रजापतिरात्मानं प्रददौ। यज्ञो हैषामास। यज्ञो हि देवानामन्नम् ॥

इत्थमसुरैः कृतमुक्त्वा देवैः कृतं दर्शयति— अथ देवा इति। अन्योन्यस्मिन् अग्निः इन्द्रादौ देवेन्द्रः अग्न्यादौ देवे इति परस्परव्यतिहारेण हवींषि जुह्वतः चेरुरित्यर्थः। तेभ्यः देवेभ्यः प्रीतः प्रजापतिः आत्मानं स्वशरीरं प्रददौ प्रादित। आत्मा एषां देवानां यज्ञात्मकः आस बभूव। तेन क उपयोगः? इति तत्राह— यज्ञो हीति। यज्ञः खलु देवानां स्थितिनिमित्तं अन्नम्। तदात्मकं भागं देवेभ्यः कल्पितवानित्यर्थः। शब्रासा.

चतुर्युक् अश्वरथः

[1]तस्याश्वरथश्चतुर्युग्दक्षिणा भवति। सर्वे शतक्रियोऽश्वाः। स रुक्मी प्रावेपी सर्वाभरण्यंशुमान् भवति। तस्य वैयाघ्रः परिवारो भवति, द्वैपो धन्वधिरार्क्ष उपासङ्गः। खाड्गकवचोऽध्यास्थाता भवति संनद्धः संनद्धसारथिरावृतः प्रतिहिताभ्याम्। निष्की स्रग्वी संग्रहीता भवति ॥

(१) शब्रा. १।५।३।१७.
(२) शब्रा. ११।१।८।१-२.

(१) जैब्रा. २।१०३.

# वैदिको भागः समाप्तः